शतपथ ब्राह्मणम्

##१.१.१

व्रतमुपैष्यन् । अन्तरेणाहवनीयं च गार्हपत्यं च प्राङ्तिष्ठन्नप उपस्पृशति तद्यदप उपस्पृशत्यमेध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतो मेध्या वा आपो मेध्यो भूत्वा व्रतमुपायानीति पवित्रं वा आपः पवित्रपूतो व्रतमुपायानीति तस्माद्वा अप उपस्पृशति - १.१.१.[१]

सोऽग्निमेवाभीक्षमाणो व्रतमुपैति । अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतामित्यग्निर्वै देवानां व्रतपतिस्तस्मा एवैतत्प्राह व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतामिति नात्र तिरोहितमिवास्ति - १.१.१.[२]

अथ संस्थिते विसृजते । अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मे राधीत्यशकद्ध्येतद्यो यज्ञस्य संस्थामगन्नराधि ह्यस्मै यो यज्ञस्य संस्थामगन्नेतेन न्वेव भूयिष्ठा इव व्रतमुपयन्त्यनेन त्वेवोपेयात् - १.१.१.[३]



द्वयं वा इदं न तृतीयमस्ति । सत्यं चैवानृतं च सत्यमेव देवा अनृतम्मनुष्या इदमहमनृतात्सत्यमुपैमीति तन्मनुष्येभ्यो देवानुपैति - १.१.१.[४]

स वै सत्यमेव वदेत् । एतद्धवै देवा व्रतं चरन्ति यत्सत्यं तस्मात्ते यशो यशो
ह भवति य एवं विद्वान्त्सत्यं वदति - १.१.१.[५]

अथ संस्थिते विसृजते । इदमहं य एवास्मि सोऽस्मीत्यमानुष इव वा एतद्भवति
यद्व्रतमुपैति न हि तदवकल्पते यद्ब्रूयादिदमहं सत्यादनृतमुपैमीति तदु खलु पुनर्मानुषो भवति तस्मादिदमहं य एवास्मि सोऽस्मीत्येवं व्रतं विसृजेत - १.१.१.[६]

अथातोऽशनानशनस्यैव । तदुहाषाढः सावयसोऽनशनमेव व्रतं मेने मनो ह वै देवा मनुष्यस्याजानन्ति त एनमेतद्व्रतमुपयन्तं विदुः प्रातर्नो यक्ष्यत इति तेऽस्य विश्वे देवा गृहानागच्छन्ति तेऽस्य गृहेषूपवसन्ति स उपवसथः - १.१.१.[७]

तन्न्वेवानवक्लृप्तम् । यो मनुष्येष्वनश्नत्सु पूर्वोऽश्नीयादथ किमु यो देवेष्वनश्नत्सु पूर्वोऽश्नीयात्तस्मादु नैवाश्नीयात् - १.१.१.[८]

तदु होवाच याज्ञवल्क्यः । यदि नाश्नाति पितृदेवत्यो भवति यद्यु अश्नाति देवानत्यश्नातीति स यदेवाशितमनशितं तदश्नीयादिति यस्य वै हविर्न गृह्णन्ति
तदशितमनशितं स यदश्नाति तेनापितृदेवत्यो भवति यद्यु तदश्नाति यस्य हविर्न गृह्णन्ति तेनो देवान्नात्यश्नाति - १.१.१.[९]

स वा आरण्यमेवाश्नीयात् । या वारण्या ओषधयो यद्वा वृक्ष्यं तदु ह स्माहापि बर्कुर्वार्ष्णो माषान्मे पचत न वा एतेषां हविर्गृह्णन्तीति तदु तथा न कुर्याद्व्रीहियवयोर्वा एतदुपजं यच्छमीधान्यं तद्व्रीहियवावेवैतेन भूयांसौ करोति तस्मादारण्यमेवाश्नीयात् - १.१.१.[१०]



स आहवनीयागारे वैतां रात्रीं शयीत । गार्हपत्यागारे वा देवान्वा एष उपावर्तते यो व्रतमुपैति स यानेवोपावर्त्तते तेषामेवैतन्मध्ये शेतेऽधः शयीताधस्तादिव हि श्रेयस उपचारः - १.१.१.[११]

स वै प्रातरप एव । प्रथमेन कर्मणाभिपद्यतेऽपः प्रणयति यज्ञो वा आपो यज्ञमेवैतत्प्रथमेन कर्मणाभिपद्यते ताः प्रणयति यज्ञमेवैतद्वितनोति - १.१.१.[१२]

स प्रणयति । कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्तीत्येताभिरनिरुक्ताभिर्व्याहृतिभिरनिरुक्तो वै प्रजापतिः प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञं युनक्ति - १.१.१.[१३]

यद्वेवापः प्रणयति । अद्भिर्वा इदं सर्वमाप्तं तत्प्रथमेनैवैतत्कर्मणा सर्वमाप्नोति - १.१.१.[१४]

यद्वेवास्यात्र । होता वाध्वर्युर्वा ब्रह्मा वाग्नीध्रो वा स्वयं वा यजमानो नाभ्यापयति तदेवास्यैतेन सर्वमाप्तं भवति - १.१.१.[१५]

यद्वेवापः प्रणयति । देवान्ह वै यज्ञेन यजमानांस्तानसुररक्षसानि ररक्षुर्न यक्ष्यध्व इति तद्यदरक्षंस्तस्माद्रक्षांसि - १.१.१.[१६]

ततो देवा एतं वज्रं ददृशुः । यदपो वज्रो वा आपो वज्रो हि वा आपस्तस्माद्येनैता यन्ति निम्नं कुर्वन्ति यत्रोपतिष्ठन्ते निर्दहन्ति तत एतं वज्रमुदयच्छंस्तस्याभयेऽनाष्ट्रे निवाते यज्ञमतन्वत तथो एवैष एतं वज्रमुद्यच्छति तस्याभयेऽनाष्ट्रे निवाते यज्ञं तनुते तस्मादपः प्रणयति - १.१.१.[१७]



ता उत्सिच्योत्तरेण गार्हपत्यं सादयति । योषा वा आपो वृषाग्निर्गृहा वै गार्हपत्यस्तद्गृहेष्वेवैतन्मिथुनं प्रजननं क्रियते वज्रं वा एष उद्यच्छति योऽपः प्रणयति यो वा अप्रतिष्ठितो वज्रमुद्यच्छति नैनं शक्नोत्युद्यन्तुं सं हैनं श्रृणाति - १.१.१.[१८]

स यद्गार्हपत्ये सादयति । गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा, तद् गृहेष्वेवैतत् प्रतिष्ठायां प्रतितिष्ठति तथो हैनमेष वज्रो न हिनस्ति तस्माद्गार्हपत्ये सादयति - १.१.१.[१९]

ता उत्तरेणाहवनीयं प्रणयति । योषा वा आपो व्वृषाग्निर्मिथुनमेवैतत्प्रजननं क्रियत एवमिव हि मिथुनं क्लृप्तमुत्तरतो हि स्त्री पुमांसमुपशेते - १.१.१.[२०]

ता नान्तरेण संचरेयुः । नेन्मिथुनं चर्यमाणमन्तरेण संचरानिति ता नातिहृत्य सादयेन्नो अनाप्ताः सादयेत्स यदतिहृत्य सादयेदस्ति वा अग्नेश्चापां च विभ्रातृव्यमिव स यथेव ह

तदग्नेर्भवति यत्रास्याप उपस्पृशन्त्यग्नौ हाधिभ्रातृव्यं वर्धयेद्यदतिहृत्य सादयेद्यद्य अनाप्ताः सादयेन्नो हाभिस्तं काममभ्यापयेद्यस्मै कामाय प्रणीयन्ते तस्मादु सम्प्रत्येवोत्तरेणाहवनीयम्प्रणयति - १.१.१.[२१]

अथ तृणैः परिस्तृणाति । द्वन्द्वं पात्राण्युदाहरति शूर्पं चाग्निहोत्रहवणीं च स्फ्यं च कपालानि च शम्यां च कृष्णाजिनं चोलूखलमुसले दृषदुपल तद्दश दशाक्षरा वै विराड्विराड्वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयत्यथ यद्द्वन्द्वं द्वन्द्वं वै वीर्यं यदा वै द्वौ सं रभेते अथ तद्वीर्यं भवति द्वन्द्वं वै मिथुनं प्रजननं मिथुनमेवैतत्प्रजननं क्रियते - १.१.१.[२२]

##१.१.२ पात्रासादनम्
अथ शूर्पं चाग्निहोत्रहवणीं चादत्ते । कर्मणे वां वेषाय वामिति यज्ञो वै कर्म यज्ञाय हि तस्मादाह कर्मणे वामिति वेषाय वामिति वेवेष्टीव हि यज्ञम् - १.१.२.[१]



अथ वाचं यच्छति । वाग्वै यज्ञोऽविक्षुब्धो यज्ञं तनवा इत्यथ प्रतपति प्रत्युष्टं रक्षः प्रत्युष्टा अरातयो निष्टप्तं रक्षो निष्टप्ता अरातय इति वा - १.१.२.[२]

देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसङ्गाद्बिभयाञ्चक्रुस्तद् यज्ञमुखादेवैतन्नाष्ट्रा रक्षांस्यतोऽपहन्ति - १.१.२.[३]

अथ प्रैति । उर्वन्तरिक्षमन्वेमीत्यन्तरिक्षं वा अनुरक्षश्चरत्यमूलमुभयतः परिच्छिन्नं यथायं पुरुषोऽमूल उभयतः परिच्छिन्नोऽन्तरिक्षमनुचरति तद्ब्रह्मणैवैतदन्तरिक्षमभयमनाष्ट्रं कुरुते - १.१.२.[४]

स वा अनस एव गृह्णीयात् । अनो ह वा अग्रे पश्चेव वा इदं यच्छालं स यदेवाग्रे तत्करवाणिति तस्मादनस एव गृह्णीयात् - १.१.२.[५]

भूमा वा अनः । भूमा हि वा अनस्तस्माद्यदा बहु भवत्यनोवाह्यमभूदित्याहुस्तद्भूमानमेवैतदुपैति तस्मादनस एव गृह्णीयात् - १.१.२.[६]

यज्ञो वा अनः। यज्ञो हि वा अनस्तस्माद् अनस एव यजूंषि सन्ति। न कौष्ठस्य न कुम्भ्यै भस्त्रायै ह स्मर्षयो गृह्णन्ति तद्वृषीन्प्रति भस्त्रायै यजूंष्यासुस्तान्येतर्हि प्राकृतानि यज्ञाद्यज्ञं निर्मिमा इति तस्मादनस एव गृह्णीयात् - १.१.२.[७]

उतो पात्र्यै गृह्णन्ति। अनन्तरायमु तर्हि यजूंषि जपेत्। स्फ्यमु तर्ह्यधस्तदुपोह्य गृह्णीयाद्यतो युनजाम ततो विमुञ्चन्ति - १.१.२.[८]

तस्य वा एतस्यानसः । अग्निरेव धूरग्निर्हि वै धूरथ य एनद्वहन्त्यग्निदग्धमिवैषां वहं भवत्यथ यज्जघनेन कस्तम्भीं प्रउगं वेदिरेवास्य सा नीड एव हविर्धानम् - १.१.२.[९]



स धुरमभिमृशति । धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्वयं वयं धूर्वाम इत्यग्निर्वा एष धुर्यस्तमेतदत्येष्यन्भवति हविर्ग्रहिष्यंस्तस्मा एवैतान्निह्नुते तथो हैतमेषोऽतियन्तमग्निर्धुर्यो न हिनस्ति - १.१.२.[१०]

तद्ध स्मैतदारुणिराह । अधर्मासशो वा अहं सपत्नान्धूर्वामीत्येतद्ध स्म स तदभ्याह - १.१.२.[११]

अथ जघनेन कस्तम्भीमीषामभिमृश्य जपति । देवानामसि वह्नितमं सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् । ह्रुतमसि हविर्धानं दृंहस्व मा ह्वारित्यन एवैतदुपस्तौत्युपस्तुताद्रातमनसो हविर्गृह्णानीति मा ते यज्ञपतिर्ह्वार्षीदिति यजमानो वै यज्ञपतिस्तद्यजमानायैवैतदह्वलामाशास्ते - १.१.२.[१२]

अथाक्रमते । विष्णुस्त्वा क्रमतामिति यज्ञो वै विष्णुः स देवेभ्य इमां विक्रान्तिं विचक्रमे यैषामियं विक्रान्तिरिदमेव प्रथमेन पदेन पस्पाराथेदमन्तरिक्षं द्वितीयेन

दिवमुत्तमेनैताम्वेवैष एतस्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते- १.१.२.[१३]

अथ प्रेक्षते । उरु वातायेति प्राणो वै वातस्तद्ब्रह्मणैवैतत्प्राणाय वातायोरुगायं कुरुते - १.१.२.[१४]

अथापास्यति । अपहतं रक्ष इति यद्यत्र किञ्चिदापन्नं भवति यद्यु नाभ्येवमृशेत्तन्नाष्ट्रा एवैतद्रक्षांस्यतोऽपहन्ति - १.१.२.[१५]

अथाभिपद्यते । यच्छन्तां पञ्चेति पञ्च वा इमा अङ्गुलयः पाङ्क्तो वै यज्ञस्तद्यज्ञमेवैतदत्र दधाति - १.१.२.[१६]

अथ गृह्णाति । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् अग्नये जुष्टं गृह्णामीति सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैतद्गृह्णाति अश्विनोर्बाहुभ्यामित्यश्विनावध्वर्यू पूष्णो हस्ताभ्यामिति पूषा भागदुघोऽशनं पाणिभ्यामुपनिधाता सत्यं देवा अनृतम्मनुष्यास्तत्सत्येनैवैतद्गृह्णाति - १.१.२.[१७]



अथ देवताया आदिशति । सर्वा ह वै देवता अध्वर्युं हविर्गृहीष्यन्तमुपतिष्ठन्ते मम नाम ग्रहीष्यति मम नाम ग्रहीष्यतीति ताभ्य एवैतत्सह सतीभ्योऽसमदं करोति - १.१.२.[१८]

यद्वेव देवताया आदिशति । यावतीभ्यो ह वै देवताभ्यो हवींषि गृह्यन्त ऋणमु हैव तास्तेन मन्यन्ते यदस्मै तं कामं समर्धयेयुर्यत्काम्या गृह्णाति तस्माद्वै देवतायाऽआदिशत्येवमेव यथापूर्वं हवींषि गृहीत्वा - १.१.२.[१९]

अथाभिमृशति । भूताय त्वा नारातय इति तद्यत एव गृह्णाति तदेवैतत्पुनराप्याययति - १.१.२.[२०]

अथ प्राङ्केक्षते । स्वरभिविख्येषमिति परिवृतमिव वा एतदनो भवति तदस्यैतच्चक्षुः पाप्मगृहीतमिव भवति यज्ञो वै स्वरहर्देवाः सूर्यस्तत्स्वरेवैतदतोभिविपश्यति - १.१.२.[२१]

अथावरोहति । दृंहन्तां दुर्याः पृथिव्यामिति गृहा वै दुर्यास्ते हैत ईश्वरो गृहा यजमानस्य योऽस्यैषोऽध्वर्युर्यज्ञेन चरति तं प्रयन्तमनुप्रच्योतोस्तस्येश्वरः कुलं विक्षोब्धोस्तानेवैतदस्यां पृथिव्यां दृंहति तथा नानुप्रच्यवन्ते तथा न विक्षोभन्ते तस्मादाह दृंहन्तां दुर्याः पृथिव्यामित्यथ प्रैत्युर्वन्तरिक्षमन्वेमीति सोऽसावेव बन्धुः - १.१.२.[२२]

स यस्य गार्हपत्ये हवींषि श्रपयन्ति । गार्हपत्ये तस्य पात्राणि संसादयन्ति जघनेनो तर्हि गार्हपत्यं सादयेद्यस्याहवनीये हवींषि श्रपयन्त्याहवनीये तस्य पात्राणि संसादयन्ति जघनेनो तर्ह्याहवनीयं सादयेत्पृथिव्यास्त्वा नाभौ सादयामीति मध्यं वै नाभिर्मध्यमभयं तस्मादाह पृथिव्यास्त्वा नाभौ सादयामीत्यदित्या उपस्थ इत्युपस्थ इवैनदभार्षुरिति वा आहुर्यत्सुगुप्तं गोपायन्ति तस्मादाहादित्या उपस्थ इत्यग्ने हव्यं रक्षेति तदग्नये चैवैतद्धविः परिददाति गुप्त्या अस्यै च पृथिव्यै तस्मादाहाग्ने हव्यं रक्षेति - १.१.२.[२३]



##१.१.३ प्रोक्षणम्

पवित्रे करोति । पवित्रे स्थो वैष्णव्याविति यज्ञो वै विष्णुर्यज्ञिये स्थ इत्येवैतदाह - १.१.३.[१]

ते वै द्वे भवतः । अयं वै पवित्रं योऽयं पवते सोऽयमेक इवैव पवते सोऽयं पुरुषेऽन्तः प्रविष्टः प्राङ्ग प्रत्यङ्ग ताविमौ प्राणोदानौ तदेतस्यैवानुमात्रां तस्माद्वे भवतः - १.१.३.[२]

अथो अपि त्रीणि स्युः । व्यानो हि तृतीयो द्वे न्वेव भवतस्ताभ्यामेताः प्रोक्षणीरुत्पूय ताभिः प्रोक्षति तद्यदेताभ्यामुत्पुनाति - १.१.३.[३]

वृत्रो ह वा इदं सर्वं वृत्वा शिश्ये । यदिदमन्तरेण द्यावापृथिवी स यदेदं सर्वं वृत्वा शिश्ये तस्माद्वृत्रो नाम - १.१.३.[४]

तमिन्द्रो जघान । स हतः पूतिः सर्वत एवापोऽभि प्र सुस्राव सर्वतैव ह्ययं समुद्रस्तस्मादु हैका आपो बीभत्साञ्चक्रिरे ता उपर्युपर्यतिपुप्रुविरेऽत इमे दर्भास्ता हैता अनापूयिता आपोऽस्ति वा इतरासु सं सृष्टमिव यदेना वृत्रः पूतिरभिप्रास्रवत् तदेवासामेताभ्यां पवित्राभ्यामपहन्त्यथ मेध्याभिरेवाद्भिः प्रोक्षति तस्माद्वा एताभ्यामुत्पुनाति - १.१.३.[[५]]

स उत्पुनाति । सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिरिति सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैतदुत्पुनात्यच्छिद्रेण पवित्रेणेति यो वा अयं पवत एषोऽच्छिद्रं पवित्रमेतेनैतदाह सूर्यस्य रश्मिभिरित्येते वा उत्पवितारो यत्सूर्यस्य रश्मयस्तस्मादाह सूर्यस्य रश्मिभिरिति - १.१.३.[६]



ताः सव्ये पाणौ कृत्वा । दक्षिणेनोदिङ्गयत्युपस्तौत्येवैना एतन्महयत्येव देवीरापो अग्रेगुवो अग्रेपुव इति देव्यो ह्यापस्तस्मादाह देवीराप इत्यग्रेगुव इति ता यत्समुद्रं गच्छन्ति तेनाग्रेगुवोऽग्रेपुव इति ता यत्प्रथमाः सोमस्य राज्ञो भक्षयन्ति तेनाग्रेपुवोऽग्र इममद्य यज्ञं नयताग्रे यज्ञपतिं सुधातुं यज्ञपतिं देवयुवमिति साधु यज्ञं साधु यजमानमित्येवैतदाह - १.१.३.[७]

युष्मा इन्द्रोऽवृणीत वृत्रतूर्य इति । एता उ हीन्द्रोऽवृणीत वृत्रेण स्पर्धमान एताभिर्ह्येनमहंस्तस्मादाह युष्मा इन्द्रोऽवृणीत वृत्रतूर्य इति - १.१.३.[८]

यूयमिन्द्रमवृणीध्वं वृत्रतूर्य इति । एता उ हीन्द्रमवृणत वृत्रेण स्पर्धमानमेताभिर्ह्येनमहंस्तस्मादाह यूयमिन्द्रमवृणीध्वं वृत्रतूर्यऽइति - १.१.३.[९]

प्रोक्षिता स्थेति । तदेताभ्यो निह्नुतेऽथ हविः प्रोक्षत्येको वै प्रोक्षणस्य बन्धुर्मेध्यमेवैतत्करोति - १.१.३.[१०]

स प्रोक्षति अग्नये त्वा जुष्टं प्रोक्षामीति तद्यस्यै देवतायै हविर्भवति तस्यै मेध्यं करोत्येवमेव यथापूर्वं हवींषि प्रोक्ष्य - १.१.३.[११]

अथ यज्ञपात्राणि प्रोक्षति । दैव्याय कर्मणो शुन्धध्वं देवयज्याया इति दैव्याय हि कर्मणे शुन्धति देवयज्यायै यद्वोऽशुद्धः पराजघ्नुरिदं वस्तच्छुन्धामीति तद्यदेवैषामत्राशुद्धस्तक्षा वान्यो वामेध्यः कश्चित्पराहन्ति तदेवैषामेतदद्भिर्मेध्यं करोति तस्मादाह यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामीति - १.१.३.[१२]

## १.१.४ पुरोडाशकरणम्

अथ कृष्णाजिनमादत्ते । यज्ञस्यैव सर्वत्वाय यज्ञो ह देवेभ्योऽपचक्राम स कृष्णो भूत्वा चचार तस्य देवा अनुविद्य त्वचमेवावच्छायाजह्रुः - १.१.४.[१]



तस्य यानि शुक्लानि च कृष्णानि च लोमानि । तान्यृचां च साम्नां च रूपं यानि शुक्लानि तानि साम्नां रूपं यानि कृष्णानि तान्यृचां यदि वेतरथा यान्येव कृष्णानि तानि साम्नां रूपं यानि शुक्लानि तान्यृचां यान्येव बभ्रूणीव हरीणि तानि यजुषां रूपम् - १.१.४.[२]

सैषा त्रयी विद्या यज्ञः । तस्या एतच्छिल्पमेष वर्णस्तद्यत्कृष्णाजिनं भवति यज्ञस्यैव सर्वत्वाय तस्मात्कृष्णाजिनमधि दीक्षन्ते यज्ञस्यैव सर्वत्वाय तस्मादध्यवहननमधिपेषणं भवत्यस्कन्नं हविरसदिति तद्यदेवात्र तण्डुलो वा पिष्टं वा स्कन्दात्तद्यज्ञे यज्ञः प्रतितिष्ठादिति तस्मादध्यवहननमधिपेषणं भवति - १.१.४.[३]

अथ कृष्णाजिनमादत्ते । शर्मासीति चर्म वा एतत्कृष्णस्य तदस्य तन्मानुषं शर्म देवत्रा तस्मादाह शर्मासीति तदवधूनोत्यवधूतं रक्षोऽवधूता अरातय इति तन्नाष्ट्रा

एवैतद्रक्षांस्यतोऽपहन्त्यतिनत्येव पात्राण्यवधूनोति यद्ध्यस्यामेध्यमभूत्तद्ध्यस्यैतदवधूनोति - १.१.४.[४]

तत्प्रतीचीनग्रीवमुपस्तृणाति । अदित्यास्त्वगसि प्रति त्वादितिर्वेत्त्विति‌यं वै पृथिव्यदितिस्तस्या अस्यै त्वग्यदिदमस्यामधि किञ्च तस्मादाहादित्यास्त्वगसीति प्रति त्वादितिर्वेत्त्विति प्रति हि स्वः सं जानीते तत्संज्ञामेवैतत्कृष्णाजिनाय च वदति नेदन्योऽन्यं हिनसात इत्यभिनिहितमेव सव्येन पाणिना भवति - १.१.४.[५]

अथ दक्षिणेनोलूखलमाहरति । नेदिह पुरा नाष्ट्रा रक्षांस्याविशानिति ब्राह्मणो हि रक्षसामपहन्ता तस्मादभिनिहितमेव सव्येन पाणिना भवति - १.१.४.[६]

अथोलूखलं निदधाति । अद्रिरसि वानस्पत्यो ग्रावासि पृथुबुध्न इति वा तद्यथैवादः सोमं राजानं ग्रावभिरभिषुण्वन्त्येवमेवैतदुलूखलमुसलाभ्यां दृषदुपलाभ्यां हविर्यज्ञमभिषुणोत्यद्रय इति वै तेषामेकं नाम तस्मादाहाद्रिरसीति वानस्पत्य इति वानस्पत्यो ह्येष ग्रावासि पृथुबुध्न इति ग्रावा ह्येष पृथुबुध्नो ह्येष प्रति त्वादित्यास्त्वग्वेत्त्विति तत्संज्ञामेवैतत्कृष्णाजिनाय च वदति नेदन्योऽन्यं हिनसात
इति - १.१.४.[७]

अथ हविरावपति । अग्नेस्तनूरसि वाचो विसर्जनमिति यज्ञो हि तेनाग्नेस्तनूर्वाचो विसर्जनमिति यां वा अमूं हविर्ग्रहीष्यन्वाचं यच्छत्यत्र वै तं विसृजते तद्यदेतामत्र वाचं विसृजत एष हि यज्ञ उलूखले प्रत्यष्ठादेष हि प्रासारि तस्मादाह वाचो विसर्जनमिति - १.१.४.[८]

स यदिदं पुरा मानुषीं वाचं व्याहरेत् । तत्रो वैष्णवीमृचं वा यजुर्वा जपेद्यज्ञो वै विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्रायश्चित्तिर्देववीतये त्वा गृह्णामीति देवानवदित्यु हि हविर्गृह्यते - १.१.४.[९]

अथ मुसलमादत्ते । बृहद्ग्रावासि वानस्पत्य इति बृहद्ग्रावा ह्येष वानस्पत्यो ह्येष तदवदधाति स इदं देवेभ्यो हविः शमीष्व सुशमि शमीष्वेति स इदं देवेभ्यो हविः संस्कुरु साधु संस्कृतं संस्कुर्वित्येवैतदाह - १.१.४.[१०]

अथ हविष्कृतमुद्वादयति । हविष्कृदेहि हविष्कृदेहीति वाग्वै हविष्कृद्वाचमेवैतद्विसृजते वागु वै यज्ञस्तद्यज्ञमेवैतत्पुनरुपह्वयते - १.१.४.[११]

तानि वा एतानि । चत्वारि वाच एहीति ब्राह्मणस्यागह्याद्रवेति वैश्यस्य च राजन्यबन्धोश्चाधावेति शूद्रस्य स यदेव ब्राह्मणस्य तदा हैतद्धि यज्ञियतममेतदु ह वै वाचः शान्ततमं यदेहीति तस्मादेहीत्येव ब्रूयात् - १.१.४.[१२]

तद्ध स्मैतत्पुरा । जायैव हविष्कृदुपोत्तिष्ठति तदिदमप्येतर्हि य एव कश्चोपोत्तिष्ठति स यत्रैष हविष्कृतमुद्वादयति तदेको दृषदुपले समाहन्ति तद्यदेतामत्र वाचं प्रत्युद्वादयन्ति - १.१.४.[१३]



मनोर्ह वा ऋषभ आस । तस्मिन्नसुरघ्नी सपत्नघ्नी वाक्प्रविष्टास तस्य ह स्म श्वसथाद्रवथादसुररक्षसानि मृद्यमानानि यन्ति ते हासुराः समूदिरे पापं बत नोऽयमृषभः सचते कथं न्विमं दभ्नुयामेति किलाताकुली इति हासुरब्रह्मावासतुः - १.१.४.[१४]

तौ होचतुः । श्रद्धादेवो वै मनुरावं नु वेदावेति तौ हागत्योचतुर्मनो याजयाव त्वेति केनेत्यनेनर्षभेणेति तथेति तस्यालब्धस्य सा वागपचक्राम - १.१.४.[१५]

सा मनोरेव जायां मनावीं प्रविवेश । तस्यै ह स्म यत्र वदन्त्यै श्रृण्वन्ति ततो ह स्मैवासुररक्षसानि मृद्यमानानि यन्ति ते हासुराः समूदिर इतो वै नः पापीयः सचते भूयो हि मानुषी वाग्वदतीति किलाताकुली हैवोचतुः श्रद्धादेवो वै मनुरावं न्वेव वेदावेति तौ हागत्योचतुर्मनो याजयाव त्वेति केनेत्यनयैव जाययेति तथेति तस्या आलब्धायै सा वागपचक्राम - १.१.४.[१६]

सा यज्ञमेव यज्ञपात्राणि प्रविवेश । ततो हैनां न शेकतुर्निर्हन्तुं सैषासुरघ्नी वागुद्वदति स यस्य हैवंविदुष एतामत्र वाचं प्रत्युद्वादयन्ति पापीयांसो हैवास्य सपत्ना भवन्ति - १.१.४.[१७]

स समाहन्ति । कुक्कुटोऽसि मधुजिह्व इति मधुजिह्वो वै स देवेभ्य आसीद्विषजिह्वोऽसुरेभ्यः स यो देवेभ्य आसीः सन एधीत्येवैतदाहेषमूर्जमावद त्वया वयं सङ्घातं सङ्घातं जेष्मेति नात्र तिरोहितमिवास्ति - १.१.४.[१८]

अथ शूर्पमादत्ते । वर्षवृद्धमसीति वर्षवृद्धं ह्येतद्यदि नडानां यदि वेणूनां यदीषीकाणां वर्षमु ह्येवैता वर्धयति - १.१.४.[१९]

अथ हविर्निर्वपति । प्रति त्वा वर्षवृद्धं वेत्त्विति वर्षवृद्धा उ ह्येवैते यदि व्रीहयो यदि यवा वर्षमु ह्येवैतान्वर्धयति तत्संज्ञामेवैतच्छूर्पाय च वदति नेदन्योऽन्यं हिनसात इति - १.१.४.[२०]



अथ निष्पुनाति । परापूतं रक्षः परापूता अरातय इत्यथ तुषान्प्रहन्त्यपहतं रक्ष इति तन्नाष्ट्रा एवैतद्रक्षांस्यतोऽपहन्ति - १.१.४.[२१]

अथापविनक्ति । वायुर्वो विविनक्त्वित्ययं वै वायुर्योऽयं पवत एष वा इदं सर्वं विविनक्ति यदिदं किंच विविच्यते तदेनानेष एवैतद्विविनक्ति स यदैत एतत्प्राप्नुवन्ति यत्रैनानध्यपविनक्ति - १.१.४.[२२]

अथानुमन्त्रयते । देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना सुप्रतिगृहीता असन्नित्यथ त्रिः फलीकरोति त्रिवृद्धि यज्ञः - १.१.४.[२३]

तद्धैके देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्वमिति फलीकुर्वन्ति तदु तथा न कुर्यादादिष्टं वा एतद्देवतायै हविर्भवत्यथैतद्वैश्वदेवं करोति यदाह देवेभ्यः शुन्धध्वमिति तत्समदं करोति तस्मादु तूष्णीमेव फलीकुर्यात् - १.१.४.[२४]

##१.२.१
स वै कपालान्येवान्यतर उपदधाति । दृषदुपले अन्यतरस्तद्वा एतदुभयं सह क्रियते तद्यदेतदुभयं सह क्रियते - १.२.१.[१]

शिरो ह वा एतद्यज्ञस्य यत्पुरोडाशः स यान्येवेमानि शीर्ष्णः कपालान्येतान्येवास्य कपालानि मस्तिष्क एव पिष्टानि तद्वा एतदेकमङ्गमेकं सह करवाव समानं करवावेति तस्माद्वा एतदुभयं सह क्रियते - १.२.१.[२]



स यः कपालान्युपदधाति । स उपवेषमादत्ते धृष्टिरसीति स यदेनेनाग्निं धृष्णिवोपचरति तेन धृष्टिरथ यदेनेन यज्ञ उपालभत उपेव वा एनेनैतद्वेविष्टि तस्मादुपवेषो नाम - १.२.१.[३]

तेन प्राचोऽङ्गारानुदूहति । अपाग्ने अग्निमामादं जहि निष्क्रव्यादं सेधेत्ययं वा आमाद्येनेदं मनुष्याः पक्त्वाश्नन्त्यथ येन पुरुषं दहन्ति स क्रव्यादेतावेवैतदुभावतोऽपहन्ति - १.२.१.[४]

अथाङ्गारमास्कौति । आ देवयजं वहेति यो देवयाट् तस्मिन् हवींषि श्रपयाम तस्मिन्यज्ञं तनवामहा इति तस्माद्वा आस्कौति - १.२.१.[५]

तं मध्यमेन कपालेनाभ्युपदधाति । देवा ह वै यज्ञं तन्वानास्तेऽसुररक्षसेभ्य आसङ्गाद्बिभयांचक्रुर्नेन्नोऽधस्तान्नाष्ट्रारक्षांस्युपोत्तिष्ठानित्यग्निर्हि रक्षसामपहन्ता तस्मादेवमुपदधाति तद्यदेष एव भवति नान्य एष हि यजुष्कृतो मेध्यस्तस्मान्मध्यमेन कपालेनाभ्युपदधाति - १.२.१.[६]

स उपदधाति । ध्रुवमसि पृथिवीं दृंहेति पृथिव्या एव रूपेणैतदेव दृंहत्येतेनैव द्विषन्तं भ्रातृव्यमवबाधते ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधायेति बह्वी वै यजुःस्वाशीस्तद्ब्रह्म च क्षत्रं चाशास्त उभे वीर्ये सजातवनीति भूमा वै सजातास्तद्भूमानमाशास्त उपदधामि भ्रातृव्यस्य वधायेति यदि नाभिचरेद्यद्य अभिचरेदमुष्य वधायेति ब्रूयादभिनिहितमेव सव्यस्य पाणेरङ्गुल्या भवति - १.२.१.[७]

अथाङ्गारमास्कौति । नेदिह पुरा नाष्ट्रा रक्षांस्याविशानिति ब्राह्मणो हि रक्षसामपहन्ता तस्मादभिनिहितमेव सव्यस्य पाणेरङ्गुल्या भवति - १.२.१.[८]

अथाङ्गारमध्यूहति । अग्ने ब्रह्म गृभ्णीष्वेति नेदिह पुरा नाष्ट्रा रक्षांस्याविशानित्यग्निर्हि रक्षसामपहन्ता तस्मादेनमध्यूहति - १.२.१.[९]



अथ यत्पश्चात्तदुपदधाति । धरुणमस्यन्तरिक्षं दृंहेत्यन्तरिक्षस्यैव रूपेणैतदेव दृंहत्येतेनैव द्विषन्तं भ्रातृव्यमवबाधते ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधायेति - १.२.१.[१०]

अथ यत्पुरस्तात्तदुपदधाति । धर्त्रमसि दिवं दृंहेति दिव एव रूपेणैतदेव दृंहत्येतेनैव द्विषन्तं भ्रातृव्यमवबाधते ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधायेति - १.२.१.[११]

अथ यद्दक्षिणतस्तदुपपधाति । विश्वाभ्यस्त्वाशाभ्य उपदधामीति स यदिमांल्लोकानति चतुर्थमस्ति वा न वा तेनैवैतद्द्विषन्तम्भ्रातृव्यमवबाधतेऽनद्धा वै तद्यदिमांल्लोकानति चतुर्थमस्ति वा न वानद्धो तद्यद्विश्वा आशास्तस्मादाह विश्वाभ्यस्त्वाशाभ्य उपदधामीति तूष्णीं वै वेतराणि कपालान्युपदधाति चित स्थोर्ध्वचित इति वा - १.२.१.[१२]

अथाङ्गारैरभ्यूहति । भृगूणामङ्गिरसां तपसा तप्यध्वमित्येतद्वै तेजिष्ठं तेजो

यद्भृग्वङ्गिरसां सुतप्तान्यसन्निति तस्मादेनमभ्यूहति - १.२.१.[१३]

अथ यो दृषदुपले उपदधाति । स कृष्णाजिनमादत्ते शर्मासीति तदवधूनोत्यवधूतं रक्षोऽवधूता अरातय इति सोऽसावेव बन्धुस्तत्प्रतीचीनग्रीवमुपस्तृणात्यदित्यास्त्वगसि प्रति त्वादितिर्वेत्त्विति सोऽसावेव बन्धुः - १.२.१.[१४]

अथ दृषदमुपदधाति । धिषणासि पर्वती प्रति त्वादित्यास्त्वग्वेत्त्विति धिषणा हि पर्वती हि प्रति त्वादित्यास्त्वग्वेत्त्विति तत्संज्ञामेवैतत्कृष्णाजिनाय च वदति नेदन्योऽन्यं हिनसाव इतीयमेवैषा पृथिवी रूपेण - १.२.१.[१५]

अथ शम्यामुदीचीनाग्रामुपदधाति । दिव स्कम्भनीरसीत्यन्तरिक्षमेव रूपेणान्तरिक्षेण हीमे द्यावापृथिवी विष्टब्धे तस्मादाह दिव स्कम्भनीरसीति - १.२.१.[१६]



अथोपलामुपदधाति । धिषणासि पार्वतेयी प्रति त्वा पर्वती वेत्त्विति कनीयसी ह्येषा दुहितेव भवति तस्मादाह पार्वतेयीति प्रति त्वा पर्वती वेत्त्विति प्रति हि स्वः संजानीते तत्संज्ञामेवैतद्दृषदुपलाभ्यां वदति नेदन्योऽन्यं हिनसात इति द्यौरेवैषा रूपेण हनू एव दृषदुपले जिह्वैव शम्या तस्माच्छम्यया समाहन्ति जिह्वया हि वदति - १.२.१.[१७]

अथ हविरधिवपति । धान्यमसि धिनुहि देवानिति धान्यं हि देवान्धिनवदित्यु हि हविर्गृह्यते - १.२.१.[१८]

अथ पिनष्टि । प्राणाय त्वोदानाय त्वा व्यानाय त्वा दीर्घामनु प्रसितिमायुषे धामिति प्रोहति देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वेति - १.२.१.[१९]

तद्यदेवं पिनष्टि । जीवं वै देवानां हविरमृतममृतानामथैतदुलूखलमुसलाभ्यां दृषदुपलाभ्यां हविर्यज्ञं घ्नन्ति - १.२.१.[२०]

स यदाह । प्राणाय त्वोदानाय त्वेति तत्प्राणोदानौ दधाति व्यानाय त्वेति तद्व्यानं दधाति दीर्घामनु प्रसितिमायुषे धामिति तदायुर्दधाति देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना सुप्रतिगृहीतान्यसन्निति चक्षुषे त्वेति तच्चक्षुर्दधात्येतानि वै जीवतो भवन्त्येवमु हैतज्जीवमेव देवानां हविर्भवत्यमृतममृतानां तस्मादेवं पिनष्टि पिंषन्ति पिष्टान्यभीन्धते कपालानि - १.२.१.[२१]

अथैक आज्यं निर्वपति । यद्वा आदिष्टं देवतायै हविर्गृह्यते यावद्देवत्यं तद्भवति तदितरेण यजुषा गृह्णाति न वा एतत्कस्यै चन देवतायै हविर्गृह्णन्नादिशति यदाज्यं तस्मादनिरुक्तेन यजुषा गृह्णाति महीनां पयोऽसीति मह्य इति ह वा एतासामेकं नाम यद्गवां तासां वा एतत्पयो भवति तस्मादाह महीनां पयोऽसीत्येवमु हास्यैतत्खलु यजुषैव गृहीतं भवति तस्माद्वेवाह महीनां पयोऽसीति - १.२.१.[२२]



##१.२.२
पवित्रवति सम्वपति । पात्र्यां पवित्रे अवधाय देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सम्वपामीति सोऽसावेवैतस्य यजुषो बन्धुः - १.२.२.[१]

अथान्तर्वेद्युपविशति । अथैक उपसर्जनीभिरैति ता आनयति ताः पवित्राभ्याम्प्रतिगृह्णाति समाप ओषधीभिरिति सं ह्येतदाप ओषधीभिरेताभिः पिष्टाभिः सङ्गच्छन्ते समोषधयो रसेनेति सं ह्येतदोषधयो रसेनैताः पिष्टा अद्भिः संगच्छन्त आपो ह्येतासां रसः सं रेवतीर्जगतीभिः पृच्यन्तामिति रेवत्य आपो जगत्य ओषधयस्ता उ ह्येतदुभय्यः सम्पृच्यन्ते सं मधुमतीर्मधुमतीभिः पृच्यन्तामिति सं रसवत्यो रसवतीभिः पृच्यन्तामित्येवैतदाह - १.२.२.[२]

अथ संयौति । जनयत्यै त्वा संयौमीति यथा वा अधिवृक्तोऽग्नेरधि जायेतैवं वै तत्संयौति- १.२.२.[३]

अथ द्वेधा करोति । यदि द्वे हविषी भवतः पौर्णमास्यां वै द्वे हविषी भवतः स यत्र पुनर्न संहरिष्यन्त्स्यात्तदभिमृशतीदमग्नेरिदमग्नीषोमयोरिति नाना वा एतदग्रे हविर्गृह्णन्ति तत्सहावघ्नन्ति तत्सह पिंषन्ति तत्पुनर्नाना करोति तस्मादेवमभिमृशत्यधिवृणक्त्येवैष पुरोडाशमधिश्रयत्यसावाज्यम् - १.२.२.[४]

तद्वा एतत् । उभयं सह क्रियते तद्यदेतदुभयं सह क्रियतेऽर्धो ह वा एष आत्मनो यज्ञस्य यदाज्यमर्धो यदिह हविर्भवति स यश्चासावर्धो य उ चायमर्धस्ता उभावग्निं गमयावेति तस्माद्वा एतदुभयं सह क्रियत एवमु हैष आत्मा यज्ञस्य संधीयते - १.२.२.[५]

सोऽसावाज्यमधिश्रयति । इषे त्वेति वृष्ट्यै तदाह यदाहेषे त्वेति तत्पुनरुद्वासयत्यूर्जे त्वेति यो वृष्टादूर्ग्रसो जायते तस्मै तदाह - १.२.२.[६]



अथ पुरोडाशमधिवृणक्ति । घर्मोऽसीति यज्ञमेवैतत्करोति यथा घर्मम्प्रवृंज्यादेवं प्रवृणक्ति विश्वायुरिति तदायुर्दधाति - १.२.२.[७]

तं प्रथयति । उरुप्रथा उरु प्रथस्वेति प्रथयत्येवैनमेतदुरु ते यज्ञपतिः प्रथतामिति यजमानो वै यज्ञपतिस्तद्यजमानायैवैतदाशिषमाशास्ते - १.२.२.[८]

तं न सत्रा पृथु कुर्यात् । मानुषं ह कुर्याद्यत्पृथुं कुर्याद्व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञो करवाणीति तस्मान्न सत्रा पृथुं कुर्यात् - १.२.२.[९]

अश्वशफमात्रं कुर्यादित्यु हैक आहुः । कस्तद्वेद यावानश्वशफो यावन्तमेव स्वयं मनसा न सत्रा पृथुं मन्येतैवं कुर्यात् - १.२.२.[१०]

तमद्भिरभिमृशति । सकृद्वा त्रिर्वा तद्यदेवास्यात्रावघ्नन्तो वा पिंषन्तो वा क्षिण्वन्ति वा वि वा वृहन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः संदधाति तस्मादद्भिरभिमृशति - १.२.२.[११]

सोऽभिमृशति । अग्निष्टे त्वचं मा हिंसीदित्यग्निना वा एनमेतदभितप्स्यन्भवत्येष ते त्वचं मा हिंसीदित्येवैतदाह- १.२.२.[१२]

तं पर्यग्निं करोति । अच्छिद्रमेवैनमेतदग्निना परिगृह्णाति नेदेनं नाष्ट्रा रक्षांसि प्रमृशानित्यग्निर्हि रक्षसामपहन्ता तस्मात्पर्यग्निं करोति - १.२.२.[१३]

तं श्रपयति । देवस्त्वा सविता श्रपयत्विति न वा एतस्य मनुष्यः श्रपयिता देवो ह्येष तदेनं देव एव सविता श्रपयति वर्षिष्ठेऽधि नाक इति देवत्रो एतदाह यदाह वर्षिष्ठेऽधि नाक इति तमभिमृशति श्रृतं वेदानीति तस्माद्वा अभिमृशति - १.२.२.[१४]



सोऽभिमृशति । मा भेर्मा संविक्था इति मा त्वं भैषीर्मा संविक्था यत्त्वाहममानुषं सन्तं मानुषोऽभिमृशामीत्येवैतदाह - १.२.२.[१५]

यदा शृतोऽथाभिवासयति । नेदेनमुपरिष्टान्नाष्ट्रा रक्षांस्यवपश्यानिति नेद्वेव नग्न इव मुषित इव शयाता इत्यु चैव तस्माद्वा अभिवासयति - १.२.२.[१६]

सोऽभिवासयति । अतमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा भूयादिति नेदेतदनुयज्ञो वा यजमानो वा ताम्याद्यदिदमभिवासयामीति तस्मादेवमभिवासयति - १.२.२.[१७]

अथ पात्रीनिर्णेजनम् । अङ्गुलिप्रणेजनमाप्त्येभ्यो निनयति तद्यदाप्त्येभ्यो निनयति - १.२.२.[१८]

##१.२.३
चतुर्धाविहितो ह वा अग्रेऽग्निरास । स यमग्रेऽग्निं होत्राय प्रावृणत स प्राधन्वद्यं द्वितीयं प्रावृणत स प्रैवाधन्वद्यं तृतीयं प्रावृणत स प्रैवाधन्वदथ योऽयमेतर्ह्यग्निः स भीषा निलिल्ये सोऽपः प्रविवेश तं देवा अनुविद्य सहसैवाद्भ्य आनिन्युः सोऽपोऽभितिष्ठेवावष्ठ्यूता स्थ या अप्रपदनं स्थ याभ्यो वो मामकामं नयन्तीति तत आप्त्याः सम्बभूवुस्त्रितो द्वित एकतः - १.२.३.[१]

त इन्द्रेण सह चेरुः । यथेदं ब्राह्मणो राजानमनुचरति स यत्र त्रिशीर्षाणं त्वाष्ट्रं विश्वरूपं जघान तस्य हैतेऽपि वध्यस्य विदाञ्चक्रुः शश्वद्धैनं त्रित एव जघानात्यह तदिन्द्रोऽमुच्यत देवो हि सः - १.२.३.[२]

त उ हैत ऊचुः । उपैवेम एनो गच्छन्तु येऽस्य वध्यस्यावेदिषुरिति किमिति यज्ञ एवैषु मृष्टामिति तदेष्वेतद्यज्ञो मृष्टे यदेभ्यः पात्रीनिर्णेजनमङ्गुलिप्रणेजनं निनयन्ति - १.२.३.[३]



त उ हाप्त्या ऊचुः । अत्येव वयमिदमस्मत्परो नयामेति कमभीति य एवादक्षिणेन हविषा यजाताऽइति तस्मान्नादक्षिणेन हविषा यजेताप्त्येषु ह यज्ञो मृष्ट आप्त्या उ ह तस्मिन्मृजते योऽदक्षिणेन हविषा यजते - १.२.३.[४]

ततो देवाः । एतां दर्शपूर्णमासयोर्दक्षिणामकल्पन्यदन्वाहार्यं नेददक्षिणं हविरसदिति तन्नाना निनयति तथैभ्योऽसमदं करोति तदभितपति तथैषां श्रृतं भवति स निनयति त्रिताय त्वा द्विताय त्वैकताय त्वेति पशुर्ह वा एष आलभ्यते यत्पुरोडाशः - १.२.३.[५]

पुरुषं ह वै देवाः । अग्रे पशुमालेभिरे तस्यालब्धस्य मेधोऽपचक्राम सोऽश्वं प्रविवेश तेऽश्वमालभन्त तस्यालब्धस्य मेधोऽपचक्राम स गां प्रविवेश ते गामालभन्त। तस्यालब्धस्य मेधोऽपचक्राम। सोऽविं प्रविवेश तेऽविमालभन्त। तस्यालब्धस्य

मेधोऽपचक्राम। सोऽजं प्रविवेश तेऽजमालभन्त तस्यालब्धस्य मेधोऽपचक्राम - १.२.३.[६]

स इमं पृथिवीं प्रविवेश । तं खनन्तैवान्वीषुस्तमन्वविन्दंस्ताविमौ व्रीहियवौ तस्मादप्येतावेतर्हि खनन्त इवैवानुविन्दन्ति स यावद्वीर्यवद्ध वा अस्यैते सर्वे पशव आलब्धाः स्युस्तावद्वीर्यवद्धास्य हविरेव भवति य एवमेतद्वेदात्रो सा सम्पद्यदाहुः पाङ्क्तः पशुरिति - १.२.३.[७]

यदा पिष्टान्यथ लोमानि भवन्ति । यदाप आनयत्यथ त्वग्भवति यदा संयौत्यथ मांसं भवति संतत इव हि स तर्हि भवति संततमिव हि मांसं यदा श्रृतोऽथास्थि भवति दारुण इव हि स तर्हि भवति दारुणमित्यस्थ्यथ यदुद्वासयिष्यन्नभिघारयति तं मज्जानं दधात्येषो सा सम्पद्यदाहुः पाङ्क्तः पशुरिति - १.२.३.[८]



स यं पुरुषमालभन्त । स किम्पुरुषोऽभवद्यावश्वं च गां च तौ गौरश्च गवयश्चाभवतां यमविमालभन्त स उष्ट्रोऽभवद्यमजमालभन्त स शरभोऽभवत्तस्मादेतेषां पशूनां नाशितव्यमपक्रान्तमेधा हैते पशवः - १.२.३.[९]

##१.२.४ वेदिकाकरणम्

इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार । स प्रहृतश्चतुर्धाऽभवत्तस्य स्फ्यस्तृतीयं वा यावद्वा यूपस्तृतीयं वा यावद्वा रथस्तृतीयं वा यावद्वाथ यत्र प्राहरत्तच्छकलोऽशीर्यत स पतित्वा शरोऽभवत्तस्माच्छरो नाम यदशीर्यतैवमु स चतुर्धा वज्रोऽभवत् - १.२.४.[१]

ततो द्वाभ्यां ब्राह्मणा यज्ञे चरन्ति द्वाभ्यां राजन्यबन्धवः संव्याधे यूपेन च स्फ्येन च ब्राह्मणा रथेन च शरेण च राजन्यबन्धवः - १.२.४.[२]

स यत्स्फ्यमादत्ते । यथैव तदिन्द्रो वृत्राय वज्रमुदयच्छदेवमेवैष एतम्पाप्मने द्विषते भ्रातृव्याय वज्रमुद्यच्छति तस्माद्वै स्फ्यमादत्ते - १.२.४.[३]

तमादत्ते । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददेऽध्वरकृतं देवेभ्य इति सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैनमेतदादत्तेऽश्विनोर्बाहुभ्यामित्यश्विनावध्वर्यू तत्तयोरेव बाहुभ्यामादत्ते न स्वाभ्यां वज्रो वा एष तस्य न मनुष्यो भर्ता तमेताभिर्देवताभिरादत्ते - १.२.४.[४]

आददेऽध्वरकृतं देवेभ्य इति । अध्वरो वै यज्ञो यज्ञकृतं देवेभ्य इत्येवैतदाह तं सव्ये पाणौ कृत्वा दक्षिणेनाभिमृष्य जपति संश्यत्येवैनमेतद्यज्जपति - १.२.४.[५]

स जपति । इन्द्रस्य बाहुरसि दक्षिण इत्येष वै वीर्यवत्तमो य इन्द्रस्य बाहुर्दक्षिणस्तस्मादाहेन्द्रस्य बाहुरसि दक्षिण इति सहस्रभृष्टिः शततेजा इति सहस्रभृष्टिर्वै स वज्र आसीच्छततेजा यं तं वृत्राय प्राहरत्तमेवैतत्करोति - १.२.४.[६]



वायुरसि तिग्मतेजा इति । एतद्वै तेजिष्ठं तेजो यदयं योऽयं पवत एष हीमांल्लोकांस्तिर्यङ्ङनुपवते संश्यत्येवैनमेतद्द्विषतो वध इति यदि नाभिचरेद्यद्यु अभिचरेदमुष्य वध इति ब्रूयात्तेन संशितेन नात्मानमुपस्पृशति न पृथिवीं नेदनेन वज्रेण संशितेनात्मानं वा पृथिवीं वा हिनसानीति तस्मान्नात्मानमुपस्पृशति न पृथिवीम् - १.२.४.[७]

देवाश्च वा असुराश्च । उभये प्राजापत्याः पस्पृधिरे ते ह स्म यद्देवा असुराञ्जयन्ति ततो ह स्मैवैनान्पुनरुपोत्तिष्ठन्ति - १.२.४.[८]

ते ह देवा ऊचुः । जयामो वा असुरांस्ततस्त्वेव नः पुनरुपोत्तिष्ठन्ति कथं न्वेनाननपजय्यं जयेमेति - १.२.४.[९]

स हाग्निरुवाच । उदञ्चो वै नः पलाय्य मुच्यन्त इत्युदञ्चो ह स्मैवैषां पलाय्य मुच्यन्ते - १.२.४.[१०]

स हाग्निरुवाच । अहमुत्तरतः पर्येष्याम्यथ यूयमित उप संरोत्स्यथ तान्त्संरुध्यैभिश्च लोकैरभिनिधास्यामो यदु चेमांल्लोकानति चतुर्थं ततः पुनर्न संहास्यन्त इति - १.२.४.[११]

सोऽग्निरुत्तरतः पर्यैत् । अथेम इत उपसमरुन्धंस्तान्त्संरुध्यैभिश्च लोकैरभिन्यदधुर्यदु चेमांल्लोकानति चतुर्थं ततः पुनर्न समजिहत तदेतन्निदानेन यत्स्तम्बयजुः - १.२.४.[१२]

स योऽसावग्नीदुत्तरतः पर्येति । अग्निरेवैष निदानेन तानध्वर्युरेवेत उपसंरुणद्धि तान्त्संरुध्यैभिश्च लोकैरभिनिदधाति यदु चेमांल्लोकानति चतुर्थं ततः पुनर्न संजिहते तस्मादप्येतर्ह्यसुरा न संजिहते येन ह्येवैनान्देवा अवाबाधन्त तेनैवैनानप्येतर्हि ब्रह्मणा यज्ञेऽवबाधन्ते - १.२.४.[१३]



य उ एव यजमानायारातीयति । यश्चैनं द्वेष्टि तमेवैतदेभिश्च लोकैरभिनिदधाति यदु चेमांल्लोकानति चतुर्थमस्या एव सर्वं हरत्यस्यां हीमे सर्वे लोकाः प्रतिष्ठिताः किं हि हरेद्यदन्तरिक्षं हरामि दिवं हरामीति हरेत्तस्मादस्या एव सर्वं हरति - १.२.४.[१४]

अथ तृणमन्तर्धाय प्रहरति । नेदनेन वज्रेण संशितेन पृथिवीं हिनसानीति तस्मात्तृणमन्तर्धाय प्रहरति - १.२.४.[१५]

स प्रहरति । पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषमित्युत्तरमूलामिव वा एनामेतत्करोत्याददानस्तामेतदाहौषधीनां ते मूलानि मा हिंसिषमिति व्रजं गच्छ गोष्ठानमित्यभिनिधास्यन्नेवैतदनपक्रमि कुरुते तद्ध्यनपक्रमि यद्व्रजेऽन्तस्तस्मादाह व्रजं गच्छ गोष्ठानमिति वर्षतु ते द्यौरिति यत्र वा अस्यै खनन्तः क्रूरीकुर्वन्त्यपघ्नन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः संदधाति तस्मादाह वर्षतु ते द्यौरिति बधान

देव सवितः परमस्याम्पृथिव्यामिति देवमेवैतत्सवितारमाहान्धे तमसि बधानेति यदाह परमस्याम्पृथिव्यामिति शतेन पाशैरित्यमुचे तदाह योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगिति यदि नाभिचरेद्यद्यु अभिचरेदमुमतो मा मौगिति ब्रूयात् - १.२.४.[१६]

अथ द्वितीयं प्रहरति । अपाररुं पृथिव्यै देवयजनाद्वध्यासमित्यररुर्ह वै नामासुररक्षसमास तं देवा अस्या अपाघ्नन्त तथो एवैनमेतदेषोऽस्या अपहते व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्यां शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगिति - १.२.४.[१७]

तमग्नीदभिनिदधाति । अररो दिवं मा पप्त इति यत्र वै देवा अररुमसुररक्षसमपाघ्नत स दिवमपि पतिषत्तमग्निरभिन्यदधादररो दिवं मा पप्त इति स न दिवमपत्तथो एवैनमेतदध्वर्युरेवास्माल्लोकादन्तरेति दिवोऽध्यग्नीत्तस्मादेवं करोति - १.२.४.[१८]



अथ तृतीयं प्रहरति । द्रप्सस्ते द्यां मा स्कन्नित्ययं वा अस्यै द्रप्सो यमस्या इमं रसं प्रजा उपजीवन्त्येष ते दिवं मा पप्तदित्येवैतदाह व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्यां शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगिति - १.२.४.[१९]

स वै त्रिर्यजुषा हरति । त्रयो वा इमे लोका एभिरेवैनमेतल्लोकैरभिनिदधात्यद्धा वै तद्यदिमे लोका अद्धो तद्यद्यजुस्तस्मात्त्रिर्यजुषा हरति - १.२.४.[२०]

तूष्णीं चतुर्थम् । स यदिमांल्लोकानति चतुर्थमस्ति वा न वा तेनैवैतद्द्विषन्तम्भ्रातृव्यमवबाधतेऽनद्धा वै तद्यदिमांल्लोकानति चतुर्थमस्ति वा न वानद्धो तद्यत्तूष्णीं तस्मात्तूष्णीं चतुर्थम् - १.२.४.[२१]

##१.२.५

देवाश्च वा असुराश्च । उभये प्राजापत्याः पस्पृधिरे ततो देवा अनुव्यमिवासुरथ हासुरा मेनिरेऽस्माकमेवेदं खलु भुवनमिति - १.२.५.[१]

ते होचुः । हन्तेमां पृथिवीं विभजामहै तां विभज्योपजीवामेति तामौक्ष्णैश्चर्मभिः पश्चात्प्राञ्चो विभजमाना अभीयुः - १.२.५.[२]

तद्वै देवाः शुश्रुवुः । विभजन्ते ह वा इमामसुराः पृथिवीं प्रेत तदेष्यामो यत्रेमामसुरा विभजन्ते के ततः स्याम यदस्यै न भजेमहीति ते यज्ञमेव विष्णुं पुरस्कृत्येयुः - १.२.५.[३]

ते होचुः । अनु नोऽस्यां पृथिव्यामाभजतास्त्वेव नोऽप्यस्यां भाग इति ते हासुरा असूयन्त इवोचुर्यावदेवैष विष्णुरभिशेते तावद्वो दद्म इति - १.२.५.[४]

वामनो ह विष्णुरास । तद्देवा न जिहीडिरे महद्वै नोऽदुर्ये नो यज्ञसंमितमदुरिति - १.२.५.[५]



ते प्राञ्चं विष्णुं निपाद्य । च्छन्दोभिरभितः पर्यगृह्णन्गायत्रेण त्वा च्छन्दसा परिगृह्णामीति दक्षिणतस्त्रैष्टुभेन त्वा च्छन्दसा परिगृह्णामीति पश्चाज्जागतेन त्वा
च्छन्दसा परिगृह्णामीत्युत्तरतः - १.२.५.[६]

तं छन्दोभिरभितः परिगृह्य । अग्निं पुरस्तात्समाधाय तेनार्चन्तः श्राम्यन्तश्चेरुस्तेनेमां सर्वां पृथिवीं समविन्दन्त तद्यदेनेनेमां सर्वां समविन्दन्त तस्माद्वेदिर्नाम तस्मादाहुर्यावती वेदिस्तावती पृथिवीत्येतया हीमां सर्वां समविन्दन्तैवं ह वा इमां सर्वां सपत्नानां सम्वृङ्क्ते निर्भजत्यस्यै सपत्नान्य एवमेतद्वेद - १.२.५.[७]

सोऽयं विष्णुर्ग्लानः । छन्दोभिरभितः परिगृहीतोऽग्निः पुरस्तान्नापक्रमणमास स
तत एवौषधीनां मूलान्युपमुम्लोच - १.२.५.[[८]]

ते ह देवा ऊचुः । क्व नु विष्णुरभूत्क्व नु यज्ञोऽभूदिति ते होचुश्छन्दोभिरभितः परिगृहीतोऽग्निः पुरस्तान्नापक्रमणमस्त्यत्रैवान्विच्छतेति तं खनन्त इवान्वीषुस्तं त्र्यङ्गुलेऽन्वविन्दंस्तस्मात्त्र्यङ्गुला वेदिः स्यात्तदु हापि पाञ्चिस्त्र्यङ्गुलामेव सौम्यस्याध्वरस्य वेदिं चक्रे - १.२.५.[९]

तदु तथा न कुर्यात् । ओषधीनां वै स मूलान्युपाम्लोचत्तस्मादोषधीनामेव मूलान्युच्छेत्तवै ब्रूयाद्यन्न्वेवात्र विष्णुमन्वविन्दंस्तस्माद्वेदिर्नाम - १.२.५.[१०]

तमनुविद्योत्तरेण परिग्रहेण पर्यगृह्णन् । सुक्ष्मा चासि शिवा चासीति दक्षिणत इमामेवैतत्पृथिवीं संविद्य सुक्ष्मां शिवामकुर्वत स्योना चासि सुषदा चासीति पश्चादिमामेवैतत्पृथिवीं संविद्य स्योनां सुषदामकुर्वतोर्जस्वती चासि पयस्वती चेत्युत्तरत इमामेवैतत्पृथिवीं संविद्य रसवतीमुपजीवनीयामकुर्वत - १.२.५.[११]



स वै त्रिः पूर्वं परिग्रहं परिगृह्णाति । त्रिरुत्तरं तत्षट्कृत्वः षड्वा ऋतवः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो यावत्यस्य मात्रा तावतमेवैतत्परिगृह्णाति - १.२.५.[१२]

षड्भिर्व्याहृतिभिः । पूर्वं परिग्रहं परिगृह्णाति षड्भिरुत्तरं तद्द्वादश कृत्वो द्वादश वै मासाः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो यावत्यस्य मात्रा तावतमेवैतत्परिगृह्णाति - १.२.५.[१३]

व्याममात्री पश्चात्स्यादित्याहुः । एतावान्वै पुरुषः पुरुषसंमित हि त्र्यरत्निः प्राची त्रिवृद्धि यज्ञो नात्र मात्रास्ति यावतीमेव स्वयं मनसा मन्येत तावतीं कुर्यात् - १.२.५.[१४]

अभितोऽग्निमंसा उन्नयति । योषा वै वेदिर्वृषाग्निः परिगृह्य वै योषा वृषाणं शेते मिथुनमेवैतत्प्रजननं क्रियते तस्मादभितोऽग्निमंसा उन्नयति - १.२.५.[१५]

सा वै पश्चाद्वरीयसी स्यात् । मध्ये संह्वारिता पुनः पुरस्तादुर्व्येवमिव हि योषाम्

प्रशंसन्ति पृथुश्रोणिर्विमृष्टान्तरांसा मध्ये संग्राह्येति जुष्टामेवैनामेतद्देवेभ्यः करोति - १.२.५.[१६]

सा वै प्राक्प्रवणा स्यात् । प्राची हि देवानां दिगथो उदक्प्रवणोदीची हि मनुष्याणां दिग्दक्षिणतः पुरीषं प्रत्युदूहत्येषा वै दिक्पितृणां सा यद्दक्षिणाप्रवणा स्यात्क्षिप्रे ह यजमानोऽमुं लोकमियात्तथो ह यजमानो ज्योग्जीवति तस्माद्दक्षिणतः पुरीषं प्रत्युदूहति पुरीषवतीं कुर्वीत पशवो वै पुरीषम्पशुमतीमेवैनामेतत्कुरुते - १.२.५.[१७]

तां प्रतिमार्ष्टि । देवा ह वै संग्रामं संनिधास्यन्तस्ते होचुर्हन्त यदस्यै पृथिव्या अनामृतं देवयजनं तच्चन्द्रमसि निदधामहै स यदि न इतोऽसुरा जयेयुस्तत एवार्चन्तः श्राम्यन्तः पुनरभिभवेमेति स यदस्यै पृथिव्या अनामृतं देवयजनमासीत्तच्चन्द्रमसि न्यदधत तदेतच्चन्द्रमसि कृष्णं तस्मादाहुश्चन्द्रमस्यस्यै पृथिव्यै देवयजनमित्यपि ह वा अस्यैतस्मिन्देवयजन इष्टं भवति तस्माद्वै प्रतिमार्ष्टि - १.२.५.[१८]



स प्रतिमार्ष्टि । पुरा क्रूरस्य विसृपो विरप्शिन्निति संग्रामो वै क्रूरं संग्रामे हि क्रूरं क्रियते हतः पुरुषो हतोऽश्वः शेते पुरा ह्येतत्संग्रामान्न्यदधत तस्मादाह पुरा क्रूरस्य विसृपो विरप्शिन्नित्युदादाय पृथिवीं जीवदानुमित्युदादाय हि यदस्यै पृथिव्यै जीवमासीत्तच्चन्द्रमसि न्यदधत तस्मादाहोदादाय पृथिवीं जीवदानुमिति यामैरयंश्चन्द्रमसि स्वधाभिरिति यां चन्द्रमसि ब्रह्मणादधुरित्येवैतदाह तामु धीरासो अनुदिश्य यजन्त इत्येतेनो ह तामनुदिश्य यजन्तेऽपि ह वा अस्यैतास्मिन्देवयजन इष्टं भवति य एवमेतद्वेद - १.२.५.[१९]

अथाह प्रोक्षणीरासादयेति । वज्रो वै स्फ्यो ब्राह्मणश्चेमं पुरा यज्ञमभ्यजूगुपतां वज्रो वा आपस्तद्वज्रमेवैतदभिगुप्त्या आसादयति स वा उपर्युपर्येव प्रोक्षणीषु धार्यमाणास्वथ स्फ्यमुद्यच्छत्यथ यन्निहित एव स्फ्यो प्रोक्षणीरासादयेद्वज्रो ह समृच्छेयातां तथो ह वज्रो न समृच्छेतेतस्मादुपर्युपर्येव प्रोक्षणीषु धार्यमाणास्वथ स्फ्यमुद्यच्छति - १.२.५.[२०]

अथैतां वाचं वदति । प्रोक्षणीरासादयेध्मं बर्हिरुपसादय स्रुचः सम्मृड्ढि पत्नीं संनह्याज्येनोदेहीति संप्रैष एवैष स यदि कामयेत ब्रूयादेतद्यद्यु कामयेतापि नाद्रियेत स्वयमु ह्येवैतद्वेदेदमतः कर्म कर्तव्यमिति - १.२.५.[२१]

अथोदञ्चं स्फ्यं प्रहरति । अमुष्मै त्वा वज्रं प्रहरामीति यद्यभिचरेद्वज्रो वै स्फ्य स्तृणुते हैवैनेन - १.२.५.[२२]

अथ पाणी अवनेनिक्ते । यद्ध्यस्यै क्रूरमभूत्तद्ध्यस्या एतदहार्षीत्तस्मात्पाणी अवनेनिक्ते - १.२.५.[२३]

स ये हाग्र ईजिरे । ते ह स्मावमर्श यजन्ते ते पापीयांस आसुरथ ये नेजिरे ते श्रेयांस आसुस्ततोऽश्रद्धा मनुष्यान्विवेद ये यजन्ते पापीयांसस्ते भवन्ति य उ न यजन्ते श्रेयांसस्ते भवन्तीति तत इतो देवान्हविर्न जगामेतः प्रदानाद्धि देवा उपजीवन्ति - १.२.५.[२४]



ते ह देवा ऊचुः । बृहस्पतिमाङ्गिरसमश्रद्धा वै मनुष्यानविदत्तेभ्यो विधेहि यज्ञमिति स हेत्योवाच बृहस्पतिराङ्गिरसः कथा न यजध्व इति ते होचुः किं काम्या यजेमहि ये यजन्ते पापीयांसस्ते भवन्ति य उ न यजन्ते श्रेयांसस्ते भवन्तीति - १.२.५.[२५]

स होवाच । बृहस्पतिराङ्गिरसो यद्वै शुश्रुम देवानां परिषूतं तदेष यज्ञो भवति यच्छृतानि हवींषि क्लृप्ता वेदिस्तेनावमर्शमचारिष्ट तस्मात्पापीयांसोऽभूत्तेनानवमर्श यजध्वं तथा श्रेयांसो भविष्यथेत्या कियत इत्या बर्हिषस्तरणादिति बर्हिषा ह वै खल्वेषा शाम्यति स यदि पुरा बर्हिषस्तरणात्किंचिदापद्येत बर्हिरेव तत्स्तृणन्नपास्येदथ यदा बर्हि स्तृणन्त्यपि पदाभितिष्ठन्ति स यो हैवं विद्वाननवमर्शं यजते श्रेयान्हैव भवति तस्मादनवमर्शमेव यजेत - १.२.५.[२६]

##१.३.१ अथ द्रव्यसंस्काराः
स वै स्रुचः सम्मार्ष्टि । तद्यत्स्रुचः सम्मार्ष्टि यथा वै देवानां चरणं तद्वा अनु मनुष्याणां तस्माद्यदा मनुष्याणां परिवेषणमुपक्लृप्तं भवति - १.३.१.[१]

अथ पात्राणि निर्णेनिजति । तैर्निर्णिज्य परिवेविषत्येवं वा एष देवानां यज्ञो भवति यच्छृतानि हवींषि क्लृप्ता वेदिस्तेषामेतान्येव पात्राणि यत्स्रुचः - १.३.१.[२]

स यत्सम्मार्ष्टि । निर्णेनेक्त्येवैना एतन्निर्णिक्ताभिः प्रचराणीति तद्वै द्वयेनैव देवेभ्यो निर्णेनिजत्येकेन मनुष्येभ्योऽद्भिश्च ब्रह्मणा च देवेभ्य आपो हि कुशा ब्रह्म यजुरेकेनैव मनुष्येभ्योऽद्भिरेवैवम्वेतन्नाना भवति - १.३.१.[३]

अथ स्रुवमादत्ते । तं प्रतपति प्रत्युष्टं रक्षः प्रत्युष्टा अरातयो निष्टप्तं रक्षो निष्टप्ता अरातय इति वा - १.३.१.[४]



देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसंगाद् बिभयांचक्रुस्तद्यज्ञमुखादेवैतन्नाष्ट्रा रक्षांस्यतोऽपहन्ति - १.३.१.[५]

स वा इत्यग्रैरन्तरतः सम्मार्ष्टि । अनिशितोऽसि सपत्नक्षिदिति यथानुपरतो यजमानस्य सपत्नान्क्षिणुयादेवमेतदाह वाजिनं त्वा वाजेध्यायै सम्मार्ज्मीति यज्ञियं त्वा यज्ञाय सम्मार्ज्मीत्येवैतदाहैतेनैव सर्वाः स्रुचः सम्मार्ष्टि वाजिनीं त्वेति स्रुचं तूष्णीं प्राशित्रहरणं - १.३.१.[६]

स वा इत्यग्रैरन्तरतः सम्मार्ष्टीति । मूलैर्बाह्यत इतीव वा अयं प्राण इतीवोदानः प्राणोदानावेवैतद्दधाति तस्मादितीवेमानि लोमानीतीवेमानि - १.३.१.[७]

स वै सम्मृज्य सम्मृज्य प्रतप्य प्रतप्य प्रयच्छति । यथावमर्शं निर्णिज्यानवमर्शमुत्तमं परिक्षालयेदेवं तत्तस्मात्प्रतप्य प्रतप्य प्रयच्छति - १.३.१.[८]

स वै स्रुवमेवाग्रे सम्मार्ष्टि । अथेतराः स्रुचो योषा वै स्रुग्वृषा स्रुवस्तस्माद्यद्यपि बह्व्य इव स्त्रियः सार्धं यन्ति य एव तास्वपि कुमारक इव पुमान्भवति स एव तत्र प्रथम एत्यनूच्य इतरास्तस्मात्स्रुवमेवाग्रे सम्मार्ष्ट्यथेतराः स्रुचः - १.३.१.[९]

स वै तथैव सम्मृज्यात् । यथाग्निं नाभिव्युक्षेद्यथा यस्मा अशनमाहरिष्यन्त्स्यात्तं पात्रनिर्णेजनेनाभिव्युक्षेदेवं तत्तस्मादु तथैव सम्मृज्याद्यथाग्निं नाभिव्युक्षेत्प्राङिवैवोत्क्रम्य - १.३.१.[१०]

तद्धैके । स्रुक्सम्मार्जनान्यग्नावभ्यादधति वेदस्याहाभूवन्त्स्रुच एभिः सममार्जिषुरिदं वै किंचिद्यज्ञस्य नेदिदं बह्वा अशनमाहरेत्तम्पात्रनिर्णेजनं पाययेदेवं तत्तस्मादु परास्येदेवैतानि - १.३.१.[११]



अथ पत्नीं संनह्यति । जघनार्धो वा एष यज्ञस्य यत्पत्नी प्राङ्मे यज्ञस्तायमानो यादिति युनक्त्येवैनामेतद्युक्ता मे यज्ञमन्वासाता इति - १.३.१.[१२]

योक्त्रेण संनह्यति । योक्त्रेण हि योग्यं युञ्जन्त्यस्ति वै पत्न्या अमेध्यं यदवाचीनं नाभेरथैतदाज्यमवेक्षिष्यमाणा भवति तदेवास्या एतद्योक्त्रेणान्तर्दधात्यथ मेध्येनैवोत्तरार्धेनाज्यमवेक्षते तस्मात्पत्नीं संनह्यति - १.३.१.[१३]

स वा अभिवासः संनह्यति । ओषधयो वै वासो वरुण्या रज्जुस्तदोषधीरेवैतदन्तर्दधाति तथो हैनामेषा वरुण्या रज्जुर्न हिनस्ति तस्मादभिवासः संनह्यति - १.३.१.[१४]

स संनह्यति । अदित्यै रास्नासीतीयं वै पृथिव्यदितिः सेयं देवानां पत्न्येषा वा एतस्य पत्नी भवति तदस्या एतद्रास्नामेव करोति न रज्जुं हिरो वै रास्ना तामेवास्या एतत्करोति - १.३.१.[१५]

स वै न ग्रन्थिं कुर्यात् । वरुण्यो वै ग्रन्थिर्वरुणो ह पत्नीं गृह्णीयाद्यद्ग्रन्थिं कुर्यात्तस्मान्न ग्रन्थिं करोति - १.३.१.[१६]

ऊर्ध्वमेवोद्गूहति । विष्णोर्वेष्योऽसीति सा वै न पश्चात्प्राची देवानां यज्ञमन्वासीतेयं वै पृथिव्यदितिः सेयं देवानां पत्नी सा पश्चात्प्राची देवानां यज्ञमन्वास्ते तद्धेमामभ्यारोहेत्सा पत्नी क्षिप्रेऽमुं लोकमियात्तथो ह पत्नी ज्योग्जीवति तदस्या एवैतन्निह्नुते तथो हैनामियं न हिनस्ति तस्मादु दक्षिणत इवैवान्वासीत - १.३.१.[१७]

अथाज्यमवेक्षते । योषा वै पत्नी रेत आज्यं मिथुनमेवैतत्प्रजननं क्रियते तस्मादाज्यमवेक्षते- १.३.१.[१८]

सावेक्षते । ऽदब्धेन त्वा चक्षुषावपश्यामीत्यनार्त्तेन त्वा चक्षुषावपश्यामीत्येवैतदाह अग्नेर्जिह्वासीति यदा वा एतदग्नौ जुह्वत्यथाग्नेर्जिह्वा इवोत्तिष्ठन्ति तस्मादाहाग्नेर्जिह्वासीति सुहूर्देवेभ्य इति साधु देवेभ्य इत्येवैतदाह धाम्ने धाम्ने मे भव यजुषे यजुष इति सर्वस्मै मे यज्ञायैधीत्येवैतदाह - १.३.१.[१९]



अथाज्यमादाय प्राङुदाहरति । तदाहवनीयेऽधिश्रयति यस्याहवनीये हवींषि श्रपयन्ति सर्वो मे यज्ञ आहवनीये श्रृतोऽसदित्यथ यदमुत्राग्रेऽधिश्रयति पत्नीं ह्यवकाशयिष्यन्भवति न हि तदवकल्पते यत्सामि प्रत्यग्घरेत्पत्नीमवकाशयिष्यामीत्यथ यत्पत्नीं नावकाशयेदन्तरियाद्ध यज्ञात्पत्नीं तथो ह यज्ञात्पत्नीं नान्तरेति तस्मादु सार्धमेव विलाप्य प्रागुदाहरत्यवकाश्य पत्नीं यस्यो पत्नी न भवत्यग्र एव तस्याहवनीयेऽधिश्रयति तत्तत आदत्ते तदन्तर्वेद्यासादयति - १.३.१.[२०]

तदाहुः । नान्तर्वेद्या सादयेदतो वै देवानां पत्नीः संयाजयन्त्यवसभा अह देवानां पत्नीः करोति परः पुंसो हास्य पत्नी भवतीति तदु होवाच याज्ञवल्क्यो यथादिष्टं पत्न्या अस्तु कस्तदाद्रियेत यत्परः पुंसा वा पत्नी स्याद्यथा वा यज्ञो वेदिर्यज्ञ आज्यं यज्ञाद्यज्ञ निर्मिमा इति तस्मादन्तर्वेद्येवासादयेत् - १.३.१.[२१]

प्रोक्षणीषु पवित्रे भवतः । ते तत आदत्ते ताभ्यामाज्यमुत्पुनात्येको वा उत्पवनस्य बन्धुर्मेध्यमेवैतत्करोति - १.३.१.[२२]

स उत्पुनाति । सवितुस्त्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिरिति सो ऽसावेव बन्धुः - १.३.१.[२३]

अथाज्यलिप्ताभ्यां पवित्राभ्यम् । प्रोक्षणीरुत्पुनाति सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः इति। सोऽसावेव बन्धुः। तद्यदाज्यलिप्ताभ्यां पवित्राभ्याम् । प्रोक्षणीरुत्पुनाति तदप्सु पयो दधाति तदिदमप्सु पयो हितमिदं हि यदा वर्षत्यथौषधयो जायन्त ओषधीर्जग्ध्वापः पीत्वा तत एष रसः सम्भवति तस्मादु रसस्यो चैव सर्वत्वाय - १.३.१.[२४]



अथाज्यमवेक्षते । तद्धैके यजमानमवख्यापयन्ति तदु होवाच याज्ञवल्क्यः कथं नु न स्वयमध्वर्यवो भवन्ति कथं स्वयं नान्वाहुर्यत्र भूयस्य इवाशिषः क्रियन्ते कथं न्वेषामत्रैव श्रद्धा भवतीति यां वै कां च यज्ञ ऋत्विज आशिषमाशासते यजमानस्यैव सा तस्मादध्वर्युरेवावेक्षेत - १.३.१.[२५]

सोऽवेक्षते । सत्यम् वै चक्षुः सत्यं हि वै चक्षुस्तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति य एव ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्याम तत्सत्येनैवैतत्समर्धयति - १.३.१.[२६]

सोऽवेक्षते । तेजोऽसि शुक्रमस्यमृतमसीति स एष सत्य एव मन्त्रस्तेजो ह्येतच्छुक्रं ह्येतदमृतं ह्येतत्तत्सत्येनैवैतत्समर्धयति - १.३.१.[२७]

##१.३.२ यज्ञस्य पुरुषतादाम्यम्

पुरुषो वै यज्ञः । पुरुषस्तेन यज्ञो यदेनं पुरुषस्तनुत एष वै तायमानो यावानेव पुरुषस्तावान्विधीयते तस्मात्पुरुषो यज्ञः - १.३.२.[१]

तस्येयमेव जुहूः । इयमुपभृदात्मैव ध्रुवा तद्वा आत्मन एवेमानि सर्वाण्यङ्गानि प्रभवन्ति तस्मादु ध्रुवाया एव सर्वो यज्ञः प्रभवति- १.३.२.[२]

प्राण एव स्रुवः । सोऽयं प्राणः सर्वाण्यङ्गान्यनुसंचरति तस्मादु स्रुवः सर्वा अनु स्रुचः संचरति - १.३.२.[३]

तस्यासावेव द्यौर्जुहूः । अथेदमन्तरिक्षमुपभृदियमेव ध्रुवा तद्वा अस्या एवेमे सर्वे लोकाः प्रभवन्ति तस्मादु ध्रुवाया एव सर्वो यज्ञः प्रभवति - १.३.२.[४]



अयमेव स्रुवो योऽयं पवते । सोऽयमिमान्त्सर्वाँल्लोकाननुपवते तस्मादु स्रुवः सर्वा अनु स्रुचः संचरति - १.३.२.[५]

स एष यज्ञस्तायमानो । देवेभ्यस्तायत ऋतुभ्यश्छन्दोभ्यो यद्धविस्तद्देवानां यत्सोमो राजा यत्पुरोडाशस्तत्तदादिश्य गृह्णात्यमुष्मै त्वा जुष्टं गृह्णामीत्येवमु हैतेषाम् - १.३.२.[६]

अथ यान्याज्यानि गृह्यन्ते । ऋतुभ्यश्चैव तानि च्छन्दोभ्यश्च गृह्यन्ते तत्तदनादिश्याज्यस्यैव रूपेण गृह्णाति स वै चतुर्जुह्वां गृह्णात्यष्टौ कृत्व उपभृति - १.३.२.[७]

स यच्चतुर्जुह्वां गृह्णाति । ऋतुभ्यस्तद्गृह्णाति प्रयाजेभ्यो हि तद्गृह्णात्यृतवो हि प्रयाजास्तत्तदनादिश्याज्यस्यैव रूपेण गृह्णात्यजामितायै जामि ह कुर्याद्यद्वसन्ताय त्वा ग्रीष्माय त्वेति गृह्णीयात्तस्मादनादिश्याज्यस्यैव रूपेण गृह्णाति - १.३.२.[८]

अथ यदष्टौ कृत्व उपभृति गृह्णाति । च्छन्दोभ्यस्तद्गृह्णात्यनुयाजेभ्यो हि तद्गृह्णाति छन्दांसि ह्यनुयाजास्तत्तदनादिश्याज्यस्यैव रूपेण गृह्णात्यजामितायै जामि ह कुर्याद्यद्गायत्र्यै त्वा त्रिष्टुभे त्वेति गृह्णीयात्तस्मादनादिश्याज्यस्यैव रूपेण
गृह्णाति - १.३.२.[९]

अथ यच्चतुर्ध्रुवायां गृह्णाति । सर्वस्मै तद्यज्ञाय गृह्णाति तत्तदनादिश्याज्यस्यैव रूपेण गृह्णाति कस्मा उ ह्यादिशेद्यतः सर्वाभ्य एव देवताभ्योऽवद्यति तस्मादनादिश्याज्यस्यैव रूपेण गृह्णाति - १.३.२.[१०]

यजमान एव जुहूमनु । योऽस्मा अरातीयति स उपभृतमन्वत्तैव जुहूमन्वाद्य उपभृतमन्वत्तैव जुहूराद्य उपभृत्स वै चतुर्जुह्वां गृह्णात्यष्टौ कृत्व उपभृति - १.३.२.[११]

स यच्चतुर्जुह्वां गृह्णाति । अत्तारमेवैतत्परिमिततरं कनीयांसं करोत्यथ यदष्टौ कृत्व उपभृति गृह्णात्याद्यमेवैतदपरिमिततरं भूयांसं करोति तद्धि समृद्धं यत्रात्ता कनीयानाद्यो भूयान् - १.३.२.[१२]

स वै चतुर्जुह्वां गृह्णन् । भूय आज्यं गृह्णात्यष्टौ कृत्व उपभृति गृह्णन्कनीय आज्यं गृह्णाति - १.३.२.[१३]

स यच्चतुर्जुह्वां गृह्णन् । भूय आज्यं गृह्णात्यत्तारमेवैतत्परिमिततरं कनीयांसं कुर्वंस्तस्मिन्वीर्यं बलं दधात्यथ यदष्टौ कृत्व उपभृति गृह्णन्कनीय आज्यं गृह्णात्याद्यमेवैतदपरिमिततरं भूयांसं कुर्वंस्तमवीर्यमबलीयांसं करोति तस्मादुत राजापारां विशम्प्रावसायाप्येकवेश्मनैव जिनाति त्वद्यथा त्वत्कामयते तथा सचत एतेनो ह तद्वीर्येण यज्जुह्वां भूय आज्यं गृह्णाति स यज्जुह्वां गृह्णाति जुह्वैव तज्जुहोति यदुपभृति गृह्णाति जुह्वैव तज्जुहोति - १.३.२.[१४]

तदाहुः । कस्मा उ तर्ह्युपभृति गृह्णीयाद्यदुपभृता न जुहोतीति स यद्धोपभृता जुहुयात्पृथग्घैवेमाः प्रजाः स्युर्नैवात्ता स्यान्नाद्यः स्यादथ यत्तज्जुह्वेव समानीय जुहोति

तस्मादिमा विशः क्षत्रियस्यैव वशे सति वैश्यं पशव उपतिष्ठन्तेऽथ यत्तज्जुह्वेव समानीय जुहोति तस्माद्यदोत क्षत्रियः कामयतेऽथाह वैश्य मयि यत्ते परो निहितं तदाहरेति तं जिनाति त्वद्यथा त्वत्कामयते तथा सचत एतेनो ह तद्वीर्येण - १.३.२.[१५]

तानि वा एतानि । च्छन्दोभ्य आज्यानि गृह्यन्ते स यच्चतुर्जुह्वां गृह्णाति गायत्र्यै तद्गृह्णात्यथ यदष्टौ कृत्व उपभृति गृह्णाति त्रिष्टुब्जगतीभ्यां तद्गृह्णात्यथ यच्चतुर्ध्रुवायां गृह्णात्यनुष्टुभे तद्गृह्णाति वाग्वा अनुष्टुब्वाचो वा इदं सर्वम्प्रभवति तस्मादु ध्रुवाया एव सर्वो यज्ञः प्रभवतीयं वा अनुष्टुबस्यै वा इदं सर्वं प्रभवति तस्मादु ध्रुवाया एव सर्वो यज्ञः प्रभवति - १.३.२.[१६]

स गृह्णाति । धाम नामासि प्रियं देवानामित्येतद्वै देवानां प्रियतमं धाम यदाज्यं तस्मादाह धाम नामासि प्रियं देवानामित्यनाधृष्टं देवयजनमसीति वज्रो ह्याज्यं तस्मादाहानाधृष्टं देवयजनमसीति - १.३.२.[१७]



स एतेन यजुषा । सकृज्जुह्वां गृह्णाति त्रिस्तूष्णीमेतेनैव यजुषा सकृदुपभृति गृह्णाति सप्त कृत्वस्तूष्णीमेतेनैव यजुषा सकृद्ध्रुवायां गृह्णाति त्रिस्तूष्णीं तदाहुस्त्रिस्त्रिरेव यजुषा गृह्णीयात्त्रिवृद्धि यज्ञ इति तदु नु सकृत्सकृदेवात्रो ह्येव त्रिर्गृहीतं सम्पद्यते - १.३.२.[१८]

##१.३.३ इध्माबर्हिषोः प्रोक्षणस्तरणपूर्वकं परिधिपरिधानम्

प्रोक्षणीरध्वर्युरादत्ते । स इध्ममेवाग्रे प्रोक्षति कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामीति तन्मेध्यमेवैतदग्नये करोति - १.३.३.[१]

अथ वेदिं प्रोक्षति । वेदिरसि बर्हिषे त्वा जुष्टां प्रोक्षामि तन्मेध्यामेवैतद्बर्हिषे करोति - १.३.३.[२]

अथास्मै बर्हिः प्रयच्छति । तत्पुरस्ताद्ग्रन्थ्यासादयति तत्प्रोक्षति बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि तन्मेध्यमेवैतत्स्रुग्भ्यः करोति - १.३.३.[३]

अथ याः प्रोक्षण्यः परिशिष्यन्ते । ताभिरोषधीनां मूलान्युपनिनयत्यदित्यै व्युन्दनमसीतीयं वै पृथिव्यदितिस्तदस्या एवैतदोषधीनां मूलान्युपोनत्ति ता इमा आर्द्रमूला ओषधयस्तस्माद्यद्यपि शुष्काण्यग्राणि भवन्त्यार्द्राण्येव मूलानि भवन्ति - १.३.३.[४]

अथ विस्रंस्य ग्रन्थिम् । पुरस्तात्प्रस्तरं गृह्णाति विष्णो स्तुपोऽसीति यज्ञो वै विष्णुस्तस्येयमेव शिखा स्तुप एतामेवास्मिन्नेतद्दधाति पुरस्ताद्गृह्णाति पुरस्ताद्ध्ययं स्तुपस्तस्मात्पुरस्ताद्गृह्णाति - १.३.३.[५]

अथ संनहनं विस्रंसयति । प्रक्लृप्तं हैवास्य स्त्री विजायत इति तस्मात्संनहनं विस्रंसयति तद्दक्षिणायां श्रोणौ निदधाति नीविर्हैवास्यैषा दक्षिणत इव हीयं नीविस्तस्माद्दक्षिणायां श्रोणौ निदधाति तत्पुनरभिच्छादयत्यभिच्छन्नेव हीयं नीविस्तस्मात्पुनरभिच्छादयति - १.३.३.[६]

अथ बर्हि स्तृणाति । अयं वै स्तुपः प्रस्तरोऽथ यान्यवाञ्चि लोमानि तान्येवास्य यदितरं बर्हिस्तान्येवास्मिन्नेतद्दधाति तस्माद्बर्हि स्तृणाति - १.३.३.[७]

योषा वै वेदिः । तामेतद्देवाश्च पर्यासते ये चेमे ब्राह्मणाः शुश्रुवांसोऽनूचानास्तेष्वेवैनामेतत्पर्यासीनेष्वनग्नां करोत्यनग्नताया एव तस्माद्बर्हिस्तृणाति - १.३.३.[८]

यावती वै वेदिः । तावती पृथिव्योषधयो बर्हिस्तदस्यामेवैतत्पृथिव्यामोषधीर्दधाति ता इमा अस्यां पृथिव्यामोषधयः प्रतिष्ठितास्तस्माद्बर्हि स्तृणाति - १.३.३.[९]

तद्वै बहुलं स्तृणीयादित्याहुः यत्र वा अस्यै बहुलतमा ओषधयस्तदस्या उपजीवनीयतमं तस्माद्बहुलं स्तृणीयादिति तद्वै तदाहर्तर्येवाधि त्रिवृत्स्तृणाति त्रिवृद्धि यज्ञोऽथो अपि प्रवर्हं स्तृणीयात्स्तृणन्ति बर्हिरानुषगिति ह्यृषिणाभ्यनूक्तमधरमूलं स्तृणात्यधरमूला इव हीमा अस्याम्पृथिव्यामोषधयः प्रतिष्ठितास्तस्मादधरमूलं स्तृणाति - १.३.३.[१०]

स स्तृणाति । ऊर्णम्रदसं त्वा स्तृणामि स्वासस्थां देवेभ्य इति साध्वीं देवेभ्य इत्येवैतदाह यदाहोर्णम्रदसं त्वेति स्वासस्थां देवेभ्य इति स्वासदां देवेभ्य इत्येवैतदाह - १.३.३.[११]

अथाग्निं कल्पयति । शिरो वै यज्ञस्याहवनीयः पूर्वोऽर्धो वै शिरः पूर्वार्धमेवैतद्यज्ञस्य कल्पयत्युपर्युपरि प्रस्तरं धारयङ्कल्पयत्ययं वै स्तुपः प्रस्तर एतमेवास्मिन्नेतत्प्रतिदधाति तस्मादुपर्युपरि प्रस्तरं धारयङ्कल्पयति - १.३.३.[१२]

अथ परिधीन्परिदधाति । तद्यत्परिधीन्परिदधाति यत्र वै देवा अग्रेऽग्निं होत्राय प्रावृणत तद्धोवाच न वा अहमिदमुत्सहे यद्वो होता स्यां यद्वो हव्यं वहेयं त्रीन्पूर्वान्प्रावृढ्वं ते प्राधन्विषुस्तान्नु मेऽवकल्पयताथ वा अहमेतदुत्साक्ष्ये यद्वो होता स्यां यद्वो हव्यं वहेयमिति तथेति तानस्मा एतानवाकल्पयंस्त एते परिधयः - १.३.३.[१३]

स होवाच । वज्रो वै तान्वषट्कारः प्रावृणग्वज्राद्वै वषट्काराद्बिभेमि यन्मा वज्रो वषट्कारो न प्रवृञ्ज्यादेतैरेव मा परिधत्त तथा मा वज्रो वषट्कारो न प्रवर्क्ष्यतीति तथेति तमेतैः पर्यदधुस्तं न वज्रो वषट्कारः प्रावृणक्तद्वस्मैवैतदग्नये नह्यति यदेतैः परिदधाति - १.३.३.[१४]

त उ हैत ऊचुः । इदमु चेदस्मान्यज्ञे युङ्क्षास्त्वेवास्माकमपि यज्ञे भाग इति - १.३.३.[१५]

तथेति देवा अब्रुवन् । यद्बहिष्परिधि स्कन्त्स्यति तद्युष्मासु हुतमथ यद्व उपर्युपरि होष्यन्ति तद्वोऽविष्यतीति स यदग्नौ जुह्वति तदेनानवत्यथ यदेनानुपर्युपरि जुह्वति तदेनानवत्यथ यद्बहिष्परिधि स्कन्दति तदेतेषु हुतं तस्मादु ह नाग इव स्कन्नं स्यादिमां वै ते प्राविशन्यद्वा इदं किंच स्कन्दत्यस्यामेव तत्सर्वं प्रतितिष्ठति - १.३.३.[१६]

स स्कन्नमभिमृशति । भुवपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेत्येतानि वै तेषामग्नीनां नामानि यद्भुवपतिर्भुवनपतिर्भूतानाम्पतिस्तद्यथा वषट्कृतं हुतमेवमस्यैतेष्वग्निषु भवति - १.३.३.[१७]

तद्धैके । इध्मस्यैवैतान्परिधीन्परिदधाति तदु तथा न कुर्यादनवक्लृप्ता ह तस्यैते भवन्ति यानिध्मस्य परिदधात्यभ्याधानाय ह्येवेध्मः क्रियते तस्यो हैवैतेऽवक्लृप्ता भवन्ति यस्यैतानन्यानाहरन्ति परिधय इति तस्मादन्यानेवाहरेयुः - १.३.३.[१८]

ते वै पालाशाः स्युः । ब्रह्म वै पलाशो ब्रह्माग्निरग्नयो हि तस्मात्पालाशाः स्युः - १.३.३.[१९]

यदि पालाशान्न विन्देत् । अथो अपि वैकङ्कता स्युर्यदि वैकङ्कतान्न विन्देदथो अपि कार्ष्मर्यमयाः स्युर्यदि कार्ष्मर्यमयान्न विन्देदथो अपि वैल्वाः स्युरथो खादिरा अथो औदुम्बरा एते हि वृक्षा यज्ञियास्तस्मादेतेषां वृक्षाणां भवन्ति - १.३.३.[२०]



##१.३.४ परिधिपरिधानम्

ते वा आर्द्राः स्युः । एतद्ध्येषां जीवमेतेन सतेजस एतेन वीर्यवन्तस्तस्मादार्द्राः स्युः - १.३.४.[१]

स मध्यममेवाग्रे । परिधिं परिदधाति गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडित इति - १.३.४.[२]

अथ दक्षिणां परिदधाति । इन्द्रस्य बाहुरसि दक्षिणो विश्वस्य अरिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडित इति - १.३.४.[३]

अथोत्तरं परिदधाति । मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा विश्वस्यारिष्ट्यै यजमानस्यपरिधिरस्यग्निरिड ईडित इत्यग्नयो हि तस्मादाहाग्निरिड ईडित इति - १.३.४.[४]

अथ समिधमभ्यादधाति । स मध्यममेवाग्रे परिधिमुपस्पृशति तेनैतानग्रे समिन्धेऽथाग्नावभ्यादधाति तेनो अग्निं प्रत्यक्षं समिन्धे - १.३.४.[५]

सोऽभ्यादधाति । वीतिहोत्रं त्वा कवे द्युमन्तं समिधीमहि अग्ने बृहन्तमध्वर इत्येतया गायत्र्या गायत्रीमेवैतत्समिन्धे सा गायत्री समिद्धान्यानि छन्दांसि समिन्धे छन्दांसि समिद्धानि देवेभ्यो यज्ञं वहन्ति - १.३.४.[६]



अथ यां द्वितीयां समिधमभ्यादधाति । वसन्तमेव तया समिन्धे स वसन्तः समिद्धोऽन्यानृतून्त्समिन्ध ऋतवः समिद्धाः प्रजाश्च प्रजनयन्त्योषधीश्च पचन्ति सोऽभ्यादधाति समिदसीति समिद्धि वसन्तः - १.३.४.[७]

अथाभ्याधाय जपति । सूर्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्या इति गुप्त्यै वा अभितः परिधयो भवन्त्यथैतत्सूर्यमेव पुरस्ताद्गोप्तारं करोति नेत्पुरस्तान्नाष्ट्रा रक्षांस्यभ्यवचरानिति सूर्यो हि नाष्ट्राणां रक्षसामपहन्ता - १.३.४.[८]

अथ यामेवामूं तृतीयां समिधमभ्यादधाति । अनुयाजेषु ब्राह्मणमेव तया समिन्धे स ब्राह्मणः समिद्धो देवेभ्यो यज्ञं वहति - १.३.४.[९]

अथ स्तीर्णां वेदिमुपावर्तते । स द्वे तृणे आदाय तिरश्ची निदधाति सवितुर्बाहू स्थ इत्ययं वै स्तुपः प्रस्तरोऽथा ते भ्रुवावेव तिरश्ची निदधाति तस्मादिमे तिरश्च्यौ भ्रुवौ क्षत्रं वै प्रस्तरो

विश इतरं बर्हिः क्षत्रस्य चैव विशश्च विधृत्यै तस्मात्तिरश्ची निदधाति तस्माद्वेव विधृती नाम - १.३.४.[१०]

तत्प्रस्तरं स्तृणाति । ऊर्णम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्य इति साधुं देवेभ्य इत्येवैतदाह यदाहोर्णम्रदसं त्वेति स्वासस्थं देवेभ्य इति स्वासदं देवेभ्य इत्येवैतदाह - १.३.४.[११]

तमभिनिदधाति । आ त्वा वसवो रुद्रा आदित्याः सदन्त्वित्येते वै त्रया देवा यद्वसवो रुद्रा आदित्या एते त्वासीदन्त्वित्येवैतदाहाभिनिहित एव सव्येन पाणिना भवति - १.३.४.[१२]

अथ दक्षिणेन जुहूं प्रतिगृह्णाति । नेदिह पुरा नाष्ट्रा रक्षांस्याविशानिति ब्राह्मणो हि रक्षसामपहन्ता तस्मादभिनिहित एव सव्येन पाणिना भवति - १.३.४.[१३]



अथ जुहूं प्रतिगृह्णाति । घृताच्यसि जुहूर्नाम्नेति घृताची हि जुहूर्हि नाम्ना सेदम्प्रियेण धाम्ना प्रियं सद आसीदेति घृताच्यस्युपभृन्नाम्नेत्युपभृतं घृताची ह्युपभृद्धि नाम्ना सेदं प्रियेण धाम्ना प्रियं सद आसीदेति घृताच्यसि ध्रुवा नाम्नेति ध्रुवां घृताची हि ध्रुवा हि नाम्ना सेदं प्रियेण धाम्ना प्रियं सद आसीदेति प्रियेण धाम्ना प्रियं सद आसीदेति यदन्यद्धविः - १.३.४.[१४]

स वा उपरि जुहूं सादयति । अध इतराः स्रुचः क्षत्रं वै जुहूर्विश इतराः स्रुचः क्षत्रमेवैतद्विश उत्तरं करोति तस्मादुपर्यासीनं क्षत्रियमधस्तादिमाः प्रजा उपासते तस्मादुपरि जुहूं सादयत्यध इतराः स्रुचः - १.३.४.[१५]

सोऽभिमृशति । ध्रुवा असदन्निति ध्रुवा ह्यसदन्नृतस्य योनाविति यज्ञो वा ऋतस्य योनिर्यज्ञे ह्यसदंस्ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिमिति तद्यजमानमाह पाहि मां यज्ञन्यमिति तदप्यात्मानं यज्ञान्नान्तरेति यज्ञो वै विष्णोस्तद्यज्ञायैवैतत्सर्वं परिददाति गुप्त्यै तस्मादाह ता विष्णो पाहीति - १.३.४.[१६]

##१.३.५ सामिधेन्यनुवचनम्

इन्धे ह वा एतदध्वर्युः । इध्मेनाग्निं तस्मादिध्मो नाम समिन्धे सामिधेनीभिर्होता तस्मात्सामिधेन्यो नाम - १.३.५.[१]

स आह । अग्नये समिध्यमानायानुब्रूहीत्यग्नये ह्येतत्समिध्यमानायान्वाह - १.३.५.[२]

तदु हैक आहुः । अग्नये समिध्यमानाय होतरनुब्रूहीति तदु तथा न ब्रूयादहोता वा एष पुरा भवति यदैवैनं प्रवृणीतेऽथ होता तस्मादु ब्रूयादग्नये समिध्यमानायानुब्रूहीत्येव - १.३.५.[३]

आग्नेयीरन्वाह । स्वयैवैनमेताद्देवताया समिन्धे गायत्रीरन्वाह गायत्रं वा अग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसा समिन्धे वीर्यं गायत्री ब्रह्म गायत्री वीर्येणैवैनमेतत्समिन्धे - १.३.५.[४]

एकादशान्वाह । एकादशाक्षरा वै त्रिष्टुब्ब्रह्म गायत्री क्षत्रं त्रिष्टुबेताभ्यामेवैनमेतदुभाभ्यां वीर्याभ्यां समिन्धे तस्मादेकादशान्वाह - १.३.५.[५]

स वै त्रिः प्रथमामन्वाह । त्रिरुत्तमां त्रिवृत्प्रायणा हि यज्ञास्त्रिवृदुदयनास्तस्मात्त्रिः प्रथमामन्वाह त्रिरुत्तमां - १.३.५.[६]

ताः पञ्चदश सामिधेन्यः संपद्यन्ते पञ्चदशो वै वज्रो वीर्यं वज्रो वीर्यमेवैतत्सामिधेनीरभिसंपादयति तस्मादेतास्वनूच्यमानासु यं द्विष्यात्तमङ्गुष्ठाभ्यामवबाधेतेदमहममुमवबाध इति तदेनमेतेन वज्रेणावबाधते - १.३.५.[७]

पञ्चदश वा अर्धमासस्य रात्रयः । अर्धमासशो वै संवत्सरो भवन्नेति तद्रात्रीराप्नोति - १.३.५.[८]

पञ्चदशानामु वै गायत्रीणाम् । त्रीणि च शतानि षष्टिश्चाक्षराणि त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि तदहान्याप्नोति तद्वेव संवत्सरमाप्नोति - १.३.५.[९]

सप्तदश सामिधेनीः । इष्ट्या अनुब्रूयादुपांशु तस्यै देवतायै यजति यस्या इष्टिं निर्वपति द्वादश वै मासाः संवत्सरस्य पञ्चर्तव एष एव प्रजापतिः सप्तदशः सर्वं वै प्रजापतिस्तत्सर्वेणैव तं काममनपराधं राध्नोति यस्मै कामायेष्टिं निर्वपत्युपांशु देवतां यजत्यनिरुक्तं वा उपांशु सर्वं वा अनिरुक्तं तत्सर्वेणैव तं काममनपराधं राध्नोति यस्मै कामायेष्टिं निर्वपत्येष इष्टेरुपचारः - १.३.५.[१०]

एकविंशतिं सामिधेनीः । अपि दर्शपूर्णमासयोरनुब्रूयादित्याहुर्द्वादश वै मासाः संवत्सरस्य पञ्चर्तवस्त्रयो लोकास्तद्विंशतिरेष एवैकविंशो य एष तपति सैषा गतिरेषा प्रतिष्ठा तदेतां गतिमेतां प्रतिष्ठां गच्छति तस्मादेकविंशतिमनुब्रूयात् - १.३.५.[११]



ता हैता गतश्रेरेवानुब्रूयात् । य इच्छेन्न श्रेयान्स्यान्न पापीयानिति यादृशाय हैव सतेऽन्वाहुस्तादृङ्ङा हैव भवति पापीयान्वा यस्यैवं विदुष एता अन्वाहुः सो एषा मीमांसैव न त्वेवैता अनूच्यन्ते - १.३.५.[१२]

त्रिरेव प्रथमां त्रिरुत्तमामनवानन्ननुब्रूयात् । त्रयो वा इमे लोकास्तदिमानेवैतल्लोकान्त्सन्तनोतीमांल्लोकान्त्स्पृणुते त्रय इमे पुरुषे प्राणा एतमेवास्मिन्नेतत्संततमव्यवच्छिन्नं दधात्येतदनुवचनम् - १.३.५.[१३]

स यावदस्य वचः स्यात् । एवमेवानुविवक्षेत्तस्यैतस्य परिचक्षीत साम्यवान्यादनवानन्ननुविवक्षंस्तत्कर्म विवृह्येत सा परिचक्षा - १.३.५.[१४]

स यद्येतन्नोदाशंसेत ।अप्येकैकामेवानवानन्ननुब्रूयात् तदेकैकयैवेमांल्लोकांत्संतनोत्येकैकयेमांल्लोकान्त्स्पृणुतेऽथ यत्प्राणं दधाति गायत्री वै प्राणः स यत्कृत्स्नां गायत्रीमन्वाह तत्कृत्स्नं प्राणं दधाति तस्मादेकैकामेवानवानन्ननुब्रूयात् - १.३.५.[१५]

ता वै संतता अव्यवच्छिन्ना अन्वाह । संवत्सरस्यैवैतदहोरात्राणि संतनोति तानीमानि संवत्सरस्याहोरात्राणि संततान्यव्यवच्छिन्नानि परिप्लवन्ते द्विषत उ चैवैतद्भ्रातृव्याय नोपस्थानं करोत्युपस्थानं ह कुर्याद्यदसंतता अनुब्रूयात्तस्माद्वै संतता अव्यवच्छिन्ना अन्वाह - १.३.५.[१६]

##१.४.१
हिंकृत्यान्वाह । नासामा यज्ञोऽस्तीति वा आहुर्न वा अहिंकृत्य साम गीयते स यद्धिंकरोति तद्धिंकारस्य रूपं क्रियते प्रणवेनैव साम्नो रूपमुपगच्छत्यो३ओ३ इत्येतेनो हास्यैष सर्व एव ससामा यज्ञो भवति - १.४.१.[१]



यद्वेव हिंकरोति । प्राणो वै हिंकारः प्राणो हि वै हिंकारस्तस्मादपिगृह्य नासिके न हिंकर्तुं शक्नोति वाचा वा ऋचमन्वाह वाक्च वै प्राणश्च मिथुनं तदेतत्पुरस्तान्मिथुनं प्रजननं क्रियते सामिधेनीनां तस्माद्वै हिंकृत्यान्वाह - १.४.१.[२]

स वा उपांशु हिंकरोति । अथ यदुच्चैर्हिंकुर्यादन्यतरदेव कुर्याद्वाचमेव तस्मादुपांशु हिंकरोति - १.४.१.[३]

स वा एति च प्रेति चान्वाह । गायत्रीमेवैतदर्वाचीं च पराचीं च युनक्ति पराच्यह देवेभ्यो यज्ञं वहत्यर्वाची मनुष्यानवति तस्माद्वा एति च प्रेति चान्वाह - १.४.१.[४]

यद्वेवेति च प्रेति चान्वाह । प्रेति वै प्राण एत्युदानः प्राणोदानावेवैतद्दधाति तस्माद्वा एति च प्रेति चान्वाह - १.४.१.[५]

यद्वेवेति च प्रेति चान्वाह । प्रेति वै रेतः सिच्यत एति प्रजायते प्रेति पशवो वितिष्ठन्त एति समावर्तन्ते सर्वं वा इदमेति च प्रेति च तस्माद्वा एति च प्रेति चान्वाह - १.४.१.[[६]]

सोऽन्वाह । प्र वो वाजा अभिद्यव इति तन्नु प्रेति भवत्यग्न आयाहि वीतय इति तद्वेति भवति - १.४.१.[७]

तदु हैक आहुः । उभयं वा एतत्प्रेति सम्पद्यत इति तदु तदातिविज्ञान्यमिव प्र वो वाजा अभिद्यव इति तन्नु प्रेत्यग्न आयाहि वीतय इति तद्वेति - १.४.१.[८]

सोऽन्वाह । प्र वो वाजा अभिद्यव इति तन्नु प्रेति भवति वाजा इत्यन्नं वै वाजा अन्नमेवैतदभ्यनूक्तमभिद्यव इत्यर्धमासा वा अभिद्यवोऽर्धमासानेवैतदभ्यनूक्तं हविष्मन्त इति पशवो वै हविष्मन्तः पशूनेवैतदभ्यनूक्तम् - १.४.१.[९]



घृताच्येति । विदेघो ह माथवोऽग्निं वैश्वानरं मुखे बभार तस्य गोतमो राहूगण ऋषिः पुरोहित आस तस्मै ह स्मामन्त्र्यमाणो न प्रतिशृणोति नेन्मेऽग्निर्वैश्वानरो मुखान्निष्पद्याता इति - १.४.१.[१०]

तमृग्भिर्ह्वयितुं दध्रे । वीतिहोत्रं त्वा कवे द्युमन्तं समिधीमहि अग्ने बृहन्तमध्वरे विदेघेति - १.४.१.[११]

स न प्रतिशुश्राव । उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते तव ज्योतींष्यर्चयो विदेघा३ इति - १.४.१.[१२]

स ह नैव प्रतिशुश्राव । तं त्वा घृतस्नवीमह इत्येवाभिव्याहरदथास्य घृतकीर्तावेवाग्निर्वैश्वानरो मुखादुज्जज्वाल तं न शशाक धारयितुं सोऽस्य मुखान्निष्पेदे स इमां पृथिवीं प्रापादः - १.४.१.[१३]

तर्हि विदेघो माथव आस । सरस्वत्यां स तत एव प्राङ्दहन्नभीयायेमां पृथिवीं तं गोतमश्च राहूगणो विदेघश्च माथवः पश्चाद्दहन्तमन्वीयतुः स इमाः सर्वा नदीरतिददाह सदानीरेत्युत्तराद्गिरेर्निर्धावति तां हैव नातिददाह तां हस्म तां पुरा ब्राह्मणा न तरन्त्यनतिदग्धाग्निना वैश्वानरेणेति - १.४.१.[१४]

तत एतर्हि । प्राचीनं बहवो ब्राह्मणास्तद्धाक्षेत्रतरमिवासस्रावितरमिवास्वदितमग्निना वैश्वानरेणेति - १.४.१.[१५]

तदु हैतर्हि । क्षेत्रतरमिव ब्राह्मणा उ हि नूनमेनद्यज्ञैरसिष्वदन्त्सापि जघन्ये नैदाघे समिवैव कोपयति तावच्छीतानतिदग्धा ह्यग्निना वैश्वानरेण - १.४.१.[१६]

स होवाच । विदेघो माथवः क्वाहं भवानीत्यत एव ते प्राचीनं भुवनमिति होवाच सैषाप्येतर्हि कोसलविदेहानां मर्यादा ते हि माथवाः - १.४.१.[१७]



अथ होवाच । गोतमो राहूगणः कथं नु न आमन्त्र्यमाणो न प्रत्यश्रौषीरिति स होवाचाग्निर्मे वैश्वानरो मुखेऽभूत्स नेन्मे मुखान्निष्पद्यातै तस्मात्ते न प्रतिश्रौषमिति - १.४.१.[१८]

तदु कथमभूदिति । यत्रैव त्वं घृतस्नवीमह इत्यभिव्याहार्षीस्तदेव मे घृतकीर्तावग्निर्वैश्वानरो मुखादुदज्वालीत्तं नाशकं धारयितुं स मे मुखान्निरपादीति - १.४.१.[१९]

स यत्सामिधेनीषु घृतवत् । सामिधेनमेव तत्समेवैनं तेनेन्धे वीर्यमेवास्मिन्दधाति - १.४.१.[२०]

तदु घृताच्येति । देवाञ्जिगाति सुम्नयुरिति यजमानो वै सुम्नयुः स हि देवाञ्जिगीषति स हि देवाञ्जिघांसति तस्मादाह देवाञ्जिगाति सुम्नयुरिति सैषाग्नेयी सत्यनिरुक्ता सर्वं वा अनिरुक्तं सर्वेणैवैतत्प्रतिपद्यते - १.४.१.[२१]

अग्न आयाहि वीतय इति । तद्वेति भवति वीतय इति समन्तिकमिव ह वा इमेऽग्रे लोका आसुरित्युन्मृश्या हैव द्यौरास - १.४.१.[२२]

ते देवा अकामयन्त । कथं नु न इमे लोका वितरां स्युः कथं न इदं वरीय इव स्यादिति तानेतैरेव त्रिभिरक्षरैर्व्यनयन्वीतय इति त इमे विदूरं लोकास्ततो देवेभ्यो वरीयोऽभवद्वरीयो ह वा अस्य भवति यस्यैवं विदुष एतामन्वाहुर्वीतय इति - १.४.१.[२३]

गृणानो हव्यदातय इति । यजमानो वै हव्यदातिर्गृणानो यजमानायेत्येवैतदाह नि होता सत्सि बर्हिषीत्यग्निर्वै होतायं लोको बर्हिरस्मिन्नेवैतल्लोकेऽग्निं दधाति सोऽयमस्मिंल्लोकेऽग्निर्हितः सैषेममेव लोकमभ्यनूक्तेममेवैतया लोकं जयति यस्यैवं विदुष एतामन्वाहुः - १.४.१.[२४]

तं त्वा समिद्भिरङ्गिर इति । समिद्भिर्ह्येतमङ्गिरस ऐन्धताङ्गिर इत्यङ्गिरा उ ह्यग्निर्घृतेन वर्धयामसीति तत्सामिधेनं पदं समेवैनं तेनेन्धे वीर्यमेवास्मिन्दधाति - १.४.१.[२५]

बृहच्छोचा यविष्ठ्येति । बृहदु ह्येष शोचति समिद्धो यविष्ठ्येति यविष्ठो ह्यग्निस्तस्मादाह यविष्ठ्येति सैषितमेव लोकमभ्यनूक्तान्तरिक्षलोकमेव तस्मादाग्नेयी सत्यनिरुक्ता निरुक्तो ह्येष लोक एतमेवैतया लोकं जयति यस्यैवंविदुष एतामन्वाहुः - १.४.१.[२६]

स नः पृथु श्रवाय्यमिति । अदो वै पृथु यस्मिन्देवा एतच्छ्रवाय्यं यस्मिन्देवा अच्छा देव विवाससीत्यच्छा देव विवासस्येतन्नो गमयेत्येवैतदाह - १.४.१.[२७]

बृहदग्ने सुवीर्यमिति । अदो वै बृहद्यस्मिन्देवा एतत्सुवीर्यं यस्मिन्देवाः सैषितमेव लोकमभ्यनूक्ता दिवमेवैतमेवैतया लोकं जयति यस्यैवं विदुष एतामन्वाहुः - १.४.१.[२८]

सो न्वाह । ईडेन्यो नमस्य इतीडेन्यो ह्येष नमस्यो ह्येष तिरस्तमांसि दर्शत इति तिर इव ह्येष तमांसि समिद्धो ददृशे समग्निरिध्यते वृषेति सं हीध्यते वृषा वृषो अग्निः समिध्यत इति सं हीध्यते - १.४.१.[२९]

अश्वो न देववाहन इति । अश्वो ह वा एष भूत्वा देवेभ्यो यज्ञं वहति यद्वैनेत्यृच्योमिति तत्तस्मादाहाश्वो न देववाहन इति - १.४.१.[३०]

तं हविष्मन्त ईडत इति । हविष्मन्तो ह्येतं मनुष्या ईडते तस्मादाह तं हविष्मन्त ईडत इति - १.४.१.[३१]



वृषणं त्वा वयं वृषन्वृषणः समिधीमहीति । सं ह्येनमिन्धतेऽग्ने दीद्यतं बृहदिति दीदयेव ह्येष बृहत्समिद्धः - १.४.१.[३२]

तं वा एतम् । वृषण्वन्तं त्रिचमन्वाहाग्नेय्यो वा एताः सर्वाः सामिधेन्यो भवन्तीन्द्रो वै यज्ञस्य देवतेन्द्रो वृषैतेनो हास्यैताः सेन्द्राः सामिधेन्यो भवन्ति तस्माद्वृषण्वन्तं त्रिचमन्वाह- १.४.१.[३३]

सोऽन्वाह । अग्निं दूतं वृणीमह इति देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे तान्त्स्पर्धमानान्गायत्र्यन्तरा तस्थौ या वै सा गायत्र्यासीदियं वै सा पृथिवीयं हैव तदन्तरा तस्थौ त उभय एव विदांचक्रुर्यतरान्वै न इयमुपावर्त्स्यति ते भविष्यन्ति परेतरे भविष्यन्तीति तामुभय एवोपमन्त्रयांचक्रिरेऽग्निरेव देवानां दूत आस सहरक्षा इत्यसुररक्षसमसुराणां साग्निमेवानुप्रेयाय तस्मादन्वाहाग्निं दूतं वृणीमह इति स हि देवानां दूत आसीद्धोतारं विश्ववेदसमिति- १.४.१.[३४]

तदु हैकेऽन्वाहुः । होता यो विश्ववेदस इति नेदरमित्यात्मानं ब्रवाणीति तदु तथा न ब्रूयान्मानुषं ह ते यज्ञे कुर्वन्ति व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तस्माद्यथैवर्चानूक्तमेवानुब्रूयाद्धोतारं विश्ववेदसमित्येवास्य यज्ञस्य सुक्रतुमित्येष हि यज्ञस्य सुक्रतुर्यदग्निस्तस्मादाहास्य यज्ञस्य सुक्रतुमिति सेयं देवानुपाववर्त ततो देवा अभवन्परासुरा भवति ह वा आत्मना परास्य सपत्ना भवन्ति यस्यैवंविदुष एतामन्वाहुः - १.४.१.[३५]

तां वा अष्टमीमनुब्रूयात् । गायत्री वा एषा निदानेनाष्टाक्षरा वै गायत्री तस्मादष्टमीमनुब्रूयात् - १.४.१.[३६]

तद्धैके । पुरस्ताद्धाय्ये दधत्यन्नं धाय्ये मुखत इदमन्नाद्यं दध्म इति वदन्तस्तदु तथा न कुर्यादनवक्लृप्ता ह तस्यैषा भवति यः पुरस्ताद्धाय्ये दधाति दशमी वा हि तर्ह्येकादशी वा सम्पद्यते तस्यो हैवैषावक्लृप्ता भवति यस्यैतामष्टमीमन्वाहुस्तस्मादुपरिष्टादेव धाय्ये दध्यात् - १.४.१.[३७]



समिध्यमानो अध्वर इति । अध्वरो वै यज्ञः समिध्यमानो यज्ञ इत्येवैतदाहाग्निः पावक ईड्य इति पावको ह्येष ईड्यो ह्येष शोचिष्केशस्तमीमह इति शोचन्तीव ह्येतस्य केशाः समिद्धस्य समिद्धो अग्न आहुतेत्यतः प्राचीनं सर्वमिध्ममभ्यादध्याद्यदन्यत्समिधोऽपवृङ्क इव ह्येतद्धोता यद्वा अन्यत्समिध इध्मस्यातिरिच्यतेऽतिरिक्तं तद्यद्वै यज्ञस्यातिरिक्तं द्विषन्तं हास्य तद्भ्रातृव्यमभ्यतिरिच्यते तस्मादतः प्राचीनं सर्वमिध्ममभ्यादध्याद्यदन्यत्समिधः - १.४.१.[३८]

देवान्यक्षि स्वध्वरेति । अध्वरो वै यज्ञो देवान्यक्षि सुयज्ञियेत्येवैतदाह त्वं हि हव्यवाडसीत्येष हि हव्यवाड्यदग्निस्तस्मादाह त्वं हि हव्यवाडसीत्या जुहोता दुवस्यताग्निं प्रयत्यध्वरे वृणीध्वं हव्यवाहनमिति सम्प्रेष्यत्येवैतया जुहुत च यजत च यस्मै कामाय समैन्धिढ्वं तत्कुरुतेत्येवैतदाहाग्निं प्रयत्यध्वर इत्यध्वरो वै यज्ञोऽग्निं प्रयति यज्ञ इत्येवैतदाह वृणीध्वं हव्यवाहनमित्येष हि हव्यवाहनो यदग्निस्तस्मादाह

वृणीध्वं हव्यवाहनमिति - १.४.१.[३९]

तं वा एतम् । अध्वरवन्तं त्रिचमन्वाह देवान्ह वै यज्ञेन यजमानान्त्सपत्ना असुरा दुधूर्षां चक्रुस्ते दुधूर्षन्त एव न शेकुर्धूर्वितुं ते पराबभूवुस्तस्माद्यज्ञोऽध्वरो नाम दुधूर्षन्ह वा एनं सपत्नः पराभवति यस्यैवं विदुषोऽध्वरवन्तं त्रिचमन्वाहुर्यावद्वेव सौम्येनाध्वरेणेष्ट्वा जयति तावज्जयति - १.४.१.[४०]

##१.४.२ निगदानुवचनम्

एतद्ध वै देवा अग्निं गरिष्ठेऽयुञ्जन् । यद्धोतृत्व इदं नो हव्यं वहेति तमेतद्गरिष्ठे युक्त्वोपामदन्वीर्यवान्वै त्वमस्यलं वै त्वमेतस्मा असीति वीर्ये समादधतो यथेदमप्येतर्हि ज्ञातीनां यं गरिष्ठे युञ्जन्ति तमुपमदन्ति वीर्यवान्वै त्वमस्यलं वै त्वमेतस्मा असीति वीर्ये समादधतः स यदत ऊर्ध्वमन्वाह – उपस्तौत्येवैनमेतत्, वीर्यमेवास्मिन्दधाति॥ - १.४.२.[१]



अग्ने महां असि ब्राह्मण भारतेति । ब्रह्म ह्यग्निस्तस्मादाह ब्राह्मणेति भारतेत्येष हि देवेभ्यो हव्यं भरति तस्माद्भरतोऽग्निरित्याहुरेष उ वा इमाः प्रजाः प्राणो भूत्वा बिभर्ति तस्माद्वेवाह भारतेति - १.४.२.[२]

अथार्षेयं प्रवृणीते । ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयत्ययम्महावीर्यो यो यज्ञं प्रापदिति तस्मादार्षेयं प्रवृणीते - १.४.२.[३]

परस्तादर्वाक्प्रवृणीते । परस्ताद्ध्यर्वाच्यः प्रजाः प्रजायन्ते ज्यायसस्पतय उ चैवैतं निह्नुत इदं हि पितैवाग्रेऽथ पुत्रोऽथ पौत्रस्तस्मात्परस्तादर्वाक्प्रवृणीते - १.४.२.[४]

स आर्षेयमुक्त्वाह । देवेद्धो मन्विद्ध इति देवा ह्येतमग्र ऐन्धत तस्मादाह देवेद्ध इति मन्विद्ध इति मनुर्ह्येतमग्र ऐद्ध तस्मादाह मन्विद्ध इति - १.४.२.[५]

ऋषिष्टुत इति । ऋषयो ह्येतमग्रे स्तुवंस्तस्मादाहर्षिष्टुत इति - १.४.२.[६]

विप्रानुमदित इति । एते वै विप्रा यदृषय एते ह्येतमन्वमदंस्तस्मादाह विप्रानुमदित इति - १.४.२.[७]

कविशस्त इति । एते वै कवयो यदृषय एते ह्येतमशंसंस्तस्मादाह कविशस्त इति - १.४.२.[८]

ब्रह्मसंशित इति ब्रह्मसंशितो ह्येष घृताहवन इति घृताहवनो ह्येषः - १.४.२.[९]

प्रणीर्यज्ञानां रथीरध्वराणामिति । एतेन वै सर्वान्यज्ञान्प्रणयन्ति ये च पाकयज्ञा ये चेतरे तस्मादाह प्रणीर्यज्ञानामिति - १.४.२.[१०]



रथीरध्वराणामिति । रथो ह वा एष भूत्वा देवेभ्यो यज्ञं वहति तस्मादाह रथीरध्वराणामिति - १.४.२.[११]

अतूर्तो होता तूर्णिर्हव्यवाडिति । न ह्येतं रक्षांसि तरन्ति तस्मादाहातूर्तो होतेति तूर्णिर्हव्यवाडिति सर्वं ह्येष पाप्मानं तरति तस्मादाह तूर्णिर्हव्यवाडिति - १.४.२.[१२]

आस्पात्रं जुहूर्देवानामिति । देवपात्रं वा एष यदग्निस्तस्मादग्नौ सर्वेभ्यो देवेभ्यो जुह्वति देवपात्रं ह्येष प्राप्नोति ह वै तस्य पात्रं यस्य पात्रम्प्रेप्स्यति य एवमेतद्वेद - १.४.२.[१३]

चमसो देवपान इति । चमसेन ह वा एतेन भूतेन देवा भक्षयन्ति तस्मादाह चमसो देवपान इति - १.४.२.[१४]

अरां इवाग्ने नेमिर्देवांस्त्वं परिभूरसीति । यथारान्नेमिः सर्वतः परिभूरेवं त्वं देवान्त्सर्वतः परिभूरसीत्येवैतदाह - १.४.२.[१५]

आवह देवान्यजमानायेति । तदस्मै यज्ञाय देवानावोढवा आहाग्निमग्न आवहेति तदाग्नेयायाज्यभागायाग्निमावोढ्वा आह सोममावहेति तत्सौम्यायाज्यभागाय सोममावोढवा आहाग्निमावहेति तद्य एष उभयत्राच्युत आग्नेयः पुरोडाशो भवति तस्मा अग्निमावोढवा आह - १.४.२.[१६]

अथ यथादेवतम् । देवां आज्यपां आवहेति तत्प्रयाजानुयाजानावोढवा आह प्रयाजानुयाजा वै देवा आज्यपा अग्निं होत्रायावहेति तदग्निं होत्रायावोढवा आह स्वं महिमानमावहेति तत्स्वं महिमानमावोढवा आह वाग्वा अस्य स्वो महिमा तद्वाचमावोढवा आहा च वह जातवेदः सुयजा च यजेति तद्या एवैतद्देवता आवोढवा आह ता एवैतदाहा चैना वहानुष्ठ्या च यजेति यदाह सुयजा च यजेति - १.४.२.[१७]

स वै तिष्ठन्नन्वाह । अन्वाह ह्येतदसौ ह्यनुवाक्या तदसावेवैतद्भूत्वान्वाह तस्मात्तिष्ठन्नन्वाह - १.४.२.[१८]



आसीनो याज्यां यजति । इयं हि याज्या तस्मान्न कश्चन तिष्ठन्याज्यां यजतीयं हि याज्या तदियमेवैतद्भूत्वा यजति तस्मादासीनो याज्यां यजति - १.४.२.[१९]

##१.४.३ शान्तिकर्म

यो ह वा अग्निः सामिधेनीभिः समिद्धः । अतितरां ह वै स इतरस्मादग्नेस्तपत्यनवधृष्यो हि भवत्यनवमृश्यः - १.४.३.[१]

स यथा हैवाग्निः । सामिधेनीभिः समिद्धस्तपत्येवं हैव ब्राह्मणः सामिधेनीर्विद्वाननुब्रुवंस्तपत्यनवधृष्यो हि भवत्यनवमृश्यः - १.४.३.[२]

सोऽन्वाह । प्रव इति प्राणो वै प्रवान्प्राणमेवैतया समिन्द्धेऽग्न आयाहि वीतय इत्यपानो वा एतवानपानमेवैतया समिन्द्धे बृहच्छोचा यविष्ठ्येत्युदानो वै बृहच्छोचा उदानमेवैतया समिन्द्धे - १.४.३.[[३]]

स नः पृथु श्रवाय्यमिति । श्रोत्रं वै पृथु श्रवाय्यं श्रोत्रेण हीदमुरु पृथु शृणोति श्रोत्रमेवैतया समिन्द्धे - १.४.३.[४]

ईडेन्यो नमस्य इति । वाग्वा ईडेन्या वाग्घीदं सर्वमीट्टे वाचेदं सर्वमीडितं वाचमेवैतया समिन्द्धे - १.४.३.[५]

अश्वो न देववाहन इति । मनो वै देववाहनं मनो हीदं मनस्विनं भूयिष्ठं वनीवाह्यते मन एवैतया समिन्द्धे - १.४.३.[६]



अग्ने दीद्यतं बृहदिति । चक्षुर्वै दीदयेव चक्षुरेवैतया समिन्द्धे - १.४.३.[७]

अग्निं दूतं वृणीमह इति । य एवायं मध्यमः प्राण एतमेवैतया समिन्धे सा हैषान्तस्था प्राणानामतो ह्यन्य ऊर्ध्वाः प्राणा अतोऽन्येऽवाञ्चोऽन्तस्था ह भवत्यन्तस्थामेनं मन्यन्ते य एवमेतामन्तस्थां प्राणानां वेद - १.४.३.[८]

शोचिष्केशस्तमीमह इति । शिश्नं वै शोचिष्केशं शिश्नं हीदं शिश्नं भूयिष्ठं शोचयति शिश्नमेवैतया समिन्द्धे - १.४.३.[९]

समिद्धो अग्न आहुतेति । य एवायमवाङ्प्राण एतमेवैतया समिन्द्ध आ जुहोता दुवस्यतेति सर्वमात्मानं समिन्द्ध आ नखेभ्योऽथो लोमभ्यः - १.४.३.[१०]

स यद्येनं प्रथमायां सामिधेन्यामनुव्याहरेत् । तं प्रति ब्रूयात्प्राणं वा एतदात्मनोऽग्नावाधाः प्राणेनात्मन आर्त्तिमारिष्यसीति तथा हैव स्यात् - १.४.३.[११]

यदि द्वितीयस्यामनुव्याहरेत् । तं प्रति ब्रूयादपानं वा एतदात्मनोऽग्नावाधा अपानेनात्मन आर्त्तिमारिष्यसीति तथा हैव स्यात् - १.४.३.[१२]

यदि तृतीयस्यामनुव्याहरेत् । तं प्रति ब्रूयादुदानं वा एतदात्मनोऽग्नावाधाः उदानेनात्मन आर्त्तिमारिष्यसीति तथा हैव स्यात् - १.४.३.[१३]

यदि चतुर्थ्यामनुव्याहरेत् । तं प्रतिब्रूयाच्छ्रोत्रं वा एतदात्मनोऽग्नावाधाः श्रोत्रेणात्मन आर्त्तिमारिष्यसि बधिरो भविष्यसीति तथा हैव स्यात् - १.४.३.[१४]

यदि पञ्चम्यामनुव्याहरेत् । तं प्रति ब्रूयाद्वाचं वा एतदात्मनोऽग्नावाधा वाचात्मन आर्त्तिमारिष्यसि मूको भविष्यसीति तथा हैवस्यात् - १.४.३.[१५]



यदि षष्ठ्यामनुव्याहरेत् । तं प्रति ब्रूयान्मनो वा एतदात्मनोऽग्नावाधा मनसात्मन आर्त्तिमारिष्यसि मनोमुषिगृहीतो मोमुघश्चरिष्यसीति तथा हैव स्यात् - १.४.३.[१६]

यदि सप्तम्यां अनुव्याहरेत् तं प्रति ब्रूयाच्चक्षुर्वा एतदात्मनोऽग्नावाधाश्चक्षुषात्मन आर्त्तिमारिष्यस्यन्धो भविष्यसीति तथा हैव स्यात् - १.४.३.[१७]

यद्यष्टम्यामनुव्याहेत्। तं प्रति ब्रूयान्मध्यं वा एतत्प्राणमात्मनोऽग्नावाधा मध्येन प्राणेनात्मन आर्त्तिमारिष्यस्युद्ध्माय मरिष्यसीति तथा हैव स्यात् - १.४.३.[१८]

यदि नवम्यामनुव्याहरेत्। तं प्रतिब्रूयाच्छिश्नं वा एतदात्मनोऽग्नावाधाः शिश्नेनात्मन आर्त्तिमारिष्यसि क्लीबो भविष्यसीति तथा हैवस्यात् - १.४.३.[१९]

यदि दशम्यामनुव्याहरेत्। तं प्रति ब्रूयादवाञ्चं वा एतत्प्राणमात्मनोऽग्नावाधा अवाचा प्राणेनात्मन आर्त्तिमारिष्यस्यपिनद्धो मरिष्यसीति तथा हैव स्यात् - १.४.३.[२०]

यद्येकादश्यामनुव्याहेत्। तं प्रति ब्रूयात्सर्वं वा एतदात्मानमग्नावाधाः सर्वेणात्मनार्त्तिर्मारिष्यसि क्षिप्रेऽमुं लोकमेष्यसीति तथा हैव स्यात् - १.४.३.[२१]

स यथा हैवाग्निम् । सामिधेनीभिः समिद्धमापद्यार्त्तिं न्येत्येवं हैव ब्राह्मणं सामिधेनीर्विद्वांसं समनुब्रुवन्तमनुव्याहृत्यार्त्तिं न्येति - १.४.३.[२२]

##१.४.४आघारयोर्निदानम्

तं वा एतमग्निं समैन्धिषत । समिद्धे देवेभ्यो जुहवामेति तस्मिन्नेते एव प्रथमे आहुती जुहोती मनसे चैव वाचे च मनश्च हैव वाक्च युजौ देवेभ्यो यज्ञं वहतः - १.४.४.[१]

स यदुपांशु क्रियते । तन्मनो देवेभ्यो यज्ञं वहत्यथ यद्वाचा निरुक्तं क्रियते तद्वाग्देवेभ्यो यज्ञं वहत्येतद्वा इदं द्वयं क्रियते तदेते एवैतत्संतर्पयति तृप्ते प्रीते देवेभ्यो यज्ञं वहात इति - १.४.४.[[२]]



स्रुवेण तमाघारयति । यं मनस आघारयति वृषा हि मनो वृषा हि स्रुवः - १.४.४.[३]

स्रुचा तमाघारयति । यं वाच आघारयति योषा हि वाग्योषा हि स्रुक् - १.४.४.[४]

तूष्णीं तमाघारयति । यं मनस आघारयति न स्वाहेति चनानिरुक्तं हि मनोऽनिरुक्तं ह्येतद्यत्तूष्णीम् - १.४.४.[५]

मन्त्रेण तमाघारयति । यं वाच आघारयति निरुक्ता हि वाङ्गिरुक्तो हि मन्त्रः - १.४.४.[६]

आसीनस्तमाघारयति । यं मनस आघारयति तिष्ठंस्तं यं वाचे मनश्च ह वै वाक्च युजौ देवेभ्यो यज्ञं वहतो यतरो वै युजोर्ह्रसीयान्भवत्युपवहं वै तस्मै कुर्वन्ति वाग्वै मनसो

ह्सीयस्यपरिमिततरमिव हि मनः परिमिततरेव हि वाक्तद्वाच एवैतदुपवहं करोति ते सयुजौ देवेभ्यो यज्ञं वहतस्तस्मात्तिष्ठन्वाच आघारयति - १.४.४.[७]

देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसङ्गाद्बिभयांचक्रुस्त एतद्दक्षिणतः प्रत्युदश्रयन्नुच्छ्रितमिव हि वीर्यंतस्माद्दक्षिणतस्तिष्ठन्नाघारयति स यदुभयत आघारयति तस्मादिदं मनश्चवाक्च समानमेव सन्नानेव शिरो ह वै यज्ञस्यैतयोरन्यतर आघारयोर्मूलमन्यतरः - १.४.४.[८]

स्रुवेण तमाघारयति । यो मूलं यज्ञस्य स्रुचा तमाघारयति यः शिरो यज्ञस्य - १.४.४.[९]

तूष्णीं तमाघारयति । यो मूलं यज्ञस्य तूष्णीमिव हीदं मूलं नो ह्यत्र वाग्वदति - १.४.४.[१०]

मन्त्रेण तमाघारयति । यः शिरो यज्ञस्य वाग्घि मन्त्रः शीर्ष्णो हीयमधि वाग्वदति - १.४.४.[११]



आसीनस्तमाघारयति । यो मूलं यज्ञस्य निषण्णमिव हीदं मूलं तिष्ठंस्तमाघारयति यः शिरो यज्ञस्य तिष्ठतीव हीदं शिरः - १.४.४.[१२]

अग्निसंमार्जनम्

स स्रुवेण पूर्वमाघारमाघार्याह । अग्निमग्नीत्सम्मृड्ढीति यथाधुरमध्यूहेदेवं तद्यत्पूर्वमाघारमाघारयत्यध्युह्य हि धुरं युञ्जन्ति - १.४.४.[१३]

अथ सम्मार्ष्टि । युनक्त्येवैनमेतद्युक्तो देवेभ्यो यज्ञं वहादिति तस्मात्सम्मार्ष्टि परिक्रामं सम्मार्ष्टि परिक्रामं हि योग्यं युञ्जन्ति त्रिस्त्रिः सम्मार्ष्टि त्रिवृद्धि यज्ञः - १.४.४.[१४]

स सम्मार्ष्टि । अग्ने वाजजिद्वाजं त्वा सरिष्यन्तं त्वा वाजजितं सम्माज्मीति यज्ञं त्वा वक्ष्यन्तं यज्ञियं सम्माज्र्मीत्येवैतदाहाथोपरिष्टात्तूष्णीं त्रिस्तद्यथा युक्त्वा प्राजेत्प्रेहि वहेत्येवमेवैतत्कशयोपक्षिपति प्रेहि देवेभ्यो यज्ञं वहेति तस्मादुपरिष्टात्तूष्णीं त्रिस्तद्यदेतदन्तरेण कर्म क्रियते तस्मादिदं मनश्च वाक्च समानमेव सन्नानेव - १.४.४.[१५]

##१.४.५ उत्तराघारः

स स्रुचोत्तरमाघारमाघारयिष्यन् । पूर्वेण स्रुचावञ्जलिं निदधाति नमो देवेभ्यः स्वधा पितृभ्य इति तद्देवेभ्यश्चैवैतत्पितृभ्यश्चार्त्विज्यं करिष्यन्निह्नुते सुयमे मे भूयास्तमिति स्रुचावादत्ते सुभरे मे भूयास्तम्भर्तुं वां शकेयमित्येवैतदाहास्कन्नमद्य देवेभ्य आज्यं सम्भ्रियासमित्यविक्षुब्धमद्य देवेभ्यो यज्ञं तनवा इत्येवैतदाह - १.४.५.[१]

अङ्घ्रिणा विष्णो मा त्वावक्रमिषमिति । यज्ञो वै विष्णुस्तस्मा एवैतन्निह्नुते मा त्वावक्रमिषमिति वसुमतीमग्ने ते छायामुपस्थेषमिति साध्वीमग्ने ते छायामुपस्थेषमित्येवैतदाह - १.४.५.[२]



विष्णो स्थानमसीति । यज्ञो वै विष्णुस्तस्येव ह्येतदन्तिकं तिष्ठति तस्मादाह विष्णोस्थानमसीतीत इन्द्रो वीर्यमकृणोदित्यतो हीन्द्रस्तिष्ठन्दक्षिणतो नाष्ट्रा रक्षांस्यपाहंस्तस्मादाहेत इन्द्रो वीर्यमकृणोदित्यूर्ध्वोऽध्वर आस्थादित्यध्वरो वै यज्ञ ऊर्ध्वो यज्ञ आस्थादित्येवैतदाह - १.४.५.[३]

अग्ने वेर्होत्रं वेर्दूत्यमिति । उभयं वा एतदग्निर्देवानां होता च दूतश्च तदुभयं विद्धि यद्देवानामसीत्येवैतदाहावतां त्वां द्यावापृथिवी अव त्वं द्यावापृथिवी इति नात्र तिरोहितमिवास्ति स्विष्टकृद्देवेभ्य इन्द्र आज्येन हविषाभूत्स्वाहेतीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्र आज्येनेति वाचे वा एतमाघारमाघारयतीन्द्रो वागित्यु वा आहुस्तस्माद्वेवाहेन्द्र आज्येनेति - १.४.५.[४]

अथासंस्पर्शयन्त्स्रुचौ पर्येत्य । ध्रुवया समनक्ति शिरो वै यज्ञस्योत्तर आघार आत्मा वै ध्रुवा तदात्मन्येवैतच्छिरः प्रतिदधाति शिरो वै यज्ञस्योत्तर आघारः श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्माद्योऽर्धस्य श्रेष्ठो भवत्यसावमुष्यार्धस्य शिर इत्याहुः - १.४.५.[५]

यजमान एव ध्रुवामनु । योऽस्मा अरातीयति स उपभृतमनु स यद्धोपभृता समञ्ज्याद्यो यजमानायारातीयति तस्मिंच्छ्रियं दध्यात्तद्यजमान एवैतच्छ्रियं दधाति तस्माद्ध्रुवया समनक्ति - १.४.५.[६]

स समनक्ति । सं ज्योतिषा ज्योतिरिरिति ज्योतिर्वा इतरस्यामाज्यं भवति ज्योतिरितरस्यां ते ह्येतदुभे ज्योतिषी संगच्छेते तस्मादेवं समनक्ति - १.४.५.[७]

अथातो मनसश्चैव वाचश्च । अहम्भद्र उदितं मनश्च ह वै वाक्चाहम्भद्र ऊदाते - १.४.५.[८]



तद्ध मन उवाच । अहमेव त्वच्छ्रेयोऽस्मि न वै मया त्वं किं चनानभिगतं वदसि सा यन्मम त्वं कृतानुकरानुवर्त्मास्यहमेव त्वच्छ्रेयोऽस्मीति - १.४.५.[९]

अथ ह वागुवाच । अहमेव त्वच्छ्रेयस्यस्मि यद्वै त्वं वेत्थाहं तद्विज्ञपयाम्यहं संज्ञपयामीति - १.४.५.[१०]

ते प्रजापतिं प्रतिप्रश्नमेयतुः । स प्रजापतिर्मनस एवानूवाच मन एव त्वच्छ्रेयो मनसो वै त्वं कृतानुकरानुवर्त्मासि श्रेयसो वै पापीयाङ्कृतानुकरोऽनुवर्त्मा भवतीति - १.४.५.[११]

सा ह वाक्परोक्ता विसिष्मिये । तस्यै गर्भः पपात सा ह वाक्प्रजापतिमुवाचाहव्यवाडेवाहं तुभ्यं भूयासं यां मा परावोच इति तस्माद्यत्किं च प्राजापत्यं यज्ञे क्रियत उपांश्वेव तत्क्रियते अहव्यवाड्विवाक्प्रजापतय आसीत् - १.४.५.[१२]

तद्धैतद्देवाः । रेतश्चर्मन्वा यस्मिन्वा बभ्रुस्तद्ध स्म पृच्छन्त्यत्रेव त्यादिति ततो त्रिः सम्बभूव तस्मादप्यात्रेय्या योषितैनस्व्येतस्यै हि योषायै वाचो देवताया एते सम्भूताः - १.४.५.[१३]

##१.५.१होतृप्रवरणम्
स वै प्रवरायाश्रावयति । तद्यत्प्रवरायाश्रावयति यज्ञो वा आश्रावणं यज्ञमभिव्याहृत्याथ होतारं प्रवृणा इति तस्मात्प्रवरायाश्रावयति - १.५.१.[१]

स इध्मसंनहनान्येवाभिपद्याश्रावयति । स यद्वानारभ्य यज्ञमध्वर्युराश्रावयेद्वेपनो वा ह स्यादन्यां वार्त्तिमार्च्छेत् - १.५.१.[२]

तद्धैके । वेदे स्तीर्णायै बर्हिरभिपद्याश्रावयन्तीध्मस्य वा शकलमपच्छिद्याभिपद्याश्रावयन्तीदं वै किंचिद्यज्ञस्येदं यज्ञमभिपद्याश्रावयाम इति वदन्तस्तदु तथा न कुर्यादितद्वै किंचिद्यज्ञस्य यैरिध्मः संनद्धो भवत्यग्निं सम्मृजन्ति तद्वेव खलु यज्ञमभिपद्याश्रावयति तस्मादिध्मसंनहनान्येवाभिपद्याश्रावयेत् - १.५.१.[३]



स आश्राव्य । य एव देवानां होता तमेवाग्रे प्रवृणीतेऽग्निमेव तदग्नये चैवैतद्देवेभ्यश्च निह्नुते यदहाग्रेऽग्निं प्रवृणीते तदग्नये निह्नुतेऽथ यो देवानां होता तमग्रे प्रवृणीते तदु देवेभ्यो निह्नुते - १.५.१.[४]

स आह । अग्निर्देवो दैव्यो होतेत्यग्निर्हि देवानां होता तस्मादाहाग्निर्देवो दैव्यो होतेति तदग्नये चैव देवेभ्यश्च निह्नुते यदहाग्रेऽग्निमाह तदग्नये निह्नुतेऽथ यो देवानां होता तमग्र आह तदु देवेभ्यो निह्नुते - १.५.१.[५]

देवान्यक्षद्विद्वांश्चिकित्वानिति । एष वै देवाननुविद्वान्यदग्निः स एनाननुविद्वाननुष्ठ्या यक्षदित्येवैतदाह - १.५.१.[६]

मनुष्वद्भरतवदिति । मनुर्ह वा अग्रे यज्ञेनेजे तदनुकृत्येमाः प्रजा यजन्ते तस्मादाह मनुष्वदिति मनोर्यज्ञ इत्यु वा आहुस्तस्माद्वेवाह मनुष्वदिति - १.५.१.[७]

भरतवदिति । एष हि देवेभ्यो हव्यं भरति तस्माद्भरतोऽग्निरित्याहुरेष उ वा इमाः प्रजाः प्राणो भूत्वा बिभर्ति तस्माद्वेवाह भरतवदिति - १.५.१.[८]

अथार्षेयं प्रवृणीते । ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयत्ययम्महावीर्यो यो यज्ञं प्रापदिति तस्मादार्षेयं प्रवृणीते - १.५.१.[९]

परस्तादर्वाक्प्रवृणीते । परस्ताद्ध्यर्वाच्यः प्रजाः प्रजायन्ते ज्यायसस्पतय उ चैवैतन्निह्नुत इदं हि पितैवाग्रेऽथ पुत्रोऽथ पौत्रस्तस्मात्परस्तादर्वाक्प्रवृणीते - १.५.१.[१०]

स आर्षेयमुक्त्वाह । ब्रह्मण्वदिति ब्रह्म ह्यग्निस्तस्मादाह ब्रह्मण्वदित्या च वक्षदिति तद्या एवैतद्देवता आवोढ्वा आह ता एवैतदाहा च वक्षदिति - १.५.१.[११]



ब्राह्मणा अस्य यज्ञस्य प्रावितार इति । एते वै ब्राह्मणा यज्ञस्य प्रावितारो येऽनूचाना एते ह्येनं तन्वत एत एनं जनयन्ति तदु तेभ्यो निह्नुते तस्मादाह ब्राह्मणा अस्य यज्ञस्य प्रावितार इति - १.५.१.[१२]

असौ मानुष इति । तदिमं मानुषं होतारं प्रवृणीते होता हैष पुराथैतर्हि होता - १.५.१.[१३]

स प्रवृतो होता । जपति देवता उपधावति यथानुष्ठ्या देवेभ्यो वषट्कुर्याद्यथानुष्ठ्या देवेभ्यो हव्यं वहेद्यथा न ह्वलेदेवं देवता उपधावति - १.५.१.[१४]

तत्र जपति एततत्त्वा देव सवितर्वृणत इति तत्सवितारं प्रसवायोपधावति स हि देवानां प्रसविताग्निं होत्रायेति तदग्नये चैवैतद्देवेभ्यश्च निह्नुते यदहाग्रेऽग्निमाह तदग्नये निह्नुतेऽथ यो देवानां होता तमग्र आह तदु देवेभ्यो निह्नुते - १.५.१.[१५]

सह पित्रा वैश्वानरेणेति । सम्वत्सरो वै पिता वैश्वानरः प्रजापतिस्तत्संवत्सरायैवैतत्प्रजापतये निह्नुतेऽग्ने पूषन्बृहस्पते प्र च वद प्र च यजेत्यनुवक्ष्यन्वा एतद्यक्ष्यन्भवति तदैताभ्य एवैतद्देवताभ्यो निह्नुते यूयमनुब्रूत यूयं यजतेति - १.५.१.[१६]

वसूनां रातौ स्याम । रुद्राणामुर्व्यायां स्वादित्या अदितये स्यामानेहस इत्येते वै त्रया देवा यद्वसवो रुद्रा आदित्या एतेषामभिगुप्तौ स्यामेत्येवैतदाह - १.५.१.[१७]

जुष्टामद्य देवेभ्यो वाचमुद्यासमिति । जुष्टमद्य देवेभ्योऽनूच्यासमित्येवैतदाह तद्धि समृद्धं यो जुष्टं देवेभ्योऽनुब्रवत् - १.५.१.[१८]



जुष्टां ब्रह्मभ्य इति । जुष्टमद्य ब्राह्मणेभ्योऽनूच्यासमित्येवैतदाह तद्धि समृद्धं यो जुष्टं ब्राह्मणेभ्योऽनुब्रवत् - १.५.१.[१९]

जुष्टां नराशंसायेति । प्रजा वै नरस्तत्सर्वाभ्यः प्रजाभ्य आह तद्धि समृद्धं यश्च वेद यश्च न साध्वन्ववोचत्साध्वन्ववोचदित्येव विसृज्यन्ते यदद्य होतृवर्ये जिह्मं चक्षुः परापतत् अग्निष्टत्पुनराभ्रियाज्जातवेदा विचर्षणिरिति यथा यानग्रेऽग्नीन्होत्राय प्रावृणत ते प्राधन्वन्नेवं यन्मेऽत्र प्रवरेणामायि तन्मेपुनराप्याययेत्येवैतदाह तथो हास्यैतत्पुनराप्यायते - १.५.१.[२०]

अथाध्वर्युं चाग्नीधं च सम्मृशति । मनो वा अध्वर्युर्वाग्घोता तन्मनश्चैवैतद्वाचं च संदधाति - १.५.१.[२१]

तत्र जपति । षण्मोर्वीरंहसस्पान्त्वग्निश्च पृथिवी चापश्च वाजश्चाहश्च रात्रिश्चेत्येता मा देवता आर्त्तेर्गोपायन्त्वित्येवैतदाह तस्यो हि न ह्वलास्ति यमेता देवता आर्त्तेर्गोपायेयुः - १.५.१.[२२]

अथ होतृषदनमुपावर्तते । स होतृषदनादेकं तृणं निरस्यति निरस्तः परावसुरिति परावसुर्ह वै नामासुराणां होता स तमेवैतद्धोतृषदनान्निरस्यति - १.५.१.[२३]

अथ होतृषदन उपविशति । इदमहमर्वावसोः सदने सीदामीत्यर्वावसुर्वै नाम देवानां होता तस्यैवैतत्सदने सीदति - १.५.१.[२४]

तत्र जपति विश्वकर्मस्तनूपा असि मा मोदोषिष्टं मा मा हिंसिष्टमेष वां लोक इत्युदङ्ङेजत्यन्तरा वा एतदाहवनीयं च गार्हपत्यं चास्ते तदु ताभ्यां निह्नुते मा मो दोषिष्टं मा मा हिंसिष्टमिति तथा हैनमेतौ न हिंस्तः - १.५.१.[२५]



अथाग्निमीक्षमाणो जपति । विश्वे देवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानीति यथा येभ्यः पक्वं स्यात्तान्ब्रूयाद्वनु मा शास्त यथा व आहरिष्यामि यथा वः परिवेक्ष्यामीत्येवमेवैतद्देवेषु प्रशासनमिच्छतेऽनु मा शास्त यथा वोऽनुष्ठ्या वषट्कुर्यामनुष्ठ्या हव्यं वहेयमिति तस्मादेवं जपति - १.५.१.[२६]

##१.५.२ पञ्चप्रयाजयागाः। तत्र स्रुगादापननिगदः

अग्निर्होता वेत्त्वग्नेर्होत्रमिति अग्निरिदं होता वेत्त्वित्येवैतदाहाग्नेर्होत्रमिति तस्यो हि होत्रं वेत्तु प्रावित्रमिति यज्ञो वै प्रावित्रं वेत्तु यज्ञमित्येवैतदाह साधु ते यजमान देवतेति साधु ते यजमान देवता यस्य तेऽग्निर्होतेत्येवैतदाह घृतवतीमध्वर्यो स्रुचमास्यस्वेति तदध्वर्युं प्रसौति स यदेकामिवाह - १.५.२.[१]

यजमान एव जुहूमनु । योऽस्मा अरातीयति स उपभृतमनु स यद्धे इव ब्रूयाद्यजमानाय द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्यादत्तैव जुहूमन्वाद्य उपभृतमनु स यद्धे इव ब्रूयादत्त आद्यं प्रत्युद्यामिनं कुर्यात्तस्मादेकामिवैवाह - १.५.२.[२]

देवयुवं विश्ववारामिति । उपस्तौत्येवैनामेतन्महयत्येव यदाह देवयुवं विश्ववारामितीडामहै देवां ईडेन्यान्नमस्याम नमस्यान्यजाम यज्ञियानितीडामहै तान्देवान्य ईडेन्या नमस्याम तान्ये नमस्या यजाम यज्ञियानिति मनुष्या वा ईडेन्याः पितरो नमस्या देवा यज्ञियाः - १.५.२.[३]

या वै प्रजा यज्ञेऽनन्वाभक्ताः । पराभूता वै ता एवमेवैतद्या इमाः प्रजा अपराभूतास्ता यज्ञ आभजति मनुष्याननु पशवो देवाननु वयांस्योषधयो वनस्पतयो यदिदं किञ्चैवमु तत्सर्वं यज्ञ आभक्तम् - १.५.२.[४]



ता वा एताः । नव व्याहृतयो भवन्ति नवेमे पुरुषे प्राणा एतानेवास्मिन्नेतद्दधाति तस्मान्नव व्याहृतयो भवन्ति - १.५.२.[५]

यज्ञो ह देवेभ्योऽपचक्राम । तं देवा अन्वमन्त्रयन्ता नः श्रृणूप न आवर्तस्वेति सोऽस्तु तथेत्येव देवानुपाववर्त तेनोपावृत्तेन देवा अयजन्त तेनेष्ट्वैतदभवन्यदिदं देवाः - १.५.२.[६]

स यदाश्रावयति । यज्ञमेवैतदनुमन्त्रयत आ नः श्रृणूप न आवर्तस्वेत्यथ यत्प्रत्याश्रावयति यज्ञ एवैतदुपावर्ततेऽस्तु तथेति तेनोपावृत्तेन रेतसाभूतेनर्त्विजः सम्प्रदायं चरन्ति यजमानेन परोऽक्षं यथा पूर्णपात्रेण सम्प्रदायं चरेयुरेवमनेनर्त्विजः सम्प्रदायं चरन्ति तद्वाचैवैतत्सम्प्रदायं चरन्ति वाग्घि यज्ञो वागु हि रेतस्तदेतेनैवैतत्सम्प्रदायं चरन्ति - १.५.२.[७]

सोऽनुब्रूहीत्येवोक्त्वाध्वर्युः । नापव्याहरेन्नो एव होतापव्याहरेदाश्रावयत्यध्वर्युस्तदग्नीधं यज्ञ उपावर्तते - १.५.२.[८]

सोऽग्नीन्नापव्याहरेत् । आ प्रत्याश्रावणात्प्रत्याश्रावयत्यग्नीत्तत्पुनरध्वर्युं यज्ञ उपावर्तते - १.५.२.[९]

सोऽध्वर्युर्नापव्याहरेत् । आ यजेति वक्तोर्यजेत्येवाध्वर्युर्होत्रे यज्ञं सम्प्रयच्छति - १.५.२.[१०]

स होता नापव्याहरेत् । आ वषट्कारात्तं वषट्कारेणाग्नावेव योनौ रेतो भूतं सिञ्चत्यग्निर्वै योनिर्यज्ञस्य स ततः प्रजायत इति नु हविर्यज्ञेऽथ सौम्येऽध्वरे - १.५.२.[११]

स वै ग्रहं गृहीत्वाध्वर्युः । नापव्याहरेदोपाकरणादुपावर्तध्वमित्येवाध्वर्युरुद्गातृभ्यो यज्ञं सम्प्रयच्छति - १.५.२.[१२]



त उद्गातारो नापव्याहरेयुः । ओत्तमाया एषोत्तमेत्येवोद्गातारो होत्रे यज्ञं सम्प्रयच्छन्ति - १.५.२.[१३]

स होता नापव्याहरेत् । आ वषट्कारात्तं वषट्कारेणाग्नावेव योनौ रेतो भूतं सिञ्चत्यग्निर्वै योनिर्यज्ञस्य स ततः प्रजायते - १.५.२.[१४]

स यद्ध सोऽपव्याहरेत् । यं यज्ञ उपावर्तते यथा पूर्णपात्रं परासिञ्चेदेवं ह स यजमानं परासिञ्चेत्स यत्र हैवमृत्विजः संविदाना यज्ञेन चरन्ति सर्वमेव तत्र कल्पते न मुह्यति तस्मादेवमेव यज्ञो भर्तव्यः - १.५.२.[१५]

ता वा एताः । पञ्च व्याहृतयो भवन्त्यो श्रावयास्तु श्रौषड्यज ये यजामहे वौषडिति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्तवः संवत्सरस्यैषैका यज्ञस्य मात्रैषा सम्पत् - १.५.२.[१६]

तासां सप्तदशाक्षराणि । सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञ एषैका यज्ञस्य मात्रैषा सम्पत् - १.५.२.[१७]

ओ श्रावयेति वै देवाः । पुरोवातं ससृजिरेऽस्तु श्रौषडित्यभ्राणि समप्लावयन्यजेति विद्युतं ये यजामह इति स्तनयित्नुं वषट्कारेणैव प्रावर्षयन् - १.५.२.[१८]

स यदि वृष्टिकामः स्यात् । यदीष्ट्या वा यजेत दर्शपूर्णमासयोर्वैव ब्रूयाद्वृष्टिकामो वा अस्मीति तत्रो अध्वर्युं ब्रूयात्पुरोवातं च विद्युतं च मनसा ध्यायेत्यभ्राणि मनसा ध्यायेत्यग्नीधं स्तनयित्नुं च वर्षं च मनसा ध्यायेति होतारं सर्वाण्येतानि मनसा ध्यायेति ब्रह्माणं वर्षति हैव तत्र यत्रैवमृत्विजः संविदाना यज्ञेन चरन्ति - १.५.२.[१९]

ओ श्रावयेति वै देवाः । विराजमभ्याजुहवुरस्तु श्रौषडिति वत्समुपावासृजन्यजेत्युदजयन्ये यजामह इत्युपासीदन्वषट्कारेणैव विराजमदुहतेयं वै विराडस्यै वा एष दोह एवं ह वा अस्मा इयं विराड्सर्वान्कामान्दुहे य एवमेतं विराजो दोहं वेद - १.५.२.[२०]



##१.५.३ प्रयाजबन्धुः

ऋतवो ह वै प्रयाजाः । तस्मात्पञ्च भवन्ति पञ्च ह्यृतवः - १.५.३.[१]

देवाश्च वा असुराश्च । उभये प्राजापत्याः पस्पृधिर एतस्मिन्यज्ञे प्रजापतौ पितरि संवत्सरेऽस्माकमयं भविष्यत्यस्माकमयं भविष्यतीति - १.५.३.[२]

ततो देवाः । अर्चन्तः श्राम्यन्तश्चेरुरस्त एतान्प्रयाजान्ददृशुस्तैरयजन्त तैर्ऋतूंत्संवत्सरं प्राजयन्नृतुभ्यः संवत्सरात्सपत्नानन्तरायंस्तस्मात्प्रजयाः प्रजया ह वै नामैतद्यत्प्रयाजा इति तथो एवैष एतैर्ऋतूंत्संवत्सरम्प्रयजत्यृतुभ्यः संवत्सरात्सपत्नानन्तरेति तस्मात्प्रयाजैर्यजते - १.५.३.[३]

ते वा आज्यहविषो भवन्ति । वज्रो वा आज्यमेतेन वै देवा वज्रेणाज्येनर्तून्त्संवत्सरं प्राजयन्नृतुभ्यः संवत्सरात्सपत्नानन्तरायंस्तथो एवैष एतेन वज्रेणाज्येनर्तून्त्संवत्सरं प्रजयत्यृतुभ्यःसंवत्सरात्सपत्नानन्तरेति तस्मादाज्यहविषो भवन्ति - १.५.३.[४]

एतद्वै संवत्सरस्य स्वं पयः । यदाज्यं तत्स्वेनैवैनमेतत्पयसा देवाः स्व्यकुर्वत तथो एवैनमेष एतत्स्वेनैव पयसा स्वीकुरुते तस्मादाज्यहविषो भवन्ति - १.५.३.[५]

स यत्रैव तिष्ठन्प्रयाजेभ्य आश्रावयेत् । तत एव नापक्रामेत्संग्रामो वा एष संनिधीयते यः प्रयाजैर्यजते यतरो वै संयत्तयोः पराजयतेऽप वै संक्रामत्यभितरामु वै जयन्क्रामति तस्मादभितरामभितरामेव क्रामेदभितरामभितरामाहुतीर्जुहुयात् - १.५.३.[६]

तदु तथा न कुर्यात् । यत्रैव तिष्ठन्प्रयाजेभ्य आश्रावयेत्तत एव नापक्रामेद्यत्रो एव समिद्धतमं मन्येत तदाहुतीर्जुहुयात्समिद्धहोमेन ह्येव समृद्धा आहुतयः - १.५.३.[७]



स आश्राव्याह । समिधो यजेति तद्वसन्तं समिन्द्धे स वसन्तः समिद्धोऽन्यानृतून्त्समिन्द्ध ऋतवः समिद्धाः प्रजाश्च प्रजनयन्त्योषधीश्च पचन्ति तद्वेव खलु सर्वानृतून्निराहाथ यज यजेत्येवोत्तरानाहाजामितायै जामि ह कुर्याद्यत्तनूनपातं यजेडो यजेति ब्रूयात्तस्माद्यज यजेत्येवोत्तरानाह - १.५.३.[८]

प्रयाजब्राह्मणम्

स वै समिधो यजति । वसन्तो वै समिद्वसन्तमेव तद्देवा अवृञ्जत वसन्तात्सपत्नानन्तरायन्वसन्तमेवैष एतद्वृङ्क्ते वसन्तात्सपत्नानन्तरेति तस्मात्समिधो यजति - १.५.३.[९]

अथ तनूनपातं यजति । ग्रीष्मो वै तनूनपाद्ग्रीष्मो ह्यासां प्रजानां तनूस्तपति ग्रीष्ममेव तद्देवा अवृञ्जत ग्रीष्मात्सपत्नानन्तरायङ्ग्रीष्ममेवैष एतद्वृङ्क्ते ग्रीष्मात्सपत्नानन्तरेति तस्मात्तनूनपातं यजति - १.५.३.[१०]

अथेडो यजति । वर्षा वा इड इति हि वर्षा इडो यदिदं क्षुद्रं सरीसृपं ग्रीष्महेमन्ताभ्यां नित्यक्तं भवति तद्वर्षा ईडितमिवान्नमिच्छमानं चरति तस्माद्वर्षा इडो वर्षा एव तद्देवा अवृञ्जत वर्षाभ्यः सपत्नानन्तरायन्वर्षा उ एवैष एतद्वृङ्क्ते वर्षाभ्यः सपत्नानन्तरेति तस्मादिडो यजति - १.५.३.[११]

अथ बर्हिर्यजति । शरद्वै बर्हिरिति हि शरद्बर्हिर्या इमा ओषधयो ग्रीष्महेमन्ताभ्यां नित्यक्ता भवन्ति ता वर्षा वर्धन्ते ताः शरदि बर्हिषो रूपं प्रस्तीर्णाः शेरे तस्माच्छरद्बर्हिः शरदमेव तद्देवा अवृञ्जत शरदः सपत्नान्तरायञ्छरदमेवैष एतद्वृङ्क्ते शरदः सपत्नानन्तरेति तस्माद्बर्हिर्यजति - १.५.३.[१२]



अथ स्वाहास्वाहेति यजति । अन्तो वै यज्ञस्य स्वाहाकारोऽन्त ऋतूनां हेमन्तो वसन्ताद्धि पराद्ध्योऽन्तेनैव तदन्तं देवा अवृञ्जतान्तेनान्तात्सपत्नानन्तरायन्नन्तेनो एवैष एतदन्तं वृङ्क्तेऽन्तेनान्तात्सपत्नानन्तरेति तस्मात्स्वाहेति यजति - १.५.३.[१३]

तद्वा एतत् । वसन्त एव हेमन्तात्पुनरसुरेतस्माद्ध्येष पुनर्भवति पुनर्ह वा अस्मिंल्लोके भवति य एवमेतद्वेद - १.५.३.[१४]

स वै व्यन्तु वेत्विति यजति । अजामितायै जामि ह कुर्याद्यद्व्यन्तु व्यन्त्विति वैव यजेद्वेतु वेत्त्विति वा व्यन्त्विति वै योषा वेत्विति वृषा मिथुनमेवैतत्प्रजननं क्रियते तस्माद्व्यन्तु वेत्विति यजति - १.५.३.[१५]

अथ चतुर्थे प्रयाजे समानयति बर्हिषि । प्रजा वै बर्ही रेत आज्यं तत्प्रजास्वेवैतद्रेतः सिच्यते तेन रेतसा सिक्तेनेमाः प्रजाः पुनरभ्यावर्तम्प्रजायन्ते तस्माच्चतुर्थे प्रयाजे समानयति बर्हिषि - १.५.३.[१६]

संग्रामो वा एष संनिधीयते । यः प्रयाजैर्यजते यतरं वै संयत्तयोर्मित्रमागच्छति स जयति तदेतदुपभृतोऽधि जुहूं मित्रमागच्छति तेन प्रजयति तस्माच्चतुर्थे प्रयाजे समानयति बर्हिषि - १.५.३.[१७]

यजमान एव जुहूमनु । यो स्मा अरातीयति स उपभृतमनु यजमानायैवैतद्द्विषन्तं भ्रातृव्यं बलिं हारयत्यत्तैव जुहूमन्वाद्य उपभृतमन्वत्त एवैतदाद्यं बलिं हारयति तस्माच्चतुर्थे प्रयाजे समानयति - १.५.३.[१८]

स वा अनवमृशन्त्समानयति । स यद्धावमृषेद्यजमानं द्विषता भ्रातृव्येनावमृशेदत्तारमाद्येनावमृशेत्तस्मादनवमृशन्त्समानयति - १.५.३.[१९]

अथोत्तरां जुहूमध्यूहति । यजमानमेवैतद्द्विषति भ्रातृव्येऽध्यूहत्यत्तारमाद्येऽध्यूहति तस्मादुत्तरां जुहूमध्यूहति - १.५.३.[२०]

देवा ह वा ऊचुः । हन्त विजितमेवानु सर्वं यज्ञं संस्थापयाम यदि नोऽसुररक्षसान्यासजेयुः संस्थित एव नो यज्ञं स्यादिति - १.५.३.[२१]

त उत्तमे प्रयाजे । स्वाहाकारेणैव सर्वं यज्ञं समस्थापयन्त्स्वाहाग्निमिति तदाग्नेयमाज्यभागं समस्थापयन्त्स्वाहा सोममिति तत्सौम्यमाज्यभागं समस्थापयन्त्स्वाहाग्निमिति तद्य एष उभयत्राच्युत आग्नेयः पुरोडाशो भवति तं
समस्थापयन् - १.५.३.[२२]

अथ यथादेवतम् । स्वाहा देवा आज्यपा इति तत्प्रयाजानुयाजान्त्समस्थापयन्प्रयाजानुयाजा वै देवा आज्यपा जुषाणो अग्निराज्यस्य वेत्विति तदग्निं स्विष्टकृतं समस्थापयन्नग्निर्हि स्विष्टकृत्स एषोऽप्येतर्हि तथैव यज्ञं संतिष्ठते यथैवैनं देवाः समस्थापयंस्तस्मादुत्तमे प्रयाजे स्वाहास्वाहेति यजति यावन्ति हवींषि भवन्ति विजितमेवैतदनु सर्वं यज्ञं संस्थापयति तस्माद्यदत ऊर्ध्वं विलोम यज्ञे क्रियेत न तदाद्रियेत संस्थितो मे यज्ञ इति ह विद्यात्स हैष यज्ञो यातयामेवास यथा वषट्कृतं हुतं स्वाहाकृतं - १.५.३.[२३]

ते देवा अकामयन्त । कथं न्विमं यज्ञं पुनराप्याययेमायातयामानं कुर्याम तेनायातयाम्ना प्रचरेमेति - १.५.३.[२४]

स यज्जुह्वामाज्यं परिशिष्टमासीत् । येन यज्ञं समस्थापयंस्तेनैव यथापूर्वं हवींष्यभ्यघारयन्पुनरेवैनानि तदाप्याययन्नयातयामान्यकुर्वन्नयातयाम ह्याज्यं तस्मादुत्तमं प्रयाजमिष्ट्वा यथापूर्वं हवींष्यभिघारयति पुनरेवैनानि तदाप्याययत्ययातयामानि करोत्ययातयाम ह्याज्यं तस्माद्यस्य कस्य च हविषोऽवद्यति पुनरेव तदभिघारयति स्विष्टकृत एव तत्पुनराप्यायत्ययातयाम करोत्यथ यदा स्विष्टकृतेऽवद्यति न ततः पुनरभिघारयति नो हि ततः कां चन हविषोऽग्नावाहुतिं होष्यन्भवति - १.५.३.[२५]



## १.५.४ प्रयाजावृत्

स वै समिधो यजति । प्राणा वै समिधः प्राणानेवैतत्समिन्द्धे प्राणैर्ह्ययम्पुरुषः समिद्धस्तस्मादभिमृषेति ब्रूयाद्यद्युपतापी स्यात्स यद्युष्णः स्यादैव तावच्छंसेत समिद्धो हि स तावद्भवति यद्यु शीतः स्यान्नाशंसेत तत्प्राणानेवास्मिन्नेतद्दधाति तस्मात्समिधो यजति - १.५.४.[१]

अथ तनूनपातं यजति । रेतो वै तनूनपाद्रेत एवैतत्सिञ्चति तस्मात्तनूनपातं यजति - १.५.४.[२]

अथेडो यजति । प्रजा वा इडो यदा वै रेतः सिक्तं प्रजायतेऽथ तदीडितमिवान्नमिच्छमानं चरति तत्प्रैवैतज्जनयति तस्मादिडो यजति - १.५.४.[३]

अथ बर्हिर्यजति । भूमा वै बर्हिर्भूमानमेवैतत्प्रजनयति तस्माद्बर्हिर्यजति - १.५.४.[४]

अथ स्वाहास्वाहेति यजति । हेमन्तो वा ऋतूनां स्वाहाकारो हेमन्तो हीमाः प्रजाः स्वं वशमुपनयते तस्माद्धेमन्म्लायन्त्योषधयः प्र वनस्पतीनां पलाशानि मुच्यन्ते प्रतितिरामिव वयांसि भवन्त्यधस्तरामिव वयांसि पतन्ति विपतित लोमेव पापः पुरुषो भवति हेमन्तो हीमाः प्रजाः स्वं वशमुपनयते स्वी ह वै तमर्धं कुरुते श्रियेऽन्नाद्याय यस्मिन्नर्धे भवति य एवमेतद्वेद - १.५.४.[५]

देवाश्च वा असुराश्च । उभये प्राजापत्याः पस्पृधिरे ते दण्डैर्धनुर्भिर्न व्यजयन्त ते हाविजयमाना ऊचुर्हन्त वाच्येव ब्रह्मन्विजिगीषामहै स यो नो वाचं व्याहृतां मिथुनेन नानुनिक्रामात्स सर्वं पराजयाता अथ सर्वमितरे जयानिति तथेति देवा अब्रुवंस्ते देवा इन्द्रमब्रुवन्व्याहरेति - १.५.४.[६]



स इन्द्रोऽब्रवीत् । एको ममेत्यथास्माकमेकेतीतरेऽब्रुवंस्तदु तन्मिथुनमेवाविन्दन्मिथुनं ह्येकश्चैका च - १.५.४.[७]

द्वौ ममेतीन्द्रोऽब्रवीत् । अथास्माकं द्वे इतीतरेऽब्रुवंस्तदु तन्मिथुनमेवाविन्दन्मिथुनं हि द्वौ च द्वे च - १.५.४.[८]

त्रयो ममेतीन्द्रोऽब्रवीत् । अथास्माकं तिस्र इतीतरेऽब्रुवंस्तदु तन्मिथुनमेवाविन्दन्मिथुनं हि त्रयश्च तिस्रश्च - १.५.४.[९]

चत्वारो ममेतीन्द्रोऽब्रवीत् । अथास्माकं चतस्र इतीतरेऽब्रुवंस्तदु तन्मिथुनमेवाविन्दन्मिथुनं हि चत्वारश्च चतस्रश्च - १.५.४.[१०]

पञ्च ममेतीन्द्रोऽब्रवीत् । तत इतरे मिथुनं नाविन्दन्नो ह्यत ऊर्ध्वं मिथुनमस्ति पञ्च पञ्चेति ह्येवैतदुभयम्भवति ततोऽसुराः सर्वं पराजयन्त सर्वस्माद्देवा असुरानजयन्त्सर्वस्मात्सपत्नानसुरान्निरभजन् - १.५.४.[११]

तस्मात्प्रथमे प्रयाज इष्टे ब्रूयात् । एको ममेत्येका तस्य यमहं द्वेष्मीति यद्यु न द्विष्याद्योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति ब्रूयात् - १.५.४.[१२]

द्वौ ममेति द्वितीये प्रयाजे । द्वे तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति - १.५.४.[१३]

त्रयो ममेति तृतीये प्रयाजे । तिस्रस्तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति - १.५.४.[१४]

चत्वारो ममेति चतुर्थे प्रयाजे । चतस्रस्तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति - १.५.४.[१५]



पञ्च ममेति पञ्चमे प्रयाजे । न तस्य किं चन योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति स पञ्च पञ्चेत्येव भवन्पराभवति तथास्य सर्वं संवृङ्क्ते सर्वस्मात्सपत्नान्निर्भजति य एवमेतद्वेद - १.५.४.[१६]

##१.६.१ प्रयाजानामिष्टौ प्राथम्यम्

ऋतवो ह वै देवेषु यज्ञे भागमीषिरे । आ नो यज्ञे भजत मा नो यज्ञादन्तर्गतास्त्वेव नोऽपि यज्ञे भाग इति - १.६.१.[१]

तद्वै देवा न जज्ञुः । त ऋतवो देवेष्वजानत्स्वसुरानुपावर्तन्ताप्रियान्देवानां द्विषतो भ्रातृव्यान्- १.६.१.[२]

ते हैतामेधतुमेधां चक्रिरे । यामेषामेतामनुश्रृण्वन्ति कृषन्तो ह स्मैव पूर्वे वपन्तो यन्ति लुनन्तोऽपरे मृणन्तः शश्वद्धैभ्योऽकृष्टपच्या एवौषधयः पेचिरे - १.६.१.[३]

तद्धै देवानामाग आस । कनीय इत्त्वतो द्विषन्द्विषतेऽरातीयति किम्वेतावन्मात्रमुपजानीत यथेदमितोऽन्यथासदिति - १.६.१.[४]

ते होचुः ऋतूनेवानुमन्त्रयामहा इति केनेति प्रथमानेवैनान्यज्ञे यजामेति - १.६.१.[५]

स हाग्निरुवाच । अथ यन्मां पुरा प्रथमं यजथ क्वाहं भवानीति न त्वामायतनाच्च्यावयाम इति ते यद्दतूनभिह्वयमाना अथाग्निमायतनान्नाच्यावयंस्तस्मादग्निरच्युतो न ह वा आयतनाच्च्यवते यस्मिन्नायतने भवति य एवमेतमग्निमच्युतं वेद - १.६.१.[६]

ते देवा अग्निमब्रुवन् परेह्योनांस्त्वमेवानुमन्त्रयस्वेति स हेत्याग्निरुवाचऽर्तेवोऽविदं वै वो देवेषु यज्ञे भागमिति कथं नोऽविद इति प्रथमानेव वो यज्ञे यक्ष्यन्तीति - १.६.१.[७]



त ऋतवोऽग्निमब्रुवन् । आ वयं त्वामस्मासु भजामो यो नो देवेषु यज्ञे भागमविद इति स एषोऽग्निर्ऋतुष्वाभक्तः समिधो अग्ने तनूनपादग्न इडो अग्ने बर्हिरग्ने स्वाहाग्निमित्याभक्तो ह वै तस्यां पुण्यकृत्यायां भवति यामस्य समानो ब्रुवाणः करोत्यग्निमते ह वा अस्मा अग्निमन्त ऋतव ओषधीः पचन्तीदं सर्वं य एवमेतमग्निमृतुष्वाभक्तं वेद - १.६.१.[८]

तदाहुः । यदुत्तमान्प्रयाजानावाहयन्त्यथ कस्मादेनान्प्रथमान्यजन्तीत्युत्तमान्ह्येनान्यज्ञेऽवाकल्पयन्प्रथमान्वो यजामेत्यब्रुवंस्तस्मादुत्तमानावाहयन्ति प्रथमान्यजन्ति - १.६.१.[९]

चतुर्थेन वै प्रयाजेन देवाः । यज्ञमाप्नुवंस्तं पञ्चमेन समस्थापयन्नथ यदत ऊर्ध्वमसंस्थितं यज्ञस्य स्वर्गमेव तेन लोकं समाश्नुवत - १.६.१.[१०]

ते स्वर्गं लोकं यन्तः । असुररक्षसेभ्य आसङ्गाद्बिभयां चक्रुस्तेऽग्निम्पुरस्तादकुर्वत रक्षोहणं रक्षसामपहन्तारमग्निं मध्यतोऽकुर्वत रक्षोहणं रक्षसामपहन्तारमग्निं पश्चादकुर्वत रक्षोहणं रक्षसामपहन्तारं - १.६.१.[११]

स यद्येनान्पुरस्तात् । असुररक्षसान्यासिसंक्षन्नग्निरेव तान्यपाहन्रक्षोहा रक्षसामपहन्ता यदि मध्यत आसिसंक्षन्नग्निरेव तान्यपाहन्रक्षोहा रक्षसामपहन्ता यदि पश्चादासिसंक्षन्नग्निरेव तान्यपाहन्रक्षोहा रक्षसामपहन्ता त एवं सर्वतोऽग्निभिर्गुप्यमानाः स्वर्गं लोकं समाश्नुवत - १.६.१.[१२]

तथो एवैष एतत् । चतुर्थेनैव प्रयाजेन यज्ञमाप्नोति तं पञ्चमेन संस्थापयत्यथ यदत ऊर्ध्वमसंस्थितं यज्ञस्य स्वर्गमेव तेन लोकं समश्नुते - १.६.१.[१३]

स यदाग्नेयमाज्यभागं यजति । अग्निमेवैतत्पुरस्तात्कुरुते रक्षोहणं रक्षसामपहन्तारमथ यदाग्नेयः पुरोडाशो भवत्यग्निमेवैतन्मध्यतः कुरुते रक्षोहणं रक्षसामपहन्तारमथ यदग्निं स्विष्टकृतं यजत्यग्निमेवैतत्पश्चात्कुरुते रक्षोहणं रक्षसामपहन्तारं - १.६.१.[१४]



स यद्येनं पुरस्तात् । असुररक्षसान्यासिसंक्षन्त्याग्नेरेव तान्यपहन्ति रक्षोहा रक्षसामपहन्ता यदि मध्यत असुररक्षसान्यासिसंक्षन्त्यग्निरेव तान्यपहन्ति रक्षोहा रक्षसामपहन्ता यदि पश्चादसुररक्षसान्यासिसंक्षन्त्यग्निरेव तान्यपहन्ति रक्षोहा रक्षसामपहन्ता स एवं सर्वतोऽग्निभिर्गुप्यमानः स्वर्गं लोकं समश्नुते - १.६.१.[१५]

स यद्येनं पुरस्तात् । यज्ञस्यानुव्याहरेत्तं प्रतिब्रूयान्मुख्यामार्त्तिमारिष्यस्यन्धो वा बधिरो वा भविष्यसीत्येता वै मुख्या आर्त्तयस्तथा हैव स्यात् - १.६.१.[१६]

यदि मध्यतो यज्ञस्यानुव्याहरेत् । तं प्रति ब्रूयादप्रजा अपशुर्भविष्यसीति प्रजा वै पशवो मध्यं तथा हैव स्यात् - १.६.१.[१७]

यद्यन्ततो यज्ञस्यानुव्याहरेत् । तं प्रति ब्रूयादप्रतिष्ठितो दरिद्रः क्षिप्रेऽमुं लोकमेष्यसीति तथा हैव स्यात्तस्मादु ह नानुव्याहारीव स्यादुत ह्येवंवित्परो भवति - १.६.१.[१८]

संवत्सरं ह वै प्रयाजैर्जयञ्जयति । स ह न्वेवैनं जयति योऽस्य द्वाराणि वेद किं हि स तैर्गृहैः कुर्याद्यानन्तरतो न व्यवविद्याद्यथायथास्य ते भवन्ति तस्य वसन्त एव द्वारं हेमन्तो द्वारं तं वा एतं संवत्सरं स्वर्गं लोकम्प्रपद्यते सर्वं वै संवत्सरः सर्वं वा अक्षय्यमेतेन हास्याक्षय्यं सुकृतम्भवत्यक्षय्यो लोकः - १.६.१.[१९]

तदाहुः । किंदेवत्यान्याज्यानीति प्राजापत्यानीति ह ब्रूयादनिरुक्तो वै प्रजापतिरनिरुक्तान्याज्यानि तानि हैतानि यजमानदेवत्यान्येव यजमानो ह्येव स्वे यज्ञे प्रजापतिरेतेन ह्युक्ता ऋत्विजस्तन्वते तं जनयन्ति - १.६.१.[२०]

स आज्यस्योपस्तीर्य । द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयति सैषाज्येन मिश्राहुतिर्हूयते यजमानेन हैवैषैतन्मिश्रा हूयते यदि ह वा अपि दूरे सन्यजते यद्यन्तिके यथा हैवान्ते सत इष्टं स्यादेवं हैवैवं विदुष इष्टं भवति यद्यु हापि बह्विव पापं करोति नो हैव बहिर्धा यज्ञाद्भवति य एवमेतद्वेद - १.६.१.[२१]



##१.६.२आवाप-प्रदेशः
यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न इदम्मनुष्यैरनभ्यारोह्यं स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम। तद्वा ऋषीणामनुश्रुतमास।१.६.२.[१]

यज्ञेन ह वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न इदम्मनुष्यैरनभ्यारोह्यं स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्निति तमन्वेष्टुं दध्रिरे१.६.२.[२]

तेर्चन्तः श्राम्यन्तश्चेरुः । श्रमेण ह स्म वै तद्देवा जयन्ति यदेषांजय्यमासऽर्षयश्च तेभ्यो देवा वैव प्ररोचयां चक्रुः स्वयं वैव दध्रिरे प्रेत तदेष्यामो यतो देवाः स्वर्गं लोकं समाश्नुवतेति ते किं प्ररोचते किं प्ररोचत इति चेरुरेत्पुरोडाशमेव कूर्मं भूत्वा सर्पन्तं ते ह सर्व एव मेनिरेऽयं वै यज्ञ इति१.६.२.[३]

ते होचुः । अश्विभ्यां तिष्ठ सरस्वत्यै तिष्ठेन्द्राय तिष्ठेति स ससर्पैवाग्नये तिष्ठेति ततस्तस्थावग्नये वा अस्थादिति तमग्नावेव परिगृह्य सर्वहुतमजुहवुराहुतिर्हि देवानां तत एभ्यो यज्ञः प्रारोचत तमसृजन्त तमतन्वत सोऽयं परोऽवरं यज्ञोऽनूच्यते पितैव पुत्राय ब्रह्मचारिणे१.६.२.[४]

स वा एभ्यस्तत्पुरोऽदाशयत् । य एभ्यो यज्ञं प्रारोचयत्तस्मात्पुरोदाशः पुरोदाशो ह वै नामैतद्यत्पुरोडाश इति स एष उभयत्राच्युत आग्नेयोऽष्टाकपालः पुरोडाशो भवति-१.६.२.[५]



स न पौर्णमासं हविः । नामावास्यमग्नीषोमीय एव पौर्णमासं हविः सांनाय्यमामावास्यं यज्ञ एवैष उभयत्रावक्लृप्तो नेद्यज्ञादयानीति न्वेव पुरस्तात्पौर्णमासस्य क्रियत एवम्वामावास्यस्यैतन्नु तद्यस्मादत्र क्रियते- १.६.२.[६]

यद्यु एनमुपधावेत् । इष्ट्या मा याजयेत्येतयैव याजयेद्यत्कामा वा एतमृषयोऽजुहवुः स एभ्यः कामः समर्ध्यत यत्कामो ह वा एतेन यज्ञेन यजते सोऽस्मै कामः समृध्यते यस्यै वै कस्यै च देवतायै हविर्गृह्यतेऽग्नौ वै तस्यै जुह्वत्यग्ना उ चेद्धोष्यन्त्स्यात्किमन्यस्यै देवताया आदिशेत्तस्मादग्नय एव - १.६.२.[७]

अग्निर्वै सर्वा देवताः । अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति तद्यथा सर्वा देवता उपधावेदेवं तत्तस्मादग्नय एव १.६.२.[८]

अग्निर्वै देवानामद्धातमाम् । यं वा अद्धातमां मन्येत तमुपधावेत्तस्मादग्नय एव - १.६.२.[९]

अग्निर्वै देवानां मृदुहृदयतमः । यं वै मृदुहृदयतमं मन्येत तमुपधावेत्तस्मादग्नय एव - १.६.२.[१०]

अग्निर्वै देवानां नेदिष्ठम् । यं वै नेदिष्ठमुपसर्तव्यानां मन्येत तमुपधावेत्तस्मादग्नय एव - १.६.२.[११]

स यदीष्टिं कुर्वीत । सप्तदश सामिधेनीरनुब्रूयादुपांशु देवतां यजति तद्धीष्टिरूपं मूर्धन्वत्यौ याज्यानुवाक्ये स्यातां वार्त्रघ्नावाज्यभागौ विराजौ संयाज्ये - १.६.२.[१२]

##

त्वष्टुर्ह वै पुत्रः । त्रिशीर्षा षडक्ष आस तस्य त्रीण्येव मुखान्यासुस्तद्यदेवंरूप आस तस्माद्विश्वरूपो नाम - १.६.३.[१]

तस्य सोमपानमेवैकं मुखमास । सुरापाणमेकमन्यस्मा अशनायैकं तमिन्द्रो दिद्वेष तस्य तानि शीर्षाणि प्रचिच्छेद - १.६.३.[२]

स यत्सोमपानमास । ततः कपिञ्जलः समभवत्तस्मात्स बभ्रुक इव बभ्रुरिव हि सोमो राजा - १.६.३.[३]

अथ यत्सुरापाणमास । ततः कलविङ्कः समभवत्तस्मात्सोऽभिमाद्यत्क इव वदत्यभिमाद्यन्निव हि सुरां पीत्वा वदति - १.६.३.[४]

अथ यदन्यस्मा अशनायास । ततस्तित्तिरिः समभवत्तस्मात्स विश्वरूपतम इव सन्त्येव घृस्तोका इव त्वन्मधुस्तोका इव त्वत्पर्णेष्वाश्चुतिता एवं रूपं हि स तेनाशनमावयत् - १.६.३.[५]

स त्वष्टा चुक्रोध । कुविन्मे पुत्रमवधीदिति सोऽपेन्द्रमेव सोममाजह्रे स यथायं सोमः प्रसुत एवमपेन्द्र एवास - १.६.३.[६]

इन्द्रो ह वा ईक्षां चक्रे । इदं वै मा सोमादन्तर्यन्तीति स यथा बलीयानबलीयस एवमनुपहूत एव यो द्रोणकलशे शुक्र आस तं भक्षयांचकार स हैनं जिहिंस सोऽस्य विष्वङ्ङेव प्राणेभ्यो दुद्राव मुखाद्धैवास्य न दुद्रावाथ सर्वेभ्योऽन्येभ्यः प्राणेभ्योऽद्रवत्तददः सौत्रामणीतीष्टिस्तस्यां तद्व्याख्यायते यथैनं देवा अभिषज्यन्- १.६.३.[७]

स त्वष्टा चुक्रोध कुविन्मेऽनुपहूतः सोममबभक्षदिति स स्वयमेव यज्ञवेशसं चक्रे स यो द्रोणकलशे शुक्रः परिशिष्ट आस तं प्रवर्तयांचकारेन्द्रशत्रुर्वर्धस्वेति सोऽग्निमेव प्राप्य सम्बभूवान्तरैव सम्बभूवेत्यु हैक आहुः सोऽग्नीषोमावेवाभिसम्बभूव सर्वा विद्याः सर्वं यशः सर्वमन्नाद्यं सर्वां श्रीं - १.६.३.[८]



स यद्वर्तमानः समभवत् । तस्माद्वृत्रोऽथ यदपात्समभवत्तस्मादहिस्तं दनुश्च दनायूश्च मातेव च पितेव च परिजगृहतुस्तस्माद्दानव इत्याहुः - १.६.३.[९]

अथ यदब्रवीदिन्द्रशत्रुर्वर्धस्वेति । तस्मादु हैनमिन्द्र एव जघानाथ यद्ध शश्वदवक्ष्यदिन्द्रस्य शत्रुर्वर्धस्वेति शश्वदु ह स एवेन्द्रमहनिष्यत् - १.६.३.[१०]

अथ यदब्रवीद्वर्धस्वेति । तस्मादु ह स्मेषुमात्रमेव तिर्यङ्ङ्वर्धत इषुमात्रं प्राङ्। सोऽ वैवावरं समुद्रं दधावव पूर्वं स यावत्स आस सहैव तावदन्नाद आस - १.६.३.[११]

तस्मै ह स्म पूर्वाह्ने देवाः । अशनमभिहरन्ति मध्यन्दिने मनुष्या अपराह्ने पितरः - १.६.३.[१२]

स वा इन्द्रस्तथैव नुत्तश्चरन् । अग्नीषोमावुपमन्त्रयांचक्रेऽग्नीषोमौ युवं वै मम स्थो युवयोरहमस्मि न युवयोरेष किं चन कं म इमं दस्युं वर्धयथ उप मा वर्तेथामिति - १.६.३.[१३]

तौ होचतुः । किमावयोस्ततः स्यादिति ताभ्यामेतमग्नीषोमीयमेकादशकपालम्पुरोडाशं निरवपत्तस्मादग्नीषोमीय एकादशकपालः पुरोडाशो भवति - १.६.३.[१४]

तावेनमुपाववृततुः । तावनु सर्वे देवाः प्रेयुः सर्वा विद्याः सर्वं यशः सर्वमन्नाद्यं सर्वा श्रीस्तेनेष्ट्वेन्द्र एतदभवद्यदिदमिन्द्र एष उ पौर्णमासस्य बन्धुः स यो हैवं विद्वान्पौर्णमासेन यजत एतां हैव श्रियं गच्छत्येवं यशो भवत्येवमन्नादो भवति- १.६.३.[१५]



तद्वेव खलु हतो वृत्रः । स यथा दृतिर्निष्पीत एवं संलीनः शिश्ये यथा निर्धूतसक्तुर्भस्त्रैवं संलीनः शिश्ये तमिन्द्रोऽभ्यादुद्राव हनिष्यन्- १.६.३.[१६]

स होवाच । मा नु मे प्रहार्षीस्त्वं वै तदेतर्ह्यसि यदहं व्येव मा कुरु मामुया भूवमिति स वै मेऽन्नमेधीति तथेति तं द्वेधान्वभिनत्तस्य यत्सौम्यं न्यक्तमास तं चन्द्रमसं चकाराथ यदस्यासुर्यमास तेनेमाः प्रजा उदरेणाविध्यत्तस्मादाहुर्वृत्र एव तर्ह्यन्नाद आसीद्वृत्र एतर्हीतीदं हि यदसावापूर्यतेऽस्मादेवैतल्लोकादाप्यायतेऽथ यदिमाः प्रजा अशनमिच्छन्तेऽस्मा एवैतद्वृत्रायोदराय बलिं हरन्ति स यो हैवमेतं वृत्रमन्नादं वेदान्नादो हैव भवति - १.६.३.[१७]

ता उ हैता देवता ऊचुः । या इमा अग्नीषोमावन्वाजग्मुरग्नीषोमौ युवं वै नो भूयिष्ठभाजौ स्थो ययोर्वामिदं युवयोरस्मानन्वाभजतमिति - १.६.३.[१८]

तौ होचतुः । किमावयोस्ततः स्यादिति यस्यै कस्यै च देवतायै हविर्निर्वपांस्तद्वाम् पुरस्तादाज्यस्य यजानिति तस्माद्यस्यै कस्यै च देवतायै हविर्निर्वपन्ति तत्पुरस्तादाज्यभागावग्नीषोमाभ्यां यजन्ति तन्न सौम्येऽध्वरे न पशौ यस्यै कस्यै च देवतायै निर्वपानिति ह्यब्रुवन् - १.६.३.[१९]

स हाग्निरुवाच । मय्येव वः सर्वेभ्यो जुह्वतु तद्वोऽहं मय्या भजामीति तस्मादग्नौ सर्वेभ्यो देवेभ्यो जुह्वति तस्मादाहुरग्निः सर्वा देवता इति - १.६.३.[२०]

अथ ह सोम उवाच । मामेव वः सर्वेभ्यो जुह्वतु तद्वोऽहं मय्याभजामीति तस्मात्सोमं सर्वेभ्यो देवेभ्यो जुह्वति तस्मादाहुः सोमः सर्वा देवता इति - १.६.३.[२१]

अथ यदिन्द्रे सर्वे देवास्तस्थानाः । तस्मादाहुरिन्द्रः सर्वा देवता इन्द्रश्रेष्ठा देवा इत्येतद्ध वै देवास्त्रेधैकदेवत्या अभवन्त्स यो हैवमेतद्वेदैकधा हैव स्वानां श्रेष्ठो भवति - १.६.३.[२२]



द्वयं वा इदं न तृतीयमस्ति । आर्द्रं चैव शुष्कं च यच्छुष्कं तदाग्नेयंयदार्द्रं तत्सौम्यमथ यदिदं द्वयमेवाप्य किमेतावत्क्रियत इत्यग्नीषोमयोरेवाज्यभागावग्नीषोमयोरुपांशुयाजोऽग्नीषोमयोः पुरोडाशो यदत एकतमेनैवेदं सर्वमाप्नोत्यथ किमेतावत्क्रियत इत्यग्नीषोमयोर्हैवैतावती विभूतिः प्रजातिः - १.६.३.[२३]

सूर्य एवाग्नेयः । चन्द्रमाः सौम्योऽहरेवाग्नेयं रात्रिः सौम्या य एवापूर्यतेऽर्धमासः स आग्नेयो योऽपक्षीयते स सौम्यः- १.६.३.[२४]

आज्यभागाभ्यामेव । सूर्याचन्द्रमसावाप्नोत्युपांशुयाजेनैवाहोरात्रे आप्नोति पुरोडाशेनैवार्धमासावाप्नोतीत्यु हैक आहुः - १.६.३.[२५]

तदु होवाचासुरिः । आज्यभागाभ्यामेवातो यतमे वा यतमे वा द्वे आप्नोत्युपांशुयाजेनैवातोऽहोरात्रे आप्नोति पुरोडाशेनैवातोऽर्धमासावाप्नोति सर्वं म आप्तमसत्सर्वं जितं सर्वेण वृत्रं हनानि सर्वेण द्विषन्तं भ्रातृव्यं हनानीति तस्माद्वा एतावत्क्रियत इति - १.६.३.[२६]

तदाहुः । किमिदं जामि क्रियतेऽग्नीषोमयोरेवाज्यस्याग्नीषोमयोः पुरोडाशस्य यदनन्तर्हितं तेन जामीत्यनेन ह त्वेवाजाम्याज्यस्येतरं पुरोडाशस्येतरं तदन्यदिवेतरमन्यदिवेतरं भवत्यृचमनूच्य जुषाणेन यजत्यृचमनूच्यर्चा यजति तदन्यदिवेतरमन्यदिवेतरं भवत्यनेन ह त्वेवाजाम्युपांश्वाज्यस्य यजत्युच्चैः पुरोडाशस्य स यदुपांशु तत्प्राजापत्यं रूपं तस्मात्तस्यानुष्टुभमनुवाक्यामन्वाह वाग्घ्यनुष्टुब्वाग्घि प्रजापतिः - १.६.३.[२७]

एतेन वै देवाः । उपांशुयाजेन यं यमसुराणामकामयन्त तमुपत्सर्य वज्रेण वषट्कारेणाघ्नंस्तथो एवैष एतेनोपांशुयाजेन पाप्मानं द्विषन्तम्भ्रातृव्यमुपत्सर्य वज्रेण वषट्कारेण हन्ति तस्मादुपांशुयाजं यजति - १.६.३.[२८]



स वा ऋचमनूच्य जुषाणेन यजति तदन्विमा अन्यतरतोदन्ताः प्रजाः प्रजायन्तेऽस्थि ह्यृगस्थि हि दन्तोऽन्यतरतो ह्येतदस्थि करोति - १.६.३.[२९]

अथर्चमनूच्यर्चा यजति । तदन्विमा उभयतोदन्ताः प्रजाः प्रजायन्तेऽस्थिह्यृगस्थि हि दन्त उभयतो ह्येतदस्थि करोत्येता वा इमा द्वय्यः प्रजा अन्यतरतोदन्ताश्चैवोभयतोदन्ताश्च स यो हैवं विद्वानग्नीषोमयोः प्रजातिं यजति बहुर्हैव प्रजया पशुभिर्भवति - १.६.३.[३०]

स वै पौर्णमासेनोपवत्स्यन् । न सत्रा सुहित इव स्यात्तेनेदमुदरमसुर्यं व्लिनात्याहुतिभिः प्रातर्दैवमेष उ पौर्णमासस्योपचारः - १.६.३.[३१]

स वै संप्रत्येवोपवसेत् । संप्रति वृत्रं हनानि संप्रति द्विषन्तं भ्रातृव्यं हनानीति- १.६.३.[३२]

स वा उत्तरामेवोपवसेत् । समिव वा एष क्रमते यः संप्रत्युपवसत्यनद्धा वै संक्रान्तयोर्यदीतरो वेतरमभिभवतीतरो वेतरमथ य उत्तरामुपवसति यथा पराञ्चमावृत्तं संपिंष्यादप्रत्यालभमानं सोऽन्यतोघात्येव स्यादेवं तद्य उत्तरामुपवसति- १.६.३.[३३]

स वै संप्रत्येवोपवसेत् । यथा वा अन्यस्य हतं संपिंष्यादेवं तद्य उत्तरामुपवसति सोऽन्यस्यैव कृतानुकरोऽन्यस्योपावसायी भवति तस्मादु संप्रत्येवोपवसेत् - १.६.३.[३४]

प्रजापतेर्ह वै प्रजाः ससृजानस्य । पर्वाणि विसस्रंसुः स वै संवत्सर एव प्रजापतिस्तस्यैतानि पर्वाण्यहोरात्रयोः संधी पौर्णमासी चामावास्या चर्तुमुखानि - १.६.३.[३५]

स विस्रस्तैः पर्वभिः । न शशाक संहातुं तमेतैर्हविर्यज्ञैर्देवा अभिषज्यन्नग्निहोत्रेणैवाहोरात्रयोः संधी तत्पर्वाभिषज्यंस्तत्समदधुः पौर्णमासेन चैवामावास्येन च पौर्णमासीं चामावास्यां च तत्पर्वाभिषज्यंस्तत्समदधुश्चातुर्मास्यैरेवर्तुमुखानि तत्पर्वाभिषज्यंस्तत्समदधुः - १.६.३.[३६]



स संहितैः पर्वभिः । इदमन्नाद्यमभ्युत्तस्थौ यदिदं प्रजापतेरन्नाद्यं स यो हैवं विद्वान्त्संप्रत्युपवसति संप्रति हैव प्रजापतेः पर्व भिषज्यत्यवति हैनं प्रजापतिः स एवमेवान्नादो भवति य एवं विद्वान्त्संप्रत्युपवसति तस्मादु संप्रत्येवोपवसेत् - १.६.३.[३७]

चक्षुषी ह वा एते यज्ञस्य यदाज्यभागौ । तस्मात्पुरस्ताज्जुहोति पुरस्ताद्धीमे चक्षुषी तत्पुरस्तादेवैतच्चक्षुषी दधाति तस्मादिमे पुरस्ताच्चक्षुषी - १.६.३.[३८]

उत्तरार्धपूर्वार्धे हैके । आग्नेयमाज्यभागं जुह्वति दक्षिणार्धपूर्वार्धे सौम्यमाज्यभागमेतत्पुरस्ताच्चक्षुषी दध्म इति वदन्तस्तदु तदाविज्ञान्यमिव हवींषि ह वा

आत्मा यज्ञस्य स यदेव पुरस्ताद्धविषां जुहोति तत्पुरस्ताच्चक्षुषी दधाति यत्रो एव समिद्धतं मन्येत तदाहुतीर्जुहुयात्समिद्धहोमेन ह्येव समृद्धा आहुतयः - १.६.३.[३९]

स वा ऋचमनूच्य जुषाणेन यजति । तस्मादिमे अस्थन्त्सत्यनस्थिके चक्षुषी आश्लिष्टे अथ यदृचमनूच्यर्चा यजेदस्थि हैव कुर्यान्न चक्षुः - १.६.३.[४०]

ते वा एते । अग्नीषोमयोरेव रूपमन्वायत्ते यच्छुक्लं तदाग्नेयं यत्कृष्णं तत्सौम्यं यदि वेतरथा यदेव कृष्णं तदाग्नेयं यच्छुक्लं तत्सौम्यं यदेव वीक्षते तदाग्नेयं रूपं शुष्के इव हि वीक्षमाणस्याक्षिणी भवतः शुष्कमिव ह्याग्नेयं यदेव स्वपिति तत्सौम्यं रूपमार्द्रे इव हि सुषुपुषोऽक्षिणी भवत आर्द्र इव हि सोम आजरसं ह वा अस्मिंल्लोके चक्षुष्मान्भवति सचक्षुरमुष्मिंलोके सम्भवति य एवमेतौ चक्षुषी आज्यभागौ वेद - १.६.३.[४१]

##१.६.४ दर्शोपचारः



इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार । सोऽबलीयान्मन्यमानो नास्तृषीतीव बिभ्यन्निलयां चक्रे स पराः परावतो जगाम देवा ह वै विदांचक्रुर्हतो वै वृत्रोऽथेन्द्रो न्यलेष्टेति - १.६.४.[१]

तमन्वेष्टुं दध्रिरे । अग्निर्देवतानां हिरण्यस्तूप ऋषीणां बृहती च्छन्दसां तमग्निरनुविवेद तेनैतां रात्रिं सहाजगाम स वै देवानां वसुर्वीरो ह्येषाम् - १.६.४.[२]

ते देवा अब्रुवन् । अमा वै नोऽद्य वसुर्वसति यो नः प्रावात्सीदिति ताभ्यामेतद्यथा ज्ञातिभ्यां वा सखिभ्यां वा सहागताभ्यां समानमोदनं पचेदजं वा तदह मानुषं हविर्देवानामेवमाभ्यामेतत्समानं हविर्निरवपन्नैन्द्राग्नं द्वादशकपालं पुरोडाशं तस्मादैन्द्राग्नो द्वादशकपालं पुरोडाशो भवति - १.६.४.[३]

स इन्द्रोऽब्रवीत् । यत्र वै वृत्राय वज्रं प्राहरं तद्व्यस्मये स कृश इवास्मि न वै मेदं धिनोति यन्मा धिनवत्तन्मे कुरुतेति तथेति देवा अब्रुवन् - १.६.४.[४]

ते देवा अब्रुवन् । न वा इममन्यत्सोमाद्धिनुयात्सोममेवास्मै सम्भरामेति तस्मै सोमं समभरन्नेष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्दद्दशे तदिमं लोकमागच्छति स इहैवापश्चौषधीश्च प्रविशति स वै देवानां वस्वन्नं ह्येषां तद्यदेष एतां रात्रिमिहामा वसति तस्मादमावास्या नाम - १.६.४.[५]

तं गोभिरनुविष्ठाप्य समभरन् । यदोषधीराश्नंस्तदोषधिभ्यो यदपोऽपिबंस्तदद्भ्यस्तमेवं संभृत्यातच्य तीव्रीकृत्य तमस्मै प्रायच्छन् - १.६.४.[६]

सोऽब्रवीत् । धिनोत्येव मेदं नेव तु मयि श्रयते यथेदं मयि श्रयातै तथोपजानीतेति तं शृतेनैवाश्रयन् - १.६.४.[७]

तद्वा एतत् समानमेव सत्पय एव सदिन्द्रस्यैव सत्तत्पुनर्नानेवाचक्षते यदब्रवीद्धिनोति मेति तस्माद्दध्यथ यदेनं शृतेनैवाश्रयंस्तस्माच्छृतं - १.६.४.[८]



स यथांशुराप्यायेत् । एवमाप्यायताप पाप्मानं हरिमाणमहतैष उ आमावास्यस्य बन्धुः स यो हैवं विद्वान्त्संनयत्येवं हैव प्रजया पशुभिराप्यायतेऽप पाप्मानं हते तस्माद्वै संनयेत् - १.६.४.[९]

तदाहुः । नासोमयाजी संनयेत्सोमाहुतिर्वा एषा सानवरुद्धा सोमयाजिनस्तस्मान्नासोमयाजी संनयेदिति - १.६.४.[१०]

तदु समेव नयेत् । नन्वत्रान्तरेण शुश्रुम सोमेन नु मा याजयताथ म एतदाप्यायनं संभरिष्यथेत्यब्रवीदिति न वै मेदं धिनोति यन्मा धिनवत्तन्मे कुरुतेति तस्मा एतदाप्यायनं समभरंस्तस्मादप्यसोमयाजी समेव नयेत् - १.६.४.[११]

वार्त्रघ्नं वै पौर्णमासम् । इन्द्रो ह्येतेन वृत्रमहन्नथैतदेव वृत्रहत्यं यदामावास्यं वृत्रं ह्यस्मा एतज्जघ्नुष आप्यायनमकुर्वन् - १.६.४.[१२]

तद्वा एतदेव वार्त्रघ्नम् । यत्पौर्णमासमथैष एव वृत्रो यच्चन्द्रमाः स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्ददृशे तदेनमेतेन सर्वं हन्ति नास्य किं चन परिशिनष्टि सर्वं ह वै पाप्मानं हन्ति न पाप्मनः किं चन परिशिनष्टि य एवमेतद्वेद - १.६.४.[१३]

तद्धैके । दृष्ट्वोपवसन्ति श्वो नोदेतेत्यदो हैव देवानामविक्षीणमन्नम्भवत्यथैभ्यो वयमित उपप्रदास्याम इति तद्धि समृद्धं यदक्षीण एव पूर्वस्मिन्नन्नेऽथापरमन्नमागच्छति स ह बह्वन्न एव भवत्यसोमयाजी तु क्षीरयाज्यदो हैव सोमो राजा भवति - १.६.४.[१४]

अथ यथैव पुरा । केवलीरोषधीरश्नन्ति केवलीरपः पिबन्ति ताः केवलमेव पयो दुह्र एव तदेष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्ददृशे तदिमं लोकमागच्छति स इहापश्चौषधीश्च प्रविशति तदेनमद्भ्य ओषधिभ्यः संभृत्याहुतिभ्योऽधि जनयति स एष आहुतिभ्यो जातः पश्चाद्ददृशे - १.६.४.[१५]



तद्वा एतत् । अविक्षीणमेव देवानामन्नाद्यं परिप्लवतेऽविक्षीणं ह वा अस्यास्मिंलोकेऽन्नं भवत्यक्षय्यममुष्मिंलोके सुकृतं य एवमेतद्वेद - १.६.४.[१६]

तद्वा एतां रात्रिम् । देवेभ्योऽन्नाद्यं प्रच्यवते तदिमं लोकमागच्छति ते देवा अकामयन्त कथं नु न इदं पुनरागच्छेत्कथं न इदं परागेव न प्रणश्येदिति तद्य एव संनयन्ति तेष्वाशंसन्त एत एव नः संभृत्य प्रदास्यन्तीत्या ह वा अस्मिन्त्स्वाश्च निष्ट्याश्च शंसन्ते य एवमेतद्वेद यो वै परमतां गच्छति तस्मिन्नाशंसन्ते - १.६.४.[१७]

तद्वा एष एवेन्द्रः । य एष तपत्यथैष एव वृत्रो यच्चन्द्रमाः सोऽस्यैष भ्रातृव्यजन्मेव तस्माद्यद्यपि पुरा विदूरमिवोदितोऽथैनमेतां रात्रिमुपैव न्याप्लवते सोऽस्य व्यात्तमापद्यते - १.६.४.[१८]

तं ग्रसित्वोदेति । स न पुरस्तान्न पश्चाद्ददृशे ग्रसते ह वै द्विषन्तम्भ्रातृव्यमयमेवास्ति नास्य सपत्नाः सन्तीत्याहुर्य एवमेतद्वेद - १.६.४.[१९]

तं निर्धीय निरस्यति । स एष धीतः पश्चाद्ददृशे स पुनराप्यायते स एतस्यैवान्नाद्याय पुनराप्यायते यदि ह वा अस्य द्विषन्भ्रातृव्यो वणिज्यया वा केनचिद्वा सम्भवत्येतस्य हैवान्नाद्याय पुनः सम्भवति य एवमेतद्वेद - १.६.४.[२०]

तद्धैके । महेन्द्रायेति कुर्वन्तीन्द्रो वा एष पुरा वृत्रस्य वधादथ वृत्रं हत्वा यथा महाराजो विजिग्यान एवं महेन्द्रोऽभवत्तस्मान्महेन्द्रायेति तद्विन्द्रायेत्येव कुर्यादिन्द्रो वा एष पुरा वृत्रस्य वधादिन्द्रो वृत्रं जघ्निवांस्तस्माद्विन्द्रायेत्येव कुर्यात् - १.६.४.[२१]

##१.७.१ सान्नाय्यसंपादनम्



स वै पर्णशाखया वत्सानपाकरोति । तद्यत्पर्णशाखया वत्सानपाकरोति यत्र वै गायत्री सोममच्छापतत्तदस्या आहरन्त्या अपादस्ताभ्यायत्य पर्णं प्रचिच्छेद गायत्र्यै वा सोमस्य वा राज्ञस्तत्पतित्वा पर्णोऽभवत्तस्मात्पर्णो नाम तद्यदेवात्र सोमस्य न्यक्तं तदिहाप्यसदिति तस्मात्पर्णशाखया वत्सानपाकरोति - १.७.१.[१]

तमाच्छिनत्ति । इषे त्वोर्जे त्वेति वृष्ट्यै तदाह यदाहेषे त्वेत्यूर्जे त्वेति यो वृष्टादूर्ग्रसो जायते तस्मै तदाह - १.७.१.[२]

अथ मातृभिर्वत्सान्त्समवार्जन्ति । स वत्सं शाखयोपस्पृशति वायव स्थेत्ययं वै वायुर्योऽयं पवत एष वा इदं सर्वं प्रप्यायति यदिदं किं च वर्षत्येष वा एतासां प्रप्याययिता तस्मादाह वायव स्थेत्युपायव स्थेत्यु हैक आहुरुप हि द्वितीयोऽयतीति तदु तथा न ब्रूयात् - १.७.१.[३]

अथ मातृणामेकां शाखयोपस्पृशति । वत्सेन व्याकृत्य देवो वः सविता प्रार्पयत्विति सविता वै देवानां प्रसविता सवितृप्रसूता यज्ञं सम्भरानिति तस्मादाह देवो वः सविता प्रार्पयत्विति - १.७.१.[४]

श्रेष्ठतमाय कर्मण इति । यज्ञो वै श्रेष्ठतमं कर्म यज्ञाय हि तस्मादाह श्रेष्ठतमाय कर्मण इति - १.७.१.[५]

आप्यायध्वमघ्न्या इन्द्राय भागमिति । तद्यथैवादो देवतायै हविर्गृह्णन्नादिशत्येवमेवैतद्देवताया आदिशति यदाहाप्यायध्वमघ्न्या इन्द्राय भागमिति - १.७.१.[६]

प्रजावतीरनमीवा अयक्ष्मा इति । नात्र तिरोहितमिवास्ति मा व स्तेन ईशत माघशंस इति मा वो नाष्ट्रा रक्षांसीशतेत्येवैतदाह ध्रुवा अस्मिन्गोपतौ स्यात बह्वीरित्यनपक्रमिण्योऽस्मिन्यजमाने बह्व्यः स्यातेत्येवैतदाह - १.७.१.[७]



अथाहवनीयागारस्य वा पुरस्तात् । गार्हपत्यागारस्य वा शाखामुपगूहति यजमानस्य पशून्पाहीति तद्ब्रह्मणैवैतद्यजमानस्य पशून्परिददाति गुप्त्यै - १.७.१.[८]

तस्यां पवित्रं करोति । वसोः पवित्रमसीति यज्ञो वै वसुस्तस्मादाह वसोः पवित्रमसीति - १.७.१.[९]

अथ यवाग्वैतां रात्रिमग्निहोत्रं जुहोति । आदिष्टं वा एतद्देवतायै हविर्भवति यत्पयः स यत्पयसा जुहुयाद्यथान्यस्यै देवतायै हविर्गृहीतं तदन्यस्यै जुहुयादेवं तत्तस्माद्यवाग्वैतां रात्रिमग्निहोत्रं जुहोति जुह्वत्यग्निहोत्रमुपक्लृप्तोखा भवत्यथाहोपसृष्टां प्रब्रूतादेति यदा प्राहोपसृष्टेति - १.७.१.[१०]

अथोखामादत्ते द्यौरसि पृथिव्यसीत्युपस्तौत्येवैनामेतन्महयत्येव यदाह द्यौरसि पृथिव्यसीति मातरिश्वनो घर्मोऽसीति यज्ञमेवैतत्करोति यथा घर्मम्प्रवृञ्ज्यादेवं प्रवृणक्ति विश्वधा असि परमेण धाम्ना दृंहस्व मा ह्वारिति दृंहत्येवैनामेतदशिथिलां करोति मा ते यज्ञपतिर्ह्वार्षीदिति यजमानो वै यज्ञपतिस्तद्यजमानायैवैतदह्वलामाशास्ते - १.७.१.[११]

अथ पवित्रं निदधति । तद्वै प्राङ्गिदध्यात्प्राची हि देवानां दिगथो उदगुदीची हि मनुष्याणां दिगयं वै पवित्रं योऽयं पवते सोऽयमिमांल्लोकांस्तिर्यङ्ङनुपवते तस्मादुदङ्गिदध्यात् - १.७.१.[१२]

तद्यथैवादः । सोमं राजानं पवित्रेण सम्पावयन्त्येवमेवैतत्सम्पावयत्युदीचीनदशं वै तत्पवित्रं भवति येन तत्सोमं राजानं सम्पावयन्ति तस्मादुदङ्गिदध्यात् - १.७.१.[१३]

तन्निदधाति । वसोः पवित्रमसीति यज्ञो वै वसुस्तस्मादाह वसोः पवित्रमसीति शतधारं सहस्रधारमित्युपस्तौत्येवैनदेतन्महयत्येव यदाह शतधारं सहस्रधारमिति - १.७.१.[१४]



अथ वाचंयमो भवति आ तिसृणां दोग्धोर्वाग्वै यज्ञोऽविक्षुब्धो यज्ञं तनवा इति - १.७.१.[१५]

तदानीयमानमभिमन्त्रयते । देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वेति तद्यथैवादः सोमं राजानं पवित्रेण सम्पावयन्त्येवमेवैतत्सम्पावयति - १.७.१.[१६]

अथाह कामधुक्ष इति अमूमिति सा विश्वायुरित्यथ द्वितीयां पृच्छति कामधुक्ष इत्यमूमिति सा विश्वकर्मेत्यथ तृतीयां पृच्छति कामधुक्ष इत्यमूमिति सा विश्वधाया
इति तद्यत्पृच्छति वीर्याण्येवास्वेतद्दधाति तिस्रो दोग्धि त्रयो वा इमे लोका एभ्य एवैनदेतल्लोकेभ्यः सम्भरत्यथ कामं वदति - १.७.१.[१७]

अथोत्तमां दोहयित्वा । येन दोहयति पात्रेण तस्मिन्नुदस्तोकमानीय पल्यङ्ज्य प्रत्यानयति यदत्र पयसोऽहायि तदिहाप्यसदिति रसस्यो चैव सर्वत्वायेदं हि यदा वर्षत्यथौषधयो जायन्त ओषधीर्जग्ध्वापः पीत्वा तत एष रसः सम्भवति तस्मादु रसस्यो चैव सर्वत्वाय तदुद्वास्यातनक्ति तीव्रीकरोत्येवैनदेतत्तस्मादुद्वास्यातनक्ति - १.७.१.[१८]

आतनक्ति । इन्द्रस्य त्वा भागं सोमेनातनच्मीति तद्यथैवादो देवतायै हविर्गृह्णन्नादिशत्येवमेवैतद्देवताया आदिशति यदाहेन्द्रस्य त्वा भागमिति सोमेनातनच्मीति स्वदयत्येवैनदेतद्देवेभ्यः - १.७.१.[१९]

अथोदकवतोत्तानेन पात्रेणापिदधाति । नेदेनदुपरिष्टान्नाष्ट्रा रक्षांस्यवमृशानिति वज्रो वा आपस्तद्वज्रेणैवैतन्नाष्ट्रा रक्षांस्यतोऽपहन्ति तस्मादुदकवतोत्तानेन पात्रेणापिदधाति - १.७.१.[२०]



सोऽपिदधाति । विष्णो हव्यं रक्षेति यज्ञो वै विष्णुस्तद्यज्ञायैवैतद्धविः परिददाति गुप्त्यै तस्मादाह विष्णो हव्यं रक्षेति - १.७.१.[२१]

##१.७.२अवदानक्लृप्तिः
ऋणं ह वै जायते योऽस्ति । स जायमान एव देवेभ्य ऋषिभ्यः पितृभ्यो मनुष्येभ्यः - १.७.२.[१]

स यदेव यजेत । तेन देवेभ्य ऋणं जायते तद्ध्येभ्य एतत्करोति यदेनान्यजतेयदेभ्यो जुहोति - १.७.२.[२]

अथ यदेवानुब्रुवीत । तेनऽर्षिभ्य ऋणं जायते तद्ध्येभ्य एतत्करोत्यृषीणां निधिगोप इति ह्यनूचानमाहुः - १.७.२.[३]

अथ यदेव प्रजामिच्छेत । तेन पितृभ्य ऋणं जायते तद्धेभ्य एतत्करोति यदेषां संतताव्यवच्छिन्ना प्रजा भवति - १.७.२.[४]

अथ यदेव वासयते । तेन मनुष्येभ्य ऋणं जायते तद्धेभ्य एतत्करोति यदेनान्वासयते यदेभ्योऽशनं ददाति स य एतानि सर्वाणि करोति स कृतकर्मा तस्य
सर्वमाप्तं सर्वं जितं - १.७.२.[५]

स येन देवेभ्य ऋणं जायते । तदेनांस्तदवदयते यद्यजतेऽथ यदग्नौ जुहोति तदेनांस्तदवदयते तस्माद्यत्किं चाग्नौ जुह्वति तदवदानं नाम - १.७.२.[६]

तद्वै चतुरवत्तं भवति । इदं वा अनुवाक्याथ याज्याथ वषट्कारोऽथ सा देवता चतुर्थी यस्यै देवतायै हविर्भवत्येवं हि देवता अवदानान्यन्वायत्ता अवदानानि वा देवता अन्वायत्तान्यतिरिक्तं ह तदवदानं यत्पञ्चमं कस्मा उ हि तदवद्येत्तस्माच्चतुरवत्तं भवति - १.७.२.[७]

उतो पञ्चावत्तमेव भवति । पाङ्क्तो यज्ञं पाङ्क्तः पशुः पञ्चऽर्तवः संवत्सरस्यैषो पञ्चावत्तस्य सम्पद्बहुर्हैव प्रजया पशुभिर्भवति यस्यैवंविदुषः पञ्चावत्तं क्रियत एतद्ध न्वेव प्रज्ञातं कौरुपाञ्चालं यच्चतुरवत्तं तस्माच्चतुरवत्तं भवति - १.७.२.[८]

स वै यावन्मात्रमिवैवावद्येत् मानुषं ह कुर्याद्यन्महदवद्येद्व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तस्माद्यावन्मात्रमिवैवावद्येत् - १.७.२.[९]

स आज्यस्योपस्तीर्य । द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयति द्वे वा आहुती सोमाहुतिरेवान्याज्याहुतिरन्या तत एषा केवली यत्सोमाहुतिरथैषाज्याहुतिर्यद्धविर्यज्ञो यत्पशुस्तदाज्यमेवैतत्करोति तस्मादुभयत आज्यं भवत्येतद्वै जुष्टं देवानां यदाज्यं तज्जुष्टमेवैतद्देवेभ्यः करोति तस्मादुभयत आज्यं भवति - १.७.२.[१०]

असौ वा अनुवाक्येयं याज्या । ते उभे योषे तयोर्मिथुनमस्ति वषट्कार एव तद्वा एष एव वषट्कारो य एष तपति स उद्यन्नेवामूमधिद्रवत्यस्तंयन्निमामधिद्रवति तदेतेन वृष्णेमां प्रजातिं प्रजायेते यैनयोरियं प्रजातिः - १.७.२.[११]

सोऽनुवाक्यामनूच्य । याज्यामनुद्रुत्य पश्चाद्वषट्करोति पश्चाद्वै परीत्य वृषा योषामधिद्रवति तदेने उभे पुरस्तात्कृत्वा वृष्णा वषट्कारेणाधिद्रावयति तस्मादु सह वैव वषट्कारेण जुहुयाद्वषट्कृते वा - १.७.२.[१२]

देवपात्रं वा एष यद्वषट्कारः । तद्यथा पात्र उद्धृत्य प्रयच्छेदेवं तदथ यत्पुरा वषट्काराज्जुहुयाद्यथाधो भूमौ निदिग्धं तदमुया स्यादेवं तत्तस्मादु सह वैव वषट्कारेण जुहुयाद्वषट्कृते वा - १.७.२.[१३]

तद्यथा योनौ रेतः सिञ्चेत् । एवं तदथ यत्पुरा वषट्काराज्जुहुयाद्यथा योनौ रेतः सिक्तं तदमुया स्यादेवं तत्तस्मादु सह वैव वषट्कारेण जुहुयाद्वषट्कृते वा - १.७.२.[१४]



असौ वा अनुवाक्येयं याज्या । सा वै गायत्रीयं त्रिष्टुबसौ स वै गायत्रीमन्वाह तदमूमनुब्रुवन्नसौ ह्यनुवाक्येमामन्वाहेयं हि गायत्री - १.७.२.[१५]

अथ त्रिष्टुभा यजति । तदनया यजन्नियं हि याज्यामुष्या अधि वषट्करोत्यसा उ हि त्रिष्टुप्तदेने सयुजौ करोति तस्मादिमे सम्भुञ्जाते अनयोरनु सम्भोगमिमाः सर्वाः प्रजा अनु सम्भुञ्जते - १.७.२.[१६]

स वा अङ्ग्यन्निवैवानुवाक्यामनुब्रूयात् । असौ ह्यनुवाक्या बृहद्ध्यसौ बार्हतं हि तद्रूपं क्षिप्र एव याज्यया त्वरेतेयं हि याज्या रथन्तरं हीयं राथन्तरं हि तद्रूपं ह्वयति वा अनुवाक्यया प्रयच्छति याज्यया तस्मादनुवाक्यायै रूपं हुवे हवामह आगच्छेदं बर्हिः सीदेति यद्धयति हि तया प्रयच्छति याज्यया तस्माद्याज्यायै रूपं वीहि हविर्जुषस्व हविरावृषायस्वाद्धि पिब प्रेति यत्प्र हि तया यच्छति - १.७.२.[१७]

सा या पुरस्ताल्लक्षणा । सानुवाक्या स्यादसौ ह्यनुवाक्या तस्या अमुष्या अवस्ताल्लक्ष्म चन्द्रमा नक्षत्राणि सूर्यः - १.७.२.[१८]

अथ योपरिष्टाल्लक्षणा । सा याज्या स्यादियं हि याज्या तस्या अस्या उपरिष्टाल्लक्ष्मौषधयो वनस्पतय आपोऽग्निरिमाः प्रजाः - १.७.२.[१९]

सा ह न्वेव समृद्धानुवाक्या । यस्यै प्रथमात्पदाद्देवतामभिव्याहरति सो एव समृद्धा याज्या यस्या उत्तमात्पदाद्देवताया अधि वषट्करोति वीर्यं वै देवतऽर्चस्तदुभयत एवैतद्वीर्येण परिगृह्य यस्यै देवतायै हविर्भवति तस्यै प्रयच्छति - १.७.२.[२०]

स वै वौगिति करोति । वाग्वै वषट्कारो वाग्रेतो रेत एवैतत्सिञ्चति षडित्यृतवो वै षड्वृतुष्वेवैतद्रेतः सिच्यते तदृतवो रेतः सिक्तमिमाः प्रजाः प्रजनयन्ति तस्मादेवं वषट्करोति - १.७.२.[२१]



दर्शपूर्णमासनिर्वचनम्

देवाश्च वा असुराश्च । उभये प्राजापत्याः प्रजापतेः पितुर्दायमुपेयुरेतावेवार्धमासौ य एवापूर्यते तं देवा उपायन्योऽपक्षीयते तमसुराः - १.७.२.[२२]

ते देवा अकामयन्त । कथं न्विममपि संवृञ्जीमहि योऽयमसुराणामिति तेऽर्चन्तः श्राम्यन्तश्चेरुस्त एतं हविर्यज्ञं ददृशुर्यद्दर्शपूर्णमासौ ताभ्यामयजन्त ताभ्यामिष्ट्वैतमपि समवृञ्जत - १.७.२.[२३]

य एषोऽसुराणामासीत् । यदा वा एता उभौ परिप्लवेते अथ मासो भवति मासशः संवत्सरः सर्वं वै संवत्सरः सर्वमेव तद्देवा असुराणां समवृञ्जत सर्वस्मात्सपत्नानसुरान्निरभजन्त्सर्वम्वेवैष एतत्सपत्नानां संवृङ्क्ते सर्वस्मात्सपत्नान्निर्भजति य एवमेतद्वेद - १.७.२.[२४]

स यो देवानामासीत् । स यवायुवत हि तेन देवा योऽसुराणां सोऽयवा न हि तेनासुरा अयुवत - १.७.२.[२५]

अथो इतरथाहुः य एव देवानामासीत्सोऽयवा न हि तमसुरा अयुवत योऽसुराणां स यवायुवत हि तं देवाः सब्दमहः सगरा रात्रिर्यव्या मासाः सुमेकः संवत्सरःस्वेको ह वै नामैतद्यत्सुमेक इति यवा च हि वा अयवा यवेतीवाथ येनैतेषां होता भवति तद्याविहोत्रमित्याचक्षते - १.७.२.[२६]

##१.७.३ स्विष्टकृदाहुतिः
यज्ञेन वै देवाः । दिवमुपोदक्रामन्नथ योऽयं देवः पशूनामीष्टे स इहाहीयत तस्माद्वास्तव्य इत्याहुर्वास्तौ हि तदहीयत - १.७.३.[१]



स येनैव देवा दिवमुपोदक्रामन् । तेनो एवार्चन्तः श्राम्यन्तश्चेरुरथ योऽयं देवः पशूनामीष्टे य इहाहीयत - १.७.३.[२]

स ऐक्षत । अहास्य हान्तर्यन्त्यु मा यज्ञादिति सोऽनूच्चक्राम स आयतयोत्तरत उपोत्पेदे स एष स्विष्टकृतः कालः - १.७.३.[[३]]

ते देवा अब्रुवन् । मा विस्त्रक्षीरिति ते वै मा यज्ञान्मान्तर्गताहुतिं मे कल्पयतेति तथेति स समबृहत्स नास्यत्स न कं चनाहिनत् - १.७.३.[४]

ते देवा अब्रुवन् । यावन्ति नो हवींषि गृहीतान्यभूवन्त्सर्वेषां तेषां हुतमुपजानीत यथास्मा आहुतिं कल्पयामेति - १.७.३.[५]

तेऽध्वर्युमब्रुवन् । यथापूर्वं हवींष्यभिघारयैकस्मा अवदानाय पुनराप्याययायातयामानि कुरु तत एकैकमवदानमवद्येति - १.७.३.[६]

सोऽध्वर्युः । यथापूर्वं हवींष्यभ्यघारयदेकस्मा अवदानाय पुनराप्याययदयातयामान्यकरोत्तत एकैकमवदानमवाद्यत्तस्माद्वास्तव्य इत्याहुर्वास्तु हि तद्यज्ञस्य यद्धुतेषु हविःषु तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते सर्वत्रैव स्विष्टकृदन्वाभक्तः सर्वत्र ह्येवैनं देवा अन्वाभजन् - १.७.३.[७]

तद्वा अग्नय इति क्रियते । अग्निर्वै स देवस्तस्यैतानि नामानि शर्व इति यथा प्राच्या आचक्षते भव इति यथा बाहीकाः पशूनां पती रुद्रोऽग्निरिति तान्यस्याशान्तान्येवेतराणि नामान्यग्निरित्येव शान्ततमं तस्मादग्नय इति क्रियते
स्विष्टकृत इति - १.७.३.[८]

ते होचुः । यत्त्वय्यमुत्र सत्ययक्ष्महि तन्नः स्विष्टं कुर्विति तदेभ्यः स्विष्टमकरोत्तस्मात्स्विष्टकृत इति - १.७.३.[९]



सोऽनुवाक्यामनूच्य सम्पश्यति । ये तथाग्निं स्विष्टकृतमयाडग्निरग्नेः प्रिया धामानीति तदाग्नेयमाज्यभागमाहायाड्सोमस्य प्रिया धामानीति तत्सौम्यमाज्यभागमाहायाडग्नेः प्रिया धामानीति तद्य एष उभयत्राच्युत आग्नेयः पुरोडाशो भवति तमाह - १.७.३.[१०]

अथ यथादेवतम् । अयाड्देवानामाज्यपानां प्रिया धामानीति तत्प्रयाजानुयाजानाह प्रयाजानुयाजा वै देवा आज्यपा यक्षदग्नेर्होतुः प्रिया धामानीति तदग्निं होतारमाह तदस्मा एतां देवा आहुतिं कल्पयित्वाथैनेनैतद्भूयः समशाम्यन्प्रिय एनं धामन्नुपाह्वयन्त तस्मादेवं संपश्यति - १.७.३.[११]

तद्धैके । देवतां पूर्वां कुर्वन्त्ययाड्कारादग्नेरयाड्सोमस्यायाडिति तदु तथा न कुर्याद्विलोम ह ते यज्ञे कुर्वन्ति ये देवतां पूर्वां कुर्वन्त्ययाड्कारादिदं हि प्रथममभिव्याहरन्नयाड्कारमेवाभिव्याहरति तस्मादयाड्कारमेव पूर्वं कुर्यात् - १.७.३.[१२]

यक्षत्स्वं महिमानमिति । यत्र वा अदो देवता आवाहयति तदपि स्वम्महिमानमावाहयति तदतः प्राङ्नैव किं चन स्वाय महिम्न इति क्रियते तदत्र तं प्रीणाति तथो हास्यैषोऽमोघायावाहितो भवति तस्मादाह यक्षत्स्वम्महिमानमिति - १.७.३.[१३]

आ यजतामेज्या इष इति । प्रजा वा इषस्ता एवैतद्यायजूकाः करोति ता इमाः प्रजा यजमाना अर्चन्त्यः श्राम्यन्त्यश्चरन्ति - १.७.३.[१४]

सो अध्वरा जातवेदा जुषतां हविरिति । तद्यज्ञस्यैवैतत्समृद्धिमाशास्ते यद्धि देवा हविर्जुषन्ते तेन हि महज्जयति तस्मादाह जुषतां हविरिति - १.७.३.[१५]

तद्यदेते अत्र । याज्यानुवाक्ये अवक्लृप्ततमे भवतस्तृतीयसवनं वै स्विष्टकृद्वैश्वदेवं वै तृतीयसवनं पिप्रीहि देवां उशतो यविष्ठेति तदनुवाक्यायै वैश्वदेवमग्ने यदद्य विशो अध्वरस्य होतरिति तद्याज्यायै वैश्वदेवं तद्यदेते एवंरूपे भवतस्तेनो एते तृतीयसवनस्य रूपं तस्माद्वा एते अत्र याज्यानुवाक्ये अवक्लृप्ततमे भवतः - १.७.३.[१६]



ते वै त्रिष्टुभौ भवतः । वास्तु वा एतद्यज्ञस्य यत्स्विष्टकृदवीर्यं वै वास्त्विन्द्रियं वीर्यं त्रिष्टुबिन्द्रियमेवैतद्वीर्यं वास्तौ स्विष्टकृति दधाति तस्मात्त्रिष्टुभौ भवतः - १.७.३.[१७]

उतो अनुष्टुभावेव भवतः । वास्त्वनुष्टुब्वास्तु स्विष्टकृद्वास्तावेवैतद्वास्तु दधाति पेसुकं वै वास्तु पिस्यति ह प्रजया पशुभिर्यस्यैवं विदुषोऽनुष्टुभौ भवतः - १.७.३.[१८]

तदु ह भाल्लवेयः । अनुष्टुभमनुवाक्यां चक्रे त्रिष्टुभं याज्यामेतदुभयम्परिगृह्णामीति स रथात्पपात स पतित्वा बाहुमपि शश्रे स परिममृशे यत्किमकरं तस्मादिदमापदिति स हैतदेव मेने यद्विलोम यज्ञेऽकरमिति तस्मान्न विलोम कुर्यात्सच्छन्दसावेव स्यातामुभे वैवानुष्टुभा उभे वा त्रिष्टुभौ - १.७.३.[१९]

स वा उत्तरार्धादवद्यति । उत्तरार्धे जुहोत्येषा ह्येतस्य देवस्य दिक्तस्मादुत्तरार्धादवद्यत्युत्तरार्धे जुहोत्येतस्यै वै दिश उदपद्यत तं तत एवाशमयंस्तस्मादुत्तरार्धादवद्यत्युत्तरार्धे जुहोति - १.७.३.[२०]

स वा अभ्यर्ध इवेतराभ्य आहुतिभ्यो जुहोति । इतरा आहुतीः पशवोऽनुप्रजायन्ते रुद्रियः स्विष्टकृद्रुद्रियेण पशून्प्रसजेद्यदितराभिराहुतिभिः संसृजेत्तेऽस्य गृहाः पशव उपमूर्यमाणा ईयुस्तस्मादभ्यर्ध इवेतराभ्य आहुतिभ्यो जुहोति - १.७.३.[२१]

यज्ञपरिशिष्टम्

एष वै स यज्ञः । येन तद्देवा दिवमुपोदक्रामन्नेष आहवनीयोऽथ य इहाहीयत स गार्हपत्यस्तस्मादेतं गार्हपत्यात्प्राञ्चमुद्धरन्ति - १.७.३.[२२]



तं वा अष्टासु विक्रमेष्वादधीत । अष्टाक्षरा वै गायत्री गायत्र्यैवैतद्दिवमुपोत्क्रामति - १.७.३.[२३]

एकादशस्वादधीत । एकादशाक्षरा वै त्रिष्टुप्त्रिष्टुभैवैतद्दिवमुपोत्क्रामति - १.७.३.[२४]

द्वादशस्वादधीत । द्वादशाक्षरा वै जगती जगत्यैवैतद्दिवमुपोत्क्रामति नात्र मात्रास्ति यत्रैव स्वयं मनसा मन्येत तदादधीत स यद्वा अप्यल्पकमिव प्राञ्चमुद्धरति तेनैव दिवमुपोत्क्रामति - १.७.३.[२५]

तदाहुः । आहवनीये हवींषि श्रपयेयुरतो वै देवा दिवमुपोदक्रामंस्तेनो एवार्चन्तः श्राम्यन्तश्चेरुस्तस्मिन्हवींषि श्रपयाम तस्मिन्यज्ञं तनवामहा इत्यपस्खल इव ह स हविषां यद्गार्हपत्ये श्रपयेयुर्यज्ञ आहवनीयो यज्ञे यज्ञं तनवामहा इति - १.७.३.[२६]

उतो गार्हपत्य एव श्रपयन्ति । आहवनीयो वा एष न वा एष तस्मै यदस्मिन्नश्रृतं श्रपयेयुस्तस्मै वा एष यदस्मिंञ्छृतं जुहुयुरित्यतो यतरथा कामयेत तथा कुर्यात् - १.७.३.[२७]

स हैष यज्ञ उवाच । नग्नताय वै बिभेमीति का तेऽनग्नतेत्यभित एव मा परिस्तृणीयुरिति तस्मादेतदग्निमभितः परिस्तृणन्ति तृष्णाया वै बिभेमीति का ते
तृप्तिरिति ब्राह्मणस्यैव तृप्तिमनुतृप्येयमिति तस्मात्संस्थिते यज्ञे ब्राह्मणं तर्पयितवै ब्रूयाद्यज्ञमेवैतत्तर्पयति - १.७.३.[२८]

##१.७.४ ब्रह्मणः प्राशित्रहरणम्
प्रजापतिर्ह वै स्वां दुहितरमभिदध्यौ । दिवं वा उषसं वा मिथुन्येनया स्यामिति तां सम्बभूव - १.७.४.[१]

तद्वै देवानामाग आस । य इत्थं स्वां दुहितरमस्माकं स्वसारं करोतीति - १.७.४.[२]



ते ह देवा ऊचुः । योऽयं देवः पशूनामीष्टेऽतिसंधं वा अयं चरति य इत्थं स्वां दुहितरमस्माकं स्वसारं करोति विध्येममिति तं रुद्रोऽभ्यायत्य विव्याध तस्य सामि रेतः प्रचस्कन्द तथेन्नूनं तदास - १.७.४.[३]

तस्मादेतदृषिणाभ्यनूक्तम् । पिता यत्स्वां दुहितरमधिष्कन् क्ष्मया रेतः संजग्मानो निषिञ्चदिति तदाग्निमारुतमित्युक्थं तस्मिंस्तद्व्याख्यायते यथा तद्देवा रेतः प्राजनयंस्तेषां यदा देवानां क्रोधो व्यैदथ प्रजापतिमभिषज्यंस्तस्य तं शल्यं निरकृन्तन्त्स वै यज्ञ एव प्रजापतिः - १.७.४.[४]

ते होचुः । उपजानीत यथेदं नामुयासत्कनीयो हाहुतेर्यथेदं स्यादिति - १.७.४.[५]

ते होचुः । भगायैनद्दक्षिणत आसीनाय परिहरत तद्भगः प्राशिष्यति तद्यथाहुतमेवं भविष्यतीति तद्भगाय दक्षिणत आसीनाय पर्याजह्रुस्तद्भगोऽवेक्षां चक्रे तस्याक्षिणी निर्ददाह तथेन्नूनं तदास तस्मादाहुरन्धो भग इति - १.७.४.[६]

ते होचुः । नो न्वेवात्राशमत्पूष्ण एनत्परिहरतेति तत्पूष्णे पर्याजह्रुस्तत्पूषा प्राश तस्य दतो निर्जघान तथेन्नूनं तदास तस्मादाहुरदन्तकः पूषेति तस्माद्यम्पूष्णे चरुं कुर्वन्ति प्रपिष्टानामेव कुर्वन्ति यथादन्तकायैवम् - १.७.४.[७]

ते होचुः । नो न्वेवात्राशमद्बृहस्पतय एनत्परिहरतेति तद्बृहस्पतये पर्याजह्रुः स बृहस्पतिः सवितारमेव प्रसवायोपाधावत्सविता वै देवानां प्रसवितेदं मे प्रसुवेति तदस्मै सविता प्रसविता प्रासुवत्तदेनं सवितृप्रसूतं नाहिनत्ततोऽर्वाचीनं शान्तं तदेतन्निदानेन यत्प्राशित्रम् - १.७.४.[८]



स यत्प्राशित्रमवद्यति । यदेवात्राविद्धं यज्ञस्य यद्रुद्रियं तदेवैतन्निर्मिमीतेऽथाप उपस्पृशति शान्तिरापस्तदद्भिः शमयत्यथेडाम्पशून्त्समवद्यति - १.७.४.[९]

इडाकर्म

अथेडां पशून् समवद्यति। - १.७.४.(९)

स वै यावन्मात्रमिवैवावद्येत् । तथा शल्यः प्रच्यवते तस्माद्यावन्मात्रमिवैवावद्येदन्यतरत आज्यं कुर्यादधस्ताद्वोपरिष्टाद्वा तथा खदन्निःसरणवद्भवति तथा निस्रवति तस्मादन्यतरत आज्यं कुर्यादधस्ताद्वोपरिष्टाद्वा - १.७.४.[१०]

स आज्यस्योपस्तीर्य । द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयति तद्यथैव यज्ञस्यावदानमेवमेतत् - १.७.४.[११]

तन्न पूर्वेण परिहरेत् । पूर्वेण हैके परिहरन्ति पुरस्ताद्वै प्रत्यञ्चो यजमानम्पशव उपतिष्ठन्ते रुद्रियेण ह पशून्प्रसजेद्यत्पूर्वेण परिहरेत्तेऽस्य गृहाः पशव उपमूर्यमाणा ईयुस्तस्मादित्येव तिर्यक्प्रजिहीत तथा ह रुद्रियेण पशून्न प्रसजति तिर्यगेवैनं निर्मिमीते - १.७.४.[१२]

तत्प्रतिगृह्णाति । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् प्रतिगृह्णामीति - १.७.४.[१३]

तद्यथैवादो बृहस्पतिः सवितारम् । प्रसवायोपाधावत्सविता वै देवानाम्प्रसवितेदं मे प्रसुवेति तदस्मै सविता प्रसविता प्रासुवत्तदेनं सवितृप्रसूतं नाहिनदेवमेवैष एतत्सवितारमेव प्रसवायोपधावति सविता वै देवानाम्प्रसवितेदं मे प्रसुवेति तदस्मै सविता प्रसविता प्रसौति तदेनं सवितृप्रसूतं न हिनस्ति - १.७.४.[१४]

तत्प्राश्नाति । अग्नेष्ट्वास्येन प्राश्नामीति न वा अग्निं किं चन हिनस्ति तथो हैनमेतन्न हिनस्ति - १.७.४.[१५]



तन्न दद्भिः खादेत् । नेन्म इदं रुद्रियं दतो हिनसदिति तस्मान्न दद्भिः खादेत् - १.७.४.[१६]

अथाप आचामति । शान्तिरापस्तदद्भिः शान्त्या शमयतेऽथ परिक्षाल्य पात्रं - १.७.४.[१७]

अथास्मै ब्रह्मभागं पर्याहरन्ति । ब्रह्मा वै यज्ञस्य दक्षिणत आस्तेऽभिगोप्ता स एतं भागं प्रतिविदान आस्ते यत्प्राशित्रं तदस्मै पर्याहार्षुस्तत्प्राशीदथयमस्मै ब्रह्मभागं पर्याहरन्ति तेन भागी स यदत ऊर्ध्वमसंस्थितं यज्ञस्य तदभिगोपायति तस्माद्वा अस्मै ब्रह्मभागं पर्याहरन्ति - १.७.४.[१८]

स वै वाचंयम एव स्यात् । ब्रह्मन्प्रस्थास्यामीत्यैतस्माद्वचसो विवृहन्ति वा एते यज्ञं क्षण्वन्ति ये मध्ये यज्ञस्य पाकयज्ञिययेडया चरन्ति ब्रह्मा वा ऋत्विजाम्भिषक्तमस्तद्ब्रह्मा संदधाति न ह संदध्याद्यद्वावद्यमान आसीत तस्माद्वाचंयम एव स्यात्- १.७.४.[१९]

स यदि पुरा मानुषीं वाचं व्याहरेत् । तत्रो वैष्णवीमृचं वा यजुर्वा जपेद्यज्ञो वै विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्रायश्चित्तिः - १.७.४.[२०]

स यत्राह ब्रह्मन्प्रस्थास्यामीति तद्ब्रह्मा जपत्येतं ते देवा सवितर्यज्ञम्प्राहुरिति तत्सवितारं प्रसवायोपधावति स हि देवानां प्रसविता बृहस्पतये ब्रह्मण इति बृहस्पतिर्वै देवानां ब्रह्मा तद्य एव देवानां ब्रह्मा तस्मा एवैतत्प्राह तस्मादाह बृहस्पतये ब्रह्मण इति तेन यज्ञमव तेन यज्ञपतिं तेन मामवेति नात्र तिरोहितमिवास्ति - १.७.४.[२१]

मनो जूतिर्जुषतामाज्यस्येति । मनसा वा इदं सर्वमाप्तं तन्मनसैवैतत्सर्वामाप्नोति बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञं समिमं दधात्विति यद्विवृढं तत्संदधाति विश्वे देवास इह मादयन्तामिति सर्वं वै विश्वे देवाः सर्वेणैवैतत्संदधाति स यदि कामयेत ब्रूयात्प्रतिष्ठेति यद्यु कामयेतापि नाद्रियेत - १.७.४.[२२]



##१.८.१
मनवे ह वै प्रातः । अवनेग्यमुदकमाजह्रुर्यथेदम्पाणिभ्यामवनेजनायाहरन्त्येवं तस्यावनेनिजानस्य मत्स्यः पाणी आपेदे - १.८.१.[१]

स हास्मै वाचमुवाद । बिभृहि मा पारयिष्यामि त्वेति कस्मान्मा पारयिष्यसीत्यौघ इमाः सर्वाः प्रजा निर्वोढा ततस्त्वा पारयितास्मीति कथं ते भृतिरिति - १.८.१.[२]

स होवाच । यावद्वै क्षुल्लका भवामो बह्वी वै नस्तावन्नाष्ट्रा भवत्युत मत्स्य एव मत्स्यं गिलति कुम्भ्यां माग्रे बिभरासि स यदा तामतिवर्धा अथ कर्षूं खात्वा तस्यां मा बिभरासि स यदा तामतिवर्धा अथ मा समुद्रमभ्यवहरासि

तर्हि वा अतिनाष्ट्रो भवितास्मीति - १.८.१.[[३]]

शश्वद्ध झष आस । स हि ज्येष्ठं वर्धतेऽथेतिथीं समां तदौघ आगन्ता तन्मा नावमुपकल्प्योपासासै स औघ उत्थिते नावमापद्यासै ततस्त्वा पारयितास्मीति - १.८.१.[४]

तमेवं भृत्वा समुद्रमभ्यवजहार । स यतिथीं तत्समां परिदिदेष ततिथीं समां नावमुपकल्प्योपासांचक्रे स औघ उत्थिते नावमापेदे तं स मत्स्य उपन्यापुप्लुवे तस्य शृङ्गे नावः पाशं प्रतिमुमोच तेनैतमुत्तरं गिरिमतिदुद्राव - १.८.१.[५]

स होवाच । अपीपरं वै त्वा वृक्षे नावं प्रतिबध्नीष्व तं तु त्वा मा गिरौ सन्तमुदकमन्तश्छैत्सीद्यावदुदकं समवायात्तावत्तावदन्ववसर्पासीति स ह तावत्तावदेवान्ववससर्प तदप्येतदुत्तरस्य गिरेर्मनोरवसर्पणमित्यौघो हताः सर्वाः प्रजा निरुवाहाथेह मनुरेवैकः परिशिशिषे - १.८.१.[६]



सोर्चंश्छ्राम्यंश्चचार प्रजाकामः । तत्रापि पाकयज्ञेनेजे स घृतं दधिमस्त्वामिक्षामित्यप्सु जुहवांचकार ततः संवत्सरे योषित्सम्बभूव सा ह पिब्दमानेवोदेयाय तस्यै ह स्म घृतं पदे संतिष्ठते तया मित्रावरुणौ संजग्माते - १.८.१.[७]

तां होचतुः कासीति । मनोर्दुहितेत्यावयोर्ब्रूष्वेति नेति होवाच य एव मामजीजनत तस्यै वाहमस्मीति तस्यामपि त्वमीषाते तद्वा जज्ञौ तद्वा न जज्ञावति त्वेवेयाय सा
मनुमाजगाम - १.८.१.[८]

तां ह मनुरुवाच कासीति । तव दुहितेति कथं भगवति मम दुहितेति या अमूरप्स्वाहुतीरहौषीर्घृतं दधि मस्त्वामिक्षां ततो मामजीजनथाः साशीरस्मि तां मा यज्ञेऽवकल्पय यज्ञे चेद्वै मावकल्पयिष्यसि बहुः प्रजया पशुभिर्भविष्यसि यामु मया कां

चाशिषमाशासिष्यसे सा ते सर्वा समर्धिष्यत इति तामेतन्मध्ये यज्ञस्यावाकल्पयन्मध्यं ह्येतद्यज्ञस्य यदन्तरा प्रयाजानुयाजान्-१.८.१.[९]

तयार्च्चंञ्छ्राम्यंश्चचार प्रजाकामः । तयेमां प्रजातिं प्रजज्ञे येयं मनोः प्रजातिर्याम्वेनया कां चाशिषमाशास्त सास्मै सर्वा समार्ध्यत - १.८.१.[१०]

सैषा निदानेना यदिडा । स यो हैवं विद्वानिडया चरत्येतां हैव प्रजातिं प्रजायते यां मनुः प्राजायत याम्वेनया कां चाशिषमाशास्ते सास्मै सर्वा समृध्यते - १.८.१.[११]

सा वै पञ्चावत्ता भवति । पशवो वा इडा पाङ्क्ता वै पशवस्तस्मात्पञ्चावत्ता भवति - १.८.१.[१२]

स समवदायेडाम् । पूर्वार्धं पुरोडाशस्य प्रशीर्य पुरस्ताद्ध्रुवायै निदधाति तां होत्रे प्रदाय दक्षिणात्येति - १.८.१.[१३]



स होतुरिह निलिम्पति । तद्धोतौष्ठयोर्निलिम्पते मनसस्पतिना ते हुतस्याश्नामीषे प्राणायेति - १.८.१.[१४]

अथ होतुरिह निलिम्पति । तद्धोतौष्ठयोर्निलिम्पते वाचस्पतिना ते हुतस्याश्नाम्यूर्ज उदानायेति - १.८.१.[१५]

एतद्ध वै मनुर्बिभयांचकार । इदं वै मे तनिष्ठं यज्ञस्य यदियमिडा पाकयज्ञिया यद्वै म इह रक्षांसि यज्ञं न हिंस्युरिति तामेतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य इत्येव प्रापयत तथो एवैनामेष एतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य इत्येव प्रापयतेऽथ यत्प्रत्यक्षं न प्राश्नाति नेदनुपहूताम्प्राश्नामीत्येतदेवैनां प्रापयते यदोष्ठयोर्निलिम्पते - १.८.१.[१६]

अथ होतुः पाणौ समवद्यति । समवत्तमेव सतीं तदेनां प्रत्यक्षं होतरि श्रयति तयात्मंञ्छ्रितया होता यजमानायाशिषमाशास्ते तस्माद्धोतुः पाणौ समवद्यति - १.८.१.[१७]

अथोपांशूपह्वयते । एतद्ध वै मनुर्बिभयांचकारेदं वै मे तनिष्ठं यज्ञस्य यदियमिडा पाकयज्ञिया यद्वै म इह रक्षांसि यज्ञं न हन्युरिति तामेतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य इत्येवोपांशूपाह्वयत तथो एवैनामेष एतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य इत्येवोपांशूपह्वयते - १.८.१.[१८]

स उपह्वयते । उपहूतं रथन्तरं सह पृथिव्योप मां रथन्तरं सह पृथिव्या ह्वयतामुपहूतं वामदेव्यं सहान्तरिक्षेणोप मां वामदेव्यं सहान्तरिक्षेण ह्वयतामुपहूतं बृहत्सह दिवोप मां बृहत्सह दिवा ह्वयतामिति तदेतामेवैतदुपह्वयमान इमांश्च लोकानुपह्वयत एतानि च सामानि - १.८.१.[१९]



उपहूता गावः सहर्षभा इति । पशवो वा इडा तदेनां परोऽक्षमुपह्वयते सहर्षभा इति समिथुनामेवैनामेतदुपह्वयते - १.८.१.[२०]

उपहूता सप्तहोत्रेति । तदेनां सप्तहोत्रा सौम्येनाध्वरेणोपह्वयते - १.८.१.[२१]

उपहूतेडा ततुरिरिति । तदेनां प्रत्यक्षमुपह्वयते ततुरिरिति सर्वं ह्येषा पाप्मानं तरति तस्मादाह ततुरिरिति - १.८.१.[२२]

उपहूतः सखा भक्ष इति । प्राणौ वै सखा भक्षस्तत्प्राणमुपह्वयत उपहूतं हेगिति तच्छरीरमुपह्वयते तत्सर्वामुपह्वयते - १.८.१.[२३]

अथ प्रतिपद्यते । इडोपहूतोपहूतेडोपो अस्मां इडा ह्वयतामिडोपहूतेति तदुपहूतामेवैनामेतत्सतीं प्रत्यक्षमुपह्वयते या वै सासीद्गोर्वै सासीच्चतुष्पदी वै गौस्तस्माच्चतुरुपह्वयते - १.८.१.[२४]

स वै चतुरुपह्वयमानः । अथ नानेवोपह्वयतेऽजामितायै जामि ह कुर्याद्यदिडोपहूतेडोपहूतेत्येवोपह्वयेतोपहूतेडेति वेडोपहूतेति तदर्वाचीमुपह्वयत उपहूतेडेति तत्पराचीमुपो अस्मां इडा ह्वयतामिति तदात्मानं चैवैतन्नान्तरेत्यन्यथेव च भवतीडोपहूतेति तत्पुनरर्वाचीमुपह्वयते तदर्वाचीं चैवैनामेतत्पराचीं चोपह्वयते - १.८.१.[२५]

मानवी घृतपदीति । मनुर्ह्येतामग्रेऽजनयत तस्मादाह मानवीति घृतपदीति यदेवास्यै घृतं पदे समतिष्ठत तस्मादाह घृतपदीति - १.८.१.[२६]



उत मैत्रावरुणीति । यदेव मित्रावरुणाभ्यां समगच्छत स एव मैत्रावरुणो न्यङ्गो ब्रह्म देवकृतोपहूतेति ब्रह्म ह्येषां देवकृतोपहूतोपहूता दैव्या अध्वर्यव उपहूता मनुष्या इति तद्दैवांश्चैवाध्वर्यूनुपह्वयते ये च मानुषा वत्सा वै दैव्या अध्वर्यवोऽथ य इतरे ते मानुषाः - १.८.१.[२७]

य इमं यज्ञमवान्ये च यज्ञपतिं वर्धानिति । एते वै यज्ञमवन्ति ये ब्राह्मणाः शुश्रुवांसोऽनूचाना एते ह्येनं तन्वत एत एनं जनयन्ति तदु तेभ्यो निह्नुते वत्सा उ वै यज्ञपतिं वर्धन्ति यस्य ह्येते भूयिष्ठा भवन्ति स हि यज्ञपतिर्वर्धते तस्मादाह ये च यज्ञपतिं वर्धानिति - १.८.१.[२८]

उपहूते द्यावापृथिवी पूर्वजे ऋतावरी देवी देवपुत्रे इति तदिमे द्यावापृथिवी उपह्वयते ययोरिदं सर्वमध्युपहूतोऽयं यजमान इति तद्यजमानमुपह्वयते तद्यदत्र नाम न गृह्णाति प्रोऽक्षं ह्यत्राशीर्यदिडायाम्मानुषं ह कुर्याद्यन्नाम गृह्णीयाद्व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तस्मान्न नाम गृह्णाति - १.८.१.[२९]

उत्तरस्यां देवयज्यायामुपहूत इति । तदस्मा एतज्जीवातुमेव परोऽक्षमाशास्ते जीवन्हि पूर्वमिष्ट्वाथापरं यजते - १.८.१.[३०]

तदस्मा एतत्प्रजामेव परोऽक्षमाशास्ते । यस्य हि प्रजा भवत्यमुं लोकमात्मनैत्यथास्मिंलोके प्रजा यजते तस्मात्प्रजोत्तरा देवयज्या - १.८.१.[३१]

तदस्मा एतत्पशूनेव परोऽक्षमाशास्ते यस्य हि पशवो भवन्ति स पूर्वमिष्ट्वाथापरं यजते - १.८.१.[३२]

भूयसि हविष्करण उपहूत इति । तदस्मा एतज्जीवातुमेव परोऽक्षमाशास्ते जीवन्हिपूर्वमिष्ट्वाथ भूयोभूय एव हविष्करोति - १.८.१.[३३]



तदस्मा एतत्प्रजामेव परोऽक्षमाशास्ते यस्य हि प्रजा भवत्येक आत्मना भवत्यथोत दशधा प्रजया हविष्क्रियते तस्मात्प्रजा भूयो हविष्करणम् - १.८.१.[३४]

तदस्मा एतत्पशूनेव परोऽक्षमाशास्ते । यस्य हि पशवो भवन्ति स पूर्वमिष्ट्वाथ भूयोभूय एव हविष्करोति - १.८.१.[३५]

एषा वा आशीः जीवेयं प्रजा मे स्याच्छ्रियं गच्छेयमिति तद्यत्पशूनाशास्ते तच्छ्रियमाशास्ते श्रीर्हि पशवस्तदेताभ्यामेवैतदाशीर्भ्यां सर्वमाप्तं तस्माद्वा एते अत्र द्वे आशिषौ क्रियते - १.८.१.[३६]

देवा म इदं हविर्जुषन्तामिति । तस्मिन्नुपहूत इति तद्यज्ञस्यैवैतत्समृद्धिमाशास्ते यद्धि देवा हविर्जुषन्ते तेन हि महज्जयति तस्मादाह जुषन्तामिति - १.८.१.[३७]

तां वै प्राश्नन्त्येव । नाग्नौ जुह्वति पशवो वा इडा नेत्पशूनग्नौ प्रवृणजामेति तस्मान्नाग्नौ जुह्वति - १.८.१.[३८]

प्राणेष्वेव हूयते । होतरि त्वद्यजमाने त्वदध्वर्यौ त्वदथ यत्पूर्वार्धम्पुरोडाशस्य प्रशीर्य पुरस्ताद्ध्रुवायै निदधाति यजमानो वै ध्रुवा तद्यजमानस्य प्राशितं भवत्यथ यत्प्रत्यक्षं न प्राश्नाति नेदसंस्थिते यज्ञे प्राश्नानीत्येतदेवास्य प्राशितं भवति सर्वे प्राश्नन्ति सर्वेषु मे हुतासदिति पञ्च प्राश्नन्ति पशवो वा इडा पाङ्क्ता वै पशवस्तस्मात्पञ्च प्राश्नन्ति - १.८.१.[३९]

अथ यत्र प्रतिपद्यते । तच्चतुर्धा पुरोडाशं कृत्वा बर्हिषदं करोति तदत्र पितृणां भाजनेन चतस्रो वा अवान्तरदिशोऽवान्तरदिशो वै पितरस्तस्माच्चतुर्धा पुरोडाशं कृत्वा बर्हिषदं करोति - १.८.१.[४०]

अथ यत्राहोपहूते द्यावापृथिवी इति । तदग्नीध आदधाति तदग्नीत्प्राश्नात्युपहूतापृथिवी मातोप मां पृथिवी माता ह्वयतामग्निराग्नीध्रात्स्वाहोपहूतो द्यौष्पितोप मां द्यौष्पिता ह्वयतामग्निराग्नीध्रात्स्वाहेति द्यावापृथिव्यो वा एष यदाग्नीध्रस्तस्मादेवं प्राश्नाति - १.८.१.[४१]



अथ यत्राशिषमाशास्ते । तज्जपति मयीदमिन्द्र इन्द्रियं दधात्वस्मान्रायो मघवानः सचन्तामस्माकं सन्त्वाशिषः सत्या नः सन्त्वाशिष इत्याशिषामेवैष प्रतिग्रहस्तद्या एवात्रर्त्विजो यजमानायाशिष आशासते ता एवैतत्प्रतिगृह्यात्मन्कुरुते १.८.१.[४२]

अथ पवित्रयोर्मार्जयन्ते । पाकयज्ञिययेव वा एतदिडयाचारिषुः पवित्रपूता यदत ऊर्ध्वमसंस्थितं यज्ञस्य तत्तनवामहा इति तस्मात्पवित्रयोर्मार्जयन्ते - १.८.१.[४३]

अथ ते पवित्रे प्रस्तरेऽपिसृजति । यजमानो वै प्रस्तरः प्राणोदानौ पवित्रे यजमाने तत्प्राणोदानौ दधाति तस्मात्ते पवित्रे प्रस्तरेऽपिसृजति - १.८.१.[४४]

## ##१.८.२ अथानुयाजकर्म

ते वा एते उल्मुके उदूहन्ति । अनुयाजेभ्यो यातयामेव वा एतदग्निर्भवति देवेभ्यो हि यज्ञमूहिवान्भवत्ययातयाम्न्यनुयाजांस्तनवामहा इति तस्माद्वा एते उल्मुके उदूहन्ति - १.८.२.[१]

ते पुनरनुसंस्पर्शयन्ति । पुनरेवैतदग्निमाप्याययन्त्ययातयामानं कुर्वन्त्ययातयाम्नि यदत उर्ध्वमसंस्थितं यज्ञस्य तत्तनवामा इति तस्मात्पुनरनुसंस्पर्शयन्ति - १.८.२.[२]

अथ समिधमभ्यादधाति । समिद्ध एवैनमेतत्समिद्धे यदत ऊर्ध्वमसंस्थितं यज्ञस्य तत्तनवामहा इति तस्मात्समिधमभ्यादधाति - १.८.२.[[३]]

तां होतानुमन्त्रयते । एषा ते अग्ने समित्तया वर्धस्व चा च प्यायस्व वर्धिषीमहि च वयमा च प्यासिषीमहीति तद्यथैवादः समिध्यमानायान्वाहैवमेवैतदन्वाह तदेतद्धोतुः कर्म स यदि मन्येत न होता वेदेत्यपि स्वयमेव यजमानोऽनुमन्त्रयेत - १.८.२.[४]



अथ सम्मार्ष्टि । युनक्त्येवैनमेतद्युक्तो यदत ऊर्ध्वमसंस्थितं यज्ञस्य तद्वहादिति तस्मात्सम्मार्ष्टि सकृत्सकृत्सम्मार्ष्टि त्रिस्त्रिर्वा अग्रे देवेभ्यः सम्मृजन्ति नेत्तथा करवाम यथा देवेभ्य इति तस्मात्सकृत्सकृत्सम्मार्ष्ट्यजामितायै जामि ह कुर्याद्यत्त्रिः पूर्वं त्रिरपरं तस्मात्सकृत्सकृत्सम्मार्ष्टि - १.८.२.[५]

स सम्मार्ष्टि । अग्ने वाजजिद्वाजं त्वा ससृवांसं वाजजितं सम्माज्मीर्ति सरिष्यन्तमिति वा अग्र आह सरिष्यन्निव हि तर्हि भवत्यथात्र ससृवांसमिति ससृवेव ह्यत्र भवति तस्मादाह ससृवांसमिति - १.८.२.[६]

अथानुयाजान्यजति । या वा एतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायते सर्वा वै तत्ता इष्टा भवन्ति तद्यत्तासु सर्वास्विष्टास्वथैतत्पश्चेवानुयजति तस्मादनुयाजा

नाम - १.८.२.[७]

अथ यदनुयाजान्यजति । छन्दांसि वा अनुयाजाः पशवो वै देवानां छन्दांसि तद्यथेदं पशवो युक्ता मनुष्येभ्यो वहन्त्येवं छन्दांसि युक्तानि देवेभ्यो यज्ञं वहन्ति तद्यत्र छन्दांसि देवान्त्समतर्पयन्नथ छन्दांसि देवाः समतर्पयंस्तदतस्तत्प्रागभूद्यच्छन्दांसि युक्तानि देवेभ्यो यज्ञमवाक्षुर्यदेनान्त्समतीतृपन् - १.८.२.[८]

अथ यदनुयाजान्यजति । छन्दांसि वा अनुयाजाश्छन्दांस्येवैतत्संतर्पयति तस्मादनुयाजान्यजति तस्माद्येन वाहनेन धावयेत्तद्विमुच्य ब्रूयात्पाययतैनत्सुहितं कुरुतेत्येष उ वाहनस्यापह्नवः - १.८.२.[९]

स वै खलु बर्हिः प्रथमं यजति । तद्वै कनिष्ठं छन्दः सद्गायत्री प्रथमा छन्दसां युज्यते तदु तद्वीर्येणैव यच्छ्येनो भूत्वा दिवः सोममाहरत्तदयथायथं मन्यन्ते यत्कनिष्ठं छन्दः सद्गायत्री प्रथमाच्छन्दसां युज्यतेऽथात्र यथायथं देवाश्छन्दांस्यकल्पयन्ननुयाजेषु नेत्पापवस्यसमसदिति - १.८.२.[१०]



स वै खलु बर्हिः प्रथमं यजति । अयं वै लोको बर्हिरोषधयो बर्हिरस्मिन्नेवैतल्लोक ओषधीर्दधाति ता इमा अस्मिंलोक ओषधयः प्रतिष्ठितास्तदिदं सर्वं जगदस्यां तेनेयं जगती तज्जगतीं प्रथमामकुर्वन् - १.८.२.[११]

अथ नराशंसं द्वितीयं यजति । अन्तरिक्षं वै नराशंसः प्रजा वै नरस्ता इमा अन्तरिक्षमनु वावद्यमानाः प्रजाश्चरन्ति यद्वै वदति शंसतीति वै तदाहुस्तस्मादन्तरिक्षं नराशंसोऽन्तरिक्षमु वै त्रिष्टुप्तत्त्रिष्टुभं द्वितीयामकुर्वन् - १.८.२.[१२]

अथाग्निरुत्तमः । गायत्री वा अग्निस्तद्गायत्रीमुत्तमामकुर्वन्नेवं यथायथेन क्लृप्तेन छन्दांसि प्रत्यतिष्ठंस्तस्मादिदमपापवस्यसम् - १.८.२.[१३]

देवान्यजेत्येवाध्वर्युराह । देवंदेवमिति सर्वेषु होता देवानां वै देवाः सन्ति छन्दांस्येव पशवो ह्येषां गृहा हि पशवः प्रतिष्ठो हि गृहाश्छन्दांसि वा अनुयाजास्तस्माद्देवान्यजेत्येवाध्वर्युराह देवं देवमिति सर्वेषु होता - १.८.२.[१४]

वसुवने वसुधेयस्येति । देवताया एव वषड्क्रियते देवतायै हूयते न वा अत्र देवतास्त्यनुयाजेषु देवं बर्हिरिति तत्र नाग्निर्नेन्द्रो न सोमो देवो नराशंस इति ऋत एकं चन यो वा अत्राग्निर्गायत्री स निदानेन - १.८.२.[१५]

अथ यद्वसुवने वसुधेयस्येति यजति । अग्निर्वै वसुवनिरिन्द्रो वसुधेयोऽस्ति वै छन्दसां देवतेन्द्राग्नी एवैवमु हैतद्देवताया एव वषड्क्रियते देवतायै हूयते - १.८.२.[१६]

अथोत्तममनुयाजमिष्ट्वा समानीय जुहोति । प्रयाजानुयाजा वा एते तद्यथैवादः प्रयाजेषु यजमानाय द्विषन्तं भ्रातृव्यं बलिं हारयत्यत्त्र आद्यं बलिं हारयत्येवमेवैतदनुयाजेषु बलिं हारयति - १.८.२.[१७]



##१.८.३ सूक्तवाक-शंयुवाक-कर्मारम्भः

स वै स्रुचौ व्यूहति । अग्नीषोमयोरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामीति जुहूं प्राचीं दक्षिणेन पाणिनाग्नीषोमौ तमपनुदतां यो स्मान्द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामीत्युपभृतं प्रतीचीं सव्येन पाणिना यदि स्वयं यजमानः - १.८.३.[१]

यद्यु अध्वर्युः । अग्नीषोमयोरुज्जितिमनूज्जयत्वयं यजमानो वाजस्यैनम्प्रसवेन प्रोहाम्यग्नीषोमौ तमपनुदतां यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि वाजस्यैनं प्रसवेनापोहामीति पौर्णमास्यामग्नीषोमीयं हि पौर्णमासं हविर्भवति - १.८.३.[२]

अथामावास्यायाम् । इन्द्राग्न्योरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामीन्द्राग्नी तमपनुदतां योऽस्मान्द्वेष्टि यं च वयं द्विष्मो वाजस्यैनम्प्रसवेनापोहामीति यदि स्वयं यजमानः - १.८.३.[३]

यद्यु अध्वर्युः । इन्द्राग्न्योरुज्जितिमनूज्जयत्वयं यजमानो वाजस्यैनं प्रसवेन प्रोहामीन्द्राग्नी तमपनुदतां यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि वाजस्यैनं प्रसवेनापोहामीत्यमावास्यायामैन्द्राग्नं ह्यामावास्यं हविर्भवत्येवं यथादेवतं व्यूहति तद्यदेवं व्यूहति - १.८.३.[४]

यजमान एव जुहूमनु । योऽस्मा अरातीयति स उपभृतमनु प्राञ्चमेवैतद्यजमानमुदूहत्यपाञ्चं तमपोहति योऽस्मा अरातीयत्यत्तैव जुहूमन्वाद्य उपभृतमनु प्राञ्चमेवैतदत्तारमुदूहत्यपाञ्चमाद्यमपोहति - १.८.३.[५]

तद्वा एतत् । समान एव कर्मन्व्याक्रियते तस्मादु समानादेव पुरुषादत्ता चाद्यश्च जायते इदं हि चतुर्थे पुरुषे तृतीये संगच्छामह इति विदेवं दीव्यमाना जात्या आसत एतस्मादु तत् - १.८.३.[६]



अथ जुह्वा परिधीन्त्समनक्ति । यया देवेभ्योऽहौषीद्यया यज्ञं समतिष्ठपत्तयैवैतत्परिधीन्प्रीणाति तस्माज्जुह्वा परिधीन्त्समनक्ति - १.८.३.[७]

स समनक्ति वसुभ्यस्त्वा रुद्रेभ्यस्त्वादित्येभ्यस्त्वेत्येते वै त्रया देवा यद्वसवो रुद्रा आदित्या एतेभ्यस्त्वेत्येवैतदाह - १.८.३.[८]

अथ परिधिमभिपद्याश्रावयति । परिधिभ्यो ह्येतदाश्रावयति यज्ञो वा आश्रावणं यज्ञेनैवैतत्प्रत्यक्षं परिधीन्प्रीणाति तस्मात्परिधिमभिपद्याश्रावयति - १.८.३.[९]

स आश्राव्याह । इषिता दैव्या होतार इति दैव्या वा एते होतारो यत्परिधयोऽग्नयो हीष्टा दैव्या होतार इत्येवैतदाह यदाहेषिता दैव्या होतार इति भद्रवाच्यायेति स्वयं वा एतस्मै देवा युक्ता भवन्ति यत्साधु वदेयुर्यत्साधु कुर्युस्तस्मादाह भद्रवाच्यायेति प्रेषितो मानुषः सूक्तवाकायेति तदिमं मानुषं होतारं सूक्तवाकाय प्रसौति - १.८.३.[१०]

अथ प्रस्तरमादत्ते । यजमानो वै प्रस्तरस्तद्यत्रास्य यज्ञोऽगंस्तदेवैतद्यजमानं स्वगाकरोति देवलोकं वा अस्य यज्ञोऽगन्देवलोकमेवैतद्यजमानमपिनयति - १.८.३.[११]

स यदि वृष्टिकामः स्यात् । एतेनैवाददीत संजानाथां द्यावापृथिवी इति यदा वै द्यावापृथिवी संजानाथे अथ वर्षति तस्मादाह संजानाथां द्यावापृथिवी इति मित्रावरुणौ त्वा वृष्ट्यावतामिति तद्यो वर्षस्येष्टे स त्वा वृष्ट्यावत्वित्येवैतदाहायं वै वर्षस्येष्टे योऽयं पवते सोऽयमेक इवैव पवते सोऽयं पुरुषेऽन्तः प्रविष्टः प्राङ्च प्रत्यङ्च ताविमौ प्राणोदानौ प्राणोदानौ वै मित्रावरुणौ तद्य एव वर्षस्येष्टे स त्वा वृष्ट्यावत्वित्येवैतदाह तमेतेनैवाददीत यदा ह्येव कदा च वृष्टिः समिव तमनक्त्याहुतिमेवैतत्करोत्याहुतिर्भूत्वा देवलोकं गच्छादिति - १.८.३.[१२]

स वा अग्रं जुह्वामनक्ति । मध्यमुपभृति मूलं ध्रुवायामग्रमिव हि जुहूर्मध्यमिवोपभृन्मूलमिव ध्रुवा - १.८.३.[१३]



सोऽनक्ति । व्यन्तु वयोऽक्तं रिहाणा इति वय एवैनमेतद्भूतमस्मान्मनुष्यलोकाद्देवलोकमभ्युत्पातयति तन्नीचैरिव हरति द्रुयं तद्यस्मान्नीचैरिव हरेद्यजमानो वै प्रस्तरोऽस्या एवैनमेतत्प्रतिष्ठायै नोद्धन्तीहो एव वृष्टिं नियच्छति - १.८.३.[१४]

स हरति । मरुतां पृषतीर्गच्छेति देवलोकं गच्छेत्येवैतदाह यदाह मरुताम्पृषतीर्गच्छेति वशा पृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावहेतीयं वै वशा पृश्निर्यदिदमस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं वशा पृश्निरियम्भूत्वा दिवं गच्छेत्येवैतदाह ततो नो वृष्टिमावहेति वृष्टाद्वा ऊर्ग्रसः सुभूतं जायते तस्मादाह ततो नो वृष्टिमावहेति - १.८.३.[१५]

अथैकं तृणमपगृह्णाति । यजमानो वै प्रस्तरः स यत्कृत्स्नम्प्रस्तरमनुप्रहरेत्क्षिप्रे ह यजमानोऽमुं लोकमियात्तथो ह यजमानो ज्योग्जीवति यावद्ध्वेवास्येह मानुषमायुस्तस्मा एवैतदपगृह्णाति - १.८.३.[१६]

तन्मुहूर्तं धारयित्वानुप्रहरति । तद्यत्रास्येतर आत्मागंस्तदेवास्यैतद्गमयत्यथ यन्नानुप्रहरेदन्तरियाद्ध यजमानं लोकात्तथो ह यजमानं लोकान्नान्तरेति - १.८.३.[१७]

तं प्राञ्चमनुसमस्यति । प्राची हि देवानां दिगथो उदञ्चमुदीची हि मनुष्याणां दिक्तमङ्गुलिभिरेव योयुप्येरन्न काष्ठैर्दारुभिर्वा इतरं शवं व्युषन्ति नेत्तथा करवाम यथेतरं शवमिति तस्मादङ्गुलिभिरेव योयुप्येरन्न काष्ठैर्यदा होता सूक्तवाकमाह - १.८.३.[१८]

अथाग्नीदाहानुप्रहरेति । तद्यत्रास्येतर आत्मागंस्तदेवास्यैतद्गमयेत्येवैतदाह तूष्णीमेवानुप्रहृत्य चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहीत्यात्मानमुपस्पृशति तेनो अप्यात्मानं नानुप्रवृणक्ति - १.८.३.[१९]

अथाह संवदस्वेति । संवादयैनं देवैरित्येवैतदाहागानग्नीदित्यगन्खल्वित्येवैतदाहागन्नितीतरः प्रत्याह श्रावयेति तं वै देवैः श्रावय तमनुबोधयेत्येवैतदाह श्रौषडिति विदुर्वा एनमनु वा एनमभुत्सतेत्येवैतदाहैवमध्वर्युश्चाग्नीच्च देवलोकं यजमानमपिनयतः - १.८.३.[२०]

अथाह स्वगा दैव्या होतृभ्य इति दैव्या वा एते होतारो यत्परिधयोऽग्नयो हि तानेवैतत्स्वगाकरोति तस्मादाह स्वगा दैव्या होतृभ्य इति स्वस्तिर्मानुषेभ्य इति तदस्मै मानुषाय होत्रे ह्वलामाशास्ते - १.८.३[.२१]

अथ परिधीननुप्रहरति स मध्यममेवाग्रे परिधिमनुप्रहरति यम्परिधिं पर्यधत्था अग्ने देव पणिभिर्गुह्यमानः तं त एतमनु जोषं भराम्येष नेत्त्वदपचेतयाता इत्यग्नेः प्रियं पाथोऽपीतमितीतरावनु समस्यति - १.८.३.[२२]

अथ जुहूं चोपभृतं च सम्प्रगृह्णाति । अदो हैवाहुतिं करोति यदनक्त्याहुतिर्भूत्वा देवलोकं गच्छादिति तस्माज्जुहूं चोपभृतं च सम्प्रगृह्णाति - १.८.३.[२३]

स वै विश्वेभ्यो देवेभ्यः सम्प्रगृह्णाति । यद्वा अनादिष्टं देवतायै हविर्गृह्यते सर्वा वै तस्मिन्देवता अपित्विन्यो मन्यन्ते न वा एतत्कस्यै चन देवतायै हविर्गृह्णन्नादिशति यदाज्यं तस्माद्विश्वेभ्यो देवेभ्यः सम्प्रगृह्णात्येतदु वैश्वदेवं हविर्यज्ञे - १.८.३.[२४]

स सम्प्रगृह्णाति । संस्रवभागा स्थेषा बृहन्त इति संस्रवो ह्येव खलु परिशिष्टो भवति प्रस्तरेष्ठाः परिधेयाश्च देवा इति प्रस्तरश्च हि परिधयश्चानुप्रहृता भवन्तीमां वाचमभि विश्वे गृणन्त इत्येतदु वैश्वदेवं करोत्यासद्यास्मिन्बर्हिषि मादयध्वं स्वाहा वाडिति तद्यथा वषट्कृतं हुतमेवमस्यैतद्भवति - १.८.३.[२५]



स यस्यानसो हविर्गृह्णन्ति । अनसस्तस्य धुरि विमुञ्चन्ति यतो युनजाम ततो विमुञ्चामेति यतो ह्येव युञ्जन्ति ततो विमुञ्चन्ति यस्यो पात्र्यै स्फ्ये तस्य यतो
युनजाम ततो विमुञ्चामेति यतो ह्येवं युञ्जन्ति ततो विमुञ्चन्ति - १.८.३.[२६]

युजौ ह वा एते यज्ञस्य यत्स्रुचौ । ते एतद्युङ्क्ते यत्प्रचरति स यं निधायावद्येद्यथा वाहनमवार्च्छेदेवं तत्ते एतत्स्विष्टकृति विमोचनमागच्छतस्ते तत्सादयति तद्विमुञ्चति ते एतत्पुनः प्रयुङ्क्तेऽनुयाजेषु सोऽनुयाजैश्चरित्वैतद्विमोचनमागच्छति ते तत्सादयति तद्विमुञ्चति ते एतत्पुनः प्रयुङ्क्ते यत्सम्प्रगृह्णाति तद्यां गतिमभियुङ्क्ते तां गतिं गत्वा विमुञ्चते यज्ञं वा अनु प्रजास्तस्मादयं पुरुषो युङ्क्तेऽथ विमुञ्चतेऽथ युङ्क्ते तद्यां गतिमभियुङ्क्ते तां गतिं गत्वान्ततो विमुञ्चते स सादयति घृताची स्थो धुर्यौ पातं सुम्ने स्थः सुम्ने मा धत्तमिति साध्व्यौ स्थः साधौ मा धत्तमित्येवैतदाह - १.८.३.[२७]

##१.९.१

स यत्राह । इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकायेति यदतो होतान्वाह सूक्त इव तदाह यजमानायैवैतदाशिषमाशास्ते तद्वा एतदुपरिष्टाद्यज्ञस्याशिषमाशास्ते द्वयं तद्यस्मादुपरिष्टाद्यज्ञस्याशिषमाशास्ते - १.९.१.[१]

यज्ञं वा एष जनयति । यो यजत एतेन ह्युक्ता ऋत्विजस्तन्वते तं जनयन्त्यथाशिषमाशास्ते तामस्मै यज्ञ आशिषं संनमयति यामाशिषमाशास्ते योमाजीजनतेति तस्माद्वा उपरिष्टाद्यज्ञस्याशिषमाशास्ते - १.९.१.[२]

देवान्वा एष प्रीणाति । यो यजत एतेन यज्ञेनर्ग्भिरिव त्वद्यजुर्भिरिव त्वदाहुतिभिरिव त्वत्स देवान्प्रीत्वा तेष्वपित्वी भवति तेष्वपित्वी भूत्वाथाशिषमाशास्ते तामस्मै देवा आशिषं संनमयन्ति यामाशिषमाशास्ते यो नोऽप्रैषीदिति तस्माद्वा उपरिष्टाद्यज्ञस्याशिषमाशास्ते - १.९.१.[३]



अथ प्रतिपद्यते । इदं द्यावापृथिवी भद्रमभूदिति भद्रं ह्यभूद्यो यज्ञस्य संस्थामगन्नार्ध्म सूक्तवाकमुत नमोवाकमित्युभयं वा एतद्यज्ञ एव यत्सूक्तवाकश्च नमोवाकश्चारात्स्म यज्ञमविदाम यज्ञमित्येवैतदाहाग्ने त्वं सूक्तवागस्युपश्रुती दिवस्पृथिव्योरित्यग्निमेवैतदाह त्वं सूक्तवागस्युपश्रृण्वत्योरनयोर्द्यावापृथिव्योरित्योमन्वती तेऽस्मिन्यज्ञे यजमान द्यावापृथिवी स्तामित्यन्नवत्यौ तेऽस्मिन्यज्ञे यजमान द्यावापृथिवी स्तामित्येवैतदाह - १.९.१.[४]

शंगवी जीवदानू इति । शंगवी ते जीवदानू स्तामित्येवैतदाहात्रस्नू अप्रवेदे इति मा ह कस्माच्चन प्रत्रासीर्मो त इदं पुष्टं कश्चन प्रविदतेत्येवैतदाह - १.९.१.[५]

उरुगव्यूती अभयं कृताविति । उरुगव्यूती तेऽभये स्तामित्येवैतदाह वृष्टि द्यावा रीत्यापेति वृष्टिमत्यौ ते स्तामित्येवैतदाह - १.९.१.[६]

शम्भुवौ मयोभुवाविति । शम्भुवौ ते मयोभुवौ स्तामित्येवैतदाहोर्जस्वती च पयस्वती चेति रसवत्यौ त उपजीवनीये स्तामित्येवैतदाह - १.९.१.[७]

सूपचरणा च स्वधिचरणा चेति । सूपचरणा ह तेऽसावस्तु यामधस्तादुपचरसि स्वधिचरणो त इयमस्तु यामुपरिष्टादधिचरसीत्येवैतदाह तयोराविदीति तयोरनो मन्यमानयोरित्येवैतदाह - १.९.१.[८]

अग्निरिदं हविः अजुषतावीवृधत महो ज्यायोऽकृतेति तदाग्नेयमाज्यभागमाह सोम इदं हविरजुषतावीवृधत महो ज्यायोऽकृतेति तत्सौम्यमाज्यभागमाहाग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽकृतेति तद्य एष उभयत्राच्युत आग्नेयः पुरोडाशो भवति तमाह - १.९.१.[९]

अथ यथादेवतम् । देवा आज्यपा आज्यमजुषन्तावीवृधन्त महो ज्यायोऽक्रतेति तत्प्रयाजानुयाजानाह प्रयाजानुयाजा वै देवा आज्यपा अग्निर्होत्रेणेदं हविरजुषतावीवृधत महो ज्यायोऽकृतेति तदग्निं होत्रेणाहाजुषतेत्येवं या इष्टा देवता भवन्ति ताः सम्पश्यत्यसौ हविरजुषतासौ हविरजुषतेति तद्यज्ञस्यैवैतत्समृद्धिमाशास्ते यद्धि देवा हविर्जुषन्ते तेन हि महज्जयति तस्मादाहाजुषतेत्यवीवृधतेति यद्वै देवा हविर्जोषयन्ते तदपि गिरिमात्रं कुर्वते तस्मादाहावीवृधतेति - १.९.१.[१०]



महो ज्यायोऽक्रतेति । यज्ञो वै देवानां महस्तं ह्येतज्ज्यायांसमिव कुर्वते तस्मादाह महो ज्यायोऽक्रतेति - १.९.१.[११]

अस्यामृधेद्धोत्रायां देवंगमायामिति । अस्यां राध्नोतु होत्रायां देवंगमायामित्येवैतदाहाशास्तेऽयं यजमानोऽसाविति नाम गृह्णाति तदेनम्प्रत्यक्षमाशिषा सम्पादयति - १.९.१.[१२]

दीर्घायुत्वमाशास्त इति । सा यामुत्रोत्तरा देवयज्या तदिह प्रत्यक्षं दीर्घायुत्वम् - १.९.१.[१३]

सुप्रजास्त्वमाशास्त इति । तद्यदमुत्र भूयो हविष्करणं तदिह प्रत्यक्षं सुप्रजास्त्वं प्रशासनं स कुर्याद्य एवं कुर्यादुत्तरां देवयज्यामाशास्त इति त्वेव ब्रूयात्तदेव जीवातुं तत्प्रजां तत्पशून् - १.९.१.[१४]

भूयो हविष्करणमाशास्त इति तद्वेव तत्सजातवनस्यामाशास्त इति प्राणा वै सजाताः प्राणैर्हि सह जायते तत्प्राणानाशास्ते - १.९.१.[१५]

दिव्यं धामाशास्त इति । देवलोके मेऽप्यसदिति वै यजते यो यजते तद्देवलोक एवैनमेतदपित्विनं करोति यदनेन हविषाशास्ते तदश्यात्तदृध्यादिति यदनेन हविषाशास्ते तदस्मै सर्वं समृध्यतामित्येवैतदाह - १.९.१.[१६]

ता वा एताः । पञ्चाशिषः करोति तिस्र इडायां ता अष्टावष्टाक्षरा वै गायत्री वीर्यं गायत्री वीर्यमेवैतदाशिषोऽभिसंपादयति - १.९.१.[१७]



नातो भूयसीः कुर्यात् । अतिरिक्तं ह कुर्याद्यदतो भूयसीः कुर्याद्यद्वै यज्ञस्यातिरिक्तं द्विषन्तं हास्य तद्भ्रातृव्यमभ्यतिरिच्यते तस्मान्नातो भूयसीः
कुर्यात् - १.९.१.[१८]

अपीद्वै कनीयसीः सप्त । तदस्मै देवा रासन्तामिति तदस्मै देवा अनुमन्यन्तामित्येवैतदाह तदग्निर्देवो देवेभ्यो वनुतां वयमग्नेः परिमानुषा इति तदग्निर्देवो देवेभ्यो वनुतां वयमग्नेरध्यस्मा एतद्वनवामहा इत्येवैतदाह - १.९.१.[१९]

इष्टं च वित्तं चेति । ऐषिषुरिव वा एतद्यज्ञं तमविदंस्तस्मादाहेष्टं च वित्तं चेत्युभे चैनं द्यावापृथिवी अंहसस्पातामित्युभे चैनं द्यावापृथिवी आर्त्तेर्गोपायतामित्येवैतदाह - १.९.१.[२०]

तदु हैक आहुः । उभे च मेति तथा होताशिष आत्मानं नान्तरेतीति तदु तथा न ब्रूयाद्यजमानस्य वै यज्ञ आशीः किं नु तत्रर्त्विजां यां वै कां च यज्ञ ऋत्विज आशिषमाशासते यजमानस्यैव सा न ह स एतां क्व चनाशिषं प्रतिष्ठापयति य आहोभे च मेति तस्मादु ब्रूयादुभे चैनमित्येव - १.९.१.[२१]

इह गतिर्वामस्येति । तद्यदेव यज्ञस्य साधु तदेवास्मिन्नेतद्दधाति तस्मादाहेह गतिर्वामस्येति - १.९.१.[२२]

इदं च नमो देवेभ्य इति तद्यज्ञस्यैवैतत्संस्थां गत्वा नमो देवेभ्यः करोति तस्मादाहेदं च नमो देवेभ्य इति - १.९.१.[२३]

अथ शम्योराह । शम्युर्ह वै बार्हस्पत्योऽञ्जसा यज्ञस्य संस्थां विदांचकार स देवलोकमपीयाय तत्तदन्तर्हितमिव मनुष्येभ्य आस - १.९.१.[२४]



तद्वा ऋषीणामनुश्रुतमास । शम्युर्ह वै बार्हस्पत्योऽञ्जसा यज्ञस्य संस्थां विदांचकार स देवलोकमपीयायेति ते तामेव यज्ञस्य संस्थामुपायन्यां शम्युर्बार्हस्पत्योऽवेद्यच्छम्योरब्रुवंस्ताम्वेवैष एतद्यज्ञस्य संस्थामुपैति यां शम्युर्बार्हस्पत्योऽवेद्यच्छम्योराह तस्माद्वै शम्योराह - १.९.१.[२५]

स प्रतिपद्यते । तच्छंयोरावृणीमह इति तां यज्ञस्य संस्थामावृणीमहे यां शंयुर्बार्हस्पत्योऽवेदित्येवैतदाह - १.९.१.[२६]

गातुं यज्ञाय गातुं यज्ञपतय इति । गातुं ह्येष यज्ञायेच्छति गातुं यज्ञपतये यो यज्ञस्य संस्थां दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्य इति स्वस्ति नो देवत्रास्तु स्वस्ति मनुष्यत्रेत्येवैतदाहोर्ध्वं जिगातु भेषजमित्यूर्ध्वं नोऽयं यज्ञो देवलोकं जयत्वित्येवैतदाह - १.९.१.[२७]

शं नो अस्तु द्विपदे शं चतुष्पद इति । एतावद्वा इदं सर्वं यावद्द्विपाच्चैव चतुष्पाच्च तस्मा एवैतद्यज्ञस्य संस्थां गत्वा शं करोति तस्मादाह शं नो अस्तु द्विपदे शं चतुष्पद इति - १.९.१.[२८]

अथानयेत्युपस्पृशति । अमानुष इव वा एतद्भवति यदार्त्विज्ये प्रवृत इयं वै पृथिवी प्रतिष्ठा तदस्यामेवैतत्प्रतिष्ठायां प्रतिष्ठति तदु खलु पुनर्मानुषो भवति तस्मादनयेत्युपस्पृशति - १.९.१.[२९]

##१.९.२ अथ पत्नीसंयाजः

ते वै पत्नीः संयाजयिष्यन्तः प्रतिपरायन्ति । जुहूं च स्रुवं चाध्वर्युरादत्ते वेदं होताज्यविलापनीमग्नीत् - १.९.२.[१]



तद्धैकेषामध्वर्युः । पूर्वेणाहवनीयं पर्येति तदु तथा न कुर्याद्बहिर्धा ह यज्ञात्स्याद्यत्तेनेयात् - १.९.२.[२]

जघनेनो हैव पत्नीम् । एकेषामध्वर्युरेति नो एव तथा कुर्यात्पूर्वार्धो वै यज्ञस्याध्वर्युर्जघनार्धः पत्नी यथा भसत्तः शिरः प्रतिदध्यादेवं तद्बहिर्धा हैव यज्ञात्स्याद्यत्तेनेयात् - १.९.२.[३]

अन्तरेणो हैव पत्नीम् । एकेषामध्वर्युरेति नो एव तथा कुर्यादन्तरियाद्ध यज्ञात्पत्नीं यत्तेनेयात्तस्मादु पूर्वेणैव गार्हपत्यमन्तरेणाहवनीयं चैति तथाह न बहिर्धा यज्ञाद्भवति यथो एवादः प्रचरन्नन्तरेण संचरति स उ एवास्यैष संचरो भवति - १.९.२.[४]

अथ पत्नीः संयाजयन्ति । यज्ञाद्वै प्रजाः प्रजायन्ते यज्ञात्प्रजायमाना मिथुनात्प्रजायन्ते मिथुनात्प्रजायमाना अन्ततो यज्ञस्य प्रजायन्ते तदेना एतदन्ततो यज्ञस्य

मिथुनात्प्रजननात्प्रजनयति तस्मान्मिथुनात्प्रजननादन्ततो यज्ञस्येमाः प्रजाः प्रजायन्ते तस्मात्पत्नीः संयाजयन्ति - १.९.२.[५]

चतस्रो देवता यजति । चतस्रो वै मिथुनं द्वन्द्वं वै मिथुनं द्वे द्वे हि खलु भवतो मिथुनमेवैतत्प्रजनने क्रियते तस्माच्चतस्रो देवता यजति - १.९.२.[६]

ता वा आज्यहविषो भवन्ति । रेतो वा आज्यं रेत एवैतत्सिञ्चति तस्मादाज्यहविषो भवन्ति - १.९.२.[७]

तेनोपांशु चरन्ति । तिर इव वै मिथुनेन चर्यते तिर इवैतद्यदुपांशु तस्मादुपांशु चरन्ति - १.९.२.[८]

अथ सोमं यजति । रेतो वै सोमो रेत एवैतत्सिञ्चति तस्मात्सोमं यजति - १.९.२.[९]



अथ त्वष्टारं यजति । त्वष्टा वै सिक्तं रेतो विकरोति तस्मात्त्वष्टारं यजति - १.९.२.[१०]

अथ देवानां पत्नीर्यजति । पत्नीषु वै योनौ रेतः प्रतिष्ठितं तत्ततः प्रजायते तत्पत्नीष्वैवैतद्योनौ रेतः सिक्तं प्रतिष्ठापयति तत्ततः प्रजायते तस्माद्देवानां पत्नीर्यजति - १.९.२.[११]

स यत्र देवानां पत्नीर्यजति । तत्पुरस्तात्तिरः करोत्युप ह वै तावद्देवता आसते यावन्न समिष्टयजुर्जुह्वतीदं नु नो जुह्वत्विति ताभ्य एवैतत्तिरः करोति तस्मादिमा मानुष्य स्त्रियस्तिर इवैव पुंसो जिघत्सन्ति या इव तु ता इवेति ह स्माह याज्ञवल्क्यः - १.९.२.[१२]

अथाग्निं गृहपतिं यजति । अयं वा अग्निर्लोक इममेवैतल्लोकमिमाः प्रजा अभिप्रजनयति ता इमं लोकमिमाः प्रजा अभिप्रजायन्ते तस्मादग्निं गृहपतिं यजति - १.९.२.[१३]

तदिडान्तं भवति । न ह्यत्र परिधयो भवन्ति न प्रस्तरो यत्र वा अदः प्रस्तरेण यजमानं स्वगाकरोति पतिं वा अनु जाया तदेवास्यापि पत्नी स्वगाकृता भवतीयसितं ह कुर्याद्यत्प्रस्तरस्य रूपं कुर्यात्तस्मादिडान्तमेव स्यादुतो प्रस्तरस्यैव रूपं क्रियते - १.९.२.[१४]

स यदि प्रस्तरस्य रूपं कुर्यात् । यथैवादः प्रस्तरेण यजमानं स्वगाकरोत्येवमेवैतत्पत्नीं स्वगाकरोति - १.९.२.[१५]

स यदि प्रस्तरस्य रूपं कुर्यात् । वेदस्यैकं तृणमाच्छिद्याग्रं जुह्वामनक्ति मध्यं स्रुवे बुध्नं स्थाल्याम् - १.९.२.[१६]

अथाग्नीदाहानुप्रहरेति । तूष्णीमेवानुप्रहृत्य चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहीत्यात्मानमुपस्पृशाते तेनो अप्यात्मानं नानुप्रवृणक्ति - १.९.२.[१७]



अथाह संवदस्वेति । अगानग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीति - १.९.२.[१८]

अथ जुहूं च स्रुवं च सम्प्रगृह्णाति । अदो हैवाहुतिं करोति यदनक्त्याहुतिर्भूत्वा देवलोकं गच्छादिति तस्माज्जुहूं च स्रुवं च सम्प्रगृह्णाति - १.९.२.[१९]

स वा अग्नये सम्प्रगृह्णाति । अग्नेऽदब्धायोऽशीतमेत्यमृतो ह्यग्निस्तस्मादाहादब्धायवित्यशीतमेत्यशिष्ठो ह्यग्निस्तस्मादाहाशीतमेति पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्या इति सर्वाभ्यो मार्त्तिभ्यो गोपायेत्येवैतदाहाविषं नः पितुं कृण्वित्यन्नं वै पितुरनमीवं न इदमकिल्बिषमन्नं कुर्वित्येवैतदाह सुषदा योनावित्यात्मन्येतदाह स्वाहा वाडिति तद्यथा वषट्कृतं हुतमेवमस्यैतद्भवति - १.९.२.[२०]

अथ वेदं पत्नी विस्रंसयति । योषा वै वेदिर्वृषा वेदो मिथुनाय वै वेदः क्रियतेऽथ यदेनेन यज्ञ उपालभते मिथुनमेवैतत्प्रजननं क्रियते - १.९.२.[२१]

अथ यत्पत्नी विस्रंसयति । योषा वै पत्नी वृषा वेदो मिथुनमेवैतत्प्रजननं क्रियते तस्माद्वेदं पत्नी विस्रंसयति - १.९.२.[२२]

सा विस्रंसयति । वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूया इति यदि यजुषा चिकीर्षेदेतेनैव कुर्यात् - १.९.२.[२३]

तमा वेदेः संस्तृणाति । योषा वै वेदिर्वृषा वेदः पश्चाद्वै परीत्य वृषा योषामधिद्रवति पश्चादेवैनामेतत्परीत्य वृष्णा वेदेनाधिद्रावयति तस्मादावेदेः संस्तृणाति - १.९.२.[२४]

अथ समिष्टयजुर्जुहोति । प्राङ्ङ् यज्ञोऽनुसंतिष्ठाता इत्यथ यद्धुत्वा समिष्टयजुः पत्नीः संयाजयेत्प्रत्यङ्ङु हैवास्यैष यज्ञः संतिष्ठेत तस्माद्वा एतर्हि समिष्टयजुर्जुहोति प्राङ्ङ् यज्ञोऽनुसंतिष्ठाता इति - १.९.२.[२५]

अथ यस्मात्समिष्टयजुर्नाम । या वा एतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायते सर्वा वै तत्ताः समिष्टा भवन्ति तद्यत्तासु सर्वासु समिष्टास्वथैतज्जुहोति तस्मात्समिष्टयजुर्नाम - १.९.२.[२६]

अथ यस्मात्समिष्टयजुर्जुहोति । या वा एतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायत उप ह वै ता आसते यावन्न समिष्टयजुर्जुह्वतीदं नु नो जुह्वत्विति ता एवैतद्यथायथं व्यवसृजति यत्र यत्रासां चरणं तदनु यज्ञं वा एतदजीजनत यदेनमतत तं जनयित्वा यत्रास्य प्रतिष्ठा तत्प्रतिष्ठापयति तस्मात्समिष्टयजुर्जुहोति - १.९.२.[२७]

स जुहोति । देवा गातुविद इति गातुविदो हि देवा गातुं वित्त्वेति यज्ञं वित्त्वेत्येवैतदाह गातुमितेति तदेतेन यथायथं व्यवसृजति मनसस्पत इमं देव यज्ञं स्वाहा वाते धा इत्ययं

वै यज्ञो योऽयं पवते तदिमं यज्ञं सम्भृत्यैतस्मिन्यज्ञे प्रतिष्ठापयति यज्ञेन यज्ञं संदधाति तस्मादाह स्वाहा वाते धा इति - १.९.२.[२८]

अथ बर्हिर्जुहोति । अयं वै लोको बर्हिरोषधयो बर्हिरस्मिन्नेवैतल्लोक ओषधीर्दधति ता इमा अस्मिंलोक ओषधयः प्रतिष्ठितास्तस्माद्बर्हिर्जुहोति - १.९.२.[२९]

तां वा अतिरिक्तां जुहोति । समिष्टयजुर्ह्येवान्तो यज्ञस्य यद्ध्यूर्ध्वं समिष्टयजुषोऽतिरिक्तं तद्यदा हि समिष्टयजुर्जुहोत्यथैताभ्यो जुहोति तस्मादिमा अतिरिक्ता असम्मिता ओषधयः प्रजायन्ते - १.९.२.[३०]

स जुहोति । सं बर्हिरङ्क्तां हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः समिन्द्रो विश्वदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत्स्वाहेति - १.९.२.[३१]



अथ प्रणीता दक्षिणतः परीत्य निनयति । युक्तं वा एतद्यज्ञं यदेनं तनुते स यन्न निनयेत्पराङु हाविमुक्त एव यज्ञो यजमानं प्रक्षिणीयात्तथो ह यज्ञो यजमानं न प्रक्षिणाति तस्मात्प्रणीता दक्षिणतः परीत्य निनयति - १.९.२.[३२]

स निनयति । कस्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै
विमुञ्चति पोषायेति तत्पुष्टिमुत्तमां यजमानायानिराह स येनैव प्रणयति तेन निनयति येन ह्येव योग्यं युञ्जन्ति तेन विमुञ्चन्ति योक्रेण हि योग्यं युञ्जन्ति
योक्रेण विमुञ्चन्त्यथ फलीकरणाङ्कपालेनाधोऽधः कृष्णाजिनमुपास्यति रक्षसां भागोऽसीति - १.९.२.[३३]

देवाश्च वा असुराश्च । उभये प्राजापत्याः पस्पृधिर एतस्मिन्यज्ञे प्रजापतौ पितरि संवत्सरेऽस्माकमयं भविष्यत्यस्माकमयं भविष्यतीति - १.९.२.[३४]

ततो देवाः । सर्वं यज्ञं संवृज्याथ यत्पापिष्ठं यज्ञस्य भागधेयमासीत्तेनैनान्निरभजन्नस्ना पशोः फलीकरणैर्हविर्यज्ञात्सुनिर्भक्ता असन्नित्येष वै सुनिर्भक्तो यं भागिनं निर्भजन्त्यथ यमभागं निर्भजन्त्यैव स तावच्छंसत उत हि वशो लब्ध्वाह किं मा बभक्थेति सयमेवैभ्यो देवा भागमकल्पयंस्तमेवैभ्य एष एतद्भागं करोत्यथयदधोऽधः कृष्णाजिनमुपास्यत्यनग्नावेवैभ्य एतदन्धे तमसि प्रवेशयति तथो एवासृक्पशो रक्षसां भागोऽसीत्यनग्नावन्धे तमसि प्रवेशयति तस्मात्पशोस्तेदनीं न कुर्वन्ति रक्षसां हि स भागः - १.९.२.[३५]

##१.९.३ अथ याजमानो विष्णुक्रमः

संस्थिते यज्ञे । दक्षिणतः परीत्य पूर्णपात्रं निनयति तथा ह्युदग्भवति तस्माद्दक्षिणतः परीत्य पूर्णपात्रं निनयति देवलोके मेऽप्यसदिति वै यजते यो यजते सोऽस्यैष यज्ञो देवलोकमेवाभिप्रैति तदनूची दक्षिणा यां ददाति सैति दक्षिणामन्वारभ्य यजमानः - १.९.३.[१]



स एष देवयानो वा पितृयाणो वा पन्थाः । तदुभयतोऽग्निशिखे समोषन्त्यौ तिष्ठतः प्रति तमोषतो यः प्रत्युष्योऽत्यु तं सृजते योऽतिसृज्यः शान्तिरापस्तदेतमेवैतत्पन्थानं शमयति - १.९.३.[२]

पूर्णं निनयति सर्वं वै पूर्णं सर्वेणैवैनमेतच्छमयति संततमव्यवच्छिन्नं निनयति संततेनैवैनमेतदव्यवच्छिन्नेन शमयति - १.९.३.[[३]]

यद्वेव पूर्णपात्रं निनयति । यद्वै यज्ञस्य मिथ्या क्रियते व्यस्य तद्वृहन्ति क्षण्वन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः संदधाति - १.९.३.[४]

पूर्णं निनयति । सर्वं वै पूर्णं सर्वेणैवैतत्संदधाति संततमव्यवच्छिन्नं निनयति संततेनैवैतदव्यवच्छिन्नेन संदधाति - १.९.३.[५]

तदञ्जलिना प्रतिगृह्णाति । सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सं शिवेन त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्नो यद्विलिष्टमिति यद्विवृढं तत्संदधाति - १.९.३.[६]

अथ मुखमुपस्पृशते । द्वयं तद्यस्मान्मुखमुपस्पृशतेऽमृतं वा आपोऽमृतेनैवैतत्संस्पृशत एतदु चैवैतत्कर्मात्मन्कुरुते तस्मान्मुखमुपस्पृशते - १.९.३.[७]

अथ विष्णुक्रमान् क्रमते । देवान्वा एष प्रीणाति यो यजत एतेन यज्ञेनऽर्ग्भिरिव त्वद्यजुर्भिरिव त्वदाहुतिभिरिव त्वत्स देवान्प्रीत्वा तेष्वपित्वी भवति तेष्वपित्वी भूत्वा तानेवाभिप्रक्रामति - १.९.३.[८]

यद्वेव विष्णुक्रमान् क्रमते । यज्ञो वै विष्णुः स देवेभ्य इमां विक्रान्तिं विचक्रमे यैषामियं विक्रान्तिरिदमेव प्रथमेन पदेन पस्पाराथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेनैताम्वेवैष एतस्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते तस्माद्विष्णुक्रमान् क्रमते तद्वा इत एव पराचीनं भूयिष्ठा इव क्रमन्ते - १.९.३.[९]



तदु तत्पृथिव्यां विष्णुर्व्यक्रंस्त । गायत्रेण च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽन्तरिक्षे विष्णुर्व्यक्रंस्त त्रैष्टुभेन च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मो दिवि विष्णुर्व्यक्रंस्त जागतेन च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्येवमिमांल्लोकान्त्समारुह्याथैषा गतिरेषा प्रतिष्ठा य एष तपति तस्य ये रश्मयस्ते सुकृतोऽथ यत्परं भाः प्रजापतिर्वा स स्वर्गो वा लोकस्तदेवमिमांल्लोकान्त्समारुह्याथैतां गतिमेतां प्रतिष्ठां गच्छति परस्तात्त्वेवार्वाङ्क्मेत य इतोऽनुशासनं चिकीर्षेद्द्वयं तद्यस्मात्परस्तादर्वाङ्क्मते – १.९.३.१०
तेऽपसरणतो ह वा अग्रे देवा जयन्तोऽजयन् । दिवमेवाग्रेऽथेदमन्तरिक्षमथेतोऽनपसरणात्सपत्नाननुदन्त तथो एवैष एतदपसरणत एवाग्रे जयञ्जयति दिवमेवाग्रेऽथेदमन्तरिक्षमथेतोऽनपसरणात्सपत्नान्नुदत इयं वै पृथिवी प्रतिष्ठा तदस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति - १.९.३.[११]

तदु तद्दिवि विष्णुर्व्यक्रंस्त । जागतेन च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽन्तरिक्षे विष्णुर्व्यक्रंस्त त्रैष्टुभेन च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मः पृथिव्यां विष्णुर्व्यक्रंस्त गायत्रेण च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽस्मादन्नादस्यै प्रतिष्ठाया इत्यस्यां हीदं सर्वमन्नाद्यं प्रतिष्ठित तस्मादाहास्मादन्नादस्यै प्रतिष्ठाया इति - १.९.३.[१२]

अथ प्राङ्केक्षते । प्राची हि देवानां दिक्तस्मात्प्राङ्केक्षते - १.९.३.[१३]

स प्रेक्षते । अगन्म स्वरिति देवा वै स्वरगन्म देवानित्येवैतदाह सं ज्योतिषाभूमेति सं देवैरभूमेत्येवैतदाह - १.९.३.[१४]

अथ सूर्यमुदीक्षते । सैषा गतिरेषा प्रतिष्ठा तदेतां गतिमेतां प्रतिष्ठां गच्छति तस्मात्सूर्यमुदीक्षते - १.९.३.[१५]



स उदीक्षते । स्वयम्भूरसि श्रेष्ठो रश्मिरित्येष वै श्रेष्ठो रश्मिर्यत्सूर्यस्तस्मादाह स्वयम्भूरसि श्रेष्ठो रश्मिरिति वर्चोदा असि वर्चो मे देहीति त्वेवाहं ब्रवीमीति ह स्माह याज्ञवल्क्यस्तद्ध्येव ब्राह्मणेनैष्टव्यं यद्ब्रह्मवर्चसी स्यादित्युतो ह स्माहौपोदितेय एष वाव मह्यं गा दास्यति गोदा गा मे देहीत्येवं यं कामं कामयते सोऽस्मै कामः समृध्यते - १.९.३.[१६]

अथावर्तते । सूर्यस्यावृतमन्वावर्ते इति तदेतां गतिमेतां प्रतिष्ठां गत्वैतस्यैवावृतमन्वावर्तते - १.९.३.[१७]

अथ गार्हपत्यमुपतिष्ठते । द्वयं तद्यस्माद्गार्हपत्यमुपतिष्ठते गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तद्गृहेष्वेवैतत्प्रतिष्ठायां प्रतितिष्ठति यावद्वेवास्येह मानुषमायुस्तस्मा एवैतदुपतिष्ठते तस्माद्गार्हपत्यमुपतिष्ठते - १.९.३.[१८]

स उपतिष्ठते । अग्ने गृहपते सुगृहपतिस्त्वयाग्नेऽहं गृहपतिना भूयासं सुगृहपतिस्त्वं मयाग्ने गृहपतिना भूया इति नात्र तिरोहितमिवास्त्यस्थूरि नौ गार्हपत्यानि सन्त्वित्यनार्त्तानि नौ गार्हपत्यानि सन्त्वित्येवैतदाह शतं हिमा इति शतं वर्षाणि जीव्यासमित्येवैतदाह तदप्येतद्भूवन्नाद्रियेतापि हि भूयांसि शताद्वर्षेभ्यः पुरुषो जीवति तस्मादप्येतद्भूवन्नाद्रियेत - १.९.३.[१९]

अथावर्तते । सूर्यस्यावृतमन्वावर्त इति तदेतां गतिमेतां प्रतिष्ठां गत्वैतस्यैवावृतमन्वावर्तते - १.९.३.[२०]

अथ पुत्रस्य नाम गृह्णाति । इदं मेऽयं वीर्यं पुत्रोऽनुसंतनवदिति यदि पुत्रो न स्यादप्यात्मन एव नाम गृह्णीयात् - १.९.३.[२१]

अथाहवनीयमुपतिष्ठते । प्राङ्क्ष यज्ञोऽनुसंतिष्ठाता इति तूष्णीमुपतिष्ठते अथ व्रतं विसृजते । इदमहं य एवास्मि सोऽस्मीत्यमानुष इव वा एतद्भवति यद्व्रतमुपैति न हि तदवकल्पते यद्ब्रूयादिदमहं सत्यादनृतमुपैमीति तदु खलु पुनर्मानुषो भवति तस्मादिदमहं य एवास्मि साऽस्मीत्येवं व्रतं विसृजेत - १.९.३.[२२]



##२.१.१ अथाग्न्याधानम्। तत्र सम्भारब्राह्मणम्

स यद्वा इतश्चेतश्च सम्भरति । तत्सम्भाराणां सम्भारत्वं यत्रयत्राग्नेर्न्यक्तं ततस्ततः सम्भरति तद्यशसेव त्वदेवैनमेतत्समर्धयति पशुभिरिव त्वन्मिथुनेनेव त्वत्सम्भरन् - २.१.१.[१]

अथोल्लिखति । तद्यदेवास्यै पृथिव्या अभिष्ठितं वाभिष्ठ्यूतं वा तदेवास्या एतदुद्धन्त्यथ यज्ञियायामेव पृथिव्यामाधत्ते तस्माद्वा उल्लिखति - २.१.१.[२]

अथाद्भिरभ्युक्षति । एष वा अपां सम्भारो यदद्भिरभ्युक्षति तद्यदपः सम्भरत्यन्नं वा आपोऽन्नं हि वा आपस्तस्माद्यदेमं लोकमाप आगच्छन्त्यथेहान्नाद्यं जायते तदन्नाद्येनैवैनमेतत्समर्धयति - २.१.१.[३]

योषा वा आपः । वृषाग्निर्मिथुनेनैवैनमेतत्प्रजननेन समर्धयत्यद्भिर्वा इदं सर्वमाप्तमद्भिरेवैनमेतदाप्त्वाधत्ते तस्मादपः सम्भरति - २.१.१.[४]

अथ हिरण्यं सम्भरति । अग्निर्ह वा अपोऽभिदध्यौ मिथुन्याभिः स्यामिति ताः सम्बभूव तासु रेतः प्रासिञ्चत्तद्धिरण्यमभवत्तस्मादेतदग्निसंकाशमग्नेर्हि रेतस्तस्मादप्सु विन्दन्त्यप्सु हि प्रासिञ्चत्तस्मादेनेन न धावयति न किं चन करोत्यथ यशो देवरेतसं हि तद्यशसैवैनमेतत्समर्धयति सरेतसमेव कृत्स्नमग्निमाधत्ते तस्माद्धिरण्यं सम्भरति - २.१.१.[५]



अथोषान्त्सम्भरति । असौ ह वै द्यौरस्यै पृथिव्या एतान्पशून्प्रददौ तस्मात्पशव्यमूषरमित्याहुः पशवो ह्येवैते साक्षादेवतत्पशुभिरेवैनमेतत्समर्धयति तेऽमुत आगता अस्यां पृथिव्याम्प्रतिष्ठितास्तमनयोर्द्यावापृथिव्यो रसं मन्यन्ते तदनयोरेवैनमेतद्द्यावापृथिव्यो रसेन समर्धयति तस्मादूषान्त्सम्भरति - २.१.१.[६]

अथाखुकरीषं सम्भरति । आखवो ह वा अस्यै पृथिव्यै रसं विदुस्तस्मात्तेऽधोऽध इमां पृथिवीं चरन्तः पीविष्ठा अस्यै हि रसं विदुस्ते यत्र तेऽस्यै पृथिव्यै रसं विदुस्तत उत्किरन्ति तदस्या एवैनमेतत्पृथिव्यै रसेन समर्धयति तस्मादाखुकरीषं सम्भरति पुरीष्य इति वै तमाहुर्यः श्रियं गच्छति समानं वै पुरीषं च करीषं च तदेतस्यैवावरुद्ध्यै तस्मादाखुकरीषं सम्भरति - २.१.१.[७]

अथ शर्कराः सम्भरति । देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे सा हेयम्पृथिव्यलेलायद्यथा पुष्करपर्णमेवं तां ह स्म वातः संवहति सोपैव देवाञ्जगामोपासुरान्त्सा यत्र देवानुपजगाम - २.१.१.[८]

तद्धोचुः । हन्तेमां प्रतिष्ठां दृंहामहै तस्यां ध्रुवायामशिथिलायामग्नी आदधामहै ततोऽस्यै सपत्नान्निर्भक्ष्याम इति - २.१.१.[९]

तद्यथा शङ्कुभिश्चर्म विहन्यात् । एवमिमां प्रतिष्ठां पर्यबृंहन्त सेयं ध्रुवाशिथिला प्रतिष्ठा तस्यां ध्रुवायामशिथिलायामग्नी आदधत ततोऽस्यै सपत्नान्निरभजन् - २.१.१.[१०]

तथो एवैष एतत् । इमां प्रतिष्ठां शर्कराभिः परिबृंहते तस्यां ध्रुवायामशिथिलायामग्नी आधत्ते ततोऽस्यै सपत्नान्निर्भजति तस्माच्छर्कराः सम्भरति- २.१.१.[११]

तान्वा एतान् । पञ्च सम्भारान्त्सम्भरति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्तवः संवत्सरस्य - २.१.१.[१२]



तदाहुः । षडेवर्तवः संवत्सरस्येति न्यूनमु तर्हि मिथुनं प्रजननं क्रियते न्यूनाद्वा इमाः प्रजाः प्रजायन्ते तच्छ्वःश्रेयसमुत्तरावत्तस्मात्पञ्च भवन्ति यद्यु षडेवर्तवः संवत्सरस्येत्यग्निरेवैतेषां षष्ठस्तथो एवैतदन्यूनं भवति - २.१.१.[१३]

तदाहुः । नैवैकं चन सम्भारं सम्भरेदित्यस्यां वा एते सर्वे पृथिव्याम्भवन्ति स यदेवास्यामाधत्ते तत्सर्वान्सम्भारानाप्नोति तस्मान्नैवैकं चन सम्भारं सम्भरेदिति तदु समेव भरेद्यदहैवास्यामाधत्ते तत्सर्वान्त्सम्भारानाप्नोति यदु सम्भारैः सम्भृतैर्भवति तदु भवति तस्मादु समेव भरेत् - २.१.१.[१४]

##२.१.२

कृत्तिकास्वग्नी आदधीत । एता वा अग्निनक्षत्रं यत्कृत्तिकास्तद्वै सलोम योऽग्निनक्षत्रेऽग्नी आदधातै तस्मात्कृत्तिकास्वादधीत - २.१.२.[१]

एकं द्वे त्रीणि । चत्वारीति वा अन्यानि नक्षत्राण्यथैता एव भूयिष्ठा यत्कृत्तिकास्तद्भूमानमेवैतदुपैति तस्मात्कृत्तिकास्वादधीत - २.१.२.[२]

एता ह वै प्राच्यै दिशो न च्यवन्ते । सर्वाणि ह वा अन्यानि नक्षत्राणि प्राच्यै दिशश्च्यवन्ते तत्प्राच्यामेवास्यैतद्दिश्याहितौ भवतस्तस्मात्कृत्तिकास्वादधीत - २.१.२.[३]

अथ यस्मान्न कृत्तिकास्वादधीत । ऋक्षाणां ह वा एता अग्रे पत्न्य आसुः सप्तर्षीनु ह स्म वै पुरर्क्षा इत्याचक्षते ता मिथुनेन व्यार्ध्यन्तामी ह्युत्तरा हि सप्तर्षय उद्यन्ति पुर एता अशमिव वै तद्यो मिथुनेन व्यृद्धः स नेन्मिथुनेन व्यृध्या इति तस्मान्न कृत्तिकास्वादधीत - २.१.२.[४]



तद्वैव दधीत । अग्निर्वा एतासां मिथुनमग्निनैता मिथुनेन समृद्धास्तस्मादैव दधीत - २.१.२.[५]

रोहिण्यामग्नी आदधीत । रोहिण्यां ह वै प्रजापतिः प्रजाकामोऽग्नी आदधे स प्रजा असृजत ता अस्य प्रजाः सृष्टा एकरूपा उपस्तब्धास्तस्थू रोहिण्य इवैव तद्वै रोहिण्यै रोहिणीत्वं बहुर्हैव प्रजया पशुभिर्भवति य एवं विद्वान्रोहिण्यामाधत्ते - २.१.२.[६]

रोहिण्यामु ह वै पशवः । अग्नी आदधिरे मनुष्याणां कामं रोहेमेति ते मनुष्याणां काममरोहन्यमु हैव तत्पशवो मनुष्येषु काममरोहंस्तमु हैव पशुषु कामं रोहति य एवं विद्वान्रोहिण्यामाधत्ते - २.१.२.[७]

मृगशीर्षेऽग्नी आदधीत । एतद्वै प्रजापतेः शिरो यन्मृगशीर्षं श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्माद्योऽर्धस्य श्रेष्ठो भवत्यसावमुष्यार्धस्य शिर इत्याहुः श्रियं ह गच्छति य एवं विद्वान्मृगशीर्ष आधत्ते - २.१.२.[८]

अथ यस्मान्ना मृगशीर्ष आदधीत । प्रजापतेर्वा एतच्छरीरं यत्र वा एनं तदावेध्यंस्तदिषुणा त्रिकाण्डेनेत्याहुः स एतच्छरीरमजहाद्वास्तु वै शरीरमयज्ञियं निर्वीर्यं तस्मान्न मृगशीर्ष आदधीत - २.१.२.[९]

तद्वैव दधीत । न वा एतस्य देवस्य वास्तु नायज्ञियं न शरीरमस्ति यत्प्रजापतेस्तस्मादेव दधीत पुनर्वस्वोः पुनराधेयमादधीतेति - २.१.२.[१०]

फल्गुनीष्वग्नी आदधीत । एता वा इन्द्रनक्षत्रं यत्फल्गुन्योऽप्यस्य प्रतिनाम्न्योऽर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नामार्जुन्यो वै नामैतास्ता एतत्परोऽक्षमाचक्षते फल्गुन्य इति को ह्येतस्यार्हति गुह्यं नाम ग्रहीतुमिन्द्रो वै यजमानस्तत्स्व एवैतन्नक्षत्रेऽग्नी आधत्त इन्द्रो यज्ञस्य देवतैतेनोहास्यैतत्सेन्द्रमग्न्योधेयं भवति पूर्वयोरादधीत पुरस्तात्क्रतुर्हैवास्मे भवत्युत्तरयोरादधीत श्वःश्रेयसं हैवास्मा उत्तरावद्भवति - २.१.२.[११]

हस्तेऽग्नीऽआदधीत । य इच्छेत्प्र मे दीयेतेति तद्वा अनुष्ठ्या यद्धस्तेन प्रदीयते प्र हैवास्मै दीयते - २.१.२.[१२]

चित्रायामग्नी आदधीत । देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे त उभय एवामुं लोकं समारुरुक्षां चक्रुर्दिवमेव ततोऽसुरा रौहिणमित्यग्निं चिक्यिरेऽनेनामुं लोकं समारोक्ष्याम इति - २.१.२.[१३]

इन्द्रो ह वा ईक्षां चक्रे । इमं चेद्वा इमे चिन्वते तत एव नोऽभिभवन्तीति स ब्राह्मणो ब्रुवाण एकेष्टकां प्रबध्येयाय - २.१.२.[१४]

स होवाच । हन्ताहमिमामप्युपदधा इति तथेति तामुपाधत्त तेषामल्पकादेवाग्निरसंचित आस - २.१.२.[१५]

अथ होवाच । अन्वा अहं तां दास्ये या ममेहेति तामभिपद्या बबर्ह तस्यामावृढायामग्निर्व्यवशशादाग्नेर्व्यवशादमन्वसुरा व्यवशेदुः स ता एवेष्टका वज्रान् कृत्वा ग्रीवाः प्रचिच्छेद - २.१.२.[१६]

ते ह देवाः समेत्योचुः । चित्रं वा अभूम य इयतः सपत्नानवधिष्मेति तद्वै चित्रायै चित्रात्वं चित्रं ह भवति हन्ति सपत्नान्हन्ति द्विषन्तं भ्रातृव्यं य एवं विद्वांश्चित्रायामाधत्ते तस्मादेतत्क्षत्रिय एव नक्षत्रमुपेर्त्सेज्जिघांसतीव ह्येष सपत्नान्वीव जिगीषते - २.१.२.[१७]

नाना ह वा एतान्यग्रे क्षत्राण्यासुः । यथैवासौ सूर्य एवं तेषामेष उद्यन्नेव वीर्यं क्षत्रमादत्त तस्मादादित्यो नाम यदेषां वीर्यं क्षत्रमादत्त - २.१.२.[१८]



ते ह देवा ऊचुः । यानि वै तानि क्षत्राण्यभूवन्न वै तानि क्षत्राण्यभूवन्निति तद्वै नक्षत्राणां नक्षत्रत्वं तस्मादु सूर्यनक्षत्र एव स्यादेष ह्येषां वीर्यं क्षत्रमादत्त यद्यु नक्षत्रकामः स्यादेतद्वा अनपराद्धं नक्षत्रं यत्सूर्यः स एतेनैव पुण्याहेन यदेतेषां नक्षत्राणां कामयेत तदुपेर्त्सेत्तस्मादु सूर्यनक्षत्र एव स्यात् - २.१.२.[१९]

##२.१.३.

वसन्तो ग्रीष्मो वर्षाः । ते देवा ऋतवः शरद्धेमन्तः शिशिरस्ते पितरो य एवापूर्यतेऽर्धमासः स देवा योऽपक्षीयते स पितरोऽहरेव देवा रात्रिः पितरः पुनरह्नः पूर्वाह्णो देवा अपराह्णः पितरः  - २.१.३.[१]

ते वा एत ऋतवः । देवाः पितरः स यो हैवं विद्वान्देवाः पितर इति ह्वयत्या हास्य

देवा देवहूयं गच्छन्त्या पितरः पितृहूयमवन्ति हैनं देवा देवहूयेऽवन्ति पितरः पितृहूये य एवं विद्वान्देवाः पितर इति ह्वयति - २.१.३.[२]

स यत्रोदगावर्तते । देवेषु तर्हि भवति देवांस्तर्ह्यभिगोपायत्यथ यत्र दक्षिणावर्तते पितृषु तर्हि भवति पितॄंस्तर्ह्यभिगोपायति - २.१.३.[३]

स यत्रोदगावर्तते । तर्ह्यग्नी आदधीतापहतपाप्मानो देवा अप पाप्मानं हतेऽमृता देवा नामृतत्वस्याशास्ति सर्वमायुरेति यस्तर्ह्याधत्तेऽथ यत्र दक्षिणावर्तते यस्तर्ह्याधत्तेऽनपहतपाप्मानः पितरो न पाप्मानमपहते मर्त्याः पितरः पुरा हायुषो म्रियते यस्तर्ह्याधत्ते - २.१.३.[४]

ब्रह्मैव वसन्तः । क्षत्रं ग्रीष्मो विडेव वर्षास्तस्माद्ब्राह्मणो वसन्त आदधीत ब्रह्म हि वसन्तस्तस्मात्क्षत्रियो ग्रीष्म आदधीत क्षत्रं हि ग्रीष्मस्तस्माद्वैश्यो वर्षास्वादधीत विड्ढि वर्षाः - २.१.३.[५]



स यः कामयेत । ब्रह्मवर्चसी स्यामिति वसन्ते स आदधीत ब्रह्म वै वसन्तो ब्रह्मवर्चसी हैव भवति - २.१.३.[६]

अथ यः कामयेत । क्षत्रं श्रिया यशसा स्यामिति ग्रीष्मे स आदधीत क्षत्रं वै ग्रीष्मः क्षत्रं हैव श्रिया यशसा भवति - २.१.३.[७]

अथ यः कामयेत । बहुः प्रजया पशुभिः स्यामिति वर्षासु स आदधीत विड्वै वर्षा अन्नं विशो बहुर्हैव प्रजया पशुभिर्भवति य एवं विद्वान्वर्षास्वाधत्ते - २.१.३.[८]

ते वा एत ऋतवः । उभय एवापहतपाप्मानः सूर्य एवैषां पाप्मनोऽपहन्तोद्यन्नेवैषामुभयेषां पाप्मानमपहन्ति तस्माद्यदैवैनं कदा च यज्ञ उपनमेदथाग्नी आदधीत न श्वःश्वमुपासीत को हि मनुष्यस्य श्वो वेद - २.१.३.[९]

##२.१.४.

यदहरस्य श्वोऽग्न्याधेयं स्यात् । दिवैवाश्नीयान्मनो ह वै देवा मनुष्यस्याजानन्ति तेऽस्यैतच्छ्वोऽग्न्याधेयं विदुस्तेऽस्य विश्वे देवा गृहानागच्छन्ति तेऽस्य गृहेषूपवसन्ति स उपवसथः - २.१.४.[१]

तन्न्वेवानवक्लृप्तं यो मनुष्येष्वनश्नत्सु पूर्वोऽश्नीयादथ किमु यो देवेष्वनश्नत्सु पूर्वोऽश्नीयात्तस्मादु दिवैवाश्नीयात्तद्वपि काममेव नक्तमश्नीयान्नो ह्यनाहिताग्नेर्व्रतचर्यास्ति मानुषो ह्येवैष तावद्भवति यावदनाहिताग्निस्तस्माद्वपि काममेव नक्तमश्नीयात् - २.१.४.[२]

तद्धैकेऽजमुपबध्नन्ति । आग्नेयोऽजोऽग्नेरेव सर्वत्वायेति वदन्तस्तदु तथा न कुर्याद्यद्यस्याजः स्यादग्नीध एवैनं प्रातर्दद्यात्तेनैव तं काममाप्नोति तस्मादु तन्नाद्रियेत - २.१.४.[३]



अथ चातुष्प्राश्यमोदनं पचन्ति । छन्दांस्यनेन प्रीणीम इति यथा येन वाहनेन स्यन्त्स्यन्त्स्यात्तत्सुहितं कर्तवै ब्रूयादेवमेतदिति वदन्तस्तदु तथा न कुर्याद्यद्वा अस्य ब्राह्मणाः कुले वसन्त्यृत्विजश्चानृत्विजश्च तेनैव तं काममाप्नोति तस्मादु तन्नाद्रियेत - २.१.४.[४]

तस्य सर्पिरासेचनं कृत्वा । सर्पिरासिच्याश्वत्थीस्तिस्रः समिधो घृतेनान्वज्य समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्यादधति शमीगर्भमेतदाप्नुम इति वदन्तः स यः पुरस्तात्संवत्सरमभ्यादध्यात्स ह तं काममाप्नुयात्तस्मादु
तन्नाद्रियेत - २.१.४.[५]

तदु होवाच भाल्लवेयः । यथा वा अन्यत्करिष्यन्त्सोऽन्यत्कुर्याद्यथान्यद्वदिष्यन्त्सोऽन्यद्वदेद्यथान्येन पथैष्यन्त्सोऽन्येन

प्रतिपद्येतैवं तद्य एतं चातुष्प्राश्यमोदनं पचेदपराद्धिरेव सेति न हि तदवकल्पते यस्मिन्नग्नावृचा वा साम्ना वा यजुषा वा समिधं वाभ्यादध्यादाहुतिं वा जुहुयाद्यत्तं दक्षिणा वा हरेयुरनु वा गमयेयुर्दक्षिणा वा ह्येनं हरन्त्यन्वाहार्यपचनो भविष्यतीत्यनु वा गमयन्ति - २.१.४.[६]

अथ जाग्रति देवाः । तद्देवानेवैतदुपावर्तते स सदेवतरः श्रान्ततरस्तपस्वितरोऽग्नी आधत्ते तद्वपि काममेव स्वप्यान्नो ह्यनाहिताग्नेर्व्रतचर्यास्ति मानुषो ह्येवैष तावद्भवति यावदनाहिताग्निस्तस्माद्वपि काममेव स्वप्यात् - २.१.४.[७]

तद्धैकेऽनुदिते मथित्वा । तमुदिते प्राञ्चमुद्धरन्ति तदु तदुभे अहोरात्रे परिगृह्णीमः प्राणोदानयोर्मनसश्च वाचश्च पर्याप्त्या इति वदन्तस्तदु तथा न कुर्यादुभौ हैवास्य तथानुदित आहितौ भवतोऽनुदिते हि मथित्वा तमुदिते प्राञ्चमुद्धरन्ति स य उदित आहवनीयं मन्थेत्स ह तत्पर्याप्नुयात् - २.१.४.[८]



अहर्वै देवाः । अनपहतपाप्मानः पितरो न पाप्मानमपहते मर्त्याः पितरः पुरा हायुषो म्रियते योऽनुदिते मन्थत्यपहतपाप्मानो देवा अप पाप्मानं हतेऽमृता देवा नामृतत्वस्याशास्ति सर्वमायुरेति श्रीर्देवाः श्रियं गच्छति यशो देवा यशो ह भवति य एवं विद्वानुदिते मन्थति - २.१.४.[९]

तदाहुः । यन्नर्चा न साम्ना न यजुषाग्निराधीयतेऽथ केनाधीयत इति ब्रह्मणो हैवैष ब्रह्मणाधीयते वाग्वै ब्रह्म तस्यै वाचः सत्यमेव ब्रह्म ता वा एताः सत्यमेव व्याहृतयो भवन्ति तदस्य सत्येनैवाधीयते - २.१.४.[१०]

भूरिति वै प्रजापतिः । इमामजनयत भुव इत्यन्तरिक्षं स्वरिति दिवमेतावद्वा इदं सर्वं यावदिमे लोकाः सर्वेणैवाधीयते - २.१.४.[११]

भूरिति वै प्रजापतिः । ब्रह्माजनयत भुव इति क्षत्रं स्वरिति विशमेतावद्वा इदं सर्वं यावद्ब्रह्म क्षत्रं विड्वर्वेणैवाधियते - २.१.४.[१२]

भूरिति वै प्रजापतिः । आत्मानमजनयत भुव इति प्रजां स्वरिति पशूनेतावद्वा इदं सर्व यावदात्मा प्रजा पशवः सर्वेणैवाधीयते - २.१.४.[१३]

स वै भूर्भुव इति । एतावतैव गार्हपत्यमादधात्यथ यत्सर्वैरादध्यात्केनाहवनीयमादध्याद्द्वे अक्षरे परिशिनष्टि तेनो एतान्ययातयामानि भवन्ति तैः सर्वैः पञ्चभिराहवनीयमादधाति भूर्भुवः स्वरिति तान्यष्टावक्षराणि सम्पद्यन्तेऽष्टाक्षरा वै गायत्री गायत्रमग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसाधत्ते - २.१.४.[१४]

देवान्ह वा अग्नीऽआधास्यमानान् । तानसुररक्षसानि ररक्षुर्नाग्निर्जनिष्यते नाग्नी आधास्यध्व इति तद्यदरक्षंस्तस्माद्रक्षांसि - २.१.४.[१५]



ततो देवा एतं वज्रं ददृशुः । यदश्वं तं पुरस्तादुदश्रयंस्तस्याभयेऽनाष्ट्रे निवातेऽग्निरजायत तस्माद्यत्राग्निं मन्थिष्यन्त्स्यात्तदश्वमानेतवै ब्रूयात्स पूर्वेणोपतिष्ठते वज्रमेवैतदुच्छ्रयति तस्याभयेऽनाष्ट्रे निवातेऽग्निर्जायते - २.१.४.[१६]

स वै पूर्ववाट्स्यात् । स ह्यपरिमितं वीर्यमभिवर्धते यदि पूर्ववाहं न विन्देदपि य एव कश्चाश्वः स्याद्यद्यश्वं न विन्देदप्यनड्वानेव स्यादेष ह्येवानडुहो बन्धुः - २.१.४.[१७]

तं यत्र प्राञ्चं हरन्ति । तत्पुरस्तादश्वं नयन्ति तत्पुरस्तादेवैतन्नाष्ट्रा रक्षांस्यपघ्नन्नेत्यथाभयेनानाष्ट्रेण हरन्ति - २.१.४.[१८]

तं वै तथैव हरेयुः । यथैनमेष प्रत्यङ्ङुपाचरेदेष वै यज्ञो यदग्निः प्रत्यङ्ङ्ह्वैनं यज्ञः प्रविशति तं क्षिप्रे यज्ञ उपनमत्यथ यस्मात्पराङ् भवति पराङु हैवास्माद्यज्ञो भवति स यो हैनं तत्रानुव्याहरेत्पराङ्स्माद्यज्ञोऽभूदितीश्वरो ह यत्तथैव स्यात् - २.१.४.[१९]

एष उ वै प्राणः । तं वै तथैव हरेयुर्यथैनमेष प्रत्यङ्ङुपाचरेत्प्रत्यङ्ङ्हैवैनं प्राणः प्रविशत्यथ यस्मात्पराङ्भवति पराङु हैवास्मात्प्राणो भवति स यो हैनं तत्रानुव्याहरेत्पराङ्स्मात्प्राणोऽभूदितीश्वरो ह यत्तथैव स्यात् - २.१.४.[२०]

अयं वै यज्ञो योऽयं पवते । तं वै तथैव हरेयुर्यथैनमेष प्रत्यङ्ङुपाचरेत्प्रत्यङ्ङ्हैवैनं यज्ञः प्रविशति तं क्षिप्रे यज्ञ उपनमत्यथ यस्मात्पराङ्भवति पराङु हैवास्माद्यज्ञो भवति स यो हैनं तत्रानुव्याहरेत्पराङ्स्माद्यज्ञोऽभूदितीश्वरो ह यत्तथैव स्यात् - २.१.४.[२१]

एष उ वै प्राणः । ते वै तथैव हरेयुर्यथैनमेष प्रत्यङ्ङुपाचरेत्प्रत्यङ्ङ्हैवैनं प्राणः प्रविशत्यथ यस्मात्पराङ्भवति पराङु हैवास्मात्प्राणो भवति स यो हैनं तत्रानुव्याहरेत्पराङ्स्मात्प्राणोऽभूदितीश्वरो ह यत्तथैव स्यात्तस्मादु तथैव हरेयुः - २.१.४.[२२]



अथाश्वमाक्रमयति । तमाक्रमय्य प्राञ्चमुन्नयति तं पुनरावर्तयति तमुदञ्चं प्रमुञ्चति वीर्यं वा अश्वो नेदस्मादिदं पराग्वीर्यमसदिति तस्मात्पुनरावर्तयति - २.१.४.[२३]

तमश्वस्य पद आधत्ते । वीर्यं वा अश्वो वीर्य एवैनमेतदाधत्ते तस्मादश्वस्य पद आधत्ते - २.१.४.[२४]

स वै तूष्णीमेवाग्र उपस्पृशति । अथोद्यच्छत्यथोपस्पृशति भूर्भुवः स्वरित्येव तृतीयेनादधाति त्रयो वा इमे लोकास्तदिमानेवैतल्लोकानाप्नोत्येतन्न्वेकम् - २.१.४.[२५]

अथेदं द्वितीयम् । तूष्णीमेवाग्र उपस्पृशत्यथोद्यच्छति भूर्भुवः स्वरित्येव द्वितीयेनादधाति यो वा अस्यामप्रतिष्ठितो भारमुद्यच्छति नैनं शक्नोत्युद्यन्तुं सं हैनं श्रृणाति - २.१.४.[२६]

स यत्तूष्णीमुपस्पृशति । तदस्यां प्रतिष्ठायां प्रतिष्ठन्ति सोऽस्यां प्रतिष्ठित आधत्ते तथा न व्यथते तदु हैतत्पश्चेव दध्रिर आसुरिः पाञ्चिर्माधुकिः सर्वं वा अन्यदियसितमिव प्रथमेनैवोद्यत्यादध्याद्भूर्भुवः स्वरिति तदेवानियसितमित्यतो यतमथा कामयेत तथा कुर्यात् - २.१.४.[२७]

अथ पुरस्तात्परीत्य । पूर्वार्धमुल्मुकानामभिपद्य जपति द्यौरिव भूम्ना पृथिवीव वरिम्णेति यथासौ द्यौर्बह्वी नक्षत्रैरेवम्बहुर्भूयासमित्येवैतदाह यदाह द्यौरिव भूम्नेति पृथिवीव वरिम्णेति यथेयम्पृथिव्युर्व्येवमुरुर्भूयासमित्येवैतदाह तस्यास्ते पृथिवि देवयजनि पृष्ठ इत्यस्यै ह्येनं पृष्ठ आधत्तेऽग्निमन्नादमन्नाद्यायादध इत्यन्नादोऽग्निरन्नादो भूयासमित्येवैतदाह सैषाशीरेव स यदि कामयेत जपेदेतद्यद्यु कामयेतापि नाद्रियेत - २.१.४.[२८]

अथ सर्पराज्ञ्या ऋग्भिरुपतिष्ठते । आयं गौः पृश्निरक्रमीदसदन्मातरं पुरःपितरं च प्रयन्त्स्वः अन्तश्चरति रोचनास्य प्राणादपानती व्यख्यन्महिषो दिवम्त्रिंशद्धाम विराजति वाक्पतङ्गाय धीयते प्रति वस्तोरह द्युभिरिति तद्यदेवास्यात्र सम्भारैर्वा नक्षत्रैर्वर्तुभिर्वाधानेन वानाप्तं भवति तदेवास्यैतेन सर्वमाप्तं भवति तस्मात्सर्पराज्ञ्या ऋग्भिरुपतिष्ठते - २.१.४.[२९]



तदाहुः । न सर्पराज्ञ्या ऋग्भिरुपतिष्ठेतेतीयं वै पृथिवी सर्पराज्ञी स यदेवास्यामाधत्ते तत्सर्वान् कामानाप्नोति तस्मान्न सर्पराज्ञ्या ऋग्भिरुपतिष्ठेतेति - २.१.४.[३०]

##२.२.१.

उद्धृत्याहवनीयं पूर्णाहुतिं जुहोति । तद्यत्पूर्णाहुतिं जुहोत्यन्नादं वा एतमात्मनो जनयते यदग्निं तस्मा एतदन्नाद्यमपिदधाति यथा कुमाराय वाजाताय वत्साय वा स्तनमपिदध्यादेवमस्मा एतदन्नाद्यमपि दधाति - २.२.१.[१]

स एतेनान्नेन शान्तः । उत्तराणि हवींषि श्रप्यमाणान्युपरमति शश्वद्ध वा अध्वर्युं वा यजमानं वा प्रदहेत्तौ ह्यस्य नेदिष्ठं चरतो यदस्मिन्नेतामाहुतिं न जुहुयात्तस्माद्वा एतामाहुतिं जुहोति - २.२.१.[२]

तां वै पूर्णां जुहोति । सर्वं वै पूर्णं सर्वेणैवैनमेतच्छमयति स्वाहाकारेण जुहोत्यनिरुक्तो वै स्वाहाकारः सर्वं वा अनिरुक्तं सर्वेणैवैनमेतच्छमयति - २.२.१.[३]

यां वै प्रजापतिः । प्रथमामाहुतिमजुहोत्स्वाहेति वै तामजुहोत्सो स्विदेषा निदानेन तस्मात्स्वाहेति जुहोति तस्यां वरं ददाति सर्वं वै वरः सर्वेणैवैनमेतच्छमयति - २.२.१.[४]

तदाहुः । एतामेवाहुतिं हुत्वाथोत्तराणि हवींषि नाद्रियेतैतयैव तं काममाप्नोति यमभिकाममुत्तराणि हवींषि निर्वपतीति - २.२.१.[५]



स वा अग्नये पवमानाय निर्वपति । प्राणो वै पवमानः प्राणमेवास्मिन्नेतद्दधाति तद्वेतयैवास्मिंस्तद्दधात्यन्नं हि प्राणोऽन्नमेषाहुतिः - २.२.१.[६]

अथाग्नये पावकाय निर्वपति । अन्नं वै पावकमन्नमेवास्मिन्नेतद्दधाति तद्वेतयैवास्मिंस्तद्दधात्येषा ह्येव प्रत्यक्षमन्नमाहुतिः - २.२.१.[७]

अथाग्नये शुचये निर्वपति । वीर्यं वै शुचि यद्वा अस्यैतदुज्ज्वलत्येतदस्य वीर्यं शुचि वीर्यमेवास्मिन्नेतद्दधाति तद्वेतयैवास्मिंस्तद्दधाति यदा ह्येवास्मिन्नेतामाहुतिं जुहोत्यथास्यैतद्वीर्यं शुच्युज्ज्वलति - २.२.१.[८]

तस्मादाहुः । एतामेवाहुतिं हुत्वाथोत्तराणि हवींषि नाद्रियेतैतयैव तं काममाप्नोति यमभिकाममुत्तराणि हवींषि निर्वपतीति तदु निर्वपेदेवोत्तराणि हवींषि परोऽक्षमिव वा एतद्यददस्तदिदमितीव - २.२.१.[९]

स यदग्नये पवमानाय निर्वपति । प्राणा वै पवमानो यदा वै जायतेऽथ प्राणोऽथ यावन्न जायते मातुर्वैव तावत्प्राणमनु प्राणिति यथा वा तज्जात एवास्मिन्नेतत्प्राणं दधाति - २.२.१.[१०]

अथ यदग्नये पावकाय निर्वपति । अन्नं वै पावकं तज्जात एवास्मिन्नेतदन्नं दधाति - २.२.१.[११]

अथ यदग्नये शुचये निर्वपति । वीर्यं वै शुचि यदा वा अन्नेन वर्धतेऽथ वीर्यं तदन्नेनैवैनमेतद्वर्धयित्वाथास्मिन्नेतद्वीर्यं शुचि दधाति तस्मादग्नये शुचये - २.२.१.[१२]

तद्वैतदेव सद्विपर्यस्तमिव । अग्निर्ह यत्र देवेभ्यो मनुष्यानभ्युपाववर्त तद्धेक्षां चक्रे मैव सर्वेणैवात्मना मनुष्यानभ्युपावृतमिति - २.२.१.[१३]



स एतास्तिस्रस्तनूरेषु लोकेषु विन्यधत्त । यदस्य पवमानं रूपमासीत्तदस्याम्पृथिव्यां न्यधत्ताथ यत्पावकं तदन्तरिक्षेऽथ यच्छुचि तद्दिवि तद्वा ऋषयः प्रतिबुबुधिरे य उ तर्ह्यृषय आसुरसर्वेण वै न आत्मनाग्निरभ्युपावृतदिति तस्मा एतानि हवींषि निरवपन् - २.२.१.[१४]

स यदग्नये पवमानाय निर्वपति । यदेवास्यास्यां पृथिव्यां रूपं तदेवास्यैतेनाप्नोत्यथ यदग्नये पावकाय निर्वपति यदेवास्यान्तरिक्षे रूपं तदेवास्यैतेनाप्नोत्यथ यदग्नये शुचये निर्वपति यदेवास्य दिवि रूपं तदेवास्यैतेनाप्नोत्येवमु कृत्स्नमेवाग्निमनपनिहितमाधत्ते तस्मादु निर्वपेदेवोत्तराणि हवींषि - २.२.१.[१५]

केवलबर्हिः प्रथमं हविर्भवति । समानबर्हिषी उत्तरे अयं वै लोकः प्रथमं हविरथेदमन्तरिक्षं द्वितीयं द्यौरेव तृतीयं बहुलेव वा इयम्पृथिवी लेलयेवान्तरिक्षं लेलयेवासौ द्यौरुभे चिदेनां प्रत्युद्यामिनी स्तामिति तस्मात्समानबर्हिषी - २.२.१.[१६]

अष्टाकपालाः सर्वे पुरोडाशा भवन्ति । अष्टाक्षरा वै गायत्री गायत्रमग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसा धत्ते तानि सर्वाणि चतुर्विंशतिः कपालानि सम्पद्यन्ते चतुर्विंशत्यक्षरा वै गायत्री गायत्रमग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसा धत्ते - २.२.१.[१७]

अथादित्यै चरुं निर्वपति । प्रच्यवत इव वा एषोऽस्माल्लोकाद्य एतानि हवींषि निर्वपतीमान्हि लोकान्त्समारोहन्नेति - २.२.१.[१८]

स यददित्यै चरुं निर्वपति । इयं वै पृथिव्यदितिः सेयं प्रतिष्ठा तदस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति तस्माददित्यै चरुं निर्वपति - २.२.१.[१९]

तस्यै विराजौ संयाज्ये स्यातामित्याहुः । विराड्ढीयमित्यथो त्रिष्टुभौ त्रिष्टुब्भीयमित्यथो जगत्यौ जगती हीयमिति विराजावित्येव स्याताम् - २.२.१.[२०]



तस्यै धेनुर्दक्षिणा । धेनुरिव वा इयं मनुष्येभ्यः सर्वान् कामान्दुहे माता धेनुर्मातेव वा इयं मनुष्यान्बिभर्ति तस्माद्धेनुर्दक्षिणैतन्न्वेकमयनम् - २.२.१.[२१]

अथेदं द्वितीयम् । आग्नेयमेवाष्टाकपालं पुरोडाशं निर्वपति परोऽक्षमिव वा एतद्यदग्नये पवमानायाग्नये पावकायाग्नये शुचय इतीवाथाञ्जसैवैनमेतत्प्रत्यक्षमाधत्ते तस्मादग्नयेऽथादित्यै चरुं निर्वपति स य एव चरोर्बन्धुः स बन्धुः - २.२.१.[२२]

##२.२.२.
घ्नन्ति वा एतद्यज्ञम् । यदेनं तन्वते यन्न्वेव राजानमभिषुण्वन्ति तत्तं घ्नन्ति यत्पशुं सञ्ज्ञपयन्ति विशासति तत्तं घ्नन्त्युलूखलमुसलाभ्यां दृषदुपलाभ्यां हविर्यज्ञं घ्नन्ति - २.२.२.[१]

स एष यज्ञो हतो न ददक्षे । तं देवा दक्षिणाभिरदक्षयंस्तद्यदेनंदक्षिणाभिरदक्षयंस्तस्माद्दक्षिणा नाम तद्यदेवात्र यज्ञस्य हतस्य

व्यथते तदेवास्यैतद्दक्षिणाभिर्दक्षयत्यथ समृद्ध एव यज्ञो भवति तस्माद्दक्षिणा ददाति - २.२.२.[२]

ता वै षड्ड्द्यात् । षड्वा ऋतवः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो यावत्यस्य मात्रा तावतीभिर्दक्षयति - २.२.२.[३]

द्वादश दद्यात् । द्वादश वै मासाः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो यावत्यस्य मात्रा तावतीभिर्दक्षयति - २.२.२.[४]

चतुर्विंशतिं दद्यात् । चतुर्विंशतिर्वै संवत्सरस्यार्धमासाः संवत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो यावत्यस्य मात्रा तावतीभिर्दक्षयत्येषा मात्रा दक्षिणानां दद्यात्त्वेव यथाश्रद्धं भूयसीस्तद्यद्दक्षिणा ददाति - २.२.२.[५]



द्वया वै देवा देवाः । अहैव देवा अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवास्तेषां द्वेधा विभक्त एव यज्ञ आहुतय एव देवानां दक्षिणा मनुष्यदेवानां ब्राह्मणानां शुश्रुवुषामनूचानानामाहुतिभिरेव देवान्प्रीणाति दक्षिणाभिर्मनुष्यदेवान्ब्राह्मणाञ्छुश्रुवुषोऽनूचानांस्त एनमुभये देवाः प्रीताः सुधायां दधति - २.२.२.[६]

तद्यथा योनौ रेतो दध्यात् । एवमेवैतद्दत्विजो यजमानं लोके दधति तद्यदेभ्य एतद्ददाति ये मेदं सम्प्रापिपन्निति नु दक्षिणानाम् - २.२.२.[७]

देवाश्च वा असुराश्च । उभये प्राजापत्याः पस्पृधिरे त उभय एवानात्मान आसुर्मर्त्या ह्यासुरनात्मा हि मर्त्यस्तेषूभयेषु मर्त्येष्वग्निरेवामृत आस तं ह स्मोभयेऽमृतमुपजीवन्ति स यं ह स्मैषां घ्नन्ति तद्ध स्म वै स भवति - २.२.२.[८]

ततो देवाः । तनीयांस इव परिशिशिषिरे तेर्चन्तः श्राम्यन्तश्चेरुरुतासुरान्त्सपत्नान्मर्त्यानभिभवेमेति त एतदमृतमग्न्याधेयं ददृशुः - २.२.२.[९]

ते होचुः । हन्तेदममृतमन्तरात्मन्नादधामहै त इदममृतमन्तरात्मन्नाधायामृता भूत्वा स्तर्या भूत्वा स्तर्यान्त्सपत्नान्मर्त्यानभिभविष्याम इति - २.२.२.[१०]

ते होचुः । उभयेषु वै नोऽयमग्निः प्र त्वेवासुरेभ्यो ब्रवामेति - २.२.२.[११]

ते होचुः । आ वै वयमग्नी धास्यामहेऽथ यूयं किं करिष्यथेति - २.२.२.[१२]

ते होचुः । अथैनं वयं न्येव धास्यामहेऽत्र तृणानि दहात्र दारूणि दहात्रौदनं पचात्र मांसं पचेति स यं तमसुरा न्यदधत तेनानेन मनुष्या भुञ्जते - २.२.२.[१३]



अथैनं देवाः । अन्तरात्मन्नादधत त इमममृतमन्तरात्मन्नाधायामृता भूत्वा स्तर्यां भूत्वा स्तर्यान्त्सपत्नान्मर्त्यानभ्यभवंस्तथो एवैष एतदमृतमन्तरात्मन्नाधत्ते नामृतत्वस्याशास्ति सर्वमायुरेत्यस्तर्यो हैव भवति न हैनं सपत्नस्तुस्तूर्षमाणश्चन स्तृणुते तस्माद्यदाहिताग्निश्चानाहिताग्निश्च स्पर्धेतेऽआहिताग्निरेवाभिभवत्यस्तर्यो हि खलु स तर्हि भवत्यमृतः - २.२.२.[१४]

तद्यत्रैनमदो मन्थन्ति । तज्जातमभिप्राणिति प्राणो वा अग्निर्जातमेवैनमेतत्सन्तं जनयति स पुनरपानिति तदेनमन्तरात्मन्नाधत्ते सोऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति - २.२.२.[१५]

तमुद्दीप्य समिन्द्धे । इह यक्ष्य इह सुकृतं करिष्यामीत्येवैनमेतत्समिन्द्धेयोऽस्यैषोऽन्तरात्मन्नाग्निराहितो भवति - २.२.२.[१६]

अन्तरेणागाद्व्यवृतदिति । न ह वा अस्यैतं कश्चनान्तरेणैति यावज्जीवति योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति तस्मादु तन्नाद्रियेत यदनुगच्छेन्न ह वा अस्यैषोऽनुगच्छति यावज्जीवति योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति - २.२.२.[१७]

ते वा एते प्राणा एव यदग्नयः । प्राणोदानावेवाहवनीयश्च गार्हपत्यश्च व्यानोऽन्वाहार्यपचनः - २.२.२.[१८]

तस्य वा एतस्याग्न्याधेयस्य । सत्यमेवोपचारः स यः सत्यं वदति यथाग्निं समिद्धं तं घृतेनाभिषिञ्चेदेवं हैनं स उद्दीपयति तस्य भूयो भूय एव तेजो भवति श्वः श्वः श्रेयान्भवत्यथ योऽनृतं वदति यथाग्निं समिद्धं तमुदकेनाभिषिञ्चेदेवं हैनं स जासयति तस्य कनीयः कनीय एव तेजो भवति श्वः श्वः पापीयान्भवति तस्मादु सत्यमेव वदेत् - २.२.२.[१९]



तदु हाप्यरुणमौपवेशिं ज्ञातय ऊचुः । स्थविरो वा अस्यग्नी आधत्स्वेति स होवाच ते मैतद्ब्रूथ वाचंयम एवैधि न वा आहिताग्निनानृतं वदितव्यं न वदञ्जातुनानृतं वदेत्तावत्सत्यमेवोपचार इति - २.२.२.[२०]

##२.२.३.
२.२.३ अथ पुनराधानम्

वरुणो हैनद्राज्यकाम आदधे । स राज्यमगच्छत्तस्माद्यश्च वेद यश्च न वरुणो राजेत्येवाहुः सोमो यशस्कामः स यशोऽभवत्तस्माद्यश्च सोमे लभते यश्च नोभावेवागच्छतो यश एवैतद्द्रष्टुमागच्छन्ति यशो ह भवति राज्यं गच्छति य एवं विद्वानाधत्ते - २.२.३.[१]

अग्नौ ह वै देवाः । सर्वाणि रूपाणि निदधिरे यानि च ग्राम्याणि यानि चारण्यानि विजयं वोपप्रैष्यन्तः कामचारस्य वा कामायायं नो गोपिष्ठो गोपायदिति वा - २.२.३.[२]

तान्यु हाग्निर्निचक्रमे । तैः संगृह्यऽर्तून्प्रविवेश पुनरेम इति देवा एदग्निं तिरोभूतं तेषां हेयसेवास किमिह कर्तव्यं केह प्रज्ञेति वा - २.२.३.[३]

तत एतत्त्वष्टा पुनराधेयं ददर्श । तदादधे तेनाग्नेः प्रियं धामोपजगाम सोऽस्मा उभयानि रूपाणि प्रतिनिःससर्ज यानि च ग्राम्याणि यानि चारण्यानि तस्मादाहुस्त्वाष्ट्राणि वै रूपाणीति त्वष्टुर्ह्येव सर्वं रूपमुप ह त्वेवान्याः प्रजा यावच्छो यावच्छ इव तिष्ठन्ते - २.२.३.[४]

तस्मै कं पुनराधेयमादधीत । एवं हैवाग्नेः प्रियं धामोपगच्छति सोऽस्मा उभयानि रूपाणि प्रतिनिःसृजति यानि च ग्राम्याणि यानि चारण्यानि तस्मिन्नेतान्युभयानि रूपाणि दृश्यन्ते परमता वै सा स्पृहयन्त्यु हास्मै तथा पुष्यति लोक्यम्वेवापि - २.२.३.[५]



आग्नेयोऽयं यज्ञः । ज्योतिरग्निः पाप्मनो दग्धा सोऽस्य पाप्मानं दहति स इह ज्योतिरेव श्रिया यशसा भवति ज्योतिरमुत्र पुण्यलोकत्वैतन्नु तद्यस्मादादधीत - २.२.३.[६]

स वै वर्षास्वादधीत । वर्षा वै सर्व ऋतवो वर्षा हि वै सर्व ऋतवोऽथादो वर्षमकुर्मादो वर्षमकुर्मेति संवत्सरान्त्सम्पश्यन्ति वर्षा ह त्वेव सर्वेषामृतूनां रूपमुत हि तद्वर्षासु भवति यदाहुर्ग्रीष्म इव वा अद्येत्युतो तद्वर्षासु भवति यदाहुः शिशिर इव वा अद्येति वर्षादिद्वर्षाः - २.२.३.[७]

अथैतदेव परोऽक्षं रूपम् । यदेव पुरस्ताद्वाति तद्वसन्तस्य रूपं यत्स्तनयति तद्ग्रीष्मस्य यद्वर्षति तद्वर्षाणां यद्विद्योतते तच्छरदो यद्वृष्ट्वोद्गृह्णाति तद्धेमन्तस्य वर्षाः सर्व ऋतव ऋतून्प्राविशद्दतुभ्य एवैनमेतन्निर्मिमीते - २.२.३.[८]

आदित्यस्त्वेव सर्व ऋतवः । यदैवोदेत्यथ वसन्तो यदा संगवोऽथ ग्रीष्मो यदा मध्यन्दिनोऽथ वर्षा यदापराह्णोऽथ शरद्यदैवास्तमेत्यथ हेमन्तस्तस्मादु मध्यंन्दिन

एवादधीत तर्हि ह्येषोऽस्य लोकस्य नेदिष्ठं भवति तन्नेदिष्ठादेवैनमेतन्मध्यान्निर्मिमीते - २.२.३.[९]

छाययेव वा अयं पुरुषः । पाप्मनानुषक्तः सोऽस्यात्र कनिष्ठो भवत्यधस्पदमिवेयस्यते तत्कनिष्ठमेवैतत्पाप्मानमवबाधते तस्मादु मध्यन्दिन एवादधीत - २.२.३.[१०]

तं वै दर्भैरुद्धरति । दारुभिर्वै पूर्वमुद्धरति दारुभिः पूर्वं दारुभिरपरं जामि कुर्यात्समदं कुर्यादापो दर्भा आपो वर्षा ऋतून्प्राविशदद्भिरेवैनमेतदद्भ्यो निर्मिमीते तस्माद्दर्भैरुद्धरति - २.२.३.[११]

अर्कपलाशाभ्याम् । व्रीहिमयमपूपं कृत्वा यत्र गार्हपत्यमाधास्यन्भवति तन्निदधाति तद्गार्हपत्यमादधाति - २.२.३.[१२]



अर्कपलाशाभ्यां यवमयमपूपं कृत्वा यत्राहवनीयमाधास्यन्भवति तन्निदधाति तदाहवनीयमादधाति पूर्वाभ्यामेवैनावेतदग्निभ्यामन्तर्दध्म इति वदन्तस्तदु तथा न कुर्याद्रात्रिभिर्ह्येवान्तर्हितौ भवतः - २.२.३.[१३]

आग्नेयमेव पञ्चकपालं पुरोडाशं निर्वपति । तस्य पञ्चपदाः पङ्क्त्यो याज्यानुवाक्या भवन्ति पञ्च वा ऋतव ऋतून्प्राविशद्दतुभ्य एवैनमेतन्निर्मिमीते - २.२.३.[१४]

सर्व आग्नेयो भवति । एवं हि त्वष्टाग्नेः प्रियं धामोपागच्छत्तस्मात्सर्व आग्नेयो भवति - २.२.३.[१५]

तेनोपांशु चरन्ति । यद्वै ज्ञातये वा सख्ये वा निष्केवल्यं चिकीर्षति तिर इवैतेन बोभवद्वैश्वदेवोऽन्यो यज्ञोऽथैष निष्केवल्य आग्नेयो यद्वै तिर इव तदुपांशु तस्मादुपांशु चरन्ति - २.२.३.[१६]

उच्चैरुत्तममनुयाजं यजति । कृतकर्मेव हि स तर्हि भवति सर्वो हि कृतमनुबुध्यते - २.२.३.[१७]

स आश्राव्याह । समिधो यजेति तदाग्नेयं रूपं परोऽक्षं त्वग्नीन्यजेति त्वेव ब्रूयात्तदेव प्रत्यक्षमाग्नेयं रूपम् - २.२.३.[१८]

स यजति । अग्न आज्यस्य व्यन्त वौझगग्निमाज्यस्य वेतु वौझगग्निनाज्यस्य व्यन्तु वौझगग्निराज्यस्य वेतु वौझगिति - २.२.३.[१९]

अथ स्वाहाग्निमित्याह । आग्नेयमाज्यभागं स्वाहाग्निं पवमानमिति यदि पवमानाय ध्रियेरन्त्स्वाहाग्निमिन्दुमन्तमिति यद्यग्नय इन्दुमते ध्रियेरन्त्स्वाहाग्निं स्वाहाग्नीनाज्यपाञ्जुषाणो अग्निराज्यस्य वेत्विति यजति - २.२.३.[२०]



अथाहाग्नयेऽनुब्रूहीति । आग्नेयमाज्यभागं सोऽन्वाहाग्निं स्तोमेन बोधय समिधानो अमर्त्यं हव्या देवेषु नो दधदिति स्वपितीव खलु वा एतद्यदुद्वासितो भवति सम्प्रबोधयत्येवैनमेतत्समुदीर्ययति जुषाणो अग्निराज्यस्य वेत्विति यजति - २.२.३.[२१]

अथ यद्यग्नये पवमानाय ध्रियेरन् । अग्नये पवमानायानुब्रूहीति ब्रूयात्सोऽन्वाहाग्न आयूंषि पवस आसुवोर्जमिषं च नः आरे बाधस्व दुच्छुनामिति तथाहाग्नेयो भवति सोमो वै पवमानस्तदु सौम्यादाज्यभागान्नयन्ति जुषाणो अग्निः पवमान आज्यस्य वेत्विति यजति - २.२.३.[२२]

अथ यद्यग्नय इन्दुमते ध्रियेरन् । अग्नय इन्दुमतेऽनुब्रूहीति ब्रूयात्सोऽन्वाहेह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः एभिर्वर्धास इन्दुभिरिति तथा हाग्नेयोभवति सोमो वा इन्दुस्तदु सौम्यादाज्यभागान्नयन्ति जुषाणो अग्निरिन्दुमानाज्यस्य वेत्विति यजत्येवमु सर्वमाग्नेयं करोति - २.२.३.[२३]

अथाहाग्नयेऽनुब्रूहीति हविषः । अग्निं यजाग्नये स्विष्टकृतेऽनुब्रूह्यग्निं स्विष्टकृतं यजेत्यथ यद्देवान्यजेत्यग्नीन्यजेत्येवैतदाह - २.२.३.[२४]

स यजति । अग्नेर्वसुवने वसुधेयस्य वेतु वौझगग्ना उ वसुवने वसुधेयस्य वेतु वौझग्देवो अग्निः स्विष्टकृदिति स्वयमाग्नेयस्तृतीय एवम्वाग्नेयाननुयाजान्करोति - २.२.३.[२५]

ता वा एताः । षड्विभक्तीर्यजति चतस्रः प्रयाजेषु द्वे अनुयाजेषु षड्वा ऋतव ऋतून्प्राविशद्दतुभ्य एवैनमेतन्निर्मिमीते - २.२.३.[२६]

द्वादश वा त्रयोदश वाक्षराणि भवन्ति । द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः संवत्सरमृतून्प्राविशद्दतुभ्य एवैनमेतत्संवत्सरान्निर्मिमीते न द्वे चन सहाजामितायै जामि ह कुर्याद्यद्द्वे चित्सह स्यातां व्यन्तु वेत्वित्येव प्रयाजानां रूपं वसुवने वसुधेयस्येत्यनुयाजानाम् - २.२.३.[२७]



तस्य हिरण्यं दक्षिणा । आग्नेयो वा एष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणानड्वान्वा स हि वहेनाग्नेयोऽग्निदग्धमिव ह्यस्य वहं भवति देवानां हव्यवाहनोऽग्निरिति वहति वा एष मनुष्येभ्यस्तस्मादनड्वान्दक्षिणा - २.२.३.[२८]

##२.२.४.

प्रजापतिर्ह वा इदमग्र एक एवास । स ऐक्षत कथं नु प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत सोऽग्निमेव मुखाज्जनयांचक्रे तद्यदेनं मुखादजनयत तस्मादन्नादोऽग्निः स यो हैवमेतमग्निमन्नादं वेदान्नादो हैव भवति - २.२.४.[१]

तद्वा एनमेतदग्रे देवानामजनयत । तस्मादग्निरग्निर्ह वै नामैतद्यदग्निरिति स जातः पूर्वः प्रेयाय यो वै पूर्व एत्यग्र एतीति वै तमाहुः सो एवास्याग्निता - २.२.४.[२]

स ऐक्षत प्रजापतिः । अन्नादं वा इममात्मनोऽजीजने यदग्निं न वा इहमदन्यदन्नमस्ति यं वा अयं नाद्यादिति काल्वालीकृता हैव तर्हि पृथिव्यास नौषधय आसुर्न वनस्पतयस्तदेवास्य मनस्यास - २.२.४.[३]

अथैनमग्निर्व्यात्तेनोपपर्यावर्वर्त । तस्य भीतस्य स्वो महिमापचक्राम वाग्वा अस्य स्वो महिमा वागस्यापचक्राम स आत्मन्नेवाहुतिमीषे स उदमृष्ट तद्यदुदमृष्ट तस्मादिदं चालोमकमिदं च तत्र विवेद घृताहुति वैव पय आहुतिं वोभयं ह त्वेव तत्पय एव - २.२.४.[४]

सा हैनं नाभिराधयां चकार । केशमिश्रेव हास तां व्यौक्षदोषं धयेति तत ओषधयः समभवंस्तस्मादोषधयो नाम स द्वितीयमुदमृष्ट तत्रापरामाहुतिं विवेद घृताहुतिं वैव पयआहुतिं वोभयं ह त्वेव तत्पय एव - २.२.४.[५]



सा हैनमभिराधयां चकार । स व्यचिकित्सज्जुहवानी३ मा हौषा३ इति तं स्वो महिमाभ्युवाद जुहुधीति स प्रजापतिर्विदां चकार स्वो वै मा महिमा हेति स स्वाहेत्येवाजुहोत्तस्मादु स्वाहेत्येव हूयते तत एष उदियाय य एष तपति ततोयम्प्रबभूव योऽयं पवते तत एवाग्निः पराङ्पर्यावर्वर्त - २.२.४.[६]

स हुत्वा प्रजापतिः । प्र चाजायतात्स्यतश्चाग्नेर्मृत्योरात्मानमत्रायत स यो हैवं विद्वानग्निहोत्रं जुहोत्येतां हैव प्रजातिं प्रजायते यां प्रजापतिः प्राजायतैवमु हैवात्स्यतोऽग्नेर्मृत्योरात्मानं त्रायते - २.२.४.[७]

स यत्र म्रियते । यत्रैनमग्नावभ्यादधति तदेषोऽग्नेरधि जायतेऽथास्य शरीरमेवाग्निर्दहति तद्यथा पितुर्वा मातुर्वा जायेतैवमेषोऽग्नेरधि जायते शश्वद्ध वा एष न सम्भवति योऽग्निहोत्रं न जुहोति तस्माद्वा अग्निहोत्रं होतव्यम् - २.२.४.[८]

तद्वा एतत् । एव विचिकित्सायै जन्म यत्प्रजापतिर्व्यचिकित्सत्स विचिकित्सञ्छ्रेयस्यध्रियत यः प्र चाजायतात्स्यतश्चाग्नेर्मृत्योरात्मानमत्रायत स यो हैवमेतद्विचिकित्सायै जन्म वेद यद्ध किं च विचिकित्सति श्रेयसि हैव ध्रियते - २.२.४.[९]

स हुत्वा न्यमृष्ट । ततो विकङ्कतः समभवत्तस्मादेष यज्ञियो यज्ञपात्रीयो वृक्षस्तत एते देवानां वीरा अजायन्ताग्निर्योऽयं पवते सूर्यः स यो हैवमेतान्देवानां वीरान्वेदाहास्य वीरो जायते - २.२.४.[१०]

त उ हैत ऊचुः । वयं वै प्रजापतिं पितरमनु स्मो हन्त वयं तत्सृजामहै यदस्मानन्वसदिति ते परिश्रित्य गायत्रेणापहिंकारेण तुष्टुविरे तद्यत्पर्यश्रयन्त्स समुद्रोऽथेयमेव पृथिव्यास्तावः - २.२.४.[११]

ते स्तुत्वा प्राञ्च उच्चक्रमुः । पुनरेम इति देवा एद्गां सम्भूतां सा हैनानुदीक्ष्य हिं चकार ते देवा विदांचक्रुरेष साम्नो हिंकार इत्यपहिंकारं हैव पुरा ततः सामास स एष गवि साम्नो हिंकारस्तस्मादेषोपजीवनीयोपजीवनीयो ह वै भवति य एवमेतं गवि साम्नो हिंकारं वेद - २.२.४.[१२]

ते होचुः । भद्रं वा इदमजीजनामहि ये गामजीजनामहि यज्ञो ह्येत्वेयं नो ह्यृते गोर्यज्ञस्तायतेऽन्नं ह्येवेयं यद्धि किं चान्नं गौरेव तदिति - २.२.४.[१३]

तद्वा एतदेवैतासां नाम । एतद्यज्ञस्य तस्मादेतत्परिहरेत्साधु पुण्यमिति बह्व्यो ह वा अस्यैता भवन्त्युपनामुक एनं यज्ञो भवति य एवं विद्वानेतत्परिहरति साधु पुण्यमिति - २.२.४.[१४]

तामु हाग्निरभिदध्यौ । मिथुन्यनया स्यामिति तां सम्बभूव तस्यां रेतः प्रासिञ्चत्तत्पयोऽभवत्तस्मादेतदामायां गवि सत्यां श्रृतमग्नेर्हि रेतस्तस्माद्यदि कृष्णायां यदि

रोहिण्यां शुक्लमेव भवत्यग्निसंकाशमग्नेर्हि रेतस्तस्मात्प्रथमदुग्धमुष्णं भवत्यग्नेर्हि रेतः - २.२.४.[१५]

ते होचुः । हन्तेदं जुहवामहा इति कस्मै न इदं प्रथमाय होष्यन्तीति मह्यमिति हैवाग्निरुवाच मह्यमिति योऽयं पवते मह्यमिति सूर्यस्ते न सम्पादयां चक्रुस्ते हासम्पाद्योचुः प्रजापतिमेव पितरं प्रत्ययाम स यस्मै न इदं प्रथमाय होतव्यं वक्ष्यति तस्मै न इदं प्रथमाय होष्यन्तीति ते प्रजापतिं पितरं प्रतीत्योचुः कस्मै न इदं प्रथमाय होष्यन्तीति - २.२.४.[१६]

स होवाच । अग्नयेऽग्निरनुष्ठ्या स्वं रेतः प्रजनयिष्यते तथा प्रजनिष्यध्व इत्यथ तुभ्यमिति सूर्यमथ यदेव हूयमानस्य व्यश्नुते तदेवैतस्य योऽयम्पवत इति तदेभ्य इदमप्येतर्हि तथैव जुह्वत्यग्नय एव सायं सूर्याय प्रातरथ यदेव हूयमानस्य व्यश्नुते तदेवैतस्य योऽयं पवते - २.२.४.[१७]



ते हुत्वा देवाः । इमां प्रजातिं प्राजायन्त यैषामियं प्रजातिरिमां विजितिं व्यजयन्त येयमेषां विजितिरिममेव लोकमग्निरजयदन्तरिक्षं वायुर्दिवमेव सूर्यः स यो हैवं विद्वानग्निहोत्रं जुहोत्येतां हैव प्रजातिं प्रजायते यामेत एतत्प्राजायन्तैतां विजितं विजयते यामेत एतद्व्यजयन्तैतैरु हैव सलोको भवति य एवं विद्वानग्निहोत्रं जुहोति तस्माद्वा अग्निहोत्रं होतव्यम् - २.२.४.[१८]

##२.३.१

सूर्यो ह वा अग्निहोत्रम् । तद्यदेतस्या अग्र आहुतेरुदैत्तस्मात्सूर्योऽग्निहोत्रम् - २.३.१.[१]

स यत्सायमस्तमिते जुहोति । य इदं तस्मिन्निह सति जुहवानीत्यथ यत्प्रातरनुदिते जुहोति य इदं तस्मिन्निह सति जुहवानीति तस्माद्वै सूर्योऽग्निहोत्रमित्याहुः - २.३.१.[२]

अथ यदस्तमेति । तदग्नावेव योनौ गर्भो भूत्वा प्रविशति तं गर्भम्भवन्तमिमाः सर्वाः प्रजा अनु गर्भा भवन्तीलिता हि शेरे संजानाना अथ यद्रात्रिस्तिर एवैतत्करोति तिर इव हि गर्भाः - २.३.१.[३]

स यत्सायमस्तमिते जुहोति । गर्भमेवैतत्सन्तमभिजुहोति गर्भं सन्तमभिकरोति स यद्गर्भं सन्तमभिजुहोति तस्मादिमे गर्भा अनश्नन्तो जीवन्ति - २.३.१.[४]

अथ यत्प्रातरनुदिते जुहोति । प्रजनयत्येवैनमेतत्सोऽयं तेजो भूत्वा विभ्राजमान उदेति शश्वद्ध वै नोदियाद्यदस्मिन्नेतामाहुतिं न जुहुयात्तस्माद्वा एतामाहुतिं जुहोति - २.३.१.[५]

स यथाहिस्त्वचो निर्मुच्येत । एवं रात्रेः पाप्मना निर्मुच्यते यथा ह वा अहिस्त्वचो निर्मुच्येतैवं सर्वस्मात्पाप्मनो निर्मुच्यते य एवं विद्वानग्निहोत्रं जुहोति तदेतस्यैवानु प्रजातिमिमाः सर्वाः प्रजा अनु प्रजायन्ते वि हि सृज्यन्ते यथार्थम् - २.३.१.[६]



स यः पुरादित्यस्यास्तमयात् । आहवनीयमुद्धरत्येते वै विश्वे देवा रश्मयोऽथ यत्परं भाः प्रजापतिर्वा स इन्द्रो वै तदु ह वै विश्वे देवा अग्निहोत्रं जुह्वतो गृहानागच्छन्ति स यस्यानुद्धृतमागच्छन्ति तस्माद्देवा अपप्रयन्ति तद्वा अस्मै तद्व्यृध्यते यस्माद्देवा अपप्रयन्ति तस्यानु व्यृद्धिं यश्च वेद यश्च नानुद्धृतमभ्यस्तमगादित्याहुः - २.३.१.[७]

अथ यः पुरादित्यस्यास्तमयात् । आहवनीयमुद्धरति यथा श्रेयस्यागमिष्यत्यावसथेनोपक्लृप्तेनोपासीतैवं तत्स यस्योद्धृतमागच्छन्ति तस्याहवनीयं प्रविशन्ति तस्याहवनीये निविशन्ते - २.३.१.[८]

स यत्सायमस्तमिते जुहोति । अग्नावेवैभ्य एतत्प्रविष्टेभ्यो जुहोत्यथ यत्प्रातरनुदिते जुहोत्यप्रेतेभ्य एवैभ्य एतज्जुहोति तस्मादुदितहोमिनां विच्छिन्नमग्निहोत्रं मन्यामह इति ह स्माहासुरिर्यथा शून्यमावसथमाहरेदेवं तदिति - २.३.१.[९]

द्वयं वा इदं जीवनम् । मूलि चैवामूलं च तदुभयं देवानां सन्मनुष्या उपजीवन्ति पशवो मूला ओषधयो मूलिन्यस्ते पशवो मूला ओषधीर्मूलिनीर्जग्ध्वापः पीत्वा तत एष रसः सम्भवति - २.३.१.[१०]

स यत्सायमस्तमिते जुहोति । अस्य रसस्य जीवनस्य देवेभ्यो जुहवानि यदेषामिदं सदुपजीवाम इति स यत्ततो रात्र्याश्नाति हुतोच्छिष्ठमेव तन्निरवत्तबल्यश्नाति हुतोच्छिष्टस्य ह्येवाग्निहोत्रं जुह्वदशिता - २.३.१.[११]

अथ यत्प्रातरनुदिते जुहोति । अस्य रसस्य जीवनस्य देवेभ्यो जुहवानि यदेषामिदं सदुपजीवाम इति स यत्ततोऽह्नाश्नाति हुतोच्छिष्टमेव तन्निरवत्तबल्यश्नाति हुतोच्छिष्टस्य ह्येवाग्निहोत्रं जुह्वदशिता - २.३.१.[१२]

तदाहुः । समेवान्ये यज्ञास्तिष्ठन्तेऽग्निहोत्रमेव न संतिष्ठतेऽपि द्वादशसंवत्सरमन्तवदेवाथैतदेवानन्तं सायं हि हुत्वा वेद प्रातर्होष्यामीति प्रातर्हुत्वा वेद पुनः सायं होष्यामीति तदेतदनुपस्थितमग्निहोत्रं तस्यानुपस्थितिमन्वनुपस्थिता इमाः प्रजाः प्रजायन्तेऽनुपस्थितो ह वै श्रिया प्रजया प्रजायते य एवमेतदनुपस्थितमग्निहोत्रं वेद - २.३.१.[१३]

तद्दुग्ध्वाधिश्रयति । शृतमसदिति तदाहुर्यर्ह्युदन्तं तर्हि जुहुयादिति तद्वैनोदन्तं कुर्यादुप ह दहेद्यदुदन्तं कुर्यादप्रजज्ञि वै रेत उपदग्धं तस्मान्नोदन्तं कुर्यात् - २.३.१.[१४]

अधिश्रित्यैव जुहुयात् । यन्न्वेवैतदग्ने रेतस्तेन न्वेव शृतं यद्वेनदग्नावधिश्रयन्ति तेनो एव शृतं तस्मादधिश्रित्यैव जुहुयात् - २.३.१.[१५]

तदवज्योतयति । शृतं वेदानीत्यथापः प्रत्यानयति शान्त्यै न्वेव रसस्यो चैव सर्वत्वायेदं हि यदा वर्षत्यथौषधयो जायन्तऽथोषधीर्जग्ध्वापः पीत्वा तत एष रसः सम्भवति तस्मादु

रसस्यो चैव सर्वत्वाय तस्माद्यद्येनं क्षीरं केवलं पानेऽभ्याभवेदुदस्तोकमाश्चोतयितवै ब्रूयाच्छान्त्यै न्वेव रसस्यो चैव सर्वत्वाय - २.३.१.[१६]

अथ चतुरुन्नयति । चतुर्धाविहितं हीदं पयोऽथ समिधमादायोदाद्रवति समिद्धहोमायैव सोऽनुपसाद्य पूर्वामाहुतिं जुहोति स यदुपसादयेद्यथा यस्मा अशनमाहरिश्यन्त्स्यात्तदन्तरा निदध्यादेवं तदथ यदनुपसाद्य यथा यस्मा अशनमाहरेत्तस्मा आहृत्यैवोपनिदध्यादेवं तदुपसाद्योत्तरां नानावीर्ये एवैने एतत्करोति मनश्च ह वै वाक्चैते आहुती तन्मनश्चैवैतद्वाचं च व्यावर्तयति तस्मादिदं मनश्च वाक्च समानमेव सन्नानेव - २.३.१.[१७]

स वै द्विरग्नौ जुहोति । द्विरुपमार्ष्टि द्विः प्राश्नाति चतुरुन्नयति तद्दश दशाक्षरा वै विराड्विराड्वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयति - २.३.१.[१८]

स यदग्नौ जुहोति । तद्देवेषु जुहोति तस्माद्देवाः सन्त्यथ यदुपमार्ष्टि तत्पितृषु चौषधीषु च जुहोति तस्मात्पितरश्चौषधयश्च सन्त्यथ यद्धुत्वा प्राश्नाति तन्मनुष्येषु जुहोति तस्मान्मनुष्याः सन्ति - २.३.१.[१९]

या वै प्रजा यज्ञेऽनन्वाभक्ताः । पराभूता वै ता एवमेवैतद्या इमाः प्रजा अपराभूतास्ता यज्ञमुख आभजति तेनो ह पशवोऽन्वाभक्ता यन्मनुष्याननुपशवः - २.३.१.[२०]

तदु होवाच याज्ञवल्क्यः । न वै यज्ञ इव मन्तवै पाकयज्ञ इव वा इतीदं हि यदन्यस्मिन्यज्ञे स्रुच्यवद्यति सर्वं तदग्नौ जुहोत्यथैतदग्नौ हुत्वोत्सृप्याचामति निर्लेढि तदस्य पाकयज्ञस्येवेति तदस्य तत्पशव्यं रूपम् पशव्यो हि पाकयज्ञः - २.३.१.[२१]

सैषैकाहुतिरेवाग्रे । यामेवामूं प्रजापतिरजुहोदथ यदेत एतत्पश्चेवाध्रियन्ताग्निर्योऽयं पवते सूर्यस्तस्मादेषा द्वितीयाहुतिर्हूयते - २.३.१.[२२]

सा या पूर्वाहुतिः । साग्निहोत्रस्य देवता तस्मात्तस्यै जुहोत्यथ योत्तरा स्विष्टकृद्धाजनमेव सा तस्मात्तामुत्तरार्धे जुहोत्येषा हि दिक्स्विष्टकृतस्तन्मिथुनायैवैषा द्वितीयाहुतिर्हूयते द्वन्द्वं हि मिथुनम् प्रजननम् - २.३.१.[२३]

तद्वयमेवैते आहुती । भूतं चैव भविष्यच्च जातं च जनिष्यमाणं चागतं चाशा चाद्य च श्वश्च तद्वयमेवानु - २.३.१.[२४]

आत्मैव भूतम् । अद्धा हि तद्यद्भूतमद्धो तद्यदात्मा प्रजैव भविष्यदनद्धा हि तद्यद्भविष्यदनद्धो तद्यत्प्रजा - २.३.१.[२५]

आत्मैव जातम् । अद्धा हि तद्यज्जातमद्धो तद्यदात्मा प्रजैव जनिष्यमाणमनद्धा हि तद्यज्जनिष्यमाणमनद्धो तद्यत्प्रजा - २.३.१.[२६]



आत्मैवागतम् । अद्धा हि तद्यदागतमद्धो तद्यदात्मा प्रजैवाशानद्धा हि तद्यदाशानद्धो तद्यत्प्रजा - २.३.१.[२७]

आत्मैवाद्य । अद्धा हि तद्यदद्याद्धो तद्यदात्मा प्रजैव श्वोऽनद्धा हि तद्यच्छ्वोऽनद्धो तद्यत्प्रजा - २.३.१.[२८]

सा या पूर्वाहुतिः । सात्मानमभि हूयते तां मन्त्रेण जुहोत्यद्धा हि तद्यन्मन्त्रोऽद्धो तद्यदात्माऽथ योत्तरा सा प्रजामभि हूयते तां तूष्णीं जुहोत्यनद्धा हि तद्यत्तूष्णीमनद्धो तद्यत्प्रजा - २.३.१.[२९]

स जुहोति । अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेत्यथ प्रातः सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति तत्सत्येनैव हूयते यदा ह्येव सूर्योऽस्तमेत्यथाग्निर्ज्योतिर्यदा सूर्य उदेत्यथ सूर्यो ज्योतिर्यद्वै सत्येन हूयते तद्देवान् गच्छति - २.३.१.[३०]

तदु हैतदेवारुणये ब्रह्मवर्चसकामाय तक्षानूवाचाग्निर्वर्चो ज्योतिर्वर्चः सूर्यो वर्चो ज्योतिर्वर्च इति ब्रह्मवर्चसी हैव भवति य एवं विद्वानग्निहोत्रं जुहोति - २.३.१.[३१]

तद्वस्त्येव प्रजननस्येव रूपम् । अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति तदुभयतो ज्योती रेतो देवतया परिगृह्णात्युभयतः परिगृहीतं वै रेतः प्रजायते तदुभयत एवैतत्परिगृह्य प्रजनयति - २.३.१.[३२]

अथ प्रातः । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति तदुभयतो ज्योती रेतो देवतया परिगृह्णात्युभयतः परिगृहीतं वै रेतः प्रजायते तदुभयत एवैतत्परिगृह्य प्रजनयति तत्प्रजननस्य रूपम् - २.३.१.[३३]

तदु होवाच जीवलश्चैलकिः । गर्भमेवारुणिः करोति न प्रजनयतीति स एतेनैव सायं जुहुयात् - २.३.१.[३४]



अथ प्रातः । ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहेति तद्बहिर्धा ज्योती रेतो देवतया करोति बहिर्धा वै रेतः प्रजातं भवति तदेनत्प्रजनयति - २.३.१.[३५]

तदाहुः । अग्नावेवैतत्सायं सूर्यं जुहोति सूर्ये प्रातरग्निमिति तद्वैतदुदितहोमिनामेव यदा ह्येव सूर्योऽस्तमेत्यथाग्निर्ज्योतिर्यदा सूर्य उदेत्यथ सूर्यो ज्योतिर्नास्य सा परिचक्षेयमेव परिचक्षा यत्तस्यै नाद्धा देवतायै हूयते याग्निहोत्रस्य देवताग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति तत्र नाग्नये स्वाहेत्यथ प्रातः सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति तत्र न सूर्याय स्वाहेति - २.३.१.[३६]

अनेनैव जुहुयात् । सजूर्देवेन सवित्रेति तत्सवितृमत्प्रसवाय सजू रात्र्येन्द्रवत्येति तद्रात्र्या मिथुनं करोति सेन्द्रं करोतीन्द्रो हि यज्ञस्य देवता जुषाणो अग्निर्वेतु स्वाहेति तदग्नये प्रत्यक्षं जुहोति - २.३.१.[३७]

अथ प्रातः । सजूर्देवेन सवित्रेति तत्सवितृमत्प्रसवाय सजूरुषसेन्द्रवत्येत्यह्वेति वा तदह्वां वोषसां वा मिथुनं करोति सेन्द्रं करोतीन्द्रो हि यज्ञस्य देवता जुषाणः सूर्यो वेतु स्वाहेति तत्सूर्याय प्रत्यक्षं जुहोति तस्मादेवमेव जुहुयात् - २.३.१.[३८]

ते होचुः । को न इदं होष्यतीति ब्राह्मण एवेति ब्राह्मणेदं नो जुहुधीति किं मे ततो भविष्यतीत्यग्निहोत्रोच्छिष्टमेवेति स यत्स्रुचि परिशिनष्टि तदग्निहोत्रोच्छिष्टमथ यत्स्थाल्यां यथा परीणहो निर्वपेदेवं तत्तस्मात्तद्य एव कश्च पिबेत्तद्वै नाब्राह्मणः पिबेदग्नौ ह्यधिश्रयन्ति तस्मान्नाब्राह्मणः पिबेत् - २.३.१.[३९]

##२.३.२.

एता ह वै देवता योऽस्ति । तस्मिन्वसन्तीन्द्रो यमो राजा नडो नैषिधोऽनश्नन्त्सांगमनोऽसन्पांसवः - २.३.२.[१]



तद्वा एष एवेन्द्रः । यदाहवनीयोऽथैष एव गार्हपत्यो यमो राजाथैष एव नडो नैषिधो यदन्वाहार्यपचनस्तद्यदेतमहरहर्दक्षिणत आहरन्ति तस्मादाहुरहरहर्वै नडो नैषिधो यमं राजानं दक्षिणत उपनयतीति - २.३.२.[२]

अथ य एष सभायामग्निः । एष एवानश्नन्त्सांगमनस्तद्यदेतमनशित्वेवोपसंगच्छन्ते तस्मादेषोऽनश्नन्नथ यदेतद्भस्मोद्धृत्य परावपन्त्येष एवासन्पांसवः स यो हैवमेतद्वेदैवम्मय्येता देवता वसन्तीति सर्वान्हैवैतांल्लोकाञ्जयति सर्वांल्लोकाननुसंचरति - २.३.२.[३]

तेषामुपस्थानम् । यदेव सायं प्रातराहवनीयमुप च तिष्ठत उप चास्ते तदेव तस्योपस्थानमथ यदेव प्रतिपरेत्य गार्हपत्यमास्ते वा शेते वा तदेव तस्योपस्थानमथ यत्रैव संव्रजन्नन्वाहार्यपचनमुपस्मरेत्तदेव तम्मनसोपतिष्ठेत तदेव तस्योपस्थानम् - २.३.२.[४]

अथ प्रातः । अनशित्वा मुहूर्तं सभायामासित्वापि कामं पल्ययेत तदेव तस्योपस्थानमथ यत्रैव भस्मोद्धृतमुपनिगच्छेत्तदेव तस्योपस्थानमेवमु हास्यैता देवता उपस्थिता भवन्ति - २.३.२.[५]

यजमानदेवत्यो वै गार्हपत्यः । अथैष भ्रातृव्यदेवत्यो यदन्वाहार्यपचनस्तस्मादेतं नाहरहराहरेयुर्न ह वा अस्य सपत्ना भवन्ति यस्यैवं विदुष एतं नाहरहराहरन्त्यन्वाहार्यपचनो वा एषः - २.३.२.[६]

उपवसथ एवैनमाहरेयुः । यत्रैवास्मिन्यक्ष्यन्तो भवन्ति तथो हास्यैषोऽमोघायाहृतो भवति - २.३.२.[७]

नवावसिते वैनमाहरेयुः । तस्मिन्पचेयुस्तद्ब्राह्मणा अश्नीयुर्यद्यु तन्न विन्देद्यत्पचेदपि गोरेव दुग्धमधिश्रयितवै ब्रूयात्तस्मिन्ब्राह्मणान्पाययितवै ब्रूयात्पापीयांसो ह वा अस्य सपत्ना भवन्ति यस्यैवं विदुष एवं कुर्वन्ति तस्मादेवमेव चिकीर्षेत् - २.३.२.[८]



तद्यत्रैतत्प्रथमं समिद्धो भवति । धूप्यत इव तर्हि हैष भवति रुद्रः स यः कामयेत यथेमा रुद्रः प्रजा अश्रद्धयेव त्वत्सहसेव त्वन्निघातमिवत्वत्सचत एवमन्नमद्यामिति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं य एवं विद्वांस्तर्हि जुहोति - २.३.२.[९]

अथ यत्रैतत्प्रदीप्ततरो भवति । तर्हि हैष भवति वरुणः स यः कामयेत यथेमा वरुणः प्रजा गृह्णन्निव त्वत्सहसेव त्वन्निघातमिव त्वत्सचत एवमन्नमद्यामिति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं य एवं विद्वांस्तर्हि जुहोति - २.३.२.[१०]

अथ यत्रैतत्प्रदीप्तो भवति । उच्चैर्धूमः परमया जूत्या बल्बलीति तर्हि हैष भवतीन्द्रः स यः कामयेतेन्द्रैव श्रिया यशसा स्यामिति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं य एवं विद्वांस्तर्हि जुहोति - २.३.२.[११]

अथ यत्रैतत्प्रतितरामिव । तिरश्चीवार्चिः संशाम्यतो भवति तर्हि हैष भवति मित्रः स यः कामयेत मैत्रेणेदमन्नमद्यामिति यमाहुः सर्वस्य वा अयम्ब्राह्मणो मित्रं न वा अयं कं चन हिनस्तीति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं य एवं विद्वांस्तर्हि जुहोति - २.३.२.[१२]

अथ यत्रैतदङ्गाराश्चाकश्यन्त इव । तर्हि हैष भवति ब्रह्म स यः कामयेत ब्रह्मवर्चसी स्यामिति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं य एवं विद्वांस्तर्हि जुहोति - २.३.२.[१३]

एतेषामेकं संवत्सरमुपेर्त्सेत् । स्वयं जुह्वद्यदि वास्यान्यो जुहुयादथ योऽन्यथान्यथा जुहोति यथापो वाभिखनन्नन्यद्वान्नाद्यं स सामि निवर्तेतैवं तदथ यः सार्धं जुहोति यथापो वाभिखनन्नन्यद्वान्नाद्यं तत्क्षिप्रेऽभितृन्द्यादेवं तत् - २.३.२.[१४]

अभ्रयो ह वा एता अन्नाद्यस्य यदाहुतयः । अभि हैवैतदन्नाद्यं तृणत्ति य एवं विद्वानग्निहोत्रं जुहोति - २.३.२.[१५]



सा या पूर्वाहुतिः । ते देवा अथ योत्तरा ते मनुष्या अथ यत्स्रुचि परिशिनष्टि ते पशवः - २.३.२.[१६]

स वै कनीय इव पूर्वामाहुतिं जुहोति । भूय इवोत्तरां भूय इव स्रुचि परिशिनष्टि - २.३.२.[१७]

स यत्कनीय इव पूर्वामाहुतिं जुहोति । कनीयांसो हि देवा मनुष्येभ्योऽथ यद्भूय इवोत्तरां भूयांसो हि मनुष्या देवेभ्योऽथ यद्भूय इव स्रुचि परिशिनष्टि भूयांसो हि पशवो मनुष्येभ्यः कनीयांसो ह वा अस्य भार्या भवन्ति भूयांसः पशवो य एवं विद्वानग्निहोत्रं जुहोति तद्वै समृद्धं यस्य कनीयांसो भार्या असन्भूयांसः पशवः - २.३.२.[१८]

##२.३.३.

यत्र वै प्रजापतिः प्रजाः ससृजे । स यत्राग्निं ससृजे स इदं जातः सर्वमेव दग्धुं दध्र इत्येवाबिलमेव ता यास्तर्हि प्रजा आसुस्ता हैनं सम्पेष्टुं दध्रिरे सोऽतितिक्षमाणः पुरुषमेवाभ्येयाय - २.३.३.[१]

स होवाच । न वा अहमिदं तितिक्षे हन्त त्वा प्रविशानि तं मा जनयित्वा बिभृहि स यथैव मां त्वमस्मिंलोके जनयित्वा भरिष्यस्येवमेवाहं त्वाममुष्मिंलोके जनयित्वा भरिष्यामीति तथेति तं जनयित्वाऽबिभः - २.३.३.[२]

स यदग्नी आधत्ते । तदेनं जनयति तं जनयित्वा बिभर्ति स यथा हैवैष एतमस्मिंलोके जनयित्वा बिभर्त्येवमु हैवैष एतममुष्मिंलोके जनयित्वा बिभर्ति - २.३.३.[३]

तन्न साम्युद्वासयेत । सामि हास्मै स ग्लायति स यथा हैवैष एतस्मा अस्मिंलोके सामि ग्लायत्येवमु हैवैष एतस्मा अमुष्मिंल्लोके सामि ग्लायति तस्मान्न साम्युद्वासयेत - २.३.३.[४]



स यत्र म्रियते । यत्रैनमग्नावभ्यादधति तदेषोऽग्नेरधिजायते स एष पुत्रः सन्पिता भवति - २.३.३.[५]

तस्मादेतदृषिणाभ्यनूक्तम् । शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनां पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोरिति पुत्रो ह्येष सन्त्स पुनः पिता भवत्येतन्नु तद्यस्मादग्नी आदधीत - २.३.३.[६]

तद्वा एष एव मृत्युः । स एष तपति तद्यदेष एव मृत्युस्तस्माद्या एतस्मादर्वाच्यः प्रजास्ता म्रियन्तेऽथ याः पराच्यस्ते देवास्तस्मादु तेऽमृतास्तस्येमाः सर्वाः प्रजा रश्मिभिः प्राणेष्वभिहितास्तस्मादु रश्मयः प्राणानभ्यवतायन्ते - २.३.३.[७]

स यस्य कामयते । तस्य प्राणमादायोदेति स म्रियते स यो हैतम्मृत्युमनतिमुच्याथामुं लोकमेति यथा हैवास्मिंलोके न संयतमाद्रियते यदायदैव कामयतेऽथ मारयत्येवमु हैवामुष्मिंलोके पुनःपुनरेव प्रमारयति - २.३.३.[८]

स यत्सायमस्तमिते द्वे आहुती जुहोति । तदेताभ्यां पूर्वाभ्याम्पद्भ्यामेतस्मिन्मृत्यौ प्रतितिष्ठत्यथ यत्प्रातरनुदिते द्वे आहुती जुहोति तदेताभ्यामपराभ्यां पद्भ्यामेतस्मिन्मृत्यौ प्रतितिष्ठित स एनमेष उद्यन्नेवादायोदेति तदेतं मृत्युमतिमुच्यते सैषाग्निहोत्रे मृत्योरतिमुक्तिरति ह वै पुनर्मृत्युं मुच्यते य एवमेतामग्निहोत्रे मृत्योरतिमुक्तिं वेद - २.३.३.[९]

यथा वा इषोरनीकम् । एवं यज्ञानामग्निहोत्रं येन वा इषोरनीकमेति सर्वा वै तेनेषुरेत्येतेनो हास्य सर्वे यज्ञक्रतव एतं मृत्युमतिमुक्ताः - २.३.३.[१०]



अहोरात्रे ह वा अमुष्मिंलोके परिप्लवमाने । पुरुषस्य सुकृतं क्षिणुतोऽर्वाचीनं वा अतोऽहोरात्रे तथो हास्याहोरात्रे सुकृतं न क्षिणुतः - २.३.३.[११]

स यथा रथोपस्थे तिष्ठन् । उपरिष्टाद्रथचक्रे पल्यङ्ज्यमाने उपावेक्षेतैवम्परस्तादर्वाचीनोऽहोरात्रे उपावेक्षते न ह वा अस्याहोरात्रे सुकृतं क्षिणुतो य एवमेतामहोरात्रयोरतिमुक्तिं वेद - २.३.३.[१२]

पूर्वेणाहवनीयं परीत्य । अन्तरेण गार्हपत्यं चैति न वै देवा मनुष्यं विदुस्त एनमेतदन्तरेणातियन्तं विदुरयं वै न इदं जुहोतीत्यग्निर्वै पाप्मनोऽपहन्ता तावस्याहवनीयश्च गार्हपत्यश्चान्तरेणातियतः पाप्मानमपहतः सोऽपहतपाप्मा ज्योतिरेव श्रिया यशसा भवति - २.३.३.[१३]

उत्तरतो वा अग्निहोत्रस्य द्वारम् । स यथा द्वारा प्रपद्येतैवं तदथ यो दक्षिणत एत्यास्ते यथा बहिर्धा चरेदेवं तत् - २.३.३.[१४]

नौर्ह वा एषा स्वर्ग्या । यदग्निहोत्रं तस्या एतस्यै नावः स्वर्ग्याया आहवनीयश्चैव गार्हपत्यश्च नौमण्डे अथैष एव नावाजो यत्क्षीरहोता - २.३.३.[१५]

स यत्प्राङ्पोदैति । तदेनां प्राचीमभ्यजति स्वर्गं लोकमभि तया स्वर्गं लोकं समश्नुते तस्या उत्तरत आरोहणं सैनं स्वर्गं लोकं समापयत्यथ यो दक्षिणत एत्यास्ते यथा प्रतीर्णायामागच्छेत्स विहीयेत स तत एव बहिर्धा स्यादेवं तत् - २.३.३.[१६]

अथ यामेतां समिधमभ्यादधाति सेष्टका येन मन्त्रेण जुहोति तद्यजुर्येनैतामिष्टकामुपदधाति यदा वा इष्टकोपधीयतेऽथाहुतिर्हूयते तदस्योपहितास्वेवेष्टकास्वेता आहुतयो हूयन्ते या एता अग्निहोत्राहुतयः - २.३.३.[१७]

प्रजापतिर्वा अग्निः । संवत्सरो वै प्रजापतिः संवत्सरेसंवत्सरे ह वा अस्याग्निहोत्रं चित्येनाग्निना संतिष्ठते संवत्सरेसंवत्सरे चित्यमग्निमाप्नोति य एवं विद्वानग्निहोत्रं जुहोत्येतदु हास्याग्निहोत्रं चित्येनाग्निना संतिष्ठते चित्यमग्निमाप्नोति - २.३.३.[१८]

सप्त च वै शतान्यशीतीनामृचः । विंशतिश्च स यत्सायं प्रातरग्निहोत्रं जुहोति ते द्वे आहुती ता अस्य संवत्सर आहुतयः सम्पद्यन्ते - २.३.३.[१९]

सप्त चैव शतानि विंशतिश्च । संवत्सरे संवत्सरे ह वा अस्याग्निहोत्रम्महतोक्थेन सम्पद्यते संवत्सरे संवत्सरे महदुक्थमाप्नोति य एवं विद्वानग्निहोत्रं जुहोत्येतदु हास्याग्निहोत्रं महतोक्थेन सम्पद्यते महदुक्थमाप्नोति - २.३.३.[२०]

##२.३.४

अग्नौ ह वै देवाः । सर्वान्पशून्निदधिरे ये च ग्राम्या ये चारण्या विजयं वोपप्रैष्यन्तः कामचारस्य वा कामायायं नो गोपिष्ठो गोपायदिति वा - २.३.४.[१]

तानु हाग्निर्निचक्रमे । तैः सम्गृह्य रात्रिं प्रविवेश पुनरेम इति देवा एदग्निं तिरोभूतं ते ह विदांचक्रुरिह वै प्राविक्षद्रात्रिं वै प्राविक्षदिति तमेतत्प्रत्यायत्यां रात्रौ सायमुपातिष्ठन्त देहि नः पशून्पुनर्नः पशून्देहीति तेभ्योऽग्निः पशून्पुनरददात् - २.३.४.[२]

तस्मै कमग्नी उपतिष्ठेत । अग्नी वै दातारौ तावेवैतद्याचते सायमुपतिष्ठेत सायं हि देवा उपातिष्ठन्त दत्तो हैवास्मा एतौ पशून्य एवं विद्वानुपतिष्ठते - २.३.४.[३]

अथ यस्मान्नोपतिष्ठेत । उभये ह वा इदमग्रे सहासुर्देवाश्च मनुष्याश्च तद्यद्ध स्म मनुष्याणां न भवति तद्ध स्म देवान्याचन्त इदं वै नो नास्तीदं नोऽस्त्विति ते तस्या एव याञ्चायै द्वेषेण देवास्तिरोभूता नेद्धिनसानि नेद्द्वेष्योऽसानीति तस्मान्नोपतिष्ठेत- २.३.४.[४]

अथ यस्मादुपैव तिष्ठेत । यज्ञो वै देवानामाशीर्यजमानस्य तद्वा एष एव यज्ञो यदाहुतिराशीरेव यजमानस्य तद्यदेवास्यात्र तदेवैतदुपतिष्ठमानः कुरुते तस्मादुपैव तिष्ठेत - २.३.४.[५]



अथ यस्मान्नोपतिष्ठेत । यो वै ब्राह्मणं वा शंसमानोऽनुचरति क्षत्रियं वा यं मे दास्यत्ययं मे गृहान् करिष्यतीति यो वै तं वाद्येन वा कर्मणा वाभिरिराधयिषति तस्मै वै स देयं मन्यतेऽथ य आह किं नु त्वं ममासि यो मे न ददासीतीश्वर एनं द्वेष्टोरीश्वरो निर्वेदं गन्तोस्तस्मान्नोपतिष्ठेतैतदित्त्वेवैष एत याचते यदिद्धे यज्जुहोति तस्मान्नोपतिष्ठेत - २.३.४.[६]

अथ यस्मादुपैव तिष्ठेत । उत वै याच्छन्दातारं लभत एवोतो भर्ता भार्यं नानुबुध्यते स यदैवाह भार्यो वै तेऽस्मि बिभृहि मेत्यथैनं वेदाथैनम्भार्यं मन्यते तस्मादुपैव तिष्ठेतेदमित्तु समस्तं यस्मादुपतिष्ठेत - २.३.४.[७]

प्रजापतिर्वा एष भूत्वा । यावत ईष्टे यावदेनमनु तस्य रेतः सिञ्चति यदग्निहोत्रं जुहोतीदमेवैतत्सर्वमुपतिष्ठमानोऽनुविकरोतीदं सर्वमनुप्रजनयति - २.३.४.[८]

स वा उपवत्या प्रतिपद्यते । इयं वा उप द्वयेनेयमुप यद्धीदं किं च जायतेऽस्यां तदुपजायतेऽथ यन्म्रियच्छत्यस्यामेव तदुपोप्यते तदह्ना रात्र्या भूयोभूय एवाक्षय्यं भवति तदक्षय्येणैवैतद्भूम्ना प्रतिपद्यते - २.३.४.[९]

स आह । उपप्रयन्तो अध्वरमित्यध्वरो वै यज्ञ उपप्रयन्तो यज्ञमित्येवैतदाह मन्त्रं वोचेमाग्नय इति मन्त्रमु ह्यस्मा एतद्वक्ष्यन्भवत्यारे अस्मे च शृण्वत इति यद्यप्यस्मदारकादस्यथ न एतच्छृण्वेवैवमेवैतन्मन्यस्वेत्येवैतदाह - २.३.४.[१०]

अग्निर्मूर्धा दिवः । ककुत्पतिः पृथिव्या अयमपां रेतांसि जिन्वतीत्यन्वेव धावति तद्यथा याचन् कल्याणं वदेदामुष्यायणो वै त्वमस्यलं वै त्वमेतस्मा असीत्येवमेषा - २.३.४.[११]



अथैन्द्राग्नी । उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै उभा दाताराविषां रयीणामुभा वाजस्य सातये हुवे वामित्येष वा इन्द्रो य एष तपति स यदस्तमेति तदाहवनीयं प्रविशति तदुभावेवैतत्सह सन्ता उपतिष्ठत उभौ मे सह सन्तौ दत्तामिति तस्मादैन्द्राग्नी - २.३.४.[१२]

अयं ते योनिर्ऋत्वियः । यतो जातो अरोचथाः तं जानन्नग्न आरोहाथा नो वर्धया रयिमिति पुष्टं वै रयिर्भूयो भूय एव न इदं पुष्टं कुर्वित्येवैतदाह - २.३.४.[१३]

अयमिह प्रथमः । धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे विश इत्यन्वेव धावति तद्यथा याचन्कल्याणं वदेदामुष्यायणो वै त्वमस्यलं वै त्वमेतस्मा असीत्येवमेषा यथो एवैष तथो एवैनमेतदाह यदाह विभ्वं विशे विश इति विभूर्ह्येष विशे विशे - २.३.४.[१४]

अस्य प्रत्नाम् । अनु द्युतं शुक्रं दुदुह्रे अह्रयः पयः सहस्रसामृषिमिति परमा वा एषा सनीनां यत्सहस्रसनिस्तदेतस्यैवावरुद्धै तस्मादाह पयः सहस्रसामृषिमिति - २.३.४.[१५]

तदेतत्समाहार्यं षड्डृचम् । तस्योपवती प्रथमा प्रत्नवत्युत्तमावोचाम तद्यस्मादुपवत्यथाद एव प्रत्नं यावन्तो ह्येव सनाग्रे देवास्तावन्त एव देवास्तस्माददः प्रत्नं तदिमे एवान्तरेण सर्वे कामास्ते अस्मा इमे संजानाने सर्वान् कामान्त्संनमतः - २.३.४.[१६]

स वै त्रिः प्रथमां जपति । त्रिरुत्तमां त्रिवृत्प्रायणा हि यज्ञास्त्रिवृदुदयनास्तस्मात्त्रिः प्रथमां जपति त्रिरुत्तमाम् - २.३.४.[१७]

यद्ध वा अत्राग्निहोत्रं जुह्वत् । वाद्येन वा कर्मणा वा मिथ्या करोत्यात्मनस्तदवद्यत्यायुषो वा वर्चसो वा प्रजायै वा - २.३.४.[१८]



तदु खलु तनूपा अग्नेऽसि । तन्वं मे पाह्यायुर्दा अग्नेऽस्यायुर्मे देहि वर्चोदा अग्नेऽसि वर्चो मे देहि अग्ने यन्मे तन्वा ऊनं तन्म आप्रणेति - २.३.४.[१९]

यद्ध वा अत्राग्निहोत्रं जुह्वत् । वाद्येन वा कर्मणा वा मिथ्याकरोत्यात्मनस्तदवद्यत्यायुषो वा वर्चसो वा प्रजायै वा तन्मे पुनराप्याययेत्येवैतदाह तथो हास्यैतत्पुनराप्यायते - २.३.४.[२०]

इन्धानास्त्वा । शतं हिमा द्युमन्तं समिधीमहीति शतं वर्षाणि जीव्यास्मेत्येवैतदाह तावत्त्वा महान्तं समिधीमहीति यदाह द्युमन्तं समिधीमहीति वयस्वन्तो वयस्कृतं सहस्वन्तः सहस्कृतमिति वयस्वन्तो वयम्भूयास्म वयस्कृत्त्वं भूया इत्येवैतदाह सहस्वन्तो वयं भूयास्म सहस्कृत्त्वं भूया इत्येवैतदाहाग्ने सपत्नदम्भनमदब्धासो अदाभ्यमिति त्वया वयं सपत्नान्पापीयसः क्रियास्मेत्येवैतदाह - २.३.४.[२१]

चित्रावसो स्वस्ति ते पारमशीयेति । त्रिरेतज्जपति रात्रिर्वै चित्रावसुः सा हीयं संगृह्येव

चित्राणि वसति तस्मान्नारकाच्चित्रं दद्दशे - २.३.४.[२२]

एतेन ह स्म वा ऋषयः । रात्रेः स्वस्ति पारं समश्नुवत एतेनो ह स्मैनान्रात्रेर्नाष्ट्रा रक्षांसि न विन्दन्त्येतेनो एवैष एतद्रात्रेः स्वस्ति पारं समश्नुत एतेनो एनं रात्रेर्नाष्ट्रा रक्षांसि न विन्दन्त्येतावन्नु तिष्ठञ्जपति - २.३.४.[२३]

अथासीनः । सं त्वमग्ने सूर्यस्य वर्चसागथा इति तद्यदस्तं यन्नादित्य आहवनीयं प्रविशति तेनैतदाह समृषीणां स्तुतेनेति तद्यदुपतिष्ठते तेनैतदाह सं प्रियेण धाम्नेत्याहुतयो वा अस्य प्रियं धामाहुतिभिरेव तदाह समहमायुषा सं वर्चसा सं प्रजया सं रायस्पोषेण ग्मिषीयेति यथा त्वमेतैः समगथा एवमहमायुषा वर्चसा प्रजया रायस्पोषेणेति यद्भूम्नेति तदेवमहमेतैः संगच्छा इत्येवैतदाह - २.३.४.[२४]

अथ गामभ्यैति । अन्ध स्थान्धो वो भक्षीय मह स्थ महो वो भक्षीयेति यानि वो वीर्याणि यानि वो महांसि तानि वो भक्षीयेत्येवैतदाहोर्ज स्थोर्जं वो भक्षीयेति रस स्थ रसं वो भक्षीयेत्येवैतदाह रायस्पोष स्थ रायस्पोषं वो भक्षीयेति भूमा स्थ भूमानं वो भक्षीयेत्येवैतदाह - २.३.४.[२५]



रेवती रमध्वमिति रेवन्तो हि पशवस्तस्मादाह रेवती रमध्वमित्यस्मिन्योनावस्मिन् गोष्ठेऽस्मिंलोकेऽस्मिन् क्षये । इहैव स्तमापगातेत्यात्मन एवैतदाह मदेव मापगातेति - २.३.४.[२६]

अथ गामभिमृशति । संहितासि विश्वरूपीति विश्वरूपा इव हि पशवस्तस्मादाह विश्वरूपीत्यूर्जा माविश गौपत्येनेत्यूर्जेति यदाह रसेनेति तदाह गौपत्येनेति यदाह भूम्नेति तदाह - २.३.४.[२७]

अथ गार्हपत्यमभ्यैति । स गार्हपत्यमुपतिष्ठत उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयं नमो भरन्त एमसीति नम एवास्मा एतत्करोति यथैनं न हिंस्यात् - २.३.४.[२८]

राजन्तमध्वराणाम् । गोपामृतस्य दीदिविं वर्धमानं स्वे दम इति स्वं वै त इदं यन्मम तन्नो भूयो भूय एव कुर्वित्येवैतदाह - २.३.४.[२९]

स नः पितेव सूनवे । अग्ने सूपायनो भव सचस्वा नः स्वस्तय इति यथा पिता पुत्राय सूपचरो नैवैनं केन चन हिनस्त्येवं नः सूपचर एधि मैव त्वा केन चन हिंसिष्मेत्येवैतदाह - २.३.४.[३०]

अथ द्विपदाः । अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमं रयिं दाः तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः स नो बोधि श्रुधी हवमुरुष्या णो अघायतः समस्मादिति - २.३.४.[३१]

यद्वा आहवनीयमुपतिष्ठते । पशूंस्तद्याचते तस्मात्तमुच्चावचैश्छन्दोभिरुपतिष्ठत उच्चावचा इव हि पशवोऽथ यद्गार्हपत्यं पुरुषांस्तद्याचते तद्गायत्रं प्रथमं त्रिचं गायत्रं वा अग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसोपपरैति - २.३.४.[३२]

अथ द्विपदाः । पुरुषच्छन्दसं वै द्विपदा द्विपाद्वा अयं पुरुषः पुरुषानेवैतद्याचते पुरुषान्हि याचते तस्माद्द्विपदाः पशुमान्ह वै पुरुषवान्भवति य एवं विद्वानुपतिष्ठते - २.३.४.[३३]

अथ गामभ्यैति । इड एह्यदित एहीतीडा हि गौरदितिर्हि गौस्तामभिमृशति काम्या एतेति मनुष्याणां ह्येतासु कामाः प्रविष्टास्तस्मादाह काम्या एतेति मयि वः कामधरणं भूयादित्यहं वः प्रियो भूयासमित्येवैतदाह - २.३.४.[३४]

अथान्तरेणाहवनीयं च गार्हपत्यं च । प्राङ्तिष्ठन्नग्निमीक्षमाणो जपति सोमानं स्वरणं कृणुहि ब्रह्मणस्पते कक्षीवन्तं य औशिजः यो रेवान्यो अमीवहा वसुवित्पुष्टिवर्धनः स नः सिषक्तु यस्तुरः मा नः शंसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य रक्षा णो ब्रह्मणस्पत इति - २.३.४.[३५]

यद्वा आहवनीयमुपतिष्ठते । दिवं तदुपतिष्ठतेऽथ यद्गार्हपत्यं पृथिवीं तदथैतदन्तरिक्षमेषा हि दिग्बृहस्पतेरेतं ह्येतद्दिशमुपतिष्ठते तस्माद्बार्हस्पत्यं जपति - २.३.४.[३६]

महि त्रीणामवोऽस्तु । द्युक्षं मित्रस्यार्यम्णः दुराधर्षं वरुणस्य न हि तेषाममा चन नाध्वसु वारणेषु ईशे रिपुरघशंसः ते हि पुत्रासो अदितेः प्रजीवसे मर्त्याय ज्योतिर्यच्छन्त्यजस्रमिति तत्रास्ति नाध्वसु वारणेष्वित्येति ह वा अध्वानो वारणा य इमेऽन्तरेण द्यावापृथिवी एतान्ह्येतदुपतिष्ठते तस्मादाह नाध्वसु वारणेष्विति - २.३.४.[३७]

अथैन्द्री । इन्द्रो वै यज्ञस्य देवता सेन्द्रमेवैतदग्न्युपस्थानं कुरुते कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुष इति यजमानो वै दाश्वान्न यजमानाय द्रुह्यसीत्येवैतदाहोपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यत इति भूयो भूय एव न इदं पुष्टं कुर्वित्येवैतदाह - २.३.४.[३८]

अथ सावित्री । सविता वै देवानां प्रसविता तथो हास्मा एते सवितृप्रसूता एव सर्वे कामाः समृध्यन्ते तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयादिति- २.३.४.[३९]



अथाग्नेयी । तदग्नय एवैतदात्मानमन्ततः परिददाति गुप्त्यै परि ते दूडभो रथोऽस्मानश्नोतु विश्वतः येन रक्षसि दाशुष इति यजमाना वै दाश्वांसो यो ह वा अस्यानाधृष्यतमो रथस्तेनैष यजमानानभिरक्षति स यस्तेऽनाधृष्यतमो रथो येन यजमानानभिरक्षसि तेन नः सर्वतोऽभिगोपायेत्येवैतदाह त्रिरेतज्जपति- २.३.४.[४०]

अथ पुत्रस्य नाम गृह्णाति । इदं मेऽयं वीर्यं पुत्रोऽनुसंतनवदिति यदि पुत्रो न स्यादप्यात्मन एव नाम गृह्णीयात् - २.३.४.[४१]

##२.४.१.
अथ हुतेऽग्निहोत्र उपतिष्ठते । भूर्भुवः स्वरिति तत्सत्येनैवैतद्वाचं समर्धयति यदाह भूर्भुवः स्वरिति तया समृद्धयाशिषमाशास्ते सुपोषः पोषैरिति तत्पुष्टिमाशास्ते - २.४.१.[१]

यद्वा अदो दीर्घमग्न्युपस्थानम् । आशीरेव साशीरियं तदेतावतैवैतत्सर्वमाप्नोति तस्मादेतेनैवोपतिष्ठेतैतेन न्वेव वयमुपचराम इति ह स्माहासुरिः - २.४.१.[२]

अथ प्रवत्स्यन् । गार्हपत्यमेवाग्र उपतिष्ठतेऽथाहवनीयं - २.४.१.[३]

स गार्हपत्यमुपतिष्ठते । नर्य प्रजां मे पाहीति प्रजाया हैष ईष्टे तत्प्रजामेवास्मा एतत्परिददाति गुप्त्यै - २.४.१.[४]

अथाहवनीयमुपतिष्ठते । शंस्य पशून्मे पाहीति पशूनां हैष ईष्टे तत्पशूनेवास्मा एतत्परिददाति गुप्त्यै - २.४.१.[५]

अथ प्र वा व्रजति प्र वा धावयति । स यत्र वेलां मन्यते तत्स्यन्त्वा वाचं विसृजतेऽथ प्रोष्य परेक्ष्य यत्र वेलां मन्यते तद्वाचं यच्छति स यद्यपि राजान्तरेण स्यान्नैव तमुपेयात् - २.४.१.[६]



स आहवनीयमेवाग्र उपतिष्ठते । अथ गार्हपत्यं गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तद्गृहेष्वेवैतत्प्रतिष्ठायां प्रतितिष्ठति - २.४.१.[७]

स आहवनीयमुपतिष्ठते । आगन्म विश्ववेदसमस्मभ्यं वसुवित्तममग्ने सम्राडभि द्युम्नमभि सह आयच्छस्वेत्यथोपविश्य तृणान्यपलुम्पति - २.४.१.[८]

अथ गार्हपत्यमुपतिष्ठते । अयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः अग्ने गृहपतेऽभि द्युम्नमभि सह आयच्छस्वेत्यथोपविश्य तृणान्यपलुम्पत्येतन्नु जपेनैतेन न्वेव भूयिष्ठा इवोपतिष्ठन्ते - २.४.१.[९]

स वै खलु तूष्णीमेवोपतिष्ठेत । इदं वै यस्मिन्वसति ब्राह्मणो वा राजा वा श्रेयान्मनुष्यो न्वेव तमेव नार्हति वक्तुमिदं मे त्वं गोपाय प्राहं वत्स्यामीत्यथास्मिन्नेते श्रेयांसो वसन्ति देवा अग्नयः क उ तानर्हति वक्तुमिदम्मे यूयं गोपायत प्राहं वत्स्यामीति - २.४.१.[१०]

मनो ह वै देवा मनुष्यस्याजानन्ति । स वेद गार्हपत्यः परिदाम्मेदमुपागादिति तूष्णीमेवाहवनीयमुपतिष्ठते स वेदाहवनीयः परिदां मेदमुपागादिति – २.४.२.११

अथ प्र वा व्रजति प्र वा धावयति । स यत्र वेलां मन्यते तत्स्यत्त्वा वाचं विसृजतेऽथ प्रोष्य परेक्ष्य यत्र वेलां मन्यते तद्वाचं यच्छति स यद्यपि राजान्तरेण स्यान्नैव तमुपेयात् - २.४.१.[१२]

स आहवनीयमेवाग्र उपतिष्ठते । अथ गार्हपत्यं तूष्णीमेवाहवनीयमुपतिष्ठते तूष्णीमुपविश्य तृणान्यपलुम्पति तूष्णीमेव गार्हपत्यमुपतिष्ठते तूष्णीमुपविश्य तृणान्यपलुम्पति - २.४.१.[१३]



अथातो गृहाणामेवोपचारः । एतद्ध वै गृहपतेः प्रोषुष आगताद्गृहाः समुत्त्रस्ता इव भवन्ति किमयमिह वदिष्यति किं वा करिष्यतीति स यो ह तत्र किंचिद्वदति वा करोति वा तस्माद्गृहाः प्रत्रसन्ति तस्येश्वरः कुलं विक्षोब्धोरथ यो ह तत्र न वदति न किं चन करोति तं गृहा उपसंश्रयन्ते न वा अयमिहावादीन्न किंचनाकरदिति स यदिहापि सुक्रुद्ध इव स्याच्छ्व एव ततस्तत्कुर्याद्यद्वदिष्यन्वा करिष्यन्वा स्यादेष उ गृहाणामुपचारः - २.४.१.[१४]

##२.४.२.

प्रजापतिं वै भूतान्युपासीदन् । प्रजा वै भूतानि वि नो धेहि यथा जीवामेति ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदंस्तानब्रवीद्यज्ञो वोऽन्नममृतत्वं व ऊर्ग्वः सूर्यो वो ज्योतिरिति - २.४.२.[१]

अथैनं पितरः । प्राचीनावीतिनः सव्यं जान्वाच्योपासीदंस्तानब्रवीन्मासिमासि वोऽशनं स्वधा वो मनोजवी वश्चन्द्रमा वो ज्योतिरिरिति - २.४.२.[२]

अथैनं मनुष्याः । प्रावृता उपस्थं कृत्वोपासीदंस्तानब्रवीत्सायं प्रातर्वोऽशनं प्रजा वो मृत्युर्वोऽग्निर्वो ज्योतिरिरिति - २.४.२.[३]

अथैनं पशव उपासीदन् । तेभ्यः स्वैषमेव चकार यदैव यूयं कदा च लभाध्वै यदि काले यद्यनाकालेऽथैवाश्नाथेति तस्मादेते यदैव कदा च लभन्ते यदि काले यद्यनाकालेऽथैवाश्नन्ति - २.४.२.[४]

अथ हैनं शश्वदप्यसुरा उपसेदुरित्याहुः । तेभ्यस्तमश्च मायां च प्रददावस्त्यहैवासुरमायेतीव पराभूता ह त्वेव ताः प्रजास्ता इमाः प्रजास्तथैवोपजीवन्ति यथैवाभ्यः प्रजापतिर्व्यदधात् - २.४.२.[५]



नैव देवा अतिक्रामन्ति । न पितरो न पशवो मनुष्या एवैकेऽतिक्रामन्ति तस्माद्यो मनुष्याणां मेद्यत्यशुभे मेद्यति विहूर्च्छति हि न ह्ययनाय चन भवत्यनृतं हि कृत्वा मेद्यति तस्मादु सायम्प्रातराश्येव स्यात्स यो हैवं विद्वान्त्सायम्प्रातराशी भवति सर्वं हैवायुरेति यदु ह किं च वाचा व्याहरति तदु हैव भवत्येतद्धि देवसत्यं गोपायति तद्धैतत्तेजो नाम ब्राह्मणं य एतस्य व्रतं शक्नोति चरितुम् - २.४.२.[६]

तद्वा एतत् । मासि मास्येव पितृभ्यो ददतो यदैवैष न पुरस्तान्न पश्चाद्ददृशेऽथैभ्यो ददात्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स एतां रात्रिं क्षीयते तस्मिन्क्षीणे ददाति तथैभ्यो समदं करोत्यथ यदक्षीणे दद्यात्समदं ह कुर्याद्देवेभ्यश्च पितृभ्यश्च तस्माद्यदैवैष न पुरस्तान्न पश्चाद्ददृशेऽथैभ्यो ददाति - २.४.२.[७]

स वा अपराह्णे ददाति । पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितॄणां तस्मादपराह्णे ददाति - २.४.२.[८]

स जघनेन गार्हपत्यम् । प्राचीनावीती भूत्वा दक्षिणासीन एतं गृह्णाति स तत एवोपोत्थायोत्तरेणान्वाहार्यपचनं दक्षिणा तिष्ठन्नवहन्ति सकृत्फलीकरोति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृत्फलीकरोति - २.४.२.[९]

तं श्रपयति । तस्मिन्नधिश्रित आज्यं प्रत्यानयत्यग्नौ वै देवेभ्यो जुह्वत्युद्धरन्ति मनुष्येभ्योऽथैव पितृणां तस्मादधिश्रित आज्यं प्रत्यानयति - २.४.२.[१०]

स उद्वास्याग्नौ द्वे आहुती जुहोति देवेभ्यः । देवान्वा एष उपावर्तते य आहिताग्निर्भवति यो दर्शपूर्णमासाभ्यां यजतेऽथैतत्पितृयज्ञेनेवाचारीत्तदु निह्नुते स देवैः प्रसूतोऽथैतत्पितृभ्यो ददाति तस्मादुद्वास्याग्नौ द्वे आहुती जुहोति देवेभ्यः - २.४.२.[११]

स वा अग्नये च सोमाय च जुहोति । स यदग्नये जुहोति सर्वत्र ह्येवाग्निरन्वाभक्तो ऽथ यत्सोमाय जुहोति पितृदेवत्यो वै सोमस्तस्मादग्नये च सोमाय च जुहोति - २.४.२.[१२]



स जुहोति । अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहेत्यग्नौ मेक्षणमभ्यादधाति तत्स्विष्टकृद्भाजनमथ दक्षिणेनान्वाहार्यपचनं सकृदुल्लिखति तद्वेदिभाजनं सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृदुल्लिखति - २.४.२.[१३]

अथ परस्तादुल्मुकं निदधाति । स यदनिधायोल्मुकमथैतत्पितृभ्यो दद्यादसुररक्षसानि हैषामेतद्विमथ्नीरंस्तथो हैतत्पितृणामसुररक्षसानि न विमथ्नते तस्मात्परस्तादुल्मुकं निदधाति - २.४.२.[१४]

स निदधाति । ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति परापुरो निपुरो ये भरन्त्यग्निष्टांल्लोकात्प्रणुदात्यस्मादित्यग्निर्हि रक्षसामपहन्ता तस्मादेवं निदधाति - २.४.२.[१५]

अथोदपात्रमादायावनेजयति । असाववनेनिक्ष्वेत्येव यजमानस्य पितरमसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्रपितामहं तद्यथाशिष्यतेऽभिषिञ्चेदेवं तत् - २.४.२.[१६]

अथ सकृदाच्छिन्नान्युपमूलं दिनानि भवन्ति । अग्रमिव वै देवानां मध्यमिव मनुष्याणां मूलमिव पितृणां तस्मादुपमूलं दिनानि भवन्ति सकृदाच्छिन्नानि भवन्ति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृदाच्छिन्नानि भवन्ति - २.४.२.[१७]

तानि दक्षिणोपस्तृणाति । तत्र ददाति स वा इति ददातीतीव वै देवेभ्यो जुह्वत्युद्धरन्ति मनुष्येभ्योऽथैवं पितृणां तस्मादिति ददाति - २.४.२.[१८]

स ददाति । असावेतत्त इत्येव यजमानस्य पित्रे ये च त्वामन्वित्यु हैक आहुस्तदु तथा न ब्रूयात्स्वयं वै तेषां सह येषां सह तस्मादु ब्रूयादसावेतत्त इत्येव यजमानस्य पित्रेऽसावेतत्त इति पितामहायासावेतत्त इति प्रपितामहाय तद्यदितः पराग्ददाति सकृदु ह्येव पराञ्चः पितरः - २.४.२.[१९]



तत्र जपति । अत्र पितरो मादयध्वं यथाभागमावृषायध्व्वमिति यथाभागमश्नीतेत्येवैतदाह - २.४.२.[२०]

अथ पराङ्पर्यावर्तते । तिर इव वै पितरो मनुष्येभ्यस्तिर इवैतद्भवति स वा आतमितोरासीतेत्याहुरेतावान्ह्यसुरिति स वै मुहूर्तमेवासित्वा - २.४.२.[२१]

अथोपपल्यय्य जपति । अमीमदन्त पितरो यथाभागमावृषायिषतेति यथाभागमाशिषुरित्येवैतदाह - २.४.२.[२२]

अथोदपात्रमादायावनेजयति । असाववनेनिक्ष्वेत्येव यजमानस्य पितरमसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्रपितामहं तद्यथा जक्षुषेऽभिषिञ्चेदेवं तत् - २.४.२.[२३]

अथ नीविमुद्वृह्य नमस्करोति । पितृदेवत्या वै नीविस्तस्मान्नीविमुद्वृह्य नमस्करोति यज्ञो वै नमो यज्ञियानेवैनानेतत्करोति षड्कृत्वो नमस्करोति षड्वा ऋतव ऋतवः पितरस्तस्मात्षड्कृत्वो नमस्करोति गृहान्नः पितरो दत्तेति गृहाणां ह पितर ईशत एषो एतस्याशीः कर्मणोऽथावजिघ्रति प्रत्यवधाय पिण्डान्त्स यजमानभागोऽग्नौ सकृदाच्छिन्नान्यभ्यादधाति पुनरुल्मुकमपि सृजति - २.४.२.[२४]

##२.४.३
तदु होवाच कहोडः कौषीतकिः । अनयोर्वा अयं द्यावापृथिव्यो रसोऽस्य रसस्य हुत्वा देवेभ्योऽथेममश्नामेति तस्माद्वा आग्रयणेष्ट्या यजत इति - २.४.३.[१]

तदु होवाच याज्ञवल्क्यः । देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे ततोऽसुरा उभयीरोषधीर्याश्च मनुष्या उपजीवन्ति याश्च पशवः कृत्ययेव त्वद्विषेणेव त्वत्प्रलिलिपुरुतैवं चिद्देवानभिभवेमेति ततो न मनुष्या आशुर्न पशव आलिलिशिरेता हेमाः प्रजा अनाशकेन नोत्पराबभूवुः - २.४.३.[२]

तद्वै देवाः शुश्रुवुः । अनाशकेन ह वा इमाः प्रजाः पराभवन्तीति ते होचुर्हन्तेदमासामपजिघांसामेति केनेति यज्ञेनैवेति यज्ञेन ह स्म वै तद्देवाः कल्पयन्ते यदेषां कल्पमासर्षयश्च - २.४.३.[३]

ते होचुः । कस्य न इदं भविष्यतीति ते ममममेत्येव न सम्पादयां चक्रुस्ते हासम्पाद्योचुराजिमेवास्मिन्नजामहै स यो न उज्जेष्यति तस्य न इदं भविष्यतीति तथेति तस्मिन्नाजिमाजन्त - २.४.३.[४]

ताविन्द्राग्नी उदजयताम् । तस्मादैन्द्राग्नौ द्वादशकपालः पुरोडाशो भवतीन्द्राग्नी ह्यस्य भागधेयमुदजयतां तौ यत्रेन्द्राग्नी उज्जिगीवांसौ तस्थतुस्तद्विश्वे देवा अन्वाजग्मुः - २.४.३.[५]

क्षत्रं वा इन्द्राग्नी । विशो विश्वे देवा यत्र वै क्षत्रमुज्जयत्यन्वाभक्ता वै तत्र विड्वद्विश्वान्देवानन्वाभजतां तस्मादेष वैश्वदेवश्चरुर्भवति - २.४.३.[६]

तं वै पुराणानां कुर्यादित्याहुः । क्षत्रं वा इन्द्राग्नी नेत्क्षत्रमभ्यारोहयाणीति तौ वा उभावेव नवानां स्यातां यद्धि पुरोडाश इतरश्चरुरितरस्तेनैव क्षत्रमनभ्यारूढं तस्मादुभावेव नवानां स्याताम् - २.४.३.[७]

त उ ह विश्वे देवा ऊचुः । अनयोर्वा अयं द्यावापृथिव्यो रसो हन्तेमे अस्मिन्नाभजामेति ताभ्यामेतं भागमकल्पयन्नेतं द्यावापृथिव्यमेककपालम्पुरोडाशं तस्माद्द्यावापृथिव्य एककपालः पुरोडाशो भवति तस्येयमेव कपालमेकेव हीयं तस्मादेककपालो भवति - २.४.३.[८]



तस्य परिचक्षा । यस्यै वै कस्यै च देवतायै हविर्गृह्यते सर्वत्रैव स्विष्टकृदन्वाभक्तोऽथैतं सर्वमेव जुहोति न स्विष्टकृतेऽवद्यति सा परिचक्षोतोहुतः पर्यावर्तते - २.४.३.[९]

तदाहुः । पर्याभूद्वा अयमेककपालो मोहिष्यति राष्ट्रमिति नास्य सा परिचक्षाऽऽहवनीयो वा आहुतीनां प्रतिष्ठा स यदाहवनीयं प्राप्यापि दश कृत्वः पर्यावर्तेत न तदाद्रियेत यदीत्त्वन्ये वदन्ति कस्तत्संधमुपेयात्तस्मादाज्यस्यैव यजेदाज्यं ह वा अनयोर्द्यावापृथिव्योः प्रत्यक्षं रसस्तत्प्रत्यक्षमेवैने एतत्स्वेन रसेन मेधेन प्रीणाति तस्मादाज्यस्यैव यजेत् - २.४.३.[१०]

एतेन वै देवाः । यज्ञेनेष्ट्वोभयीनामोषधीनां याश्च मनुष्या उपजीवन्ति याश्च पशवः कृत्यामिव त्वद्विषमिव त्वदपजघ्नुस्तत आश्नन्मनुष्या आलिशन्त पशवः - २.४.३.[११]

अथ यदेष एतेन यजते । तन्नाह न्वेवैतस्य तथा कश्चन कृत्ययेव त्वद्विषेणेव त्वत्प्रलिम्पतीति देवा अकुर्वन्निति त्वेवैष एतत्करोति यमु चैव देवा भागमकल्पयन्त तमु चैवैभ्य एष एतद्भागं करोतीमा उ चैवैतदुभयीरोषधीर्याश्च मनुष्या उपजीवन्ति याश्च पशवस्ता अनमीवा अकिल्विषाः कुरुते ता अस्यानमीवा अकिल्विषा इमाः प्रजा उपजीवन्ति तस्माद्वा एष एतेन यजते - २.४.३.[१२]

तस्य प्रथमजो गौर्दक्षिणा । अग्र्यमिव हीदं स यदीजानः स्याद्दर्शपूर्णमासाभ्यां वा यजेताथैतेन यजेत यद्यु अनीजानः स्याच्चातुष्प्राश्यमेवैतमोदनमन्वाहार्यपचने पचेयुस्तं ब्राह्मणा अश्नीयुः - २.४.३.[१३]

द्वया वै देवा देवाः । अहैव देवा अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवास्तद्यथा वषट्कृतं हुतमेवमस्यैतद्भवति तत्रो यच्छक्नुयात्तद्द्याद्नादक्षिणां हविः स्यादिति ह्याहुर्नाग्निहोत्रे जुहुयात्समदं ह कुर्याद्यदग्निहोत्रे जुहुयादन्यद्वा आग्रयणमन्यदग्निहोत्रं तस्मान्नाग्निहोत्रे जुहुयात् - २.४.३.[१४]



##२.४.४.
प्रजापतिर्ह वा एतेनाग्रे यज्ञेनेजे । प्रजाकामो बहुः प्रजया पशुभिः स्यां श्रियं गच्छेयं यशः स्यामन्नादः स्यामिति - २.४.४.[१]

स वै दक्षो नाम । तद्यदेनेन सोऽग्रेऽयजत तस्माद्दाक्षायणयज्ञो नामोतैनमेके वसिष्ठयज्ञ इत्याचक्षत एष वै वसिष्ठ एतमेव तदन्वाचक्षते स एतेन यज्ञेनेजे स एतेन यज्ञेनेष्ट्वा येयं प्रजापतेः प्रजातिर्या श्रीरेतद्बभूवैतां ह वै प्रजातिं प्रजायत एतां श्रियं गच्छति य एवं विद्वानेतेन यज्ञेन यजते तस्माद्वा एतेन यजेत - २.४.४.[२]

तेनो ह तत ईजे । प्रतीदर्शः श्वैक्नः स ये तं प्रत्यासुस्तेषां विवचनमिवास विवचनमिव ह वै भवति य एवं विद्वानेतेन यज्ञेन यजते तस्माद्वा एतेन यजेत - २.४.४.[३]

तमाजगाम । सुप्ला सार्ञ्जयो ब्रह्मचर्यं तस्मादेतं च यज्ञमनूचेऽन्यमु च सोऽनूच्य पुनः सृञ्जयाञ्जगाम ते ह सृञ्जया विदांचक्रुर्यज्ञं वै नोऽनूच्यागन्निति ते होचुः सह वै नस्तद्देवैरागन्यो नो यज्ञमनूच्यागन्निति स वै सहदेवः सार्ञ्जयस्तदप्येतन्निवचनमिवास्त्यन्यद्वा अरे सुप्ला नाम दध इति स एतेन यज्ञेनेजे स एतेन यज्ञेनेष्ट्वा येयं सृञ्जयानां प्रजातिर्या श्रीरेतद्बभूवैतां ह वै प्रजातिं प्रजायत एतां श्रियं गच्छति य एवं विद्वानेतेन यज्ञेन यजते तस्माद्वा एतेन यजेत - २.४.४.[४]

तेनो ह तत ईजे । देवभागः श्रौतर्षः स उभयेषां कुरूणां च सृञ्जयानां च पुरोहित आस परमता वै सा यो न्वेवैकस्य राष्ट्रस्य पुरोहितोऽसत्सान्वेव परमता किमु यो द्वयोः परमतामिव ह वै गच्छति य एवं विद्वानेतेन यज्ञेन यजते तस्माद्वा एतेन यजेत - २.४.४.[५]

तेनो ह तत ईजे । दक्षः पार्वतिस्त इमेऽप्येतर्हि दाक्षायणा राज्यमिवैव प्राप्ता राज्यमिह वै प्राप्नोति य एवं विद्वानेतेन यजते तस्माद्वा एतेन यजेत स वा एकैक एवानूचीनाहं पुरोडाशो भवत्येतेनो हास्यासपत्नानुपबाधा श्रीर्भवति स वै द्वे पौर्णमास्यौ यजते द्वे अमावास्ये द्वे वै मिथुनं मिथुनमेवैतत्प्रजननं क्रियते - २.४.४.[६]

अथ यत्पूर्वेद्युः । अग्नीषोमीयेण यजते पौर्णमास्यां ते द्वे देवते द्वे वै मिथुनं मिथुनमेवैतत्प्रजननं क्रियते - २.४.४.[७]

अथ प्रातः । आग्नेयः पुरोडाशो भवत्यैन्द्रं सांनाय्यं ते द्वे देवते द्वे वै मिथुनं मिथुनमेवैतत्प्रजननं क्रियते - २.४.४.[८]

अथ यत्पूर्वेद्युः । ऐन्द्राग्नेन यजतेऽमावास्यायां ते द्वे देवते द्वे वै मिथुनम्मिथुनमेवैतत्प्रजननं क्रियते - २.४.४.[९]

अथ प्रातः । आग्नेयः पुरोडाशो भवति मैत्रावरुणी पयस्या नेद्यज्ञादयानीति न्वेवाग्नेयः पुरोडाशोऽथैतावेव मित्रावरुणौ द्वे देवते द्वे वै मिथुनम्मिथुनमेवैतत्प्रजननं क्रियत एतदु हास्य तद्रूपं येन बहुर्भवति येन प्रजायते - २.४.४.[१०]

अथ यत्पूर्वेद्युः । अग्नीषोमीयेण यजते पौर्णमास्यां यमेवामुमुपवसथेऽग्नीषोमीयं पशुमालभते स एवास्य सः - २.४.४.[११]

अथ प्रातः । आग्नेयः पुरोडाशो भवत्यैन्द्रं सांनाय्यम्प्रातःसवनमेवास्याग्नेयः पुरोडाशो आग्नेयं हि प्रातःसवनमथैन्द्रं सांनाय्यं माध्यन्दिनमेवास्य तत्सवनमैन्द्रं हि माध्यन्दिनं सवनम् - २.४.४.[१२]

अथ यत्पूर्वेद्युः । ऐन्द्राग्नेन यजतेऽमावास्यायां तृतीयसवनमेवास्य तद्वैश्वदेवं वै तृतीयसवनमिन्द्राग्नी वै विश्वे देवाः - २.४.४.[१३]



अथ प्रातः । आग्नेयः पुरोडाशो भवति मैत्रावरुणी पयस्या नेद्यज्ञादयानीति न्वेवाग्नेयः पुरोडाशोऽथ यामेवामूं मैत्रावरुणीं वशामनूबन्ध्यामालभते सैवास्य मैत्रावरुणी पयस्या स पौर्णमासेन चामावास्येन चेष्ट्वा यावत्सौम्येनाध्वरेणेष्ट्वा जयति तावज्जयति तदु खलु महायज्ञो भवति - २.४.४.[१४]

अथ यत्पूर्वेद्युः । अग्नीषोमीयेण यजते पौर्णमास्यामेतेन वा इन्द्रो वृत्रमहन्नेतेनो एव व्यजयत यास्येयं विजितिस्तां तथो एवैष एतेन पाप्मानं द्विषन्तं भ्रातृव्यं हन्ति तथो एव विजयतेऽथ यत्संनयत्यामावास्यं वै सांनाय्यं दूरे तद्यदमावास्येति क्षिर्र एवैतद्वृत्रं जघ्नुषे तमेतेन रसेनाप्रीणन् क्षिप्रे ह वै पाप्मानमपहते य एवं विद्वान्पौर्णमास्यां संनयत्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमास्तमेतत्पूर्वेद्युरभिषुण्वन्ति प्रातर्भक्षयिष्यन्तस्तमेतद्भक्षयन्ति यदपक्षीयते - २.४.४.[१५]

अथ यत्पूर्वेद्युः । अग्नीषोमीयेण यजते पौर्णमास्यामभिषुणोत्येवैनमेतत्तस्मिन्नभिषुत एतं रसं दधात्येतेन रसेन तीव्रीकरोति स्वदयति ह वै देवेभ्यो हव्यं स्वदते हास्य देवेभ्यो हव्यं य एवं विद्वान्पौर्णमास्यां संनयति - २.४.४.[१६]

अथ यत्पूर्वेद्युः । ऐन्द्राग्नेन यजतेऽमावास्यायां दर्शपूर्णमासयोर्वै देवते स्त इन्द्राग्नी एव ते एवैतदञ्जसा प्रत्यक्षं यजत्यञ्जसा ह वा अस्य दर्शपूर्णमासाभ्यामिष्टं भवति य एवमेतद्वेद - २.४.४.[१७]

अथ प्रातः । आग्नेयः पुरोडाशो भवति मैत्रावरुणी पयस्या नेद्यज्ञादयानीति न्वेवाग्नेयः पुरोडाशोऽथैतावेवार्धमासौ मित्रावरुणौ य एवापूर्यते स वरुणौ योऽपक्षीयते स मित्रस्तावेतां रात्रिमुभौ समागच्छतस्तदुभावेवैतत्सह सन्तौ प्रीणाति सर्वं ह वा अस्य प्रीतं भवति सर्वमाप्तं य एवमेतद्वेद - २.४.४.[१८]



तद्वा एतां रात्रिम् । मित्रो वरुणे रेतः सिञ्चति तदेतेन रेतसा प्रजायते यदापूर्यते तद्यदेषात्र मैत्रावरुणी पयस्यावक्लृप्ततमा भवति - २.४.४.[१९]

सांनाय्यभाजना वा अमावास्या । तददस्तत्पौर्णमास्यां क्रियते स यद्धात्रापि संनयेज्जामि कुर्यात्समदं कुर्यात्तदेनमद्भ्य ओषधिभ्यः सम्भृत्याहुतिभ्योऽधि जनयति स एष आहुतिभ्यो जातः पश्चाद्ददृशे - २.४.४.[२०]

मिथुनादिद्वा एनमेतत्प्रजनयति । योषा पयस्या रेतो वाजिनं तद्वा अनुष्ठ्यायन्मिथुनाज्जायते तदेनमेतस्मान्मिथुनात्प्रजननात्प्रजनयति तस्मादेषात्र पयस्या भवति - २.४.४.[२१]

अथ वाजिभ्यो वाजिनं जुहोति । ऋतवो वै वाजिनो रेतो वाजिनं तद्वनुष्ठ्येवैतद्रेतः सिच्यते तदृतवो रेतः सिक्तमिमाः प्रजाः प्रजनयन्ति तस्माद्वाजिभ्यो वाजिनं जुहोति - २.४.४.[२२]

स वै पश्चादिव यज्ञस्य जुहोति । पश्चाद्वै परीत्य वृषा योषामधिद्रवति तस्यां रेतः सिञ्चति स वै प्रागेवाग्रे जुहोत्यग्ने वीहीत्यनुवषट्करोति तत्स्विष्टकृद्भाजनं स वै प्रागेव जुहोति - २.४.४.[२३]

अथ दिशो व्याघारयति । दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहेति पञ्चदिशः पञ्चऽर्तवस्तदृतुभिरेवैतद्दिशो मिथुनीकरोति - २.४.४.[२४]

तद्वै पञ्चैव भक्षयन्ति । होता चाध्वर्युश्च ब्रह्मा चाग्नीच्च यजमानः पञ्च वा ऋतवस्तदृतूनामेवैतद्रूपं क्रियते तदृतुष्वेवैतद्रेतः सिक्तं प्रतिष्ठापयति प्रथमो यजमानो भक्षयति प्रथमो रेतः परिगृह्णानीत्यथो अप्युत्तमो मय्युत्तमे रेतः प्रतितिष्ठादित्युपहूत उपह्वयस्वेति सोममेवैतत्कुर्वन्ति - २.४.४.[२५]



##२.५.१.
प्रजापतिर्ह वा इदमग्र एक एवास । स ऐक्षत कथं नु प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत स प्रजा असृजत ता अस्य प्रजाः सृष्टाः पराबभूवुस्तानीमानि वयांसि पुरुषो वै प्रजापतेर्नेदिष्ठं द्विपाद्वा अयं पुरुषस्तस्माद्द्विपादो वयांसि - २.५.१.[१]

स ऐक्षत प्रजापतिः । यथा न्वेव पुरैकोऽभूवमेवमु न्वेवाप्येतर्ह्येक एवास्मीति स द्वितीयाः ससृजे ता अस्य परैव बभूवुस्तदिदं क्षुद्रं सरीसृपं यदन्यत्सर्पेभ्यस्तृतीयाः ससृज इत्याहुस्ता अस्य परैव बभूवुस्त इमे सर्पा एता ह न्वेव द्वयीर्याज्ञवल्क्य उवाच त्रयीरु तु पुनर्ऋचा - २.५.१.[२]

सोऽर्चञ्छ्राम्यन्प्रजापतिरीक्षां चक्रे । कथं नु मे प्रजाः सृष्टाः पराभवन्तीति स हैतदेव ददर्शानशनतया वै मे प्रजाः पराभवन्तीति स आत्मन एवाग्रे स्तनयोः पय आप्याययां चक्रे स प्रजा असृजत ता अस्य प्रजाः सृष्टा स्तनावेवाभिपद्यतास्ततः सम्बभूवुस्ता इमा अपराभूतः - २.५.१.[३]

तस्मादेतदृषिणाभ्यनूक्तम् । प्रजा ह तिस्रो अत्यायमीयुरिति तद्याः पराभूतास्ता एवैतदभ्यनूक्तं न्यन्या अर्कमभितो विविश्र इत्यग्निर्वा अर्कस्तद्या इमाः प्रजा अपराभूतास्ता अग्निमभितो निविष्टास्ता एवैतदभ्यनूक्तम् - २.५.१.[४]

महद्ध तस्थौ भुवनेष्वन्तरिति । प्रजापतिमेवैतदभ्यनूक्तं पवमानो हरित आविवेशेति दिशो वै हरितस्ता अयं वायुः पवमान आविष्टस्ता एवैषर्गभ्यनूक्ता ता इमाः प्रजास्तथैव प्रजायन्ते यथैव प्रजापतिः प्रजा असृजतेदं हि यदैव स्त्रियै स्तनावाप्यायेते ऊधः पशूनामथैव यज्जायते तज्जायते तास्ततस्तनावेवाभिपद्य सम्भवन्ति - २.५.१.[५]

तद्वै पय एवान्नम् । एतद्ध्यग्रे प्रजापतिरन्नमजनयत तद्वा अन्नमेव प्रजा अन्नाद्धि सम्भवन्तीदं हि यासां पयो भवति स्तनावेवाभिपद्य तास्ततः सम्भवन्त्यथ यासां पयो न भवति जातमेव ता अप्यादयन्ति तदु ता अन्नादेव सम्भवन्ति तस्माद्वन्नमेव प्रजाः - २.५.१.[६]



स यः प्रजाकामः । एतेन हविषा यजत आत्मानमेवैतद्यज्ञं विधत्ते प्रजापतिम्भूतम् - २.५.१.[७]

स वा आग्नेयोऽष्टाकपालः पुरोडाशो भवति । अग्निर्वै देवतानां मुखम्प्रजनयिता स प्रजापतिस्तस्मादाग्नेयो भवति - २.५.१.[८]

अथ सौम्यश्चरुर्भवति । रेतो वै सोमस्तदग्नौ प्रजनयितरि सोमं रेतः सिञ्चति तत्पुरस्तान्मिथुनं प्रजननम् - २.५.१.[९]

अथ सावित्रः । द्वादशकपालो वाष्टाकपालो वा पुरोडाशो भवति सविता वै देवानाम्प्रसविता प्रजापतिर्मध्यतः प्रजनयिता तस्मात्सावित्रो भवति - २.५.१.[१०]

अथ सारस्वतश्चरुर्भवति । पौष्णश्चरुर्योषा वै सरस्वती वृषा पूषा तत्पुनर्मिथुनं प्रजननमेतस्माद्वा उभयतो मिथुनात्प्रजननात्प्रजापतिः प्रजाः ससृज इतश्चोर्ध्वा इतश्चावाचीस्तथो एवैष एतस्मादुभयत एव मिथुनात्प्रजननात्प्रजाः सृजत इतश्चोर्ध्वा इतश्चावाचीस्तस्माद्वा एतानि पञ्च हवींषि भवन्ति - २.५.१.[११]

अथातः पयस्याया एवायतनम् । मारुतस्तु सप्तकपालो विशो वै मरुतो देवविशस्ता हेदमनिषेद्धा इव चेरुस्ताः प्रजापतिं यजमानमुपेत्योचुर्वि वै ते मथिष्यामह इमाः प्रजा या एतेन हविषा स्रक्ष्यस इति - २.५.१.[१२]

स ऐक्षत प्रजापतिः । परा मे पूर्वाः प्रजा अभूवन्निमा उ चेदिमे विमथ्नते न ततः किं चन परिशेक्ष्यत इति तेभ्य एतं भागमकल्पयदेतं मारुतं सप्तकपालं पुरोडाशं स एष मारुतः सप्तकपालस्तद्यत्सप्तकपालो भवति सप्त सप्त हि मारुतो गणस्तस्मान्मारुतः सप्तकपालः पुरोडाशो भवति - २.५.१.[१३]



तं वै स्वतवोभ्य इति कुर्यात् । स्वयं हि त एतं भागमकुर्वतोतो स्वतवोभ्यो याज्यानुवाक्ये न विन्दन्ति स उ खलु मारुत एव स्यात्स वा एष प्रजाभ्य एवाहिंसायै क्रियते तस्मान्मारुतः - २.५.१.[१४]

अथातः पयस्यैव । पयसो वै प्रजाः सम्भवन्ति पयसः सम्भूतास्तद्यत एव सम्भूता यतः सम्भवन्ति तदेवाभ्य एतत्करोति तद्याः पूर्वैर्हविर्भिः प्रजाः सृजते ता एतस्मात्पयस एतस्यै पयस्यायै सम्भवन्ति - २.५.१.[१५]

तस्यां मिथुनमस्ति । योषा पयस्या रेतो वाजिनं तस्मान्मिथुनाद्विश्वमसम्मितमनु प्राजायत तद्यदेतस्मान्मिथुनाद्विश्वमसम्मितमनु प्राजायत तस्माद्वैश्वदेवी भवति - २.५.१.[१६]

अथ द्यावापृथिव्य एककपालः पुरोडाशो भवति । एतैर्वै हविर्भिः प्रजापतिः प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां पर्यगृह्णात्ता इमा द्यावापृथिवीभ्यां परिगृहीतास्तथो एवैष एतद्य

एतैर्हविर्भिः प्रजाः सृजते ता द्यावापृथिवीभ्यां परिगृह्णाति तस्माद्द्यावापृथिव्य एककपालः पुरोडाशो भवति - २.५.१.[१७]

अथात आवृदेव । नोपकिरन्त्युत्तरवेदिं विसृष्टमसत्सर्वमसद्वैश्वदेवमसदिति त्रेधा बर्हिः संनद्धं भवति तत्पुनरेकधैतद्धि प्रजननस्य रूपम्प्रजननमु हीदं पिता माता यज्जायते तत्तृतीयं तस्मात्त्रेधा सत्पुनरेकधा प्रस्व उपसंनद्धा भवन्ति तं प्रस्तरं गृह्णाति प्रजननमु हीदम्प्रजननमु हि प्रस्वस्तस्मात्प्रसूः प्रस्तरं गृह्णाति - २.५.१.[१८]

आसाद्य हवींष्यग्निं मन्थन्ति । अग्निं ह वै जायमानमनु प्रजापतेः प्रजा जज्ञिरे तथो एवैतस्याग्निमेव जायमानमनु प्रजा जायन्ते तस्मादासाद्य हवींष्यग्निं मन्थन्ति - २.५.१.[१९]

नवप्रयाजं भवति । नवानुयाजं दशाक्षरा वै विराडथैतामुभयतो न्यूनां विराजं करोति प्रजननायैतस्माद्वा उभयतो न्यूनात्प्रजननात्प्रजापतिः प्रजाः ससृज इतश्चोर्ध्वा इतश्चावाचीस्तथो एवैष एतस्मादुभयत एव न्यूनात्प्रजननात्प्रजाः सृजत इतश्चोर्ध्वा इतश्चावाचीस्तस्मान्नवप्रयाजं भवति नवानुयाजम् - २.५.१.[२०]



त्रीणि समिष्टयजूंषि भवन्ति । ज्याय इव हीदं हविर्यज्ञाद्यत्र नवप्रयाजं नवानुयाजमथो अप्येकमेव स्याद्धविर्यज्ञो हि तस्य प्रथमजो गौर्दक्षिणा - २.५.१.[२१]

एतेन वै प्रजापतिः यज्ञेनेष्ट्वा । येयं प्रजापतेः प्रजापतिर्या श्रीरेतद्बभूवैतां ह वै प्रजातिं प्रजायत एतां श्रियं गच्छति य एवं विद्वानेतेन यज्ञेन यजते तस्माद्वा एतेन यजेत - २.५.१.[२२]

##२.५.२.

वैश्वदेवेन वै प्रजापतिः । प्रजाः ससृजे ता अस्य प्रजाः सृष्टा वरुणस्य यवाञ्जक्षुर्वरुण्यो ह वा अग्रे यवस्तद्यन्न्वेव वरुणस्य यवान्प्रादस्तस्माद्वरुणप्रघासा नाम - २.५.२.[१]

ता वरुणो जग्राह । ता वरुणगृहीताः परिदीर्णा अनत्यश्च प्राणत्यश्च शिश्यिरे च निषेदुश्च प्राणोदानौ हैवाभ्यो नापचक्रमतुरथान्याः सर्वा देवता अपचक्रमुस्तयोर्हैवास्य हेतोः प्रजा न पराबभूवुः - २.५.२.[२]

ता एतेन हविषा प्रजापतिरभिषज्यत् । तद्याश्चैवास्य प्रजा जाता आसन्याश्चाजातास्ता उभयीर्वरुणपाशात्प्रामुञ्चत्ता अस्यानमीवा अकिल्विषाः प्रजाः प्राजायत - २.५.२.[३]

अथ यदेष एतैश्चतुर्थे मासि यजते । तन्नाह न्वेवैतस्य तथा प्रजा वरुणो गृह्णातीति देवा अकुर्वन्निति न्वेवैष एतत्करोति याश्च न्वेवास्य प्रजा जाता याश्चाजातास्ता उभयीर्वरुणपाशात्प्रमुञ्चति ता अस्यानमीवा अकिल्विषाः प्रजाः प्रजायते तस्माद्वा एष एतैश्चतुर्थे मासि यजते - २.५.२.[४]



तद्वै द्वे वेदी द्वावग्नी भवतः । तद्यद्द्वे वेदी द्वावग्नी भवतस्तदुभयत एवैतद्वरुणपाशात्प्रजाः प्रमुञ्चतीतश्चोर्ध्वा इतश्चावाचीस्तस्माद्द्वे वेदी द्वावग्नी भवतः - २.५.२.[५]

स उत्तरस्यामेव वेदौ । उत्तरवेदिमुपकिरति न दक्षिणस्यां क्षत्रं वै वरुणो विशो मरुतः क्षत्रमेवैतद्विश उत्तरे करोति तस्मादुपर्यासीनं क्षत्रियमधस्तादिमाः प्रजा उपासते तस्मादुत्तरस्यामेव वेदा उत्तरवेदिमुपकिरति न दक्षिणस्याम् - २.५.२.[६]

अथैतान्येव पञ्च हवींषि भवन्ति । एतैर्वै हविर्भिः प्रजापतिः प्रजा असृजतैतैरुभयतो वरुणपाशात्प्रजाः प्रामुञ्चदितश्चोर्ध्वा इतश्चावाचीस्तस्माद्वा एतानि पञ्च हवींषि भवन्ति - २.५.२.[७]

अथैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति । प्राणोदानौ वा इन्द्राग्नी तद्यथा पुण्यं चक्रुषे पुण्यं कुर्यादेवं तत्तयोर्हैवास्य हेतोः प्रजा न पराबभूवुस्तत्प्राणोदानाभ्यामेवैतत्प्रजा भिषज्यति प्राणोदानौ प्रजासु दधाति तस्मादैन्द्राग्नौ द्वादशकपालः पुरोडाशो भवति - २.५.२.[८]

उभयत्र पयस्ये भवतः । पयसो वै प्रजाः सम्भवन्ति पयसः सम्भूतास्तद्यत एव सम्भूता यतः सम्भवन्ति तत एवैतदुभयतो वरुणपाशात्प्रजाः प्रमुञ्चतीतश्चोर्ध्वा इतश्चावाचीस्तस्मादुभयत्र पयस्ये भवतः - २.५.२.[९]

वारुण्युत्तरा भवति । वरुणो ह वा अस्य प्रजा अगृह्णात्तत्प्रत्यक्षं वरुणपाशात्प्रजाः प्रमुञ्चति मारुती दक्षिणाजामितायै न्वेव मारुती भवति जामि ह कुर्याद्यदुभे वारुण्यौ स्यातामतो ह वा अस्य दक्षिणतो मरुतः प्रजा अजिघांसंस्तानेतेन भागेनाशमयत्तस्मान्मारुती दक्षिणा - २.५.२.[१०]



तयोरुभयोरेव करीराण्यावपति । कं वै प्रजापतिः प्रजाभ्यः करीरैरकुरुत कम्वेवैष एतत्प्रजाभ्यः कुरुते - २.५.२.[११]

तयोरुभयोरेव शमीपलाशान्यावपति । शं वै प्रजापतिः प्रजाभ्यः शमीपलाशैरकुरुत शम्वेवैष एतत्प्रजाभ्यः कुरुते - २.५.२.[१२]

अथ काय एककपालः पुरोडाशो भवति । कं वै प्रजापतिः प्रजाभ्यः कायेनैककपालेन पुरोडाशेनाकुरुत कम्वेवैष एतत्प्रजाभ्यः कायेनैककपालेन पुरोडाशेन कुरुते तस्मात्काय एककपालः पुरोडाशो भवति - २.५.२.[१३]

अथ पूर्वेद्युः । अन्वाहार्यपचनेऽतुषानिव यवान् कृत्वा तानीषदिवोपतप्य तेषां करम्भपात्राणि कुर्वन्ति यावन्तो गृह्याः स्युस्तावन्त्येकेनातिरिक्तानि - २.५.२.[१४]

तत्रापि मेषं च मेषीं च कुर्वन्ति । तयोर्मेषे च मेष्यां च यद्यनैडकीरूर्णा विन्देत्ताः प्रणिज्य निश्लेषयेद्यद्यु अनैडकीर्न विन्देदथो अपि कुशोर्णा एव स्युः - २.५.२.[१५]

तद्यन्मेषश्च मेषी च भवतः । एष वै प्रत्यक्षं वरुणस्य पशुर्यन्मेषस्तत्प्रत्यक्षं वरुणपाशात्प्रजाः प्रमुञ्चति यवमयौ भवतो यवान्हि जक्षुषीर्वरुणोऽगृह्णान्मिथुनौ भवतो मिथुनादेवैतद्वरुणपाशात्प्रजाः प्रमुञ्चति - २.५.२.[१६]

स उत्तरस्यामेव पयस्यायां मेषीमवदधाति । दक्षिणस्यां मेषमेवमिव हि मिथुनं क्लृप्तमुत्तरतो हि स्त्री पुमांसमुपशेते - २.५.२.[१७]

स सर्वाण्येव हवींष्यध्वर्युः । उत्तरस्यां वेदावासादयत्यथैतामेव पयस्याम्प्रतिप्रस्थाता दक्षिणस्यां वेदावासादयति - २.५.२.[१८]



आसाद्य हवींष्यग्निं मन्थति । अग्निम्मन्थित्वानुप्रहृत्याभिजुहोत्यथाध्वर्युरेवाहाग्नये समिध्यमानायानुब्रूहीति ता उभावेवेध्मावभ्याधत्त उभौ समिधौ परिशिंष्ट उभौ पूर्वावाघारावाघारयतोऽथाध्वर्युरेवाहाग्निमग्नीत्सम्मृड्ढीत्यसम्मृष्टमेव भवति सम्प्रेषितम् - २.५.२.[१९]

अथ प्रतिप्रस्थाता प्रतिपरैति । स पत्नीमुदानेष्यन्पृच्छति केन चरसीति वरुण्यं वा एतत्स्त्री करोति यदन्यस्य सत्यन्येन चरत्यथो नेन्मेऽन्तःशल्या जुहवदिति तस्मात्पृच्छति निरुक्तं वा एनः कनीयो भवति सत्यं हि भवति तस्माद्वेव पृच्छति सा यन्न प्रतिजानीत ज्ञातिभ्यो हास्यै तदहितं स्यात् - २.५.२.[२०]

तां वाचयति । प्रघासिनो हवामहे मरुतश्च रिशादसः करम्भेण सजोषस इति यथा पुरोऽनुवाक्यैवमेषैतयैवैनानेतेभ्यः पात्रेभ्यो ह्वयति - २.५.२.[२१]

तानि वै प्रतिपुरुषम् । यावन्तो गृह्याः स्युतावन्त्येकेनातिरिक्तानि भवन्ति तत्प्रतिपुरुषमेवैतदेकैकेन या अस्य प्रजा जातास्ता वरुणपाशात्प्रमुञ्चत्येकेनातिरिक्तानि भवन्ति तद्या एवास्य प्रजा अजातास्ता वरुणपाशात्प्रमुञ्चति तस्मादेकेनातिरिक्तानि भवन्ति - २.५.२.[२२]

पात्राणि भवन्ति पात्रेषु ह्यशनमश्यते यवमयानि भवन्ति यवान्हि जक्षुषीर्वरुणोऽगृह्णाच्छूर्पेण जुहोति शूर्पेण ह्यशनं क्रियते पत्नी जुहोति मिथुनादेवैतद्वरुणपाशात्प्रजाः प्रमुञ्चति - २.५.२.[२३]

पुरा यज्ञात्पुराहुतिभ्यो जुहोति । अहुतादो वै विशो विशो वै मरुतो यत्र वै प्रजापतेः प्रजा वरुणगृहीताः परिदीर्णा अनत्यश्च प्राणत्यश्च शिश्यिरे च निषेदुश्च तद्धासां मरुतः पाप्मानं विमेथिरे तथो एवैतस्य प्रजानां मरुतः पाप्मानं विमथ्नते तस्मात्पुरा यज्ञात्पुराहुतिभ्यो जुहोति - २.५.२.[२४]



स वै दक्षिणेऽग्नौ जुहोति । यद्ग्रामे यदरण्य इति ग्रामे वा ह्यरण्ये वैनः क्रियते यत्सभायां यदिन्द्रिय इति यत्सभायामिति यन्मानुष इति तदाह यदिन्द्रिय इति यद्देवत्रेति तदाह यदेनश्चकृमा वयमिदं तदवयजामहे स्वाहेति यत्किं च वयमेनश्चकृमेदं वयं तस्मात्सर्वस्मात्प्रमुच्यामह इत्येवैतदाह - २.५.२.[२५]

अथैन्द्रीं मरुत्वतीं जपति । यत्र वै प्रजापतेः प्रजानां मरुतः पाप्मानं विमेथिरे तद्धेक्षां चक्र इमे ह मे प्रजा न विमथ्नीरन्निति - २.५.२.[२६]

स एतामैन्द्रीं मरुत्वतीमजपत् । क्षत्रं वा इन्द्रो विशो मरुतः क्षत्रं वै विशो निषेद्धा निषिद्धा असन्निति तस्मादैन्द्री - २.५.२.[२७]

मो षू णः । इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः महश्चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो वन्दते गीरिति - २.५.२.[२८]

अथैनां वाचयति । अक्रन् कर्म कर्मकृत इत्यक्रन्हि कर्म कर्मकृतः सह वाचा मयोभुवेति सह हि वाचाक्रन्देवेभ्यः कर्म कृत्वेति देवेभ्यो हि कर्म कृत्वास्तम्प्रेत सचाभुव इत्यन्यतो ह्योढया सह भवन्ति तस्मादाह सचाभुव इत्यस्तम्प्रेतेति जघनार्धो वा एष यज्ञस्य यत्पत्नी तामेतत्प्राचीं यज्ञं प्रासीषदद्गृहा वा अस्तं गृहाः प्रतिष्ठा तद्गृहेष्वेवैनामेतत्प्रतिष्ठायां प्रतिष्ठापयति - २.५.२.[२९]

प्रतिपराणीयोदैति प्रतिप्रस्थाता । सम्मृजन्त्यग्निं सम्मृष्टेऽग्नौ ता उभावेवोत्तरावाघारावाघारयतोऽथाध्वर्युरेवाश्राव्य होतारं प्रवृणीते प्रवृतो होतोत्तरस्यै वेदेर्होतृषदन उपविशत्युपविश्य प्रसौति ता उभावेव प्रसूतौ स्रुच आदायातिक्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाह समिधो यजेति यज यजेति चतुर्थेचतुर्थे प्रयाजे समानयमानौ नवभिः प्रयाजैश्चरतः - २.५.२.[३०]



अथाध्वर्युरेवाहाग्नयेऽनुब्रूहीति । आग्नेयमाज्यभागं ता उभावेव चतुराज्यस्यावदायातिक्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाहाग्निं यजेति ता उभावेव वषट्कृते जुहुतः - २.५.२.[३१]

अथाध्वर्युरेवाह सोमायानुब्रूहीति । सौम्यमाज्यभागं ता उभावेव चतुराज्यस्यावदायातिक्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाह सोमं यजेति ता उभावेव वषट्कृते जुहुतः - २.५.२.[३२]

तद्यत्किं च वाचा कर्तव्यम् । अध्वर्युरेव तत्करोति न प्रतिप्रस्थाता तद्यदध्वर्युरेवाश्रावयतीहैव यत्र वषट्क्रियते - २.५.२.[३३]

कृतानुकर एव प्रतिप्रस्थाता । क्षत्रं वै वरुणो विशो मरुतस्तत्क्षत्रायैवैतद्विशं कृतानुकरामनुवर्त्मानं करोति प्रत्युद्यामिनीं ह क्षत्राय विशं कुर्याद्यदपि प्रतिप्रस्थाताऽऽश्रावयेत्तस्मान्न प्रतिप्रस्थाताऽऽश्रावयति - २.५.२.[३४]

प्राणावेव प्रतिप्रस्थाता । स्रुचौ कृत्वोपास्तेऽथाध्वर्युरेवैतैर्हविर्भिः प्रचरत्याग्नेयेनाष्टाकपालेन पुरोडाशेन सौम्येन चरुणा सावित्रेण द्वादशकपालेन वाष्टाकपालेन वा पुरोडाशेन सारस्वतेन चरुणा पौष्णेन चरुणैन्द्राग्नेन द्वादशकपालेन पुरोडाशेन - २.५.२.[३५]

अथैताभ्यां पयस्याभ्यां प्रचरिष्यन्तौ विपरिहरतः । स यो मेषो भवति मारुत्यां तं वारुण्यामवदधाति या मेषी भवति वारुण्यां ताम्मारुत्यामवदधाति तद्यदेवं विपरिहरतः क्षत्रं वै वरुणो वीर्यम्पुमान्वीर्यमेवैतत्क्षत्रे धत्तोऽवीर्या वै स्त्री विशो मरुतस्तदवीर्यामेवैतद्विशं कुरुतस्तस्मादेवं विपरिहरतः - २.५.२.[३६]

अथाध्वर्युरेवाह वरुणायानुब्रूहीति । स उपस्तृणीत आज्यमथास्यै वारुण्यै पयस्यायै द्विरवद्यति सोऽन्यतरेणावदानेन सह मेषमवदधात्यथोपरिष्टादाज्यस्याभिघारयति प्रत्यनक्त्यवदाने अतिक्रामत्यतिक्रम्याश्राव्याह वरुणं यजेति वषट्कृते जुहोति - २.५.२.[३७]

सव्ये पाणावध्वर्युः । स्रुचौ कृत्वा दक्षिणेन प्रतिप्रस्थातुर्वा सोऽन्वारभ्याह मरुद्भ्योऽनुब्रूहीत्युपस्तृणीत आज्यं प्रतिप्रस्थाताथास्यै मारुत्यै पयस्यायै द्विरवद्यति सोऽन्यतरेणावदानेन सह मेषीमवदधात्यथोपरिष्टादाज्यस्याभिघारयति प्रत्यनक्त्यवदाने अतिक्रामत्यथाध्वर्युरेवाश्राव्याह मरुतो यजेति वषट्कृते जुहोति - २.५.२.[३८]

अथाध्वर्युरेव कायेन । एककपालेन पुरोडाशेन प्रचरति कायेनैककपालेन पुरोडाशेन प्रचर्याध्वर्युरेवाहाग्नये स्विष्टकृतेऽनुब्रूहीति स सर्वेषामेव हविषामध्वर्युः सकृत्सकृदवद्यत्यथैतस्या एव पयस्यायै प्रतिप्रस्थाता सकृदवद्यत्यथोपरिष्टाद्द्विराज्यस्याभिघारयतस्ता
उभावेवातिक्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाहाग्निं स्विष्टकृतं यजेति ता उभावेव वषट्कृते जुहुतः - २.५.२.[३९]

अथाध्वर्युरेव प्राशित्रमवद्यति । इडां समवदाय प्रतिप्रस्थात्रेऽतिप्रजिहीते तत्रापि प्रतिप्रस्थाता मारुत्यै पयस्यायै द्विरभ्यवद्यत्यथोपरिष्टाद्विराज्यस्याभिघारयत्युपहूय मार्जयन्ते - २.५.२.[४०]

अथाध्वर्युरेवाह ब्रह्मन्प्रस्थास्यामि । समिधमाधायाग्निमग्नीत्सम्मृड्ढीति स स्रुचोरेवाध्वर्युः पृषदाज्यं व्यानयतेऽथ यदि प्रतिप्रस्थातुः पृषदाज्यम्भवति तत्स द्वेधा व्यानयत उतो तत्र पृषदाज्यं न भवति स यदेवोपभृत्याज्यं तत्स द्वेधा व्यानयते ता उभावेवातिक्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाह देवान्यजेति यज यजेति चतुर्थेचतुर्थेऽनुयाजे समानयमानौ नवभिरनुयाजैश्चरतस्तद्यन्नव प्रयाजं भवति नवानुयाजं तदुभयत एवैतद्वरुणपाशात्प्रजाः प्रमुञ्चतीतश्चोर्ध्वा इतश्चावाचीस्तस्मान्नवप्रयाजं भवति नवानुयाजम् - २.५.२.[४१]

ता उभावेव सादयित्वा स्रुचो व्यूहतः । स्रुचो व्युह्य परिधीन्त्समज्य परिधिमभिपद्याश्राव्याध्वर्युरेवाहेषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकायेति सूक्तवाकं होता प्रतिपद्यतेऽथैता उभावेव प्रस्तरौ समुल्लुम्पत उभावनुप्रहरत उभौ तृणे अपगृह्योपासाते यदा होता सूक्तवाकमाह - २.५.२.[४२]



अथाग्नीदाहानुप्रहरेति । ता उभावेवानुप्रहरत उभावात्माना उपस्पृशेते - २.५.२.[४३]

अथाह संवदस्वेति । अगानग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शं योर्ब्रूहीत्यध्वर्युरेवैतदाह ता उभावेव परिधीननुप्रहरत उभौ स्रुचः सम्प्रगृह्य स्फ्ये सादयतः - २.५.२.[४४]

अथाध्वर्युरेव प्रतिपरेत्य । पत्नीः संयाजयत्युपास्त एव प्रतिप्रस्थाता पत्नीः संयाज्योदैत्यध्वर्युः - २.५.२.[४५]

त्रीणि समिष्टयजूंषि जुहोति । तूष्णीमेव प्रतिप्रस्थाता स्रुचं प्रगृह्णाति तद्ये वैश्वदेवेन यजमानयोर्वाससी परिहिते स्यातां ते एवात्रापि स्यातामथास्यै वारुण्यै पयस्यायै क्षामकर्षमिश्रमादायावभृथं यन्ति वरुण्यं वा एतन्निर्वरुणतायै तत्र न साम गीयते न ह्यत्र साम्ना किं चन क्रियते तूष्णीमेवेत्याभ्यवेत्योपमारयति - २.५.२.[४६]

अवभृथ निचुम्पुण । निचेरुरसि निचुम्पुणः अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहीति कामं हैते यस्मै कामयेत तस्मै दद्यान्न हि दीक्षितवसने भवतः स यथाहिस्त्वचो निर्मुच्येतैवं सर्वस्मात्पाप्मनो निर्मुच्यते - २.५.२.[४७]

अथ केशश्मश्रूत्वा । समारोह्याग्नी उदवसायेव ह्येतेन यजते न हि तदवकल्पते यदुत्तरवेदावग्निहोत्रं जुहुयात्तस्मादुदवस्यति गृहानित्वा निर्मथ्याग्नी पौर्णमासेन यजत उत्सन्नयज्ञ इव वा एष यच्चातुर्मास्यान्यथैष क्लृप्तः प्रतिष्ठितो यज्ञो यत्पौर्णमासं तत्क्लृप्तेनैवैतद्यज्ञेनान्ततः प्रतितिष्ठति तस्मादुदवस्यति - २.५.२.[४८]



##२.५.३. साकमेधपर्व
वरुणप्रघासैर्वै प्रजापतिः । प्रजा वरुणपाशात्प्रामुञ्चत्ता अस्यानमीवा अकिल्विषाः प्रजाः प्राजायन्ताथैतैः साकमेधैरेतैर्वै देवा वृत्रमघ्नन्नेतैर्वेव व्यजयन्त येयमेषां विजितिस्तां तथो एवैष एतैः पाप्मानं द्विषन्तं भ्रातृव्यं हन्ति तथो एव विजयते तस्माद्वा एष एतैश्चतुर्थे मासि यजते स वै द्व्यहमनूचीनाहं यजते - २.५.३.[१]

स पूर्वेद्युः । अग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्वपत्यग्निं ह वै देवा अनीकं कृत्वोपप्रेयुर्वृत्रं हनिष्यन्तः स तेजोऽग्निर्नाव्यथत तथो एवैष एतत्पाप्मानं द्विषन्तं भ्रातृव्यं हनिष्यन्नग्निमेवानीकं कृत्वोपप्रैति स तेजोऽग्निर्न व्यथते तस्मादग्नयेऽनीकवते - २.५.३.[२]

अथ मरुद्भ्यः सांतपनेभ्यः । मध्यन्दिने चरुं निर्वपति मरुतो ह वै सांतपना मध्यंन्दिने वृत्रं संतेपुः स संतप्तोऽनन्नेव प्राणन्परिदीर्णः शिश्ये तथो एवैतस्य पाप्मानं द्विषन्तं भ्रातृव्यं मरुतः सांतपनाः संतपन्ति तस्मान्मरुद्भ्यः सांतपनेभ्यः - २.५.३.[३]

अथ मरुद्भ्यो गृहमेधिभ्यः । शाखया वत्सानपाकृत्य पवित्रवति संदोह्य तं चरुं श्रपयति चररु ह्येव स यत्र क्व च तण्डुलानावपन्ति तन्मेधो देवा दधिरे प्रातर्वृत्रं हनिष्यन्तस्तथो एवैष एतत्पाप्मानं द्विषन्तं भ्रातृव्यं हनिष्यन्मेधो धत्ते तद्यत्क्षीरौदनो भवति मेधो वै पयो मेधस्तण्डुलास्तमुभयं मेधमात्मन्धत्ते तस्मात्क्षीरौदनो भवति - २.५.३.[४]

तस्यावृत् । सैव स्तीर्णा वेदिर्भवति या मरुद्भ्यः सांतपनेभ्यस्तस्यामेव स्तीर्णायां वेदौ परिधींश्च शकलांश्चोपनिदधति तथा संदोह्य चरुं श्रपयति श्रपयित्वाभिघार्योद्वासयति - २.५.३.[५]

अथ द्वे पिशीले वा पात्र्यौ वा निर्णेनिजति । तयोरेनं द्वेधोद्धरन्ति तयोर्मध्ये सर्पिरासेचने कृत्वा सर्पिरासिञ्चति स्रुवं च स्रुचं च सम्मार्ष्टर्यथैता ओदनावादायोदैति स्रुवं च स्रुचं चादायोदैति स इमामेव स्तीर्णां वेदिमभिमृश्य परिधीन्परिधाय यावतः शकलान् कामयते तावतोऽभ्यादधात्यथैता ओदनावासादयति स्रुवं च स्रुचं चासादयत्युपविशति होता होतृषदने स्रुवं च स्रुचं चाददान आह - २.५.३.[६]

अग्नयेऽनुब्रूहीति । आग्नेयमाज्यभागं स दक्षिणस्यौदनस्य सर्पिरासेचनाच्चतुराज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याहाग्निं यजेति वषट्कृते जुहोति - २.५.३.[७]

अथाह सोमायानुब्रूहीति । सौम्यमाज्यभागं स उत्तरस्यौदनस्य सर्पिरासेचनाच्चतुराज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याह सोमं यजेति वषट्कृते जुहोति - २.५.३.[८]

अथाह मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहीति । स दक्षिणस्यौदनस्य सर्पिरासेचनात्तत आज्यमुपस्तृणीते तस्य द्विरवद्यत्यथोपरिष्टादाज्यस्याभिघारयत्यतिक्रामत्यतिक्रम्याश्राव्याह मरुतो गृहमेधिनो यजेति वषट्कृते जुहोति - २.५.३.[९]

अथाहाग्नये स्विष्टकृतेऽनुब्रूहीति । स उत्तरस्यौदनस्य सर्पिरासेचनात्तत आज्यमुपस्तृणीते तस्य द्विरवद्यत्यथोपरिष्टादाज्यस्याभिघारयत्यतिक्रामत्यतिक्रम्याश्राव्याहाग्निंस्विष्टकृतं यजेति वषट्कृते जुहोत्यथेडामेवावद्यति न प्राशित्रमुपहूय मार्जयन्त एतन्न्वेकमयनम् - २.५.३.[१०]

अथेदं द्वितीयम् । सैव स्तीर्णा वेदिर्भवति या मरुद्भ्यः सांतपनेभ्यस्तस्यामेव स्तीर्णायां वेदौ परिधींश्च शकलांश्चोपनिदधति तथा संदोह्य चरुं श्रपयति नेदेव प्रतिवेशमाज्यमधिश्रयति श्रपयित्वाभिघार्योद्वास्यानक्ति स्थाल्यामाज्यमुद्वासयति स्रुवं च स्रुचं च सम्मार्ष्ट्यथैतं सोखमेव चरुमादायोदैति स्थाल्यामाज्यमादायोदैति स्रुवं च स्रुचं चादायोदैति स इमामेव स्तीर्णां वेदिमभिमृश्य परिधीन्परिधाय यावतः शकलान् कामयते तावतोऽभ्यादधात्यथैतं सोखमेव चरुमासादयति स्थाल्यामाज्यमासादयति स्रुवं च स्रुचं चासादयत्युपविशति होता होतृषदने स्रुवं च स्रुचं चाददान आह - २.५.३.[११]



अग्नयेऽनुब्रूहीति । आग्नेयमाज्यभागं स स्थाल्यै चतुराज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याहाग्निं यजेति वषट्कृते जुहोति - २.५.३.[१२]

अथाह सोमायानुब्रूहीति । सौम्यमाज्यभागं स स्थाल्या एव चतुराज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याह सोमं यजेति वषट्कृते जुहोति - २.५.३.[१३]

अथाह मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहीति । स उपस्तृणीत आज्यमथास्य चरोर्द्विरवद्यत्यथोपरिष्टादाज्यस्याभिघारयति प्रत्यनक्त्यवदाने अतिक्रामत्यतिक्रम्याश्राव्याह मरुतो गृहमेधिनो यजेति वषट्कृते जुहोति - २.५.३.[१४]

अथाहाग्नये स्विष्टकृतेऽनुब्रूहीति । स उपस्तृणीत आज्यमथास्य चरोः सकृदवद्यत्यथोपरिष्टाद्द्विराज्यस्याभिघारयति न

प्रत्यनक्त्यवदानमतिक्रामत्यतिक्रम्याश्राव्याहाग्निं स्विष्टकृतं यजेति वषङ्कृते जुहोति - २.५.३.[१५]

अथेडामेवावद्यति न प्राशित्रम् । उपहूय प्राश्नन्ति यावन्तो गृह्या हविरुच्छिष्टाशाः स्युस्तावन्तः प्राश्नीयुरथो अप्यृत्विजः प्राश्नीयुरथो अप्यन्ये ब्राह्मणाः प्राश्नीयुर्यदि बहुरोदन स्यादथैतामनिरशितां कुम्भीमपिधाय निदधति पूर्णदर्वाय मातृभिर्वत्सान्त्समवार्जन्ति तदु पशवो मेधमात्मन्दधते यवाग्वैतां रात्रिमग्निहोत्रं जुहोति निवान्यां प्रातर्दुहन्ति पितृयज्ञाय - २.५.३.[१६]

अथ प्रातर्हुते वाहुते वा । यतरथा कामयेत सोऽस्या अनिरशितायै कुम्भ्यै दर्व्योपहन्ति पूर्णा दर्वि परापत सुपूर्णा पुनरापत वस्नेव विक्रीणावहा इषमूर्जं शतक्रतविति यथा पुरोऽनुवाक्यैवमेषैतयैवैनमेतस्मै भागाय ह्वयति - २.५.३.[१७]



अथर्षभमाह्वयितवै ब्रूयात् । स यदि रुयात्स वषट्कार इत्यु हैक आहुस्तस्मिन्वषट्कारे जुहुयादित्यथो इन्द्रमेवैतत्स्वेन रूपेण ह्वयति वृत्रस्य वधायैतद्वा इन्द्रस्य रूपं यदृषभस्तत्स्वेनैवैनमेतद्रूपेण ह्वयति वृत्रस्य वधाय स यदि रुयादा म इन्द्रो यज्ञमगन्त्सेन्द्रो मे यज्ञ इति ह विद्याद्यद्यु न रुयाद्ब्राह्मण एव दक्षिणत आसीनो ब्रूयाज्जुहुधीति सैवैन्द्री वाक् - २.५.३.[१८]

स जुहोति । देहि मे ददामि ते नि मे धेहि नि ते दधे निहारं च हरासि मे निहारं निहराणि ते स्वाहेति - २.५.३.[१९]

अथ मरुद्भ्यः क्रीडिभ्यः । सप्तकपालं पुरोडाशं निर्वपति मरुतो ह वै क्रीडिनो वृत्रं हनिष्यन्तमिन्द्रमागतं तमभितः परिचिक्रीडुर्महयन्तस्तथो एवैतं पाप्मानं द्विषन्तं भ्रातृव्यं हनिष्यन्तमभितः परिक्रीडन्ते महयन्तस्तस्मान्मरुद्भ्यः क्रीडिभ्योऽथातो महाहविष एव तद्यथा महाहविषस्तथो तस्य - २.५.३.[२०]

##२.५.४.

महाहविष ह वै देवा वृत्रं जघ्नुः । तेनो एव व्यजयन्त येयमेषां विजितिस्तां तथो एवैष एतेन पाप्मानं द्विषन्तं भ्रातृव्यं हन्ति तथो एव विजयते तस्माद्वा एष एतेन यजते - २.५.४.[१]

तस्यावृत् । उपकिरन्त्युत्तरवेदिं गृह्णन्ति पृषदाज्यं मन्थन्त्यग्निं नवप्रयाजम्भवति नवानुयाजं त्रीणि समिष्टयजूंषि भवन्त्यथैतान्येव पञ्च हवींषि भवन्ति - २.५.४.[२]

स यदाग्नेयोऽष्टाकपालः पुरोडाशो भवति । अग्निना ह वा एनं तेजसाघ्नन्त्स तेजोऽग्निर्नाव्यथत तस्मादाग्नेयो भवति - २.५.४.[३]

अथ यत्सौम्यश्चरुर्भवति । सोमेन ह वा एनं राज्ञाघ्नन्त्सोमराजान एव तस्मात्सौम्यश्चरुर्भवति - २.५.४.[४]



अथ यत्सावित्रः । द्वादशकपालो वाष्टाकपालो वा पुरोडाशो भवति सविता वै देवानाम्प्रसविता सवितृप्रसूता हैवैनमघ्नंस्तस्मात्सावित्रो भवति - २.५.४.[५]

अथ यत्सारस्वतश्चरुर्भवति । वाग्वै सरस्वती वागु हैवानुममाद प्रहर जहीति तस्मात्सारस्वतश्चरुर्भवति - २.५.४.[६]

अथ यत्पौष्णश्चरुर्भवति । इयं वै पृथिवी पूषेयं हैवैनं वधाय प्रतिप्रददावनया हैवैनं प्रतिप्रत्तं जघ्नुस्तस्मात्पौष्णश्चरुर्भवति - २.५.४.[७]

अथैन्द्राग्नौ द्वादशकपालः पुरोडाशो भवति । एतेन हैवैनमघ्नंस्तेजो वा अग्निरिन्द्रियं वीर्यमिन्द्र एताभ्यामेनमुभाभ्यां वीर्याभ्यामघ्नन्ब्रह्म वा अग्निः क्षत्रमिन्द्रस्ते उभे संरभ्य ब्रह्म

च क्षत्रं च सयुजौ कृत्वा ताभ्यामेनमुभाभ्यां वीर्याभ्यामघ्नंस्तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति - २.५.४.[८]

अथ माहेन्द्रश्चरुर्भवति । इन्द्रो वा एष पुरा वृत्रस्य वधादथ वृत्रं हत्वा यथा महाराजो विजिग्यान एवं महेन्द्रोऽभवत्तस्मान्माहेन्द्रश्चरुर्भवति महान्तमु चैवैनमेतत्खलु करोति वृत्रस्य वधाय तस्माद्वेव माहेन्द्रश्चरुर्भवति - २.५.४.[९]

अथ वैश्वकर्मण एककपालः पुरोडाशो भवति । विश्वं वा एतत्कर्म कृतं सर्वं जितं देवानामासीत्साकमेधैरीजानानां विजिग्यानानां विश्वम्वेवैतस्यै तत्कर्म कृतं सर्वं जितं भवति साकमेधैरीजानस्य विजिग्यानस्य तस्माद्वैश्वकर्मण एककपालः पुरोडाशो भवति - २.५.४.[१०]

एतेन वै देवाः । यज्ञेनेष्ट्वा येयं देवानां प्रजातिर्या श्रीरेतद्बभूवुरेतां ह वै प्रजातिं प्रजायत एतां श्रियं गच्छति य एवं विद्वानेतेन यज्ञेन यजते तस्माद्वा एतेन यजेत - २.५.४.[११]



##२.६.१. पितृयज्ञः

महाहविषा ह वै देवा वृत्रं जघ्नुः । तेनो एव व्यजयन्त येयमेषां विजितिस्तामथ यानेवैषां तस्मिन्त्संग्रामेऽघ्नंस्तान्पितृयज्ञेन समैरयन्त पितरो वै त आसंस्तस्मात्पितृयज्ञो नाम - २.६.१.[१]

तद्वसन्तो ग्रीष्मो वर्षाः । एते ते ये व्यजयन्त शरद्धेमन्तः शिशिरस्त उ ते यान्पुनः समैरयन्त - २.६.१.[२]

अथ यदेष एतेन यजते । तन्नाह न्वेवैतस्य तथा कं चन घ्नन्तीति देवा अकुर्वन्निति न्वेवैष एतत्करोति यमु चैवैभ्यो देवा भागमकल्पयंस्तमु चैवैभ्य एष एतद्भागं करोति यानु चैव देवाः समैरयन्त तानु चैवैतदवति स्वानु चैवैतत्पितॄञ्छ्रेयांसं लोकमुपोन्नयति यदु

चैवास्यात्रात्मनोऽचरणेन हन्यते वा मीयते वा तदु चैवास्यैतेन पुनराप्यायते तस्माद्वा एष एतेन यजते - २.६.१.[३]

स पितृभ्यः सोमवद्भ्यः । षट्कपालं पुरोडाशं निवपति सोमाय वा पितृमते षड्वा ऋतव ऋतवः पितरस्तस्मात्षट्कपालो भवति - २.६.१.[४]

अथ पितृभ्यो बर्हिषद्भ्यः । अन्वाहार्यपचने धानाः कुर्वन्ति ततोऽर्धाः पिंषन्त्यर्धा इत्येव धाना अपिष्टा भवन्ति ता धानाः पितृभ्यो बर्हिषद्भ्यः - २.६.१.[५]

अथ पितृभ्योऽग्निष्वात्तेभ्यः । निवान्यायै दुग्धे सकृदुपमथित एकशलाकया मन्थो भवति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृदुपमथितो भवत्येतानि हवींषि भवन्ति - २.६.१.[६]

तद्ये सोमेनेजानाः । ते पितरः सोमवन्तोऽथ ये दत्तेन पक्वेन लोकं जयन्ति ते पितरो बर्हिषदोऽथ ये ततो नान्यतरच्चन यानग्निरेव दहन्त्स्वदयति ते पितरोऽग्निष्वात्ता एत उ ये पितरः - २.६.१.[७]



स जघनेन गार्हपत्यम् । प्राचीनावीती भूत्वा दक्षिणासीन एतं षट्कपालम्पुरोडाशं गृह्णाति स तत एवोपोत्थायोत्तरेणान्वाहार्यपचनं दक्षिणा तिष्ठन्नवहन्ति सकृत्फलीकरोति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृत्फलीकरोति - २.६.१.[८]

स दक्षिणैव दृषदुपले उपदधाति । दक्षिणार्धे गार्हपत्यस्य षट् कपालान्युपदधाति तद्यदेतां दक्षिणां दिशं सचन्त एषा हि दिक्पितृणां तस्मादेतां दक्षिणां दिशं सचन्ते - २.६.१.[९]

अथ दक्षिणेनान्वाहार्यपचनम् । चतुःस्रक्तिं वेदिं करोत्यवान्तरदिशोऽनु स्रक्तीः करोति चतस्रो वा अवान्तरदिशोऽवान्तरदिशो वै पितरस्तस्मादवान्तरदिशोऽनु स्रक्तीः करोति - २.६.१.[१०]

तन्मध्येऽग्निं समादधाति । पुरस्ताद्वै देवाः प्रत्यञ्चो मनुष्यानभ्युपावृत्तास्तस्मात्तेभ्यः प्राङ्ग्निष्ठञ्जुहोति सर्वतः पितरोऽवान्तरदिशो वै पितरः सर्वत इव हीमा अवान्तरदिशस्तस्मान्मध्येऽग्निं समादधाति - २.६.१.[११]

स तत एव प्राक्स्तम्बयजुर्हरति । स्तम्बयजुर्हुत्वाथेत्येवाग्रे परिगृह्णात्यथेत्यथेति पूर्वेण परिग्रहेण परिगृह्य लिखति हरति यद्धार्यम्भवति स तथैवोत्तरेण परिग्रहेण परिगृह्णात्युत्तरेण परिग्रहेण परिगृह्य प्रतिमृज्याह प्रोक्षणीरासादयेत्यासादयन्ति प्रोक्षणीरिध्मं बर्हिरुपसादयन्ति स्रुचः सम्मार्ष्ट्याज्येनोदैति स यज्ञोपवीती भूत्वाऽऽज्यानि गृह्णाति - २.६.१.[१२]

तदाहुः । द्विरुपभृति गृह्णीयाद्द्वौ ह्यत्रानुयाजौ भवत इति तद्वष्टावेव कृत्व उपभृति गृह्णीयान्नेद्यज्ञस्य विधाया अयानीति तस्मादष्टावेव कृत्व उपभृति गृह्णीयादाज्यानि गृहीत्वा स पुनः प्राचीनावीती भूत्वा - २.६.१.[१३]

प्रोक्षणीरध्वर्युरादत्ते । स इध्ममेवाग्रे प्रोक्षत्यथ वेदिमथास्मै बर्हिः प्रयच्छन्ति तत्पुरस्ताद्ग्रन्थ्यासादयति तत्प्रोक्ष्योपनिनीय विस्रंस्य ग्रन्थिं न प्रस्तरं गृह्णाति सकृदु ह्येव पराञ्चः पितरस्तस्मान्न प्रस्तरं गृह्णाति - २.६.१.[१४]

अथ संनहनमनुविस्रंस्य । अपसलवि त्रिः परिस्तृणन्पर्येति सोऽपसलवि त्रिःपरिस्तीर्य यावत्प्रस्तरभाजनं तावत्परिशिनष्ट्यथ पुनः प्रसलवि त्रिः पर्येति यत्पुनः प्रसलवि त्रिः पर्येति तद्यानेवामूंस्त्रयान्पितृनन्ववागात्तेभ्य एवैतत्पुनरपोदेतीमं स्वं लोकमभि तस्मात्पुनः प्रसलवि त्रिः पर्येति - २.६.१.[१५]

स दक्षिणैव परिधीन्परिदधाति । दक्षिणा प्रस्तरं स्तृणाति नान्तर्दधाति विधृती सकृदु ह्येव पराञ्चः पितरस्तस्मान्नान्तर्दधाति विधृती - २.६.१.[१६]

स तत्र जुहूमासादयति । अथ पूर्वामुपभृतमथ ध्रुवामथ पुरोडाशमथ धाना अथ मन्थमासाद्य हवींषि सम्मृशति - २.६.१.[१७]

ते सर्व एव यज्ञोपवीतिनो भूत्वा । इत्थाद्यजमानश्च ब्रह्मा च पश्चात्परीतः पुरस्तादग्नीत् - २.६.१.[१८]

तेनोपांशु चरन्ति । तिरैव वै पितरस्तिर इवैतद्यदुपांशु तस्मादुपांशु चरन्ति - २.६.१.[१९]

परिवृते चरन्ति । तिर इव वै पितरस्तिर इवैतद्यत्परिवृतं तस्मात्परिवृते चरन्ति - २.६.१.[२०]

अथेध्ममभ्यादधदाह । अग्नये समिध्यमानायानुब्रूहीति स एकामेव होता सामिधेनीं त्रिरन्वाह सकृदु ह्येव पराञ्चः पितरस्तस्मादेकां होता सामिधेनीं त्रिरन्वाह - २.६.१.[२१]



सोऽन्वाह । उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि उशन्नुशत आवह पितॄन्हविषे अत्तव इत्यथाग्निमावह सोममावह पितॄन्त्सोमवत आवह पितॄन्बर्हिषद आवह पितॄनग्निष्वात्तानावह देवां३ आज्यपां३ आवहाग्निं होत्रायावह स्वं महिमानमावहेत्यावाह्योपविशति - २.६.१.[२२]

अथाश्राव्य न होतारं प्रवृणीते । पितृयज्ञो वा अयं नेद्धोतारं पितृषु दधानीति तस्मान्न होतारं प्रवृणीते सीद होतरित्येवाहोपविशति होता होतृषदन उपविश्य प्रसौति प्रसूतोऽध्वर्युः स्रुचावादाय प्रत्यङ्ङतिक्रामत्यतिक्रम्याश्राव्याह समिधो यजेति सोऽपबर्हिषश्चतुरः प्रयाजान्यजति प्रजा वै बर्हिर्नेत्प्रजाः पितृषु दधानीति तस्मादपबर्हिषश्चतुरः प्रयाजान्यजत्यथाज्यभागाभ्यां चरन्त्याज्यभागाभ्यां चरित्वा - २.६.१.[२३]

ते सर्व एव प्राचीनावीतिनो भूत्वा । एतैर्वै हविर्भिः प्रचरिष्यन्त इत्याद्यजमानश्च ब्रह्मा च पुरस्तात्परीतः पश्चादग्नीत्तदुताश्रावयन्त्यों३ स्वधेत्यस्तु स्वधेति प्रत्याश्रावणं स्वधा नम इति वषट्कारः - २.६.१.[२४]

तदु होवाचासुरिः । आश्रावयेयुरेव प्रत्याश्रावयेयुर्वषट्कुर्युर्नेद्यज्ञस्य विधाया अयामेति - २.६.१.[२५]

अथाह पितृभ्यः सोमवद्भ्योऽनुब्रूहीति । सोमाय वा पितृमते स द्वे पुरोऽनुवाक्ये अन्वाहैकया वै देवान्प्रच्यावयन्ति द्वाभ्यां पितृन्त्सकृदु ह्येव पराञ्चः पितरस्तस्माद्द्वे पुरोऽनुवाक्ये अन्वाह - २.६.१.[२६]

स उपस्तृणीत आज्यम् । अथास्य पुरोडाशस्यावद्यति स तेनैव सह धानानां तेन सह मन्थस्य तत्सकृदवदधात्यथोपरिष्टाद्द्विराज्यस्याभिघारयति प्रत्यनक्त्यवदानानि नातिक्रामतीत एवोपोत्थायाश्राव्याह पितृन्त्सोमवतो यजेति वषट्कृते जुहोति - २.६.१.[२७]



अथाह पितृभ्यो बर्हिषद्भ्योऽनुब्रूहीति । स उपस्तृणीत आज्यमथासां धानानामवद्यति स तेनैव सह मन्थस्य तेन सह पुरोडाशस्य तत्सकृदवदधात्यथोपरिष्टाद्द्विराज्यस्याभिघारयति प्रत्यनक्त्यवदानानि नातिक्रामतीत एवोपोत्थायाश्राव्याह पितृन्बर्हिषदो यजेति वषट्कृते जुहोति - २.६.१.[२८]

अथाह पितृभ्योऽग्निष्वात्तेभ्योऽनुब्रूहीति । स उपस्तृणीत आज्यमथास्य मन्थस्यावद्यति स तेनैव सह पुरोडाशस्य तेन सह धानानां तत्सकृदवदधात्यथोपरिष्टाद्द्विराज्यस्याभिघारयति प्रत्यनक्त्यवदानानि नातिक्रामतीत एवोपोत्थायाश्राव्याह पितृनग्निष्वात्तान्यजेति वषट्कृते जुहोति - २.६.१.[२९]

अथाहाग्नये कव्यवाहनायानुब्रूहीति । तत्स्विष्टकृते हव्यवाहनो वै देवानां कव्यवाहनः पितॄणां तस्मादाहाग्नये कव्यवाहनायानुब्रूहीति - २.६.१.[३०]

स उपस्तृणीत आज्यम् । अथास्य पुरोडाशस्यावद्यति स तेनैव सह धानानां तेन सह मन्थस्य तत्सकृदवदधात्यथोपरिष्टाद्द्विराज्यस्याभिघारयति न प्रत्यनक्त्यवदानानि नातिक्रामतीत एवोपोत्थायाश्राव्याहाग्निं कव्यवाहनं यजेति वषट्कृते जुहोति - २.६.१.[३१]

स यन्नातिक्रामति । इत एवोपोत्थायं जुहोति सकृदु ह्येव पराञ्चः पितरोऽथ यत्सकृत्सर्वेषां समवद्यति सकृदु ह्येव पराञ्चः पितरोऽथ यद्व्यतिषङ्गमवदानान्यवद्यत्यृतवो वै पितर ऋतूनेवैतद्व्यतिषजत्यृतून्त्संदधाति तस्माद्व्यति षङ्गमवदानान्यवद्यति - २.६.१.[३२]

तद्धैके । एतमेव होत्रे मन्थमादधति तं होतोपहूयावैव जिघ्रति तं ब्रह्मणे प्रयच्छति तं ब्रह्मावैव जिघ्रति तमग्नीधे प्रयच्छति तमग्नीदवैव जिघ्रत्येतन्न्वेवैतत्कुर्वन्ति यथा त्वेवेतरस्य यज्ञस्येडा प्राशित्रं समवद्यन्त्येवमेवैतस्यापि समवद्येयुस्तामुपहूयावैव जिघ्रन्ति न प्राश्नन्ति प्राशितव्य त्वेव वयं मन्यामह इति ह स्माहासुरिर्यस्य कस्य चाग्नौ जुह्वतीति - २.६.१.[३३]



अथ यतरो दास्यन्भवति । यद्यध्वर्युर्वा यजमानो वा स उदपात्रमादायापसलवि त्रिः परिषिञ्चन्पर्येति स यजमानस्य पितरमवनेजयत्यसाववनेनिक्ष्वेत्यसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्रपितामहं तद्यथाशिष्यतेऽभिषिञ्चेदेवं तत् - २.६.१.[३४]

अथास्य पुरोडाशस्यावदाय । सव्ये पाणौ कुरुते धानानामवदाय सव्ये पाणौ कुरुते मन्थस्यावदाय सव्ये पाणौ कुरुते - २.६.१.[३५]

स येमामवान्तरदिशमनु स्रक्तिः । तस्यां यजमानस्य पित्रे ददात्यसावेतत्त इत्यथ येमामवान्तरदिशमनु स्रक्तिस्तस्यां यजमानस्य पितामहाय ददात्यसावेतत्त इत्यथ येमामवान्तरदिशमनु स्रक्तिस्तस्यां यजमानस्य प्रपितामहाय ददात्यसावेतत्त इत्यथ

येमामवान्तरदिशमनु स्रक्तिस्तस्यां निमृष्टेऽत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति यथाभागमश्नीतेत्येवैतदाह तद्यमेवं पितृभ्यो ददाति तेनो स्वान्पितॄनेतस्माद्यज्ञान्नान्तरेति - २.६.१.[३६]

ते सर्व एव यज्ञोपवीतिनो भूत्वा । उदञ्च उपनिष्क्रम्याहवनीयमुपतिष्ठन्ते देवान्वा एष उपावर्तते य आहिताग्निर्भवति यो दर्शपूर्णमासाभ्यां यजतेऽथैतत्पितृयज्ञेनेवाचारिषुस्तदु देवेभ्यो निह्नुवते - २.६.१.[३७]

ऐन्द्रीभ्यामाहवनीयमुपतिष्ठन्ते इन्द्रो ह्याहवनीयोऽक्षन्नमीमदन्त ह्यव प्रिया अधूषत अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी सुसंदृशं त्वा वयं मघवन्वन्दिषीमहि प्र नूनं पूर्णबन्धुर स्तुतो यासि वशांऽनु योजा न्विन्द्र ते हरी इति - २.६.१.[३८]



अथ प्रतिपरेत्य गार्हपत्यमुपतिष्ठन्ते । मनो न्वाह्वामहे नाराशंसेन स्तोमेन पितृणां च मन्मभिः आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे ज्योक्च सूर्यं दृशे पुनर्नः पितरो मनो ददातु दैव्यो जनः जीवं व्रातं सचेमहीति पितृयज्ञेनेव वा एतदचारिषुस्तदु खलु पुनर्जीवानपिपद्यन्ते तस्मादाह जीवं व्रातं सचेमहीति - २.६.१.[३९]

अथ यतरो ददाति । स पुनः प्राचीनावीती भूत्वाभिप्रपद्य जपत्यमीमदन्त पितरो यथाभागमावृषायिषतेति यथाभागमाशिषुरित्येवैतदाह - २.६.१.[४०]

अथोदपात्रमादाय । पुनः प्रसलवि त्रिः परिषिञ्चन्पर्येति स यजमानस्य पितरमवनेजयत्यसाववनेनिक्ष्वेत्यसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्रपितामहं तद्यथा जक्षुषेऽभिषिञ्चेदेवं तत्तद्यत्पुनः प्रसलवि त्रिः परिषिञ्चन्पर्येति प्रसलवि न इदं कर्मानुसंतिष्ठाता इति तस्मात्पुनः प्रसलवि त्रिः परिषिञ्चन्पर्येति - २.६.१.[४१]

अथ नीविमुद्वृह्य नमस्करोति । पितृदेवत्या वै नीविस्तस्मान्नीविमुद्वृह्य नमस्करोति यज्ञो वै नमो यज्ञियानेवैनानेतत्करोति षट्कृत्वो नमस्करोति षड्वा ऋतव ऋतवः पितरस्तदृतुष्वेवैतद्यज्ञं प्रतिष्ठापयति तस्मात्षट्कृत्वो नमस्करोति गृहान्नः पितरो दत्तेति गृहाणां ह पितर ईशत एषो एतस्याशीः कर्मणः - २.६.१.[४२]

ते सर्व एव यज्ञोपवीतिनो भूत्वा । अनुयाजाभ्यां प्रचरिष्यन्त इत्याद्यजमानश्च ब्रह्मा च पश्चात्परीतः पुरस्तादग्नीदुपविशति होता होतृषदने - २.६.१.[४३]

अथाह ब्रह्मन्प्रस्थास्यामि । समिधमाधायाग्निमग्नीत्सम्मृड्ढीति स्रुचावादायप्रत्यङ्ङतिक्रामत्यतिक्रम्याश्राव्याह देवान्यजेति सोऽपबर्हिषौ द्वावनुयाजौ यजति प्रजा वै बर्हिर्नेत्प्रजाः पितृषु दधानीति तस्मादपबर्हिषौ द्वावनुयाजौ यजति - २.६.१.[४४]

अथ सादयित्वा स्रुचौ व्यूहति । स्रुचौ व्युह्य परिधीन्त्समज्य परिधिमभिपद्याश्राव्याहेषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकायेति सूक्तवाकं होता प्रतिपद्यते नाध्वर्युः प्रस्तरं समुल्लुम्पतीत्येवोपास्ते यदा होता सूक्तवाकमाह - २.६.१.[४५]



अथाग्नीदाहानुप्रहरेति । स न किं चनानुप्रहरति तूष्णीमेवात्मानमुपस्पृशति - २.६.१.[४६]

अथाह संवदस्वेति । अगानग्नीदगञ्छ्रावय श्रौषड्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शं योर्ब्रूहीत्युपस्पृशत्येव परिधीन्नानुप्रहरत्यथैतद्बर्हिरनुसमस्यति परिधींश्च - २.६.१.[४७]

तद्धैके । हविरुच्छिष्टमनुसमस्यन्ति तदु तथा न कुर्याद्धुतोच्छिष्टं वा एतन्नेद्धुतोच्छिष्टमग्नौ जुहवामेति तस्मादपो वै वाभ्यवहरेयुः प्राश्नीयुर्वा - २.६.१.[४८]

##२.६.२ त्र्यम्बकहविर्यागः

महाहविषा ह वै देवा वृत्रं जघ्नुः । तेनो एव व्यजयन्त येयमेषां विजितिस्तामथ यानेवैषां तस्मिन्त्संग्राम इषव आर्चंस्तानेतैरेव शल्यान्निरहरन्त तान्व्यवृहन्त यत्त्यम्बकैरयजन्त - २.६.२.[१]

अथ यदेष एतैर्यजते । तन्नाह न्वेवैतस्य तथा कं च नेषुर्र्ह्च्छतीति देवा अकुर्वन्निति त्वेवैष एतत्करोति याश्च त्वेवास्य प्रजा जाता याश्चाजातास्ता उभयी रुद्रियात्प्रमुञ्चति ता अस्यानमीवा अकिल्विषाः प्रजाः प्रजायन्ते तस्माद्वा एष एतैर्यजते - २.६.२.[२]

ते वै रौद्रा भवन्ति । रुद्रस्य हीषुस्तस्माद्रौद्रा भवन्त्येककपालाभवन्त्येकदेवत्या असन्निति तस्मादेककपाला भवन्ति - २.६.२.[३]

ते वै प्रतिपुरुषम् । यावन्तो गृह्याः स्युस्तावन्त एकेनातिरिक्ता भवन्ति तत्प्रतिपुरुषमेवैतदेकैकेन या अस्य प्रजा जातास्ता रुद्रियात्प्रमुञ्चत्येकेनातिरिक्ता भवन्ति तद्या एवास्य प्रजा अजातास्ता रुद्रियात्प्रमुञ्चति तस्मादेकेनातिरिक्ता भवन्ति - २.६.२.[४]



स जघनेन गार्हपत्यम् । यज्ञोपवीती भूत्वोदङ्ङासीन एतान्गृह्णाति स तत एवोपोत्थायोदङ्ङ्ष्ठिन्नवहन्त्युदीच्यौ दृषदुपले उपदधात्युत्तरार्धे गार्हपत्यस्य कपालान्युपदधाति तद्यदेव तामुत्तरां दिशं सचन्त एषा ह्येतस्य देवस्य दिक्तस्मादेतामुत्तरां दिशं सचन्ते - २.६.२.[५]

ते वा अक्ताः स्युः । अक्तं हि हविस्त उ वा अनक्ता एव स्युरभिमानुको ह रुद्रः पशून्त्स्याद्यदङ्ज्यात्तस्मादनक्ता एव स्युः - २.६.२.[६]

तान्त्सार्धं पात्र्यां समुद्वास्य । अन्वाहार्यपचनादुल्मुकमादायोदङ्ङेत्यजुहोत्येषा ह्येतस्य देवस्य दिक्पथि जुहोति पथा हि स देवश्चरति चतुष्पथे जुहोत्येतद्ध वा अस्य जान्धितं प्रज्ञातमवसानं यच्चतुष्पथं तस्माच्चतुष्पथे जुहोति - २.६.२.[७]

पलाशस्य पलाशेन मध्यमेन जुहोति । ब्रह्म वै पलाशस्य पलाशम्ब्रह्मणैवैतज्जुहोति स सर्वेषामेवावद्यत्येकस्यैव नावद्यति य एषोऽतिरिक्तो भवति - २.६.२.[८]

स जुहोति । एष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व स्वाहेत्यम्बिका ह वै नामास्य स्वसा तयास्यैष सह भागस्तद्यदस्यैष स्त्रिया सह भागस्तस्मात्त्यम्बका नाम तद्या अस्य प्रजा जातास्ता रुद्रियात्प्रमुञ्चति - २.६.२.[९]

अथ य एष एकोऽतिरिक्तो भवति । तमाखूत्कर उपकिरत्येष ते रुद्र भाग आखुस्ते पशुरिति तदस्मा आखुमेव पशूनामनुदिशति तेनो इतरान्पशून्न हिनस्ति तद्यदुपकिरति तिर इव वै गर्भास्तिर इवैतद्यदुपकीर्णं तस्माद्वा उपकिरति तद्या एवास्य प्रजा अजातास्ता रुद्रियात्प्रमुञ्चति - २.६.२.[१०]

अथ पुनरेत्य जपन्ति । अव रुद्रमदीमह्यव देवं त्र्यम्बकं यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजं सुखं मेषाय मेष्या इत्याशीरेवैषैतस्य कर्मणः - २.६.२.[११]

अथापसलवि त्रिः परियन्ति । सव्यानूरूनुपाघ्नानास्त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्धनमुर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतादित्याशीरेवैषैतस्य कर्मण आशिषमेवैतदाशासते तदु ह्येव शमिव यो मृत्योर्मुच्यातै नामृतात्तस्मादाह मृत्योर्मुक्षीय मामृतादिति - २.६.२.[१२]

तदु ह्यापि कुमार्य¬ परीयुः । भगस्य भजामहा इति या ह वै सा रुद्रस्य स्वसाम्बिका नाम सा ह वै भगस्येष्टे तस्मादु हापि कुमार्य परीयुर्भगस्य भजामहा इति - २.६.२.[१३]

तासामुतासां मन्त्रोऽस्ति । त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् उर्वारुकमिव बन्धनादितो मुक्षीय मामुत इति सा यदित इत्याह ज्ञातिभ्यस्तदाह मामुत इति पतिभ्यस्तदाह पतयो ह्येव स्त्रियै प्रतिष्ठा तस्मादाह मामुत इति - २.६.२.[१४]

अथ पुनः प्रसलवि त्रिः परियन्ति । दक्षिणानूरूनुपाघ्नाना एतेनैव मन्त्रेण तद्यत्पुनः प्रसलवि त्रिः परियन्ति प्रसलवि न इदं कर्मानुसंतिष्ठाता इति तस्मात्पुनः प्रसलवि त्रिः परियन्ति - २.६.२.[१५]

अथैतान्यजमानोऽञ्जलौ समोप्य । ऊर्ध्वानुदस्यति यथा गौर्नोदाप्नुयात्तदात्मभ्य एवैतच्छल्यान्निर्मिमते तान्विलिप्सन्त उपस्पृशन्ति भेषजमेवैतत्कुर्वते तस्माद्विलिप्सन्त उपस्पृशन्ति - २.६.२.[१६]

तान्द्वयोर्मूतकयोरुपनह्य । वेणुयष्ट्यां वा कुपे वोभयत आबध्योदङ्ङेत्य यदि वृक्षं वा स्थाणुं वा वेणुं वा वल्मीकं वा विन्देत्तस्मिन्नासजत्येतत्ते रुद्रावसं तेन परो मूजवतोऽतीहीत्यवसेन वा अध्वानं यन्ति तदेनं सावसमेवान्ववार्जति यत्र यत्रास्य चरणं तदन्वत्र ह वा अस्य परो मूजवद्भ्यश्चरणं तस्मादाह परो मूजवतोऽतीहीत्यवततधन्वा पिनाकावस इत्यहिंसन्नः शिवोऽतीहीत्य् एवैतदाह कृत्तिवासा इति निष्वापयत्येवैनमेतत्स्वपन्नु हि न कं चन हिनस्ति तस्मादाह कृत्तिवासा इति - २.६.२.[१७]

अथ दक्षिणान्बाहूनन्वावर्तन्ते । ते प्रतीक्षं पुनरायन्ति पुनरेत्याप उपस्पृशन्ति रुद्रियेणेव वा एतदचारिषुः शान्तिरापस्तदद्भिः शान्त्या शमयन्ते - २.६.२.[१८]

अथ केशश्मश्रूप्त्वा । समारोह्याग्नी उदवसायेव ह्येतेन यजते न हि तदवकल्पते यदुत्तरवेदावग्निहोत्रं जुहुयात्तस्मादुदवस्यति गृहानित्वा निर्मथ्याग्नी पौर्णमासेन यजत उत्सन्नयज्ञ इव वा एष यच्चातुर्मास्यान्यथैष कॢप्तः प्रतिष्ठितो यज्ञो यत्पौर्णमासं तत्कॢप्तेनैवैतद्यज्ञेनान्ततः प्रतितिष्ठति तस्मादुदवस्यति - २.६.२.[१९]

##२.६.३ शुनासीरीयपर्व
अक्षय्यं ह वै सुकृतं चातुर्मास्ययाजिनो भवति । संवत्सरं हि जयति तेनास्याक्षय्यं भवति तं वै त्रेधा विभज्य यजति त्रेधा विभज्य प्रजयति सर्वं वै संवत्सरः सर्वं वा अक्षय्यमेतेनो

हास्याक्षय्यं सुकृतम्भवत्यृतुरु हैवैतद्भूत्वा देवानप्येत्यक्षय्यमु वै देवानामेतेनो हैवास्याक्षय्यं सुकृतं भवत्येतन्नु तद्यस्माच्चातुर्मास्यैर्यजते - २.६.३.[१]

अथ यस्माच्छुनासीर्येण यजेत । या वै देवानां श्रीरासीत्साकमेधैरीजानानां विजिग्यानानां तच्छुनमथ यः संवत्सरस्य प्रजितस्य रस आसीत्तत्सीरं सा या चैव देवानां श्रीरासीत्साकमेधैरीजानानां विजिग्यानानां य उ च संवत्सरस्य प्रजितस्य रस आसीत्तमेवैतदुभयं परिगृह्यात्मन् कुरुते तस्माच्छुनासीर्येण यजते - २.६.३.[२]

तस्यावृत् । नोपकिरन्त्युत्तरवेदिं न गृह्णन्ति पृषदाज्यं न मन्थन्त्यग्निं पञ्च प्रयाजा भवन्ति त्रयोऽनुयाजा एकं समिष्टयजुः - २.६.३.[३]

अथैतान्येव पञ्च हवींषि भवन्ति । एतैर्वै हविर्भिः प्रजापतिः प्रजा असृजतैतैरुभयतो वरुणपाशात्प्रजाः प्रामुञ्चदेतैर्वै देवा वृत्रमघ्नन्नेतैर्वेव व्यजयन्त येयमेषां विजितिस्तां तथो एवैष एतैर्या चैव देवानां श्रीरासीत्साकमेधैरीजानानां विजिग्यानानां य उ च संवत्सरस्य प्रजितस्य रस आसीत्तमेवैतदुभयं परिगृह्यात्मन् कुरुते तस्माद्वा एतानि पञ्च हवींषि भवन्ति - २.६.३.[४]

अथ शुनासीर्यो द्वादशकपालः पुरोडाशो भवति । स बन्धुः शुनासीर्यस्य यम्पूर्वमवोचाम - २.६.३.[५]

अथ वायव्यं पयो भवति । पयो ह वै प्रजा जाता अभिसंजानते विजिग्यानं मा प्रजाः श्रियै यशसेऽन्नाद्यायाभिसंजानान्ता इति तस्मात्पयो भवति - २.६.३.[६]

तद्यद्वायव्यं भवति । अयं वै वायुर्योऽयं पवत एष वा इदं सर्वम्प्रप्याययति यदिदं किं च वर्षति वृष्टादोषधयो जायन्त ओषधीर्जग्ध्वापः पीत्वा तत एतदद्भ्योऽधि पयः सम्भवत्येष हि वा एतज्जनयति तस्माद्वायव्यम्भवति - २.६.३.[७]

अथ सौर्य एककपालः पुरोडाशो भवति एष वै सूर्यो य एष तपत्येष वा इदं सर्वमभिगोपायति साधुना त्वदसाधुना त्वदेष इदं सर्वं विदधाति साधौ त्वदसाधौ त्वदेष मा विजिग्यानं प्रीतः साधुना त्वदभिगोपायत्साधौ त्वद्विदधदिति तस्मात्सौर्य एककपालः पुरोडाशो भवति - २.६.३.[८]

तस्याश्वः श्वेतो दक्षिणा । तदेतस्य रूपं क्रियते य एष तपति यद्यश्वं श्वेतं न विन्देदपि गौरेव श्वेतः स्यात्तदेतस्य रूपं क्रियते य एष तपति - २.६.३.[९]

स यत्रैव साकमेधैर्यजते । तच्छुनासीर्येण यजेत यद्वै त्रिः संवत्सरस्य यजते तेनैव संवत्सरमाप्नोति तस्माद्यदैव कदा चैतेन यजेत - २.६.३.[१०]

तद्धैके । रात्रीरापिपयिषन्ति स यदि रात्रीरापिपयिषेद्यददः पुरस्तात्फाल्गुन्यै पौर्णमास्या उद्दृष्टं तच्छुनासीर्येण यजेत - २.६.३.[११]



अथ दीक्षेत तं नानीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्येयात्पुनः प्रयागरूप इव ह स यदेनमनीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्येयात्तस्मादेनं नानीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्येयादिति नूत्सृजमानस्य - २.६.३.[१२]

अथ पुनः प्रयुञ्जानस्य । पूर्वेद्युः फाल्गुन्यै पौर्णमास्यै शुनासीर्येण यजेताथ प्रातर्वैश्वदेवेनाथ पौर्णमासेनैतदु पुनः प्रयुञ्जानस्य - २.६.३.[१३]

अथातः । परिवर्तनस्यैव सर्वतोमुखो वा असावादित्य एष वा इदं सर्वं निर्धयति यदिदं किं च शुष्यति तेनैष सर्वतोमुखस्तेनान्नादः - २.६.३.[१४]

सर्वतोमुखोऽयमग्निः । यतो ह्येव कुतश्चाग्नावभ्यादधति तत एव प्रदहति तेनैष सर्वतोमुखस्तेनान्नादः - २.६.३.[१५]

अथायमन्यतोमुखः पुरुषः । स एतत्सर्वतोमुखो भवति यत्परिवर्तयते स एवमेवान्नादो भवति यथैतावेतद्य एवं विद्वान्परिवर्तयते तस्माद्वै परिवर्तयेत - २.६.३.[१६]

तदु होवाचासुरिः । किं नु तत्र मुखस्य यदपि सर्वाण्येव लोमानि वपेत यद्वै त्रिः संवत्सरस्य यजते तेनैव सर्वतोमुखस्तेनान्नादस्तस्मान्नाद्रियेत परिवर्तयितुमिति - २.६.३.[१७]

##२.६.४ सर्वशेषः
तद्यदाहुः । साकमेधैर्वै देवा वृत्रमघ्नंस्तैर्वेव व्यजयन्त येयमेषां विजितिस्तामिति सर्वैर्ह त्वेव देवाश्चातुर्मास्यैर्वृत्रमघ्नन्त्सर्वैर्वेव व्यजयन्त येयमेषां विजितिस्ताम् - २.६.४.[१]

ते होचुः । केन राज्ञा केनानीकेन योत्स्याम इति स हाग्निरुवाच मया राज्ञा मयानीकेनेति तेऽग्निना राज्ञाग्निनानीकेन चतुरो मासः प्राजयंस्तान्ब्रह्मणा च त्रय्या च विद्यया पर्यगृह्णन् - २.६.४.[२]



ते होचुः । केनैव राज्ञा केनानीकेन योत्स्याम इति स ह वरुण उवाच मया राज्ञा मयानीकेनेति ते वरुणेनैव राज्ञा वरुणेनानीकेनापरांश्चतुरो मासः प्राजयंस्तान्ब्रह्मणा चैव त्रय्या च विद्यया पर्यगृह्णन् - २.६.४.[३]

ते होचुः । केनैव राज्ञा केनानीकेन योत्स्याम इति स हेन्द्र उवाच मया राज्ञा मयानीकेनेति त इन्द्रेणैव राज्ञेन्द्रेणानीकेनापरांश्चतुरो मासः प्राजयंस्तान्ब्रह्मणा चैव त्रय्या च विद्यया पर्यगृह्णन् - २.६.४.[४]

स यद्वैश्वदेवेन यजते । अग्निनैवैतद्राज्ञाग्निनानीकेन चतुरो मासः प्रजयति तत्त्येनी शलली भवति लोहः क्षुरः सा या त्र्येनी शलली सा त्रय्यै विद्यायै रूपं लोहः क्षुरो ब्रह्मणो रूपमग्निर्हि ब्रह्म लोहित इव ह्यग्निस्तस्माल्लोहः क्षुरो भवति तेन परिवर्तयते तद्ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति - २.६.४.[५]

अथ यद्वरुणप्रघासैर्यजते । वरुणेनैवैतद्राज्ञा वरुणेनानीकेनापरांश्चतुरो मासः प्रजयति तत्त्येनी शलली भवति लोहः क्षुरस्तेन परिवर्तयते तद्ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति - २.६.४.[६]

अथ यत्साकमेधैर्यजते । इन्द्रेणैवैतद्राज्ञेन्द्रेणानीकेनापरांश्चतुरो मासः प्रजयति तत्त्येनी शलली भवति लोहः क्षुरस्तेन परिवर्तयते तद्ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति - २.६.४.[७]

स यद्वैश्वदेवेन यजते । अग्निरेव तर्हि भवत्यग्नेरेव सायुज्यं सलोकतां जयत्यथ यत्साकमेधैर्यजत इन्द्र एव तर्हि भवतीन्द्रस्यैव सायुज्यं सलोकतां जयति - २.६.४.[८]

स यस्मिन्हर्तावमुं लोकमेति । स एनमृतुः परस्मा ऋतवे प्रयच्छति पर उ परस्मा ऋतवे प्रयच्छति स परममेव स्थानं परमां गतिं गच्छति चातुर्मास्ययाजी तदाहुर्न चातुर्मास्ययाजिनमनुविन्दन्ति परमं ह्येव खलु स स्थानम्परमां गतिं गच्छतीति - २.६.४.[९]



##३.१.१ अग्निष्टोमे देवयजनम्

देवयजनं जोषयन्ते । स यदेव वर्षिष्ठं स्यात्तज्जोषयेरन्यदन्यद्भूमेराभिशयीतातो वै देवा दिवमुपोदक्रामन्देवान्वा एष उपोत्क्रामति यो दीक्षते स सदेवे देवयजने यजते स यद्धान्यद्भूमेरभिशयीतावरतर इव हेष्ट्वा स्यात्तस्माद्यदेव वर्षिष्ठं स्यात्तज्जोषयेरन् - ३.१.१.[१]

तद्वर्ष्म सत्समं स्यात् । समं सदविभ्रंशि स्यादविभ्रंशि सत्प्राक्प्रवणं स्यात्प्राची हि देवानां दिगथो उदक्प्रवणमुदीची हि मनुष्याणां दिग्दक्षिणतः प्रत्युच्छ्रितमिव स्यादेषा वै दिक्पितॄणां स यद्दक्षिणाप्रवणं स्यात्क्षिप्रे ह यजमानोऽमुं लोकमियात्तथो ह यजमानो ज्योग्जीवति तस्माद्दक्षिणतः प्रत्युच्छ्रितमिव स्यात् - ३.१.१.[२]

न पुरस्ताद्देवयजनमात्रमतिरिच्येत । द्विषन्तं हास्य तद्भ्रातृव्यमभ्यतिरिच्यते कामं ह दक्षिणतः स्यादेवमुत्तरत एतद्ध त्वेव समृद्धं देवयजनं यस्य देवयजनमात्रं पश्चात्परिशिष्यते क्षिप्रे हैवैनमुत्तरा देवयज्योपनमतीति नु देवयजनस्य - ३.१.१.[३]

तदु होवाच याज्ञवल्क्यः । वार्ष्णयाय देवयजनं जोषयितुमैम तत्सात्ययज्ञोऽब्रवीत्सर्वा वा इयं पृथिवी देवी देवयजनं यत्र वा अस्यै क्व च यजुषैव परिगृह्य याजयेदिति - ३.१.१.[४]

ऋत्विजो हैव देवयजनम् । ये ब्राह्मणाः शुश्रुवांसोऽनूचाना विद्वांसो याजयन्ति सैवाह्वलैतन्नेदिष्ठमामिव मन्यामह इति - ३.१.१.[५]

तच्छालो वा विमितं वा प्राचीनवंशं मिन्वन्ति । प्राची हि देवानां दिक्पुरस्ताद्वै देवाः प्रत्यञ्चो मनुष्यानुपावृत्तास्तस्मात्तेभ्यः प्राङ्तिष्ठञ्जुहोति - ३.१.१.[६]



तस्मादु ह न प्रतीचीनशिराः शयीत । नेद्देवानभिप्रसार्य शया इति या दक्षिणा दिक्सा पितॄणां या प्रतीची सा सर्पाणां यतो देवा उच्चक्रमुः सैषाहीना योदीची दिक्सा मनुष्याणां तस्मान्मानुष उदीचीनवंशामेव शालां वा विमितं वा मिन्वन्त्युदीची हि मनुष्याणां दिग्दीक्षितस्यैव प्राचीनवंशा नादीक्षितस्य - ३.१.१.[७]

तां वा एतां परिश्रयन्ति । नेदभिवर्षादिति न्वेव वर्षा देवान्वा एष उपावर्तते यो दीक्षते स देवतानामेको भवति तिर इव वै देवा मनुष्येभ्यस्तिर इवैतद्यत्परिश्रितं तस्मात्परिश्रयन्ति - ३.१.१.[८]

तन्न सर्व इवाभिप्रपद्येत ब्राह्मणो वैव राजन्यो वा वैश्यो वा ते हि यज्ञियाः - ३.१.१.[९]

स वै न सर्वेणेव संवदेत । देवान्वा एष उपावर्तते यो दीक्षते स देवतानामेको भवति न वै देवा सर्वेणेव संवदन्ते ब्राह्मणेन वैव राजन्येन वा वैश्येन वा ते हि यज्ञियास्तस्माद्यद्येनं

शूद्रेण संवादो विन्देदेतेषामेवैकं ब्रूयादिममिति विचक्ष्वेममिति विचक्ष्वेत्येष उ तत्र दीक्षितस्योपचारः - ३.१.१.[१०]

अथारणी पाणौ कृत्वा । शालामध्यवस्यति स पूर्वार्ध्यं स्थूणाराजमभिपद्यैतद्यजुराहैदमगन्म देवयजनं पृथिव्या यत्र देवासो अजुषन्त विश्व इति तदस्य विश्वैश्च देवैर्जुष्टं भवति ये चेमे ब्राह्मणाः शुश्रुवांसोऽनूचाना यदहास्य तेऽक्षिभ्यामीक्षन्ते ब्राह्मणाः शुश्रुवांसस्तदहास्य तैर्जुष्टं भवति - ३.१.१.[११]

यद्वाह । यत्र देवासो अजुषन्त विश्व इति तदस्य विश्वैर्देवैर्जुष्टम्भवत्यृक्षामाभ्यां संतरन्तो यजुर्भिरित्यृक्षामाभ्यां वै यजुर्भिर्यज्ञस्योदृचं गच्छन्ति यज्ञस्योदृचं गच्छानीत्येवैतदाह रायस्पोषेण समिषा मदेमेति भूमा वै रायस्पोषः श्रीर्वै भूमाऽऽशिषमेवैतदाशास्ते समिषा मदेमेतीषं मदतीति वै तमाहुर्यः श्रियमश्नुते यः परमतां गच्छति तस्मादाह समिषा मदेमेति - ३.१.१.[१२]



##३.१.२. दीक्षासंस्काराः

अपराह्णे दीक्षेत । पुरा केशश्मश्रोर्वपनाद्यत्कामयेत तदश्नीयाद्यद्वासम्पद्येत व्रतं ह्येवास्यातोऽशनं भवति यद्यु नाशिशिषेदपि कामं नाश्नीयात् - ३.१.२.[१]

अथोत्तरेण शालां परिश्रयन्ति । तदुदकुम्भमुपनिदधाति तन्नापित उपतिष्ठते तत्केशश्मश्रु च वपते नखानि च निकृन्ततेऽस्ति वै पुरुषस्यामेध्यं यत्रास्यापो नोपतिष्ठन्ते केशश्मश्रौ च वा अस्य नखेषु चापो नोपतिष्ठन्ते तद्यत्केशश्मश्रु च वपते नखानि च निकृन्तते मेध्यो भूत्वा दीक्षा इति - ३.१.२.[२]

तद्धैके । सर्व एव वपन्ते सर्व एव मेध्या भूत्वा दीक्षिष्यामह इति तदु तथा न कुर्याद्यद्वै केशश्मश्रु च वपते नखानि च निकृन्तते तदेव मेध्यो भवति तस्मादु केशश्मश्रु चैव वपेत नखानि च निकृन्तेत - ३.१.२.[३]

स वै नखान्येवाग्रे निकृन्तते । दक्षिणस्यैवाग्रे सव्यस्य वा अग्रे मानुषेऽथैवं देवत्राङ्गुष्ठयोरेवाग्रे कनिष्ठिकयोर्वा अग्रे मानुषेऽथैवं देवत्रा - ३.१.२.[४]

स दक्षिणमेवाग्रे गोदानं वितारयति । सव्यं वा अग्रे मानुषेऽथैवं देवत्रा - ३.१.२.[५]

स दक्षिणमेवाग्रे गोदानमभ्युनत्ति । इमा आपः शमु मे सन्तु देवीरिति स यदाहेमा आपः शमु मे सन्तु देवीरिति वज्रो वा आपो वज्रो हि वा आपस्तस्माद्येनैता यन्ति निम्नं कुर्वन्ति यत्रोपतिष्ठन्ते निर्दहन्ति तत्तदेतमेवैतद्वज्रं शमयति तथो हैनमेष वज्रः शान्तो न हिनस्ति तस्मादाहेमा आपः शमु मे सन्तु देवीरिति - ३.१.२.[६]

अथ दर्भतरुणकमन्तर्दधाति । ओषधे त्रायस्वेति वज्रो वै क्षुरस्तथो हैनमेष वज्रः क्षुरो न हिनस्त्यथ क्षुरेणाभिनिदधाति स्वधिते मैनं हिंसीरिति वज्रो वै क्षुरस्तथो हैनमेष वज्रः क्षुरो न हिनस्ति - ३.१.२.[७]



प्रच्छिद्योदपात्रे प्रास्यति । तूष्णीमेवोत्तरं गोदानमभ्युनत्ति तूष्णीं दर्भतरुणकमन्तर्दधाति तूष्णीं क्षुरेणाभिनिधाय प्रच्छिद्योदपात्रे प्रास्यति - ३.१.२.[८]

अथ नापिताय क्षुरं प्रयच्छति । स केशश्मश्रु वपति स यदा केशश्मश्रु वपति- ३.१.२.[९]

अथ स्नाति । अमेध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतो मेध्या वा आपो मेध्यो भूत्वा दीक्षा इति पवित्रं वा आपः पवित्रपूतो दीक्षा इति तस्माद्वै स्नाति - ३.१.२.[१०]

स स्नाति । आपो अस्मान्मातरः शुन्धयन्त्विति घृतेन नो घृतप्वः पुनन्त्विति तद्वै सुपूतं यं घृतेनापुनंस्तस्मादाह घृतेन नो घृतप्वः पुनन्त्विति विश्वं हि रिप्रं प्रवहन्ति देवीरिति यद्वै विश्वं सर्वं तद्यदमेध्यं रिप्रं तत्सर्वं ह्यस्मादमेध्यं प्रवहन्ति तस्मादाह विश्वं हि रिप्रं प्रवहन्ति देवीरिति - ३.१.२.[११]

अथ प्राङिवोदङ्ङुत्क्रामति । उदिदाभ्यः शुचिरा पूत एमीत्युद्ध्याभ्यः शुचिः पूत एति - ३.१.२.[१२]

अथ वासः परिधत्ते । सर्वत्वायैव स्वामेवास्मिन्नेतत्त्वचं दधाति या ह वा इयं गोस्त्वक्पुरुषे हैषाग्र आस - ३.१.२.[१३]

ते देवा अब्रुवन् । गौर्वा इदं सर्वं बिभर्ति हन्त येयं पुरुषे त्वग्गव्येतां दधाम तयैषा वर्षन्तं तया हिमं तया घृणिं तितिक्षिष्यत इति - ३.१.२.[१४]

तेऽवच्छाय पुरुषम् । गव्येतां त्वचमदधुस्तयैषा वर्षन्तं तया हिमं तया घृणिं तितिक्षते - ३.१.२.[१५]

अवच्छितो हि वै पुरुषः । तस्मादस्य यत्रैव क्व च कुशो वा यद्वा विकृन्तति तत एव लोहितमुत्पतति तस्मिन्नेतां त्वचमदधुर्वास एव तस्मान्नान्यः पुरुषाद्वासो बिभर्त्येतां ह्यस्मिंस्त्वचमदधुस्तस्मादु सुवासा एव बुभूषेत्स्वया त्वचा समृध्या इति तस्मादप्यश्लीलं सुवाससं दिदृक्षन्ते स्वया हि त्वचा समृद्धो भवति - ३.१.२.[१६]

नो हान्ते गोर्नग्नः स्यात् । वेद ह गौरहमस्य त्वचं बिभर्मीति सा बिभ्यती त्रसति त्वचं म आदास्यत इति तस्मादु गावः सुवाससमुपैव निश्रयन्ते - ३.१.२.[१७]

तस्य वा एतस्य वाससः । अग्नेः पर्यासो भवति वायोरनुच्छादो नीविः पितृणां सर्पाणाम्प्रघातो विश्वेषां देवानां तन्तव आरोका नक्षत्राणामेवं हि वा एतत्सर्वे देवा अन्वायत्तास्तस्माद्दीक्षितवसनं भवति - ३.१.२.[१८]

तद्वा अहतं स्यात् । अयातयामतायै तद्वै निष्पेष्टवै ब्रूयाद्यदेवास्यात्रामेध्या कृणत्ति वा वयति वा तदस्य मेध्यमसदिति यद्यु अहतं स्याददद्भिरभ्युक्षेन्मेध्यमसदित्यथो यदिदं स्नातवस्यं निहितमपल्यूलनकृतं भवति तेनो हापि दीक्षेत - ३.१.२.[१९]

तत्परिधत्ते । दीक्षातपसोस्तनूरसीत्यदीक्षितस्य वा अस्यैषाग्रे तनूर्भवत्यथात्र दीक्षातपसोस्तस्मादाह दीक्षातपसोस्तनूरसीति तां त्वा शिवां शग्मां परिदध इति तां त्वा शिवां साध्वीं परिदध इत्येवैतदाह भद्रं वर्णं पुष्यन्निति पापं वा एषोऽग्रे वर्णं पुष्यति यममुमदीक्षितोऽथात्र भद्रं तस्मादाह भद्रं वर्णं पुष्यन्निति - ३.१.२.[२०]

अथैनं शालां प्रपादयति । स धेन्वै चानडुहश्च नाश्नीयाद्धेन्वनडुहौ वा इदं सर्वं बिभृतस्ते देवा अब्रुवन्धेन्वनडुहौ वा इदं सर्वं बिभृतो हन्त यदन्येषां वयसां वीर्यं तद्धेन्वनडुहयोर्दधामेति स यदन्येषां वयसां वीर्यमासीत्तद्धेन्वनडुहयोरदधुस्तस्माद्धेनुश्चैवानड्वांश्च भूयिष्ठम्भुङ्क्तस्तद्धैतत्सर्वाश्यमिव यो धेन्वनडुहयोरश्नीयादन्तगतिरिव तं हाद्भुतमभिजनितोर्जायायै गर्भं निरवधीदिति पापमकदिति पापीकीर्तिस्तस्माद्धेन्वनडुहयोर्नाश्नीयात्तदु होवाच याज्ञवल्क्योऽश्नाम्येवाहमंसलं चेद्भवतीति - ३.१.२.[२१]



##३.१.३
अपः प्रणीय । आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपत्यग्निर्वै सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वत्यग्निर्वै यज्ञस्यावरार्ध्यो विष्णुः परार्ध्यस्तत्सर्वाश्चैवैतद्देवताः परिगृह्य सर्वं च यज्ञं परिगृह्य दीक्षा इति तस्मादाग्नावैष्णव एकादशकपालः पुरोडाशो भवति - ३.१.३.[१]

तद्धैके । आदित्येभ्यश्चरुं निर्वपन्ति तदस्ति पर्युदितमिवाष्टौ पुत्रासो अदितेर्ये जातास्तन्वस्परि देवां उप प्रैत्सप्तभिः परा मार्ताण्डमास्यदिति - ३.१.३.[२]

अष्टौ ह वै पुत्रा अदितेः । यांस्त्वेतद्देवा आदित्या इत्याचक्षते सप्त हैव तेऽविकृतं हाष्टमं जनयां चकार मार्ताण्डं संदेघो हैवास यावानेवोर्ध्वस्तावांस्तिर्यङ्पुरुषसम्मित इत्यु हैक आहुः - ३.१.३.[३]

त उ हैत ऊचुः । देवा आदित्या यदस्मानन्वजनिमा तदमुयेव भूद्धन्तेमं विकरवामेति तं विचक्रुर्यथायं पुरुषो विकृतस्तस्य यानि मांसानि संकृत्य संन्यासुस्ततो हस्ती समभवत्तस्मादाहुर्न हस्तिनं प्रतिगृह्णीयात्पुरुषाजानो हि हस्तीति यमु ह तद्विचक्रुः स विवस्वानादित्यस्तस्येमाः प्रजाः - ३.१.३.[४]

स होवाच । राध्नवान्मे स प्रजायां य एतमादित्येभ्यश्चरुं निर्वपादिति राध्नोति हैव य एतमादित्येभ्यश्चरुं निर्वपत्ययं त्वेवाग्नावैष्णवः प्रज्ञातः - ३.१.३.[५]

तस्य सप्तदश सामिधेन्यो भवन्ति । उपांशु देवते यजति पञ्च प्रयाजा भवन्ति त्रयोऽनुयाजाः संयाजयन्ति पत्नीः सर्वत्वायैव समिष्टयजुरेव न जुहोति नेदिदं दीक्षितवसनं परिधाय पुरा यज्ञस्य संस्थाया अन्तं गच्छानीत्यान्तो हि यज्ञस्य समिष्टयजुः - ३.१.३.[६]

अथाग्रेण शालां तिष्ठन्नभ्यङ्क्ते । अरुर्वै पुरुषोऽवच्छितोऽनरुरेवैतद्भवति यदभ्यङ्क्ते गवि वै पुरुषस्य त्वग्गोर्वा एतन्नवनीतं भवति स्वयैवैनमेतत्त्वचा समर्धयति तस्माद्वा अभ्यङ्क्ते - ३.१.३.[७]

तद्वै नवनीतं भवति । घृतं वै देवानां फाण्टम्मनुष्याणामथैतन्नाहैव घृतं नो फाण्टं स्यादेव घृतं स्यात्फाण्टमयातयामतायै तदेनमयातयाम्नैवायातयामानं करोति - ३.१.३.[८]

तमभ्यनक्ति । शीर्षतोऽग्र आ पादाभ्यामनुलोमं महीनां पयोऽसीति मह्य इति ह वा एतासामेकं नाम यद्गवां तासां वा एतत्पयो भवति तस्मादाह महीनाम्पयोऽसीति वर्चोदा असि वर्चो मे देहीति नात्र तिरोहितमिवास्ति - ३.१.३.[९]

अथाक्ष्यावानक्ति । अरुर्वै पुरुषस्याक्षि प्रशान्ममेति ह स्माह याज्ञवल्क्यो दुरक्ष इव हास पूयो हैवास्य दूषीका ते एवैतदनरुष्करोति यदक्ष्यावानक्ति - ३.१.३.[१०]

यत्र वै देवाः । असुररक्षसानि जघ्नुस्तच्छुष्णो दानवः प्रत्यङ्ङतित्वामनुष्याणामक्षीणि प्रविवेश स एष कनीनकः कुमारक इव परिभासते तस्माएवैतद्यज्ञमुपप्रयन्त्सर्वतोऽश्मपुरां परिदधात्यश्मा ह्याञ्जनम् - ३.१.३.[११]

त्रैककुदं भवति । यत्र वा इन्द्रो वृत्रमहंस्तस्य यदक्ष्यासीत्तं गिरिं त्रिककुदमकरोत्तद्यत्त्रैककुदं भवति चक्षुष्येवैतच्चक्षुर्दधाति तस्मात्त्रैककुदं भवति यदि त्रैककुदं न विन्देदप्यत्रैककुदमेव स्यात्समानी ह्येवाञ्जनस्य बन्धुता - ३.१.३.[१२]

शरेषीकयानक्ति । वज्रो वै शरो विरक्षस्तायै सतूला भवत्यमूलं वा इदमुभयतः परिच्छिन्नं रक्षोऽन्तरिक्षमनुचरति यथायं पुरुषोऽमूल उभयतः परिच्छिन्नोऽन्तरिक्षमनुचरति तद्यत्सतूला भवति विरक्षस्तायै - ३.१.३.[१३]



स दक्षिणमेवाग्र आनक्ति । सव्यं वा अग्रे मानुषेऽथैवं देवत्रा - ३.१.३.[१४]

स आनक्ति । वृत्रस्यासि कनीनक इति वृत्रस्य ह्येष कनीनकश्चक्षुर्दा असि चक्षुर्मे देहीति नात्र तिरोहितमिवास्ति - ३.१.३.[१५]

स दक्षिणं सकृद्यजुषानक्ति । सकृत्तूष्णीमथोत्तरं सकृद्यजुषानक्ति द्विस्तूष्णीं तदुत्तरमेवैतदुत्तरावत्करोति - ३.१.३.[१६]

तद्यत्पञ्च कृत्व आनक्ति । संवत्सरसम्मितो वै यज्ञः पञ्च वा ऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च कृत्व आनक्ति - ३.१.३.[१७]

अथैनं दर्भपवित्रेण पावयति । अमेध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतो मेध्या वै दर्भा मेध्यो भूत्वा दीक्षा इति पवित्रं वै दर्भाः पवित्रपूतो दीक्षा इति तस्मादेनं दर्भपवित्रेण पावयति - ३.१.३.[१८]

तद्वा एकं स्यात् । एको ह्येवायं पवते तदेतस्यैव रूपेण तस्मादेकं स्यात् - ३.१.३.[१९]

अथो अपि त्रीणि स्युः । एको ह्येवायं पवते सोऽयं पुरुषेऽन्तःप्रविष्टस्त्रेधाविहितः प्राण उदानो व्यान इति तदेतस्यैवानु मात्रां तस्मात्त्रीणि स्युः - ३.१.३.[२०]

अथो अपि सप्त स्युः । सप्त वा इमे शीर्षन्प्राणास्तस्मात्सप्त स्युस्त्रिःसप्तान्येव स्युरेकविंशतिरेषैव सम्पत् - ३.१.३.[२१]

तं सप्तभिः सप्तभिः पावयति । चित्पतिर्मा पुनात्विति प्रजापतिर्वै चित्पतिः प्रजापतिर्मा पुनात्वित्येवैतदाह वाक्पतिर्मा पुनात्विति प्रजापतिर्वै वाक्पतिः प्रजापतिर्मा पुनात्वित्येवैतदाह देवो मा सविता पुनात्विति तद्धै सुपूतं यं देवः सविता पुनात्तस्मादाह देवो मा सविता पुनात्वित्यच्छिद्रेण पवित्रेणेति यो वा अयं पवत एषोऽच्छिद्रं पवित्रमेतेनैतदाह सूर्यस्य रश्मिभिरित्येते वै पवितारो यत्सूर्यस्य रश्मयस्तस्मादाह सूर्यस्य रश्मिभिरिति - ३.१.३.[२२]



तस्य ते पवित्रपत इति । पवित्रपतिर्हि भवति पवित्रपूतस्येति पवित्रपूतो हि भवति यत्कामः पुने तच्छकेयमिति यज्ञस्योदृचं गच्छानीत्येवैतदाह - ३.१.३.[२३]

अथाशिषामारम्भं वाचयति । आ वो देवास ईमहे वामं प्रयत्यध्वरे आ वो देवास आशिषो यज्ञियासो हवामह इति तदस्मै स्वाः सतीर्ऋत्विज आशिष आशासते - ३.१.३.[२४]

अथाङ्गुलीर्न्यचति । स्वाहा यज्ञं मनस इति द्वे स्वाहोरोरन्तरिक्षादिति द्वे स्वाहा द्यावापृथिवीभ्यामिति द्वे स्वाहा वातादारभ इति मुष्टीकरोति न वै यज्ञः प्रत्यक्षमिवारभे यथायं दण्डो वा वासो वा परोऽक्षं वै देवाः परोऽक्षं यज्ञः -३.१.३.[२५]

स यदाह । स्वाहा यज्ञं मनस इति तन्मनस आरभते स्वाहोरोरन्तरिक्षादिति तदन्तरिक्षादारभते स्वाहा द्यावापृथिवीभ्यामिति तदाभ्यां द्यावापृथिवीभ्यामारभते ययोरिदं सर्वमधि स्वाहा वातादारभ इति वातो वै यज्ञस्तद्यज्ञं प्रत्यक्षमारभते - ३.१.३.[२६]

अथ यत्स्वाहा स्वाहेति करोति । यज्ञो वै स्वाहाकारो यज्ञमेवैतदात्मन्धत्तेऽत्रो एव वाचं यच्छति वाग्वै यज्ञो यज्ञमेवैतदात्मन्धत्ते - ३.१.३.[२७]

अथैनं शालां प्रपादयति । स जघनेनाहवनीयमेत्यग्रेण गार्हपत्यं सोऽस्य संचरो भवत्या सुत्यायै तद्यदस्यैष संचरो भवत्या सुत्याया अग्निर्वै योनिर्यज्ञस्य गर्भो दीक्षितोऽन्तरेण वै योनिं गर्भः संचरति स यत्स तत्रैजति त्वत्परि त्वदावर्तते तस्मादिमे गर्भा एजन्ति त्वत्परि त्वदावर्तन्ते तस्मादस्यैष संचरो भवत्या सुत्यायै - ३.१.३.[२८]



## ३.१.४.औद्ग्रभणहोमः। दीक्षाहुतिः

सर्वाणि ह वै दीक्षाया यजूंष्यौद्ग्रभणानि । उद्गृभ्णीते वा एषोऽस्माल्लोकाद्देवलोकमभि यो दीक्षत एतैरेव तद्यजुर्भिरुद्गृभ्णीते तस्मादाहुः सर्वाणि दीक्षाया यजूंष्यौद्ग्रभणानीति तत एतान्यवान्तरामाचक्षत औद्ग्रभणानीत्याहुतयो ह्येता आहुतिर्हि यज्ञः परोऽक्षं वै यजुर्जपत्यथैष प्रत्यक्षं यज्ञो यदाहुतिस्तदेतेन यज्ञेनोद्गृभ्णीतेऽस्माल्लोकाद्देवलोकमभि - ३.१.४.[१]

ततो यानि त्रीणि स्रुवेण जुहोति । तान्याधीतयजूंषीत्याचक्षते सम्पद एव कामाय चतुर्थं हूयतेऽथ यत्पञ्चमं स्रुचा जुहोति तदेव प्रत्यक्षमौद्ग्रभणमनुष्टुभा हि तज्जुहोति वाग्घ्यनुष्टुब्वाग्घि यज्ञः - ३.१.४.[२]

यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न इदम्मनुष्यैरनभ्यारोह्यं स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्द्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम - ३.१.४.[३]

तद्वा ऋषीणामनुश्रुतमास । ते यज्ञं समभरन्यथायं यज्ञः सम्भृत एवं वा एष यज्ञं सम्भरति यदेतानि जुहोति - ३.१.४.[४]

तानि वै पञ्च जुहोति । संवत्सरसम्मितो वै यज्ञः पञ्च वा ऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च जुहोति - ३.१.४.[५]



अथातो होमस्यैव । आकूत्यै प्रयुजेऽग्नये स्वाहेत्या वा अग्रे कुवते यजेयेति तद्यदेवात्र यज्ञस्य तदेवैतत्सम्भृत्यात्मन्कुरुते - ३.१.४.[६]

मेधायै मनसेऽग्नये स्वाहेति । मेधया वै मनसाभिगच्छति यजेयेति तद्यदेवात्र यज्ञस्य तदेवैतत्सम्भृत्यात्मन्कुरुते - ३.१.४.[७]

दीक्षायै तपसेऽग्नये स्वाहेति । अन्वेवैतदुच्यते नेत्तु हूयते - ३.१.४.[८]

सरस्वत्यै पूष्णेऽग्नये स्वाहेति । वाग्वै सरस्वती वाग्यज्ञः पशवो वै पूषा पुष्टिर्वै पूषा पुष्टिः पशवः पशवो हि यज्ञस्तद्यदेवात्र यज्ञस्य तदेवैतत्सम्भृत्यात्मन्कुरुते - ३.१.४.[९]

तदाहुः । अनद्धेवैता आहुतयो हूयन्तेऽप्रतिष्ठिता अदेवकास्तत्र नेन्द्रो न सोमो नाग्निरिति - ३.१.४.[१०]

आकूत्यै प्रयुजेऽग्नये स्वाहेति । नात एकं चनाग्निर्वा अद्धेवाग्निः प्रतिष्ठितः स यदग्नौ जुहोति तेनैवैता अद्धेव तेन प्रतिष्ठितास्तस्मादु सर्वास्वेवाग्नये स्वाहेति जुहोति तत एतान्याधीतयजूंषीत्याचक्षते- ३.१.४.[११]

आकूत्यै प्रयुजेऽग्नये स्वाहेति । आत्मना वा अग्र आकुवते यजेयेति तमात्मन एव प्रयुङ्क्ते यत्तनुते ते अस्यैते आत्मन्देवते आधीते भवत आकूतिश्च प्रयुक्च - ३.१.४.[१२]

मेधायै मनसेऽग्नये स्वाहेति । मेधया वै मनसाभिगच्छति यजेयेति ते अस्यैते आत्मन्देवते आधीते भवतो मेधा च मनश्च- ३.१.४.[१३]

सरस्वत्यै पूष्णेऽग्नये स्वाहेति । वाग्वै सरस्वती वाग्यज्ञः सास्यैषात्मन्देवताधीता भवति वाक्पशवो वै पूषा पुष्टिर्वै पूषा पुष्टिः पशवः पशवो हि यज्ञस्तेऽस्यैत आत्मन्पशव आधीता भवन्ति तद्यदस्यैता आत्मन्देवता आधीता भवन्ति तस्मादाधीतयजूंषि नाम - ३.१.४.[१४]



अथ चतुर्थी जुहोति । आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उरो अन्तरिक्ष बृहस्पतये हविषा विधेम स्वाहेत्येषा ह नेदीयो यज्ञस्यापां हि कीर्तयत्यापो हि यज्ञो द्यावापृथिवी उरो अन्तरिक्षेति लोकानां हि कीर्तयति बृहस्पतये हविषा विधेम स्वाहेति ब्रह्म वै बृहस्पतिर्ब्रह्म यज्ञ एतेनो हैषा नेदीयो यज्ञस्य - ३.१.४.[१५]

अथ यां पञ्चमीं स्रुचा जुहोति । सा हैव प्रत्यक्षं यज्ञोऽनुष्टुभा हि तां जुहोति वाग्घ्यनुष्टुब्वाग्घि यज्ञः - ३.१.४.[१६]

अथ यद्ध्रुवायामाज्यं परिशिष्टं भवति । तज्जुह्वामानयति त्रिःस्रुवेणाज्यविलापन्या अधि जुह्वां गृह्णाति यत्तृतीयं गृह्णाति तत्स्रुवमभिपूरयति - ३.१.४.[१७]

स जुहोति । विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यं विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहेति - ३.१.४.[१८]

सैषा देवताभिः पङ्क्तिर्भवति । विश्वो देवस्येति वैश्वदेवं नेतुरिति सावित्रं मर्तो वुरीतेति मैत्रं द्युम्नं वृणीतेति बार्हस्पत्यं द्युम्नं हि बृहस्पतिः पुष्यस इति पौष्णम् - ३.१.४.[१९]

सैषा देवताभिः पङ्क्तिर्भवति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्तवः संवत्सरस्यैतमेवैतयाप्नोति यद्देवताभिः पङ्क्तिर्भवति -३.१.४.[२०]

तां वा अनुष्टुभा जुहोति । वाग्वा अनुष्टुब्वाग्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति - ३.१.४.[२१]

तदाहुः । एतामेवैकां जुहुयाद्यस्मै कामायेतरा हूयन्त एतयैव तं काममाप्नोतीति तां वै यद्येकां जुहुयात्पूर्णां जुहुयात्सर्वं वै पूर्णं सर्वमेवैनयैतदाप्नोत्यथ यत्स्रुवमभिपूरयति स्रुचं तदभिपूरयति ताम्पूर्णां जुहोत्यन्वेवैतदुच्यते सर्वास्वेव हूयन्ते - ३.१.४.[२२]



तां वा अनुष्टुभा जुहोति । सैषानुष्टुप्सत्येकत्रिंशदक्षरा भवति दश पाण्या अङ्गुलयो दश पाद्या दश प्राणा आत्मैकत्रिंशो यस्मिन्नेते प्राणाः प्रतिष्ठिता एतावान्वै पुरुषः पुरुषो यज्ञः पुरुषसम्मितो यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैनयैतदाप्नोति यदनुष्टुभैकत्रिंशदक्षरया जुहोति - ३.१.४.[२३]

##३.२.१ अथ कृष्णाजिनदीक्षा

दक्षिणेनाहवनीयं प्राचीनग्रीवे कृष्णाजिने उपस्तृणाति । तयोरेनमधि दीक्षयति यदि द्वे भवतस्तदनयोर्लोकयो रूपं तदेनमनयोर्लोकयोरधि दीक्षयति - ३.२.१.[१]

सम्बद्धान्ते भवतः । सम्बद्धान्ताविव हीमौ लोकौ तद्यत्समुते पश्चाद्भवतस्तदिमावेव लोकौ मिथुनीकृत्य तयोरेनमधि दीक्षयति - ३.२.१.[२]

यद्यु एक भवति । तदेषां लोकानां रूपं तदेनमेषु लोकेष्वधि दीक्षयति यानि शुक्लानि तानि दिवो रूपं यानि कृष्णानि तान्यस्यै यदि वेतरथा यान्येव कृष्णानि तानि दिवो रूपं यानि शुक्लानि तान्यस्यै यान्येव बभ्रूणीव हरीणि तान्यन्तरिक्षस्य रूपं तदेनमेषु लोकेष्वधि दीक्षयति - ३.२.१.[३]

अन्तकमु तर्हि पश्चात्प्रत्यस्येत् । तदिमानेव लोकान्मिथुनीकृत्य तेष्वेनमधिदीक्षयति - ३.२.१.[४]

अथ जघनेन कृष्णाजिने पश्चात् प्राङ्ङान्वाक्न उपविशति स यत्र शुक्लानां च कृष्णानां च संधिर्भवति तदेवमनिमृश्य जपत्यृसामयोः शिल्पे स्थ इति यद्वै प्रतिरूपं तच्छिल्पमृचां च साम्नां च प्रतिरूपे स्थ इत्येवैतदाह - ३.२.१.[५]



ते वामारभ इति । गर्भो वा एष भवति यो दीक्षते स छन्दांसि प्रविशति तस्मान्न्यक्नाङ्गुलिरिव भवति न्यक्नाङ्गुलय इव हि गर्भाः - ३.२.१.[६]

स यदाह । ते वामारभ इति ते वां प्रविशामीत्येवैतदाह ते मा पातमाऽस्य यज्ञस्योदृच इति ते मा गोपायतमास्य यज्ञस्य संस्थाया इत्येवैतदाह - ३.२.१.[७]

अथ दक्षिणेन जानुनारोहति । शर्मासि शर्म मे यच्छेति चर्म वा एतत्कृष्णस्य तदस्य तन्मानुषं शर्म देवत्रा तस्मादाह शर्मासि शर्म मे यच्छेति नमस्ते अस्तु मा मा हिंसीरिति श्रेयांसं वा एष उपाधिरोहति यो यज्ञं यज्ञो हि कृष्णाजिनं तस्मा एवैतद्यज्ञाय निह्नुते तथो हैनमेष यज्ञो न हिनस्ति तस्मादाह नमस्ते अस्तु मा मा हिंसीरिति - ३.२.१.[८]

स वै जघनार्ध इवैवाग्र आसीत । अथ यदग्र एव मध्य उपविशेद्य एनं तत्रानुष्ठ्या हरेद्द्रप्स्यति वा प्र वा पतिष्यतीति तथा हैव स्यात्तस्माज्जघनार्ध इवैवाग्र आसीत - ३.२.१.[९]

अथ मेखलां परिहरते । अङ्गिरसो ह वै दीक्षितानबल्यमविन्दत्तेनान्यद्व्रतादशनमवाकल्पयंस्त एतामूर्जमपश्यन्त्समाप्तिं तां मध्यत आत्मन ऊर्जमदधत समाप्तिं तया समाप्नुवंस्तथो एवैष एतां मध्यत आत्मन ऊर्जं धत्ते समाप्तिं तया समाप्नोति - ३.२.१.[१०]

सा वै शाणी भवति । मृद्व्यसदिति न्वेव शाणी यत्र वै प्रजापतिरजायत गर्भो भूत्वैतस्माद्यज्ञात्तस्य यन्नेदिष्ठमुल्बमासीत्ते शणास्तस्मात्ते पूतयो वान्ति यद्वस्य जराय्वासीत्तद्दीक्षितवसनमन्तरं वा उल्बं जरायुणो भवति तस्मादेषान्तरा वाससो भवति स यथैवातः प्रजापतिरजायत गर्भो भूत्वैतस्माद्यज्ञादेवमेवैषोऽतो जायते गर्भो भूत्वैतस्माद्यज्ञात् - ३.२.१.[११]

सा वै त्रिवृद्भवति । त्रिवृद्ध्यन्नं पशवो ह्यन्नं पिता माता यज्जायते तत्तृतीयं तस्मात्त्रिवृद्भवति - ३.२.१.[१२]



मुञ्जवल्शेनान्वस्ता भवति । वज्रो वै शरो विरक्षस्तायै स्तुकासर्गं सृष्टा भवति सा यत्प्रसलवि सृष्टा स्याद्यथेदमन्या रज्जवो मानुषी स्याद्यद्वपसलवि सृष्टा स्यात्पितृदेवत्या स्यात्तस्मात्स्तुकासर्गं सृष्टा भवति - ३.२.१.[१३]

तां परिहरते । ऊर्गस्याङ्गिरसीत्यङ्गिरसो ह्येतामूर्जमपश्यन्नूर्णम्रदा ऊर्जम्मयि धेहीति नात्र तिरोहितमिवास्ति - ३.२.१.[१४]

अथ नीविमुद्गूहते । सोमस्य नीविरसीत्यदीक्षितस्य वा अस्यैषाग्रे नीविर्भवत्यथात्र दीक्षितस्य सोमस्य तस्मादाह सोमस्य नीविरसीति - ३.२.१.[१५]

अथ प्रोर्णुते । गर्भो वा एष भवति यो दीक्षते प्रावृता वै गर्भो उल्बेनेव जरायुणेव तस्माद्वै प्रोर्णुते - ३.२.१.[१६]

स प्रोर्णुते । विष्णोः शर्मासि शर्म यजमानस्येत्युभयं वा एषोऽत्र भवति यो दीक्षते विष्णुश्च यजमानश्च यदह दीक्षते तद्विष्णुर्भवति यद्यजते तद्यजमानस्तस्मादाह विष्णोः शर्मासि शर्म यजमानस्येति - ३.२.१.[१७]

अथ कृष्णविषाणां सिचि बध्नीते । देवाश्च वा असुराश्चोभये प्राजापत्याः प्रजापतेः पितुर्दायमुपेयुर्मन एव देवा उपायन्वाचमसुरा यज्ञमेव तद्देवा उपायन्वाचमसुरा अमूमेव देवा उपायन्निमामसुराः - ३.२.१.[१८]

ते देवा यज्ञमब्रुवन् । योषा वा इयं वागुपमन्त्रयस्व ह्वयिष्यते वै त्वेति स्वयं वा हैवैक्षत योषा वा इयं वागुपमन्त्रयै ह्वयिष्यते वै मेति तामुपामन्त्रयत सा हास्मा आरकादिवैवाग्र आसूयत्तस्मादु स्त्रीपुंसोपमन्त्रितारकादिवैवाग्रेऽसूयति स होवाचारकादिव वै म आसूयीदिति - ३.२.१.[१९]



ते होचुः । उपैव भगवो मन्त्रयस्व ह्वयिष्यते वै त्वेति तामुपामन्त्रयत सा हास्मै निपलाशमिवोवाद तस्मादु स्त्री पुंसोपमन्त्रिता निपलाशमिवैव वदति स होवाच निपलाशमिव वै मेऽवादीदिति - ३.२.१.[२०]

ते होचुः । उपैव भगवो मन्त्रयस्व ह्वयिष्यते वै त्वेति तामुपामन्त्रयत सा हैनं जुहुवे तस्मादु स्त्री पुमांसं ह्वयत एवोत्तमं स होवाचाह्वत वै मेति - ३.२.१.[२१]

ते देवा ईक्षांचक्रिरे । योषा वा इयं वाग्यदेनं न युवितेहैव मा तिष्ठन्तमभ्येहीति ब्रूहि तां तु न आगतां प्रतिप्रब्रूतादिति सा हैनं तदेव तिष्ठन्तमभ्येयाय तस्मादु स्त्री पुमांसं संस्कृते तिष्ठन्तमभ्यैति तां हैभ्य आगतां प्रतिप्रोवाचेयं वा आगादिति - ३.२.१.[२२]

तां देवाः । असुरेभ्योऽन्तरायंस्तां स्वीकृत्याग्नावेव परिगृह्य सर्वहुतमजुहवुराहुतिर्हि देवानां स यामेवामूमनुष्टुभा जुहवुस्तदेवैनां तद्देवाः स्व्यकुर्वत तेऽसुरा आत्तवचसो हेऽलवो हेऽलव इति वदन्तः पराबभूवुः - ३.२.१.[२३]

तत्रैतामपि वाचमूदुः । उपजिज्ञास्यां स म्लेच्छस्तस्मान्न ब्राह्मणो म्लेच्छेदसुर्या हैषा वाक् ।एवमेवैष द्विषतां सपत्नानामादत्ते वाचं तेऽस्यात्तवचसः पराभवन्ति य एवमेतद्वेद - ३.२.१.[२४]

सोऽयं यज्ञो वाचमभिदध्यौ । मिथुन्येनया स्यामिति तां संबभूव - ३.२.१.[२५]

इन्द्रो ह वा ईक्षांचक्रे । महद्वा इतोऽभ्वं जनिष्यते यज्ञस्य च मिथुनाद्वाचश्च यन्मा तन्नाभिभवेदिति स इन्द्र एव गर्भो भूत्वैतन्मिथुनम्प्रविवेश - ३.२.१.[२६]



स ह संवत्सरे जायमान ईक्षांचक्रे । महावीर्या वा इयं योनिर्या मामदीधरत यद्वै मेतो महदेवाभ्वं नानुप्रजायेत यन्मा तन्नाभिभवेदिति - ३.२.१.[२७]

तां प्रतिपरामृश्यावेष्ट्याच्छिनत् । तां यज्ञस्य शीर्षन्प्रत्यदधाद्यज्ञो हि कृष्णः स यः स यज्ञस्तत्कृष्णाजिनं योषा योनिः सा कृष्णविषाणाथ यदेनामिन्द्र आवेष्ट्याच्छिनत्तस्मादावेष्टितेव स यथैवात इन्द्रोऽजायत गर्भो भूत्वैतस्मान्मिथुनादेवमेवैषोऽतो जायते गर्भो भूत्वैतस्मान्मिथुनात् - ३.२.१.[२८]

तां वा उत्तानामिव बध्नाति । उत्तानेव वै योनिर्गर्भं बिभर्त्यथ दक्षिणाम्भ्रुवमुपर्युपरि ललाटमुपस्पृशतीन्द्रस्य योनिरसीतीन्द्रस्य ह्येषा योनिरतो वा ह्येनां प्रविशन्प्रविशत्यतो वा जायमानो जायते तस्मादाहेन्द्रस्य योनिरसीति - ३.२.१.[२९]

अथोल्लिखति । सुसस्याः कृषीस्कृधीति यज्ञमेवैतज्जनयति यदा वै सुषमम्भवत्यथालं यज्ञाय भवति यदो दुःषमं भवति न तर्ह्यात्मने च नालम्भवति तद्यज्ञमेवैतज्जनयति - ३.२.१.[३०]

अथ न दीक्षितः । काष्ठेन वा नखेन वा कण्डूयेत गर्भो वा एष भवति यो दीक्षते यो वै गर्भस्य काष्ठेन वा नखेन वा कण्डूयेदपास्यन्म्रित्येत्ततो दीक्षितः पामनो भवितोर्दीक्षितं वा अनु रेतांसि ततो रेतांसि पामनानि जनितोः स्वा वै योनी रेतो न हिनस्त्येषा वा एतस्य स्वा योनिर्भवति यत्कृष्णविषाणा तथो हैनमेषा न हिनस्ति तस्माद्दीक्षितः कृष्णविषाणयैव कण्डूयेत नान्येन कृष्णविषाणायाः - ३.२.१.[३१]

अथास्मै दण्डं प्रयच्छति । वज्रो वै दण्डो विरक्षस्तायै - ३.२.१.[३२]

औदुम्बरो भवति । अन्नं वा ऊर्गुदुम्बर ऊर्जोऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरो भवति - ३.२.१.[३३]



मुखसम्मितो भवति । एतावद्वै वीर्यं स यावदेव वीर्यं तावांस्तद्भवति यन्मुखसम्मितः - ३.२.१.[३४]

तमुच्छ्रयति । उच्छ्रयस्व वनस्पत ऊर्ध्वो मा पाह्यंहस आस्य यज्ञस्योदृच इत्यूर्ध्वो मा गोपायास्य यज्ञस्य संस्थाया इत्येवैतदाह - ३.२.१.[३५]

अत्र हैके । अङ्गुलिश्च न्यचन्ति वाचं च यच्छन्त्यतो हि किं च न जपिष्यन्भवतीति वदन्तस्तदु तथा न कुर्याद्यथा पराञ्चं धावन्तमनुलिप्सेत तं नानुलभेतैवं ह स यज्ञं नानुलभते तस्मादमुत्रैवाङ्गुलीर्न्यचेदमुत्र वाचं यच्छेत् - ३.२.१.[३६]

अथ यद्दीक्षितः । ऋचं वा यजुर्वा साम वाऽभिव्याहरत्यभिस्थिरमभिस्थिरमेवैतद्यज्ञमारभते तस्मादमुत्रैवाङ्गुलीर्न्यचेदमुत्र वाचं यच्छेत् - ३.२.१.[३७]

अथ यद्वाचं यच्छति । वाग्वै यज्ञो यज्ञमेवैतदात्मन्धत्तेऽथ यद्वाचंयमो व्याहरति तस्मादु हैष विसृष्टो यज्ञः पराङावर्तते तत्रो वैष्णवीमृचं वा यजुर्वा जपेद्यज्ञो वै विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्रायश्चित्तिः - ३.२.१.[३८]

अथैक उद्वदति । दीक्षितोऽयं ब्राह्मणो दीक्षितोऽयं ब्राह्मण इति निवेदितमेवैनमेतत्सन्तं देवेभ्यो निवेदयत्ययं महावीर्यो यो यज्ञम्प्रापदित्ययं युष्माकैकोऽभूत्तं गोपायतेत्येवैतदाह त्रिष्कृत्व आह त्रिवृद्धि यज्ञः - ३.२.१.[३९]

अथ यद्ब्राह्मण इत्याह । अनद्धेव वा अस्यातः पुरा जानं भवतीदं ह्याहू रक्षांसि योषितमनुसचन्ते तदुत रक्षांस्येव रेत आदधतीत्यथात्राद्धा जायते यो ब्रह्मणो यो यज्ञाज्जायते तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयाद्ब्रह्मणो हि जायते यो यज्ञाज्जायते तस्मादाहुर्न सवनकृतं हन्यादेनस्वी हैव सवनकृतेति - ३.२.१.[४०]



##३.२.२. दीक्षितधर्माः

वाचं यच्छति । स वाचंयमऽआस्तऽआस्तमयात्तद्यद्वाचं यच्छति - ३.२.२.[१]

यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न इदम्मनुष्यैरनभ्यारोह्यं स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम - ३.२.२.[२]

तद्वा ऋषीणामनुश्रुतमास । ते यज्ञं समभरन्यथायं यज्ञः सम्भृत एवं वा एष यज्ञं सम्भरति यो दीक्षते वाग्वै यज्ञः - ३.२.२.[३]

तामस्तमिते वाचं विसृजते । संवत्सरो वै प्रजापतिः प्रजापतिर्यज्ञोऽहोरात्रे वै संवत्सर एते ह्येनं परिप्लवमाने कुरुतः सोऽहन्नदीक्षिष्ट स रात्रिं प्रापत्स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतदाप्त्वा वाचं विसृजते - ३.२.२.[४]

तद्धैके । नक्षत्रं दृष्ट्वा वाचं विसर्जयन्त्यत्रानुष्ठ्यास्तमितो भवतीति वदन्तस्तदु तथा न कुर्यात्क्व ते स्युर्यन्मेघः स्यात्तस्माद्यत्रैवानुष्ठ्यास्तमितं मन्येत तदेव वाचं विसर्जयेत् - ३.२.२.[५]

अनेनो हैके वाचं विसर्जयन्ति । भूर्भुवः स्वरिति यज्ञमाप्याययामो यज्ञं संदध्म इति वदन्तस्तदु तथा न कुर्यान्न ह स यज्ञमाप्याययति न संदधाति य एतेन वाचं विसर्जयति - ३.२.२.[६]



अनेनैव वाचं विसर्जयेत् । व्रतं कृणुत व्रतं कृणुताग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञिय इत्येष ह्यस्यात्र यज्ञो भवत्येतद्धविर्यथा पुराग्निहोत्रं तद्यज्ञेनैवैतद्यज्ञं सम्भृत्य यज्ञे यज्ञं प्रतिष्ठापयति यज्ञेन यज्ञं संतनोति संततं ह्येवास्यैतद्व्रतं भवत्या सुत्यायै त्रिष्कृत्व आह त्रिवृद्धि यज्ञः - ३.२.२.[७]

अथाग्निमभ्यावृत्य वाचं विसृजते । न ह स यज्ञमाप्याययति न संदधाति योऽतोऽन्येन वाचं विसृजते स प्रथमं व्याहरन्त्सत्यं वाचोऽभिव्याहरति - ३.२.२.[८]

अग्निर्ब्रह्मेति । अग्निर्ह्येव ब्रह्माग्निर्यज्ञ इत्यग्निर्ह्येव यज्ञो वनस्पतिर्यज्ञिय इति वनस्पतयो हि यज्ञिया न हि मनुष्या यजेरन्यद्वनस्पतयो न स्युस्तस्मादाह वनस्पतिर्यज्ञिय इति - ३.२.२.[९]

अथास्मै व्रतं श्रपयन्ति । देवान्वा एष उपावर्तते यो दीक्षते स देवतानामेको भवति शृतं वै देवानां हविर्नाशृतं तस्माच्छ्रपयन्ति तदेष एव व्रतयति नाग्नौ जुहोति तद्यदेष एव व्रतयति नाग्नौ जुहोति - ३.२.२.[१०]

यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न इदम्मनुष्यैरनभ्यारोह्यं स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम - ३.२.२.[११]

तद्वा ऋषीणामनुश्रुतमास । ते यज्ञं समभरन्यथायं यज्ञः सम्भृत एष वा अत्र यज्ञो भवति यो दीक्षत एष ह्येनं तनुत एष एनं जनयति तद्यदेवात्र यज्ञस्य निर्धीतं यद्विदुग्धं तदेवैतत्पुनराप्याययति यदेष एव व्रतयति नाग्नौ जुहोति न हाप्याययेद्यदग्नौ जुहुयाज्जुह्वदु हैव मन्येत नाजुह्वत् - ३.२.२.[१२]



इमे वै प्राणाः । मनोजाता मनोयुजो दक्षक्रतवो वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वे देवा एतासु हैवास्यैतद्देवतासु हुतम्भवति - ३.२.२.[१३]

तद्धैके । प्रथमे व्रत उभौ व्रीहियवावावपन्त्युभाभ्यां रसाभ्यां यदेवात्र यज्ञस्य निर्धीतं यद्विदुग्धं तत्पुनराप्याययाम इति वदन्तो यद्यु व्रतदुघा न दुहीत यस्यैवातः कामयेत तस्य व्रतं कुर्यादेतदु ह्येवास्यैता उभौ व्रीहियवावन्वारब्धौ भवत इति तदु तथा न कुर्यान्न ह स यज्ञमाप्याययति न संदधाति य उभौ व्रीहियवावावपति तस्मादन्यतरमेवावपेद्धविर्वा अस्यैता उभौ व्रीहियवौ भवतः स यदेवास्यैतौ हविर्भवतस्तदेवास्यैतावन्वारब्धौ भवतो यद्यु व्रतदुघा न दुहीत यस्यैवातः कामयेत तस्य व्रतं कुर्यात् -३.२.२.[१४]

तद्धैके । प्रथमे व्रते सर्वौषधं सर्वसुरभ्यावपन्ति यदि दीक्षितमार्तिर्विन्देद्येनैवातः कामयेत तेन भिषज्येद्यथा व्रतेन भिषज्येदिति तदु तथा न कुर्यान्मानुषं ह ते यज्ञे कुर्वन्ति व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति यदि दीक्षितमार्तिर्विन्देद्येनैवातः कामयेत तेन भिषज्येत्समाप्तिर्ह्येव पुण्या - ३.२.२.[१५]

अथास्मै व्रतं प्रयच्छति । अतिनीय मानुषं कालं सायंदुग्धमपररात्रे प्रातर्दुग्धमपराह्णे व्याकृत्या एव दैवं चैवैतन्मानुषं च व्याकरोति - ३.२.२.[१६]

अथास्मै व्रतं प्रदास्यन्नप उपस्पर्शयति । दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसं सुतीर्था नो असद्वश इति मानुषाय वा एष पुराऽशनायावनेनिक्तेऽथात्र दैव्यै धिये तस्मादाह दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसं सुतीर्था नो असद्वश इति स यावत्कियच्च व्रतं व्रतयिष्यन्नप उपस्पृशेदेतेनैवोपस्पृशेत् - ३.२.२.[१७]

अथ व्रतं व्रतयति । ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नोऽवन्तु ते नः पान्तु तेभ्यः स्वाहेति तद्यथा वषट्कृतं हुतमेवमस्यैतद्भवति - ३.२.२.[१८]

अथ व्रतं व्रतयित्वा नाभिमुपस्पृशते । श्वात्राः पीता भवत यूयमापो अस्माकमन्तरुदरे सुशेवाः ता अस्मभ्यमयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृधा इति देवान्वा एष उपावर्तते यो दीक्षते स देवतानामेको भवत्यनुत्सिक्तं वै देवानां हविरथैतद्व्रतप्रदो मिथ्या करोति व्रतमुपोत्सिञ्चन्व्रतं प्रमीणाति तस्यो हैषा प्रायश्चित्तिस्तथो हास्यैतन्न मिथ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह श्वात्राः पीता भवत यूयमापो अस्माकमन्तरुदरे सुशेवाः ता अस्मभ्यमयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृध इति स यावत्कियच्च व्रतं व्रतयित्वा नाभिमुपस्पृशेदेतेनैवोपस्पृशेत्कस्तद्वेद यद्व्रतप्रदो व्रतमुपोत्सिञ्चेत् - ३.२.२.[१९]



अथ यत्र मेक्ष्यन्भवति । तत्कृष्णविषाणया लोष्टं वा किंचिद्वोपहन्तीयं ते यज्ञिया तनूरितीयं वै पृथिवी देवी देवयजनी सा दीक्षितेन नाभिमिह्या तस्या एतदुद्धृह्यैव यज्ञियां तनूमथायज्ञियं शरीरमभिमेहत्यपो मुञ्चामि न प्रजामित्युभयं वा अत एत्यापश्च रेतश्च स एतदप एव मुञ्चति न प्रजामंहोमुचः स्वाहाकृता इत्यंहस इव ह्येता मुञ्चन्ति यदुदरे गुष्ठितम्भवति तस्मादाहांहोमुच इति स्वाहाकृतां पृथिवीमाविशतेत्याहुतयो भूत्वा शान्ताः पृथिवीमाविशतेत्येवैतदाह - ३.२.२.[२०]

अथ पुनर्लोष्टं न्यस्यति । पृथिव्या सम्भवेतीयं वै पृथिवी देवी देवयजनी सा दीक्षितेन नाभिमिह्या तस्या एतदुद्धृत्यैव यज्ञियां तनूमथायज्ञियं शरीरमभ्यमिक्षत्तामेवास्यामेतत्पुनर्यज्ञियां तनूं दधाति तस्मादाह पृथिव्या सम्भवेति - ३.२.२.[२१]

अथाग्नये परिदाय स्वपिति । देवान्वा एष उपावर्तते यो दीक्षते स देवतानामेको भवति न वै देवाः स्वपन्त्यनवरुद्धो वा एतस्यास्वप्नो भवत्यग्निर्वै देवानां व्रतपतिस्तस्मा एवैतत्परिदाय स्वपित्यग्ने त्वं सु जागृहि वयं सुमन्दिषीमहीत्यग्ने त्वं जागृहि वयं स्वप्स्याम इत्येवैतदाह रक्षा णो अप्रयुच्छन्निति गोपाय नोऽप्रमत्त इत्येवैतदाह प्रबुधे नः पुनस्कृधीति यथेतः सुप्त्वा स्वस्ति प्रबुध्यामहा एवं नः कुर्वित्येवैतदाह - ३.२.२.[२२]

अथ यत्र सुप्त्वा । पुनर्नाविद्रास्यन्भवति तद्वाचयति पुनर्मनः पुनरायुर्म आगन्पुनः प्राणः पुनरात्मा म आगन्पुनश्चक्षुः पुनः श्रोत्रं म आगन्निति सर्वे ह वा एते स्वपतोऽपक्रामन्ति प्राण एव न तैरेवैतत्सुप्त्वा पुनः संगच्छते तस्मादाह पुनर्मनः पुनरायुर्म आगन्पुनः प्राणः पुनरात्मा म आगन्पुनश्चक्षुः पुनः श्रोत्रं म आगन् वैश्वानरो अदब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यादिति तद्यदेवात्र स्वप्नेन वा येन वा मिथ्याकर्म तस्मान्नः सर्वस्मादग्निर्गोपायत्वित्येवैतदाह तस्मादाह वैश्वानरो अदब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यादिति - ३.२.२.[२३]



अथ यद्दीक्षितः । अव्रत्यं वा व्याहरति क्रुध्यति वा तन्मिथ्या करोति व्रतम्प्रमीणात्यक्रोधो ह्येव दीक्षितस्याग्निर्वै देवानां व्रतपतिस्तमेवैतदुपधावति त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा त्वां यज्ञष्वीड्य इति तस्यो हैषा प्रायश्चित्तिस्तथो हास्यैतन्न मिथ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा त्वं यज्ञेष्वीड्य इति - ३.२.२.[२४]

अथ यद्दीक्षितायाभिहरन्ति । तस्मिन्वाचयति रास्वेयत्सोमा भूयो भरेति सोमो ह वा अस्मा एतद्घुते यद्दीक्षितायाभिहरन्ति स यदाह रास्वेयत्सोमेति रास्व न इयत्सोमेत्येवैतदाहा भूयो भरेत्या नो भूयो हरेत्येवैतदाह देवो नः सविता वसोर्दाता वस्वदादिति तथो हास्मा एतत्सवितृप्रसूतमेव दानाय भवति - ३.२.२.[२५]

पुरास्तमयादाह । दीक्षित वाचं यच्छेति तामस्तमिते वाचं विसृजते पुरोदयादाह दीक्षित वाचं यच्छेति तामुदिते वाचं विसृजते संतत्या एवाहरेवैतद्रात्र्या संतनोत्यह्ना रात्रिम् - ३.२.२.[२६]

नैनमन्यत्र चरन्तमभ्यस्तमियात् । न स्वपन्तमभ्युदियात्स यदेनमन्यत्र चरन्तमभ्यस्तमियाद्रात्रेरेनं तदन्तरियाद्यत्स्वपन्तमभ्युदियादह्न एनं तदन्तरियान्नात्र प्रायश्चित्तिरस्ति प्रतिगुप्यमेवैतस्मात् न पुरावभृथादपोऽभ्यवेयान्नैनमभिवर्षेदनवक्लृप्तं ह तद्यत्पुरावभृथादपोऽभ्यवेयाद्यद्वैनमभिवर्षेदथ परिह्वालं वाचं वदति न मानुषीं प्रसृतां तद्यत्परिह्वालं वाचं वदति न मानुषीं प्रसृताम् - ३.२.२.[२७]



यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न इदम्मनुष्यैरनभ्यारोह्यं स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो - ३.२.२.[२८]

तद्वा ऋषीणामनुश्रुतमास । ते यज्ञं समभरन्यथायं यज्ञः सम्भृत एवं वा एष यज्ञं सम्भरति यो दीक्षते वाग्वै यज्ञस्तद्यदेवात्र यज्ञस्य निर्धीतं यद्विदुग्धं तदेवैतत्पुनराप्याययति यत्परिह्वालं वाचं वदति न मानुषीं प्रसृतां न हाप्याययेद्यत्प्रसृतां मानुषीं वाचं वदेत्तस्मात्परिह्वालं वाचं वदति न मानुषीं प्रसृताम् - ३.२.२.[२९]

स वै धीक्षते । वाचे हि धीक्षते यज्ञाय हि धीक्षते यज्ञो हि वाग्धीक्षितो ह वैनामैतद्यद्दीक्षित इति - ३.२.२.[३०]

अथ प्रायणीयेष्टिः ।

##३.२.३.प्रायणीयदेवताविधिः

आदित्यं चरुं प्रायणीयं निर्वपति । देवा ह वा अस्यां यज्ञं तन्वाना इमां यज्ञादन्तरीयुः सा हैषामियं यज्ञं मोहयांचकार कथं नु मयि यज्ञं तन्वाना मां यज्ञादन्तरीयुरिति तं ह यज्ञं न प्रजज्ञुः - ३.२.३.[१]

ते होचुः । यन्न्वस्यामेव यज्ञमतंस्महि कथं नु नोऽमहत्कथं न प्रजानीम इति - ३.२.३.[२]

ते होचुः । अस्यामेव यज्ञं तन्वाना इमां यज्ञादन्तरगाम सा न इयमेव यज्ञममूमुहदिमामेवोपधावामेति - ३.२.३.[३]

ते होचुः । यन्नु त्वय्येव यज्ञमतंस्महि कथं नु नोऽमुहत्कथं न प्रजानीम इति - ३.२.३.[४]



सा होवाच । मय्येव यज्ञं तन्वाना मां यज्ञादन्तरगात सा वोऽहमेव यज्ञममूमुहं भागं नु मे कल्पयताथ यज्ञं द्रक्ष्यथाथ प्रज्ञास्यथेति - ३.२.३.[५]

तथेति देवा अब्रुवन् । तवैव प्रायणीयस्तवोदयनीय इति तस्मादेष आदित्य एव प्रायणीयो भवत्यादित्य उदयनीय इयं ह्येवादितिस्ततो यज्ञमपश्यंस्तमतन्वत - ३.२.३.[६]

स यदादित्यं चरुं प्रायणीयं निर्वपति । यज्ञस्यैव दृष्ट्यै यज्ञं दृष्ट्वा क्रीणानि तं तनवा इति तस्मादादित्यं चरुं प्रायणीयं निर्वपति तद्वै निरुप्तं हविरासीदनिष्टा देवता - ३.२.३.[७]

अथैभ्यः पथ्या स्वस्तिः प्रारोचत । तामयजन्वाग्वै पथ्यास्वस्तिर्वाग्यज्ञस्तद्यज्ञमपश्यंस्तमतन्वत - ३.२.३.[८]

अथैभ्योऽग्निः प्रारोचत । तमयजन्त्स यदाग्नेयं यज्ञस्यासीत्तदपश्यन्यद्वै शुष्कं यज्ञस्य तदाग्नेयं तदपश्यंस्तदतन्वत - ३.२.३.[९]

अथैभ्यः सोमः प्रारोचत । तमयजन्त्स यत्सौम्यं यज्ञस्यासीत्तदपश्यन्यद्वा आर्द्रं यज्ञस्य तत्सौम्यं तदपश्यंस्तदतन्वत - ३.२.३.[१०]

अथैभ्यः सविता प्रारोचत । तमयजन्पशवो वै सविता पशवो यज्ञस्तद्यज्ञमपश्यंस्तमतन्वताथ यस्यै देवतायै हविर्निरुप्तमासीत्तामयजन् - ३.२.३.[११]

ता वा एताः । पञ्च देवता यजति यो वै स यज्ञो मुग्ध आसीत्पाङ्क्तो वै स आसीत्तमेताभिः पञ्चभिर्देवताभिः प्राजानन् - ३.२.३.[१२]

ऋतवो मुग्धा आसन्पञ्च । तानेताभिरेव पञ्चभिर्देवताभिः प्राजानन् - ३.२.३.[१३]



दिशो मुग्धा आसन्पञ्च । ता एताभिरेव पञ्चभिर्देवताभिः प्राजानन् - ३.२.३.[१४]

उदीचीमेव दिशम् पथ्यया स्वस्त्या प्राजानंस्तस्मादत्रोत्तरा हि वाग्वदति कुरुपञ्चालत्रा वाग्घ्येषा निदानेनोदीचीं ह्येतया दिशं प्राजानन्नुदीची ह्येतस्यै दिक् - ३.२.३.[१५]

प्राचीमेव दिशम् । अग्निना प्राजानंस्तस्मादग्निं पश्चात्प्राञ्चमुद्धृत्योपासते प्राचीं ह्येतेन दिशं प्राजानन्प्राची ह्येतस्य दिक् - ३.२.३.[१६]

दक्षिणामेव दिशम् सोमेन प्राजानंस्तस्मात्सोमं क्रीतं दक्षिणा परिवहन्ति तस्मादाहुः पितृदेवत्यः सोम इति दक्षिणां ह्येतेन दिशं प्राजानन्दक्षिणा ह्येतस्य दिक् - ३.२.३.[१७]

प्रतीचीमेव दिशम् सवित्रा प्राजानन्नेष वै सविता य एष तपति तस्मादेष प्रत्यङ्ङेति प्रतीचीं ह्येतेन दिशं प्राजानन्प्रतीची ह्येतस्य दिक् - ३.२.३.[१८]

ऊर्ध्वामेव दिशम् । अदित्या प्राजानन्नियं वा अदितिस्तस्मादस्यामूर्ध्वा ओषधयो जायन्त ऊर्ध्वा वनस्पतय ऊर्ध्वां ह्येतया दिशं प्राजानन्नूर्ध्वा ह्येतस्यै दिक् - ३.२.३.[१९]

शिरो वै यज्ञस्यातिथ्यम् । बाहू प्रायणीयोदयनीयावभितो वै शिरो बाहू भवतस्तस्मादभित आतिथ्यमेते हविषी भवतः प्रायणीयश्चोदयनीयश्च - ३.२.३.[२०]

तदाहुः । यदेव प्रायणीये क्रियेत तदुदयनीये क्रियेत यदेव प्रायणीयस्य बर्हिर्भवति तदुदयनीयस्य बर्हिर्भवतीति तदपोद्धृत्य निदधाति तां स्थालीं सक्षामकर्षां प्रमृज्य मेक्षणं निदधाति य एव प्रायणीयस्यर्त्विजो भवन्ति त उदयनीयस्यर्त्विजो भवन्ति तद्यदेतत्समानं यज्ञे क्रियते तेन बाहू सदृशौ तेन सरूपौ - ३.२.३.[२१]

तदु तथा न कुर्यात् । काममेवैतद्बर्हिरनुप्रहरेदेवं मेक्षणं निर्णिज्य स्थालीं निदध्याद्य एव प्रायणीयस्यर्त्विजो भवन्ति त उदयनीयस्यर्त्विजो भवन्ति यद्यु ते विप्रेताः स्युरप्यन्य एव स्युः स यद्वै समानीर्देवता यजति समानानि हवींषि भवन्ति तेनैव बाहू सदृशौ तेन सरूपौ - ३.२.३.[२२]



स वै पञ्च प्रायणीये देवता यजति । पञ्चोदयनीये तस्मात्पञ्चेत्थादङ्गुलयः पञ्चेत्थात्तच्छम्य्वन्तं भवति न पत्नीः संयाजयन्ति पूर्वार्धं वा अन्वात्मनो बाहू पूर्वार्धमेवैतद्यज्ञस्याभिसंस्करोति तस्माच्छम्य्वन्तं भवति न पत्नीः संयाजयन्ति - ३.२.३.[२३]

##३.२.४ सोमक्रयणविधिः

दिवि वै सोम आसीत् । अथेह देवास्ते देवा अकामयन्ता नः सोमो गच्छेत्तेनागतेन यजेमहीति त एते माये असृजन्त सुपर्णीं च कद्रूं च तद्धिष्ण्यानां ब्राह्मणे व्याख्यायते सौपर्णीकाद्रवं यथा तदास - ३.२.४.[१]

तेभ्यो गायत्री सोममच्छापतत् । तस्या आहरन्त्यै गन्धर्वो विश्वावसुः पर्यमुष्णात्ते देवा अविदुः प्रच्युतो वै परस्तात्सोमोऽथ नो नागच्छति गन्धर्वा वै पर्यमोषिषुरिति - ३.२.४.[२]

ते होचुः । योषित्कामा वै गन्धर्वा वाचमेवैभ्यः प्रहिणवाम सा नः सह सोमेनागमिष्यतीति तेभ्यो वाचं प्राहिण्वन्त्सैनान्त्सह सोमेनागच्छत् - ३.२.४.[३]

ते गन्धर्वा अन्वागत्याब्रुवन् । सोमो युष्माकं वागेवास्माकमिति तथेति देवा अब्रुवन्निहो चेदागान्मैनामभीषहे व नैष्ट विह्वयामहा इति तां व्यह्वयन्त - ३.२.४.[४]

तस्यै गन्धर्वाः । वेदानेव प्रोचिर इति वै वयं विद्मेति वयं विद्मेति - ३.२.४.[५]

अथ देवाः । वीणामेव सृष्ट्वा वादयन्तो निगायन्तो निषेदुरिति वै वयं गास्याम इति त्वा प्रमोदयिष्यामह इति सा देवानुपाववर्त सा वै सा तन्मोघमुपाववर्त या स्तुवद्भ्यः शंसद्भ्यो नृत्तं गीतमुपाववर्त तस्मादप्येतर्हि मोघसंहिता एव योषा एवं हि वागुपावर्तत तामु ह्यन्या अनु योषास्तस्माद्य एव नृत्यति यो गायति तस्मिन्नेवैता निमिश्लतमा इव - ३.२.४.[६]



तद्वा एतदुभयं देवेष्वासीत् । सोमश्च वाक्च स यत्सोमं क्रीणात्यागत्या ऽएवागतेन यजा इत्यनागतेन ह वै स सोमेन यजते योऽक्रीतेन यजते - ३.२.४.[७]

अथ यद्ध्रुवायामाज्यं परिशिष्टं भवति । तज्जुह्वां चतुष्कृत्वो विगृह्णाति बर्हिषा हिरण्यं प्रबध्यावधाय जुहोति कृत्स्नेन पयसा जुहवानीति समानजन्म वै पयश्च हिरण्यं चोभयं ह्यग्निरेतसम् - ३.२.४.[८]

स हिरण्यमवदधाति । एषा ते शुक्र तनूरेतद्वर्च इति वर्चो वा एतद्यद्धिरण्यं तया सम्भव भ्राजं गच्छेति स यदाह तया सम्भवेति तया सम्पृच्यस्वेत्येवैतदाह भ्राजं गच्छेति सोमो वै भ्राट् सोमं गच्छेत्येवैतदाह - ३.२.४.[९]

तां यथैवादो देवाः । प्राहिण्वन्त्सोममच्छैवमेवैनामेष एतत्प्रहिणोति सोममच्छ वाग्वै सोमक्रयणी निदानेन तामेतयाऽऽहुत्या प्रीणाति प्रीतया सोमं क्रीणानीति - ३.२.४.[१०]

स जुहोति । जूरसीत्येतद्ध वा अस्या एकं नाम यज्जूरसीति धृता मनसेति मनसा वा इयं वाग्धृता मनो वा इदं पुरस्ताद्वाच इत्थं वद मैतद्वादीरित्यलग्लामिव ह वै वाग्वदेद्यन्मनो न स्यात्तस्मादाह धृता मनसेति - ३.२.४.[११]

जुष्टा विष्णव इति । जुष्टा सोमायेत्येवैतदाह यमच्छेम इति तस्यास्ते सत्यसवसः प्रसव इति सत्यप्रसवा न एधि सोमं नोऽच्छेहीत्येवैतदाह तन्वो यन्त्रमशीय स्वाहेति स ह वै तन्वो यन्त्रमश्नुते यो यज्ञस्योदृचं गच्छति यज्ञस्योदृचं गच्छानीत्येवैतदाह - ३.२.४.[१२]

अथ हिरण्यमपोद्धरति । तन्मनुष्येषु हिरण्यं करोति स यत्सहिरण्यं जुहुयात्परागु हैवैतन्मनुष्येभ्यो हिरण्यं प्रवृञ्ज्यात्तन्न मनुष्येषु हिरण्यमभिगम्येत - ३.२.४.[१३]



सोऽपोद्धरति । शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसीति कृत्स्नेन पयसा हुत्वा यदेवैतत्तदाह शुक्रमसीति शुक्रं ह्येतच्चन्द्रमसीति चन्द्रं ह्येतदमृतमसीत्यमृतं ह्येतद्वैश्वदेवमसीति वैश्वदेवं ह्येतत्प्रमुच्य तृणं बर्हिष्यपिसृजति सूत्रेण हिरण्यं प्रबध्नीते - ३.२.४.[१४]

अथापरं चतुर्गृहीतमाज्यं गृहीत्वा । अन्वारभस्व यजमानेत्याहापोर्णुवन्ति शालायै द्वारे दक्षिणतः सोमक्रयण्युपतिष्ठते तत्प्रहितामेवैनामेतत्सतीम्प्राहैषीद्वाग्वै सोमक्रयणी निदानेन तामेतयाहुत्याऽप्रैषीत्प्रीतया सोमं क्रीणानीति - ३.२.४.[१५]

अथोपनिष्क्रम्याभिमन्त्रयते । चिदसि मनासीति चित्तं वा इदं मनो वागनुवदति धीरसि दक्षिणेति धियाधिया ह्येतया मनुष्या जुज्यूषन्त्यनूक्तेनेव प्रकामोद्येनेव गाथाभिरिव तस्मादाह धीरसीति दक्षिणेति दक्षिणा ह्येषा क्षत्रियाऽसि यज्ञियाऽसीति क्षत्रिया ह्येषा

यज्ञिया ह्येषाऽदितिरस्युभयतःशीर्ष्णीति स यदेनया समानं सद्विपर्यासं वदति यदपरं तत्पूर्वं करोति यत्पूर्वंतदपरं तेनोभयतःशीर्ष्णी तस्मादाहादितिरस्युभयतःशीर्ष्णीति - ३.२.४.[१६]

सा नः सुप्राची सुप्रतीच्येधीति । सुप्राची न एधि सोमं नोऽच्छेहीत्येवैतदाह सुप्रतीची न एधि सोमेन नः सह पुनरेहीत्येवैतदाह तस्मादाह सा नः सुप्राची सुप्रतीच्येधीति - ३.२.४.[१७]

मित्रस्त्वा पदि बध्नीतामिति । वरुण्या वा एषा यद्रज्जुः सा यद्रज्ज्वाऽभिहिता स्याद्वरुण्या स्याद्यद्वनभिहिता स्यादयतेव स्यादेतद्वा अवरुण्यं यन्मैत्रं सा यथा रज्ज्वाभिहिता यतैवमस्यैतद्भवति यदाह मित्रस्त्वा पदि बध्नीतामिति - ३.२.४.[१८]

पूषाऽध्वनस्पात्विति । इयं वै पृथिवी पूषा यस्य वा इयमध्वनगोप्त्री भवति तस्य न का चन ह्वला भवति तस्मादाह पूषाऽध्वनस्पात्विति - ३.२.४.[१९]



इन्द्रायाध्यक्षायेति । स्वध्यक्षाऽसदित्येवैतदाह यदाहेन्द्रायाध्यक्षायेत्यनु माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्य इति सा यत्ते जन्म तेन नोऽनुमता सोममच्छेहीत्येवैतदाह सा देवि देवमच्छेहीति देवी ह्येषा देवमच्छैति यद्वाक्सोमं तस्मादाह सा देवि देवमच्छेहीतीन्द्राय सोममितीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राय सोममिति रुद्रस्त्वाऽऽवर्तयत्वित्यप्रणाशायै तदाह रुद्रं हि नाति पशवः स्वस्ति सोमसखा पुनरेहीति स्वस्ति नः सोमेन सह पुनरेहीत्येवैतदाह - ३.२.४.[२०]

तां यथैवादो देवाः । प्राहिण्वन्त्सोममच्छ सैनान्त्सह सोमेनागच्छदेवमेवैनामेष एतत्प्रहिणोति सोममच्छ सैनं सह सोमेनागच्छति - ३.२.४.[२१]

तं यथैवादो देवाः । व्यह्वयन्त गन्धर्वैः सा देवानुपावर्ततैवमेवैनामेतद्यजमानो विह्वयते सा यजमानमुपावर्तते तामुदीचीमत्याकुर्वन्त्युदीची हि मनुष्याणां दिक्सोऽ एव यजमानस्य तस्मादुदीचीमत्याकुर्वन्ति - ३.२.४.[२२]

##३.३.१.
सप्त पदान्यनुनिक्रामति । वृङ्क्त एवैनामेतत्तस्मात्सप्त पदान्यनुनिक्रामति यत्र वै वाचः प्रजातानि छन्दांसि सप्तपदा वै तेषां पराध्यी शक्वरी तामेवैतत्परस्तादर्वाचीं वृङ्क्ते तस्मात्सप्त पदान्यनुनिक्रामति - ३.३.१.[१]

स वै वाच एव रूपेणानुनिक्रामति । वस्व्यस्यदितिरस्यादित्यासि रुद्रासि चन्द्रासीति वस्वी ह्येषादितिर्ह्येषाऽदित्या ह्येषा रुद्रा ह्येषा चन्द्रा ह्येषा बृहस्पतिष्ट्वा सुम्ने रम्णात्विति ब्रह्म वै बृहस्पतिर्बृहस्पतिष्ट्वा साधुनाऽऽवर्तयत्वित्येवैतदाह रुद्रो वसुभिराचक इत्यप्रणाशायैतदाह रुद्रं हि नाति पशवः - ३.३.१.[२]

अथ सप्तमं पदं पर्युपविशन्ति । स हिरण्यं पदे निधाय जुहोति न वा अनग्नावाहुतिर्हूयतेऽग्निरेतसं वै हिरण्यं तथो हास्यैषाग्निमत्येवाहुतिर्हुता भवति वज्रो वा आज्यं वज्रेणैवैतदाज्येन स्पृणुते तां स्पृत्वा स्वीकुरुते - ३.३.१.[३]



स जुहोति । अदित्यास्त्वा मूर्धन्नाजिघर्मीतीयं वै पृथिव्यदितिरस्यै हि मूर्धन्जुहोति देवयजने पृथिव्या इति देवयजने हि पृथिव्यै जुहोतीडायास्पदमसि घृतवत्स्वाहेति गौर्वा इडा गोर्हि पदे जुहोति घृतवत्स्वाहेति घृतवद्ध्येतदभिहुतं भवति - ३.३.१.[४]

अथ स्फ्यमादाय परिलिखति । वज्रो वै स्फ्यो वज्रेणैवैतत्परिलिखति त्रिष्कृत्वः परिलिखति त्रिवृतैवैतद्वज्रेण समन्तं परिगृह्णात्यनतिक्रमाय - ३.३.१.[५]

स परिलिखति । अस्मे रमस्वेति यजमाने रमस्वेत्येवैतदाहाथ समुल्लिख्य पदं स्थाल्यां संवपत्यस्मे ते बन्धुरिति यजमाने ते बन्धुरित्येवैतदाह - ३.३.१.[६]

अथाप उपनिनयति । यत्र वा अस्यै खनन्तः क्रूरीकुर्वन्त्यपघ्नन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः संदधाति तस्मादप उपनिनयति - ३.३.१.[७]

अथ यजमानाय पदं प्रयच्छति । त्वे राय इति पशवो वै रायस्त्वयि पशवइत्येवैतदाह तद्यजमानः प्रतिगृह्णाति मे राय इति पशवो वै रायो मयि पशव इत्येवैतदाह - ३.३.१.[८]

अथाध्वर्युरात्मानमुपस्पृशति । मा वयं रायस्पोषेण वियौष्मेति तथो हाध्वर्युः पशुभ्य आत्मानं नान्तरेति - ३.३.१.[९]

अथ पत्न्यै पदं प्रतिपराहरन्ति । गृहा वै पत्न्यै प्रतिष्ठा तद्गृहेष्वेवैनामेतत्प्रतिष्ठायां प्रतिष्ठापयति तस्मात्पत्न्यै पदम्प्रतिपराहरन्ति - ३.३.१.[१०]

तां नेष्टा वाचयति । तोतो राय इत्यथैनां सोमक्रयण्या संख्यापयति वृषा वै सोमो योषा पत्न्येष वा अत्र सोमो भवति यत्सोमक्रयणी मिथुनमेवैतत्प्रजननं क्रियते तस्मादेनां सोमक्रयण्या संख्यापयति - ३.३.१.[११]



स संख्यापयति । समख्ये देव्या धिया सं दक्षिणयोरुचक्षसा मा मऽआयुः प्रमोषीर्मो ऽअहं तव वीरं विदेय तव देवि संदृशीत्याशिषमेवैतदाशास्ते पुत्रो वै वीरः पुत्रं विदेय तव संदृशीत्येवैतदाह - ३.३.१.[१२]

सा या बभ्रुः पिङ्गाक्षी । सा सोमक्रयणी यत्र वा इन्द्राविष्णू त्रेधा सहस्रं व्यैरयेतां तदेकाऽत्यरिच्यत तां त्रेधा प्राजनयतां तस्माद्योऽप्येतर्हि त्रेधा सहस्रं व्याकुर्यादेकैवातिरिच्येत - ३.३.१.[१३]

सा या बभ्रुः पिङ्गाक्षी । सा सोमक्रयण्यथ या रोहिणी सा वार्त्रघ्नी यामिदं राजा संग्रामं जित्वोदाकुरुतेऽथ या रोहिणी श्येताक्षी सा पितृदेवत्या यामिदं पितृभ्यो घ्नन्ति - ३.३.१.[१४]

सा या बभ्रुः पिङ्गाक्षी । सा सोमक्रयणी स्याद्यदि बभ्रुं पिङ्गाक्षीं न विन्देदरुणा स्याद्यद्यरुणां न विन्देद्रोहिणी वार्त्रघ्नी स्याद्रोहिण्यै ह त्वेव श्येताक्ष्या आशां नेयात् - ३.३.१.[१५]

सा स्यादप्रवीता । वाग्वा एषा निदानेत यत्सोमक्रयण्ययातयाम्नी वा इयं वागयातयाम्न्यप्रवीता तस्मादप्रवीता स्यात्सा स्यादवण्डाऽकूटाऽकाणाऽकर्णाऽलक्षिताऽसप्तशफा सा ह्येकरूपैकरूपा हीयं वाक् - ३.३.१.[१६]

##३.३.२.
पदं समुप्य पाणी अवनेनिक्ते । तद्यत्पाणी अवनेनिक्ते वज्रो वा आज्यं रेतः सोमो नेद्वज्रेणाज्येन रेतः सोमं हिनसानीति तस्मात्पाणी अवनेनिक्ते - ३.३.२.[१]



अथास्यां हिरण्यं बध्नीते । द्वयं वा इदं न तृतीयमस्ति सत्यं चैवानृतं च सत्यमेव देवा अनृतं मनुष्या अग्निरेतसं वै हिरण्यं सत्येनांशूनुपस्पृशानि सत्येन सोमं पराहणानीति तस्माद्वा अस्यां हिरण्यं बध्नीते - ३.३.२.[२]

अथ सम्प्रेष्यति । सोमोपनहनमाहर सोमपर्याणहनमाहरोष्णीषमाहरेति स यदेव शोभनं तत्सोमोपनहनं स्याद्वासो ह्यस्यैतद्भवति शोभनं ह्येतस्य वासः स यो हैनं शोभनेनोपचरति शोभते हाथ य आह यदेव किं चेति यद्धैव किं च भवति तस्माद्यदेव शोभनं तत्सोमोपनहनं स्याद्यदेव किं च सोमपर्याणहनम् - ३.३.२.[३]

यद्युष्णीषं विन्देत् । उष्णीषः स्याद्यद्युष्णीषं न विन्देत्सोमपर्याणहनस्यैव द्व्यङ्गुलं वा त्र्यङ्गुलं वावकृन्तेदुष्णीषभाजनमध्वर्युर्वा यजमानो वा सोमोपनहमादत्ते य एव कश्च सोमपर्याणहनम् - ३.३.२.[४]

अथाग्रेण राजानं विचिन्वन्ति । तदुदकुम्भ उपनिहितो भवति तद्ब्राह्मण उपास्ते तदभ्यायन्ति प्राञ्चः - ३.३.२.[५]

तदायत्सु वाचयति । एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोनामानां साम्राज्यं गच्छेति मे सोमाय ब्रूतादित्येकं वा एष क्रीयमाणोऽभिक्रीयते च्छन्दसामेव राज्याय च्छन्दसां साम्राज्याय घ्नन्ति वा एनमेतद्यदभिषुण्वन्तितमेतदाह च्छन्दसामेव त्वा राज्याय क्रीणामि च्छन्दसां साम्राज्याय  न वधायेत्यथैत्य प्राङ्ङुपविशति - ३.३.२.[६]

सोऽभिमृशति । आस्माकोऽसीति स्व इव ह्यस्यैतद्भवति यदागतस्तस्मादाहास्माकोऽसीति शुक्रस्ते ग्रह्य इति शुक्रं ह्यस्माद्ग्रहं ग्रहीष्यन्भवति विचितस्त्वा विचिन्वन्त्विति सर्वत्वायैतदाह - ३.३.२.[७]



अत्र हैके । तृणं वा काष्ठं वा वित्त्वापास्यन्ति तदु तथा न कुर्यात्क्षत्रं वै सोमो विडन्या ओषधयोऽन्नं वै क्षत्रियस्य विट् स यथा ग्रसितमनुहायाच्छिद्य परास्येदेवं तत्तस्मादभ्येव मृशेद्विचितस्त्वा विचिन्वन्त्विति तद्य एवास्य विचेतारस्त एनं विचिन्वन्ति - ३.३.२.[८]

अथ वासः । द्विगुणं वा चतुर्गुणं वा प्राग्दशं वोदग्दशं वोपस्तृणाति तद्राजानम्मिमीते स यद्राजानं मिमीते तस्मान्मात्रा मनुष्येषु मात्रो यो चाप्यन्या मात्रा - ३.३.२.[९]

सावित्र्या मिमीते । सविता वै देवानां प्रसविता तथो हास्मा एष सवितृप्रसूत एव क्रयाय भवति - ३.३.२.[१०]

अतिच्छन्दसा मिमीते । एषा वै सर्वाणि छन्दांसि यदतिच्छन्दास्तथा हास्यैष सर्वैरेवच्छन्दोभिर्मितो भवति तस्मादतिच्छन्दसा मिमीते - ३.३.२.[११]

स मिमीते । अभि त्यं देवं सवितारमोण्योः कविक्रतुमर्चामि सत्यसवं रत्नधामभि प्रियं मतिं कविम् - ३.३.२.[१२]

ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वरिति - ३.३.२.[१३]

एतया सर्वाभिः । एतया चतसृभिरेतया तिसृभिरेतया द्वाभ्यामेतयैकयैतयैवैकयैतया तिसृभिरेतया चतसृभिरेतया सर्वाभिः समस्याञ्जलिनाऽध्यावपति - ३.३.२.[१४]

स वा उदाचं न्याचं मिमीते । स यदुदाचं न्याचं मिमीत इमा एवैतदङ्गुलीर्नानाजानाः करोति तस्मादिमा नाना जायन्तेऽथ यत्सह सर्वाभिर्मिमीते संश्लिष्टा इव हैवैमा जायेरंस्तस्माद्वा उदाचं न्याचं मिमीते - ३.३.२.[१५]



यद्वेवोदाचं न्याचं मिमीते । इमा एवैतन्नानावीर्याः करोति तस्मादिमा नानावीर्यास्तस्माद्वा उदाचं न्याचं मिमीते - ३.३.२.[१६]

यद्वेवोदाचं न्याचं मिमीते । विराजमेवैतदर्वाचीं च पराचीं च युनक्ति पराच्यह देवेभ्यो यज्ञं वहत्यर्वाची मनुष्यानवति तस्माद्वा उदाचं न्याचम्मिमीते - ३.३.२.[१७]

अथ यद्दश कृत्वो मिमीते । दशाक्षरा वै विराड्वैराजः सोमस्तस्माद्दश कृत्वो मिमीते - ३.३.२.[१८]

अथ सोमोपनहनस्य समुत्पार्यान्तान् । उष्णीषेण विग्रथ्नाति प्रजाभ्यस्त्वेति प्रजाभ्यो ह्येनं क्रीणाति स यदेवेदं शिरश्चांसौ चान्तरोपेनितमिव तदेवास्यैतत्करोति - ३.३.२.[१९]

अथ मध्येऽङ्गुल्याकाशं करोति । प्रजास्त्वानुप्राणन्त्विति तमयतीव वा एनमेतत्समायच्छन्नप्राणमिव करोति तस्यैतदत एव मध्यतः प्राणमुत्सृजति तं ततः

प्राणन्तं प्रजा अनुप्राणन्ति तस्मादाह प्रजास्त्वानुप्राणन्त्विति तं सोमविक्रयिणे प्रयच्छत्यथातः पणनस्यैव - ३.३.२.[२०]

##३.३.३.
स वै राजानं पणते । स यद्राजानं पणते तस्मादिदं सकृत्सर्वं पण्यं स आह सोमविक्रयिन्क्रय्यस्ते सोमो राजा३ इति क्रय्य इत्याह सोमविक्रयी तं वै ते क्रीणानीति क्रीणीहीत्याह सोमविक्रयी कलया ते क्रीणानीति भूयो वा अतः सोमो राजार्हतीत्याह सोमविक्रयी भूय एवातः सोमो राजार्हति महांस्त्वेव गोर्महिमेत्यध्वर्युः - ३.३.३.[१]

गोर्वै प्रतिधुक् । तस्यै श्रृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनम् - ३.३.३.[२]



शफेन ते क्रीणानीति । भूयो वा अतः सोमो राजार्हतीत्याह सोमविक्रयी भूय एवातः सोमो राजार्हति महांस्त्वेव गोर्महिमेत्यध्वर्युरेतान्येव दशवीर्याण्युदाख्यायाह पदा तेऽर्धेन ते गवा ते क्रीणामीति क्रीतः सोमो राजेत्याह सोमविक्रयी वयांसि प्रब्रूहीति - ३.३.३.[३]

स आह । चन्द्रं ते वस्त्रं ते च्छागा ते धेनुस्ते मिथुनौ ते गावौ तिस्रस्तेऽन्या इति स यदर्वाक्पणन्ते परः सम्पादयन्ति तस्मादिदं सकृत्सर्वं पण्यमर्वाक्पणन्ते परः सम्पादयन्त्यथ यदध्वर्युरेव गोर्वीर्याण्युदाचष्टे न सोमस्य सोमविक्रयी महितो वै सोमो देवो हि सोमोऽथैतदध्वर्युर्गां महयति तस्यै पश्यन्वीर्याणि क्रीणादिति तस्मादध्वर्युरेव गोर्वीर्याण्युदाचष्टे न सोमस्य सोमविक्रयी - ३.३.३.[४]

अथ यत्पञ्च कृत्वः पणते । संवत्सरसम्मितो वै यज्ञः पञ्च वा ऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च कृत्वः पणते - ३.३.३.[५]

अथ हिरण्ये वाचयति । शुक्रं त्वा शुक्रेण क्रीणामीति शुक्रं ह्येतच्छुक्रेण क्रीणाति यत्सोमं हिरण्येन चन्द्रं चन्द्रेणेति चन्द्रं ह्येतच्चन्द्रेण क्रीणाति यत्सोमं हिरण्येनामृतममृतेनेत्यमृतं ह्येतदमृतेन क्रीणाति यत्सोमं हिरण्येन - ३.३.३.[६]

अथ सोमविक्रयिणमभिप्रकम्पयति । सग्मे ते गोरिति यजमाने ते गौरित्येवैतदाह तद्यजमानमभ्याहृत्य न्यस्यत्यस्मे ते चन्द्राणीति स आत्मन्येव वीर्यं धत्ते शरीरमेव सोमविक्रयी हरते तत्ततः सोमविक्रय्यादत्ते - ३.३.३.[७]

अथाजायां प्रतीचीनमुख्यां वाचयति । तपसस्तनूरसीति तपसो ह वा एषा प्रजापतेः सम्भूता यदजा तस्मादाह तपसस्तनूरसीति प्रजापतेर्वर्ण इति सा यत्त्रिः संवत्सरस्य विजायते तेन प्रजापतेर्वर्णः परमेण पशुना क्रीयस इति सा यत्त्रिः संवत्सरस्य विजायते तेन परमः पशुः सहस्रपोषम्पुषेयमित्याशिषमेवैतदाशास्ते भूमा वै सहस्रं भूमानं गच्छानीत्येवैतदाह - ३.३.३.[८]



स वा अनेनैवाजां प्रयच्छति । अनेन राजानमादत्त आजा ह वै नामैषा यदजैतया ह्येनमन्तत आजति तामेतत्परोऽक्षमजेत्याचक्षते - ३.३.३.[९]

अथ राजानमादत्ते । मित्रो न एहि सुमित्रध इति शिवो नः शान्त एहीत्येवैतदाह तं यजमानस्य दक्षिण ऊरौ प्रत्युह्य वासो निदधातीन्द्रस्योरुमाविश दक्षिणमित्येष वा अत्रेन्द्रो भवति यद्यजमानस्तस्मादाहेन्द्रस्योरुमाविश दक्षिणमित्युशन्नुशन्तमिति प्रियः प्रियमित्येवैतदाह स्योनः स्योनमिति शिवः शिवमित्येवैतदाह - ३.३.३.[१०]

अथ सोमक्रयणाननुदिशति । स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन्निति धिष्ण्यानां वा एते भाजनेनैतानि वै धिष्ण्यानां नामानि तान्येवैभ्य एतदन्वदिक्षत् - ३.३.३.[११]

अथात्रापोर्णुते । गर्भो वा एष भवति यो दीक्षते प्रावृता वै गर्भा उल्बेनेव जरायुणेव तमत्राजीजनत तस्मादपोर्णुत एष वा अत्र गर्भो भवति तस्मात्परिवृतो भवति परिवृता इव हि गर्भो उल्बेनेव जरायुणेव - ३.३.३.[१२]

अथ वाचयति । परि माग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भजेत्यासीनं वा एनमेष आगच्छति स आगत उत्तिष्ठति तन्मिथ्या करोति व्रतं प्रमीणाति तस्यो हैषा प्रायश्चित्तिस्तथो हास्यैतन्न मिथ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह परि माग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भजेति - ३.३.३.[१३]

अथ राजानमादायोत्तिष्ठति । उदायुषा स्वायुषोदस्थाममृतां अन्वित्यमृतं वा एषोऽनुत्तिष्ठति यः सोमं क्रीतं तस्मादाहोदायुषा स्वायुषोदस्थाममृतां अन्विति - ३.३.३.[१४]

अथ राजानमादायारोहणमभिप्रैति । प्रति पन्थामपद्महि स्वस्ति गामनेहसम् । येन विश्वाः परि द्विषो वृणक्ति विन्दते वस्विति - ३.३.३.[१५]



देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसङ्गाद्बिभयां चक्रुस्त एतद्यजुः स्वस्त्ययनं ददृशुस्त एतेन यजुषा नाष्ट्रा रक्षांस्यपहत्यैतस्य यजुषोऽभयेऽनाष्ट्रे निवाते स्वस्ति समाश्नुवत तथो एवैष एतेन यजुषा नाष्ट्रा रक्षांस्यपहत्यैतस्य यजुषोऽभयेऽनाष्ट्रे निवाते स्वस्ति समश्नुते तस्मादाह प्रति पन्थामपद्महि स्वस्ति गामनेहसं येन विश्वाः परि द्विषो वृणक्ति विन्दते वस्विति - ३.३.३.[१६]

तं वा इति हरन्ति । अनसा परिवहन्ति महयन्त्येवैनमेतत्तस्माच्छीर्ष्णा बीजं हरन्त्यनसोदावहन्ति - ३.३.३.[१७]

अथ यदपामन्ते क्रीणाति । रसो वा आपः सरसमेवैतत्क्रीणात्यथ यद्धिरण्यम्भवति सशुक्रमेवैतत्क्रीणात्यथ यद्वासो भवति सत्वचसमेवैतत्क्रीणात्यथ यदजा भवति सतपसमेवैतत्क्रीणात्यथ यद्धेनुर्भवति साशिरमेवैतत्क्रीणात्यथ यन्मिथुनौ भवतः

समिथुनमेवैतत्क्रीणाति तं वै दशभिरेव क्रीणीयान्नादशभिर्दशाक्षरा वै विराड् वैराजः सोमस्तस्माद्दशभिरेव क्रीणीयान्नादशभिः - ३.३.३.[१८]

##३.३.४ सोमानयनम्

नीडे कृष्णाजिनमास्तृणाति । अदित्यास्त्वगसीति सोऽसावेव बन्धुरथैनमासादयत्यदित्यै सद आसीदेतीयं वै पृथिव्यदितिः सेयं प्रतिष्ठा तदस्यामेवैनमेतत्प्रतिष्ठायां प्रतिष्ठापयति तस्मादाहादित्यै सद आसीदेति - ३.३.४.[१]

अथैवमभिपद्य वाचयति । अस्तभ्नाद्द्यां वृषभो अन्तरिक्षमिति देवा ह वै यज्ञं तन्वानास्तेऽसुररक्षसेभ्य आसङ्गाद्बिभयाचक्रुस्त एनमेतज्ज्यायांसमेव वधाच्चक्रुर्यदाहास्तभ्नाद्द्यां वृषभो अन्तरिक्षमिति - ३.३.४.[२]



अमिमीत वरिमाणं पृथिव्या इति । तदेनेनेमांल्लोकानास्पृणोति तस्य हि न हन्तास्ति न वधो येनेमे लोका आस्पृतास्तस्मादाहामिमीत वरिमाणं पृथिव्या इति - ३.३.४.[३]

आसीदद्विश्वा भुवनानि सम्राडिति । तदेनेनेदं सर्वमास्पृणोति तस्य हि न हन्तास्ति न वधो येनेदं सर्वमास्पृतं तस्मादाहासीदद्विश्वा भुवनानि सम्राडिति - ३.३.४.[४]

विश्वेत्तानि वरुणस्य व्रतानीति तदस्मा इदं सर्वमनुवर्त्म करोति यदिदं किं च न कं चन प्रत्युद्यामिनं तस्मादाह विश्वेत्तानि वरुणस्य व्रतानीति - ३.३.४.[५]

अथ सोमपर्याणहनेन पर्याणह्यति । नेदेनं नाष्ट्रा रक्षांसि प्रमृशानिति गर्भो वा एष भवति तिर इव वै गर्भास्तिर इवैतत्पर्याणद्धं तिर इव वै देवा मनुष्येभ्यस्तिर इवैतद्यत्पर्याणद्धं तस्माद्वै पर्याणह्यति - ३.३.४.[६]

स पर्याणह्यति । वनेषु व्यन्तरिक्षं ततानेति वनेषु हीदमन्तरिक्षं विततं वृक्षाग्रेषु वाजमर्वत्सु पय उस्रियास्विति वीर्यं वै वाजाः पुमांसोऽर्वन्तः पुंस्वेवैतद्वीर्यं दधाति पय उस्रियास्विति पयो हीदमुस्रियासु हितं हृत्सु क्रतुं वरुणो विक्ष्वग्निमिति हृत्सु ह्ययं क्रतुर्मनोजवः प्रविष्टो विक्ष्वग्निमिति विक्षु ह्ययं प्रजास्वग्निर्दिवि सूर्यमदधात्सोममद्राविति दिवि ह्यसौ सूर्यो हितः सोममद्राविति गिरिषु हि सोमस्तस्मादाह दिवि सूर्यमदधात्सोममद्राविति - ३.३.४.[७]

अथ यदि द्वे कृष्णाजिने भवतः । तयोरन्यतरत्प्रत्यानह्यति प्रतीनाहभाजनं यद्यु एकं भवति कृष्णाजिनग्रीवा एवावकृत्य प्रत्यानह्यति प्रतीनाहभाजनं सूर्यस्य चक्षुरारोहाग्नेरक्ष्णः कनीनकं यत्रैतशेभिरीयसे भ्राजमानो विपश्चितेति सूर्यमेवैतत्पुरस्तात्करोति सूर्यः पुरस्तान्नाष्ट्रा रक्षांस्यपघ्नन्नेत्यथाभयेनानाष्ट्रेण परिवहन्ति - ३.३.४.[८]

उद्धते प्रऽउग्ये फलके भवतः । तदन्तरेण तिष्ठन्त्सुब्रह्मण्यः प्राजति श्रेयान्वा एषोऽभ्यारोहाद्भवति को ह्येतमर्हत्यभ्यारोढुं तस्मादन्तरेण तिष्ठन्प्राजति - ३.३.४.[९]



पलाशशाखया प्राजति । यत्र वै गायत्री सोममच्छापतत्तदस्या आहरन्त्या अपादस्ताभ्यायत्य पर्णं प्रचिच्छेद गायत्र्यै वा सोमस्य वा राज्ञस्तत्पतित्वा पर्णोऽभवत्तस्मात्पर्णो नाम तद्यदेवात्र सोमस्य न्यक्तं तदिहाप्यसदिति तस्मात्पलाशशाखया प्राजति - ३.३.४.[१०]

अथानड्वाहावाजन्ति । तौ यदि कृष्णौ स्यातामन्यतरो वा कृष्णस्तत्रविद्याद्वर्षिष्यत्यैषमः पर्जन्यो वृष्टिमान्भविष्यतीत्येतदु विज्ञानम् - ३.३.४.[११]

अथ युनक्ति । उस्रावेतं धूर्षाहावित्युस्रौ हि भवतो धूर्षाहाविति धूर्षाहौ हि भवतो युज्येथामनश्रू इति युज्येते ह्यनश्रू इत्यनार्ताविति तत् अवीरहणावित्यपापकृताविति तद्ब्रह्मचोदनाविति ब्रह्मचोदनौ हि भवतः स्वस्ति यजमानस्य गृहान्गच्छतमिति यथैनावन्तरा नाष्ट्रा रक्षांसि न हिंस्युरेवमेतदाह - ३.३.४.[१२]

अथ पश्चात्परिक्रम्य । अपालम्बमभिपद्याह सोमाय क्रीतायानुब्रूहीति सोमाय पर्युह्यमाणायेति वाऽतो यतरथा कामयेत - ३.३.४.[१३]

अथ वाचयति । भद्रो मेऽसि प्रच्यवस्व भुवस्पत इति भद्रो ह्यस्यैष भवति तस्मान्नान्यमाद्रियतेऽप्यस्य राजानः सभागा आगच्छन्ति पूर्वो राज्ञोऽभिवदति भद्रो हि भवति तस्मादाह भद्रो मेऽसीति प्रच्यवस्व भुवस्पत इति भुवनानां ह्येष पतिर्विश्वान्यभि धामानीत्यङ्गानि वै विश्वानि धामान्यङ्गान्येवैतदभ्याह मा त्वा परिपरिणो विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो विदन्निति यथैनमन्तरा नाष्ट्रा रक्षांसि न विन्देयुरेवमेतदाह - ३.३.४.[१४]

श्येनो भूत्वा परापतेति । वय एवैनमेतद्भूतं प्रपातयति यद्वा उग्रं तन्नाष्ट्रा रक्षांसि नान्ववयन्त्येतद्वै वयसामोजिष्ठं बलिष्ठं यच्छ्येनस्तमेवैतद्भूतं प्रपातयति यदाह श्येनो भूत्वा परापतेति - ३.३.४.[१५]



अथ शरीरमेवान्ववहन्ति । यजमानस्य गृहान्गच्छ तन्नौ संस्कृतमिति नात्र तिरोहितमिवास्ति - ३.३.४.[१६]

अथ सुब्रह्मण्यामाह्वयति । यथा येभ्यः पक्ष्यन्त्स्यात्तान्ब्रूयादित्यहे वः पक्तास्मीत्येवमेवैतद्देवेभ्यो यज्ञं निवेदयति सुब्रह्मण्यो३ सुब्रह्म्ण्यो३ इति ब्रह्म हि देवान्प्रच्यावयति त्रिष्कृत्व आह त्रिवृद्धि यज्ञः - ३.३.४.[१७]

इन्द्रागच्छेति । इन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्रागच्छेति हरिव आगच्छ मेधातिथेर्मेष वृषणश्वस्य मेने गौरावस्कन्दिन्नहल्यायै जारेति तद्यान्येवास्य चरणानि तैरेवैनमेतत्प्रमुमोदयिषति - ३.३.४.[१८]

कौशिक ब्राह्मण गौतम ब्रुवाणेति । शश्वद्धैतदारुणिनाऽधुनोपज्ञातं यद्गौतम ब्रुवाणेति स यदि कामयेत ब्रूयादेतद्यद्यु कामयेतापि नाद्रियेतेत्यहे सुत्यामिति यावदहे सुत्या भवति - ३.३.४.[१९]

देवा ब्रह्माण आगच्छतेति । तद्देवांश्च ब्राह्मणांश्चाहैतैर्ह्यत्रोभयैरर्थो भवति यद्देवैश्च ब्राह्मणैश्च - ३.३.४.[२०]

अथ प्रतिप्रस्थाता । अग्रेण शालामग्नीषोमीयेण पशुना प्रत्युपतिष्ठतेऽग्नीषोमौ वा एतमन्तर्जम्भ आदधाते यो दीक्षत आग्नावैष्णवं ह्यदो दीक्षणीयं हविर्भवति यो वै विष्णुः सोमः स हविर्वा एष भवति यो दीक्षते तदेनमन्तर्जम्भ आदधाते तत्पशुनात्मानं निष्क्रीणीते - ३.३.४.[२१]

तद्धैके । आहवनीयादुल्मुकमाहरन्त्ययमग्निरयं सोमस्ताभ्यां सहसङ्ख्यां निष्क्रेष्यामह इति वदन्तस्तदु तथा न कुर्याद्यत्र वा एतौ क्व च तत्सहैव - ३.३.४.[२२]

स वै द्विरूपो भवति । द्विदेवत्यो हि भवति देवतयोरसमदे कृष्णसारङ्गस्यादित्याहुरेतद्ध्येनयो रूपतममिवेति यदि कृष्णसारङ्गं न विन्देदथो अपि लोहितसारङ्ग स्यात् - ३.३.४.[२३]

तस्मिन्वाचयति । नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतं सपर्यत दूरे दृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शंसतेति नम एवास्मा एतत्करोति मित्रधेयमेवैनेनैतत्कुरुते - ३.३.४.[२४]

अथाध्वर्युरारोहणं विमुञ्चति । वरुणस्योत्तम्भनमसीत्युपस्तम्भनेनोपस्तभ्नाति वरुणस्य स्कम्भसर्जनी स्थ इति शम्ये उद्वृहति स यदाह वरुणस्य स्कम्भसर्जनी स्थ इति वरुण्यो ह्येष एतर्हि भवति यत्सोमः क्रीतः - ३.३.४.[२५]

अथ चत्वारो राजासन्दीमाददते । द्वौ वा अस्मै मानुषाय राज्ञ आददाते अथैतां चत्वारो योऽस्य सकृत्सर्वस्येष्टे - ३.३.४.[२६]

औदुम्बरी भवति । अन्नं वा ऊर्गुदुम्बर ऊर्जोऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरी भवति - ३.३.४.[२७]

नाभिदघ्ना भवति । अत्र वा अन्नं प्रतितिष्ठन्यन्नं सोमस्तस्मान्नाभिदघ्ना भवत्यत्रो एव रेतस आशयो रेतः सोमस्तस्मादत्रदघ्ना भवति - ३.३.४.[२८]

तामभिमृशति । वरुणस्य ऋतसदन्यसीत्यथ कृष्णाजिनमास्तृणाति वरुणस्य ऋतसदनमसीत्यथैनमासादयति वरुणस्य ऋतसदनमासीदेति स यदाह वरुणस्य ऋतसदनमासीदेति वरुण्यो ह्येष एतर्हि भवति - ३.३.४.[२९]



अथैनं शालां प्रपादयति । स प्रपादयन्वाचयति या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् । गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्यानिति गृहा वै दुर्या गृहान्नः शिवः शान्तोऽपापकृत्प्रचरेत्येवैतदाह - ३.३.४.[३०]

अत्र हैके । उदपात्रमुपनिनयन्ति यथा राज्ञ आगतायोदकमाहरेदेवमेतदिति वदन्तस्तदु तथा न कुर्यान्मानुषं ह ते यज्ञे कुर्वन्ति व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तस्मान्नोपनिनयेत् - ३.३.४.[३१]

३.४.१ आतिथ्येष्टिः

शिरो वै यज्ञस्यातिथ्यं बाहू प्रायणीयोदयनीयौ । अभितो वै शिरो बाहू भवतस्तस्मादभित आतिथ्यमेते हविषी भवतः प्रायणीयश्चोदयनीयश्च - ३.४.१.[१]

अथ यस्मादातिथ्यं नाम । अतिथिर्वा एष एतस्यागच्छति यत्सोमः क्रीतस्तस्मा एतद्यथा राज्ञे वा ब्राह्मणाय वा महोक्षं वा महाजं वा पचेत्तदह मानुषं हविर्देवानामेवमस्मा एतदातिथ्यं करोति - ३.४.१.[२]

तदाहुः । पूर्वोऽतीत्य गृह्णीयादिति यत्र वा अर्हन्तमागतं नापचायन्ति क्रुध्यति वै स तत्र तथा हापचितो भवति - ३.४.१.[३]

तद्वा अन्यतर एव विमुक्तः स्यात् । अन्यतरोऽविमुक्तोऽथ गृह्णीयात्स यदन्यतरो विमुक्तस्तेनागतो यद्वन्यतरोऽविमुक्तस्तेनापचितः - ३.४.१.[४]

तदु तथा न कुर्यात् विमुच्यैव प्रपाद्य गृह्णीयाद्यथा वै देवानां चरणं तद्वा अनु मनुष्याणां तस्मान्मानुषे यावन्न विमुञ्चते नैवास्मै तावदुदकं हरन्ति नापचितिं कुर्वन्त्यनागतो हि स तावद्भवत्यथ यदैव विमुञ्चतेऽथास्मा उदकं हरन्त्यथापचितिं कुर्वन्ति तर्हि हि स आगतो भवति तस्माद्विमुच्यैव प्रपाद्य गृह्णीयात् - ३.४.१.[५]



स वै संत्वरमाण इव गृह्णीयात् । तथा हापचितो भवति तत्पत्न्यन्वारभते पर्युह्यमाणं वै यजमानोऽन्वारभतेऽथात्र पत्न्युभयत एवैतन्मिथुनेनान्वारभेते यत्र वा अर्हन्नागच्छति सर्वगृह्या इव वै तत्र चेष्टन्ति तथा हापचितो भवति - ३.४.१.[६]

स वा अन्येनैव ततो यजुषा गृह्णीयात् । येनो चान्यानि हवींष्येकं वा एष भागं क्रीयमाणोऽभिक्रीयते च्छन्दसामेव राज्याय च्छन्दसां साम्राज्याय तस्य छन्दांस्यभितः साचयानि यथा राज्ञोऽराजानो राजकृतः सूतग्रामण्य एवमस्य छन्दांस्यभितः साचयानि - ३.४.१.[७]

न वै तदवकल्पते । यच्छन्दोभ्य इति केवलं गृह्णीयाद्यत्र वा अर्हते पचन्ति तदभितः साचयोऽन्वाभक्ता भवन्त्यराजानो राजकृतः सूतग्रामण्यस्तस्माद्यत्रैवैतस्यै गृह्णीयात्तदेव छन्दांस्यन्वाभजेत् - ३.४.१.[८]

स गृह्णाति । अग्नेस्तनूरसि विष्णवे त्वेत्यग्निर्वै गायत्री तद्गायत्रीमन्वाभजति - ३.४.१.[९]

सोमस्य तनूरसि विष्णवे त्वेति । क्षत्रं वै सोमः क्षत्रं त्रिष्टुप्तत्त्रिष्टुभमन्वाभजति - ३.४.१.[१०]

अतिथेरातिथ्यमसि विष्णवे त्वेति । सोऽस्योद्धारो यथा श्रेष्ठस्योद्धार एवमस्यैष ऋते च्छन्दोभ्यः - ३.४.१.[११]

श्येनाय त्वा सोमभृते विष्णवे त्वेति । तद्गायत्रीमन्वाभजति सा यद्गायत्री श्येनो भूत्वा दिवः सोममाहरत्तेन सा श्येनः सोमभृत्तेनैवैनामेतद्वीर्येण द्वितीयमन्वाभजति - ३.४.१.[१२]



अग्नये त्वा रायस्पोषदे विष्णवे त्वेति । पशवो वै रायस्पोषः पशवो जगती तज्जगतीमन्वाभजति - ३.४.१.[१३]

अथ यत्पञ्च कृत्वो गृह्णाति । संवत्सरसम्मितो वै यज्ञः पञ्च वा ऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च कृत्वो गृह्णात्यथ यद्विष्णवे त्वा विष्णवे त्वेति गृह्णाति विष्णवे हि गृह्णाति यो यज्ञाय गृह्णाति - ३.४.१.[१४]

नवकपालः पुरोडाशो भवति । शिरो वै यज्ञस्यातिथ्यं नवाक्षरा वै गायत्र्यष्टौ तानि यान्यन्वाह प्रणवो नवमः पूर्वार्धो वै यज्ञस्य गायत्री पूर्वार्ध एष यज्ञस्य तस्मान्नवकपालः पुरोडाशो भवति - ३.४.१.[१५]

कार्ष्मर्यमयाः परिधयः । देवा ह वा एतं वनस्पतिषु राक्षोघ्नं ददृशुर्यत्कार्ष्मर्यं शिरो वै यज्ञस्यातिथ्यं नेच्छिरो यज्ञस्य नाष्ट्रा रक्षांसि हिनसन्निति तस्मात्कार्ष्मर्यमयाः परिधयो भवन्ति - ३.४.१.[१६]

आश्ववालः प्रस्तरः । यज्ञो ह देवेभ्योऽपचक्राम सोऽश्वो भूत्वा पराङावववर्त तस्य देवा अनुहाय वालानभिपेदुस्तानालुलुपुस्तानालुप्य सार्धं संन्यासुस्तत एता ओषधयः समभवन्यदश्ववालाः शिरो वै यज्ञस्यातिथ्यं जघनार्धो वाला उभयत एवैतद्यज्ञं परिगृह्णाति यदाश्ववालाः प्रस्तरो भवति - ३.४.१.[१७]

ऐक्षव्यौ विधृती । नेद्बर्हिश्च प्रस्तरश्च संलुभ्यात इत्यथोत्पूयाज्यं सर्वाण्येव चतुर्गृहीतान्याज्यानि गृह्णाति न ह्यत्रानुयाजा भवन्ति - ३.४.१.[१८]

आसाद्य हवींष्यग्निं मन्थति । शिरो वै यज्ञस्यातिथ्यं जनयन्ति वा एनमेतद्यन्मन्थन्ति शीर्षतो वा अग्रे जायमानो जायते शीर्षत एवैतदग्रे यज्ञं जनयत्यग्निर्वै सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति शिरो वै यज्ञस्यातिथ्यं शीर्षत एवैतद्यज्ञं सर्वाभिर्देवताभिः समर्धयति तस्मादग्निं मन्थति - ३.४.१.[१९]



सोऽधिमन्थनं शकलमादत्ते । अग्नेर्जनित्रमसीत्यत्र ह्यग्निर्जायते तस्मादाहाग्नेर्जनित्रमसीति - ३.४.१.[२०]

अथ दर्भतरुणके निदधाति । वृषणौ स्थ इति तद्यावेवेमौ स्त्रियै साकंजावेतावेवैतौ - ३.४.१.[२१]

अथाधरारणिं निदधाति । उर्वश्यसीत्यथोत्तरारण्याज्यविलापनीमुपस्पृशत्यायुरसीति तामभिनिदधाति पुरूरवा असीत्युर्वशी वा अप्सराः पुरूरवाः पतिरथ यत्तस्मान्मिथुनादजायत तदायुरेवमेवैष एतस्मान्मिथुनाद्यज्ञं जनयत्यथाहाग्नये मथ्यमानायानुब्रूहीति - ३.४.१.[२२]

स मन्थति । गायत्रेण त्वा च्छन्दसा मन्थामि त्रैष्टुभेन त्वा च्छन्दसा मन्थामि जागतेन त्वा च्छन्दसा मन्थामीति तं वै च्छन्दोभिरेव मन्थति छन्दांसि मथ्यमानायान्वाह

छन्दांस्येवैतद्यज्ञमन्वायातयति यथामुमादित्यं रश्मयो जातायानुब्रूहीत्याह यदा जायते प्रह्रियमाणायेत्यनुप्रहरन् - ३.४.१.[२३]

सोऽनुप्रहरति । भवतं नः समनसौ सचेतसावरेपसौ मा यज्ञं हिंसिष्टम्मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य न इति शान्तिमेवाभ्यामेतद्वदति यथा नान्योऽन्यं हिंस्याताम् - ३.४.१.[२४]

अथ स्रुवेणोपहत्याज्यम् । अग्निमभिजुहोत्यग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अभिशस्तिपावा स नः स्योनः सुयजा यजेह देवेभ्यो हव्यं सदमप्रयुच्छन्त्स्वाहेत्याहुत्यै वा एतमजीजनत तमेतयाहुत्याऽप्रैषीत्तस्मादेवमभिजुहोति - ३.४.१.[२५]

तदिडान्तं भवति । नानुयाजान्यजन्ति शिरो वै यज्ञस्यातिथ्यं पूर्वार्धो वै शिरः पूर्वार्धमेवैतद्यज्ञस्याभिसंस्करोति स यद्वानुयाजान्यजेद्यथा शीर्षतः पर्याहृत्य पादौ प्रतिदध्यादेवं तत्तस्मादिडान्तं भवति नानुयाजान्यजन्ति - ३.४.१.[२६]



##३.४.२. प्रवर्ग्यकर्मणि तानूनप्त्रम्

आतिथ्येन वै देवा इष्ट्वा । तान्त्समदविन्दत्ते चतुर्धा व्यद्रवन्नन्योऽन्यस्य श्रियाऽअतिष्ठमाना अग्निर्वसुभिः सोमो रुद्रैर्वरुण आदित्यैरिन्द्रो मरुद्भिर्बृहस्पतिर्विश्वैर्देवैरित्यु हैक आहुरेते ह त्वेव ते विश्वे देवा ये ते चतुर्धा व्यद्रवंस्तान्विद्रुतानसुररक्षान्यनुव्यवेयुः - ३.४.२.[१]

तेऽविदुः । पापीयांसो वै भवामोऽसुररक्षसानि वै नोऽनुव्यवागुर्द्विषद्भ्यो वै रध्यामो हन्त संजानामहा एकस्य श्रियै तिष्ठामहा इति त इन्द्रस्य श्रिया अतिष्ठन्त तस्मादाहुरिन्द्रः सर्वा देवता इन्द्रश्रेष्ठा देवा इति - ३.४.२.[२]

तस्मादु ह न स्वा ऋतीयेरन् । य एषां परस्तरामिव भवति स एनाननुव्यवैति ते प्रियं द्विषतां कुर्वन्ति द्विषद्भ्यो रध्यन्ति तस्मान्नऽर्तीयेरन्त्स यो हैवं विद्वान्नऽर्तीयतेऽप्रियं द्विषतां करोति न द्विषद्भ्यो रध्यति तस्मान्नऽर्तीयेत - ३.४.२.[३]

ते होचुः । हन्तेदं तथा करवामहै यथा न इदमाप्रदिवमेवाजर्यमसदिति - ३.४.२.[४]

ते देवाः । जुष्टास्तनूः प्रियाणि धामानि सार्धं समवददिरे ते होचुरेतेन नः स नानासदेतेन विष्वङ्यो न एतदतिक्रामादिति कस्योपद्रष्टुरिति तनूनप्तुरेव शाक्करस्येति यो वा अयमेष तनूनपाच्छाक्करः सोऽयं प्रजानामुपद्रष्टा प्रविष्टस्ताविमौ प्राणोदानौ - ३.४.२.[५]

तस्मादाहुः । मनो देवा मनुष्यस्याजानन्तीति मनसा संकल्पयति तत्प्राणमपिपद्यते प्राणो वातं वातो देवेभ्य आचष्टे यथा पुरुषस्य मनः - ३.४.२.[६]

तस्मादेतदृषिणाभ्यनूक्तम् । मनसा संकल्पयति तद्वातमपिगच्छति वातो देवेभ्य आचष्टे यथा पुरुष ते मन इति - ३.४.२.[७]



ते देवाः । जुष्टास्तनूः प्रियाणि धामानि सार्धं समवददिरे ते होचुरेतेन नः स नानासदेतेन विष्वङ्यो न एतदतिक्रामादिति तद्देवा अप्येतर्हि नातिक्रामन्ति के हि स्युर्यदतिक्रामेयुरनृतं हि वदेयुरेकं ह वै देवा व्रतं चरन्ति सत्यमेव तस्मादेषां जितमनपजय्यं तस्माद्यश एवं ह वा अस्य जितमनपजय्यमेवं यशो भवति य एवं विद्वान्त्सत्यं वदति तदेतत्तानूनप्त्रं निदानेन - ३.४.२.[८]

ते देवाः । जुष्टास्तनूः प्रियाणि धामानि सार्धं समवददिरेऽथैत आज्यान्येव गृह्णाना जुष्टास्तनूः प्रियाणि धामानि सार्धं समवद्यन्ते तस्मादु ह न सर्वेणेव समभ्यवेयान्नेन्मे जुष्टास्तन्वः प्रियाणि धामानि सार्धं समभ्यवायानिति येनो ह समभ्यवेयान्नास्मै द्रुह्येदिदं ह्याहुर्न सतानुनप्त्रिणे द्रोग्धव्यमिति - ३.४.२.[९]

अथातो गृह्णात्येव । आपतये त्वा परिपतये गृह्णामीति यो वा अयं पवत एष आ च पतति परि च पतत्येतस्मा उ हि गृह्णाति तस्मादाहापतये त्वा परिपतये गृह्णामीति - ३.४.२.[१०]

तनूनप्त्रे शाक्करायेति । यो वा अयं पवत एष तनूनप्ता शाक्कर एतस्मा उ हि गृह्णाति तस्मादाह तनूनप्त्रे शाक्करायेति - ३.४.२.[११]

शक्कन ओजिष्ठायेति । एष वै शक्कौजिष्ठ एतस्मा उ हि गृह्णाति तस्मादाह शक्कन ओजिष्ठायेति - ३.४.२.[१२]

अथातः समवमृशन्त्येव । एतद्ध देवा भूयः समामिर इत्थं नः सोऽमुथासद्यो न एतदतिक्रामादिति तथो एवैत एतत्सममन्त इत्थं नः सोऽमुथासद्यो न एतदतिक्रामादिति - ३.४.२.[१३]

ते समवमृशन्ति । अनाधृष्टमस्यनाधृष्यं देवानामोज इत्यनाधृष्टा हि देवा आसन्ननाधृष्याः सह सन्तः समानं वदन्तः समानं दध्नाणा देवानामोज इति देवानां वै जुष्टास्तन्वः प्रियाणि धामान्यनभिशस्त्यभिशस्तिपा अनभिशस्तेन्यमिति सर्वां हि देवा अभिशस्तिं तीर्णा अञ्जसा सत्यमुपगेषमिति सत्यं वदानि मेदमतिक्रमिषमित्येवैतदाह स्विते मा धा इति स्विते हि तद्देवा आत्मानमदधत यत्सत्यमवदन्यत्सत्यमकुर्वंस्तस्मादाह स्विते मा धा इति - ३.४.२.[१४]



अथ यास्तद्देवाः । जुष्टास्तनूः प्रियाणि धामानि सार्धं समवददिरे तदिन्द्रे संन्यदधतैष वा इन्द्रो य एष तपति न ह वा एषोऽग्रे तताप यथा हैवैदमन्यत्कृष्णमेवं हैवास तेनैवैतद्वीर्येण तपति तस्माद्यदि बहवो दीक्षेरन्गृहपतय एव व्रतमभ्युत्सिच्य प्रयच्छेयुः स हि तेषामिन्द्रभाजनम्भवति यद्यु दक्षिणावता दीक्षेत यजमानायैव व्रतमभ्युत्सिच्य प्रयच्छेयुरिदं ह्याहुरिन्द्रो यजमान इति - ३.४.२.[१५]

अथ यास्तद्देवाः । जुष्टास्तनूः प्रियाणि धामानि सार्धं समवददिरे तत्सार्धं संजघ्ने तत्सामाभवत्तस्मादाहुः सत्यं साम देवजं सामेति - ३.४.२.[१६]

##३.४.३.प्रवर्ग्यकर्मणि अवान्तरदीक्षा
आतिथ्येन वै देवा इष्ट्वा । तान्त्समदविन्दत्ते तानूनप्त्रैः समशाम्यंस्त एतस्य प्रायश्चित्तिमैच्छन्यदन्योऽन्यं पापमवदन्नाह पुरावभृथात्पुनर्दीक्षामवाकल्पयंस्त एतामवान्तरां दीक्षामपश्यन् - ३.४.३.[१]

तेऽग्निनैव त्वचं विपल्याङ्ग्यन्त । तपो वा अग्निस्तपो दीक्षा तदवान्तरां दीक्षामुपायंस्तद्यदवान्तरां दीक्षामुपायंस्तस्मादवान्तरदीक्षा संतरामङ्गुलीराञ्चन्त संतरां मेखलां पर्यस्तामेवैनामेतत्सतीं पर्यास्यन्त तथो एवैष एतद्यदतः प्राचीनमव्रत्यं वा करोत्यव्रत्यं वा वदति तस्यैवैतत्प्रायश्चित्तिं कुरुते - ३.४.३.[२]

सोऽग्निनैव त्वचं विपल्यङ्ग्यते । तपो वा अग्निस्तपो दीक्षा तदवान्तरां दीक्षामुपैति संतरामङ्गुलीरचते संतरां मेखलां पर्यस्तामेवैनामेतत्सतीम्पर्यस्यते प्रजामु हैव तद्देवा उपायन् - ३.४.३.[३]



तेऽग्निनैव त्वचं विपल्याङ्ग्यन्त । अग्निर्वै मिथुनस्य कर्ता प्रजनयिता तत्प्रजामुपायन्त्संतरामङ्गुलीराञ्चन्त संतरां मेखलां तत्प्रजामात्मन्नकुर्वत तथो एवैष एतत्प्रजामेवोपैति - ३.४.३.[४]

सोऽग्निनैव त्वचं विपल्यङ्ग्यते । अग्निर्वै मिथुनस्य कर्ता प्रजनयिता तत्प्रजामुपैति संतरामङ्गुलीरचते संतरां मेखलां तत्प्रजामात्मन्कुरुते - ३.४.३.[५]

देवानामु ह स्म दीक्षितानाम् । यः समिद्धारो वा स्वाध्यायं वा विसृजते तं ह स्मेतरस्यैवेतरं रूपेणेतरस्येतरमसुररक्षसानि जिघांसन्ति ते ह पापं वदन्त उपसमेयुरिति वै मां त्वमचिकीर्षीरिति मा जिघांसीरित्यग्निर्हैव तथा नान्यमुवादाग्निं तथा नान्यः - ३.४.३.[६]

ते होचुः । अपीत्थं त्वामग्नेऽवादिषूरिति नैवाहमन्यं न मामन्य इति - ३.४.३.[७]

तेऽविदुः । अयं वै नो विरक्षस्तमोऽस्यैव रूपमसाम तेन रक्षांस्यतिमोक्ष्यामहे तेन स्वर्गं लोकं समश्नुविष्यामह इति तेऽग्नेरेव रूपमभवंस्तेन रक्षांस्यत्यमुच्यन्त तेन स्वर्गं लोकं समाश्नुवत तथो एवैष एतदग्नेरेव रूपं भवति तेन रक्षांस्यतिमुच्यते तेन स्वर्गं लोकं समश्नुते स वै समिधमेवाभ्यादधदवान्तरदीक्षामुपैति - ३.४.३.[८]

स समिधमभ्यादधाति । अग्ने व्रतपास्त्वे व्रतपा इत्यग्निर्हि देवानां व्रतपतिस्तस्मादाहाग्ने व्रतपास्त्वे व्रतपा इति या तव तनूरियं सा मयि यो मम तनूरेषा सा त्वयि सह नौ व्रतपते व्रतानीति तदग्निना त्वचं विपल्यङ्ङयतेऽनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिरिति तदवान्तरां दीक्षामुपैति संतरामङ्गुलीरचते संतरां मेखलां पर्यस्तामेवैतत्सतीं पर्यस्यते - ३.४.३.[९]

अथैनमतो मदन्तीभिरुपचरन्ति । तपो वा अग्निस्तपो मदन्त्यस्तस्मादेनम्मदन्तीभिरुपचरन्ति - ३.४.३.[१०]



अथ मदन्तीभिरुपस्पृश्य । राजानमाप्याययन्ति तद्यन्मदन्तीरुपस्पृश्य राजानमाप्याययन्ति वज्रो वा आज्यं रेतः सोमो नेद्वज्रेणाज्येन रेतः सोमं हिनसामेति तस्मान्मदन्तीरुपस्पृश्य राजानमाप्याययन्ति- ३.४.३.[११]

तदाहुः । यस्मा एतदाप्यायनं क्रियत आतिथ्यं सोमाय तमेवाग्र आप्याययेयुरथावान्तरदीक्षामथ तानूनप्त्राणीति तदु तथा न कुर्याद्यज्ञस्य वा एवं कर्मात्र वा एनान्त्समदविन्दत्ते संशममेव पूर्वमुपायन्नथावान्तरदीक्षामथाप्यायनम् - ३.४.३.[१२]

तद्यदाप्याययन्ति । देवो वै सोमो दिवि हि सोमो वृत्रो वै सोम आसीत्तस्यैतच्छरीरं यद्गिरयो यदश्मानस्तदेषोशाना नामौषधिर्जायत इति ह स्माह श्वेतकेतुरौद्दालकिस्तामेतदाहृत्याभिषुण्वन्ति तां दीक्षोपसद्भिस्तानूनप्त्रैराप्यायनेन सोमं कुर्वन्तीति तथो एवैनामेष एतद्दीक्षोपसद्भिस्तानूनप्त्रैराप्यायनेन सोमं करोति - ३.४.३.[१३]

मधु सारघमिति वा आहुः । यज्ञो ह वै मधु सारघमथैत एव सरघो मधुकृतो यदृत्विजस्तद्यथा मधु मधुकृतआप्याययेयुरेवमेवैतद्यज्ञमाप्याययन्ति - ३.४.३.[१४]

यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न इदम्मनुष्यैरनभ्यारोह्यं स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम -३.४.३.[१५]

तद्वा ऋषीणामनुश्रुतमास । ते यज्ञं समभरन्यथायं यज्ञः सम्भृत एवं वा एष यज्ञं सम्भरति यो दीक्षते वाग्वै यज्ञस्तद्यदेवात्र यज्ञस्य निर्धीतं यद्विदुग्धं तदेवैतत्पुनराप्याययति- ३.४.३.[१६]

ते वै षड्भूत्वाप्याययन्ति । षड्वा ऋतव ऋतव एवैतद्भूत्वाप्याययन्ति - ३.४.३.[१७]



त आप्याययन्ति । अंशुरंशुष्टे देव सोमाप्यायतामिति तदस्यांशुमंशुमेवाप्याययन्तीन्द्रायैकधनविद इतीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्रायेत्येकधनविद इति शतंशतं ह स्म वा एष देवान्प्रत्येकैक एवांशुरेकधनानाप्यायते दशदश वा तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वेतीन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतदाप्याययत्यात्वमिन्द्राय प्यायस्वेति तदेतस्मिन्नाप्यायनं दधात्याप्याययास्मान्त्सखीन्त्सन्या मेधयेति स यत्सनोति तत्तदाह यत्सन्येत्यथ यदनुब्रूते तदु तदाह यन्मेधयेति स्वस्ति ते देव सोम सत्यामशीयेत्येका वा एतेषामाशीर्भवत्यृत्विजां च यजमानस्य च यज्ञस्योदृचं गच्छेमेति यज्ञस्योदृचं गच्छानीत्येवैतदाह - ३.४.३.[१८]

अथ प्रस्तरे निह्नुवते । उत्तरतौपचारो वै यज्ञोऽथैतद्दक्षिणेवान्वित्याप्याययन्त्यग्निर्वै यज्ञस्तद्यज्ञं पृष्ठतः कुर्वन्ति तन्मिथ्याकुर्वन्ति देवेभ्य आवृश्च्यन्ते यज्ञो वै प्रस्तरस्तद्यज्ञं पुनरारभन्ते तस्यो हैषा प्रायश्चित्तिस्तथो हैषामेतन्न मिथ्याकृतं भवति न देवेभ्य आवृश्च्यन्ते तस्मात्प्रस्तरे निह्नुवते - ३.४.३.[१९]

तदाहुः । अक्ते निह्नुवीराननक्ता इत्यनक्ते हैव निह्नुवीरन्न नु प्रहरणं ह्येवाक्तस्य - ३.४.३.[२०]

ते निह्नुवते । एष्टा रायः प्रेषे भगाय ऋतमृतवादिभ्य इति सत्यं सत्यवादिभ्य इत्यैवैतदाह नमो द्यावापृथिवीभ्यामिति तदाभ्यां द्यावापृथिवीभ्यां निह्नुवते ययोरिदं सर्वमधि - ३.४.३.[२१]

अथाह समुल्लुप्य प्रस्तरम् । अग्नीन्मदन्त्यापा इति मदन्तीत्यग्नीदाह ताभिरेहीत्युपर्युपर्यग्निमतिहरति स यन्नानुप्रहरत्येतेन ह्यत ऊर्ध्वान्यहानि प्रचरिष्यन्भवत्यथ यदुपर्युपर्यग्निमतिहरति तदेवास्यानुप्रहृतभाजनम्भवति तमग्नीधे प्रयच्छति तमग्नीन्निदधाति - ३.४.३.[२२]



##३.४.४.

ग्रीवा वै यज्ञस्योपसदः शिरः प्रवर्ग्यः । तस्माद्यदि प्रवर्ग्यवान्भवति प्रवर्ग्येण प्रचर्याथोपसद्भिः प्रचरन्ति तद्ग्रीवाः प्रतिदधाति - ३.४.४.[१]

तद्याः पूर्वाह्णेऽनुवाक्या भवन्ति । ता अपराह्णे याज्या या याज्यास्ता अनुवाक्यास्तद्व्यतिषजति तस्मादिमानि ग्रीवाणां पर्वाणि व्यतिषक्तानीमान्यस्थीनि - ३.४.४.[२]

देवाश्च वा असुराश्च । उभये प्राजापत्याः पस्पृधिरे ततोऽसुरा एषु लोकेषु पुरश्चक्रिरेऽयस्मयीमेवास्मिंलोके रजतामन्तरिक्षे हरिणीं दिवि - ३.४.४.[३]

तद्वै देवा अस्पृण्वत । त एताभिरुपसद्भिरुपासीदंस्तद्यदुपासीदंस्तस्मादुपसदो नाम ते पुरः प्राभिन्दन्निमांल्लोकान्प्राजयंस्तस्मादाहुरुपसदा पुरं जयन्तीति यदहोपासते तेनेमां मानुषीं पुरं जयन्ति - ३.४.४.[४]

एताभिर्वै देवा उपसद्भिः । पुरः प्राभिन्दन्निमांल्लोकान्प्राजयंस्तथो एवैष एतन्नाहैवास्मा अस्मिँल्लोके कश्चन पुरः कुरुत इमानेवैतल्लोकान्प्रभिनत्तीमांल्लोकान्प्रजयति तस्मादुपसद्भिर्यजते - ३.४.४.[५]

ता वा आज्यहविषो भवन्ति । वज्रो वा आज्यमेतेन वै देवा वज्रेणाज्येन पुरः प्राभिन्दन्निमांल्लोकान्प्राजयंस्तथो एवैष एतेन वज्रेणाज्येनेमांल्लोकान्प्रभिनत्तीमांल्लोकान्प्रजयति तस्मादाज्यहविषो भवन्ति - ३.४.४.[६]

स वा अष्टौ कृत्वो जुह्वां गृह्णाति । चतुरुपभृत्यथो इतरथाऽऽहुश्चतुरेव कृत्वो जुह्वां गृह्णीयादष्टौ कृत्व उपभृतीति - ३.४.४.[७]

स वा अष्टावेव कृत्वो जुह्वां गृह्णाति । चतुरुपभृति तद्वज्रमभिभारं करोति तेन वज्रेणाभिभारेणेमांल्लोकान्प्रभिनत्तीमांल्लोकान्प्रजयति - ३.४.४.[८]



अग्नीषोमौ वै देवानां सयुजौ । ताभ्यां सार्धं गृह्णाति विष्णव एकाकिनेऽन्यतरमेवाघारमाघारयति यं स्रुवेण प्रतिक्रामति वाऽउत्तरमाघारमाघार्याभिजित्या अभिजयानीति तस्मादन्यतरमेवाघारमाघारयति यं स्रुवेण - ३.४.४.[९]

अथाश्राव्य न होतारं प्रवृणीते । सीद होतरित्येवाहोपविशति होता होतृषदन उपविश्य प्रसौति प्रसूतोऽध्वर्युः स्रुचावादत्ते - ३.४.४.[१०]

स आहातिक्रामन्नग्नयेऽनुब्रूहीति । आश्राव्याहाग्निं यजेति वषट्कृते जुहोति - ३.४.४.[११]

अथाह सोमायानुब्रूहीति । आश्राव्याह सोमं यजेति वषट्कृते जुहोति - ३.४.४.[१२]

अथ यदुपभृत्याज्यं भवति । तत्समानयमान आह विष्णवेऽनुब्रूहीत्याश्राव्याह विष्णुं यजेति वषट्कृते जुहोति - ३.४.४.[१३]

स यत्समानत्र तिष्ठन्जुहोति । न यथेदं प्रचरन्त्संचरत्यभिजित्या अभिजयानीत्यथ यदेता देवता यजति वज्रमेवैतत्संस्करोत्यग्निमनीकं सोमं शल्यं विष्णुं कुल्मलं - ३.४.४.[१४]

संवत्सरो हि वज्रः । अग्निर्वा अहः सोमो रात्रिरथ यदन्तरेण तद्विष्णुरेतद्वै परिप्लवमानं संवत्सरं करोति - ३.४.४.[१५]

संवत्सरो वज्रः । एतेन वै देवाः संवत्सरेण वज्रेण पुरः प्राभिन्दन्निमांल्लोकान्प्राजयंस्तथो एवैष एतेन संवत्सरेण वज्रेणेमांल्लोकान्प्रभिनत्तीमांल्लोकान्प्रजयति तस्मादेता देवता यजति - ३.४.४.[१६]



स वै तिस्र उपसद उपेयात् । त्रयो वा ऋतवः संवत्सरस्य संवत्सरस्यैवैतद्रूपं क्रियते संवत्सरमेवैतत्संस्करोति द्विरेकया प्रचरति द्विरेकया - ३.४.४.[१७]

ताः षट् सम्पद्यन्ते । षड्वा ऋतवः संवत्सरस्य संवत्सरस्यैवैतद्रूपं क्रियते संवत्सरमेवैतत्संस्करोति - ३.४.४.[१८]

यद्यु द्वादशोपसद उपेयात् । द्वादश वै मासाः संवत्सरस्य संवत्सरस्यैवैतद्रूपं क्रियते संवत्सरमेवैतत्संस्करोति द्विरेकया प्रचरति द्विरेकया - ३.४.४.[१९]

ताश्चतुर्विंशतिः सम्पद्यन्ते । चतुर्विंशतिर्वै संवत्सरस्यार्धमासाः संवत्सरस्यैवैतद्रूपं क्रियते संवत्सरमेवैतत्संस्करोति - ३.४.४.[२०]

स यत्सायम्प्रातः प्रचरति । तथा ह्येव सम्पत्सम्पद्यते स यत्पूर्वाह्णे प्रचरति तज्जयत्यथ यदपराह्णे प्रचरति सुजितमसदित्यथ यज्जुहोतीदं वै पुरं युद्ध्यन्ति तां जित्वा स्वां सतीं प्रपद्यन्ते - ३.४.४.[२१]

स यत्प्रचरति तद्युध्यत्यथ यत्संतिष्ठते तज्जयत्यथ यज्जुहोति स्वामेवैतत्सतीं प्रपद्यते - ३.४.४.[२२]

स जुहोति । यया द्विरेकस्याह्नः प्रचरिष्यन्भवति या ते अग्नेऽयःशया तनूर्वर्षिष्ठा गह्वरेष्ठा उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहेत्येवंरूपा हि सासीदयस्मयी हि साऽऽसीत् - ३.४.४.[२३]

अथ जुहोति । यया द्विरेकस्याह्नः प्रचरिष्यन्भवति या ते अग्ने रजःशया तनूर्वर्षिष्ठा गह्वरेष्ठा उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहेत्येवंरूपा हि साऽऽसीद्रजता हि साऽऽसीत् - ३.४.४.[२४]



अथ जुहोति । यया द्विरेकस्याह्नः प्रचरिष्यन्भवति या ते अग्ने हरिशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहेत्येवंरूपा हि साऽऽसीद्धरिणी हि साऽऽसीद्यद्यु द्वादशोपसद उपेयाच्चतुरहमेकया प्रचरेच्चतुरहमेकया - ३.४.४.[२५]

अथातो व्रतोपसदामेव । पर उर्वीर्वा अन्या उपसदः परोऽह्वीरन्याः स यासामेकम्प्रथमाहं दोग्ध्यथ द्वावथ त्रींस्ताः परउर्वीरथ यासां त्रीन्प्रथमाहं दोग्ध्यथ द्वावथैकं ताः परोऽह्वीर्या वै परोऽह्वीस्ताः परउर्वीर्याः परउर्वीस्ताः परोऽह्वीः - ३.४.४.[२६]

तपसा वै लोकं जयन्ति । तदस्यैतत्परः पर एव वरीयस्तपो भवति परःपरः श्रेयांसं लोकं जयति वसीयानु हैवास्मिंल्लोके भवति य एवं विद्वान्परोऽह्वीरुपसद उपैति तस्मादु परोऽह्वीरेवोपसद उपेयाद्यद्यु द्वादशोपसद उपेयात्त्रींश्चतुरहं दोहयेद्द्वौ चतुरहमेकं चतुरहम् - ३.४.४.[२७]

##३.५.१.
तद्य एष पूर्वार्ध्यो वर्षिष्ठ स्थूणाराजो भवति । तस्मात्प्राङ्क्रामति त्रीन्विक्रमांस्तच्छङ्कुं निहन्ति सोऽन्तःपातः - ३.५.१.[१]

तस्मान्मध्यमाच्छङ्कोः । दक्षिणा पञ्चदश विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति सा दक्षिणा श्रोणिः - ३.५.१.[२]

तस्मान्मध्यमाच्छङ्कोः उदङ्पञ्चदश विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति सोत्तरा श्रोणिः - ३.५.१.[३]

तस्मान्मध्यमाच्छङ्कोः । प्राङ्षट्त्रिंशतं विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति स पूर्वार्धः - ३.५.१.[४]



तस्मान्मध्यमाच्छङ्कोः । दक्षिणा द्वादश विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति स दक्षिणोंऽसः - ३.५.१.[५]

तस्मान्मध्यमाच्छङ्कोः । उदङ्द्वादश विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति स उत्तरोंऽस एषा मात्रा वेदेः - ३.५.१.[६]

अथ यत्त्रिंशद्विक्रमा पश्चाद्भवति । त्रिंशदक्षरा वै विराड् विराजा वै देवा अस्मिंलोके प्रत्यतिष्ठंस्तथो एवैष एतद्विराजैवास्मिंलोके प्रतितिष्ठति - ३.५.१.[७]

अथो अपि त्रयस्त्रिंशत्स्युः । त्रयस्त्रिंशदक्षरा वै विराड्विराजैवास्मिंलोके प्रतितिष्ठति - ३.५.१.[८]

अथ यत्षड्विंशद्विक्रमा प्राची भवति । षड्विंशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्गं लोकं समाश्नुवत तथो एवैष एतद्बृहत्यैव स्वर्गं लोकं समश्नुते सोऽस्य दिव्याहवनीयो भवति - ३.५.१.[९]

अथ यच्चतुर्विंशतिविक्रमा पुरस्ताद्भवति । चतुर्विंशत्यक्षरा वै गायत्री पूर्वार्धो वै यज्ञस्य गायत्री पूर्वार्द्ध एष यज्ञस्य तस्माच्चतुर्विंशतिविक्रमा पुरस्ताद्भवत्येषा मात्रा वेदेः - ३.५.१.[१०]

अथ यत्पश्चाद्वरीयसी भवति । पश्चाद्वरीयसी पृथुश्रोणिरिति वै योषां प्रशंसन्ति यद्वेव पश्चाद्वरीयसी भवति पश्चादेवैतद्वरीयः प्रजननं करोति तस्मात्पश्चाद्वरीयसः प्रजननादिमाः प्रजाः प्रजायन्ते - ३.५.१.[११]

नासिका ह वा एषा यज्ञस्य यदुत्तरवेदिः । अथ यदेनामुत्तरां वेदेरुपकिरति तस्मादुत्तरवेदिर्नाम - ३.५.१.[१२]



द्वय्यो ह वा इदमग्रे प्रजा आसुः । आदित्याश्चैवाङ्गिरसश्च ततोऽङ्गिरसः पूर्वे यज्ञं समभरंस्ते यज्ञं सम्भृत्योचुरग्निमिमां नः श्वःसुत्यामादित्येभ्यः प्रब्रूह्यनेन नो यज्ञेन याजयतेति - ३.५.१.[१३]

ते हादित्या ऊचुः । उपजानीत यथास्मानेवाङ्गिरसो याजयान्न वयमङ्गिरस इति - ३.५.१.[१४]

ते होचुः । न वा अन्येन यज्ञादपक्रमणमस्त्यन्तरामेव सुत्यां ध्रियामहा इति ते यज्ञं संजह्रुस्ते यज्ञं सम्भृत्योचुः श्वःसुत्यां वै त्वमस्मभ्यमग्ने प्रावोचोऽथ वयमद्यसुत्यामेव तुभ्यं प्रब्रूमोऽङ्गिरोभ्यश्च तेषां नस्त्वं होताऽसीति - ३.५.१.[१५]

तेऽन्यमेव प्रतिप्रजिघ्युः । अङ्गिरसोऽच्छ ते हाप्यङ्गिरसोऽग्नयेऽन्वागत्य चुक्रुधुरिव कथं नु नो दूतश्चरन्न प्रत्याह्टथा इति - ३.५.१.[१६]

स होवाच । अनिन्द्या वै माऽवृषत सोऽनिन्द्यैर्वृतो नाशकमपक्रमितुमिति तस्मादु हानिन्द्यस्य वृतो नापक्रामेत्त एतेन सद्यःक्रियाङ्गिरस आदित्यानयाजयन्त्स सद्यःक्रीः - ३.५.१.[१७]

तेभ्यो वाचं दक्षिणामानयन् । तां न प्रत्यगृह्णन्हास्यामहे यदि प्रतिग्रहीष्याम इति तदु तद्यज्ञस्य कर्म न व्यमुच्यत यद्दाक्षिणमासीत् - ३.५.१.[१८]

अथैभ्यः सूर्यं दक्षिणामानयन् । तं प्रत्यगृह्णंस्तस्मादु ह स्माहुरङ्गिरसो वयं वा ऽआर्त्विजीनाः स्मो वयं दक्षिणीया अपि वा अस्माभिरेष प्रतिगृहीतो यऽएष तपतीति तस्मात्सद्यःक्रियोऽश्वः श्वेतो दक्षिणा - ३.५.१.[१९]



तस्य रुक्मः पुरस्ताद्भवति । तदेतस्य रूपं क्रियते य एष तपति यद्यश्वं श्वेतं न विन्देदपि गौरेव श्वेतः स्यात्तस्य रुक्मः पुरस्ताद्भवति तदेतस्य रूपं क्रियते य एष तपति - ३.५.१.[२०]

तेभ्यो ह वाक्चुक्रोध । केन मदेष श्रेयान्बन्धुना केना यदेतं प्रत्यग्रहीष्ट न मामिति सा हैभ्योऽपचक्राम सोभयानन्तरेण देवासुरान्त्संयत्तान्त्सिंही भूत्वाऽऽददाना चचार तामुपैव देवा अमन्त्रयन्तोपासुरा अग्निरेव देवानां दूत आस सहरक्षा इत्यसुररक्षसामसुराणाम् - ३.५.१.[२१]

सा देवानुपावर्त्स्यन्त्युवाच । यद्वा उपावर्तेय किं मे ततः स्यादिति पूर्वामेव त्वाग्नेराहुतिः प्राप्स्यतीत्यथ हैषा देवानुवाच यां मया कां चाशिषमाशासिष्यध्वे सा वः सर्वा समर्धिष्यत इति सैवं देवानुपाववर्त - ३.५.१.[२२]

स यद्धार्यमाणेऽग्नौ । उत्तरवेदिं व्याघारयति यदेवैनामदो देवा अब्रुवन्पूर्वां त्वाग्नेराहुतिः प्राप्स्यतीति तदेवैनामेतत्पूर्वामग्नेराहुतिः प्राप्नोति वाग्घ्येषा निदानेनाथ यदुत्तरवेदिमुपकिरति यज्ञस्यैव सर्वत्वाय वाग्घि यज्ञो वागु ह्येषा - ३.५.१.[२३]

तां वै युगशम्येन विमिमीते । युगेन यत्र हरन्ति शम्यया यतो हरन्ति युगशम्येन वै योग्यं युञ्जन्ति सा यदेवादः सिंही भूत्वा शान्तेवाचरत्तदेवैनामेतद्यज्ञे युनक्ति - ३.५.१.[२४]

तस्मान्निवृत्तदक्षिणां न प्रतिगृह्णीयात् । सिंही हैनं भूत्वा क्षिणोति नो हामा कुर्वीत सिंही हैवैनं भूत्वा क्षिणोति नो हान्यस्मै दद्याद्यज्ञं तदन्यत्रात्मनः कुर्वीत तस्माद्योऽस्यापि पाप इव समानबन्धुः स्यात्तस्मा एनां दद्यात्स यद्ददाति तदेनं सिंही भूत्वा न क्षिणोति यदु समानबन्धवे ददाति तदु नान्यत्रात्मनः कुरुत एषो निवृत्तदक्षिणायै प्रतिष्ठा - ३.५.१.[२५]

अथ शम्यां च स्फ्यं चादत्ते । तद्य एष पूर्वार्ध्यः उत्तरार्ध्यः शङ्कुर्भवति तस्मात्प्रत्यङ्क्रामति त्रीन्विक्रमांस्तच्चात्वालं परिलिखति सा चात्वालस्य मात्रा नात्र मात्राऽस्ति यत्रैव स्वयं मनसा मन्येताग्रेणोत्करं तच्चात्वालं परिलिखेत् - ३.५.१.[२६]



स वेद्यन्तात् । उदीचीं शम्यां निदधाति स परिलिखति तप्तायनी मेऽसीतीमामेवैतदाहास्यां हि तप्त एति - ३.५.१.[२७]

अथ पुरस्तात् । उदीचीं शम्यां निदधाति स परिलिखति वित्तायनी मेऽसीतीमामेवैतदाहास्यां हि विविदान एति - ३.५.१.[२८]

अथानुवेद्यन्तम् । प्राचीं शम्यां निदधाति स परिलिखत्यवतान्मा नाथितादितीमामेवैतदाह यत्र नाथै तन्मावतादिति- ३.५.१.[२९]

अथोत्तरतः । प्राचीं शम्यां निदधाति स परिलिखत्यवतान्मा व्यथितादितीमामेवैतदाह यत्र व्यथै तन्माऽवतादिति - ३.५.१.[३०]

अथ हरति । यत्र हरति तदग्नीदुपसीदति स वा अग्नीनामेव नामानि गृह्णन्हरति यान्वा अमून्देवा अग्रेऽग्नीन्होत्राय प्रावृणत ते प्राधन्वंस्त इमा एव पृथिवीरुपासर्पन्निमामहैव द्वे अस्याः परे तेनैवैतान्निदानेन हरति - ३.५.१.[३१]

स प्रहरति विदेदग्निर्नभो नामाग्ने अङ्गिर आयुना नाम्नेहीति स यत्प्राधन्वंस्तदायुर्दधाति तत्समीरयति योऽस्यां पृथिव्यामसीति योऽस्याम्पृथिव्यामसीति हृत्वा निदधाति यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वाऽऽदध इति यत्तेऽनाधृष्टं रक्षोभिर्नाम यज्ञियं तेन त्वाऽऽदध इत्येवैतदाहानु त्वा देववीतय इति चतुर्थं हरति देवेभ्यस्त्वा जुष्टां हरामीत्येवैतदाह तां वै चतुःस्रक्तेश्चात्वालाद्धरति चतस्रो वै दिशः सर्वाभ्य एवैनामेतद्दिग्भ्यो हरति - ३.५.१.[३२]

अथानुव्यूहति । सिंह्यसि सपत्नसाही देवेभ्यः कल्पस्वेति सा यदेवादः सिंही भूत्वाशान्तेवाचरत्तदेवैनामेतदाह सिंह्यसीति सपत्नसाहीति त्वया वयं सपत्नान्पापीयसः क्रियास्मेत्येवैतदाह देवेभ्यः कल्पस्वेति योषा वा उत्तरवेदिस्तामेवैतद्देवेभ्यः कल्पयति - ३.५.१.[३३]

तां वै युगमात्रीं वा सर्वतः करोति । यजमानस्य वा दशदश पदानि दशाक्षरा वै विराड्वाग्वै विराड्वाग्यज्ञो मध्ये नाभिकामिव करोति समानत्रासीनो व्याघारयाणीति - ३.५.१.[३४]

तामद्भिरभ्युक्षति । सा यदेवादः सिंही भूत्वा शान्तेवाचरच्छान्तिरापस्तामद्भिः शमयति योषा वा उत्तरवेदिस्तामेवैतद्देवेभ्यो हिन्वति तस्मादद्भिरभ्युक्षति - ३.५.१.[३५]

सोऽभ्युक्षति । सिंह्यसि सपत्नसाही देवेभ्यः शुन्धस्वेत्यथ सिकताभिरनुविकिरत्यलंकारो न्वेव सिकता भ्राजन्त इव हि सिकता अग्नेर्वा एतद्वैश्वानरस्य भस्म यत्सिकता अग्निं वा अस्यामाधास्यन्भवति तथो हैनामग्निर्न हिनस्ति तस्मात्सिकताभिरनुविकिरति सोऽनुविकिरति सिंह्यसि सपत्नसाही देवेभ्यः शुम्भस्वेत्यथैनां छादयति सा छन्नैतां रात्रिं वसति - ३.५.१.[३६]

##३.५.२ उत्तरवेद्यां अग्निप्रणयनम्
इध्ममभ्यादधति । उपयमनीरुपकल्पयन्त्याज्यमधिश्रयति स्रुवं च स्रुचं सम्मार्ष्ट्यथोत्पूयाज्यं पञ्चगृहीतं गृह्णीते यदा प्रदीप्त इध्मो भवति - ३.५.२.[१]

अथोद्यच्छन्तीध्मम् । उपयच्छन्त्युपयमनीरथाहाग्नये प्रह्रियमाणायानुब्रूह्येकस्फ्ययानूदेहीत्यनूदैति प्रतिप्रस्थातैकस्फ्ययै तस्मान्मध्यमाच्छङ्कोर्य एष वेदेर्जघनार्धे भवति तद्यदेवात्रान्तःपातेन गार्हपत्यस्य वेदेर्व्यवच्छिन्नं भवति तदेवैतदनुसंतनोति - ३.५.२.[२]

तद्धैके । ओत्तरवेदेरनूदायन्ति तदु तथा न कुर्यादैवैतस्मान्मध्यमाच्छङ्कोरनूदेयात्त आयन्त्यागच्छन्त्युत्तरवेदिम् - ३.५.२.[३]



प्रोक्षणीरध्वर्युरादत्ते । स पुरस्तादेवाग्रे प्रोक्षत्युदङ्तिष्ठन्निन्द्रघोषस्त्वा वसुभिः पुरस्तात्पात्विवितीन्द्रघोषस्त्वा वसुभिः पुरस्ताद्गोपायत्वित्येवैतदाह - ३.५.२.[४]

अथ पश्चात्प्रोक्षति । प्रचेतास्त्वा रुद्रैः पश्चात्पात्विति प्रचेतास्त्वा रुद्रैः पश्चाद्गोपायत्वित्येवैतदाह - ३.५.२.[५]

अथ दक्षिणतः प्रोक्षति । मनोजवास्त्वा पितृभिर्दक्षिणतः पात्विति मनोजवास्त्वा पितृभिर्दक्षिणतो गोपायत्वित्येवैतदाह - ३.५.२.[६]

अथोत्तरतः प्रोक्षति । विश्वकर्मा त्वादित्यैरुत्तरतः पात्विति विश्वकर्मा त्वादित्यैरुत्तरतो गोपायत्वित्येवैतदाह - ३.५.२.[७]

अथ याः प्रोक्षण्यः परिशिष्यन्ते । तद्ये एते पूर्वे स्रक्ती तयोर्या दक्षिणा तान्यन्तेन बहिर्वेदि निनयतीदमहं तप्तं वार्बहिर्धा यज्ञान्निःसृजामीति सा यदेवादः सिंही भूत्वा

शान्तेवाचरत्तामेवास्या एतच्छुचं बहिर्धा यज्ञान्निःसृजति यदि नाभिचरेद्यद्यु अभिचरेदादिशेदिदमहं तप्तं वारमुमभि निःसृजामीति तमेतया शुचा विध्यति स शोचन्नेवामुं लोकमेति - ३.५.२.[८]

स यद्धार्यमाणेऽग्नौ । उत्तरवेदिं व्याघारयति यदेवैनामदो देवा अब्रुवन्पूर्वां त्वाग्नेराहुतिः प्राप्स्यतीति तदेवैनामेतत्पूर्वामग्नेराहुतिः प्राप्नोति यद्वेषा देवानब्रवीद्यां मया कां चाशिषमाशासिष्यध्वे सा वः सर्वा समर्धिष्यत इति तामेनयात्रर्त्विजो यजमानायाशिषमाशासते सास्मै सर्वा समृध्यते - ३.५.२.[९]

तद्वा एतदेकं कुर्वन्द्वयं करोति । यदुत्तरवेदिं व्याघारयत्यथ यैषाम्मध्ये नाभिकेव भवति तस्यै ये पूर्वे स्रक्ती तयोर्या दक्षिणा - ३.५.२.[१०]

तस्यामाघारयति । सिंह्यसि स्वाहेत्यथापरयोरुत्तरस्यां सिंह्यस्यादित्यवनिः स्वाहेत्यथापरयोर्दक्षिणस्यां सिंह्यसि ब्रह्मवनिः क्षत्रवनिः स्वाहेति बह्वी वै यजुःष्वाशीस्तद्ब्रह्म च क्षत्रं चाशास्त उभे वीर्ये - ३.५.२.[११]

अथ पूर्वयोरुत्तरस्याम् । सिंह्यसि सुप्रजावनी रायस्पोषवनिः स्वाहेति तत्प्रजामाशास्ते यदाह सुप्रजावनिरिति रायस्पोषवनिरिति भूमा वै रायस्पोषस्तद्भूमानमाशास्ते - ३.५.२.[१२]

अथ मध्य आघारयति । सिंह्यस्यावह देवान्यजमानाय स्वाहेति तद्देवान्यजमानायावाहयत्यथ स्रुचमुद्यच्छति भूतेभ्यस्त्वेति प्रजा वै भूतानि प्रजाभ्यस्त्वेत्येवैतदाह - ३.५.२.[१३]

अथ परिधीन्परिदधाति । ध्रुवोऽसि पृथिवीं दृंहेति मध्यमं ध्रुवक्षिदस्यन्तरिक्षं दृंहेति दक्षिणमच्युतक्षिदसि दिवं दृंहेत्युत्तरमग्नेः पुरीषमसीति सम्भारानुपनिवपति तद्यत्सम्भारा भवन्त्यग्नेरेव सर्वत्वाय - ३.५.२.[१४]

शरीरं हैवास्य पीतुदारु । तद्यत्पैतुदारवाः परिधयो भवन्ति शरीरेणैवैनमेतत्समर्धयति कृत्स्नं करोति - ३.५.२.[१५]

मांसं हैवास्य गुल्गुलु । तद्यद्गुल्गुलु भवति मांसेनैवैनमेतत्समर्धयति कृत्स्नं करोति - ३.५.२.[१६]

गन्धो हैवास्य सुगन्धितेजनम् । तद्यत्सुगन्धितेजनं भवति गन्धेनैवैनमेतत्समर्धयति कृत्स्नं करोति- ३.५.२.[१७]

अथ यद्वृष्णे स्तुका भवति । वृष्णेर्ह वै विषाणे अन्तरेणाग्निरेकां रात्रिमुवास तद्यदेवात्राग्नेर्न्यक्तं तदिहाप्यसदिति तस्माद्वृष्णे स्तुका भवति तस्माद्या शीर्ष्णो
नेदिष्ठं स्यात्तामाच्छिद्याहरेद्यद्यु तां न विन्देदपि यामेव कां चाहरेत्तद्यत्परिधयो भवन्ति गुप्त्या एव दूर इव ह्येनमुत्तरे परिधय आगच्छन्ति - ३.५.२.[१८]



##३.५.३. हविर्धानकर्म
पुरुषो वै यज्ञः । पुरुषस्तेन यज्ञो यदेनं पुरुषस्तनुत एष वै तायमानो यावानेव पुरुषस्तावान्विधीयते तस्मात्पुरुषो यज्ञः - ३.५.३.[१]

शिर एवास्य हविर्धानम् । वैष्णवं देवतयाथ यदस्मिन्त्सोमो भवति हविर्वै देवानां सोमस्तस्माद्धविर्धानं नाम - ३.५.३.[२]

मुखमेवास्याहवनीयः । स यदाहवनीये जुहोति यथा मुखऽआसिञ्चेदेवं तत् - ३.५.३.[३]

स्तुप एवास्य यूपः । बाहू एवास्याग्नीध्रीयश्च मार्जालीयश्च - ३.५.३.[४]

उदरमेवास्य सदः । तस्मात्सदसि भक्षयन्ति यद्धीदं किं चाश्नन्त्युदर एवेदं सर्वं प्रतितिष्ठत्यथ यदस्मिन्विश्वे देवा असीदंस्तस्मात्सदो नाम त उ एवास्मिन्नेते ब्राह्मणा विश्वगोत्राः सीदन्ति - ३.५.३.[५]

अथ यावेतौ जघनेनाग्नी । पादावेवास्यैतावेष वै तायमानो यावानेव पुरुषस्तावान्विधीयते तस्मात्पुरुषो यज्ञः - ३.५.३.[६]

उभयतोद्वारं हविर्धानं भवति । उभयतोद्वारं सदस्तस्मादयं पुरुषऽआन्तं संतृण्णः प्रणिक्ते हविर्धाने उपतिष्ठते - ३.५.३.[७]

ते समववर्तयन्ति । दक्षिणेनैव दक्षिणमुत्तरेणोत्तरं यद्वर्षीयस्तद्दक्षिणं स्यात् - ३.५.३.[८]

तयोः समववृत्तयोः । छदिरधिनिदधति यदि च्छदिर्न विन्देयुश्छदिः सम्मिताम्भित्तिं प्रत्यानह्यन्ति रराट्यां परिश्रयन्त्युच्छ्रायीभ्यां छदिः पश्चादधिनिदधति च्छदिः सम्मितां वा भित्तिम् - ३.५.३.[९]

अथ पुनः प्रपद्य । चतुर्गृहीतमाज्यं गृहीत्वा सावित्रं प्रसवाय जुहोति सविता वै देवानां प्रसविता सवितृप्रसूताय यज्ञं तनवामहा इति तस्मात्सावित्रं जुहोति - ३.५.३.[१०]

स जुहोति । युञ्जते मन उत युञ्जते धिय इति मनसा च वै वाचा च यज्ञं तन्वते स यदाह युञ्जते मन इति तन्मनो युनक्त्युत युञ्जते धिय इति तद्वाचं युनक्ति धियाधिया ह्येतया मनुष्या जुज्यूषन्त्यनूक्तेनेव प्रकामोद्येनेव गाथाभिरिव ताभ्यां युक्ताभ्यां यज्ञं तन्वते - ३.५.३.[११]

विप्रा विप्रस्य बृहतो विपश्चित इति । ये वै ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते विप्रास्तानेवैतदभ्याह बृहतो विपश्चित इति यज्ञो वै बृहन्विपश्चिद्यज्ञमेवैतदभ्याह वि होत्रा

दधे वयुनाविदेक इदिति वि हि होत्रा दधते यज्ञं तन्वाना मही देवस्य सवितुः परिष्टुतिः स्वाहेति तत्सावित्रं प्रसवाय जुहोति - ३.५.३.[१२]

अथापरं चतुर्गृहीतमाज्यं गृहीत्वा । उपनिष्क्रामति दक्षिणया द्वारा पत्नीं निष्क्रामयन्ति स दक्षिणस्य हविर्धानस्य दक्षिणायां वर्तन्यां हिरण्यं निधाय जुहोतीदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्य पांसुरे स्वाहेति संस्रवं पत्न्यै पाणावानयति साक्षस्य संतापमुपानक्ति देवश्रुतौदेवेष्वाघोषतमिति प्रयच्छति प्रतिप्रस्थात्रे स्रुचं चाज्यविलापनीं च पर्याणयन्ति पत्नीमुभौ जघनेनाग्नी - ३.५.३.[१३]

चतुर्गृहीतमाज्यं गृहीत्वा । प्रतिप्रस्थातोत्तरस्य हविर्धानस्य दक्षिणायां वर्तन्यां हिरण्यं निधाय जुहोतीरावती धेनुमती हि भूतं सूयवसिनी मनवे दशस्या व्यस्कभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः स्वाहेति संस्रवं पत्न्यै पाणावानयति साक्षस्य संतापमुपानक्ति देवश्रुतौ देवेष्वाघोषतमिति तद्यदेवं जुहोति - ३.५.३.[१४]



देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसङ्गाद्बिभयांचक्रुर्वज्रो वा आज्यं त एतेन वज्रेणाज्येन दक्षिणतो नाष्ट्रा रक्षांस्यवाघ्नंस्तथैषां नियानं नान्ववायंस्तथो एवैष एतेन वज्रेणाज्येन दक्षिणतो नाष्ट्रा रक्षांस्यवहन्ति तथास्य नियानं नान्वयन्ति तद्यद्वैष्णवीभ्यामृग्भ्यां जुहोति वैष्णवं हि हविर्धानम् - ३.५.३.[१५]

अथ यत्पत्न्यक्षस्य संतापमुपानक्ति । प्रजननमेवैतत्क्रियते यदा वै स्त्रियै च पुंसश्च संतप्यतेऽथ रेतः सिच्यते तत्ततः प्रजायते परागुपानक्ति पराग्घ्येव रेतः सिच्यतेऽथाह हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहीति - ३.५.३.[१६]

अथ वाचयति । प्राची प्रेतमध्वरं कल्पयन्ती इत्यध्वरो वै यज्ञः प्राची प्रेतं यज्ञं कल्पयन्ती इत्येवैतदाहोर्ध्वं यज्ञं नयतं मा जिह्वरतमित्यूर्ध्वमिमं यज्ञं देवलोकं नयतमित्येवैतदाह मा जिह्वरतमिति तदेतस्मा अह्वलामाशास्ते समुद्दृह्येव प्रवर्तयेयुर्यथा नोत्सर्जेतामसुर्या वा एषा वाग्याऽक्षे नेदिहासुर्या वाग्वदादिति यद्युत्सर्जेताम् - ३.५.३.[१७]

एतद्वाचयेत् । स्वं गोष्ठमावदतं देवी दुर्ये आयुर्मा निर्वादिष्टं प्रजां मा निर्वादिष्टमिति तस्यो हैषा प्रायश्चित्तिः - ३.५.३.[१८]

तदाहुः । उत्तरवेदेः प्रत्यङ्ङ्क्रामेत्त्रीन्विक्रमांस्तद्धविर्धाने स्थापयेत्सा हविर्धानयोर्मात्रेति नात्र मात्रास्ति यत्रैव स्वयं मनसा मन्येत नाहैव सत्राऽत्यन्तिके नो दूरे तत्स्थापयेत् - ३.५.३.[१९]

ते अभिमन्त्रयते । अत्र रमेथां वर्ष्मन्पृथिव्या इति वर्ष्म ह्येतत्पृथिव्यै भवति दिवि ह्यस्याहवनीयो भवति नभ्यस्थे करोति तद्धि क्षेमस्य रूपम् - ३.५.३.[२०]

अथोत्तरेण पर्येत्याध्वर्युः । दक्षिणं हविर्धानमुपस्तभ्नाति विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वेति मेथीमुपनिहन्तीतरतस्ततो यदु च मानुषे - ३.५.३.[२१]



अथ प्रतिप्रस्थाता । उत्तरं हविर्धानमुपस्तभ्नाति दिवो वा विष्ण उत वा पृथिव्या महो वा विष्ण उरोरन्तरिक्षात उभा हि हस्ता वसुना पृणस्वा प्रयच्छ दक्षिणादोत सव्याद्विष्णवे त्वेति मेथीमुपनिहन्तीतरतस्ततो यदु च मानुषे तद्यद्वैष्णवैर्यजुर्भिरुपचरन्ति वैष्णवं हि हविर्धानम् - ३.५.३.[२२]

अथ मध्यमं छदिरुपस्पृश्य वाचयति । प्र तद्विष्णु स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वेतीदं हैवास्यैतच्छीर्षकपालं यदिदमुपरिष्टादधीव ह्येतत्क्षियन्त्यन्यानि शीर्षकपालानि तस्मादाहाधिक्षियन्तीति - ३.५.३.[२३]

अथ रराट्यामुपस्पृश्य वाचयति । विष्णो रराटमसीति ललाटं हैवास्यैतदथोच्छ्राया उपस्पृश्य वाचयति विष्णोः श्नप्त्रे स्थ इति स्रक्के हैवास्यैते अथ यदिदं पश्चाच्छदिर्भवतीदं हैवास्यैतच्छीर्षकपालं यदिदं पश्चात् - ३.५.३.[२४]

अथ लस्पूजन्या स्पन्द्यया प्रसीव्यति । विष्णोः स्यूरसीत्यथ ग्रन्थिं करोति विष्णोर्ध्रुवोऽसीति नेद्व्यवपद्याता इति तं प्रकृते कर्मन्विष्यति तथो हाध्वर्युं वा यजमानं वा ग्राहो न विन्दति तन्निष्ठितमभिमृशति वैष्णवमसीति वैष्णवं हि हविर्धानम् - ३.५.३.[२५]

##३.५.४. उपरव विधिः
द्वयं वा अभ्युपरवाः खायन्ते । शिरो वै यज्ञस्य हविर्धानं तद्य इमे शीर्षंश्चत्वारः कूपा इमावह द्वाविमौ द्वौ तानेवैतत्करोति तस्मादुपरवान्खनति - ३.५.४.[१]



देवाश्च वा असुराश्च । उभये प्राजापत्याः पस्पृधिरे ततोऽसुरा एषु लोकेषु कृत्यां वलगान्निचख्नुरुतैवं चिद्देवानभिभवेमेति - ३.५.४.[२]

तद्वै देवा अस्पृण्वत । त एतैः कृत्या वलगानुदखनन्यदा वै कृत्यामुत्खनन्त्यथ साऽलसा मोघा भवति तथो एवैष एतद्यद्यस्मा अत्र कश्चिद्द्विषन्भ्रातृव्यः कृत्यां वलगान्निखनति तानेवैतदुत्किरति तस्मादुपरवान्खनति स दक्षिणस्य हविर्धानस्याधोऽधः प्रउगं खनति - ३.५.४.[३]

सोऽभ्रिमादत्ते । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यामाददे नार्यसीति समान एतस्य यजुषो बन्धुर्योषो वा एषायदभ्रिस्तस्मादाह नार्यसीति - ३.५.४.[४]

तान्प्रादेशमात्रं विना परिलिखति । इदमहं रक्षसां ग्रीवा अपि कृन्तामीति वज्रो वा अभ्रिर्वज्रेणैवैतन्नाष्ट्राणां रक्षसां ग्रीवा अपिकृन्तति - ३.५.४.[५]

तद्यावेतौ पूर्वौ । तयोर्दक्षिणमेवाग्रे परिलिखेदथापरयोरुत्तरमथापरयोर्दक्षिणमथ पूर्वयोरुत्तरम् - ३.५.४.[६]

अथो इतरथाहुः । अपरयोरेवाग्र उत्तरं परिलिखेदथपूर्वयोर्दक्षिणमथापरयोर्दक्षिणमथ पूर्वयोरुत्तरमित्यथो अपि समीच एव परिलिखेदेतं त्वेवोत्तमं परिलिखेद्य एष पूर्वयोरुत्तरो भवति - ३.५.४.[७]

तान्यथापरिलिखितमेव यथापूर्वं खनति । बृहन्नसि बृहद्रवा इत्युपस्तौत्येवैनानेतन्महयत्येव यदाह बृहन्नसि बृहद्रवा इति बृहतीमिन्द्राय वाचं वदेतीन्द्रो वै यज्ञस्य देवता वैष्णवं हविर्धानं तत्सेन्द्रं करोति तस्मादाह बृहतीमिन्द्राय वाचं वदेति - ३.५.४.[८]

रक्षोहणं वलगहनमिति । रक्षसां ह्येते वलगानां वधाय खायन्ते वैष्णवीमिति वैष्णवी हि हविर्धाने वाक् - ३.५.४.[९]



तान्यथाखातमेवोत्किरति । इदमहं तं वलगमुत्किरामि यं मे निष्ठ्यो यममात्यो निचखानेति निष्ठ्यो वा वा अमात्यो वा कृत्यां वलगन्निखनति तानेवैतदुत्किरति - ३.५.४.[१०]

इदमहं तं वलगमुत्किरामि । यं मे समानो यमसमानो निचखानेति समानो वा वा असमानो वा कृत्यां वलगान्निखनति तानेवैतदुत्किरति- ३.५.४.[११]

इदमहं तं वलगमुत्किरामि । यं मे सबन्धुर्यमसबन्धुर्निचखानेति सबन्धुर्वा वा असबन्धुर्वा कृत्यां वलगान्निखनति तानेवैतदुत्किरति - ३.५.४.[१२]

इदमहं तं वलगमुत्किरामि । यं मे सजातो यमसजातो निचखानेति सजातो वा वा असजातो वा कृत्यां वलगान्निखनति तानेवैतदुत्किरत्युत्कृत्यां किरामीत्यन्तत उद्वपति तत्कृत्यामुत्किरति - ३.५.४.[१३]

तान्बाहुमात्रान् खनेत् । अन्तो वा एषोऽन्तेनैवैतत्कृत्यां मोहयति तानक्ष्णया संतृन्दन्ति यद्यक्ष्णया न शक्नुयादपि समीचस्तस्मादिमे प्राणाः परः संतृण्णाः - ३.५.४.[१४]

तान्यथाखातमेवावमर्शयति । स्वराडसि सपत्नहा सत्रराडस्यभिमातिहा जनराडसि रक्षोहा सर्वराडस्यमित्रहेत्याशीरेवैषैतस्य कर्मण आशिषमेवैतदाशास्ते - ३.५.४.[१५]

अथाध्वर्युश्च यजमानश्च सम्मृशेते । पूर्वयोर्दक्षिणेऽध्वर्युर्भवत्यपरयोरुत्तरे यजमानः सोऽध्वर्युः पृच्छति यजमान किमत्रेति भद्रमित्याह तन्नौ सहेत्युपांश्वध्वर्युः- ३.५.४.[१६]

अथापरयोर्दक्षिणेऽध्वर्युर्भवति । पूर्वयोरुत्तरे यजमानः पृच्छत्यध्वर्यो किमत्रेति भद्रमित्याह तन्म इति यजमानस्तद्यदेवं सम्मृशेते प्राणानेवैतत्सयुजः कुरुतस्तस्मादिमे प्राणाः परः संविद्रेऽथ यत्पृष्टो भद्रमिति प्रत्याह कल्याणमेवैतन्मानुष्यै वाचो वदति तस्मात्पृष्टो भद्रमिति प्रत्याहाथ प्रोक्षत्येको वै प्रोक्षणस्य बन्धुर्मेध्यानेवैतत्करोति - ३.५.४.[१७]



स प्रोक्षति । रक्षोहणो वो वलगहन इति रक्षोहणो ह्येते वलगहनो ह्येते प्रोक्षामि वैष्णवानिति वैष्णवा ह्येते - ३.५.४.[१८]

अथ याः प्रोक्षण्यः परिशिष्यते । ता अवटेष्ववनयति तद्या इमाः प्राणेष्वापस्ता एवैतद्दधाति तस्मादेषु प्राणेष्विमा आपः - ३.५.४.[१९]

सोऽवनयति । रक्षोहणो वो वलगहनोऽवनयामि वैष्णवानित्यथ बर्हींषि प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति तद्यानीमानि प्राणेषु लोमानि तान्येवैतद्दधाति तस्मादेषु प्राणेष्विमानि लोमानि - ३.५.४.[२०]

सोऽवस्तृणाति । रक्षोहणो वो वलगहनोऽवस्तृणामि वैष्णवानित्यथ बर्हींषि तनूनीवोपरिष्टात्प्रच्छादयति केशा हैवास्यैते - ३.५.४.[२१]

अथाधिषवणे फलके उपदधाति । रक्षोहणौ वां वलगहना उपदधामि वैष्णवी इति हनू हैवास्यैते अथ पर्यूहति रक्षोहणौ वां वलगहनौ पर्यूहामि वैष्णवी इति दृंहत्येवैने एतदशिथिले करोति - ३.५.४.[२२]

अथाधिषवणं परिकृत्तं भवति । सर्वरोहितं जिह्वा हैवास्यैषा तद्यत्सर्वरोहितं भवति लोहिनीव हीयं जिह्वा तन्निदधाति वैष्णवमसीति वैष्णवं ह्येतत्- ३.५.४.[२३]

अथ ग्राव्ण उपावहरति । दन्ता हैवास्य ग्रावाणस्तद्यद्ग्रावभिरभिषुण्वन्ति यथा दद्भिः प्सायादेवं तत्तान्निदधाति वैष्णवा स्थेति वैष्णवा ह्येत एतदु यज्ञस्य शिरः संस्कृतम् - ३.५.४.[२४]



##

३.६.१.

उदरमेवास्य सदः । तस्मात्सदसि भक्षयन्ति यद्धीदं किं चाश्नन्त्युदर एवेदं सर्वं प्रतितिष्ठत्यथ यदस्मिन्विश्वे देवा असीदंस्तस्मात्सदो नाम त उ एवास्मिन्नेते ब्राह्मणा विश्वगोत्राः सीदन्त्यैन्द्रं देवतया - ३.६.१.१

तन्मध्य औदुम्बरीं मिनोति । अन्नं वा ऊर्गुदुम्बर उदरमेवास्य सदस्तन्मध्यतोऽन्नाद्यं दधाति तस्मान्मध्य औदुम्बरीं मिनोति - ३.६.१.२

अथ य एष मध्यमः शङ्कुर्भवति । वेदेर्जघनार्धे तस्मात्प्राङ्क्रामति षड्विक्रमान्दक्षिणा सप्तममपक्रामति सम्पदः कामाय तदवटं परिलिखति - ३.६.१.३

सोऽभ्रिमादत्ते । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्यसीति समान एतस्य यजुषो बन्धुर्योषो वा एषा यदभ्रिस्तस्मादाह नार्यसीति - ३.६.१.४

अथावटं परिलिखति । इदमहं रक्षसां ग्रीवा अपि कृन्तामीति वज्रो वा अभ्रिर्वज्रेणैवैतन्नाष्ट्राणां रक्षसां ग्रीवा अपि कृन्तति - ३.६.१.५

अथ खनति । प्राञ्चमुत्करमुत्किरति यजमानेन सम्मायौदुम्बरीम्परिवासयति तामग्रेण प्राचीं निदधात्येतावन्मात्राणि बर्हींष्युपरिष्टादधिनिदधाति - ३.६.१.६

अथ यवमत्यः प्रोक्षण्यो भवन्ति । आपो ह वा ओषधीनां रसस्तस्मादोषधयः केवल्यः खादिता न धिन्वन्त्योषधय उ हापां रसस्तस्मादापः पीताः केवल्यो न धिन्वन्ति यदैवोभय्यः संसृष्टा भवन्त्यथैव धिन्वन्ति तर्हि हि सरसा भवन्ति सरसाभिः प्रोक्षाणीति - ३.६.१.७



देवाश्च वा असुराश्च । उभये प्राजापत्याः पस्पृधिरे ततो देवेभ्यः सर्वा एवौषधय ईयुर्यवा हैवैभ्यो नेयुः - ३.६.१.८

तद्वै देवा अस्पृण्वत । त एतैः सर्वाः सपत्नानामोषधीरयुवत यदयुवत तस्माद्यवा नाम - ३.६.१.९

ते होचुः । हन्त यः सर्वासामोषधीनां रसस्तं यवेषु दधामेति स यः सर्वासामोषधीनां रस आसीत्तं यवेष्वदधुस्तस्माद्यत्रान्या ओषधयो म्लायन्ति तदेते मोदमाना वर्धन्त एवं ह्येषु रसमदधुस्तथो एवैष एतैः सर्वाः सपत्नानामोषधीर्युते तस्माद्यवमत्यः प्रोक्षण्यो भवन्ति - ३.६.१.१०

स यवानावपति । यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति नात्र तिरोहितमिवास्त्यथ प्रोक्षत्येको वै प्रोक्षणस्य बन्धुर्मेध्यामेवैतत्करोति - ३.६.१.११

स प्रोक्षति । दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेतीमानेवैतल्लोकानूर्जा रसेन भाजयत्येषु लोकेषूर्जं रसं दधाति - ३.६.१.१२

अथ याः प्रोक्षण्यः परिशिष्यन्ते । ता अवटेऽवनयति शुन्धन्तां लोकाः पितृषदना इति पितृदेवत्यो वै कूपः खातस्तमेवैतन्मेध्यं करोति - ३.६.१.१३

अथ बर्हींषि । प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति पितृषदनमसीति पितृदेवत्य वा अस्या एतद्भवति यन्निखातं सा यथा निखातौषधिषु मिता स्यादेवमेतास्वोषधिषु मिता भवति - ३.६.१.१४

तामुच्छ्रयति । उद्दिवं स्तभानान्तरिक्षं पृण दृंहस्व पृथिव्यामितीमानेवैतल्लोकानूर्जा रसेन भाजयत्येषु लोकेषूर्जं रसं दधाति - ३.६.१.१५



अथ मिनोति । द्युतानस्त्वा मारुतो मिनोत्विति यो वा अयं पवत एष द्युतानो मारुतस्तदेनामेतेन मिनोति मित्रावरुणौ ध्रुवेण धर्मणेति प्राणोदानौ वै मित्रावरुणौ तदेनां प्राणोदानाभ्यां मिनोति - ३.६.१.१६

अथ पर्यूहति । ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामीति बह्वी वै यजुःष्वाशीस्तद्ब्रह्म च क्षत्रं चाशास्त उभे वीर्ये रायस्पोषवनीति भूमा वै रायस्पोषस्तद्भूमानमाशास्ते - ३.६.१.१७

अथ पर्युषति । ब्रह्म दृंह क्षत्रं दृंहायुर्दृंह प्रजां दृंहेत्याशीरेवैषैतस्य कर्मण आशिषमेवैतदाशास्ते समम्भूमि पर्यर्षणं करोति गर्तस्य वा उपरि भूम्यथैवं देवत्रा तथा हागर्तमिद्भवति - ३.६.१.१८

अथाप उपनिनयति । यत्र वा अस्यै खनन्तः क्रूरीकुर्वन्त्यपघ्नन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः संदधाति तस्मादप उपनिनयति - ३.६.१.१९

अथैवमभिपद्य वाचयति । ध्रुवासि ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया भूयादिति पशुभिरिति वैवं यं कामं कामयते सोऽस्मै कामः समृध्यते - ३.६.१.२०

अथ स्रुवेणोपहत्याज्यम् । विष्टपमभि जुहोति घृतेन द्यावापृथिवी पूर्येथामिति तदिमे द्यावापृथिवी ऊर्जा रसेन भाजयत्यनयोरूर्जं रसं दधाति ते रसवत्या उपजीवनीये इमाः प्रजा उपजीवन्ति - ३.६.१.२१

अथ च्छदिरधिनिदधाति । इन्द्रस्य च्छदिरसीत्यैन्द्रं हि सदो विश्वजनस्य छायेति विश्वगोत्रा ह्यस्मिन्ब्राह्मणा आसते तदुभयतश्छदिषी उपदधात्युत्तरतस्त्रीणि परस्त्रीणि तानि नव भवन्ति त्रिवृद्वै यज्ञो नव वै त्रिवृत्तस्मान्नव भवन्ति - ३.६.१.२२



तदुदीचीनवंशं सदो भवति । प्राचीनवंशं हविर्धानमेतद्वै देवानां निष्केवल्यं यद्धविर्धानं तस्मात्तत्र नाश्नन्ति न भक्षयन्ति निष्केवल्यं ह्येतद्देवानां स यो ह तत्राश्नीयाद्वा भक्षयेद्वा मूर्धा हास्य विपतेदथैते मिश्रे यदाग्नीध्रं च सदश्च तस्मात्तयोरश्नन्ति तस्माद्भक्षयन्ति मिश्रे ह्येते उदीची वै मनुष्याणां दिक्तस्मादुदीचीनवंशं सदो भवति - ३.६.१.२३

परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः । वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टय इतीन्द्रो वै गिर्वा विशो गिरो विशैवैतत्क्षत्रं परिबृंहति तदिदं क्षत्रमुभयतो विशा परिवृढम् - ३.६.१.२४

अथ लस्पूजन्या स्पन्द्यया प्रसीव्यति । इन्द्रस्य स्यूरसीत्यथ ग्रन्थिं करोतीन्द्रस्यध्रुवोऽसीति नेद्व्यवपद्याता इति प्रकृते कर्मन्विष्यति तथो हाध्वर्युं वा यजमानं वा ग्राहो न विन्दति तन्निष्ठितमभिमृशत्यैन्द्रमसीत्यैन्द्रं हि सदः - ३.६.१.२५

अथ हविर्धानयोः । जघनार्धं समन्वीक्ष्योत्तरेणाग्नीध्रं मिनोति तस्यार्धमन्तर्वेदि स्यादर्धं बहिर्वेद्यथो अपि भूयोऽर्धादन्तर्वेदि स्यात्कनीयो बहिर्वेद्यथो अपि सर्वमेवान्तर्वेदि स्यात्तन्निष्ठितमभिमृशति वैश्वदेवमसीति द्वयेनैतद्वैश्वदेवं यदस्मिन्पूर्वे द्युर्विश्वे देवा वसतीवरीषूपवसन्ति तेन वैश्वदेवम् - ३.६.१.२६

देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसङ्गाद्बिभयांचक्रुस्तान्दक्षिणतोऽसुररक्षसान्यासेजुस्तान्त्सदसो जिग्युस्तेषामेतान्धिष्ण्यानुद्वापयांचक्रुर्य एतेऽन्तःसदसम् - ३.६.१.२७

सर्वे ह स्म वा एते पुरा ज्वलन्ति । यथायमाहवनीयो यथा गार्हपत्यो यथाग्नीध्रीयस्तद्यत एनानुदवापयंस्तत एवैतन्न ज्वलन्ति तानाग्नीध्रमभिसंरुरुधुस्तानप्यर्धमाग्नीध्रस्य जिग्युस्ततो विश्वे देवा अमृतत्वमपाजयंस्तस्माद्वैश्वदेवम् - ३.६.१.२८



तान्देवाः प्रतिसमैन्धत । यथा प्रत्यवस्येतस्मादेनान्त्सवने सवन एव प्रतिसमिन्धते तस्माद्यः समृद्धः स आग्नीध्रं कुर्याद्यो वै ज्ञातोऽनूचानः स समृद्धस्तस्मादग्नीधे प्रथमाय दक्षिणां नयन्त्यतो हि विश्वे देवा अमृतत्वमपाजयंस्तस्माद्यं दीक्षितानामबल्यं विन्देदाग्नीध्रमेनं नयतेति ब्रूयात्तदनार्तं तन्नारिष्यतीति तद्यदतो विश्वे देवा अमृतत्वमपाजयंस्तस्माद्वैश्वदेवम् - ३.६.१.२९

##३.६.२.
विजामानो हैवास्य धिष्ण्याः । इमे समङ्का ये वै समङ्कास्ते विजामान एतऽउ हैवास्यैत आत्मनः - ३.६.२.[१]

दिवि वै सोम आसीत् । अथेह देवास्ते देवा अकामयन्ता नः सोमो गच्छेत्तेनागतेन यजेमहीति त एते माये असृजन्त सुपर्णीं च कद्रूं च वागेव सुपर्णीयं कद्रूस्ताभ्यां समदं चक्रुः - ३.६.२.[२]

ते हर्तीयमाने ऊचतुः । यतरा नौ दवीयः परापश्यादात्मानं नौ सा जयादिति तथेति सा ह कद्रूरुवाच परेक्षस्वेति - ३.६.२.[३]

सा ह सुपर्ण्युवाच । अस्य सलिलस्य पारेऽश्वः श्वेत स्थाणौ सेवते तमहं पश्यामीति तमेव त्वं पश्यसीति तं हीत्यथ ह कद्रूरुवाच तस्य वालो न्यषञ्जि तममुं वातो धूनोति तमहं पश्यामीति - ३.६.२.[४]

सा यत्सुपर्ण्युवाच । अस्य सलिलस्य पार इति वेदिर्वै सलिलं वेदिमेव सा तदुवाचाश्वः श्वेत स्थाणौ सेवत इत्यग्निर्वा अश्वः श्वेतो यूप स्थाणुरथ यत्कद्रूरुवाच तस्य वालो न्यषञ्जि तममुं वातो धूनोति तमहं पश्यामीति रशना हैव सा - ३.६.२.[५]

सा ह सुपर्ण्युवाच । एहीदं पताव वेदितुं यतरा नौ जयतीति सा ह कद्रूरुवाच त्वमेव पत त्वं वै न आख्यास्यसि यतरा नौ जयतीति - ३.६.२.[६]



सा ह सुपर्णी पपात । तद्ध तथैवास यथा कद्रूरुवाच तामागतामभ्युवाद त्वमजैषी३ रहा३ मिति त्वमिति होवाचैतद्व्याख्यानं सौपर्णीकाद्रवमिति - ३.६.२.[७]

सा ह कद्रूरुवाच । आत्मानं वै त्वाऽजैषं दिव्यसौ सोमस्तं देवेभ्य आहर तेन देवेभ्य ऽआत्मानं निष्क्रीणीष्वेति तथेति सा च्छन्दांसि ससृजे सा गायत्री दिवः सोममाहरत् - ३.६.२.[८]

हिरण्मय्योर्ह कुश्योरन्तरवहित आस । ते ह स्म क्षुरपवी निमेषं निमेषमभिसंधत्तो दीक्षातपसौ हैव ते आसतुस्तमेते गन्धर्वाः सोमरक्षा जुगुपुरिमे धिष्ण्या इमा होत्राः - ३.६.२.[९]

तयोरन्यतरां कुशीमाचिच्छेद । तां देवेभ्यः प्रददौ सा दीक्षा तया देवा अदीक्षन्त - ३.६.२.[१०]

अथ द्वितीयां कुशीमाचिच्छेद । तां देवेभ्यः प्रददौ तत्तपस्तया देवास्तपऽउपायन्नुपसदस्तपो ह्युपसदः - ३.६.२.[११]

खदिरेण ह सोममाचखाद । तस्मात्खदिरो यदेनेनाखिदत्तस्मात्खादिरो यूपो भवति खादिर स्फ्योऽच्छावाकस्य हैनं गोपनायां जहार सोऽच्छावाकोऽहीयत - ३.६.२.[१२]

तमिन्द्राग्नी अनुसमतनुताम् । प्रजानां प्रजात्यै तस्मादैन्द्राग्नोऽच्छावाकः - ३.६.२.[१३]

तस्माद्दीक्षिता राजानं गोपायन्ति । नेन्नोऽपहरानिति तस्मात्तत्र सुगुप्तं चिकीर्षेद्यस्य ह गोपनायामपहरन्ति हीयते ह - ३.६.२.[१४]

तस्माद्ब्रह्मचारिण आचार्यं गोपायन्ति । गृहान्पशून्नेन्नोऽपहरानिति तस्मात्तत्र सुगुप्तं चिकीर्षेद्यस्य ह गोपनायामपहरन्ति हीयते ह तेनैतेन सुपर्णी देवेभ्य आत्मानं निरक्रीणीत तस्मादाहुः पुण्यलोक ईजान इति - ३.६.२.[१५]



ऋणं ह वै पुरुषो जायमान एव । मृत्योरात्मना जायते स यद्यजते यथैव तत्सुपर्णी देवेभ्य आत्मानं निरक्रीणीतैवमेवैष एतन्मृत्योरात्मानं निष्क्रीणीते - ३.६.२.[१६]

तेन देवा अयजन्त । तमेते गन्धर्वाः सोमरक्षा अन्वाजग्मुस्तेऽन्वागत्याब्रुवन्ननु नो यज्ञ आभजत मा नो यज्ञादन्तर्गातास्त्वेव नोऽपि यज्ञे भाग इति - ३.६.२.[१७]

ते होचुः । किं नस्ततः स्यादिति यथैवास्यामुत्र गोप्तारोऽभूमैवमेवास्यापीह गोप्तारो भविष्याम इति - ३.६.२.[१८]

तथेति देवा अब्रुवन् । सोमक्रयणा व इति तानेभ्य एतत्सोमक्रयणाननुदिशत्यथैनानब्रुवंस्तृतीयसवने वो घृत्याहुतिः प्राप्स्यति न

सौम्याऽपहृतो हि युष्मत्सोमपीथस्तेन सोमाहुतिं नार्हथेति सैनानेषा तृतीयसवन एव घृत्याहुतिः प्राप्नोति न सौम्या यच्छालाकैर्धिष्ण्यान्व्याघारयति - ३.६.२.[१९]

अथ यदग्नौ होष्यन्ति । तद्वोऽविष्यतीति स यदग्नौ जुह्वति तदेनानवत्यथ यद्वः सोमं बिभ्रत उपर्युपरि चरिष्यन्ति तद्वोऽविष्यतीति स यदेनान्त्सोमं बिभ्रत उपर्युपरि चरन्ति तदेनानवति तस्मादध्वर्युः समया धिष्ण्यान्नातीयादध्वर्युर्हि सोमं बिभर्ति तमेते व्यात्तेन प्रत्यासते स एतेषां व्यात्तमापद्येत तमग्निर्वाभिदहेद्यो वाऽयं देवः पशूनामीष्टे स वा हैनमभिमन्येत तस्माद्यद्यध्वर्योः शालायामर्थः स्यादुत्तरेणैवाग्नीध्रीयं संचरेत् - ३.६.२.[२०]

ते वा एते । सोमस्यैव गुप्त्यै न्युप्यन्त आहवनीयः पुरस्तान्मार्जालीयो दक्षिणत आग्नीध्रीय उत्तरतोऽथ ये सदसि ते पश्चात् - ३.६.२.[२१]

तेषां वा अर्द्धानुपकिरन्ति । अर्द्धाननुदिशन्त्येत उ हैवैतद्दध्रिरेऽर्द्धान्न उपकिरन्त्वर्द्धाननुदिशन्तु तथा यस्माल्लोकादागताः स्मो दिवस्तथा तं लोकम्प्रतिप्रज्ञास्यामस्तथा न जिह्मा एष्याम इति - ३.६.२.[२२]



स यानुपकिरन्ति । तेनास्मिंलोके प्रत्यक्षं भवन्त्यथ याननुदिशन्ति तेनामुष्मिंलोके प्रत्यक्षं भवन्ति - ३.६.२.[२३]

ते वै द्विनामानो भवन्ति । एत उ हैवैतद्दध्रिरे न वा एभिर्नामभिररात्स्म येषां नः सोममपाहार्षुर्हन्त द्वितीयानि नामानि करवामहा इति ते द्वितीयानि नामान्यकुर्वत तैरराध्नुवन्यानपहृतसोमपीथान्त्सतोऽथ यज्ञ आभजंस्तस्माद्विनामानस्तस्माद्ब्राह्मणोऽनृध्यमाने द्वितीयं नाम कुर्वीत राध्नोति हैव य एवं विद्वान्द्वितीयं नाम कुरुते - ३.६.२.[२४]

स यदग्नौ जुहोति । तद्देवेषु जुहोति तस्माद्देवाः सन्त्यथ यत्सदसि भक्षयन्ति तन्मनुष्येषु जुहोति तस्मान्मनुष्याः सन्त्यथ यद्धविर्धानयोर्नाराशंसाः सीदन्ति तत्पितृषु जुहोति तस्मात्पितरः सन्ति - ३.६.२.[२५]

या वै प्रजा यज्ञेऽनन्वाभक्ताः । पराभूता वै ता एवमेवैतद्या इमाः प्रजा अपराभूतास्ता यज्ञ आभजति मनुष्याननु पशवो देवाननु वयांस्योषधयो वनस्पतयो यदिदं किं चैवमु तत्सर्वं यज्ञ आभक्तं ते ह स्मैत उभये देवमनुष्याः पितरः सम्पिबन्ते सैषा सम्पा ते ह स्म दृश्यमाना एव पुरा सम्पिबन्त उतैतर्ह्यदृश्यमानाः - ३.६.२.[२६]

##३.६.३ वैसर्जनहोमः
सर्वं वा एषोऽभि दीक्षते । यो दीक्षते यज्ञं ह्यभि दीक्षते यज्ञं ह्येवेदं सर्वमनु तं यज्ञं सम्भृत्य यमिममभि दीक्षते सर्वमिदं विसृजते - ३.६.३.[१]



यद्वैसर्जनानि जुहोति । स यदिदं सर्वं विसृजते तस्माद्वैसर्जनानि नाम तस्माद्योऽपिव्रतः स्यात्सोऽन्वारभेत यद्यु अन्यत्र चरेन्नाद्रियेत यद्वै जुहोति तदेवेदं सर्वं विसृजते - ३.६.३.[२]

यद्वेव वैसर्जनानि जुहोति । यज्ञो वै विष्णुः स देवेभ्य इमां विक्रान्तिं विचक्रमे यैषामियं विक्रान्तिरिदमेव प्रथमेन पदेन पस्पाराथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेनैताम्वेवैष एतस्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते यज्जुहोति तस्माद्वैसर्जनानि जुहोति - ३.६.३.[३]

सोऽपराह्णे वेदिं स्तीर्त्वा । अर्धव्रतं प्रदाय सम्प्रपद्यन्त इध्ममभ्यादधत्युपयमनीरुपकल्पयन्त्याज्यमधिश्रयति स्रुचः सम्माष्र्ट्युपस्थे राजानं यजमानः कुरुतेऽथ सोमक्रयण्यै पदं जघनेन गार्हपत्यं परिकिरति पदा वै प्रतितिष्ठति प्रतिष्ठित्या एव - ३.६.३.[४]

तद्धैके । चतुर्द्धा कुर्वन्ति यत्राहवनीयमुद्धरन्ति तासूपयमनीषु चतुर्भागमक्षं चतुर्भागेणोपाञ्जन्त्येतासूपयमनीषु चतुर्भागं जघनेन गार्हपत्यं चतुर्भागं परिकिरति - ३.६.३.[५]

तदु तथा न कुर्यात् । सार्द्धमेव परिकिरेज्जघनेन गार्हपत्यमथोत्पूयाज्यं चतुर्गृहीते जुह्वां चोपभृति च गृह्णाति पञ्चगृहीतं पृषदाज्यं ज्योतिरसि विश्वरूपं विश्वेषां देवानां वैश्वदेवं हि पृषदाज्यं धारयन्ति स्रुचो यदा प्रदीप्त इध्मो भवति - ३.६.३.[६]

अथ जुहोति । त्वं सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथं स्वाहेति तदेतेनैवास्यां पृथिव्यां प्रतिष्ठायां प्रतितिष्ठत्येतेनेमं लोकं स्पृणुते - ३.६.३.[७]

अथाप्तवे द्वितीयामाहुतिं जुहोति । जुषाणोऽ अप्तुराज्यस्य वेतु स्वाहेत्येष उ हैवैतदुवाच रक्षोभ्यो वै बिभेमि यथा माऽन्तरा नाष्ट्रा रक्षांसि न हिनसन्नेवं मा कनीयांसमेव वधात्कृत्वाऽतिनयत स्तोकमेव स्तोको ह्यप्तुरिति तमेतत्कनीयांसमेव वधात्कृत्वाऽत्यनयन्त्स्तोकमेव स्तोको ह्यप्तू रक्षोभ्यो भीषा तस्मादप्तवे द्वितीयामाहुतिं जुहोति - ३.६.३.[८]

उद्यच्छन्तीध्मम् । उपयच्छन्त्युपयमनीरथाहाग्नये प्रह्रियमाणायानुब्रूहि सोमाय प्रणीयमानायेति वाग्नये प्रह्रियमाणायानुब्रूहीति त्वेव ब्रूयात् - ३.६.३.[९]

आददते ग्राव्णः । द्रोणकलशं वायव्यानीध्मं कार्ष्मर्यमयान्परिधीनाश्ववालम्प्रस्तरमैक्षव्यौ विधृती तद्बर्हिरुपसंनद्धं भवति वपाश्रपण्यौ रशने अरणी अधिमन्थनः शकलो वृषणौ तत्समादाय प्राञ्च आयन्ति स एष ऊर्ध्वो यज्ञ एति - ३.६.३.[१०]

तदायत्सु वाचयति । अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्

युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेमेत्यग्निमेवैतत्पुरस्तात्करोत्यग्निः पुरस्तान्नाष्ट्रा रक्षांस्यपघ्नन्नेत्यथाभयेनानाष्ट्रेण हरन्ति त आयन्त्यागच्छन्त्याग्नीध्रं तमाग्नीध्रे निदधाति - ३.६.३.[११]

स निहिते जुहोति । अयं नो अग्निर्वरिवस्कृणोत्वयं मृधः पुर एतु प्रभिन्दन्। अयं वाजाञ्जयतु वाजसातावयं शत्रूञ्जयतु जर्हृषाणः स्वाहेति तदेतेनैवैतस्मिन्नन्तरिक्षे प्रतिष्ठायां प्रतितिष्ठत्येतेनैतं लोकं स्पृणुते - ३.६.३.[१२]

तदेव निदधति ग्राव्णः । द्रोणकलशं वायव्यान्यथेतरमादायायन्ति तदुत्तरेणाहवनीयमुपसादयन्ति - ३.६.३.[१३]

प्रोक्षणीरध्वर्युरादत्ते । स इध्ममेवाग्रे प्रोक्षत्यथ वेदिमथास्मै बर्हिः प्रयच्छन्ति तत्पुरस्ताद्ग्रन्थ्यासादयति तत्प्रोक्ष्योपनिनीय विस्रंस्य ग्रन्थिमाश्ववालः प्रस्तर उपसंनद्धो भवति तं गृह्णाति गृहीत्वा प्रस्तरमेकवृद्बर्हिः स्तृणाति स्तीर्त्वा बर्हिः कार्ष्मर्यमयान्परिधीन्परिदधाति परिधाय परिधीन्त्समिधावभ्यादधात्यभ्याधाय समिधौ - ३.६.३.[१४]

अथ जुहोति । उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहेति तदेतेनैवैतस्यां दिवि प्रतिष्ठायाम्प्रतितिष्ठत्येतेनैतं लोकं स्पृणुत यदेतया जुहोति - ३.६.३.[१५]

यद्वेव वैष्णव्यर्चा जुहोति । कनीयांसं वा एनमेतद्वधात्कृत्वात्यनैषु स्तोकमेव स्तोको ह्यप्सुस्तमेतदभयं प्राप्य य एवैष तं करोति यज्ञमेव यज्ञो हि विष्णुस्तस्माद्वैष्णव्यर्चा जुहोति - ३.६.३.[१६]

अथासाद्य स्रुचः । अप उपस्पृश्य राजानं प्रपादयति तद्यदासाद्य स्रुचोऽप उपस्पृश्य राजानं प्रपादयति वज्रो वा आज्यं रेतः सोमो नेद्वज्रेणाज्येन रेतः सोमं हिनसानीति तस्मादासाद्य स्रुचोऽप उपस्पृश्य राजानं प्रपादयति - ३.६.३.[१७]

स दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनमास्तृणाति । तदेनमासादयति देव सवितरेष ते सोमस्तं रक्षस्व मा त्वा दभन्निति तदेनं देवायैव सवित्रे परिददाति गुप्त्यै - ३.६.३.[१८]

अथानुसृज्योपतिष्ठते । एतत्त्वं देव सोम देवो देवानुपागा इदमहम्मनुष्यान्त्सह रायस्पोषेणेत्यग्नीषोमौ वा एतमन्तर्जम्भ आदधाते यो दीक्षत आग्नावैष्णवं ह्यदो दीक्षणीयं हविर्भवति यो वै विष्णुः सोमः स हविर्वा एष देवानां भवति यो दीक्षते तदेनमन्तर्जम्भ आदधाते तत्प्रत्यक्षं सोमान्निर्मुच्यते यदाहैतत्त्वं देव सोम देवो देवानुपागा इदमहम्मनुष्यान्त्सह रायस्पोषेणेति भूमा वै रायस्पोषः सह भूम्नेत्येवैतदाह - ३.६.३.[१९]



अथोपनिष्क्रामति । स्वाहा निर्वरुणस्य पाशान्मुच्य इति वरुणपाशे वा एषोऽन्तर्भवति योऽन्यस्यासंस्तत्प्रत्यक्षं वरुणपाशान्निर्मुच्यते यदाह स्वाहा निर्वरुणस्य पाशान्मुच्य इति - ३.६.३.[२०]

अथेत्याहवनीये समिधमभ्यादधाति । अग्ने व्रतपास्त्वे व्रतपा इत्यग्निर्हि देवानां व्रतपतिस्तस्मादाहाग्ने व्रतपास्त्वे व्रतपा इति या तव तनूर्मय्यभूदेषा सा त्वयि यो मम तनूस्त्वय्यभूदियं सा मयि यथायथं नौ व्रतपते व्रतान्यनु मे दीक्षां दीक्षापतिरमंस्तानु तपस्तपस्पतिरिति तत्प्रत्यक्षमग्नेर्निर्मुच्यते स स्वेन सतात्मना यजते तस्मादस्यात्राश्नन्ति मानुषो हि भवति तस्मादस्यात्र नाम गृह्णन्ति मानुषो हि भवत्यथ यत्पुरा नाश्नन्ति यथा हविषो ऽहुतस्य नाश्नीयादेवं तत्तस्माद्दीक्षितस्य नाश्नीयादथात्राङ्गुलीर्विसृजते - ३.६.३.[२१]

##३.६.४ यूपसम्पादनम्

यूपं व्रक्ष्यन्वैष्णव्यर्चा जुहोति । वैष्णवो हि यूपस्तस्माद्वैष्णव्यर्चा जुहोति - ३.६.४.[१]

यद्वेव वैष्णव्या जुहोति । यज्ञो वै विष्णुर्यज्ञेनैवैतद्यूपमच्छैति तस्माद्वैष्णव्यर्चा जुहोति - ३.६.४.[२]

स यदि स्रुचा जुहोति । चतुर्गृहीतमाज्यं गृहीत्वा जुहोति यद्यु स्रुवेण स्रुवेणैवोपहत्य जुहोत्युरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहेति - ३.६.४.[३]

यदाज्यं परिशिष्टं भवति । तदादत्ते यत्तक्षणः शस्त्रं भवति तत्तक्षादत्ते त आयन्ति स यं यूपं जोषयन्ते - ३.६.४.[४]

तमेवमभिमृश्य जपति । पश्चाद्वैव प्राङ्िष्ठन्नभिमन्त्रयतेऽत्यन्याँ ऽअगां नान्याँ उपागामित्यति ह्यन्यानेति नान्यानुपैति तस्मादाहात्यन्याँनगाँ नान्यान् उपागामिति - ३.६.४.[५]



अर्वाक्त्वा परेभ्योऽविदं परोऽवरेभ्य इति । अर्वाग्घ्येनं परेभ्यो वृश्चति य एतस्मात्पराञ्चो भवन्ति परोऽवरेभ्य इति परो ह्येनमवरेभ्यो वृश्चति य एतस्मादर्वाञ्चो भवन्ति तस्मादाहार्वाक्त्वा परेभ्योऽविदं परोऽवरेभ्य इति - ३.६.४.[६]

तं त्वा जुषामहे देव वनस्पते देवयज्याया इति । तद्यथा बहूनाम्मध्यात्साधवे कर्मणे जुषेत स रातमनास्तस्मै कर्मणे स्यादेवमेवैनमेतद्बहूनां मध्यात्साधवे कर्मणे जुषते स रातमना व्रश्चनाय भवति - ३.६.४.[७]

देवास्त्वा देवयज्यायै जुषन्तामिति । तद्वै समृद्धं यं देवाः साधवे कर्मणे जुषान्तै तस्मादाह देवास्त्वा देवयज्यायै जुषन्तामिति- ३.६.४.[८]

अथ स्रुवेणोपस्पृशति । विष्णवे त्वेति वैष्णवो हि यूपो यज्ञो वै विष्णुर्यज्ञाय ह्येनं वृश्चति तस्मादाह विष्णवे त्वेति - ३.६.४.[९]

अथ दर्भतरुणकमन्तर्दधाति । ओषधे त्रायस्वेति वज्रो वै परशुस्तथो हैनमेष वज्रः परशुर्न हिनस्त्यथ परशुना प्रहरति स्वधिते मैनं हिंसीरिति वज्रो वै परशुस्तथो हैनमेष वज्रः परशुर्न हिनस्ति - ३.६.४.[१०]

स यं प्रथमं शकलमपच्छिनत्ति । तमादत्ते तं वा अनक्षस्तम्भं वृश्चेदुत ह्येनमनसा वहन्ति तथोऽनो न प्रतिबाधते - ३.६.४.[११]

तं प्राञ्चं पातयेत् । प्राची हि देवानां दिगथो उदञ्चमुदीची हि मनुष्याणां दिगथो प्रत्यञ्चं दक्षिणायै त्वेवैनं दिशः परिविबाधिषेतैषा वै दिक्पितृणां तस्मादेनं दक्षिणायै दिशः परिविबाधिषेत - ३.६.४.[१२]

तं प्रच्यवमानमनुमन्त्रयते । द्यां मा लेखीरन्तरिक्षं मा हिंसीः पृथिव्या सम्भवेति वज्रो वा एष भवति यं यूपाय वृश्चन्ति तस्माद्वज्रात्प्रच्यवमानादिमे लोकाः संरेजन्ते तदेभ्य एवैनमेतल्लोकेभ्यः शमयति तथेमांल्लोकाञ्छान्तो न हिनस्ति - ३.६.४.[१३]



स यदाह । द्यां मा लेखीरिति दिवं मा हिंसीरित्येवैतदाहान्तरिक्षं मा हिंसीरिति नात्र तिरोहितमिवास्ति पृथिव्या सम्भवेति पृथिव्या संजानीष्वेत्येवैतदाहायं हि त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगायेत्येष ह्येनं स्वधितिस्तेजमानः प्रणयति - ३.६.४.[१४]

अथाव्रश्चनमभिजुहोति । नेदतो नाष्ट्रा रक्षांस्यनूत्तिष्ठानिति वज्रो वा आज्यं तद्वज्रेणैवैतन्नाष्ट्रा रक्षांस्यवबाधते तथातो नाष्ट्रा रक्षांसि नानूत्तिष्ठन्त्यथो रेतो वा आज्यं तद्वनस्पतिष्वेवैतद्रेतो दधाति तस्माद्रेतस आव्रश्चनाद्वनस्पतयोऽनु प्रजायन्ते - ३.६.४.[१५]

स जुहोति । अतस्त्वं देव वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयं रुहेमेति नात्र तिरोहितमिवास्ति - ३.६.४.[१६]

तं परिवासयति । स यावन्तमेवाग्रे परिवासयेत्तावान्त्स्यात् - ३.६.४.[१७]

पञ्चारत्निं परिवासयेत् । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्तवः संवत्सरस्य तस्मात्पञ्चारत्निं परिवासयेत् - ३.६.४.[१८]

षडरत्निं परिवासयेत् । षड्वा ऋतवः संवत्सरस्य संवत्सरो वज्रो वज्रो यूपस्तस्मात्षडरत्निं परिवासयेत्- ३.६.४.[१९]

अष्टारत्निं परिवासयेत् । अष्टाक्षरा वै गायत्री पूर्वार्धो वै यज्ञस्य गायत्री पूर्वार्ध एष यज्ञस्य तस्मादष्टारत्निं परिवासयेत् - ३.६.४.[२०]

नवारत्निं परिवासयेत् । त्रिवृद्वै यज्ञो नव वै त्रिवृत्तस्मान्नवारत्निं परिवासयेत् - ३.६.४.[२१]



एकादशारत्निं परिवासयेत् । एकादशाक्षरा वै त्रिष्टुब्वज्रस्त्रिष्टुब्वज्रो यूपस्तस्मादेकादशारत्निं परिवासयेत्- ३.६.४.[२२]

द्वादशारत्निं परिवासयेत् । द्वादश वै मासाः संवत्सरस्य संवत्सरो वज्रो वज्रो यूपस्तस्माद्द्वादशारत्निं परिवासयेत् - ३.६.४.[२३]

त्रयोदशारत्निं परिवासयेत् । त्रयोदश वै मासाः संवत्सरस्य संवत्सरो वज्रो वज्रो यूपस्तस्मात्त्रयोदशारत्निं परिवासयेत् - ३.६.४.[२४]

पञ्चदशारत्निं परिवासयेत् । पञ्चदशो वै वज्रो वज्रो यूपस्तस्मात्पञ्चदशारत्निम्परिवासयेत्- ३.६.४.[२५]

सप्तादशारत्निर्वाजपेययूपः । अपरिमित एव स्यादपरिमितेन वा एतेन वज्रेण देवा

अपरिमितमजयंस्तथो एवैष एतेन वज्रेणापरिमितेनैवापरिमितं जयति तस्मादपरिमित एव स्यात् - ३.६.४.[२६]

स वा अष्टाश्रिर्भवति । अष्टाक्षरा वै गायत्री पूर्वार्धो वै यज्ञस्य गायत्री पूर्वार्धे एष यज्ञस्य तस्मादष्टाश्रिर्भवति - ३.६.४.[२७]

##३.७.१.

अभ्रिमादत्ते । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्यसीति समान एतस्य यजुषो बन्धुर्योषो वा एषा यदभ्रिस्तस्मादाह नार्यसीति- ३.७.१.[१]

अथावटं परिलिखति । इदमहं रक्षसां ग्रीवा अपिकृन्तामीति वज्रो वा अभ्रिर्वज्रेणैवैतन्नाष्ट्राणां रक्षसां ग्रीवा अपिकृन्तति -३.७.१.[२]



अथ खनति । प्राञ्चमुत्करमुत्किरत्युपरेण सम्मायावटं खनति तदग्रेण प्राञ्चं यूपं निदधात्येतावन्मात्राणि बर्हींष्युपरिष्टादधि निदधाति तदेवोपरिष्टाद्यूपशकलमधिनिदधाति पुरस्तात्पार्श्वतश्चषालमुपनिदधात्यथ यवमत्यः प्रोक्षण्यो भवन्ति सोऽसावेव बन्धुः - ३.७.१.[३]

स यवानावपति । यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति नात्र तिरोहितमिवास्त्यथ प्रोक्षत्येको वै प्रोक्षणस्य बन्धुर्मेध्यमेवैतत्करोति - ३.७.१.[४]

स प्रोक्षति । दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेति वज्रो वै यूप एषां लोकानामभिगुप्त्या एषां त्वा लोकानामभिगुप्त्यै प्रोक्षामीत्येवैतदाह - ३.७.१.[५]

अथ याः प्रोक्षण्यः परिशिष्यन्ते । ता अवटेऽवनयति शुन्धन्तां लोकाः पितृषदना इति पितृदेवत्यो वै कूपः खातस्तमेवैतन्मेध्यं करोति - ३.७.१.[६]

अथ बर्हींषि । प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति पितृषदनमसीति पितृदेवत्यं वा अस्यैतद्भवति यन्निखातं स यथा निखात ओषधिषु मितः स्यादेवमेतास्वोषधिषु मितो भवति - ३.७.१.[७]

अथ यूपशकलं प्रास्यति । तेजो ह वा एतद्वनस्पतीनां यद्बाह्याशकलस्तस्माद्यदा बाह्याशकलमपतक्ष्णुवन्त्यथ शुष्यन्ति तेजो ह्येषामेतत्तद्यद्यूपशकलम्प्रास्यति सतेजसं मिनवानीति तद्यदेष एव भवति नान्य एष हि यजुष्कृतो मेध्यस्तस्माद्यूपशकलं प्रास्यति - ३.७.१.[८]

स प्रास्यति । अग्रेणीरसि स्वावेश उन्नेतृणामिति पुरस्ताद्वा अस्मादेषोऽपच्छिद्यते तस्मादाहाग्रेणीरसि स्वावेश उन्नेतृणामित्येतस्य वित्तादधि त्वा स्थास्यतीत्यधि ह्येनं तिष्ठति तस्मादाहैतस्य वित्तादधि त्वा स्थास्यतीति - ३.७.१.[९]



अथ स्रुवेणोपहत्याज्यम् । अवटमभिजुहोति नेदधस्तान्नाष्ट्रा रक्षांस्युपोत्तिष्ठानिति वज्रो वा आज्यं तद्वज्रेणैवैतन्नाष्ट्रा रक्षांस्यवबाधते तथाधस्तान्नाष्ट्रा रक्षांसि नोपोत्तिष्ठन्त्यथ पुरस्तात्परीत्योदङ्ङासीनो यूपमनक्ति स आह यूपायाज्यमानायानुब्रूहीति- ३.७.१.[१०]

सोऽनक्ति । देवस्त्वा सविता मध्वानक्त्विति सविता वै देवानां प्रसविता यजमानो वा एष निदानेन यद्यूपः सर्वं वा इदं मधु यदिदं किं च तदेनमनेन सर्वेण संस्पर्शयति तदस्मै सविता प्रसविता प्रसौति तस्मादाह देवस्त्वा सविता मध्वानक्त्विति - ३.७.१.[११]

अथ चषालमुभयतः प्रत्यज्य प्रतिमुञ्चति । सुपिप्पलाभ्यस्त्वौषधीभ्य इति पिप्पलं हैवास्यैतद्यन्मध्ये संगृहीतमिव भवति तिर्यग्वा इदं वृक्षे पिप्पलमाह तं स यदेवेदं सम्बन्धनं चान्तरोपेनितमिव तदेवैतत्करोति तस्मान्मध्ये संगृहीतमिव भवति - ३.७.१.[१२]

आन्तमग्निष्ठामनक्ति । यजमानो वा अग्निष्ठा रस आज्यं रसेनैवैतद्यजमानमनक्ति तस्मादान्तमग्निष्ठामनक्त्यथ परिव्ययणम्प्रतिसमन्तं परिमृशत्यथाहोच्छ्रीयमाणायानुब्रूहीति - ३.७.१.[१३]

स उच्छ्रयति । द्यामग्रेणास्पृक्ष आन्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणादृंहीरिति वज्रो वै यूप एषां लोकानामभिजित्यै तेन वज्रेणेमांल्लोकान्त्स्पृणुत एभ्यो लोकेभ्यः सपत्नान्निर्भजति-३.७.१.[१४]

अथ मिनोति । या ते धामान्युश्मसि गमध्यै यत्र गावो भूरिश्रृङ्गा अयासः अत्राह तदुरुगायस्य विष्णोः परमं पदमवभारि भूरीत्येतया त्रिष्टुभा मिनोति वज्रस्त्रिष्टुब्वज्रो यूपस्तस्मात्त्रिष्टुभा मिनोति - ३.७.१.[१५]

सम्प्रत्यग्निमग्निष्ठां मिनोति । यजमानो वा अग्निष्ठाग्निरु वै यज्ञः स यदग्नेरग्निष्ठां ह्वलयेद्ध्वलेद्ध यज्ञाद्यजमानस्तस्मात्सम्प्रत्यग्निमग्निष्ठां मिनोत्यथ पर्यूहत्यथ पर्यृषत्यथाप उपनिनयति - ३.७.१.[१६]



अथैवमभिपद्य वाचयति । विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे इन्द्रस्य युज्यः सखेति वज्रं वा एष प्राहार्षीद्यो यूपमुदशिश्रियद्विष्णोर्विजितिम्पश्यतेत्येवैतदाह यदाह विष्णोः कर्माणि पश्यत यतो व्रतानि पशपशे इन्द्रस्य युज्यः सखेतीन्द्रो वै यज्ञस्य देवता वैष्णवो यूपस्तं सेन्द्रं करोति तस्मादाहेन्द्रस्य युज्यः सखेति -३.७.१.[१७]

अथ चषालमुदीक्षते । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षुराततमिति वज्रं वा एष प्राहार्षीद्यो यूपमुदशिश्रियत्ता विष्णोर्विजितिम्पश्यतेत्येवैतदाह यदाह तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षुराततमिति - ३.७.१.[१८]

अथ परिव्ययति । अनग्नतायै न्वेव परिव्ययति तस्मादत्रेव परिव्ययत्यत्रेव हीदं वासो भवत्यन्नाद्यमेवास्मिन्नेतद्दधात्यत्रेव हीदमन्नं प्रतितिष्ठति तस्मादत्रेव परिव्ययति - ३.७.१.[१९]

त्रिवृता परिव्ययति । त्रिवृद्ध्यन्नं पशवो ह्यन्नं पिता माता यज्जायते तत्तृतीयं तस्मात्त्रिवृता परिव्ययति - ३.७.१.[२०]

स परिव्ययति । परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमं यजमानं रायो मनुष्याणामिति तद्यजमानायाशिषमाशास्ते यदाह परीमं यजमानं रायो मनुष्याणामिति- ३.७.१.[२१]

अथ यूपशकलमवगूहति । दिवः सूनुरसीति प्रजा हैवास्यैषा तस्माद्यदि यूपैकादशिनी स्यात्स्वं स्वमेवावगूहेदविपर्यासं तस्य हैषा मुग्धानुव्रता प्रजा जायतेऽथ यो विपर्यासमवगूहति न स्वंस्वं तस्य हैषा मुग्धाननुव्रता प्रजा जायते तस्मादु स्वं स्वमेवावगूहेदविपर्यासम्- ३.७.१.[२२]



स्वर्गस्यो हैष लोकस्य समारोहणः क्रियते । यद्यूपशकल इयं रशना रशनायै यूपशकलो यूपशकलाच्चषालं चषालात्स्वर्गं लोकं समश्नुते - ३.७.१.[२३]

अथ यस्मात्स्वरुर्नाम । एतस्माद्वा एषोऽपच्छिद्यते तस्यैतत्स्वमेवारुर्भवति तस्मात्स्वरुर्नाम - ३.७.१.[२४]

तस्य यन्निखातम् । तेन पितृलोकं जयत्यथ यदूर्ध्वं निखातादा रशनायै तेन मनुष्यलोकं जयत्यथ यदूर्ध्वं रशनाया आ चषालात्तेन देवलोकं जयत्यथ यदूर्ध्वं चषालाद्व्यङ्गुलं वा त्र्यङ्गुलं वा साध्या इति देवास्तेन तेषां लोकं जयति सलोको वै साध्यैर्देवैर्भवति य एवमेतद्वेद - ३.७.१.[२५]

तं वै पूर्वार्धे मिनोति । वज्रो वै यूपो वज्रो दण्डः पूर्वार्धं वै दण्डस्याभिपद्य प्रहरति पूर्वार्ध एष यज्ञस्य तस्मात्पूर्वार्धे मिनोति - ३.७.१.[२६]

यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न इदम्मनुष्यैरनभ्यारोह्यं स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम पुरस्ताद्वै प्रज्ञा पुरस्तान्मनोजवस्तस्मात्पूर्वार्धे मिनोति- ३.७.१.[२७]

स वा अष्टाश्रिर्भवति । अष्टाक्षरा वै गायत्री पूर्वार्धो वै यज्ञस्य गायत्री पूर्वार्ध एष यज्ञस्य तस्मादष्टाश्रिर्भवति - ३.७.१.[२८]

तं ह स्मैतं देवा अनुप्रहरन्ति । यथेदमप्येतर्ह्येकेऽनुप्रहरन्तीति देवा अकुर्वन्निति ततो रक्षांसि यज्ञमनूदपिबन्त - ३.७.१.[२९]



ते देवा अध्वर्युमब्रुवन् । यूपशकलमेव जुहुधि तदहैष स्वगाकृतो भविष्यति तथो रक्षांसि यज्ञं नानूत्पास्यन्तेऽयं वै वज्र उद्यत इति - ३.७.१.[३०]

सोऽध्वर्युः । यूपशकलमेवाजुहोत्तदहैष स्वगाकृत आसीत्तथो रक्षांसि यज्ञं नानूदपिबन्तायं वै वज्र उद्यत इति - ३.७.१.[३१]

तथो एवैष एतत् । यूपशकलमेव जुहोति तदहैष स्वगाकृतो भवति तथो रक्षांसि यज्ञं नानूत्पिबन्तेऽयं वै वज्र उद्यत इति स जुहोति दिवं ते धूमो गच्छतु स्वर्ज्योतिः पृथिवीं भस्मनापृण स्वाहेति।। - ३.७.१.[३२]

##३.७.२

यावती वै वेदिस्तावती पृथिवी । वज्रा वै यूपास्तदिमामेवैतत्पृथिवीमेतैर्वज्रैः स्पृणुतेऽस्यै सपत्नान्निर्भजति तस्माद्यूपैकादशिनी भवति द्वादश उपशयो भवति वितष्टस्तं दक्षिणत उपनिदधाति तद्यद्द्वादश उपशयो भवति - ३.७.२.[१]

देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसङ्गाद्बिभयाञ्चक्रुस्तद्य एत उच्छ्रिता यथेषुरस्ता तया वै स्तृणुते वा न वा स्तृणुते यथा दण्डः प्रहृतस्तेन वै स्तृणुते वा न वा स्तृणुतेऽथ य एष द्वादश उपशयो भवति यथेषुरायतानस्ता यथोद्यतमप्रहृतमेवमेष वज्र उद्यतो दक्षिणतो नाष्ट्राणां रक्षसामपहत्यै तस्माद्द्वादश उपशयो भवति - ३.७.२.[२]

तं निदधाति । एष ते पृथिव्यां लोक आरण्यस्ते पशुरिति पशुश्च वै यूपश्च तदस्मा आरण्यमेव पशूनामनुदिशति तेनो एष पशुमान्भवति तद्वयं यूपैकादशिन्यै सम्मयनमाहुः श्वःसुत्यायै ह न्वेवैके सम्मिन्वन्ति प्रकुब्ध्रतायै चैव श्वःसुत्यायै यूपं मिन्वन्तीत्यु च - ३.७.२.[३]



तदु तथा न कुर्यात् । अग्निष्ठमेवोच्छ्रयेदिदं वै यूपमुच्छ्रित्याध्वर्युरापरिव्ययणान्नान्वर्जत्यपरिवीता वा एत एतां रात्रिं वसन्ति सा न्वेव परिचक्षा पशवे वै यूपमुच्छ्रयन्ति प्रातर्वै पशूनालभन्ते तस्मादु प्रातरेवोच्छ्रयेत् - ३.७.२.[४]

स य उत्तरोऽग्निष्ठात्स्यात् । तमेवाग्र उच्छ्रयेदथ दक्षिणमथोत्तरं दक्षिणार्द्ध्यमुत्तमं तथोदीची भवति - ३.७.२.[५]

अथो इतरथाहुः । दक्षिणमेवाग्रेऽग्निष्ठादुच्छ्रयेदथोत्तरमथ दक्षिणमुत्तरार्ध्यमुत्तमं तथो हास्योदगेव कर्मानुसंतिष्ठत इति - ३.७.२.[६]

स यो वर्षिष्ठः स दक्षिणार्ध्यः स्यात् । अथ ह्रसीयानथ ह्रसीयानुत्तरार्ध्यो ह्रसिष्ठस्तथोदीची भवति - ३.७.२.[७]

अथ पत्नीभ्यः पत्नीयूपमुच्छ्रयन्ति । सर्वत्वाय न्वेव पत्नीयूप उच्छ्रीयते तत्त्वाष्ट्रं पशुमालभते त्वष्टा वै सिक्तं रेतो विकरोति तदेष एवैतत्सिक्तं रेतो विकरोति मुष्करो भवत्येष वै प्रजनयिता यन्मुष्करस्तस्मान्मुष्करो भवति तं न संस्थापयेत्पर्यग्निकृतमेवोत्सृजेत्स यत्संस्थापयेत्प्रजायै हान्तमियात्तत्प्रजामुत्सृजति तस्मान्न संस्थापयेत्पर्यग्निकृतमेवोत्सृजेत् - ३.७.२.[८]

##३.७.३ अग्नीषोमीयपशुयागः
पशुश्च वै यूपश्च । न वा ऋते यूपात्पशुमालभन्ते कदा चन तद्यत्तथा न ह वा
एतस्मा अग्रे पशवश्चक्षमिरे यदन्नमभविष्यन्यथेदमन्नं भूता यथा हैवायं द्विपात्पुरुष उच्छ्रित एवं हैव द्विपाद उच्छ्रिताश्चेरुः - ३.७.३.[१]

ततो देवा एतं वज्रं ददृशुः । यद्यूपं तमुच्छिश्रियुस्तस्माद्भीषा प्राव्लीयन्त ततश्चतुष्पादा अभवंस्ततोऽन्नमभवन्यथेदमन्नं भूता एतस्मै हि वा एतेऽतिष्ठन्त तस्माद्यूप एव पशुमालभन्ते नर्ते यूपात्कदा चन - ३.७.३.[२]



अथोपाकृत्य पशुम् । अग्निं मथित्वा नियुनक्ति तद्यत्तथा न ह वा एतस्मा अग्रे
पशवश्चक्षमिरे यद्धविरभविष्यन्यथैनानिदं हविर्भूतानग्नौ जुह्वति तान्देवा उपनिरुरुधुस्त उपनिरुद्धा नोपावेयुः - ३.७.३.[३]

ते होचुः । न वा इमेऽस्य यामं विदुर्यदग्नौ हविर्जुह्वति नैताम्प्रतिष्ठामुपरुध्यैव पशूनग्निं मथित्वाग्नावग्निं जुहवाम ते वेदिष्यन्त्येष वै किल हविषो याम एषा प्रतिष्ठाग्नौ वै किल हविर्जुह्वतीति ततोऽभ्यवैष्यन्ति ततो रातमनस आलम्भाय भविष्यन्तीति - ३.७.३.[४]

त उपरुध्यैव पशून् । अग्निं मथित्वाग्नावग्निमजुहवुस्तेऽविदुरेष वै किल हविषो यामः एषा प्रतिष्ठाग्नौ वै किल हविर्जुह्वतीति ततोऽभ्यवायंस्ततो रातमनस आलम्भायाभवन् - ३.७.३.[५]

तथो एवैष एतत् । उपरुध्यैव पशुमग्निं मथित्वाग्नावग्निं जुहोति स वेदैष वै किल हविषो याम एषा प्रतिष्ठाग्नौ वै किल हविर्जुह्वतीति ततोऽभ्यवैति ततो रातमना आलम्भाय भवति तस्मादुपाकृत्य पशुमग्निं मथित्वा नियुनक्ति - ३.७.३.[६]

तदाहुः । नोपाकुर्यान्नाग्निं मन्थेद्रशनामेवादायाञ्जसोपपरेत्याभिधाय नियुञ्ज्यादिति तदु तथा न कुर्याद्यथाधर्मं तिरश्चथा चिकीर्षेदेवं तत्तस्मादेतदेवानुपरीयात् - ३.७.३.[७]

अथ तृणमादायोपाकरोति । द्वितीयवान्निरुणधा इति द्वितीयवान्हि वीर्यवान् - ३.७.३.[८]

स तृणमादत्ते । उपावीरसीत्युप हि द्वितीयोऽवति तस्मादाहोपावीरसीत्युप देवान्दैवीर्विशः प्रागुरिति दैव्यो वा एता विशो यत्पशवोऽस्थिषत देवेभ्य इत्येवैतदाह यदाहोप देवान्दैवीर्विशः प्रागुरिति - ३.७.३.[९]



उशिजो वह्नितमानिति । विद्वांसो हि देवास्तस्मादाहोशिजो वह्नितमानिति - ३.७.३.[१०]

देव त्वष्टर्वसु रमेति । त्वष्टा वै पशूनामीष्टे पशवो वसु तानेतद्देवा अतिष्ठमानांस्त्वष्टारमब्रुवन्नुपनिमदेति यदाह देव त्वष्टर्वसु रमेति - ३.७.३.[११]

हव्या ते स्वदन्तामिति । यदा वा एत एतस्मा अध्रियन्त यद्धविरभविष्यंस्तस्मादाह हव्या ते स्वदन्तामिति - ३.७.३.[१२]

रेवती रमध्वमिति । रेवन्तो हि पशवस्तस्मादाह रेवती रमध्वमिति बृहस्पते धारया वसूनीति ब्रह्म वै बृहस्पतिः पशवो वसु तानेतद्देवा अतिष्ठमानान्ब्रह्मणैव परस्तात्पर्यदधुस्तन्नात्यायंस्तथो एवैनानेष एतद्ब्रह्मणैव परस्तात्परिदधाति तन्नातियन्ति तस्मादाह बृहस्पते धारया वसूनीति पाशं कृत्वा प्रतिमुञ्चत्यथातो नियोजनस्यैव - ३.७.३.[१३]

##३.७.४ पशुनियोजनप्रकारः
पाशं कृत्वा प्रतिमुञ्चति । ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चामीति वरुण्या वा एषा यद्रज्जुस्तदेनमेतदृतस्यैव पाशे प्रतिमुञ्चति तथो हैनमेषा वरुण्या रज्जुर्न हिनस्ति - ३.७.४.[१]

धर्षा मानुष इति । न वा एतमग्रे मनुष्योऽधृष्णोत्स यदेवर्तस्य पाशेनैत्तद्देवहविः प्रतिमुञ्चत्यथैनं मनुष्यो धृष्णोति तस्मादाह धर्षा मानुष इति - ३.७.४.[२]

अथ नियुनक्ति । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नीषोमाभ्यां जुष्टं नियुनज्मीति तद्यथैवादो देवतायै हविर्गृह्णन्नादिशत्येवमेवैतद्देवताभ्यामादिशत्यथ प्रोक्षत्येको वै प्रोक्षणस्य बन्धुर्मेध्यमेवैतत्करोति - ३.७.४.[३]

स प्रोक्षति । अद्भ्यस्त्वौषधीभ्य इति तद्यत एव सम्भवति तत एवैतन्मेध्यं करोतीदं हि यदा वर्षत्यथौषधयो जायन्त ओषधीर्जग्ध्वापः पीत्वा तत एष रसः सम्भवति रसाद्रेतो रेतसः पशवस्तद्यत एव सम्भवति यतश्च जायते तत एवैतन्मेध्यं करोति - ३.७.४.[४]

अनु त्वा माता मन्यतामनु पितेति । स हि मातुश्चाधि पितुश्च जायते तद्यत एव जायते तत एवैतन्मेध्यं करोत्यनु भ्राता सगर्भ्योऽनु सखा सयूथ्य इति स यत्ते जन्म तेन त्वानुमतमारभ इत्येवैतदाहाग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामीति तद्याभ्यां देवताभ्यामारभते ताभ्यां मेध्यं करोति - ३.७.४.[५]

अथोपगृह्णाति । अपां पेरुरसीति तदेनमन्तरतो मेध्यं करोत्यथाधस्तादुपोक्षत्यापो देवीः स्वदन्तु स्वात्तं चित्सद्देवहविरिति तदेनं सर्वतो मेध्यं करोति - ३.७.४.[६]

अथाहाग्नये समिध्यमानायानुब्रूहीति । स उत्तरमाघारमाघार्यासंस्पर्शयन्स्त्रुचौ पर्येत्य जुह्वा पशुं समनक्ति शिरो वै यज्ञस्योत्तर आघार एष वा अत्र यज्ञो भवति यत्पशुस्तद्यज्ञ एवैतच्छिरःप्रतिदधाति तस्माज्जुह्वा पशुं समनक्ति - ३.७.४.[७]

स ललाटे समनक्ति । सं ते प्राणो वातेन गच्छतामिति समङ्गानि यजत्रैरित्यंसयोः
सं यज्ञपतिराशिषेति श्रोण्योः स यस्मै कामाय पशुमालभन्ते तत्प्राप्नुहीत्येवैतदाह - ३.७.४.[८]

इदं वै पशोः संज्ञप्यमानस्य । प्राणो वातमपिपद्यते तत्प्राप्नुहि यत्ते प्राणो वातमपिपद्याता इत्येवैतदाह समङ्गानि यजत्रैरित्यङ्गैर्वा अस्य यजन्ते तत्प्राप्नुहि यत्तेऽङ्गैर्यजान्ता इत्येवैतदाह स यज्ञपतिराशिषेति यजमानस्य वाऽएतेनाशिषमाशास्ते तत्प्राप्नुहि यत्त्वया यजमानायाशिषमाशासान्ता इत्येवैतदाह सादयति स्रुचावथ प्रवरायाश्रावयति सोऽसावेव बन्धुः - ३.७.४.[९]



अथ द्वितीयमाश्रावयति । द्वौ ह्यत्र होतारौ भवतः स मैत्रावरुणायाहैवाश्रावयति यजमानं त्वेव प्रवृणीतेऽग्निर्हि दैवीनां विशाम्पुर एतेत्यग्निर्हि देवतानां मुखं तस्मादाहाग्निर्ह दैवीनां विशां पुर एतेत्ययं यजमानो मनुष्याणामिति तं हि सोऽन्वर्द्धो भवति यस्मिन्नर्धे यजते तस्मादाहायं यजमानो मनुष्याणामिति तयोरस्थूरि गार्हपत्यं दीदयच्छतं हिमाद्वायू इति तयोरनार्तानि गार्हपत्यानि शतं वर्षाणि सन्त्वित्येवैतदाह - ३.७.४.[१०]

राधांसीत्सम्पृञ्चानावसम्पृञ्चानौ तन्व इति । राधांस्येव सम्पृञ्चाथां मापि तनूरित्येवैतदाह तौ ह यत्तनूरपि सम्पृञ्चीयातां प्राग्निर्यजमानं दहेत्स यदग्नौ जुहोति तदेषोऽग्नये प्रयच्छत्यथ यामेवात्रर्त्विजो यजमानायाशिषमाशासते तामस्मै सर्वामग्निः समर्धयति तद्राधांस्येव सम्पृञ्चाते नापि तनूस्तस्मादाह राधांसीत्सम्पृञ्चानावसम्पृञ्चानौ तन्व इति - ३.७.४.[११]

##३.८.१.

तद्यत्रैतत्प्रवृतो होता होतृषदन उपविशति । तदुपविश्य प्रसौति प्रसूतोऽध्वर्युः स्रुचावादत्ते - ३.८.१.[१]

अथाप्रीभिश्चरन्ति । तद्यदाप्रीभिश्चरन्ति सर्वेणेव वा एष मनसा सर्वेणेवात्मना यज्ञं सम्भरति सं च जिहीर्षति यो दीक्षते तस्य रिरिचान इवात्मा भवति तमेताभिराप्रीभिराप्यायन्ति तद्यदाप्याययन्ति तस्मादाप्रियो नाम तस्मादाप्रीभिश्चरन्ति - ३.८.१.[२]

ते वा एत एकादश प्रयाजा भवन्ति । दश वा इमे पुरुषे प्राणा आत्मैकादशो यस्मिन्नेते प्राणाः प्रतिष्ठिता एतावान्वै पुरुषस्तदस्य सर्वमात्मानमाप्याययन्ति तस्मादेकादश प्रयाजा भवन्ति - ३.८.१.[३]

स आश्राव्याह । समिधः प्रेष्येति प्रेष्य प्रेष्येति चतुर्थेचतुर्थे प्रयाजे समानयमानो दशभिः प्रयाजैश्चरति दश प्रयाजानिष्ट्वाह शासमाहरेत्यसिं वै शास इत्याचक्षते - ३.८.१.[४]



अथ यूपशकलमादत्ते । तावग्रे जुह्वा अक्त्वा पशोर्ललाटमुपस्पृशति घृतेनाक्तौ पशूंस्त्रायेथामिति वज्रो वै यूपशकलो वज्रः शासो वज्र आज्यं तमेवैतत्कृत्स्नं वज्रं सम्भृत्य तमस्याभिगोप्तारं करोति नेदेनं नाष्ट्रा रक्षांसि हिनसन्निति पुनर्यूपशकलमवगूहत्येषा ते प्रज्ञाताश्रिरस्त्वित्याह शासं प्रयच्छन्त्सादयति स्रुचौ - ३.८.१.[५]

अथाह पर्यग्नयेऽनुब्रूहीति । उल्मुकमादायाग्नीत्पर्यग्निं करोति तद्यत्पर्यग्निं करोत्यच्छिद्रमेवैनमेतदग्निना परिगृह्णाति नेदेनं नाष्ट्रा रक्षांसि प्रमृशानित्यग्निर्हि रक्षसामपहन्ता तस्मात्पर्यग्निं करोति तद्यत्रैनं श्रपयन्ति तदभिपरिहरति - ३.८.१.[६]

तदाहुः । पुनरेतदुल्मुकं हरेदथात्रान्यमेवाग्निं निर्मथ्य तस्मिन्नेनं श्रपयेयुराहवनीयो वा एष न वा एष तस्मै यदस्मिन्नश्रृतं श्रपयेयुस्तस्मै वा एष यदस्मिञ्छृतं जुहुयुरिति - ३.८.१.[७]

तदु तथा न कुर्यात् । यथा वै ग्रसितमेवमस्यैतद्भवति यदेनेन पर्यग्निं करोति स यथा ग्रसितमनुहायाच्छिद्य तदन्यस्मै प्रयच्छेदेवं तत्तस्मादेतस्यैवोल्मुकस्याङ्गारान्निमृद्य तस्मिन्नेनं श्रपयेयुः - ३.८.१.[८]

अथोल्मुकमादायाग्नीत्पुरस्तात्प्रतिपद्यते । अग्निमेवैतत्पुरस्तात्करोत्यग्निः पुरस्तान्नाष्ट्रा रक्षांस्यपघ्नन्नेत्यथाभयेनानाष्ट्रेण पशुं नयन्ति तं वपाश्रपणीभ्यां प्रतिप्रस्थातान्वारभते प्रतिप्रस्थातारमध्वर्युरध्वर्युं यजमानः - ३.८.१.[९]

तदाहुः । नैष यजमानेनान्वारभ्यो मृत्यवे ह्येतं नयन्ति तस्मान्नान्वारभेतेति तदन्वेवारभेत न वा एतं मृत्यवे नयन्ति यं यज्ञाय नयन्ति तस्मादन्वेवारभेत यज्ञादु हैवात्मानमन्तरियाद्यन्नान्वारभेत तस्मादन्वेवारभेत तत्परोऽक्षमन्वारब्धं भवति वपाश्रपणीभ्यां प्रतिप्रस्थाता प्रतिप्रस्थातारमध्वर्युरध्वर्युं यजमान एतदु परोऽक्षमन्वारब्धं भवति - ३.८.१.[१०]



अथ स्तीर्णायै वेदेः । द्वे तृणे अध्वर्युरादत्ते स आश्राव्याहोपप्रेष्य होतर्हव्या देवेभ्य इत्येतदु वैश्वदेवं पशौ - ३.८.१.[११]

अथ वाचयति । रेवति यजमान इति वाग्वै रेवती सा यद्वाग्बहु वदति तेन वाग्रेवती प्रियं धा आविशेत्यनार्तिमाविशेत्येवैतदाहोरोरन्तरिक्षात्सजूर्देवेन वातेनेत्यन्तरिक्षं वा अनु रक्षश्चरत्यमूलमुभयतः परिच्छिन्नं यथायं पुरुषोऽमूल उभयतः परिच्छिन्नोऽन्तरिक्षमनुचरति तद्वातेनैनं संविदानान्तरिक्षाद्गोपायेत्येवैतदाह यदाहोरोरन्तरिक्षात्सजूर्देवेन वातेनेति - ३.८.१.[१२]

अस्य हविषस्त्मना यजेति । वाचमेवैतदाहानार्तस्यास्य हविष आत्मना यजेति समस्य तन्वा भवेति वाचमेवैतदाहानार्तस्यास्य हविषस्तन्वा सम्भवेति - ३.८.१.[१३]

तद्यत्रैनं विशसन्ति । तत्पुरस्तात्तृणमुपास्यति वर्षो वर्षीयसि यज्ञे यज्ञपतिं धा इति बर्हिरेवास्मा एतत्स्तृणात्यस्कन्नं हविरसदिति तद्यदेवास्यात्र विशस्यमानस्य किंचित्स्कन्दति तदेतस्मिन्प्रतितिष्ठति तथा नामुया भवति - ३.८.१.[१४]

अथ पुनरेत्याहवनीयमभ्यावृत्यासते । नेदस्य संज्ञप्यमानस्याध्यक्षा असामेति तस्य न कूटेन प्रघ्नन्ति मानुषं हि तन्नो एव पश्चात्कर्णं पितृदेवत्यं हि तदपिगृह्य वैव मुखं तमयन्ति वेष्कं वा कुर्वन्ति तन्नाह जहि मारयेति मानुषं हि तत्संज्ञपयान्वगन्निति तद्धि देवत्रा स यदाहान्वगन्नित्येतर्हि ह्येष देवाननुगच्छति तस्मादाहान्वगन्निति - ३.८.१.[१५]

तद्यत्रैनं निविध्यन्ति । तत्पुरा संज्ञपनाज्जुहोति स्वाहा देवेभ्य इत्यथ यदा प्राह संज्ञप्तः पशुरित्यथ जुहोति देवेभ्यः स्वाहेति पुरस्तात्स्वाहाकृतयो वा अन्ये देवा उपरिष्टात्स्वाहाकृतयोऽन्ये तानेवैतत्प्रीणाति त एनमुभये देवाः प्रीताः स्वर्गंलोकमभिवहन्ति ते वा एते परिपशव्ये इत्याहुती स यदि कामयेत जुहुयादेते यद्यु कामयेतापि नाद्रियेत - ३.८.१.[१६]



##३.८.२ संज्ञपनान्तरभाविप्रयोगकथनम्

यदा प्राह संज्ञप्तः पशुरिति । अथाध्वर्युराह नेष्टः पत्नीमुदानयेत्युदानयति नेष्टा पत्नीं पान्नेजनं बिभ्रतीम् - ३.८.२.[१]

तां वाचयति । नमस्त ऽआतानेति यज्ञो वा ऽआतानो यज्ञं हि तन्वते तेन यज्ञ आतानो जघनार्द्धो वा एष यज्ञस्य यत्पत्नी तामेतत्प्राचीं यज्ञं प्रसादयिष्यन्भवति तस्मा एवैतद्यज्ञाय निह्नुते तथो हैनामेष यज्ञो न हिनस्ति तस्मादाह नमस्त ऽआतानेति -- ३.८.२.[२]

अनर्वा प्रेहीति । असपत्नेन प्रेहीत्येवैतदाह घृतस्य कुल्या ऽउप ऋतस्य पथ्या ऽअन्विति साधूपेत्येवैतदाह देवीरापः शुद्धा वोढ्वं सुपरिविष्टा देवेषु सुपरिविष्टा वयं परिवेष्टारो भूयास्मेत्यप एवैतत्पावयति - ३.८.२.[३]

अथ पशोः प्राणानद्भिः पत्न्युपस्पृशति । तद्यदद्भिः प्राणानुपस्पृशति जीवं वै देवानां हविरमृतममृतानामथैतत्पशुं घ्नन्ति यत्संज्ञपयन्ति यद्विशासत्यापो वै प्राणास्तदस्मिन्नेतान्प्राणान्दधाति तथैतज्जीवमेव देवानां हविर्भवत्यमृतममृतानाम् - ३.८.२.[४]

अथ यत्पत्न्युपस्पृशति । योषा वै पत्नी योषायै वा इमाः प्रजाः प्रजायन्ते तदेनमेतस्यै योषायै प्रजनयति तस्मात्पत्न्युपस्पृशति - ३.८.२.[५]

सोपस्पृशति । वाचं ते शुन्धामीति मुखं प्राणं ते शुन्धामीति नासिके चक्षुस्ते शुन्धामीत्यक्ष्यौ श्रोत्रं ते शुन्धामीति कर्णौ नाभिं ते शुन्धामीति योऽयमनिरुक्तः प्राणो मेढ्रं ते शुन्धामीति वा पायुं ते शुन्धामीति योऽयं पश्चात्प्राणस्तत्प्राणान्दधाति तत्समीरयत्यथ संहृत्य पदश्चरित्रांस्ते शुन्धामीति पद्भिर्वै प्रतितिष्ठति प्रतिष्ठित्या एव तदेनं प्रतिष्ठापयति - ३.८.२.[६]



अथ या आपः परिशिष्यन्ते । अर्धा वा यावत्यो वा ताभिरेनं यजमानश्च शीर्षतोऽग्रे ऽनुषिञ्चतस्तत्प्राणांश्चैवास्मिंस्तत्तौ धत्तस्तच्चैनमतः समीरयतः - ३.८.२.[७]

तद्यत्क्रूरीकुर्वन्ति । यदास्थापयन्ति शान्तिरापस्तदद्भिः शान्त्या शमयतस्तदद्भिः संधत्तः - ३.८.२.[८]

तावनुषिञ्चतः । मनस्त आप्यायतां वाक्त आप्यायतां प्राणस्त आप्यायतां चक्षुस्त आप्यायतां श्रोत्रं त आप्यायतामिति तत्प्राणान्धत्तस्तत्समीरयतो यत्ते क्रूरं यदास्थितं तत्त आप्यायतां निष्ट्यायतामिति - ३.८.२.[९]

तद्यत्क्रूरीकुर्वन्ति । यदास्थापयन्ति शान्तिरापस्तदद्भिः शान्त्या शमयतस्तदद्भिः संधत्तस्तत्ते शुध्यत्विति तन्मेध्यं कुरुतः शमहोभ्य इति जघनेन पशुं निनयतः - ३.८.२.[१०]

तद्यत्क्रूरीकुर्वन्ति । यदास्थापयन्ति नेदेतदन्वशान्तान्यहोरात्राण्यसन्निति तस्माच्छमहोभ्य इति जघनेन पशुं निनयतः - ३.८.२.[११]

अथोत्तानं पशुं पर्यस्यन्ति । स तृणमन्तर्दधात्योषधे त्रायस्वेति वज्रो वा असिस्तथो हैनमेष वज्रोऽसिर्न हिनस्त्यथासिनाभिनिदधाति स्वधिते मैनं हिंसीरिति वज्रो वा असिस्तथो हैनमेष वज्रोऽसिर्न हिनस्ति - ३.८.२.[१२]

सा या प्रज्ञाताश्रिः । तयाभिनिदधाति सा हि यजुष्कृता मेध्या तद्यदग्रं तृणस्य तत्सव्ये प्राणौ कुरुतेऽथ यद्बुध्नं तद्दक्षिणेनादत्ते - ३.८.२.[१३]

स यत्राच्छ्यति । यत एतल्लोहितमुत्पतति तदुभयतोऽनक्ति रक्षसां भागोऽसीति रक्षसां ह्येष भागो यदसृक् - ३.८.२.[१४]



तदुपास्याभितिष्ठति । इदमहं रक्षोऽभितिष्ठामीदमहं रक्षोऽवबाध इदमहं रक्षोऽधमं तमो नयामीति तद्यज्ञेनैवैतन्नाष्ट्रा रक्षांस्यवबाधते तद्यदमूलमुभयतः परिच्छिन्नं भवत्यमूलं वा इदमुभयतः परिच्छिन्नं रक्षोऽन्तरिक्षमनुचरति यथायं पुरुषोऽमूल उभयतः परिच्छिन्नोऽन्तरिक्षमनुचरति तस्मादमूलमुभयतः परिच्छिन्नम्भवति - ३.८.२.[१५]

अथ वपामुत्खिदन्ति । तया वपाश्रपण्यौ प्रोर्णौति घृतेन द्यावापृथिवी प्रोर्णुवाथामिति तदिमे द्यावापृथिवी ऊर्जा रसेन भाजयत्यनयोरूर्जं रसं दधाति ते रसवत्या उपजीवनीये इमाः प्रजा उपजीवन्ति - ३.८.२.[१६]

कार्ष्मर्यमय्यौ वपाश्रपण्यौ भवतः । यत्र वै देवा अग्रे पशुमालेभिरे तदुदीचः कृष्यमाणस्यावाङ्मेधः पपात स एष वनस्पतिरजायत तद्यत्कृष्यमाणस्यावाङपतत्तस्मात्कार्ष्मर्यस्तेनैवैनमेतन्मेधेन समर्धयति कृत्स्नं करोति तस्मात्कार्ष्मर्यमय्यौ वपाश्रपण्यौ भवतः - ३.८.२.[१७]

तां परिवासयति । तां पशुश्रपणे प्रतपति तथो हास्यात्रापि श्रृता भवति पुनरुल्मुकमग्नीदादत्ते ते जघनेन चात्वालं यन्ति त आयन्त्यागच्छन्त्याहवनीयं स एतत्तृणमध्वर्युराहवनीये प्रास्यति वायो वै स्तोकानामिति स्तोकानां हैषा समित् - ३.८.२.[१८]

अथोत्तरतस्तिष्ठन्वपां प्रतपति । अत्येष्यन्वा एषोऽग्निं भवति दक्षिणतः परीत्य श्रपयिष्यंस्तस्मा एवैतन्निह्नुते तथो हैनमेषोऽतियन्तमग्निर्न हिनस्ति तस्मादुत्तरतस्तिष्ठन् वपां प्रतपति - ३.८.२.[१९]

तामन्तरेण यूपं चाग्निं च हरन्ति । तद्यत्समया न हरन्ति येनान्यानि हवींषि हरन्ति नेदश्रृतया समया यज्ञं प्रसजामेति यदु बाह्येन न हरन्त्यग्रेण यूपम्बहिर्द्धा यज्ञात्कुर्युस्तस्मादन्तरेण यूपं चाग्निं च हरन्ति दक्षिणतः परीत्य प्रतिप्रस्थाता श्रपयति - ३.८.२.[२०]



अथ स्रुवेणोपहत्याज्यम् । अध्वर्युर्वपामभिजुहोत्यग्निराज्यस्य वेतु स्वाहेति तथो हास्यैते स्तोकाः श्रृताः स्वाहाकृता आहुतयो भूत्वाग्निं प्राप्नुवन्ति - ३.८.२.[२१]

अथाह स्तोकेभ्योऽनुब्रूहीति । स आग्नेयी स्तोकेभ्योऽन्वाह तद्यदाग्नेयी स्तोकेभ्योऽन्वाहेतः प्रदाना वै वृष्टिरितो ह्यग्निर्वृष्टिं वनुते स एतै स्तोकैरेतान्स्तोकान्वनुते त एते स्तोका वर्षन्ति तस्मादाग्नेयी स्तोकेभ्योऽन्वाह यदा श्रृता भवति - ३.८.२.[२२]

अथाह प्रतिप्रस्थाता श्रृता प्रचरेति । स्रुचावादायाध्वर्युरतिक्रम्याश्राव्याह स्वाहाकृतिभ्यः प्रेष्येति वषट्कृते जुहोति - ३.८.२.[२३]

हुत्वा वपामेवाग्रेऽभिघारयति । अथ पृषदाज्यं तदु ह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्ति प्राणः पृषदाज्यमिति वदन्तस्तदु ह याज्ञवल्क्यं

चरकाध्वर्युरनुव्याजहारैवं कुर्वन्तं प्राणं वा अयमन्तरगादध्वर्युः प्राण एनं हास्यतीति - ३.८.२.[२४]

स ह स्म बाहू अन्ववेक्ष्याह । इमौ पलितौ बाहू क्व स्विद्ब्राह्मणस्य वचो बभूवेति न तदाद्रियेतोत्तमो वा एष प्रयाजो भवतीदं वै हविर्यज्ञ उत्तमे प्रयाजे ध्रुवामेवाग्रेऽभिघारयति तस्यै हि प्रथमावाज्यभागौ होष्यन्भवति वपां वा अत्र प्रथमां होष्यन्भवति तस्माद्वपामेवाग्रेऽभिघारयेदथ पृषदाज्यमथ यत्पशुं नाभिघारयति नेदश्रृतमभिघारयाणीत्येतदेवास्य सर्वः पशुरभिघारितो भवति यद्वपामभिघारयति तस्माद्वपामेवाग्रेऽभिघारयेदथ पृषदाज्यम् - ३.८.२.[२५]

अथाज्यमुपस्तृणीते । अथ हिरण्यशकलमवदधात्यथ वपामवद्यन्नाहाग्नीषोमाभ्यां छागस्य वपायै मेदसोऽनुब्रूहीत्यथ हिरण्यशकलमवदधात्यथोपरिष्टाद्विराज्यस्याभिघारयति - ३.८.२.[२६]



तद्यद्धिरण्यशकलावभितो भवतः । घ्नन्ति वा एतत्पशुं यदग्नौ जुह्वत्यमृतमायुर्हिरण्यं तदमृत आयुषि प्रतितिष्ठति तथात उदेति तथा संजीवति तस्माद्धिरण्यशकलावभितो भवत आश्राव्याहाग्नीषोमाभ्यां छागस्य वपां मेदः प्रेष्येति न प्रस्थितमित्याह प्रसुते प्रस्थितमिति वषट्कृते जुहोति - ३.८.२.[२७]

हुत्वा वपां समीच्यौ । वपाश्रपण्यौ कृत्वानुप्रास्यति स्वाहाकृते ऊर्ध्वनभसम्मारुतं गच्छतमिति नेदिमे अमुया सतो याभ्यां वपामशिश्रपामेति - ३.८.२.[२८]

तद्यद्वपया चरन्ति । यस्यै वै देवतायै पशुमालभन्ते तामेवैतद्देवतामेतेन मेधेन प्रीणाति सैषा देवतैतेन मेधेन प्रीता शान्तोत्तराणि हवींषि श्रप्यमाणान्युपरमति तस्माद्वपया चरन्ति - ३.८.२.[२९]

अथ चात्वाले मार्जयन्ते । क्रूरी वा एतत्कुर्वन्ति यत्संज्ञपयन्ति यद्विशासति शान्तिरापस्तदद्भिः शान्त्या शमयन्ते तदद्भिः संदधते तस्माच्चात्वाले मार्जयन्ते - ३.८.२.[३०]

##३.८.३.
यद्देवत्यः पशुर्भवति । तद्देवत्यं पुरोडाशमनुनिर्वपति तद्यत्पुरोडाशमनुनिर्वपति सर्वेषां वा एष पशूनां मेधो यद्व्रीहियवौ तेनैवैनमेतन्मेधेन समर्धयति कृत्स्नं करोति तस्मात्पुरोडाशमनुनिर्वपति - ३.८.३.[१]

अथ यद्वपया प्रचर्य । एतेन पुरोडाशेन प्रचरति मध्यतो वा इमां वपामुत्खिदन्ति मध्यत एवैनमेतेन मेधेन समर्धयति कृत्स्नं करोति तस्माद्वपया प्रचर्यैतेन पुरोडाशेन प्रचरत्येष न्वेवैतस्य बन्धुर्यत्र क्व चैष पशुं पुरोडाशोऽनुनिरुप्यते - ३.८.३.[२]



अथ पशुं विशास्ति । त्रिः प्रच्यावयतात्त्रिः प्रच्युतस्य हृदयमुत्तमं कुरुतादिति त्रिवृद्धि यज्ञः - ३.८.३.[३]

अथ शमितारं संशास्ति । यत्त्वा पृच्छाच्छृतं हविः शमिता३रिति शृतमित्येव ब्रूतान्न शृतम्भगवो न शृतं हीति - ३.८.३.[४]

अथ जुह्वा पृषदाज्यस्योपहत्य । अध्वर्युरुपनिष्क्रम्य पृच्छति शृतं हविः शमिता३रिति शृतमित्याह तद्देवानामित्युपांश्वध्वर्युः - ३.८.३.[५]

तद्यत्पृच्छति । शृतं वै देवानां हविर्नाशृतं शमिता वै तद्वेद यदि शृतं वा भवत्यशृतं वा - ३.८.३.[६]

तद्यत्पृच्छति । श्रृतेन प्रचराणीति तद्यद्यश्रृतं भवति श्रृतमेव देवानां हविर्भवति श्रृतं यजमानस्यानेना अध्वर्युर्भवति शमितरि तदेनो भवति त्रिष्कृत्वः पृच्छति त्रिवृद्धि यज्ञोऽथ यदाह तद्देवानामिति तद्धि देवानां यच्छृतं तस्मादाह तद्देवानामिति - ३.८.३.[७]

स हृदयमेवाग्रेऽभिघारयति । आत्मा वै मनो हृदयं प्राणः पृषदाज्यमात्मन्येवैतन्मनसि प्राणं दधाति तथैतज्जीवमेव देवानां हविर्भवत्यमृतममृतानाम् - ३.८.३.[८]

सोऽभिघारयति । सं ते मनो मनसा सं प्राणः प्राणेन गच्छतामिति न स्वाहाकरोति न ह्येषाहुतिरुद्वासयन्ति पशुम् - ३.८.३.[९]

तं जघनेन चात्वालमन्तरेण यूपं चाग्निं च हरन्ति । तद्यत्समया न हरन्ति नान्यानि हवींषि हरन्ति श्रृतं सन्तं नेदङ्गशो विकृत्तेन क्रूरीकृतेन समया यज्ञं प्रसजामेति यदु बाह्येन न हरन्त्यग्रेण यूपं बहिर्द्धा ह यज्ञात्कुर्युस्तस्मादन्तरेण यूपं चाग्निं च हरन्ति दक्षिणतो निधाय प्रतिप्रस्थातावद्यति प्लक्षशाखा उत्तरबर्हिर्भवन्ति ता अध्यवद्यति तद्यत्प्लक्षशाखा उत्तरबर्हिर्भवन्ति - ३.८.३.[१०]



यत्र वै देवाः । अग्रे पशुमालेभिरे तं त्वष्टा शीर्षतोऽग्रेऽभ्युवामोतैवं चिन्नालभेरन्निति त्वष्टुर्हि पशवः स एष शीर्षन्मस्तिष्कोऽनूक्यश्च मज्जा तस्मात्स वान्त इव त्वष्टा ह्येतमभ्यवमत्तस्मात्तं नाश्नीयात्त्वष्टुर्ह्येतदभिवान्तम् - ३.८.३.[११]

तस्यावाङ्गेधः पपात । स एष वनस्पतिरजायत तं देवाः प्रापश्यंस्तस्मात्प्रख्यः प्रख्यो ह वै नामैतद्यत्प्लक्ष इति तेनैवैनमेतन्मेधेन समर्धयति कृत्स्नं करोति तस्मात्प्लक्षशाखा उत्तरबर्हिर्भवन्ति - ३.८.३.[१२]

अथाज्यमुपस्तृणीते । जुह्वां चोपभृति च वसाहोमहवन्यां समवत्तधान्यामथ हिरण्यशकलाववदधाति जुह्वां चोपभृति च - ३.८.३.[१३]

अथ मनोतायै हविषोऽनुवाच आह । तद्यन्मनोतायै हविषोऽनुवाच आह सर्वा ह वै देवताः पशुमालभ्यमानमुपसंगच्छन्ते मम नाम ग्रहीष्यति मम नाम ग्रहीष्यतीति सर्वासां हि देवतानां हविः पशुस्तासां सर्वासां देवतानां पशौ मनांस्योतानि भवन्ति तान्येवैतत्प्रीणाति तथो हामोघाय देवतानाम्मनांस्युपसंगतानि भवन्ति तस्मान्मनोतायै हविषोऽनुवाच आह - ३.८.३.[१४]

स हृदयस्यैवाग्रेऽवद्यति । तद्यन्मध्यतः सतो हृदयस्याग्रेऽवद्यति प्राणो वै हृदयमतो ह्ययमूर्ध्वः प्राणः संचरति प्राणो वै पशुर्यावद्ध्येव प्राणेन प्राणिति तावत्पशुरथ यदास्मात्प्राणोऽपक्रामति दार्वेव तर्हि भूतोऽनर्थ्यः शेते - ३.८.३.[१५]

हृदयमु वै पशुः । तदस्यात्मन एवाग्रेऽवद्यति तस्माद्यदि किंचिदवदानं हीयेत न तदाद्रियेत सर्वस्य हैवास्य तत्पशोरवत्तं भवति यद्धृदयस्याग्रेऽवद्यति तस्मान्मध्यतः सतो हृदयस्यैवाग्रेऽवद्यत्यथ यथापूर्वम् - ३.८.३.[१६]



अथ जिह्वायै । सा हीयं पूर्वार्धात्प्रतिष्ठत्यथ वक्षसस्तद्धि ततोऽथैकचरस्य दोष्णोऽथ पार्श्वयोरथ तनिम्नोऽथ वृक्कयोः - ३.८.३.[१७]

गुदं त्रेधा करोति । स्थविमोपयङ्ग्यो मध्यं जुह्वां द्वेधा कृत्वावद्यत्यणिम त्र्यङ्गेष्वथैकचरायै श्रोणेरेतावन्नु जुह्वामवद्यति - ३.८.३.[१८]

अथोपभृति । त्र्यङ्ग्यस्य दोष्णो गुदं द्वेधा कृत्वावद्यति त्र्यङ्ग्यायै श्रोणेरथ हिरण्यशकलाववदधात्यथोपरिष्टादाज्यस्याभिघारयति - ३.८.३.[१९]

अथ वसाहोमं गृह्णाति । रेडसीति लेलयेव हि यूस्तस्मादाह रेडसीत्यग्निष्ट्वा श्रीणात्वित्यग्निर्ह्येतच्छ्रपयति तस्मादाहाग्निष्ट्वा श्रीणात्वित्यापस्त्वा समरिणन्नित्यापो ह्येतमङ्गेभ्यो रसं सम्भरन्ति तस्मादाहापस्त्वा समरिणन्निति - ३.८.३.[२०]

वातस्य त्वा ध्राज्या इति । अन्तरिक्षं वा अयमनुपवते योऽयं पवतेऽन्तरिक्षाय वै गृह्णाति तस्मादाह वातस्य त्वा ध्राज्या इति - ३.८.३.[२१]

पूष्णो रंह्या इति । एष वै पूष्णो रंहिरेतस्मा उ हि गृह्णाति तस्मादाह पूष्णो रंह्या इति - ३.८.३.[२२]

ऊष्मणो व्यथिषदिति । एष वा ऊष्मैतस्मा उ हि गृह्णाते तस्मादाहोष्मणो व्यथिषदित्यथोपरिष्टाद्विराज्यस्याभिघारयति - ३.८.३.[२३]

अथ पार्श्वेन वासिना वा प्रयौति । प्रयुतं द्वेष इति तन्नाष्ट्रा एवैतद्रक्षांस्यतोऽपहन्ति - ३.८.३.[२४]

अथ यद्यूष्परिशिष्यते । तत्समवत्तधान्यामानयति तद्धृदयं प्रास्यति जिह्वां वक्षस्तनिम मतस्ने वनिष्ठुमथोपरिष्टाद्विराज्यस्याभिघारयति - ३.८.३.[२५]



तद्यद्धिरण्यशकलावभितो भवतः । घ्नन्ति वा एतत्पशुं यदग्नौ जुह्वत्यमृतमायुर्हिरण्यं तदमृत आयुषि प्रतितिष्ठति तथात उदेति तथा संजीवति तस्माद्धिरण्यशकलावभितो भवतः - ३.८.३.[२६]

अथ यदक्ष्णयावद्यति । सव्यस्य च दोष्णो दक्षिणायाश्च श्रोणेर्दक्षिणस्य च दोष्णः सव्यायाश्च श्रोणेस्तस्मादयं पशुरक्ष्णया पदो हरत्यथ यत्सम्यगवद्येत्समीचो हैवायम्पशुः पदो हरेत्तस्मादक्ष्णयावद्यत्यथ यन्न शीर्ष्णोऽवद्यति नांसयोर्नानूकस्य नापरसक्थयोः - ३.८.३.[२७]

असुरा ह वा अग्रे पशुमालेभिरे । तद्देवा भीषा नोपावेयुस्तान्हेयं पृथिव्युवाच मैतदाद्ब्वमहं व एतस्याध्यक्षा भविष्यामि यथा यथैत एतेन चरिष्यन्तीति - ३.८.३.[२८]

सा होवाच । अन्यतरामेवाहुतिमहौषुरन्यतरां पर्यशिषन्निति स याम्पर्यशिंषंस्तानीमान्यवदानानि ततो देवाः स्विष्टकृते त्र्यङ्गाण्यपाभजंस्तस्मात्त्र्यङ्गाण्यथासुरा अवाद्यञ्छीर्ष्णोऽसयोरनूकस्यापरसक्थ्योस्तस्मात्तेषां नावद्येद्यन्त्वेव त्वष्टानूकमभ्यवमत्तस्मादनूकस्य नावद्येदथाहाग्नीषोमाभ्यां छागस्य हविषोऽनुब्रूहीत्याश्राव्याहाग्नीषोमाभ्यां छागस्य हविः प्रेष्येति न प्रस्थितमित्याह प्रसुते प्रस्थितमिति - ३.८.३.[२९]

अन्तरेणार्धर्चौ याज्यायै वसाहोमं जुहोति । इतो वा अयमूर्ध्वो मेध उत्थितो यमस्या इमं रसं प्रजा उपजीवन्त्यर्वाचीनं दिवो रसो वै वसाहोमो रसो मेधो रसेनैवैतद्रसं तीव्रीकरोति तस्मादयं रसोऽद्यमानो न क्षीयते - ३.८.३.[३०]

तद्यदन्तरेण । अर्धर्चौ याज्यायै वसाहोमं जुहोतीयं वा अर्धर्चोऽसौ द्यौरर्धर्चोऽन्तरा वै द्यावापृथिवी अन्तरिक्षमन्तरिक्षाय वै जुहोति तस्मादन्तरेणार्धर्चौ याज्यायै वसाहोमं जुहोति - ३.८.३.[३१]



स जुहोति । घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहेत्येतेन वैश्वदेवेन यजुषा जुहोति वैश्वदेवं वा अन्तरिक्षं तद्यदेनेनेमाःप्रजाः प्राणत्यश्चोदानत्यश्चान्तरिक्षमनुचरन्ति तेन वैश्वदेवं वषट्कृते जुहोति यानि जुह्वामवदानानि भवन्ति - ३.८.३.[३२]

अथ जुह्वा पृषदाज्यस्योपघ्नन्नाह । वनस्पतयेऽनुब्रूहीत्याश्राव्याह वनस्पतये प्रेष्येति वषट्कृते जुहोति तद्यद्वनस्पतये जुहोत्येतमेवैतद्वज्रं यूपम्भागिनं करोति सोमो वै वनस्पतिः पशुमेवैतत्सोमं करोति तद्यदन्तरेणोभे आहुती जुहोति तयोभयं व्याप्नोति तस्मादन्तरेणोभे आहुती जुहोति - ३.८.३.[३३]

अथ यान्युपभृत्यवदानानि भवन्ति । तानि समानयमान आहाग्नये स्विष्टकृतेऽनुब्रूहीत्याश्राव्याहाग्नये स्विष्टकृते प्रेष्येति वषट्कृते जुहोति - ३.८.३.[३४]

अथ यद्वसाहोमस्य परिशिष्यते । तेन दिशो व्याघारयति दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहेति रसो वै वसाहोमः सर्वास्वेवैतद्दिक्षु रसं दधाति तस्मादयं दिशिदिशि रसोऽभिगम्यते - ३.८.३.[३५]

अथ पशुं सम्मृशति । एतर्हि सम्मर्शनस्य कालोऽथ यत्पुरा सम्मृशति य इम उपतिष्ठन्ते ते विमथिष्यन्त इति शङ्कमानो यद्यु विमाथान्न शङ्केतात्रैव सम्मृशेत् - ३.८.३.[३६]

ऐन्द्रः प्राणः । अङ्गेअङ्गे निदीध्यदैन्द्र उदानो अङ्गेअङ्गे निधीत इति यदङ्गशो विकृत्तो भवति तत्प्राणोदानाभ्यां संदधाति देव त्वष्टर्भूरि ते संसमेतु सलक्ष्मा यद्विषुरूपं भवातीति कृत्स्नव्रतमेवैतत्करोति देवत्रा यन्तमवसे सखायोऽनु त्वा मातापितरो मदन्त्विति तद्यत्रैनमहौषीत्तदेनं कृत्स्नं कृत्वानुसमस्यति सोऽस्य कृत्स्नोऽमुष्मिंलोक आत्मा भवति - ३.८.३.[३७]

##३.८.४.
त्रीणि ह वै पशोरेकादशानि । एकादश प्रयाजा एकादशानुयाजा एकादशोपयजो दश पाण्या अङ्गुलयो दश पाद्या दश प्राणाः प्राण उदानो व्यान इत्येतावान्वै पुरुषो यः परार्ध्यः पशूनां यं सर्वेऽनु पशवः - ३.८.४.[१]

तदाहुः । किं तद्यज्ञे क्रियते येन प्राणः सर्वेभ्योऽङ्गेभ्यः शिव इति - ३.८.४.[२]

यदेव गुदं त्रेधा करोति । प्राणो वै गुदः सोऽयं प्राङाततस्तमयं प्राणोऽनुसंचरति - ३.८.४.[३]

स यदेव गुदं त्रेधा करोति । तृतीयमुपयड्भ्यस्तृतीयं जुह्वां तृतीयमुपभृति तेन प्राणः सर्वेभ्योऽङ्गेभ्यः शिवः - ३.८.४.[४]

स ह त्वेव पशुमालभेत । य एनं मेधमुपनयेद्यदि कृशः स्याद्यदुदर्यस्य मेदसः परिशिष्यत तद्गुदे न्यृषेत्प्राणो वै गुदः सोऽयं प्राङाततस्तमयम्प्राणोऽनुसंचरति प्राणो वै पशुर्यावद्ध्येव प्राणेन प्राणिति तावत्पशुरथ यदास्मात्प्राणोऽपक्रामति दार्वेव तर्हि भूतोऽनर्थ्यः शेते - ३.८.४.[५]

गुदो वै पशुः । मेदो वै मेधस्तदेनं मेधमुपनयति यद्यु अंसलो भवति स्वयमुपेत एव तर्हि मेधं भवति - ३.८.४.[६]

अथ पृषदाज्यं गृह्णाति । द्वयं वा इदं सर्पिश्चैव दधि च द्वन्द्वं वै मिथुनं प्रजननं मिथुनमेवैतत्प्रजननं क्रियते- ३.८.४.[७]



तेनानुयाजेषु चरति । पशवो वा अनुयाजाः पयः पृषदाज्यं तत्पशुष्वेवैतत्पयो दधाति तदिदं पशुषु पयो हितं प्राणो हि पृषदाज्यमन्नं हि पृषदाज्यमन्नं हि प्राणः - ३.८.४.[८]

तेन पुरस्तादनुयाजेषु चरति । स योऽयं पुरस्तात्प्राणस्तमेवैतद्दधाति तेन पश्चादुपयजति स योऽयं पश्चात्प्राणस्तमेवैतद्दधाति ताविमा उभयतः प्राणौ हितौ यश्चायमुपरिष्टाद्यश्चाधस्तात् - ३.८.४.[९]

तद्वा एतदेको द्वाभ्यां वषट्करोति । अध्वर्यवे च यश्चैष उपयजत्यथ यद्यजन्तमुपयजति तस्मादुपयजो नामाथ यदुपयजति प्रैवैतज्जनयति पश्चाद्ध्युपयजति पश्चाद्धि योषायै प्रजाः प्रजायन्ते- ३.८.४.[१०]

स उपयजति । समुद्रं गच्छ स्वाहेत्यापो वै समुद्र आपो रेतो रेत एवैतत्सिञ्चति - ३.८.४.[११]

अन्तरिक्षं गच्छ स्वाहेति । अन्तरिक्षं वा अनु प्रजाः प्रजायन्तेऽन्तरिक्षमेवैतदनुप्रजनयति - ३.८.४.[१२]

देवं सवितारं गच्छ स्वाहेति सविता वै देवानां प्रसविता सवितृप्रसूत एवैतत्प्रजनयति - ३.८.४.[१३]

मित्रावरुणौ गच्छ स्वाहेति । प्राणोदानौ वै मित्रावरुणौ प्राणोदानावेवैतत्प्रजासु दधाति- ३.८.४.[१४]

अहोरात्रे गच्छ स्वाहेति । अहोरात्रे वा अनु प्रजाः प्रजायन्तेऽहोरात्रे एवैतदनुप्रजनयति - ३.८.४.[१५]



छन्दांसि गच्छ स्वाहेति । सप्त वै छन्दांसि सप्त ग्राम्याः पशवः सप्तारण्यास्तानेवैतदुभयान्प्रजनयति - ३.८.४.[१६]

द्यावापृथिवी गच्छ स्वाहेति । प्रजापतिर्वै प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्याम्पर्यगृह्णात्ता इमा द्यावापृथिवीभ्यां परिगृहीतास्तथो एवैष एतत्प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां परिगृह्णाति - ३.८.४.[१७]

अथात्युपयजति । स यन्नात्युपयजेद्यावत्यो हैवाग्रे प्रजाः सृष्टास्तावत्यो हैव स्युर्न प्रजायेरन्नथ यदत्युपयजति प्रैवैतज्जनयति तस्मादिमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते - ३.८.४.[१८]

३.८.५.

सोऽत्युपयजति । यज्ञं गच्छ स्वाहेत्यापो वै यज्ञ आपो रेतो रेत एवैतत्सिञ्चति - ३.८.५.[१]

सोमं गच्छ स्वाहेति । रेतो वै सोमो रेत एवैतत्सिञ्चति - ३.८.५.[२]

दिव्यं नभो गच्छ स्वाहेति । आपो वै दिव्यं नभ आपो रेतो रेत एवैतत्सिञ्चति - ३.८.५.[३]

अग्निं वैश्वानरं गच्छ स्वाहेति । इयं वै पृथिव्यग्निर्वैश्वानरः सेयम्प्रतिष्ठेमामेवैतत्प्रतिष्ठामभिप्रजनयति - ३.८.५.[४]

अथ मुखं विमृष्टे । मनो मे हार्दि यच्छेति तथो होपयष्टात्मानं नानुप्रवृणक्ति - ३.८.५.[५]

अथ जाघन्या पत्नीः संयाजयन्ति । जघनार्द्धो वै जाघनी जघनार्द्धाद्वै योषायै प्रजाः प्रजायन्ते तत्प्रैवैतज्जनयति यज्जाघन्या पत्नीः संयाजयन्ति - ३.८.५.[६]



अन्तरतो देवानां पत्नीभ्योऽवद्यति । अन्तरतो वै योषायै प्रजाः प्रजायन्त उपरिष्टादग्नये गृहपतय उपरिष्टाद्वै वृषा योषामधिद्रवति - ३.८.५.[७]

अथ हृदयशूलेनावभृथं यन्ति । पशोर्ह वा आलभ्यमानस्य हृदयं शुक्समभ्यवैति हृदयाद्धृदयशूलमथ यच्छृतस्य परितृन्दन्ति तदलंजुषं तस्मादु परितृद्यैव शूलाकुर्यात्तत्त्रिः प्रच्युते पशौ हृदयं प्रवृह्योत्तमम्प्रत्यवदधाति - ३.८.५.[८]

अथ हृदयशूलं प्रयच्छति । तन्न पृथिव्यां परास्येन्नाप्सु स यत्पृथिव्याम्परास्येदोषधीश्च वनस्पतींश्चैषा शुक्प्रविशेद्यदप्सु परास्येदप एषा शुक्प्रविशेत्तस्मान्न पृथिव्यां नाप्सु - ३.८.५.[९]

अप एवाभ्यवेत्य । यत्र शुष्कस्य चार्द्रस्य च संधिः स्यात्तदुपगूहेद्यद्यु ऽअभ्यवायनाय ग्लायेदग्रेण यूपमुदपात्रं निनीय यत्र शुष्कस्य चार्द्रस्य च संधिर्भवति तदुपगूहति नापो नौषधीर्हिंसीरिति तथा नापो नौषधीर्हिनस्ति धाम्नोधाम्नो राजंस्ततो वरुण नो मुञ्च

यदाहुरघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्चेति तदेनं सर्वस्माद्वरुणपाशात्सर्वस्माद्वरुण्यात्प्रमुञ्चति - ३.८.५.[१०]

अथाभिमन्त्रयते । सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति यत्र वा एतेन प्रचरन्त्यापश्च ह वा अस्मात्तावदोषधयश्चापक्रम्येव तिष्ठन्ति तदु ताभिर्मित्रधेयं कुरुते तथो हैनं ताः पुनः प्रविशन्त्येषो तत्र प्रायश्चित्तिः क्रियते स वै नाग्नीषोमीयस्य पशोः करोति नाग्नेयस्य वशाया एवानूबन्ध्यायै तां हि सर्वोऽनु यज्ञः संतिष्ठत एतदु हास्याग्नीषोमीयस्य च पशोराग्नेयस्य च हृदयशूलेन चरितं भवति यद्वशायाश्चरन्ति - ३.८.५.[११]

##३.९.१ पश्वेकादशिनी
प्रजापतिर्वै प्रजाः ससृजानो रिरिचान इवामन्यत । तस्मात्पराच्यः प्रजा आसुर्नास्य प्रजाः श्रियेऽन्नाद्याय तस्थिरे - ३.९.१.[१]



स ऐक्षतारिक्ष्यहम् । अस्माऽउ कामायासृक्षि न मे स कामः समार्द्धि पराच्यो मत्प्रजा अभूवन्न मे प्रजाः श्रियेऽन्नाद्यायास्थिषतेति - ३.९.१.[२]

स ऐक्षत प्रजापतिः । कथं नु पुनरात्मानमाप्याययेयोप मा प्रजाः समावर्तेरंस्तिष्ठेरन्मे प्रजाः श्रियेऽन्नाद्यायेति - ३.९.१.[३]

सोऽर्चञ्छ्राम्यंश्चचार प्रजाकामः । स एतामेकादशिनीमपश्यत्स एकादशिन्येष्ट्वाप्रजापतिः पुनरात्मानमाप्याययतोपैनं प्रजाः समावर्तन्तातिष्ठन्तास्य प्रजाः श्रियेऽन्नाद्याय स वसीयानेवेष्ट्वाभवत् - ३.९.१.[४]

तस्मै कमेकादशिन्या यजेत । एवं हैव प्रजया पशुभिराप्यायत उपैनं प्रजाः समावर्तन्ते तिष्ठन्तेऽस्य प्रजाः श्रियेऽन्नाद्याय स वसीयानेवेष्ट्वा भवत्येतस्मै कमेकादशिन्या यजते - ३.९.१.[५]

स आग्नेयं प्रथमं पशुमालभते । अग्निर्वै देवतानां मुखं प्रजनयिता स प्रजापतिः स उ एव यजमानस्तस्मादाग्नेयो भवति - ३.९.१.[६]

अथ सारस्वतम् । वाग्वै सरस्वती वाचैव तत्प्रजापतिः पुनरात्मानमाप्याययत वागेनमुपसमावर्तत वाचमनुकामात्मनोऽकुरुत वाचो एवैष एतदाप्यायते वागेनमुपसमावर्तते वाचमनुकामात्मनः कुरुते - ३.९.१.[७]

अथ सौम्यम् । अन्नं वै सोमोऽन्नेनैव तत्प्रजापतिः पुनरात्मानमाप्याययतान्नमेनमुपसमावर्ततान्नमनुकमात्मनोऽकुरुतान्नेनो एवैष एतदाप्यायतेऽन्नमेनमुपसमावर्ततेऽन्नमनुकमात्मनः कुरुते - ३.९.१.[८]

तद्यत्सारस्वतमनु भवति । वाग्वै सरस्वत्यन्नं सोमस्तस्माद्यो वाचा प्रसाम्यन्नादो हैव भवति - ३.९.१.[९]



अथ पौष्णम् । पशवो वै पूषा पशुभिरेव तत्प्रजापतिः पुनरात्मानमाप्याययत पशव एनमुपसमावर्तन्त पशूननुकानात्मनोऽकुरुत पशुभिर्वेवैष एतदाप्यायते पशव एनमुपसमावर्तन्ते पशूननुकानात्मनः कुरुते - ३.९.१.[१०]

अथ बार्हस्पत्यम् । ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैतत्प्रजापतिः पुनरात्मानमाप्याययत ब्रह्मैनमुपसमावर्तत ब्रह्मानुकमात्मनोऽकुरुत ब्रह्मणो एवैष एतदाप्यायते ब्रह्मैनमुपसमावर्तते ब्रह्मानुकमात्मनः कुरुते - ३.९.१.[११]

तद्यत्पौष्णमनु भवति । पशवो वै पूषा ब्रह्म बृहस्पतिस्तस्माद्ब्राह्मणः पशूनभिधृष्णुतमः पुराहिता ह्यस्य भवन्ति मुख आहितास्तस्मादु तत्सर्वं दत्त्वाजिनवासी चरति - ३.९.१.[१२]

अथ वैश्वदेवम् । सर्वं वै विश्वे देवाः सर्वेणैव तत्प्रजापतिः पुनरात्मानमाप्याययत सर्वमेनमुपसमावर्तत सर्वमनुकमात्मनोऽकुरुत सर्वेणो एवैष एतदाप्यायते सर्वमेनमुपसमावर्तते सर्वमनुकमात्मनः कुरुते - ३.९.१.[१३]

तद्यद्बार्हस्पत्यमनु भवति । ब्रह्म वै बृहस्पतिः सर्वमिदं विश्वे देवा अस्यैवैतत्सर्वस्य ब्रह्म मुखं करोति तस्मादस्य सर्वस्य ब्राह्मणो मुखम् - ३.९.१.[१४]

अथैन्द्रम् । इन्द्रियं वै वीर्यमिन्द्रमिन्द्रियेणैव तद्वीर्येण प्रजापतिः पुनरात्मानमाप्याययतेन्द्रियमेनं वीर्यमुपसमावर्ततेन्द्रियं वीर्यमनुकमात्मनोऽकुरुतेन्द्रियेणो एवैष एतद्वीर्येणाप्यायत इन्द्रियमेनं वीर्यमुपसमावर्तत इन्द्रियं वीर्यमनुकमात्मनः कुरुते - ३.९.१.[१५]

तद्यद्वैश्वदेवमनु भवति । क्षत्रं वा इन्द्रो विशो विश्वे देवा अन्नाद्यमेवास्मा ऽएतत्पुरस्तात्करोति - ३.९.१.[१६]



अथ मारुतम् । विशो वै मरुतो भूमो वै विड्भूम्नैव तत्प्रजापतिः पुनरात्मानमाप्याययत भूमैनमुपसमावर्तत भूमानमनुकमात्मनोऽकुरुत भूम्नो एवैष एतदाप्यायते भूमैनमुपसमावर्तते भूमानमनुकमात्मनः कुरुते - ३.९.१.[१७]

तद्यदैन्द्रमनु भवति । क्षत्रं वा इन्द्रो विशो विश्वे देवा विशो वै मरुतो विशैवैतत्क्षत्रं परिबृंहति तदिदं क्षत्रमुभयतो विशा परिबृढम् - ३.९.१.[१८]

अथैन्द्राग्नम् । तेजो वा अग्निरिन्द्रियं वीर्यमिन्द्र उभाभ्यामेव तद्वीर्याभ्याम्प्रजापतिः पुनरात्मानमाप्याययतोभे एनं वीर्ये उपसमावर्तेतामुभे वीर्ये अनुके आत्मनो कुरुतोभाभ्याम्वेवैष एतद्वीर्याभ्यामाप्यायत उभे एनं वीर्ये उपसमावर्तेते उभे वीर्ये अनुके आत्मनः कुरुते - ३.९.१.[१९]

अथ सावित्रम् । सविता वै देवानां प्रसविता तथो हास्मा एते सवितृप्रसूता एव सर्वे कामाः समृध्यन्ते - ३.९.१.[२०]

अथ वारुणमन्तत आलभते । तदेनं सर्वस्माद्वरुणपाशात्सर्वस्माद्वरुण्यात्प्रमुञ्चति - ३.९.१.[२१]

तस्माद्यदि यूपैकादशिनी स्यात् । आग्नेयमेवाग्निष्ठे नियुञ्ज्यादथेतरान्व्युपनयेयुर्यथापूर्वम् - ३.९.१.[२२]

यद्यु पश्वेकादशिनी स्यात् । आग्नेयमेव यूप ऽआलभेरन्नथेतरान्यथापूर्वम् - ३.९.१.[२३]

तान्यत्रोदीचो नयन्ति । आग्नेयमेव प्रथमं नयन्त्यथेतरान्यथापूर्वम् - ३.९.१.[२४]



तान्यत्र निविध्यन्ति । आग्नेयमेव प्रथमं दक्षिणार्ध्यं निविध्यन्त्यथेतरानुदीचोऽतिनीय यथापूर्वम् - ३.९.१.[२५]

तेषां यत्र वपाभिः प्रचरन्ति । आग्नेयस्यैव प्रथमस्य वपया प्रचरन्त्यथेतरेषां यथापूर्वम् - ३.९.१.[२६]

तैर्यत्र प्रचरन्ति । आग्नेयेनैव प्रथमेन प्रचरन्त्यथेतरैर्यथापूर्वम् - ३.९.१.[२७]

##३.९.२ वसतीवरीग्रहणम्

यत्र वै यज्ञस्य शिरोऽच्छिद्यत । तस्य रसो द्रुत्वापः प्रविवेष तेनैवैतद्रसेनापः स्यन्दन्ते तमेवैतद्रसं स्यन्दमानं मन्यन्ते - ३.९.२.[१]

स यद्वसतीवरीरच्छैति । तमेवैतद्रसमाहृत्य यज्ञे दधाति रसवन्तं यज्ञं करोति तस्माद्वसतीवरीरच्छैति - ३.९.२.[२]

ता वै सर्वेषु सवनेषु विभजति । सर्वेष्वेवैतत्सवनेषु रसं दधाति सर्वाणि सवनानि रसवन्ति करोति तस्मात्सर्वेषु विभजति - ३.९.२.[३]

ता वै स्यन्दमानानां गृह्णीयात् । ऐद्धि स यज्ञस्य रसस्तस्मात्स्यन्दमानानां गृह्णीयात् - ३.९.२.[४]

गोपीथाय वा एता गृह्यन्ते । सर्वं वा इदमन्यदिलयति यदिदं किं चापि योऽयम्पवतेऽथैता एव नेलयन्ति तस्मात्स्यन्दमानानां गृह्णीयात् - ३.९.२.[५]

दिवा गृह्णीयात् । पश्यन्यज्ञस्य रसं गृह्णानीति तस्माद्दिवा गृह्णीयादेतस्मै वै गृह्णाति य एष तपति विश्वेभ्यो ह्येना देवेभ्यो गृह्णाति रश्मयो ह्यस्य विश्वेदेवास्तस्माद्दिवा गृह्णीयाद्दिवेव वा एष तस्माद्देव दिवा गृह्णीयात् - ३.९.२.[६]



एतद्ध वै विश्वे देवाः । यजमानस्य गृहानागच्छन्ति स यः पुरादित्यस्यास्तमयाद्वसतीवरीर्गृह्णाति यथा श्रेयस्यागमिष्यत्यावसथेनोपक्लृप्तेनोपासीतैवं तत्त एतद्धविः प्रविशन्ति तऽएतासु वसतीवरीषूपवसन्ति स उपवसथः - ३.९.२.[७]

स यस्यागृहीता अभ्यस्तमियात् । तत्र प्रायश्चित्तिः क्रियते यदि पुरेजानः स्यान्निनाह्याद्गृह्णीयाद्दिवा हि तस्य ताः पुरा गृहीता भवन्ति यद्यु अनीजानः स्याद्य एनमीजान उपावसितो वा पर्यवसितो वा स्यात्तस्य निनाह्याद्गृह्णीयाद्दिवा हि तस्य ताः पुरा गृहीता भवन्ति - ३.९.२.[८]

यद्यु एतदुभयं न विन्देत् । उल्कुषीमेवादायोपपरेयात्तामुपर्युपरि धारयन्गृह्णीयाद्धिरण्यं वोपर्युपरि धारयन्गृह्णीयात्तदेतस्य रूपं क्रियते य एष तपति - ३.९.२.[९]

अथातो गृह्णात्येव । हविष्मतीरिमा आप इति यज्ञस्य ह्यासु रसः प्राविशत्तस्मादाह हविष्मतीरिमा आप इति हविष्मानाविवासतीति हविष्मान्ह्येना यजमान आविवासति तस्मादाह हविष्मानाविवासतीति - ३.९.२.[१०]

हविष्मान्देवो अध्वर इति । अध्वरो वै यज्ञस्तद्यस्मै यज्ञाय गृह्णाति तं हविष्मन्तं करोति तस्मादाह हविष्मान्देवो अध्वर इति - ३.९.२.[११]

हविष्मानस्तु सूर्य इति । एतस्मै वै गृह्णाति य एष तपति विश्वेभ्यो ह्येना देवेभ्यो गृह्णाति रश्मयो ह्यस्य विश्वे देवास्तस्मादाह हविष्मानस्तु सूर्य इति - ३.९.२.[१२]

ता आहृत्य जघनेन गार्हपत्यं सादयति । अग्नेर्वोऽपन्नगृहस्य सदसि सादयामीत्यग्नेर्वोऽनार्तगृहस्य सदसि सादयामीत्येवैतदाहाथ यदाग्नीषोमीयः पशुः संतिष्ठतेऽथ परिहरति व्युत्क्रामतेत्याहाग्रेण हविर्धाने यजमान आस्ते ता आदत्ते - ३.९.२.[१३]



स दक्षिणेन निष्क्रामति । ता दक्षिणायां श्रोणौ सादयतीन्द्राग्न्योर्भागधेयी स्थेति विश्वेभ्यो ह्येना देवेभ्यो गृह्णातीन्द्राग्नी हि विश्वे देवास्ताः पुनराहृत्याग्रेण पत्नीं सादयति स जघनेन पत्नीं पर्येत्य ता आदत्ते - ३.९.२.[१४]

स उत्तरेण निष्क्रामति । ता उत्तरायां श्रोणौ सादयति मित्रावरुणयोर्भागधेयी स्थेति नैवं सादयेदतिरिक्तमेतन्नैवं सम्पत्सम्पद्यत इन्द्राग्न्योर्भागधेयी स्थेत्येव ब्रूयात्तदेवानतिरिक्तं तथा सम्पत्सम्पद्यते - ३.९.२.[१५]

गुप्त्यै वा एताः परिह्रियन्ते । अग्निः पुरस्तादथैताः समन्तं पल्यङ्ग्यन्ते नाष्ट्रा रक्षांस्यपघ्नत्यस्ता आग्नीध्रे सादयति विश्वेषां देवानां भागधेयी स्थेति तदासु विश्वान्देवान्त्संवेशयत्येते वै वसतां वरं तस्माद्वसतीवर्यो नाम वसतां ह वै वरं भवति य एवमेतद्वेद - ३.९.२.[१६]

तानि वा एतानि सप्त यजूंषि भवन्ति । चतुर्भिर्गृह्णात्येकेन जघनेन गार्हपत्यं सादयत्येकेन परिहरत्येकेनाग्नीध्रे तानि सप्त यत्र वै वाचः प्रजातानि छन्दांसि सप्तपदा वै तेषां परार्ध्या शक्वर्येतामभिसम्पदं तस्मात्सप्त यजूंषि भवन्ति - ३.९.२.[१७]

##३.९.३
तान्त्सम्प्रबोधयन्ति । तेऽप उपस्पृश्याग्नीध्रमुपसमायन्ति त आज्यानि गृह्णते गृहीत्वाज्यान्यायन्त्यासाद्याज्यानि - ३.९.३.[१]

अथ राजानमुपावहरति । इयं वै प्रतिष्ठा जनूरासाम्प्रजानामिमामेवैतत्प्रतिष्ठामभ्युपावहरति तमस्यै तनुते तमस्यै जनयति - ३.९.३.[२]



अन्तरेणेष उपावहरति । यज्ञो वा अनस्तन्न्वेव यज्ञान्न बहिर्द्धा करोति ग्रावसु सम्मुखेष्वधिनिदधाति क्षत्रं वै सोमो विशो ग्रावाणः क्षत्रमेवैतद्विश्यध्यूहति तद्यत्सम्मुखा भवन्ति विशमेवैतत्सम्मुखां क्षत्रियमभ्यविवादिनीं करोति तस्मात्सम्मुखा भवन्ति - ३.९.३.[३]

स उपावहरति । हृदे त्वा मनसे त्वेति यजमानस्यैतत्कामायाह हृदयेन हि मनसा यजमानस्तं कामं कामयते यत्काम्या यजते तस्मादाह हृदे त्वा मनसे त्वेति - ३.९.३.[४]

दिवे त्वा सूर्याय त्वेति । देवलोकाय त्वेत्येवैतदाह यदाह दिवे त्वेति सूर्याय त्वेति देवेभ्यस्त्वेत्येवैतदाहोर्ध्वमिमममध्वरं दिवि देवेषु होत्रा यच्छेत्यध्वरो वै यज्ञ ऊर्ध्वमिमं यज्ञं दिवि देवेषु धेहीत्येवैतदाह - ३.९.३.[५]

सोम राजन्विश्वास्त्वं प्रजा उपावरोहेति । तदेनमासां प्रजानामाधिपत्याय राज्यायोपावहरति - ३.९.३.[६]

अथानुसृज्योपतिष्ठते । विश्वास्त्वां प्रजा उपावरोहन्त्वित्ययथायथमिव वा एतत्करोति यदाह विश्वास्त्वं प्रजा उपावरोहेति क्षत्रं वै सोमस्तत्पापवस्यसं करोति तद्धेदमनु पापवस्यसं क्रियतेऽथात्र यथायथं करोति यथापूर्वं यदाह विश्वास्त्वां प्रजा उपावरोहन्त्विति तदेनमाभिः प्रजाभिः प्रत्यवरोहयति तस्मादु क्षत्रियमायन्तमिमाः प्रजा विशः प्रत्यवरोहन्ति तमधस्तादुपासत उपसन्नो होता प्रातरनुवाकमनुवक्ष्यन्भवति - ३.९.३.[७]

अथ समिधमभ्यादधदाह । देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीति छन्दांसि वै देवाः प्रातर्यावाणश्छन्दांस्यनुयाजा देवेभ्यः प्रेष्य देवान्यजेति वा अनुयाजैश्चरन्ति - ३.९.३.[८]

तदु हैक आहुः । देवेभ्योऽनुब्रूहीति तदु तथा न ब्रूयाच्छन्दांसि वै देवाः प्रातर्यावाणश्छन्दांस्यनुयाजा देवेभ्यः प्रेष्य देवान्यजेति वा अनुयाजैश्चरन्ति तस्मादु ब्रूयाद्देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीत्येव - ३.९.३.[९]



अथ यत्समिधमभ्यादधाति । छन्दांस्येवैतत्समिन्द्धेऽथ यद्धोता प्रातरनुवाकमन्वाह छन्दांस्येवैतत्पुनराप्याययत्ययातयामानि करोति यातयामानि वै देवैश्छन्दांसि छन्दोभिर्हि देवाः स्वर्गं लोकं समाश्नुवत न वा अत्र स्तुवते न शंसन्ति तच्छन्दांस्येवैतत्पुनराप्याययत्ययातयामानि करोति तैरयातयामैर्यज्ञं तन्वते तस्माद्धोता प्रातरनुवाकमन्वाह - ३.९.३.[१०]

तदाहुः । कः प्रातरनुवाकस्य प्रतिगर इति जाग्रद्धैवाध्वर्युरुपासीत स यन्निमिषति स हैवास्य प्रतिगरस्तदु तथा न कुर्याद्यदि निद्रायादपि कामं स्वप्यात्स यत्र होता प्रातरनुवाकं परिदधाति तत्प्रचरणीति स्रुग्भवति तस्यां चतुर्गृहीतमाज्यं गृहीत्वा जुहोति - ३.९.३.[११]

यत्र वै यज्ञस्य शिरोऽच्छिद्यत । तस्य रसो द्रुत्वापः प्रविवेश तमदः पूर्वेद्युर्वसतीवरीभिराहरत्यथ योऽत्र यज्ञस्य रसः परिशिष्टस्तमेवैतदच्छैति - ३.९.३.[१२]

यद्धैवैतामाहुतिं जुहोति । एतमेवैतद्यज्ञस्य रसमभिप्रस्तृणीते तमारुन्द्धे याभ्य उ चैवैतां देवताभ्य आहुतिं जुहोति ता एवैतत्प्रीणाति ता अस्मै तृप्ताः प्रीता एतं यज्ञस्य रसं संनमन्ति - ३.९.३.[१३]

स जुहोति । श्रृणोत्वग्निः समिधा हवं म इति श्रृणोतु म इदमग्निरनु मे जानात्वित्येवैतदाह श्रृण्वन्त्वापो धिषणाश्च देवीरिति श्रृण्वन्तु म इदमापोऽनु मे जानन्त्वित्येवैतदाह श्रोता ग्रावाणो विदुषो न यज्ञमिति श्रृण्वन्तु म इदं ग्रावाणोऽनु
मे जानन्त्वित्येवैतदाह विदुषो न यज्ञमिति विद्वांसो हि ग्रावाणः श्रृणोतु देवः सविता हवं मे स्वाहेति श्रृणोतु म इदं देवः सवितानु मे जानात्वित्येवैतदाह सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैतद्यज्ञस्य रसमच्छैति - ३.९.३.[१४]

अथापरं चतुर्गृहीतमाज्यं गृहीत्वा । उदङ्ङ्यन्नाहाप इष्य होतरित्यप इच्छ होतरित्येवैतदाह तद्यदतो होतान्वाहैतमेवैतद्यज्ञस्य रसमभिप्रस्तृणीते तमारुन्द्ध एतानु चैवैतदनुतिष्ठते नेदेनानन्तरा नाष्ट्रा रक्षांसि हिनसन्निति - ३.९.३.[१५]

अथ सम्प्रेष्यति । मैत्रावरुणस्य चमसाध्वर्यवेहि नेष्टः पत्नीरुदानयैकधनिन एताग्नीच्चात्वाले वसतीवरीभिः प्रत्युपतिष्ठासै होतृचमसेन चेति सम्प्रैष एवैषः - ३.९.३.[१६]

त उदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्रेणाग्नीध्रं स यस्यां ततो दिश्यापो भवन्ति तद्यन्ति ते वै सह पत्नीभिर्यन्ति तद्यत्सह पत्नीभिर्यन्ति - ३.९.३.[१७]

यत्र वै यज्ञस्य शिरोऽच्छिद्यत । तस्य रसो द्रुत्वापः प्रविवेश तमेते गन्धर्वाः सोमरक्षा जुगुपुः - ३.९.३.[१८]

ते ह देवा ऊचुः । इयमु न्वेवेह नाष्ट्रा यदिमे गन्धर्वाः कथं न्विममभयेऽनाष्ट्रे यज्ञस्य रसमाहरेमेति - ३.९.३.[१९]

ते होचुः । योषित्कामा वै गन्धर्वाः सह पत्नीभिरयाम ते पत्नीष्वेव गन्धर्वा गर्द्धिष्यन्त्यथैतमभयेऽनाष्ट्रे यज्ञस्य रसमाहरिष्याम इति - ३.९.३.[२०]

ते सह पत्नीभिरीयुः । ते पत्नीष्वेव गन्धर्वा जगृधुरथैतमभयेऽनाष्ट्रे यज्ञस्य रसमाजह्रुः - ३.९.३.[२१]

तथो ऽएवैष एतत् । सहैव पत्नीभिरेति ते पत्नीष्वेव गन्धर्वा गृध्यन्त्यथैतमभयेऽनाष्ट्रे यज्ञस्य रसमाहरति - ३.९.३.[२२]

सोऽपोऽभिजुहोति । एतां ह वा आहुतिं हुतामेष यज्ञस्य रस उपसमेति ताम्प्रत्युत्तिष्ठति तमेवैतदाविष्कृत्य गृह्णाति - ३.९.३.[२३]



यद्वेवैतामाहुतिं जुहोति । एतमेवैतद्यज्ञस्य रसमभिप्रस्तृणीते तमारुन्द्धे तमपो याचति याभ्य उ चैवैतां देवताभ्य आहुतिं जुहोति ता एवैतत्प्रीणाति ता अस्मै तृप्ताः प्रीता एतं यज्ञस्य रसं संनमन्ति - ३.९.३.[२४]

स जुहोति । देवीरापो अपांनपादिति देव्यो ह्यापस्तस्मादाह देवीरापो अपांऽनपादिति यो व ऊर्मिर्हविष्य इति यो व ऊर्मिर्यज्ञिय इत्येवैतदाहेन्द्रियावान्मदिन्तम इति वीर्यवानित्येवैतदाह यदाहेन्द्रियावानिति मदिन्तम इति स्वादिष्ठ इत्येवैतदाह तं देवेभ्यो देवत्रा दत्तेत्येतदेना अयाचिष्ट यदाह तं देवेभ्यो देवत्रा दत्तेति शुक्रपेभ्य इति सत्यं वै शुक्रं सत्यपेभ्य इत्येवैतदाह येषां भाग स्थ स्वाहेति तेषामु ह्येष भागः - ३.९.३.[२५]

अथ मैत्रावरुणचमसेनैतामाहुतिमपप्लावयति । कार्षिरसीति यथा वा अङ्गारोऽग्निना प्सातः स्यादेवमेषाहुतिरेतया देवतया प्साता भवति राजानं वा एताभिरद्भिरुपस्त्रक्ष्यन्भवति

या एता मैत्रावरुणचमसे वज्रो वा आज्यं रेतः सोमो नेद्वज्रेणाज्येन रेतः सोमं हिनसानीति तस्माद्वा अपप्लावयति - ३.९.३.[२६]

अथ गृह्णाति । समुद्रस्य त्वाक्षित्या ऽउन्नयामीत्यापो वै समुद्रोऽप्स्वेवैतदक्षितिं दधाति तस्मादाप ऽएतावति भोगे भुज्यमाने न क्षीयन्ते तदन्वेकधनानुन्नयन्ति तदनु पान्नेजनान् - ३.९.३.[२७]

तद्यन्मैत्रावरुणचमसेन गृह्णाति । यत्र वै देवेभ्यो यज्ञोऽपाक्रामत्तमेतद्देवाः प्रैषैरेव प्रैषमैच्छन्पुरोरुग्भिः प्रारोचयन्निविद्भिर्न्यवेदयंस्तस्मान्मैत्रावरुणचमसेन गृह्णाति - ३.९.३.[२८]

त आयन्ति । प्रत्युपतिष्ठतेऽग्नीच्चात्वाले वसतीवरीभिश्च होतृचमसेन च स उपर्युपरि चात्वालं संस्पर्शयति वसतीवरीश्च मैत्रावरुणचमसं च समापोअद्भिरग्मत समोषधीभिरोषधीरिति यश्चासौ पूर्वेद्युराहृतो यज्ञस्य रसो यश्चाद्याहृतस्तमेवैतदुभयं संसृजति - ३.९.३.[२९]



तद्धैके । ऐव मैत्रावरुणचमसे वसतीवरीर्नयन्त्या मैत्रावरुणचमसाद्वसतीवरीषु यश्चासौ पूर्वेद्युराहृतो यज्ञस्य रसो यश्चाद्याहृतस्तमेवैतदुभयं संसृजाम इति वदन्तस्तदु तथा न कुर्याद्यद्वा आधवनीये समवनयति तदेवैष उभयो यज्ञस्य रसः संसृज्यतेऽथ होतृचमसे वसतीवरीर्गृह्णाति निग्राभ्याभ्यस्तद्यदुपर्युपरि चात्वालं संस्पर्शयत्यतो वै देवा दिवमुपोदक्रामंस्तद्यजमानमेवैतत्स्वर्ग्यम्पन्थानमनुसंख्यापयति
- ३.९.३.[३०]

त आयन्ति । तं होता पृच्छत्यध्वर्योऽवेरपा इत्यविदोऽपा इत्येवैतदाह तम्प्रत्याहोतेव नन्नमुरित्यविदमथो मेऽनंसतेत्येवैतदाह - ३.९.३.[३१]

स यद्यग्निष्टोमः स्यात् । यदि प्रचरण्यां संस्रवः परिशिष्टोऽलं होमाय स्यात्तं जुहुयाद्यद्यु नालं होमाय स्यादपरं चतुर्गृहीतमाज्यं गृहीत्वा जुहोति यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः स यन्ता शश्वतीरिषः स्वाहेत्याग्नेय्या जुहोत्यग्निर्वा अग्निष्टोमस्तदग्नावग्निष्टोमं प्रतिष्ठापयति मर्तवत्या पुरुषसम्मितो वा अग्निष्टोम एवं जुहुयाद्यद्यग्निष्टोमः स्यात् - ३.९.३.[३२]

यद्युक्थ्यः स्यात् । मध्यमं परिधिमुपस्पृशेत्त्रयः परिधयस्त्रीण्युक्थान्येतैरु हि तर्हि यज्ञः प्रतितिष्ठति यद्यु अतिरात्रो वा षोडशी वा स्यान्नैव जुहुयान्न मध्यमं परिधिमुपस्पृशेत्समुद्यैव तूष्णीमेत्य प्रपद्येत तद्यथायथं यज्ञक्रतून्व्यावर्तयति - ३.९.३.[३३]

अयुङ्गाअयुङ्गा एकधना भवन्ति । त्रयो वा पञ्च वा पञ्च वा सप्त वा नव वा नव वैकादश वैकादश वा त्रयोदश वा त्रयोदश वा पञ्चदश वा द्वन्द्वमह मिथुनं प्रजननमथ य एष एकोऽतिरिच्यते स यजमानस्य श्रियमभ्यतिरिच्यते स वा एषां सधनं यो यजमानस्य श्रियमभ्यतिरिच्यते तद्यदेषां सधनं तस्मादेकधना नाम - ३.९.३.[३४]

##३.९.४ निग्राभ्यप्रयोगः

अथाधिषवणे पर्युपविशन्ति । अथास्यां हिरण्यं बध्नीते द्वयं वा इदं न तृतीयमस्ति सत्यं चैवानृतं च सत्यमेव देवा अनृतं मनुष्या अग्निरेतसं वै हिरण्यं सत्येनांशूनुपस्पृशानि सत्येन सोमं पराहणानीति तस्माद्वा अस्यां हिरण्यं बध्नीते - ३.९.४.[१]

अथ ग्रावाणमादत्ते । ते वा एतेऽश्ममया ग्रावाणो भवन्ति देवो वै सोमो दिवि हि सोमो वृत्रो वै सोम आसीत्तस्यैतच्छरीरं यद्गिरयो यदश्मानस्तच्छरीरेणैवैनमेतत्समर्धयति कृत्स्नं करोति तस्मादश्ममया भवन्ति घ्नन्ति वा एनमेतद्यदभिषुण्वन्ति तमेतेन घ्नन्ति तथात उदेति तथा संजीवति तस्मादश्ममया ग्रावाणो भवन्ति - ३.९.४.[२]

तमादत्ते । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे वरावासीति सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैनमेतदादत्तेऽश्विनोर्बाहुभ्यामित्यश्विनावध्वर्यू

तत्तयोरेव बाहुभ्यामादत्ते न स्वाभ्याम्पूष्णो हस्ताभ्यामिति पूषा भागदुघस्तत्तस्यैव हस्ताभ्यामादत्ते न स्वाभ्यां वज्रो वा एष तस्य न मनुष्यो भर्ता तमेताभिर्देवताभिरादत्ते - ३.९.४.[३]

आददे रावासीति । यदा वा एनमेतेनाभिषुण्वन्त्यथाहुतिर्भवति यदाहुतिं जुहोत्यथ दक्षिणा ददात्येतद्ध्येष द्वयं रासत आहुतीश्च दक्षिणाश्च तस्मादाह रावासीति - ३.९.४.[४]

गभीरमिममध्वरं कृधीति । अध्वरो वै यज्ञो महान्तमिमं यज्ञं कृधीत्येवैतदाहेन्द्राय सुषूतममितीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्रायेति सुषूतममिति सुसुतममित्येवैतदाहोत्तमेन पविनेत्येष वा उत्तमः पविर्यत्सोमस्तस्मादाहोत्तमेन पविनेत्यूर्जस्वन्तं मधुमन्तं पयस्वन्तमिति रसवन्तमित्येवैतदाह यदाहोर्जस्वन्तं मधुमन्तं पयस्वन्तमिति - ३.९.४.[५]



अथ वाचं यच्छति । देवा ह वै यज्ञं तन्वानास्तेऽसुररक्षसेभ्य आसङ्गाद्बिभयांचक्रुस्ते होचुरुपांशु यजाम वाचं यच्छामेति त उपांश्वयजन्वाचमयच्छन् - ३.९.४.[६]

अथ निग्राभ्या आहरति । तास्वेनं वाचयति निग्राभ्या स्थ देवश्रुतस्तर्पयत मा मनो मे तर्पयत वाचं मे तर्पयत प्राणं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयतात्मानं मे तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा वितृषन्निति रसो वा आपस्तास्वेवैतामाशिषमाशास्ते सर्वं च म आत्मानं तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा वितृषन्निति स य एष उपांशुसवनः स विवस्वानादित्यो निदानेन सोऽस्यैष व्यानः - ३.९.४.[७]

तमभिमिमीते । घ्नन्ति वा एनमेतद्यदभिषुण्वन्ति तमेतेन घ्नन्ति तथा त उदेति तथा संजीवति यद्वेव मिमीते तस्मान्मात्रा मनुष्येषु मात्रो यो चाप्यन्या मात्रा - ३.९.४.[८]

स मिमीते । इन्द्राय त्वा वसुमते रुद्रवत इतीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राय त्वेति वसुमते रुद्रवत इति तदिन्द्रमेवानु वसूंश्च रुद्रांश्चाभजतीन्द्राय त्वादित्यवत इति तदिन्द्रमेवान्वादित्यानाभजतीन्द्राय त्वाभिमातिघ्न इति सपत्नो वा अभिमातिरिन्द्राय त्वा सपत्नघ्न इत्येवैतदाह सोऽस्योद्धारो यथा श्रेष्ठस्योद्धार एवमस्यैष ऋते देवेभ्यः - ३.९.४.[९]

श्येनाय त्वा सोमभृत इति । तद्गायत्र्यै मिमीतेऽग्नये त्वा रायस्पोषद इत्यग्निर्वै गायत्री तद्गायत्र्यै मिमीते स यद्गायत्री श्येनो भूत्वा दिवः सोममाहरत्तेन सा श्येनः सोमभृत्तेनैवास्या एतद्वीर्येण द्वितीयं मिमीते - ३.९.४.[१०]

अथ यत्पञ्च कृत्वो मिमीते । संवत्सरसम्मितो वै यज्ञः पञ्च वा ऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च कृत्वो मिमीते - ३.९.४.[११]

तमभिमृशति । यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरावन्तरिक्षे तेनास्मै यजमानायोरु राये कृध्यधि दात्रे वोच इति यत्र वा एषोऽग्रे देवानां हविर्बभूव तद्धेक्षां चक्रे मैव सर्वेणेवात्मना देवानां हविर्भूवमिति स एतास्तिस्रस्तनूरेषु लोकेषु विन्यधत्त - ३.९.४.[१२]



तद्वै देवा अस्पृण्वत । तेऽस्यैतेनैवैतास्तनूराप्नुवन्त्स कृत्स्न एव देवानां हविरभवत्तथो एवास्यैष एतेनैवैतास्तनूराप्नोति स कृत्स्न एव देवानां हविर्भवति तस्मादेवमभिमृशति - ३.९.४.[१३]

अथ निग्राभ्याभिरुपसृजति । आपो ह वै वृत्रं जघ्नुस्तेनैवैतद्वीर्येणापः स्यन्दन्ते तस्मादेनाः स्यन्दमाना न किं चन प्रतिघारयति ता ह स्वमेव वशं चेरुः कस्मै नु वयं तिष्ठेमहि याभिरस्माभिर्वृत्रो हत इति सर्वं वा इदमिन्द्राय तस्थानमास यदिदं किं चापि योऽयं पवते - ३.९.४.[१४]

स इन्द्रोऽब्रवीत् । सर्वं वै म इदं तस्थानं यदिदं किं च तिष्ठध्वमेव म इति ता होचुः किं नस्ततः स्यादिति प्रथमभक्ष एव वः सोमस्य राज्ञ इति तथेति ता अस्मा अतिष्ठन्त तास्तस्थाना उरसि न्यगृह्णीत तद्यदेना उरसि न्यगृह्णीत तस्मान्निग्राभ्या नाम तथैवैता एतद्यजमान उरसि निगृह्णीते स आसामेष प्रथमभक्षः सोमस्य राज्ञो यन्निग्राभ्याभिरुपसृजति - ३.९.४.[१५]

स उपसृजति । श्वात्रा स्थ वृत्रतुर इति शिवा ह्यापस्तस्मादाह श्वात्रा स्थेति वृत्रतुर इति वृत्रं ह्येता अघ्नन्राधोगूर्ता अमृतस्य पत्नीरित्यमृता ह्यापस्ता देवीर्देवत्रेमं यज्ञं नयतेति नात्र तिरोहितमिवास्त्युपहूताः सोमस्य पिबतेति तदुपहूता एव प्रथमभक्षं सोमस्य राज्ञो भक्षयन्ति - ३.९.४.[१६]

अथ प्रहरिष्यन् । यं द्विष्यात्तं मनसा ध्यायेदमुष्मा अहं प्रहरामि न तुभ्यमिति यो न्वेवेमं मानुषं ब्राह्मणं हन्ति तं न्वेव परिचक्षतेऽथ किं य एतं देवी हि सोमो घ्नन्ति वा एनमेतद्यदभिषुण्वन्ति तमेतेन घ्नन्ति तथातउदेति तथा संजीवति तथानेनस्यं भवति यद्यु न द्विष्यादपि तृणमेव मनसाध्यायेत्तथो अनेनस्यं भवति - ३.९.४.[१७]



स प्रहरति । मा भेर्मा संविक्था इति मा त्वं भैषीर्मा संविक्था अमुष्मा अहम्प्रहरामि न तुभ्यमित्येवैतदाहोर्जं धत्स्वेति रसं धत्स्वेत्येवैतदाह धिषणे वीड्वी सती वीडयेथामूर्जं दधाथामितीमे एवैतत्फलके आहुरित्यु हैक आहुः किंनु तत्र योऽप्येते फलके भिन्द्यादिमे ह वै द्यावापृथिवी एतस्माद्वज्रादुद्यतात्संरेजेते तदाभ्यामेवैनमेतद्द्यावापृथिवीभ्यां शमयति तथेमे शान्तो न हिनस्त्यूर्जं दधाथामिति रसं दधाथामित्येवैतदाह पाप्माहतो न सोम इति तदस्य सर्वं पाप्मानं हन्ति - ३.९.४.[१८]

स वै त्रिरभिषुणोति । त्रिः सम्भरति चतुर्निग्राभमुपैति तद्दश दशाक्षरा वै विराड्वैराजः सोमस्तस्माद्दश कृत्वः सम्पादयति - ३.९.४.[१९]

अथ यन्निग्राभमुपैति । यत्र वा एषोऽग्रे देवानां हविर्बभूव तद्धेमा दिशोऽभिदध्यावाभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना संस्पृशेयेति तमेतद्देवा आभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना समस्पर्शयन्यन्निग्राभमुपायंस्तथो एवैनमेष एतदाभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना संस्पर्शयति यन्निग्राभमुपैति - ३.९.४.[२०]

स उपैति । प्रागपागुदगधराक्सर्वतस्त्वा दिश आधावन्त्विति तदेनमाभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना संस्पर्शयत्यम्ब निष्पर समरीर्विदामिति योषा वा अम्बा योषा दिशस्तस्मादाहाम्ब निष्परेति समरीर्विदामिति प्रजा वा अरीः सं प्रजा जानतामित्येवैतदाह तस्माद्या अपि विदूरमिव प्रजा भवन्ति समेव ता जानते तस्मादाह समरीर्विदामिति - ३.९.४.[२१]

अथ यस्मात्सोमो नाम । यत्र वा एषोऽग्रे देवानां हविर्बभूव तद्धेक्षां चक्रे मैव सर्वेणेवात्मना देवानां हविर्भूवमिति तस्य या जुष्टतमा तनूरास तामपनिदधे तद्वै देवा अस्पृण्वत ते होचुरुपैवैतां प्रवृहस्व सहैव न एतया हविरेधीति तां दूर इवोपप्राबृहत स्वा वै म ऽएषेति तस्मात्सोमो नाम - ३.९.४.[२२]

अथ यस्माद्यज्ञो नाम । घ्नन्ति वा एनमेतद्यदभिषुण्वन्ति तद्यदेनं जनयन्ति स तायमानो जायते स यञ्जायते तस्माद्यञ्जो यञ्जो ह वै नामैतद्यद्यज्ञ इति - ३.९.४.[२३]

तत्रैतामपि वाचमुवाद । त्वमङ्ग प्रशंसिषो देवः शविष्ठ मर्त्यं न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वच इति मर्त्यो हैवैतद्भवन्नुवाच त्वमेवेतो जनयितासि नान्यस्त्वदिति - ३.९.४.[२४]

अथ निग्राभ्याभ्यो ग्रहान्विगृह्णते । आपो ह वै वृत्रं जघ्नुस्तेनैवैतद्वीर्येणापः स्यन्दन्ते स्यन्दमानानां वै वसतीवरीर्गृह्णाति वसतीवरीभ्यो निग्राभ्या निग्राभ्याभ्यो ग्रहान्विगृह्णते तेनैवैतद्वीर्येण ग्रहान्विगृह्णते होतृचमसाद्योषा वा ऽऋग्घोता योषायै वा ऽइमाः प्रजाः प्रजायन्ते तदेनमेतस्यै योषाया ऽऋचो होतुः प्रजनयति तस्माद्धोतृचमसात् - ३.९.४.[२५]

##४.१.१ उपांशुग्रहः
प्राणो ह वा अस्योपांशुः । व्यान उपांशुसवन उदान एवान्तर्यामः - ४.१.१.[१]

अथ यस्मादुपांशुर्नाम । अंशुर्वै नाम ग्रहः स प्रजापतिस्तस्यैष प्राणस्तद्यदस्यैष प्राणस्तस्मादुपांशुर्नाम - ४.१.१.[२]

तं बहिष्पवित्राद्गृह्णाति । पराञ्चमेवास्मिन्नेतत्प्राणं दधाति सोऽस्यायं पराङेव प्राणो निरर्दति तमंशुभिः पावयति पूतोऽसदिति षड्भिः पावयति षड्वा ऋतव ऋतुभिरेवैनमेतत्पावयति - ४.१.१.[३]

तदाहुः । यदंशुभिरुपांशुं पुनाति सर्वे सोमाः पवित्रपूता अथ केनास्यांशवः पूता भवन्तीति - ४.१.१.[४]



तानुपनिवपति । यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहेति तदस्य स्वाहाकारेणैवांशवः पूता भवन्ति सर्वं वा एष ग्रहः सर्वेषां हि सवनानां रूपम् - ४.१.१.[५]

देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसङ्गाद्बिभयां चक्रुस्ते होचुः संस्थापयाम यज्ञं यदि नोऽसुररक्षकान्यासजेयुः संस्थित एव नो यज्ञः स्यादिति - ४.१.१.[६]

ते प्रातःसवन एव । सर्वं यज्ञं समस्थापयन्नेतस्मिन्नेव ग्रहे यजुष्टः प्रथमे स्तोत्रे सामतः प्रथमे शस्त्र ऋक्तस्तेन संस्थितेनैवात ऊर्ध्वं यज्ञेनाचरन्त्स एषोऽप्येतर्हि तथैव यज्ञः संतिष्ठत एतस्मिन्नेव ग्रहे यजुष्टः प्रथमे स्तोत्रे सामतः प्रथमे शस्त्र ऋक्तस्तेन संस्थितेनैवात ऊर्ध्वं यज्ञेन चरति - ४.१.१.[७]

स वा अष्टौ कृत्वोऽभिषुणोति । अष्टाक्षरा वै गायत्री गायत्रं प्रातः सवनम्प्रातःसवनमेवैतत्क्रियते - ४.१.१.[८]

स गृह्णाति । वाचस्पतये पवस्वेति प्राणो वै वाचस्पतिः प्राण एष ग्रहस्तस्मादाह वाचस्पतये पवस्वेति वृष्णो अंशुभ्यां गभस्तिपूत इति सोमांशुभ्यां ह्येनम्पावयति तस्मादाह वृष्णो अंशुभ्यामिति गभस्तिपूत इति पाणी वै गभस्ती पाणिभ्यां ह्येनं पावयति - ४.१.१.[९]

अथैकादश कृत्वोऽभिषुणोति । एकादशाक्षरा वै त्रिष्टुप्त्रैष्टुभं माध्यन्दिनं सवनं माध्यन्दिनमेवैतत्सवनं क्रियते - ४.१.१.[१०]

स गृह्णाति । देवो देवेभ्यः पवस्वेति देवो ह्येष देवेभ्यः पवते येषां भागोऽसीति तेषामु ह्येष भागः - ४.१.१.[११]



अथ द्वादश कृत्वोऽभिषुणोति । द्वादशाक्षरा वै जगती जागतं तृतीयसवनं तृतीयसवनमेवैतत्क्रियते - ४.१.१.[१२]

स गृह्णाति । मधुमतीर्न इषष्कृधीति रसमेवास्मिन्नेतद्दधाति स्वदयत्येवैनमेतद्देवेभ्यस्तस्मादेष हतो न पूयत्यथ यज्जुहोति संस्थापयत्येवैनमेतत् - ४.१.१.[१३]

अष्टावष्टौ कृत्वः । ब्रह्मवर्चसकामस्याभिषुणुयादित्याहुरष्टाक्षरा वै गायत्री ब्रह्म गायत्री ब्रह्मवर्चसी हैव भवति - ४.१.१.[१४]

तच्चतुर्विंशतिं कृत्वोऽभिषुतं भवति । चतुर्विंशतिर्वै संवत्सरस्यार्धमासाः संवत्सरः प्रजापतिः प्रजापतिर्यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत्सं स्थापयति - ४.१.१.[१५]

पञ्चपञ्च कृत्वः । पशुकामस्याभिषुणुयादित्याहुः पाङ्क्ता पशवः पशून्हैवावरुन्द्धे पञ्च वा ऋतवः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत्संस्थापयति सोऽएषा मीमांसैवेतरं त्वेव क्रियते - ४.१.१.[१६]

तं गृहीत्वा परिमार्ष्टि । नेद्व्यवश्चोतदिति तं न सादयति प्राणो ह्यस्यैष तस्मादयमसन्नः प्राणः संचरति यदीत्त्वभिचरेदथैनं सादयेदमुष्य त्वा प्राणं सादयामीति तथाह तस्मिन्न पुनरस्ति यन्नानुसृजति तेनो अध्वर्युश्च यजमानश्च ज्योग्जीवतः - ४.१.१.[१७]

अथो अप्येवैनं दध्यात् । अमुष्य त्वा प्राणमपिदधामीति तथाह तस्मिन्न पुनरस्ति यन्न सादयति तेनो प्राणान्न लोभयति - ४.१.१.[१८]

स वा अन्तरेव सन्त्स्वाहेति करोति । देवा ह वै बिभयांचक्रुर्यद्वै नः पुरैवास्य ग्रहस्य होमादसुररक्षसानीमं ग्रहं न हन्युरिति तमन्तरेव सन्तः स्वाहाकारेणाजुहवुस्तं हुतमेव सन्तमग्नावजुहवुस्तथो एवैनमेष एतदन्तरेव सन्त्स्वाहाकारेण जुहोति तं हुतमेव सन्तमग्नौ जुहोति - ४.१.१.[१९]



अथोपनिष्क्रामति । उर्वन्तरिक्षमन्वेमीत्यन्तरिक्षं वा अनु रक्षश्चरत्यमूलमुभयतः परिच्छिन्नं यथायं पुरुषोऽमूल उभयतः परिच्छिन्नोऽन्तरिक्षमनुचरत्येतद्वै यजुर्ब्रह्म रक्षोहा स एतेन ब्रह्मणान्तरिक्षमभयमनाष्ट्रं कुरुते - ४.१.१.[२०]

अथ वरं वृणीते । बलवद्ध वै देवा एतस्य ग्रहस्य होमं प्रेप्सन्ति तेऽस्मा एतं वरं समर्धयन्ति क्षिप्रे न इमं ग्रहं जुहवदिति तस्माद्वरं वृणीते - ४.१.१.[२१]

स जुहोति । स्वांकृतोऽसीति प्राणो वा अस्यैष ग्रहः स स्वयमेव कृतः स्वयंजातस्तस्मादाह स्वांकृतोऽसीति विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य इति सर्वाभ्यो ह्येष प्रजाभ्यः

स्वयं जातो मनस्त्वाष्टु इति प्रजापतिर्वै मनः प्रजापतिष्ट्वाश्नुतामित्येवैतदाह स्वाहा त्वा सुभव सूर्यायेति तदवरं स्वाहाकारं करोति परां देवताम् - ४.१.१.[२२]

अमुष्मिन्वा एतमहौषीत् । य एष तपति सर्वं वा एष तदेनं सर्वस्यैवपरार्ध्यं करोत्यथ यदवरां देवतां कुर्यात्परं स्वाहाकारं स्यादु हैवामुष्मादादित्यात्परं तस्मादवरं स्वाहाकारं करोति परां देवताम् - ४.१.१.[२३]

अथ हुत्वोर्ध्वं ग्रहमुन्मार्ष्टि । पराञ्चमेवास्मिन्नेतत्प्राणं दधात्यथोत्तानेन पाणिना मध्यमे परिधौ प्रागुपमार्ष्टि पराञ्चमेवास्मिन्नेतत्प्राणं दधाति देवेभ्यस्त्वा मरीचिपेभ्य इति - ४.१.१.[२४]

अमुष्मिन्वा एतं मण्डलेऽहौषीत् । य एष तपति तस्य ये रश्मयस्ते देवा मरीचिपास्तानेवैतत्प्रीणाति त एनं देवाः प्रीताः स्वर्गं लोकमभिवहन्ति - ४.१.१.[२५]



तस्य वा एतस्य ग्रहस्य । नानुवाक्यास्ति न याज्या तं मन्त्रेण जुहोत्येतेनो हास्यैषो ऽनुवाक्यवान्भवत्येतेन याज्यवानथ यद्यभिचरेद्योऽस्यांशुराश्लिष्टः स्याद्बाह्वोर्वोरसि वा वाससि वा तं जुहुयाद्देवांशो यस्मै त्वेडे तत्सत्यमुपरिप्रुता भङ्गेन हतोऽसौ फडिति यथा ह वै हन्यमानानामपधावेदेवमेषोऽभिषूयमाणानां स्कन्दति तथा ह तस्य नैव धावन्नापधावत्परिशिष्यते यस्मा एवं करोति तं सादयति प्राणाय त्वेति प्राणो ह्यस्यैषः - ४.१.१.[२६]

दक्षिणार्धे हैके सादयन्ति । एतां ह्येष दिशमनु संचरतीति तदु तथा न कुर्यादुत्तरार्ध एवैनं सादयेन्नो ह्येतस्या आहुतेः का चन परास्ति तं सादयति प्राणाय त्वेति प्राणो ह्यस्यैषः - ४.१.१.[२७]

अथोपांशुसवनमादत्ते । तं न दशाभिर्न पवित्रेणोपस्पृशति यथा ह्यद्भिः प्रणिक्तमेवं तद्यद्यंशुराश्लिष्टः स्यात्पाणिनैव प्रध्वंस्योदञ्चमुपनिपादयेद्व्यानाय त्वेति व्यानो ह्यस्यैषः - ४.१.१.[२८]

##४.१.२ अन्तर्यामग्रहः
प्राणो ह वा अस्योपांशु । व्यान उपांशुसवन उदान एवान्तर्यामः - ४.१.२.[१]

अथ यस्मादन्तर्यामो नाम । यो वै प्राणः स उदानः स व्यानस्तमेवास्मिन्नेतत्पराञ्चं प्राणं दधाति यदुपांशु गृह्णाति तमेवास्मिन्नेतत्प्रत्यञ्चमुदानं दधाति यदन्तर्यामं गृह्णाति सोऽस्यायमुदानोऽन्तरात्मन्यतस्तद्यदस्यैषोऽन्तरात्मन्यतो यद्वैनेनेमाः प्रजा यतास्तस्मादन्तर्यामो नाम - ४.१.२.[२]

तमन्तःपवित्राद्गृह्णाति । प्रत्यञ्चमेवास्मिन्नेतदुदानं दधाति सोऽस्यायमुदानोऽन्तरात्मन्हित एतेनो हास्याप्युपांशुरन्तःपवित्राद्गृहीतो भवति समानं ह्येतद्यदुपांश्वन्तर्यामौ प्राणोदानौ ह्येतेनो हैवास्यैषोऽपीतरेषु ग्रहेष्वनाक्षिद्भवति - ४.१.२.[३]



अथ यस्मात्सोमं पवित्रेण पावयति । यत्र वै सोमः स्वं पुरोहितं बृहस्पतिं जिज्यौ तस्मै पुनर्ददौ तेन संशशाम तस्मिन्पुनर्ददुष्यासैवातिशिष्टमेनो यदीन्नूनं ब्रह्म ज्यानायाभिदध्यौ - ४.१.२.[४]

तं देवाः पवित्रेणापावयन् । स मेध्यः पूतो देवानां हविरभवत्तथो एवैनमेष एतत्पवित्रेण पावयति स मेध्यः पूतो देवानां हविर्भवति - ४.१.२.[५]

तद्यदुपयामेन ग्रहा गृह्यन्ते । इयं वा अदितिस्तस्या अदः प्रायणीयं हविरसावादित्यश्चरुस्तद्वै तत्पुरेव सुत्यायै सा हेयं देवेषु सुत्यायामपित्वमीषेऽस्त्वेव मेऽपि प्रसुते भाग इति - ४.१.२.[६]

ते ह देवा ऊचुः । व्यादिष्टोऽयं देवताभ्यो यज्ञस्त्वयैव ग्रहा गृह्यन्तां देवताभ्यो हूयन्तामिति तथेति सोऽस्या एष प्रसुते भागः - ४.१.२.[७]

तद्यदुपयामेन ग्रहा गृह्यन्ते । इयं वा उपयाम इयं वा इदमन्नाद्यमुपयच्छति पशुभ्यो मनुष्येभ्यो वनस्पतिभ्य इतो वा ऊर्ध्वा देवा दिवि हि देवाः - ४.१.२.[८]

तद्यदुपयामेन ग्रहा गृह्यन्ते । अनयैव तद्गृह्यन्तेऽथ यद्योनौ सादयतीयं वा अस्य सर्वस्य योनिरस्यै वा इमाः प्रजाः प्रजाताः - ४.१.२.[९]

तं वा एतम् । रेतो भूतं सोममृत्विजो बिभ्रति यद्वा अयोनौ रेतः सिच्यते प्र वै तन्मीयतेऽथ यद्योनौ सादयत्यस्यामेव तत्सादयति - ४.१.२.[१०]

प्राणोदानौ ह वा अस्यैतौ ग्रहौ । तयोरुदितेऽन्यतरं जुहोत्यनुदितेऽन्यतरम्प्राणोदानयोर्व्याकृत्यै प्राणोदानावेवैतद्व्याकरोति तस्मादेतौ समानावेव सन्तौ नानेवाचक्षते प्राण इति चोदान इति च - ४.१.२.[११]



अहोरात्रे ह वा अस्यैतौ ग्रहौ । तयोरुदितेऽन्यतरं जुहोत्यनुदितेऽन्यतरमहोरात्रयोर्व्याकृत्या अहोरात्रे एवैतद्व्याकरोति - ४.१.२.[१२]

अहः सन्तमुपांशुम् । तं रात्रौ जुहोत्यहरेवैतद्रात्रौ दधाति तस्मादपि सुतमिस्रायामुपैव किंचित्ख्यायते - ४.१.२.[१३]

रात्रिं सन्तमन्तर्यामम् । तमुदिते जुहोति रात्रिमेवैतदहन्दधाति तेनो हासावादित्य उद्यन्नेवेमाः प्रजा न प्रदहति तेनेमाः प्रजास्त्राताः - ४.१.२.[१४]

अथातो गृह्णात्येव । उपयामगृहीतोऽसीत्युक्त उपयामस्य बन्धुरन्तर्यच्छ मघवन्पाहि सोममितीन्द्रो वै मघवानिन्द्रो यज्ञस्य नेता तस्मादाह मघवन्निति पाहि सोममिति गोपाय

सोममित्येवैतदाहोरुष्य राय एषो यजस्वेति पशवो वै रायो गोपाय पशूनित्येवैतदाहेषो यजस्वेति प्रजा वा इषस्ता एवैतद्यायजूकाः करोति ता इमाः प्रजा यजमाना अर्चन्त्यः श्राम्यन्त्यश्चरन्ति - ४.१.२.[१५]

अन्तस्ते द्यावापृथिवी दधामि । अन्तर्दधाम्युर्वन्तरिक्षं सजूर्देवेभिरवरैः परैश्चेति तदेनं वैश्वदेवं करोति तद्यदेनेनेमाः प्रजाः प्राणत्यश्चोदनत्यश्चान्तरिक्षमनुचरन्ति तेन वैश्वदेवोऽन्तर्यामे मघवन्मादयस्वेतीन्द्रो वै मघवानिन्द्रो यज्ञस्य नेता तस्मादाह मघवन्नित्यथ यदन्तरन्तरिति गृह्णात्यन्तस्त्वात्मन्दध इत्येवैतदाह - ४.१.२.[१६]

तं गृहीत्वा परिमार्ष्टि । नेद्व्यवश्चोतदिति तं न सादयत्युदानो ह्यस्यैष तस्मादयमसन्न उदानः संचरति यदीत्त्वभिचरेदथैनं सादयेदमुष्य त्वोदानं सादयामीति - ४.१.२.[१७]

स यद्युपांशुं सादयेत् । अथैनं सादयेद्यद्युपांशुं न सादयेन्नैनं सादयेद्यद्युपांशुमपिदध्यादप्येनं दध्याद्यद्युपांशुनापि दध्यान्नैनमपिदध्याद्यथोपांशोः कर्म तथैतस्य समानं ह्येतद्यदुपांश्वन्तर्यामौ प्राणोदानौ हि - ४.१.२.[१८]

ता उ ह चरकाः । नानैव मन्त्राभ्यां जुह्वति प्राणोदानौ वा अस्यैतौ नानावीर्यौ प्राणोदानौ कुर्म इति वदन्तस्तदु तथा न कुर्यान्मोहयन्ति ह ते यजमानस्य प्राणोदानावपीद्वा एनं तूष्णीं जुहुयात् - ४.१.२.[१९]

स यद्वा उपांशुं मन्त्रेण जुहोति । तदेवास्यैषोऽपि मन्त्रेण हुतो भवति किमु तत्तूष्णीं जुहुयात्समानं ह्येतद्यदुपांश्वन्तर्यामौ प्राणोदानौ हि - ४.१.२.[२०]

स येनैवोपांशुं मन्त्रेण जुहोति । तेनैवैतं मन्त्रेण जुहोति स्वांकृतोऽसि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्यायेत्युक्तो यजुषो बन्धुः - ४.१.२.[२१]

अथ हुत्वावाञ्चं ग्रहमवमार्ष्टि । इदं वा उपांशुं हुत्वोर्ध्वमुन्माष्टर्यथात्रावाञ्चमवमार्ष्टि प्रत्यञ्चमेवास्मिन्नेतदुदानं दधाति - ४.१.२.[२२]

अथ नीचा पाणिना । मध्यमे परिधौ प्रत्यगुपमार्ष्टीदं वा उपांशु हुत्वोत्तानेन पाणिना मध्यमे परिधौ प्रागुपमाष्टर्यथात्र नीचा पाणिना मध्यमे परिधौ प्रत्यगुपमार्ष्टि प्रत्यञ्चमेवास्मिन्नेतदुदानं दधाति देवेभ्यस्त्वा मरीचिपेभ्य इति सोऽसावेव बन्धुः - ४.१.२.[२३]

तं प्रत्याक्रम्य सादयति । उदानाय त्वेत्युदानो ह्यस्यैष तानि वै संस्पृष्टानि सादयति प्राणोदानावेवैतत्संस्पर्शयति प्राणोदानान्त्संदधाति - ४.१.२.[२४]

तानि वा अनिङ्ग्यमानानि शेरे । आ तृतीयसवनात्तस्मादिमे मनुष्याः स्वपन्ति तानि पुनस्तृतीयसवने प्रयुज्यन्ते तस्मादिमे मनुष्याः सुप्त्वा प्रबुध्यन्ते तेऽनिशिताश्चराचरा यज्ञस्यैवैतद्विधामनु वय इव ह वै यज्ञो विधीयते तस्योपांश्वन्तर्यामावेव पक्षावात्मोपांशुसवनः - ४.१.२.[२५]

तानि वा अनिङ्ग्यमानानि शेरे । आ तृतीयसवनात्तायते यज्ञ एति वै तद्यत्तायते तस्मादिमानि वयांसि विगृह्य पक्षावनायुवानानि पतन्ति तानि पुनस्तृतीयसवने प्रयुज्यन्ते तस्मादिमानि वयांसि समासं पक्षावायुवानानि पतन्ति यज्ञस्यैवैतद्विधामनु - ४.१.२.[२६]

इयं ह वा उपांशुः । प्राणो ह्युपांशुरिमां ह्येव प्राणन्नभिप्राणित्यसावेवान्तर्याम उदानो ह्यन्तर्यामोऽमुं ह्येव लोकमुदनन्नभ्युदनित्यन्तरिक्षमेवोपांशुसवनो व्यानो ह्युपांशुसवनोऽन्तरिक्षं ह्येव व्यनन्नभिव्यनिति - ४.१.२.[२७]

##४.१.३ ऐन्द्रवायवग्रहः

वाग्घ वा अस्यैन्द्रवायवः । एतन्न्वध्यात्ममिन्द्रो ह यत्र वृत्राय वज्रम्प्रजहार सोऽबलीयान्मन्यमानो नास्तृषीतीव बिभ्यन्निलयां चक्रे तदेवापि देवा अपन्यलयन्त - ४.१.३.[१]

ते ह देवा ऊचुः । न वै हतं वृत्रं विद्म न जीवं हन्त न एको वेत्तु यदि हतो वा वृत्रो जीवति वेति - ४.१.३.[२]

ते वायुमब्रुवन् । अयं वै वायुर्योऽयं पवते वायो त्वमिदं विद्धि यदि हतो वा वृत्रो जीवति वा त्वं वै न आशिष्ठोऽसि यदि जीविष्यति त्वमेव क्षिप्रम्पुनरागमिष्यसीति - ४.१.३.[३]

स होवाच । किं मे ततः स्यादिति प्रथमवषट्कार एव ते सोमस्य राज्ञ इति तथेत्येयाय वायुरैद्धतं वृत्रं स होवाच हतो वृत्रो यद्धते कुर्यात् तत्कुरुतेति - ४.१.३.[४]



ते देवा अभ्यसृज्यन्त । यथा वित्तिं वेत्स्यमाना एवं स यमेकोऽलभत स एकदेवत्योऽभवद्यं द्वौ स द्विदेवत्यो यं बहवः स बहुदेवत्यस्तद्यदेनम्पात्रैर्व्यगृह्णत तस्माद्ग्रहा नाम - ४.१.३.[५]

स एषामापूयत् । स एनाञ्छुक्तः पूतिरभिववौ स नालमाहुत्या आस नालं भक्षाय - ४.१.३.[६]

ते देवा वायुमब्रुवन् । वायविमं नो विवाहीमं नः स्वदयेति स होवाच किं मे ततः स्यादिति त्वयैवैतानि पात्राण्याचक्षीरन्निति तथेति होवाच यूयं तु मे सच्युपवातेति - ४.१.३.[७]

तस्य देवाः । यावन्मात्रमिव गन्धस्यापजघ्नुस्तं पशुष्वदधुः स एष पशुषु कुणपगन्धस्तस्मात्कुणपगन्धान्नापिगृह्णीत सोमस्य हैष राज्ञो गन्धः - ४.१.३.[८]

नो एव निष्ठीवेत् । तस्माद्यद्यप्यासक्त इव मन्येताभिवातं परीयाच्छ्रीर्वै सोमः पाप्मा यक्ष्मः स यथा श्रेयस्यायति पापीयान्प्रत्यवरोहेदेवं हास्माद्यक्ष्मः प्रत्यवरोहति - ४.१.३.[९]

अथेतरं वायुर्व्यवात् । तदस्वदयत्ततोऽलमाहुत्या आसालं भक्षाय तस्मादेतानि नानादेवत्यानि सन्ति वायव्यानीत्याचक्षते सोऽस्यैष प्रथमवषट्कारश्च सोमस्य राज्ञ एतान्यु एनेन पात्राण्याचक्षते - ४.१.३.[१०]

इन्द्रो ह वा ईक्षां चक्रे । वायुर्वै नोऽस्य यज्ञस्य भूयिष्ठभाग्यस्य प्रथमवषट्कारश्च सोमस्य राज्ञ एतान्यु एनेन पात्राण्याचक्षते हन्तास्मिन्नपित्वमिच्छा इति - ४.१.३.[११]

स होवाच । वायवा माऽस्मिन्ग्रहे भजेति किं ततः स्यादिति निरुक्तमेव वाग्वदेदिति निरुक्तं चेद्वाग्वदेदा त्वा भजामीति तत एष ऐन्द्रवायवो ग्रहोऽभवद्वायव्यो हैव ततः पुरा - ४.१.३.[१२]

स इन्द्रोऽब्रवीत् । अर्धं मेऽस्य ग्रहस्येति तुरीयमेव त इति वायुरर्धमेव म इतीन्द्रस्तुरीयमेव त इति वायुः - ४.१.३.[१३]



तौ प्रजापतिं प्रति प्रश्नमेयतुः । स प्रजापतिर्ग्रहं द्वेधा चकार स होवाचेदं वायोरित्यथ पुनरर्धं द्वेधा चकार स होवाचेदं वायोरितीदं तवेतीन्द्रतुरीयमेव भाजयांचकार यद्वै चतुर्थं तत्तुरीयं तत एष ऐन्द्रतुरीयो ग्रहोऽभवत् - ४.१.३.[१४]

तस्य वा एतस्य ग्रहस्य । द्वे पुरोरुचौ वायव्यैव पूर्वा ऐन्द्रवायव उत्तरा द्वे अनुवाक्ये वायव्यैव पूर्वैन्द्रवायव्युत्तरा द्वौ प्रैषौ वायव्य एव पूर्व ऐन्द्रवायव उत्तरो द्वे याज्ये वायव्यैव पूर्वैन्द्रवायव्युत्तरैवमेनं तुरीयं तुरीयमेव भाजयांचकार - ४.१.३.[१५]

स होवाच । तुरीयंतुरीयं चेन्मामबीभजुस्तुरीयमेव तर्हि वाङ्निरुक्तं वदिष्यतीति तदेतत्तुरीयं वाचो निरुक्तं यन्मनुष्या वदन्त्यथैतत्तुरीयं वाचोऽनिरुक्तं यत्पशवो वदन्त्यथैतत्तुरीयं वाचोऽनिरुक्तं यद्वयांसि वदन्त्यथैतत्तुरीयं वाचोऽनिरुक्तं यदिदं क्षुद्रं सरीसृपं वदति - ४.१.३.[१६]

तस्मादेतदृषीणाभ्यनूक्तम् । चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा येमनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्तीति - ४.१.३.[१७]

अथातो गृह्णात्येव । आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार उपो तेऽअन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयं वायवे त्वेति - ४.१.३.[१८]

अथापगृह्य पुनरानयति । इन्द्रवायू इमे सुता उप प्रयोभिरागतम् । इन्दवो वामुशन्ति हि । उपयामगृहीतोऽसि वायव इन्द्रवायुभ्यां त्वैष ते योनिः सजोषोभ्यां त्वेति सादयति स यदाह सजोषोभ्यां त्वेति यो वै वायुः स इन्द्रो य इन्द्रः स वायुस्तस्मादाहैष ते योनिः सजोषोभ्यां त्वेति - ४.१.३.[१९]

##४.१.४ मैत्रावरुणग्रहः



क्रतूदक्षौ ह वा अस्य मित्रावरुणौ । एतन्न्वध्यात्मं स यदेव मनसा कामयत इदं मे स्यादिदं कुर्वीयेति स एव क्रतुरथ यदस्मै तत्समृध्यते स दक्षो मित्र एव क्रतुर्वरुणो दक्षो ब्रह्मैव मित्रः क्षत्रं वरुणोऽभिगन्तैव ब्रह्म कर्ता क्षत्रियः - ४.१.४.[१]

ते हैतेऽअग्रे नानेवासतुः । ब्रह्म च क्षत्रं च ततः शशाकैव ब्रह्म मित्र ऋते क्षत्राद्वरुणात्स्थातुम् - ४.१.४.[२]

न क्षत्रं वरुणः । ऋते ब्रह्मणो मित्राद्यद्ध किं च वरुणः कर्म चक्रेऽप्रसूतं ब्रह्मणा मित्रेण न हैवास्मै तत्समानृधे - ४.१.४.[३]

स क्षत्रं वरुणः । ब्रह्म मित्रमुपमन्त्रयां चक्र उप माऽऽवर्तस्व संसृजावहै पुरस्त्वा करवै त्वत्प्रसूतः कर्म करवा इति तथेति तौ समसृजेतां तत एष मैत्रावरुणो ग्रहोऽभवत् - ४.१.४.[४]

सो एव पुरोधा । तस्मान्न ब्राह्मणः सर्वस्येव क्षत्रियस्य पुरोधां कामयेत सं ह्येवैतौ सृजेते सुकृतं च दुष्कृतं च नो एव क्षत्रियः सर्वमिव ब्राह्मणम्पुरोदधीत सं ह्येवैतौ सृजेते सुकृतं च दुष्कृतं च स यत्ततो वरुणः कर्म चक्रे प्रसूतं ब्रह्मणा मित्रेण सं हैवास्मै तदानृधे - ४.१.४.[५]

तत्तदवक्लृप्तमेव । यद्ब्राह्मणोऽराजन्यः स्याद्यद्यु राजानं लभेत समृद्धं तदेतद्ध त्वेवानवक्लृप्तं यत्क्षत्रियो ब्राह्मणो भवति यद्ध किं च कर्म कुरुते प्रसूतं ब्रह्मणा मित्रेण न हैवास्मै तत्समृध्यते तस्मादु क्षत्रियेण कर्म करिष्यमाणेनोपसर्तव्य एव ब्राह्मणः सं हैवास्मै तद्ब्रह्मप्रसूतं कर्मऽर्ध्यते - ४.१.४.[६]

अथातो गृह्णात्येव । अयं वां मित्रावरुणा सुतः सोम ऋतावृधा ममेदिह श्रुतं हवमुपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वेति - ४.१.४.[७]



तं पयसा श्रीणाति । तद्यत्पयसा श्रीणाति वृत्रो वै सोम आसीत्तं यत्र देवा अघ्नंस्तम्मित्रमब्रुवंस्त्वमपि हंसीति स न चकमे सर्वस्य वा अहं मित्रमस्मि न मित्रं सन्नमित्रो भविष्यामीति तं वै त्वा यज्ञादन्तरेष्याम इत्यहमपि हन्मीति होवाच तस्मात्पशवोऽपाक्रामन्मित्रं सन्नमित्रोऽभूदिति स पशुभिर्व्यार्ध्यत तमेतद्देवाः पशुभिः समार्धयन्यत्पयसाऽश्रीणंस्तथो एवैनमेष एतत्पशुभिः समर्धयति यत्पयसा श्रीणाति - ४.१.४.[८]

तदाहुः । शश्वद्ध नैव चकमे हन्तुमिति तद्यदेवात्र पयस्तन्मित्रस्य सोम एव वरुणस्य तस्मात्पयसा श्रीणाति - ४.१.४.[९]

स श्रीणाति । राया वयं ससवांसो मदेम हव्येन देवा यवसेन गावः तां धेनुम्मित्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीमेष ते योनिर्ऋतायुभ्यां त्वेति सादयति स यदाहऽर्तायुभ्यां त्वेति ब्रह्म वा ऋतं ब्रह्म हि मित्रो ब्रह्मो ह्यृतं वरुण एवायुः संवत्सरो हि वरुणः संवत्सर आयुस्तस्मादाहैष ते योनिर्ऋतायुभ्यां त्वेति - ४.१.४.[१०]

##४.१.५ आश्विनग्रहः
श्रोत्रं ह वा अस्याश्विनः । तस्मात्सर्वतः परिहारं भक्षयति सर्वतो ह्यनेन श्रोत्रेण शृणोति यत्र वै भृगवो वाङ्गिरसो वा स्वर्गं लोकं समाश्नुवत तच्च्यवनो वा भार्गवश्च्यवनो वाङ्गिरसस्तदेव जीर्णिः कृत्यारूपो जहे - ४.१.५.[१]

शर्यातो ह वा इदं मानवो ग्रामेण चचार । स तदेव प्रतिवेशो निविविशे तस्य कुमाराः क्रीडन्त इमं जीर्णिं कृत्यारूपमनर्थ्यं मन्यमाना लोष्टैर्विपिपिषुः - ४.१.५.[२]

स शार्यातेभ्यश्चुक्रोध । तेभ्योऽसंज्ञां चकार पितैव पुत्रेण युयुधे भ्राताभ्रात्रा - ४.१.५.[३]

शर्यातो ह वा ईक्षां चक्रे । यत्किमकरं तस्मादिदमापदीति स गोपालांश्चाविपालांश्च संह्वयितवा उवाच - ४.१.५.[४]



स होवाच । को वोऽद्येह किंचिदद्राक्षीदिति ते होचुः पुरुष एवायं जीर्णिः कृत्यारूपः शेते तमनर्थ्यं मन्यमानाः कुमारा लोष्टैर्व्यपिक्षन्निति स विदांचकार स वै च्यवन इति - ४.१.५.[५]

स रथं युक्त्वा । सुकन्यां शार्यातीमुपाधाय प्रसिष्यन्द स आजगाम यत्रर्षिरास तत् - ४.१.५.[६]

स होवाच । ऋषे नमस्ते यन्नावेदिषं तेनाहिंसिषमियं सुकन्या तया तेऽपह्नुवे संजानीतां मे ग्राम इति तस्य ह तत एव ग्रामः संजज्ञे स ह तत एव शर्यातो मानव उद्युयुजे नेदपरं हिनसानीति - ४.१.५.[७]

अश्विनौ ह वा इदं भिषज्यन्तौ चेरतुः । तौ सुकन्यामुपेयतुस्तस्याम्मिथुनमीषाते तन्न जज्ञौ - ४.१.५.[८]

तौ होचतुः । सुकन्ये कमिमं जीर्णिं कृत्यारूपमुपशेष आवामनुप्रेहीति सा होवाच यस्मै मां पिताऽदान्नैवाहं तं जीवन्तं हास्यामीति तद्धायमृषिराजज्ञौ - ४.१.५.[९]

स होवाच । सुकन्ये किं त्वैतदवोचतामिति तस्मा एतद्व्याचचक्षे स ह व्याख्यातऽउवाच यदि त्वैतत्पुनर्ब्रुवतः सा त्वं ब्रूतान्न वै सुसर्वाविव स्थो न सुसमृद्धाविवाथ मे पतिं निन्दथ इति तौ यदि त्वा ब्रुवतः केनावमसर्वौ स्वः केनासमृद्धाविति सा त्वं ब्रूतात्पतिं नु मे पुनर्युवाणं कुरुतमथ वां वक्ष्यामीति तां पुनरुपेयतुस्तां हैतदेवोचतुः - ४.१.५.[१०]

सा होवाच । न वै सुसर्वाविव स्थो न सुसमृद्धाविवाथ मे पतिं निन्दथ इति तौ होचतुः केनावमसर्वौ स्वः केनासमृद्धाविति सा होवाच पतिं नु मे पुनर्युवाणं कुरुतमथ वां वक्ष्यामीति - ४.१.५.[११]



तौ होचतुः । एतं ह्रदमभ्यवहर स येन वयसा कमिष्यते तेनोदैष्यतीति तं ह्रदमभ्यवजहार स येन वयसा चकमे तेनोदेयाय - ४.१.५.[१२]

तौ होचतुः । सुकन्ये केनावमसर्वौ स्वः केनासमृद्धाविति तौ हर्षिरेव प्रत्युवाच कुरुक्षेत्रेऽमी देवा यज्ञं तन्वते ते वां यज्ञादन्तर्यन्ति तेनासर्वौ स्थस्तेनासमृद्धाविति तौ ह तत एवाश्विनौ प्रेयतुस्तावाजग्मतुर्देवान्यज्ञं तन्वानान्त्स्तुते बहिष्पवमाने - ४.१.५.[१३]

तौ होचतुः । उप नौ ह्वयध्वमिति ते ह देवा ऊचुर्न वामुपह्वयिष्यामहे बहु मनुष्येषु संसृष्टमचारिष्टं भिषज्यन्ताविति - ४.१.५.[१४]

तौ होचतुः । विशीर्ष्णा वै यज्ञेन यजध्व इति कथं विशीर्ष्णेत्युप नु नौ ह्वयध्वमथ वो वक्ष्याव इति तथेति ता उपाह्वयन्त ताभ्यामेतमाश्विनं ग्रहमगृह्णस्तावध्वर्यू यज्ञस्याभवतां तावेतद्यज्ञस्य शिरः प्रत्यधत्तां तददस्तद्दिवाकीर्त्यानां ब्राह्मणे व्याख्यायते यथा तद्यज्ञस्य

शिरः प्रतिदधतुस्तस्मादेष स्तुते बहिष्पवमाने ग्रहो गृह्यते स्तुते हि बहिष्पवमान आगच्छताम् - ४.१.५.[१५]

तौ होचतुः । मुख्यौ वा आवां यज्ञस्य स्वो यावध्वर्यू इह नाविमम्पुरस्ताद्ग्रहं पर्याहरताभि द्विदेवत्यानिति ताभ्यामेतं पुरस्ताद्ग्रहम्पर्याजह्रुरभि द्विदेवत्यांस्तस्मादेष दशमो ग्रहो गृह्यते तृतीय एव वषट्क्रियतेऽथ यदश्विनावितीमे ह वै द्यावापृथिवी प्रत्यक्षमश्विनाविमे हीदं सर्वमाश्नुवातां पुष्करस्रजावित्यग्निरेवास्यै पुष्करमादित्योऽमुष्यै - ४.१.५.[१६]

अथातो गृह्णात्येव । या वां कशा मधुमत्यश्विना सूनृतावती तया यज्ञम्मिमिक्षतमुपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वेति सादयति तं वै मधुमत्यर्चा गृह्णाति माध्वीभ्यां त्वेति सादयति तद्यन्मधुमत्यर्चा गृह्णाति माध्वीभ्यां त्वेति सादयति - ४.१.५.[१७]



दध्यङ्ङ वा आभ्यामाथर्वणः । मधु नाम ब्राह्मणमुवाच तदेनयोः प्रियं धाम तदेवैनयोरेतेनोपगच्छति तस्मान्मधुमत्यर्चा गृह्णाति माध्वीभ्यां त्वेति सादयति - ४.१.५.[१८]

तानि वा एतानि । श्लक्ष्णानि पात्राणि भवन्ति रास्नावमैन्द्रवायवपात्रं तत्तस्य द्वितीयं रूपं तेन तद्द्विदेवत्यमजकावं मैत्रावरुणपात्रं तत्तस्य द्वितीयं रूपं तेन तद्द्विदेवत्यमौष्ठमाश्विनपात्रं तत्तस्य द्वितीयं रूपं तेन तद्द्विदेवत्यमथ यदश्विनाविति मुख्यौ वा अश्विनावौष्ठमिव वा इदं मुखं तस्मादौष्ठमाश्विनपात्रं भवति - ४.१.५.[१९]

##४.२.१ शुक्रामन्थिनौ ग्रहौ
चक्षुषी ह वा अस्य शुक्रामन्थिनौ । तद्वा एष एव शुक्रो य एष तपति तद्यदेष एतत्तपति तेनैष शुक्रश्चन्द्रमा एव मन्थी - ४.२.१.[१]

तं सक्तुभिः श्रीणाति । तदेनं मन्थं करोति तेनो एष मन्थ्येतौ ह वा आसाम्प्रजानां चक्षुषी स यद्धैतौ नोदियातां न हैवेह स्वौ चन पाणी निर्जानीयुः - ४.२.१.[२]

तयोरत्तैवान्यतरः । आद्योऽन्यतरोऽत्तैव शुक्र ऽआद्यो मन्थी - ४.२.१.[३]

तयोरत्तैवान्यतरमनु । आद्योऽन्यतरमन्वत्तैव शुक्रमन्वाद्यो मन्थिनमनु तौ वा अन्यस्मै गृह्येते अन्यस्मै हूयेते शण्डामर्कावित्यसुररक्षसे ताभ्यां गृह्येते देवताभ्यो हूयेते तद्यत्तथा - ४.२.१.[४]

यत्र वै देवाः । असुररक्षसान्यपजघ्निरे तदेतावेव न शेकुरपहन्तुं यद्ध स्म देवाः किं च कर्म कुर्वते तद्ध स्म मोहयित्वा क्षिप्र एव पुनरपद्रवतः - ४.२.१.[५]

ते ह देवा ऊचुः । उपजानीत यथेमावपहनामहा इति ते होचुर्ग्रहावेवाभ्यां गृह्णाम तावभ्यवैष्यतस्तौ स्वीकृत्यापहनिष्यामह इति ताभ्यां ग्रहौ जगृहुस्तावभ्यवैतां तौ स्वीकृत्यापाघ्नत तस्माच्छण्डामर्काभ्यामिति गृह्येते देवताभ्यो हूयेते - ४.२.१.[६]



अपि होवाच याज्ञवल्क्यः । नो स्विद्देवताभ्य एव गृह्णीयामा ३ विजितरूपमिव हीदमिति तद्वै स तन्मीमांसामेव चक्रे नेत्तु चकार - ४.२.१.[७]

इमामु हैके शुक्रस्य पुरोरुचं कुर्वन्ति । अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमान इति तदेतस्य रूपं कुर्मो य एष तपतीति यदाह ज्योतिर्जरायुरिति - ४.२.१.[८]

इमां त्वेव शुक्रस्य पुरोरुचं कुर्यात् । तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदमित्यत्ता ह्येतमन्वत्ता हि ज्येष्ठस्तस्मादाह ज्येष्ठतातिं बर्हिषदं स्वर्विदं प्रतीचीनं वृजनं दोहसे धुनिमाशुं जयन्तमनु यासु वर्धसे उपयामगृहीतोऽसि शण्डाय त्वैष ते योनिर्वीरतां पाहीति सादयत्यत्ता ह्येतमन्वत्ता हि वीरस्तस्मादाहैष ते योनिर्वीरतां पाहीति दक्षिणार्धे सादयत्येतां ह्येष दिशमनु संचरति - ४.२.१.[९]

अथ मन्थिनं गृह्णाति । अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने इममपां संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति उपयामगृहीतोऽसि मर्काय त्वेति - ४.२.१.[१०]

तं सक्तुभिः श्रीणाति । तद्यत्सक्तुभिः श्रीणाति वरुणो ह वै सोमस्य राज्ञोऽभीवाक्षि प्रतिपिपेष तदश्वयत्ततोऽश्वः समभवत्तद्यच्छ्वयथात्समभवत्तस्मादश्वो नाम तस्याश्रु प्रास्कन्दत्ततो यवः समभवत्तस्मादाहुर्वरुण्यो यव इति तद्यदेवास्यात्र चक्षुषोऽमीयत तेनैवैनमेतत्समर्धयति कृत्स्नं करोति तस्मात्सक्तुभिः श्रीणाति - ४.२.१.[११]

स श्रीणाति । मनो न येषु हवनेषु तिग्मं विपः शच्या वनुथो द्रवन्ता आ यः शर्याभिस्तुविनृम्णो अस्याश्रीणीतादिशं गभस्तावेष ते योनिः प्रजाः पाहीतिसादयत्याद्यो ह्येतमन्वाद्या हीमाः प्रजा विशस्तस्मादाहैष ते योनिः प्रजाः पाहीति - ४.२.१.[१२]



द्वौ प्रोक्षितौ यूपशकलौ भवतः । द्वावप्रोक्षितौ प्रोक्षितं चैवाध्वर्युरादत्तेऽप्रोक्षितं चैवमेव प्रतिप्रस्थाता प्रोक्षितं चैवादत्तेऽप्रोक्षितं च शुक्रमेवाध्वर्युरादत्ते मन्थिनं प्रतिप्रस्थाता - ४.२.१.[१३]

सोऽध्वर्युः । अप्रोक्षितेन यूपशकलेनापमार्ष्ट्यपमृष्टः शण्ड इत्येवमेव प्रतिप्रस्थातापमृष्टो मर्क इति तदाददानावेवासुररक्षसे अपहतो देवास्त्वा शुक्रपाः प्रणयन्त्वित्येवाध्वर्युर्निष्क्रामति देवास्त्वा मन्थिपाः प्रणयन्त्विति प्रतिप्रस्थाता तदेतौ देवताभ्य एव प्रणयतः - ४.२.१.[१४]

तौ जघनेनाहवनीयमरत्नी संधत्तः । ता उत्तरवेदौ सादयतो दक्षिणायामेव श्रोणावध्वर्युः सादयत्युत्तरायां प्रतिप्रस्थाता अननुसृजन्तावेवानाधृष्टासीति तद्रक्षोभिरेवैतदुत्तरवेदिमनाधृष्टां कुरुतो विपर्येष्यन्तौ वा एतावग्निम्भवतोऽत्येष्यन्तौ तस्मा एवैतन्निह्नुवाते तथो हैनौ विपरियन्तावग्निर्न हिनस्ति - ४.२.१.[१५]

सोऽध्वर्युः पर्येति । सुवीरो वीरान्प्रजनयन्परीहीत्यत्ता ह्येतमन्वत्ता हि वीरस्तस्मादाह सुवीरो वीरान्प्रजनयन्परीहीत्यभि रायस्पोषेण यजमानमिति तद्यजमानायाशिषमाशास्ते यदाहाभि रायस्पोषेण यजमानमिति - ४.२.१.[१६]

अथ प्रतिप्रस्थाता पर्येति । सुप्रजाः प्रजाः प्रजनयन्परीहीत्याद्यो ह्येतमन्वाद्या हीमाः प्रजा विशस्तस्मादाह सुप्रजाः प्रजाः प्रजनयन्परीहीत्यभि रायस्पोषेण यजमानमिति तद्यजमानायाशिषमाशास्ते यदाहाभि रायस्पोषेण यजमानमिति - ४.२.१.[१७]

तावपिधाय निष्क्रामतः । तिर एवैनावेतत्कुरुतस्तस्मादिमौ सूर्याचन्द्रमसौ प्राञ्चौ यन्तौ न कश्चन पश्यति तौ पुरस्तात्परीत्यापोर्णुतः पुरस्तात्तिष्ठन्तौ जुहुत आविरेवैनावेतत्कुरुतस्तस्मादिमौ सूर्याचन्द्रमसौ प्रत्यञ्चौ यन्तौ सर्व एव पश्यति तस्मात्पराग्रेतः सिच्यमानं न कश्चन पश्यति तदु पश्चात्प्रजायमानं सर्व एव पश्यति - ४.२.१.[१८]



तौ जघनेन यूपमरत्नी संधत्तः । यद्यग्निर्नोद्बाधेत यद्यु अग्निरुद्बाधेताप्यग्रेणैव यूपमरत्नी संदध्यातां संजग्मानो दिवा पृथिव्याशुक्रः शुक्रशोचिषेत्येवाध्वर्युः संजग्मानो दिवा पृथिव्या मन्थी मन्थिशोचिषेति प्रतिप्रस्थाता चक्षुषोरेवैते आरमणे कुरुतश्चक्षुषी एवैतत्संधत्तस्तस्मादिमे अभितोऽस्थिनी चक्षुषी संहिते - ४.२.१.[१९]

सोऽध्वर्युः । अप्रोक्षितं यूपशकलं निरस्यति निरस्तः शण्ड इत्येवमेव प्रतिप्रस्थाता निरस्तो मर्क इति तत्पुराहुतिभ्योऽसुररक्षसे अपहतः - ४.२.१.[२०]

अथाध्वर्युः । प्रोक्षितं यूपशकलमाहवनीये प्रास्यति शुक्रस्याधिष्ठानमसीत्येवमेव प्रतिप्रस्थाता मन्थिनोऽधिष्ठानमसीति चक्षुषोरेवैते समिधौ चक्षुषी एवैतत्समिन्द्धे तस्मादिमे समिद्धे चक्षुषी - ४.२.१.[२१]

तत्र जपति । अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्यामेत्याशीरेवैषैतस्य कर्मण आशिषमेवैतदाशास्ते - ४.२.१.[२२]

अथाश्राव्याह । प्रातःप्रातः सवस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति वषट्कृतेऽध्वर्युर्जुहोति तदनु प्रतिप्रस्थाता तदनु चमसाध्वर्यवः - ४.२.१.[२३]

तौ वै पुरस्तात्तिष्ठन्तौ जुहुतः । चक्षुषी वा एतौ तत्पुरस्तादेवैतच्चक्षुषी धत्तस्तस्मादिमे पुरस्ताच्चक्षुषी - ४.२.१.[२४]

अभितो यूपं तिष्ठन्तौ जुहुतः । यथा वै नासिकैवं यूपस्तस्मादिमे अभितो नासिकां चक्षुषी - ४.२.१.[२५]

तौ वै वषट्कृतौ सन्तौ मन्त्रेण हूयते । एतेनो हैतौ तदुदश्नुवाते यदेनौ सर्वं सवनमनुहूयते यद्वेवैतौ सर्वं सवनमनुहूयत एतौ वै प्रजापतेः प्रत्यक्षतमां चक्षुषी ह्येतौ सत्यं वै चक्षुः सत्यं हि प्रजापतिस्तस्मादेनौ सर्वं सवनमनुहूयते - ४.२.१.[२६]



स जुहोति । स प्रथमा संस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रो अग्निः स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय सुतमाजुहोत स्वाहेति - ४.२.१.[२७]

स यज्जुहोति । सा प्रथमा स प्रथम इति शश्वद्ध वै रेतसः सिक्तस्य चक्षुषी एव प्रथमे सम्भवतस्तस्माज्जुहोति सा प्रथमा इति - ४.२.१.[२८]

अथ सम्प्रेष्यति । प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्रयजमानस्य प्रयन्तु सदस्यानां होत्राणां चमसाध्वर्यव उपावर्तध्वं शुक्रस्याभ्युन्नयध्वमिति सम्प्रैष एवैष पर्येत्य प्रतिप्रस्थाताध्वर्योः पात्रे संस्रवमवनयत्यत्त्र एवैतदाद्यं बलिं हारयति तमध्वर्युर्होतृचमसेऽवनयति भक्षाय वषट्कर्तुर्हि भक्षः प्राणो वै वषट्कारः सोऽस्मादेतद्वषट्कुर्वतः पराङिवाभूत्प्राणो वै भक्षस्तत्प्राणं पुनरात्मन्धत्ते - ४.२.१.[२९]

अथ यदेते प्रतीची पात्रे न हरन्ति । हरन्त्यन्यान्ग्रहांश्चक्षुषी ह्येते संस्रवमेव होतृचमसेऽवनयति - ४.२.१.[३०]

अथ होत्राणां चमसानभ्युन्नयन्ति । हुतोच्छिष्टा वा एते संस्रवा भवन्ति नालमाहुत्यै तानेवैतत्पुनराप्याययन्ति तथाऽलमाहुत्यै भवन्ति तस्माद्धोत्राणां चमसानभ्युन्नयन्ति - ४.२.१.[३१]

अथ होत्राः संयाजयन्ति । होत्रा ह वै युक्ता देवेभ्यो यज्ञं वहन्ति ता एवैतत्संतर्पयन्ति तृप्ताः प्रीता देवेभ्यो यज्ञं वहानिति तस्माद्धोत्राः संयाजयन्ति - ४.२.१.[३२]

स प्रथमायां वा होत्रायाम् । इष्टायामुत्तमायां वानुमन्त्रयते तृम्पन्तु होत्रा मध्वो याः स्विष्टा याः सुप्रीताः सुहुता यत्स्वाहेति होत्राणामेवैषा तृप्तिरथेत्य प्रत्यङ्ङुपविशत्ययाडग्नीदित्यग्नीद्ध्यत्र यजतामुत्तमः संयजति तस्मादाहायाडग्नीदिति - ४.२.१.[३३]



##४.२.२ आग्रयणग्रहः
आत्मा ह वा अस्याग्रयणः । सोऽस्यैष सर्वमेव सर्वं ह्ययमात्मा तस्मादनयागृह्णात्यस्यै हि स्थाली भवति स्थाल्या ह्येनं गृह्णाति सर्वं वा इयं सर्वमेष ग्रहस्तस्मादनया गृह्णाति - ४.२.२.[१]

पूर्णं गृह्णाति । सर्वं वै पूर्णं सर्वमेष ग्रहस्तस्मात्पूर्णं गृह्णाति - ४.२.२.[२]

विश्वेभ्यो देवेभ्यो गृह्णाति । सर्वं वै विश्वे देवाः सर्वमेषग्रहस्तस्माद्विश्वेभ्यो देवेभ्यो गृह्णाति - ४.२.२.[३]

सर्वेषु सवनेषु गृह्णाति । सर्वं वै सवनानि सर्वमेष ग्रहस्तस्मात्सर्वेषु सवनेषु गृह्णाति - ४.२.२.[४]

स यदि राजोपदस्येत् । तमत एव तन्वीरन्नतः प्रभावयेयुरात्मा वा आग्रयण आत्मनो वा इमानि सर्वाण्यङ्गानि प्रभवन्त्येतस्मादन्ततो हारियोजनं ग्रहं गृह्णाति तदात्मन्येवास्यां प्रतिष्ठायामन्ततो यज्ञः प्रतितिष्ठति - ४.२.२.[५]

अथ यस्मादाग्रयणो नाम । यां वा अमूं ग्रावाणमाददानो वाचं यच्छत्यत्र वै साग्रेऽवदत्तद्यत्सात्राग्रेऽवदत्तस्मादाग्रयणो नाम - ४.२.२.[६]

रक्षोभ्यो वै तां भीषा वाचमयच्छन् । षड्वा अतः प्राचो ग्रहान्गृह्णात्यथैष सप्तमः षड्वा ऋतवः संवत्सरस्य सर्वं वै संवत्सरः - ४.२.२.[७]

तां देवाः । सर्वस्मिन्विजितेऽभयेऽनाष्ट्रेऽत्राग्रे वाचमवदंस्तथो एवैष एतां सर्वस्मिन्विजितेऽभयेऽनाष्ट्रेऽत्राग्रे वाचं वदति - ४.२.२.[८]



अथातो गृह्णात्येव । ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वमुपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयण इति वाचमेवैतदयातयाम्नीं करोति तस्मादनया समानं सद्विपर्यासं वदत्यजामितायै जामि ह कुर्याद्यदाग्रयणोऽस्याग्रयणोऽसीति गृह्णीयात्तस्मादाहाग्रयणोऽसि स्वाग्रयण इति - ४.२.२.[९]

पाहि यज्ञं पाहि यज्ञपतिमिति । वाचमेवैतदुत्सृष्टामाह गोपाय यज्ञमिति पाहि यज्ञपतिमिति वाचमेवैतदुत्सृष्टामाह गोपाय यजमानमिति यजमानो हि यज्ञपतिर्विष्णुस्त्वामिन्द्रियेण पातु विष्णुं त्वं पाहीति वाचमेवैतदुत्सृष्टामाह यज्ञो वै विष्णुर्यज्ञस्त्वां वीर्येण गोपायत्विति विष्णुं त्वं पाहीति वाचमेवैतदुत्सृष्टामाह यज्ञं त्वं गोपायेत्यभि सवनानि पाहीति तदेतं ग्रहमाह सर्वाणि ह्येष सवनानि प्रति - ४.२.२.[१०]

अथ दशापवित्रमुपगृह्य हिङ्करोति । सा हैषा वागनुद्यमाना तताम तस्यां देवा वाचि तान्तायां हिङ्कारेणैव प्राणमदधुः प्राणो वै हिङ्कारः प्राणो हि वै हिङ्कारस्तस्मादपिगृह्य नासिके न हिङ्कर्तुं शक्नोति सैतेन प्राणेन समजिहीत यदा
वै तान्तः प्राणं लभतेऽथ स संजिहीते तथो एवैष एतद्वाचि तान्तायां हिङ्कारेणैव
प्राणं दधाति सैतेन प्राणेन संजिहीते त्रिष्कृत्वो हिङ्करोति त्रिवृद्धि यज्ञः - ४.२.२.[११]

अथाह सोमः पवत इति । स यामेवामूं भीषाऽसुररक्षसेभ्यो न निरब्रुवंस्तामेवैतत्सर्वस्मिन्विजितेऽभयेऽनाष्ट्रेऽत्र निराह तामाविष्करोति तस्मादाह सोमः पवत इति - ४.२.२.[१२]

अस्मै ब्रह्मणेऽस्मै क्षत्रायेति । तद्ब्रह्मणे च क्षत्राय चाहास्मै सुन्वते यजमानाय पवत इति तद्यजमानायाह - ४.२.२.[१३]



तदाहुः । एतावदेवोक्त्वा सादयेदेतावद्वा इदं सर्वं यावद्ब्रह्म क्षत्रं विडिन्द्राग्नी वा इदं सर्वं तस्मादेतावदेवोक्त्वा सादयेदिति - ४.२.२.[१४]

तदु ब्रूयादेव भूयः । इष ऊर्जे पवत इति वृष्ट्यै तदाह यदाहेष इत्यूर्ज इति यो वृष्टादूर्ग्रसो जायते तस्मै तदाहाद्भ्य ओषधीभ्यः पवत इति तदद्भ्यश्चौषधीभ्यश्चाह द्यावापृथिवीभ्यां पवत इति तदाभ्यां द्यावापृथिवीभ्यामाह ययोरिदं सर्वमधि सुभूताय पवत इति साधवे पवत इत्येवैतदाह - ४.२.२.[१५]

तदु हैक आहुः । ब्रह्मवर्चसाय पवत इति तदु तथा न ब्रूयाद्यद्वा आहास्मै ब्रह्मण इति तदेव ब्रह्मवर्चसायाह विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयति विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति तं वै मध्ये सादयत्यात्मा ह्यस्यैष मध्य इव ह्ययमात्मा दक्षिणोक्थ्यस्थाली भवत्युत्तरादित्यस्थाली - ४.२.२.[१६]

##४.२.३ उक्थग्रहः

अयं ह वा अस्यैषोऽनिरुक्त आत्मा यदुक्थ्यः । सोऽस्यैष आत्मैवात्मा ह्ययमनिरुक्तः प्राणः सोऽस्यैष आयुरेव तस्मादनया गृह्णात्यस्यै हि स्थाली भवति स्थाल्या ह्येनं गृह्णात्यजरा हीयममृताजरं ह्यमृतमायुस्तस्मादनया गृह्णाति - ४.२.३.[१]

तं वै पूर्णं गृह्णाति । सर्वं वै तद्यत्पूर्णं सर्वं तद्यदायुस्तस्मात्पूर्णं गृह्णाति - ४.२.३.[२]

तस्यासावेव ध्रुव आयुः । आत्मैवास्यैतेन संहितः पर्वाणि संततानि तद्वा अगृहीत एवैतस्मादच्छावाकायोत्तमो ग्रहो भवति - ४.२.३.[३]

अथ राजानमुपावहरति । तृतीयं वसतीवरीणामवनयति तत्पर्व समैति प्रथममहोत्तरस्य सवनस्य करोत्युत्तमं पूर्वस्य स यदुत्तरस्य सवनस्य तत्पूर्वं करोति यत्पूर्वस्य तदुत्तमं तद्व्यतिषजति तस्मादिमानि पर्वाणि व्यतिषक्तानीदमित्थमतिहानमिदमित्थम् - ४.२.३.[४]



एवमेव माध्यन्दिने सवने । अगृहीत एवैतस्मादच्छावाकायोत्तमो ग्रहो भवत्यथ तृतीयं वसतीवरीणामवनयति तत्पर्व समैति प्रथममहोत्तरस्य सवनस्य करोत्युत्तमं पूर्वस्य स यदुत्तरस्य तत्पूर्वं करोति यत्पूर्वस्य तदुत्तमं तद्व्यतिषजति तस्मादिमानि पर्वाणि व्यतिषक्तानीदमित्थमतिहानमिदमित्थं तद्यदस्यैतेनात्मा संहितस्तेनास्यैष आयुः - ४.२.३.[५]

सैषा कामदुघैवेन्द्रस्योद्धारः । त्रिभ्य एवैनं प्रातःसवन उक्थेभ्यो विगृह्णाति त्रिभ्यो माध्यन्दिने सवने तत्षड्कृत्वः षड्वा ऋतव ऋतवो वा इमान्त्सर्वान्कामान्पचन्त्येतेनो हैषा कामदुघैवेन्द्रस्योद्धारः - ४.२.३.[६]

तं वा अपुरोरुक्कं गृह्णाति । उक्थं हि पुरोरुगृग्घि पुरोरुगृग्घ्युक्थं सामग्रहोऽथ यदन्यज्जपति तद्यजुस्ता हैता अभ्यर्ध एवाग्र ऋग्भ्य आसुरभ्यर्धो यजुर्भ्योऽभ्यर्धः सामभ्यः - ४.२.३.[७]

ते देवा अब्रुवन् हन्तेमा यजुःषु दधाम तथेयं बहुलतरेव विद्या भविष्यतीति ता यजुःष्वदधुस्तत एषा बहुलतरेव विद्याभवत् - ४.२.३.[८]

तं यदपुरोरुक्कं गृह्णाति । उक्थं हि पुरोरुगृग्घि पुरोरुगृग्घ्युक्थं स यदेवैनमुक्थेभ्यो विगृह्णाति तेनो हास्यैष पुरोरुङ्गान्भवति तस्मादपुरोरुक्कं गृह्णाति - ४.२.३.[९]

अथातो गृह्णात्येव । उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत इतीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राय त्वेति बृहद्वते वयस्वत इति वीर्यवत इत्येवैतदाह यदाह बृहद्वते वयस्वत इत्युक्थाव्यं गृह्णामीत्युक्थेभ्यो ह्येनं गृह्णाति यत्त इन्द्र बृहद्वय इति यत्त इन्द्र वीर्यमित्येवैतदाह तस्मै त्वा विष्णवे त्वेति यज्ञस्य ह्येनमायुषे गृह्णाति तस्मादाह तस्मै त्वा विष्णवे त्वेत्येष ते योनिरुक्थेभ्यस्त्वेति
सादयत्युक्थेभ्यो ह्येनं गृह्णाति - ४.२.३.[१०]



तं विगृह्णाति । देवेभ्यस्त्वा देवाव्यं यज्ञस्यायुषे गृह्णामीति प्रशासनं स कुर्याद्य एवं कुर्याद्यथादेवतं त्वेव विगृह्णीयात् - ४.२.३.[११]

मित्रावरुणाभ्यां त्वा । देवाव्यं यज्ञस्यायुषे गृह्णामीत्येव मैत्रावरुणाय मैत्रावरुणीषु हि तस्मै स्तुवते मैत्रावरुणीरनुशंसति मैत्रावरुण्या यजति - ४.२.३.[१२]

इन्द्राय त्वा । देवाव्यं यज्ञस्यायुषे गृह्णामीत्येव ब्राह्मणाच्छंसिन ऐन्द्रीषु हि तस्मै स्तुवत ऐन्द्रीरनुशंसत्यैन्द्र्या यजति - ४.२.३.[१३]

इन्द्राग्निभ्यां त्वा । देवाव्यं यज्ञस्यायुषे गृह्णामीत्येवाच्छावाकायैन्द्राग्नीषु हि तस्मै स्तुवत ऐन्द्राग्नीरनुशंसत्यैन्द्राग्न्या यजतीन्द्राय त्वेत्येव माध्यन्दिने सवन ऐन्द्रं हि माध्यन्दिनं सवनम् - ४.२.३.[१४]

तदु ह चरकाध्वर्यवो विगृह्णन्ति । उपयामगृहीतोऽसि देवेभ्यस्त्वा देवाव्यमुक्थेभ्य उक्थाव्यं मित्रावरुणाभ्यां जुष्टं गृह्णाम्येष ते योनिर्मित्रावरुणाभ्यां त्वेति सादयति पुनर्हविरसीति स्थालीमभिमृशति - ४.२.३.[१५]

उपयामगृहीतोऽसि । देवेभ्यस्त्वा देवाव्यमुक्थेभ्य उक्थाव्यमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वेति सादयति पुनर्हविरसीति स्थालीमभिमृशति - ४.२.३.[१६]

उपयामगृहीतोऽसि । देवेभ्यस्त्वा देवाव्यमुक्थेभ्य उक्थाव्यमिन्द्राग्निभ्यां जुष्टं गृह्णाम्येष ते योनिरिन्द्राग्निभ्यां त्वेति सादयति नात्र पुनर्हविरसीति स्थालीमभिमृशतीन्द्राय त्वेन्द्राय त्वेत्येव माध्यन्दिने सवन ऐन्द्रं हि माध्यन्दिनं सवनं द्विर्ह पुनर्हविरसीति स्थालीमभिमृशति तूष्णीं तृतीयं निदधाति - ४.२.३.[१७]

तं वै नोपयामेन गृह्णीयात् । न योनौ सादयेदग्रे ह्येवैष उपयामेन गृहीतो भवत्यग्रे योनौ सन्नो जामितायै जामि ह कुर्याद्यदेनमत्राप्युपयामेन गृह्णीयाद्यद्योनौ सादयेदथ यत्पुनर्हविरसीति स्थालीमभिमृशति पुनर्ह्यस्यै ग्रहं ग्रहीष्यन्भवति न तदाद्रियेत तूष्णीमेव निदध्यात् - ४.२.३.[१८]



## ४.२.४ ध्रुवग्रहः

अयं ह वा अस्यैष प्राणः । योऽयं पुरस्तात्स वै वैश्वानर एवाथ योऽयं पश्चात्स ध्रुवस्तौ ह स्मैतौ द्वावेवाग्रे ग्रहौ गृह्णन्ति ध्रुववैश्वानराविति तयोरयमप्येतर्ह्यन्यतर एव गृह्यते ध्रुव एव स यदि तं चरकेभ्यो वा यतो वानुब्रुवीत यजमानस्य तं चमसेऽवनयेदथैतमेव होतृचमसे - ४.२.४.[१]

यद्वा अस्यावाचीनं नाभेः । तदस्यैष आत्मनः सोऽस्यैष आयुरेव तस्मादनया गृह्णात्यस्यै हि स्थाली भवति स्थाल्या ह्येनं गृह्णात्यजरा हीयममृताऽजरं ह्यमृतमायुस्तस्मादनया गृह्णाति - ४.२.४.[२]

तं वै पूर्णं गृह्णाति । सर्वं वै तद्यत्पूर्णं सर्वं तद्यदायुस्तस्मात्पूर्णं गृह्णाति - ४.२.४.[३]

वैश्वानराय गृह्णाति । संवत्सरो वै वैश्वानरः संवत्सर आयुस्तस्माद्वैश्वानराय गृह्णाति - ४.२.४.[४]

स प्रातःसवने गृहीतः । एतस्मात्कालादुपशेते तदेनं सर्वाणि सवनान्यतिनयति - ४.२.४.[५]

तं न स्तूयमानेऽवनयेत् । न ह संवत्सरं यजमानोऽतिजीवेद्यत्स्तूयमानेऽवनयेत् - ४.२.४.[६]

तं शस्यमानेऽवनयति । तदेनं द्वादशं स्तोत्रमतिनयति तथा परम्परमायुः समश्नुते तथो ह यजमानो ज्योग्जीवति तस्माद्ब्राह्मणोऽग्निष्टोमसत्स्यादैतस्य होमान्न सर्पेन्न प्रस्त्रावयेत तथा सर्वमायुः समश्नुत आयुर्वा अस्यैष तथा सर्वमायुरेति - ४.२.४.[७]



यद्वा अस्यावाचीनं नाभेः । तदस्यैष आत्मनः स यत्पुरैतस्य होमात्सर्पेद्वा प्र वा स्त्रावयेत ध्रुवं हावमेहेन्नेद्ध्रुवमवमेहानीति तस्माद्वा अग्निष्टोमसद्भवति तद्वै तद्यजमान एव यजमानस्य ह्येष तदात्मनः - ४.२.४.[८]

स वा अग्निष्टोमसद्भवति । यशो वै सोमस्तस्माद्यश्च सोमे लभते यश्चनोभावेवागच्छतो यश एवैतद्द्रष्टुमागच्छन्ति तद्वा एतद्यशो ब्राह्मणाः सम्प्रसृप्यात्मन्दधते यद्भक्षयन्ति स ह यश एव भवति य एवं विद्वान्भक्षयति - ४.२.४.[९]

ते वा एते । सर्पन्त एवाग्निष्टोमसद्ये तद्यशः संनिधाय सर्पन्ति ते पराञ्चो यशसो भवन्ति तदेष परिगृह्यैव पुनरात्मन्यशो धत्ते तेषां हैष एव यशस्वितमो भूत्वा प्रैति य एवं विद्वानग्निष्टोमसद्भवति - ४.२.४.[१०]

देवाश्च वा असुराश्च । उभये प्राजापत्याः पस्पृधिर एतस्मिन्यज्ञे प्रजापतौ पितरि संवत्सरेऽस्माकमयं भविष्यत्यस्माकमयं भविष्यतीति - ४.२.४.[११]

ततो देवाः । अर्चन्तः श्राम्यन्तश्चेरुस्त एतदग्निष्टोमसद्यं ददृशुस्त एतेनाग्निष्टोमसद्येन सर्वं यज्ञं समवृञ्जन्तान्तरायन्नसुरान्यज्ञात्तथो एवैष एतेनाग्निष्टोमसद्येन सर्वं यज्ञं संवृङ्क्तेऽन्तरेति सपत्नान्यज्ञात्तस्माद्वा ऽअग्निष्टोमसद्भवति - ४.२.४.[१२]

तं गृहीत्वोत्तरे हविर्धाने सादयति प्राणा वै ग्रहा नेत्प्राणान्मोहयानीत्युपकीर्णे वा इतरान्ग्रहान्सादयत्यथैतं व्युह्य न तृणं चनान्तर्धाय - ४.२.४.[१३]

यद्वा अस्योर्ध्वं नाभेः । तदस्यैत आत्मन उपरीव वै तद्यदूर्ध्वं नाभेरुपरीवैतद्यदुपकीर्णं तस्मादुपकीर्णे सादयत्यथैतं व्युह्य न तृणं चनान्तर्धाय - ४.२.४.[१४]



यद्वा अस्यावाचीनं नाभेः । तदस्यैष आत्मनोऽध इव वै तद्यदवाचीनं नाभेरध इवैतद्यद्व्युह्य न तृणं चनान्तर्धाय तस्मादेतं व्युह्य न तृणं चनान्तर्धाय सादयति - ४.२.४.[१५]

एष वै प्रजापतिः । य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते स यानुपकीर्णे सादयति तस्माद्यास्ताननु प्रजाः प्रजायन्ते ता अन्येनात्मनोऽस्यां प्रतितिष्ठन्ति या वै शफैः प्रतितिष्ठन्ति ता अन्येनात्मनोऽस्यां प्रतितिष्ठन्त्यथ यदेतं व्युह्य न तृणं चनान्तर्धाय सादयति तस्माद्या एतमनु प्रजाः प्रजायन्ते या आत्मनैवास्यां प्रतितिष्ठन्ति मनुष्याश्च श्वापदाश्च - ४.२.४.[१६]

तद्वा एतत् । अस्या एवान्यदुत्तरं करोति यदुपकिरति स यानुपकीर्णे सादयति तस्माद्यास्ताननु प्रजाः प्रजायन्ते ता अन्येनैवात्मनोऽस्यां प्रतितिष्ठन्ति शफैः - ४.२.४.[१७]

तद्वा एतत् । आहवनीये जुह्वति पुरोडाशं धानाः करम्भं दध्यामिक्षामिति तद्यथा मुख आसिञ्चेदेवं तदथैष एकरूप उपशेत आप इवैव तस्माद्यदनेन मुखेन

नानारूपमशनमश्नात्यथैतेन प्राणेनैकरूपमेव प्रस्रावयतेऽप इवैवाथ यस्माद्ध्रुवो नाम - ४.२.४.[१८]

देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसङ्गाद्बिभयांचक्रुस्तान्दक्षिणतोऽसुररक्षसान्यासेजुस्तेषामेतान्दक्षिणान्ग्रहानुज्जघ्नुरप्येतद्द क्षिणं हविर्धानमुज्जघ्नुरथैतमेव न शेकुरुद्धन्तुं तदुत्तरमेव हविर्धानं दक्षिणं हविर्धानमदृंहत्तद्यदेतं न शेकुरुद्धन्तुं तस्माद्ध्रुवो नाम - ४.२.४.[१९]

तं वै गोपायन्ति । शिरो वा एष एतस्यै गायत्र्यै यज्ञो वै गायत्री द्वादश स्तोत्राणि द्वादश शस्त्राणि तच्चतुर्विंशतिश्चतुर्विंशत्यक्षरा वै गायत्री तस्या एष शिरः श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्माद्योऽर्धस्य श्रेष्ठो भवत्यसावमुष्यार्धस्य शिर इत्याहुः श्रेष्ठो ह व्यथेत यदेष व्यथेत यजमानो वै श्रेष्ठो नेद्यजमानो व्यथाता इति तस्माद्वै गोपायन्ति - ४.२.४.[२०]



वत्सो वा एषः । एतस्यै गायत्र्यै यज्ञो वै गायत्री द्वादश स्तोत्राणि द्वादश शस्त्राणि तच्चतुर्विंशतिश्चतुर्विंशत्यक्षरा वै गायत्री तस्या एष वत्सस्तं यद्गोपायन्ति गोपायन्ति वा इमान्वत्सान्दोहाय यदिदं पयो दुह्र एवमियं गायत्री यजमानाय सर्वान्कामान्दोहाता इति तस्माद्वै गोपायन्ति - ४.२.४.[२१]

अथ यदध्वर्युश्च प्रतिप्रस्थाता च । निश्च क्रामतः प्र च पद्येते यथा बद्धवत्सोपाचरेदेवमेतं ग्रहमुपाचरतस्तमवनयति गायत्रीमेवैतत्प्रस्रावयति प्रत्तेयं गायत्री यजमानाय सर्वान्कामान्दोहाता इति तस्माद्वा अवनयति - ४.२.४.[२२]

सोऽवनयति । ध्रुवं ध्रुवेण मनसा वाचा सोममवनयामीति गृह्णामीति वाथा न इन्द्र इद्विशोऽसपत्नाः समनसस्करदिति यथा न इन्द्र इमाः प्रजा विशः श्रियै यशसेऽन्नाद्यायासपत्नाः संमनसः करवदित्येवैतदाह - ४.२.४.[२३]

अथातो गृह्णात्येव । मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।

कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः । उपयामगृहीतोऽसि ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तम एष ते योनिर्वैश्वानराय त्वेति सादयति व्युह्य न तृणं चनान्तर्धाय वैश्वानराय ह्येनं गृह्णाति - ४.२.४.[२४]

##४.२.५ विप्रुड्होमम्
ग्रहान्गृहीत्वा । उपनिष्क्रम्य विप्रुषां होमं जुहोति तद्यद्विप्रुषां होमं जुहोति या एवास्यात्र विप्रुष स्कन्दन्ति ता एवैतदाहवनीये स्वगाकरोत्याहवनीयो ह्याहुतीनां प्रतिष्ठा तस्माद्विप्रुषां होमं जुहोति - ४.२.५.[१]

स जुहोति । यस्ते द्रप्स स्कन्दति यस्ते अंशुरिति यो वै स्तोक स्कन्दति स द्रप्सस्तत्तमाह यस्ते अंशुरिति तदंशुमाह ग्रावच्युतो धिषणयोरुपस्थादिति ग्राव्णा हि च्युतोऽधिषवणाभ्यां स्कन्दत्यध्वर्योर्वा परि वा यः पवित्रादित्यध्वर्योर्वा हि पाणिभ्यां स्कन्दति पवित्राद्वा तं ते जुहोमि मनसा वषट्कृतं स्वाहेति तद्यथा वषट्कृतं हुतमेवमस्यैतद्भवति - ४.२.५.[२]



अथ स्तीर्णायै वेदेः । द्वे तृणे अध्वर्युरादत्ते तावध्वर्यू प्रथमौ प्रतिपद्येते प्राणोदानौ यज्ञस्याथ प्रस्तोता वागेव यज्ञस्याथोद्गातात्मैव प्रजापतिर्यज्ञस्याथ प्रतिहर्ता भिषग्वा व्यानो वा - ४.२.५.[३]

तान्वा एतान् । पञ्चर्त्विजो यजमानोऽन्वारभत एतावान्वै सर्वो यज्ञो यावन्त एते पञ्चर्त्विजो भवन्ति पाङ्क्तो वै यज्ञस्तद्यज्ञमेवैतद्यजमानोऽन्वारभते - ४.२.५.[४]

अथान्यतरत्तृणम् । चात्वालमभिप्रास्यति देवानामुत्क्रमणमसीति यत्र वै देवा यज्ञेन स्वर्गं लोकं समाश्नुवत त एतस्माच्चात्वालादूर्ध्वाः स्वर्गंलोकमुपोदक्रामंस्तद्यजमानमेवैतत्स्वर्ग्यं पन्थानमनुसंख्यापयति - ४.२.५.[५]

अथान्यतरत्तृणम् । पुरस्तादुद्गातृणामुपास्यति तूष्णीमेव स्तोमो वा एष प्रजापतिर्यदुद्गातारः स इदं सर्वं युत इदं सर्वं सम्भवति तस्मा एवैतत्तृणमपिदधाति तथो हाध्वर्युं न युते नैनं सम्भवत्यथ यदा जपन्ति जपन्ति ह्यत्रोद्गातारः - ४.२.५.[६]

अथ स्तोत्रमुपाकरोति । सोमः पवत इति स वै परागेव स्तोत्रमुपाकरोति पराञ्च स्तुवते देवान्वा एतानि स्तोत्राण्यभ्युपावृत्तानि यत्पवमानाः पराञ्चो ह्येतैर्देवाः स्वर्गं लोकं समाश्नुवत तस्मात्परागेव स्तोत्रमुपाकरोति पराञ्च स्तुवते - ४.२.५.[७]

उपावर्तध्वमिति वा अन्यानि स्तोत्राणि । अभ्यावर्तं धुर्यै स्तुवत इमा वै प्रजा एतानि स्तोत्राण्यभ्युपावृत्तास्तस्मादिमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते - ४.२.५.[८]

अथ यदत्र बहिष्पवमानेन स्तुवते । अत्र ह वा असावग्र आदित्य आस तमृतवः परिगृह्यैवात ऊर्ध्वाः स्वर्गं लोकमुपोदक्रामन्त्स एष ऋतुषु प्रतिष्ठितस्तपति तथो एवैतदृत्विजो यजमानं परिगृह्यैवात ऊर्ध्वाः स्वर्गं लोकमुपोत्क्रामन्ति तस्मादत्र बहिष्पवमानेन स्तुवते - ४.२.५.[९]



नौर्ह वा एषा स्वर्ग्या । यद्बहिष्पवमानं तस्या ऋत्विज एव स्फ्याश्चारित्राश्च स्वर्गस्य लोकस्य सम्पारणास्तस्या एक एव मज्जयिता य एव निन्द्यः स यथा पूर्णामभ्यारुह्य मज्जयेदेवं हैनां स मज्जयति तद्वै सर्व एव यज्ञो नौः स्वर्ग्या तस्मादु सर्वस्मादेव यज्ञान्निन्द्यं परिबिबाधिषेत - ४.२.५.[१०]

अथ स्तुत एतां वाचं वदति । अग्नीदग्नीन्विहर बर्हि स्तृणीहि पुरोडाशां अलंकुरु पशुनेहीति विहरत्यग्नीदग्नीन्त्समिद्ध एवैनानेतत्स्तृणाति बर्हिः स्तीर्णे बर्हिषि समिद्धे देवेभ्यो जुहवानीति पुरोडाशां अलंकुर्विते पुरोडाशैर्हि प्रचरिष्यन्भवति पशुनेहीति पशुं ह्युपाकरिष्यन्भवति - ४.२.५.[११]

अथ पुनः प्रपद्य । आश्विनं ग्रहं गृह्णात्याश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति परिवीय यूपं पशुमुपाकरोति रसमेवास्मिन्नेतद्दधाति - ४.२.५.[१२]

स प्रातःसवन आलब्धः । आ तृतीयसवनाच्छ्रप्यमाण उपशेते सर्वस्मिन्नेवैतद्यज्ञे रसं दधाति सर्वं यज्ञं रसेन प्रसजति - ४.२.५.[१३]

तस्मादाग्नेयमग्निष्टोम आलभते । तद्धि सलोम यदाग्नेयमग्निष्टोम आलभेत यद्युक्थ्यः स्यादैन्द्राग्नं द्वितीयमालभेतैन्द्राग्नानि ह्युक्थानि यदि षोडशी स्यादैन्द्रं तृतीयमालभेतेन्द्रो हि षोडशी यद्यतीरात्रः स्यात्सारस्वतं चतुर्थमालभेत वाग्वै सरस्वती योषा वै वाग्योषा रात्रिस्तद्यथायथं यज्ञक्रतून्व्यावर्तयति - ४.२.५.[१४]

अथ सवनीयैः पुरोडाशैः प्रचरति । देवो वै सोमो दिवि हि सोमो वृत्रो वै सोम आसीत्तस्यैतच्छरीरं यद्गिरयो यदश्मानस्तदेषोशाना नामौषधिर्जायत इति ह स्माह श्वेतकेतुरौद्दालकिस्तामेतदाहृत्याभिषुण्वन्तीति - ४.२.५.[१५]

स यत्पशुमालभते । रसमेवास्मिन्नेतद्दधात्यथ यत्सवनीयैः पुरोडाशैः प्रचरति मेधमेवास्मिन्नेतद्दधाति तथो हास्यैष सोम एव भवति - ४.२.५.[१६]

सर्व ऐन्द्रा भवन्ति । इन्द्रो वै यज्ञस्य देवता तस्मात्सर्व ऐन्द्रा भवन्ति - ४.२.५.[१७]

अथ यत्पुरोडाशः धानाः करम्भो दध्यामिक्षेति भवति या यज्ञस्य देवतास्ताः सुप्रीता असन्निति - ४.२.५.[१८]

इदं वा अपूपमशित्वा कामयते । धानाः खादेयं करम्भमश्नीयां दध्यश्नीयामामिक्षामश्नीयामिति ते सर्वे कामा या यज्ञस्य देवतास्ताः सुप्रीता असन्नित्यथ यदेषा प्रातःसवन एव मैत्रावरुणी पयस्यावक्लृप्ता भवति नेतरयोः सवनयोः - ४.२.५.[१९]

गायत्री वै प्रातःसवनं वहति । त्रिष्टुम्माध्यन्दिनं सवनं जगती तृतीयसवनं तद्वा अनेकाकिन्येव त्रिष्टुम्माध्यन्दिनं सवनं वहति गायत्र्या च बृहत्या चानेकाकिनी जगती तृतीयसवनं गायत्र्योष्णिहककुब्भ्यामनुष्टुभा - ४.२.५.[२०]

गायत्र्येवैकाकिनी प्रातःसवनं वहति । सैताभ्यां पङ्क्तिभ्यां स्तोत्रपङ्क्त्या च हविष्पङ्क्त्या च चत्वार्याज्यानि बहिष्पवमानं पञ्चमं पञ्चपदा पङ्क्तिः सैतया स्तोत्रपङ्क्त्यानेकाकिनी गायत्री प्रातःसवनं वहति - ४.२.५.[२१]

इन्द्रस्य पुरोडाशः । हर्योर्धानाः पूष्णः करम्भः सरस्वत्यै दधि मित्रावरुणयोः पयस्या पञ्चपदा पङ्क्तिः सैतया हविष्पङ्क्त्यानेकाकिनी गायत्री प्रातःसवनं वहत्येतस्या एव पङ्क्तेः सम्पदः कामाय प्रातःसवन एवैषा मैत्रावरुणी पयस्यावक्लृप्ता भवति नेतरयोः सवनयोः - ४.२.५.[२२]

##४.३.१ ऋतुग्रहाः

भक्षयित्वा समुपहूताः स्म इत्युक्त्वोत्तिष्ठति । पुरोडाशबृगलमादाय तद्यत्रैतदुपसन्नोऽच्छावाकोऽन्वाह तदस्मै पुरोडाशबृगलम्पाणावादधदाहाच्छावाक वदस्व यत्ते वाद्यमित्यहीयत वा अच्छावाकः - ४.३.१.[१]

तमिन्द्राग्नी अनुसमतनुताम् । प्रजानां प्रजात्यै तस्मादैन्द्राग्नोऽच्छावाकः स एतेन च हविषा यदस्मा एतत्पुरोडाशबृगलं पाणावादधात्येतेन चार्षेयेण यदेतदन्वाह तेनानुसमश्नुते - ४.३.१.[२]

स वै सन्नेऽच्छावाके । ऋतुग्रहैश्चरति तद्यत्सन्नेऽच्छावाक ऋतुग्रहैश्चरति मिथुनं वा अच्छावाक ऐन्द्राग्नो ह्यच्छावाको द्वौ हीन्द्राग्नी द्वन्द्वं हि मिथुनं प्रजननं स एतस्मान्मिथुनात्प्रजननादृतून्त्संवत्सरं प्रजनयति - ४.३.१.[३]

यद्वेव सन्नेऽच्छावाके । ऋतुग्रहैश्चरति सर्वं वा ऋतवः संवत्सरः सर्वमेवैतत्प्रजनयति तस्मात्सन्नेऽच्छावाक ऋतुग्रहैश्चरति - ४.३.१.[४]

तान्वै द्वादश गृह्णीयात् । द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश गृह्णीयादथो अपि त्रयोदश गृह्णीयादस्ति त्रयोदशो मास इति द्वादश त्वेव गृह्णीयादेषैव सम्पत् - ४.३.१.[५]

द्रोणकलशाद्गृह्णाति । प्रजापतिर्वै द्रोणकलशः स एतस्मात्प्रजापतेर्ऋतून्त्संवत्सरम् प्रजनयति - ४.३.१.[६]

उभयतोमुखाभ्यां पात्राभ्यां गृह्णाति । कुतस्तयोरन्ता ये उभयतोमुखे तस्मादयमन्तः संवत्सरः परिप्लवते तं गृहीत्वा न सादयति तस्मादयमसन्नः संवत्सरः - ४.३.१.[७]

नानुवाक्यामन्वाह । ह्वयति वा अनुवाक्यया ऽऽगतो ह्येवायमृतुर्यदि दिवा यदि नक्तं। नानुवषट्करोति नेदृतूनववृणजा इति सहैव प्रथमौ ग्रहौ गृह्णीतः सहोत्तमाविदमेवैतत्सर्वं संवत्सरेण परिगृह्णीतस्तदिदं सर्वं संवत्सरेण परिगृहीतम् - ४.३.१.[८]



निरेवान्यतरः क्रामति । प्रान्यतरः पद्यते तस्मादिमेऽन्वञ्चो मासा यन्त्यथ यदुभौ वा सह निष्क्रामेतामुभौ वा सह प्रपद्येयातां पृथगु हैवेमे मासा ईयुस्तस्मान्निरेवान्यतरः क्रामति प्रान्यतरः पद्यते - ४.३.१.[९]

तौ वा ऋतुनेति षड्व्चरतः । तद्देवा अहरसृजन्तर्तुभिरिति चतुस्तद्रात्रिमसृजन्त स यद्धैतावदेवाभविष्यद्रात्रिर्हैवाभविष्यन्न व्यवत्स्यत् - ४.३.१.[१०]

तौ वा ऋतुनेत्युपरिष्टाद्द्विश्चरतः । तद्देवाः पुरस्तादहरदधुस्तस्मादिदमद्याहरथ रात्रिरथ श्वोऽहर्भविता - ४.३.१.[११]

ऋतुनेति वै देवाः । मनुष्यानसृजन्तर्तुभिरिति पशून्त्स यत्तन्मध्ये येन पशूनसृजन्त तस्मादिमे पशव उभयतः परिगृहीता वशमुपेता मनुष्याणाम् - ४.३.१.[१२]

तौ वा ऋतुनेति षद्वचर्य । इतरथा पात्रे विपर्यस्येते ऋतुभिरिति चतुश्चरित्वेतरथा पात्रे विपर्यस्येते अन्यतरत एव तद्देवा अहरसृजन्तान्यतरतो रात्रिमन्यतरत एव तद्देवा मनुष्यानसृजन्तान्यतरतः पशून् - ४.३.१.[१३]

अथातो गृह्णात्येव । उपयामगृहीतोऽसि मधवे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि माधवाय त्वेति प्रतिप्रस्थातैतावेव वासन्तिकौ स यद्वसन्त ओषधयो जायन्ते वनस्पतयः पच्यन्ते तेनो हैतौ मधुश्च माधवश्च - ४.३.१.[१४]

उपयामगृहीतोऽसि । शुक्राय त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि शुचये त्वेति प्रतिप्रस्थातैतावेव ग्रैष्मौ स यदेतयोर्बलिष्ठं तपति तेनो हैतौ शुक्रश्च शुचिश्च - ४.३.१.[१५]

उपयामगृहीतोऽसि नभसे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि नभस्याय त्वेति प्रतिप्रस्थातैतावेव वार्षिकावमुतो वै दिवो वर्षति तेनो हैतौ नभश्च नभस्यश्च - ४.३.१.[१६]



उपयामगृहीतोऽसि । इषे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽस्यूर्जे त्वेति प्रतिप्रस्थातैतावेव शारदौ स यच्छरद्यूर्ग्रस ओषधयः पच्यन्ते तेनो हैताविषश्चोर्जश्च - ४.३.१.[१७]

उपयामगृहीतोऽसि सहसे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि सहस्याय त्वेति प्रतिप्रस्थातैतावेव हैमन्तिकौ स यद्धेमन्त इमाः प्रजाः सहसेव स्वं वशमुपनयते तेनो हैतौ सहश्च सहस्यश्च - ४.३.१.[१८]

उपयामगृहीतोऽसि तपसे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि तपस्याय त्वेति प्रतिप्रस्थातैतावेव शैशिरौ स यदेतयोर्बलिष्ठं श्यायति तेनो हैतौ तपश्च तपस्यश्च - ४.३.१.[१९]

उपयामगृहीतोऽसि । अंहसस्पतये त्वेति त्रयोदशं ग्रहं गृह्णाति यदि त्रयोदशं गृह्णीयादथ प्रतिप्रस्थाताध्वर्योः पात्रे संस्रवमवनयत्यध्वर्युर्वा प्रतिप्रस्थातुः पात्रे संस्रवमवनयत्याहरति भक्षम् - ४.३.१.[२०]

अथ प्रतिप्रस्थाता भक्षितेन पात्रेण । ऐन्द्राग्नं ग्रहं गृह्णाति तद्यदभक्षितेन पात्रेणैन्द्राग्नं ग्रहं गृह्णाति न वा ऋतुग्रहाणामनुवषट्कुर्वन्त्येतेभ्यो वा ऐन्द्राग्नं ग्रहं ग्रहीष्यन्भवति तदस्यैन्द्राग्नेनैवानुवषट्कृता भवन्ति - ४.३.१.[२१]

यद्वेवैन्द्राग्नं ग्रहं गृह्णाति । सर्वं वा इदं प्राजीजनद्य ऋतुग्रहानग्रहीत्स इदं सर्वं प्रजनय्येदमेवैतत्सर्वं प्राणोदानयोः प्रतिष्ठापयति तदिदं सर्वं प्राणोदानयोः प्रतिष्ठितमिन्द्राग्नी हि प्राणोदानाविमे हि द्यावापृथिवी प्राणोदानावनयोर्हीदं सर्वं प्रतिष्ठितम् - ४.३.१.[२२]



यद्वेवैन्द्राग्नं ग्रहं गृह्णाति । सर्वं वा इदं प्राजीजनद्य ऋतुग्रहानग्रहीत्स इदं सर्वं प्रजनय्यास्मिन्नेवैतत्सर्वस्मिन्प्राणादानौ दधाति ताविमावस्मिन्त्सर्वस्मिन्प्राणोदानौ हितौ - ४.३.१.[२३]

अथातो गृह्णात्येव । इन्द्राग्नी आगतं सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता । उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वैष ते योनिरिन्द्राग्निभ्यां त्वेति सादयतीन्द्राग्निभ्यां ह्येनं गृह्णाति - ४.३.१.[२४]

वैश्वदेवग्रहः

अथ वैश्वदेवं ग्रहं गृह्णाति । सर्वं वा इदं प्राजीजनद्य ऋतुग्रहानग्रहीत्स यद्धैतावदेवाभविष्यद्यावत्या हैवाग्रे प्रजाः सृष्टास्तावत्यो हैवाभविष्यन्न प्राजनिष्यन्त - ४.३.१.[२५]

अथ यद्वैश्वदेवं ग्रहं गृह्णाति । इदमेवैतत्सर्वमिमाः प्रजा यथायथं व्यवसृजति तस्मादिमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते शुक्रपात्रेण गृह्णात्येष वै शुक्रो य एष तपति तस्य ये रश्मयस्ते विश्वे देवास्तस्माच्छुक्रपात्रेण गृह्णाति - ४.३.१.[२६]

अथातो गृह्णात्येव । ओमासश्चर्षणीधृतो विश्वे देवास आगत दाश्वांसो दाशुषः सुतम् उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयति विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति - ४.३.१.[२७]

##४.३.२ माध्यंदिनसवनग्रहाः
गृणाति ह वा एतद्धोता यच्छंसति । तस्मा एतद्गृणते प्रत्येवाध्वर्युरागृणाति तस्मात्प्रतिगरो नाम - ४.३.२.[१]

तं वै प्राञ्चमासीनमाह्वयते । सर्वे वा अन्य उद्गातुः प्राञ्च आर्त्विज्यं कुर्वन्ति तथो हास्यैतत्प्रागेवार्त्विज्यं कृतं भवति - ४.३.२.[२]



प्रजापतिर्वा उद्गाता । योषग्घोता स एतत्प्रजापतिरुद्गाता योषायामृचि होतरि रेतः सिञ्चति यत्स्तुते तद्धोता शस्त्रेण प्रजनयति तच्छ्यति यथायं पुरुषः शितस्तद्यदेनच्छ्यति तस्माच्छस्त्रं नाम - ४.३.२.[३]

तदुपपल्यय्य प्रतिगृणाति । इदमेवैतद्रेतः सिक्तमुपनिमदत्यथ यत्पराङ्ङिष्ठन्प्रतिगृणीयात्परागु हैवैतद्रेतः सिक्तं प्रणश्येत्तन्न प्रजायेत सम्यञ्चा उ चैवैतद्भूत्वैतद्रेतः सिक्तं प्रजनयतः - ४.३.२.[४]

यातयामानि वै देवैश्छन्दांसि । च्छन्दोभिर्हि देवाः स्वर्गं लोकं समाश्नुवत मदो वै प्रतिगरो यो वा ऋचि मदो यः सामन्रसो वै स तच्छन्दः स्वेवैतद्रसं दधात्ययातयामानि करोति तैरयातयामैर्यज्ञं तन्वते - ४.३.२.[५]

तस्माद्यद्यर्धर्चशः शंसेत् । अर्धर्चेऽर्धर्चे प्रतिगृणीयाद्यदि पच्छः शंसेत्पदेपदे प्रतिगृणीयाद्यत्र वै शंसन्नवानिति तदसुररक्षसानि यज्ञमन्ववचरन्ति तत्प्रतिगरेण संदधाति नाष्ट्राणां रक्षसामनन्ववचाराय यजमानस्यो चैवैतद्भ्रातृव्यलोकं छिनत्ति - ४.३.२.[६]

चतुरक्षराणि ह वा अग्रे च्छन्दांस्यासुः । ततो जगती सोममच्छापतत्सा त्रीण्यक्षराणि हित्वा जगाम ततस्त्रिष्टुप्सोममच्छापतत्सैकमक्षरं हित्वा जगाम ततो गायत्री सोममच्छापतत्सैतानि चाक्षराणि हरन्त्यागच्छत्सोमं च ततोऽष्टाक्षरा गायत्र्यभवत्तस्मादाहुरष्टाक्षरा गायत्रीति - ४.३.२.[७]

तया प्रातःसवनमतन्वत । तस्माद्गायत्रं प्रातःसवनं तयैव माध्यन्दिनं सवनमतन्वत तां ह त्रिष्टुबुवाचोप त्वाहमायानि त्रिभिरक्षरैरुप मा ह्वयस्व मा मा यज्ञादन्तर्गा इति तथेति तामुपाह्वयत तत एकादशाक्षरा त्रिष्टुबभवत्तस्मादाहुस्त्रैष्टुभं माध्यन्दिनं सवनमिति - ४.३.२.[८]



तयैव तृतीयसवनमतन्वत । तां ह जगत्युवाचोप त्वाहमायान्येकेनाक्षरेणोप मा ह्वयस्व मा मा यज्ञादन्तर्गा इति तथेति तामुपाह्वयत ततो द्वादशाक्षरा जगत्यभवत्तस्मादाहुर्जागतं तृतीयसवनमिति - ४.३.२.[९]

तदाहुः । गायत्राणि वै सर्वाणि सवनानि गायत्री ह्येवैतदुपसृजमानैदिति तस्मात्संसिद्धं प्रातःसवने प्रतिगृणीयात्संसिद्धा हि गायत्र्यागच्छत्सकृन्मद्वन्माध्यन्दिने सवन एकं हि साऽक्षरं हित्वाऽऽगच्छत्तेनैवैनामेतत्समर्धयति कृत्स्नां करोति - ४.३.२.[१०]

यत्र त्रिष्टुभः शस्यन्ते । त्रिमद्वत्तृतीयसवने त्रीणि हि साऽक्षराणि हित्वाऽऽगच्छत्तैरेवैनामेतत्समर्धयति कृत्स्नां करोति - ४.३.२.[११]

यत्र द्यावापृथिव्यं शस्यते । इमे ह वै द्यावापृथिवी इमाः प्रजा उपजीवन्ति तदनयोरेवैतद्द्यावापृथिव्यो रसं दधाति ते रसवत्या उपजीवनीये इमाः प्रजा उपजीवन्ति स वा ओमित्येव प्रतिगृणीयात्तद्धि सत्यं तद्देवा विदुः - ४.३.२.[१२]

तद्धैके । ओथामो दैव वागिति प्रतिगृणन्ति वाक्प्रतिगर एतद्वाचमुपाप्नुम इति वदन्तस्तदु तथा न कुर्याद्यथा वै कथा च प्रतिगृणात्युपाप्तैवास्य वाग्भवति वाचा हि प्रतिगृणाति तस्मादोमित्येव प्रतिगृणीयात्तद्धि सत्यं तद्देवा विदुः - ४.३.२.[१३]

##४.३.३ शुक्रः, मन्थी, आग्रयणः, मरुत्वतीयः, उक्थ्यः
इहा इहा इत्यभिषुणोति । इन्द्रमेवैतदाच्यावयति बृहद्बृहदितीन्द्रमेवैतदाच्यावयति - ४.३.३.[१]

स शुक्रामन्थिनौ प्रथमौ गृह्णाति । शुक्रवद्ध्येतत्सवनमथाग्रयणं सर्वेषु ह्येष सवनेषु गृह्यतेऽथ मरुत्वतीयमथोक्थ्यमुक्थानि ह्यत्रापि भवन्ति - ४.३.३.[२]



तद्धैके । उक्थ्यं गृहीत्वाथ मरुत्वतीयं गृह्णन्ति तदु तथा न कुर्यान्मरुत्वतीयमेव गृहीत्वाथोक्थ्यं गृह्णीयात् - ४.३.३.[३]

तान्वा एतान् । पञ्च ग्रहान्गृह्णात्येष वै वज्रो यन्माध्यन्दिनः पवमानस्तस्मात्पञ्चदशः पञ्चसामा भवति पञ्चदशो हि वज्रः स एतैः पञ्चभिर्ग्रहैः पञ्च वा इमा अङ्गुलयोऽङ्गुलिभिर्वै प्रहरति - ४.३.३.[४]

इन्द्रो वृत्राय वज्रं प्रजहार । स वृत्रं पाप्मानं हत्वा विजितेऽभयेऽनाष्ट्रे दक्षिणा निनाय तस्मादप्येतर्हि यदैवैतेन माध्यन्दिनेन पवमानेन स्तुवतेऽथ विजितेऽभयेऽनाष्ट्रे दक्षिणा नीयन्ते तथो एवैष एतैः पञ्चभिर्ग्रहैः पाप्मने द्विषते भ्रातृव्याय वज्रं प्रहरति स वृत्रं पाप्मानं हत्वा विजितेऽभयेऽनाष्ट्रे दक्षिणा नयति तस्माद्वा एतान्पञ्च ग्रहान्गृह्णाति - ४.३.३.[५]

तद्यन्मरुत्वतीयान्गृह्णाति । एतद्वा इन्द्रस्य निष्केवल्यं सवनं यन्माध्यन्दिनं सवनं तेन वृत्रमजिघांसत्तेन व्यजिगीषत मरुतो वा इत्यश्वत्थेऽपक्रम्य तस्थुः क्षत्रं वा इन्द्रो विशो मरुतो विशा वै क्षत्रियो बलवान्भवति तस्मादाश्वत्थे ऋतुपात्रे स्यातां कार्ष्मर्यमये त्वेव भवतः - ४.३.३.[६]

तानिन्द्र ऽउपमन्त्रयां चक्रे । उप मावर्तध्वं युष्माभिर्बलेन वृत्रं हनानीति ते होचुः किं नस्ततः स्यादिति तेभ्य एतौ मरुत्वतीयौ ग्रहावगृह्णात् - ४.३.३.[७]

ते होचुः । अपनिधायैनमोज उपावर्तामहा इति त एनमपनिधायैवौज उपाववृतुस्तद्वा इन्द्रोऽस्पृणुतापनिधाय वै मौज उपावृतन्निति - ४.३.३.[८]

स होवाच । सहैव मौजसोपावर्तध्वमिति तेभ्यो वै नस्तृतीयं ग्रहं गृहाणेति तेभ्य एतं तृतीयं ग्रहमगृह्णादुपयामगृहीतोऽसि मरुतां त्वौजस इति त एनं सहैवौजसोपावर्तन्त तैर्व्यजयत तैर्वृत्रमहन्क्षत्रं वा इन्द्रो विशो मरुतो विशा वै क्षत्रियो बलवान्भवति तत्क्षत्र एवैतद्बलं दधाति तस्मान्मरुत्वतीयान्गृह्णाति - ४.३.३.[९]



स वा इन्द्रायैव मरुत्वते गृह्णीयात् । नापि मरुद्भ्यः स यद्धापि मरुद्भ्यो गृह्णीयात्प्रत्युद्यामिनीं ह क्षत्राय विशं कुर्यादथैतदिन्द्रमेवानु मरुत आभजति तत्क्षत्रायैवैतद्विशं कृतानुकरामनुवर्त्मानं करोति तस्मादिन्द्रायैव मरुत्वते गृह्णीयान्नापि मरुद्भ्यः - ४.३.३.[१०]

अपक्रमादु हैवैषामेतद्बिभयां चकार । यदिमे मन्नापक्रामेयुर्यन्नान्यद्भियेरन्निति तानेवैतदनपक्रमिणोऽकुरुत तस्मादिन्द्रायैव मरुत्वते गृह्णीयान्नापि मरुद्भ्यः - ४.३.३.[११]

ऋतुपात्राभ्यां गृह्णाति । ऋतवो वै संवत्सरो यज्ञस्तेऽदः प्रातःसवने प्रत्यक्षमवकल्प्यन्ते यदृतुग्रहान्गृह्णात्यथैतत्परोऽक्षं माध्यन्दिनेसवनेऽवकल्पयन्ते यदृतुपात्राभ्यां

मरुत्वतीयान्गृह्णाति विशो वै मरुतोऽन्नं वै विश ऋतवो वा इदं सर्वमन्नाद्यं पचन्ति तस्माद्दतुपात्राभ्याम्मरुत्वतीयान्गृह्णाति - ४.३.३.[१२]

अथातो गृह्णात्येव । इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य । तव प्रणीती तव शूर शर्मन्नाविवासन्ति कवयः सुयज्ञाः । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते - ४.३.३.[१३]

मरुत्वन्तं वृषभम् । वावृधानमकवारिं दिव्यं शासमिन्द्रं विश्वासाहमवसे नूतनायोग्रं सहोदामिह तं हुवेम । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते उपयामगृहीतोऽसि मरुतां त्वौजस इति तृतीयं ग्रहं गृह्णाति - ४.३.३.[१४]

अथ माहन्द्रं ग्रहं गृह्णाति । पाप्मना वा एतदिन्द्रः संसृष्टोऽभूद्यद्विशा मरुद्भिः स यथा विजयस्य कामाय विशा समाने पात्रेऽश्नीयादेवं तद्यदस्मा एतं मरुद्भिः समानं ग्रहमगृह्णन् - ४.३.३.[१५]



तं देवाः । सर्वस्मिन्विजितेऽभयेऽनाष्ट्रे यथेषीकां मुञ्जाद्विवृहेदेवं सर्वस्मात्पाप्मनो व्यवृहन्यन्माहेन्द्रं ग्रहमगृह्णंस्तथो एवैष एतद्यथेषीका विमुञ्जा स्यादेवं सर्वस्मात्पाप्मनो निर्मुच्यते यन्माहेन्द्रं ग्रहं गृह्णाति - ४.३.३.[१६]

यद्वेव माहेन्द्रं ग्रहं गृह्णाति । इन्द्रो वा एष पुरा वृत्रस्य वधादथ वृत्रं हत्वा यथा महाराजो विजिग्यान एवं महेन्द्रोऽभवत्तस्मान्माहेन्द्रं ग्रहं गृह्णाति महान्तमु चैवैनमेतत्खलु करोति वृत्रस्य वधाय तस्माद्वेव माहेन्द्रं ग्रहं गृह्णाति शुक्र पात्रेण गृह्णात्येष वै शुक्रो य एष तपत्येष उ एव महांस्तस्माच्छुक्रपात्रेण गृह्णाति - ४.३.३.[१७]

अथातो गृह्णात्येव । महां इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वेति सादयति महेन्द्राय ह्येनं गृह्णाति - ४.३.३.[१८]

अथोपाकृत्यैतां वाचं वदति । अभिषोतारोऽभिषुणुतौलूखलानुद्वादयताग्नीदाशिरं विनय सौम्यस्य वित्तादिति ते वै तृतीयसवनायैवाभिषोतारोऽभिषुण्वन्ति तृतीयसवनायौलूखलानुद्वादयन्ति तृतीयसवनायाग्नीदाशिरं विनयति तृतीयसवनाय सौम्यं चरुं श्रपयत्येते वै शुक्रवती रसवती सवने यत्प्रातःसवनं च माध्यन्दिनं च सवनमथैतन्निर्धीतशुक्रं यत्तृतीयसवनं तदेवैतस्मान्माध्यन्दिनात्सवनान्निर्मिमीते तथो हास्यैतच्छुक्रवद्रसवत्तृतीयसवनं भवति तस्मादेतामत्र वाचं वदति - ४.३.३.[१९]

##४.३.४ दक्षिणादानम्
घ्नन्ति वा एतद्यज्ञम् । यदेनं तन्वते यन्न्वेव राजानमभिषुण्वन्ति तत्तं घ्नन्ति यत्पशुं संज्ञपयन्ति विशासति तत्तं घ्नन्त्युलूखलमुसलाभ्यां दृषदुपलाभ्यां हविर्यज्ञं घ्नन्ति - ४.३.४.[१]



स एष यज्ञो हतो न ददक्षे । तं देवा दक्षिणाभिरदक्षयंस्तद्यदेनं दक्षिणाभिरदक्षयंस्तस्माद्दक्षिणा नाम तद्यदेवात्र यज्ञस्य हतस्य व्यथते तदेवास्यैतद्दक्षिणाभिर्दक्षयत्यथ समृद्ध एव यज्ञो भवति तस्माद्दक्षिणा ददाति - ४.३.४.[२]

तद्वै षड्ढादशेत्येव हविर्यज्ञे ददति । न ह त्वेवाशतदक्षिणः सौम्योऽध्वरः स्यादेष वै प्रत्यक्षं यज्ञो यत्प्रजापतिः पुरुषो वै प्रजापतेर्नेदिष्ठं सोऽयं शतायुः शततेजाः शतवीर्यस्तं शतेनैव दक्षयति नाशतेन तस्मान्नाशतदक्षिणः सौम्योऽध्वरः स्यान्नो हैवाशतदक्षिणेन यजमानस्यऽर्त्विक्ष्यान्नेदस्याक्षिभूरसानि यमिमे हनिष्यन्त्येव न दक्षयिष्यन्तीति - ४.३.४.[३]

द्वया वै देवा देवाः । अहैव देवा अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवास्तेषां द्वेधाविभक्त एव यज्ञ आहुतय एव देवानां दक्षिणा मनुष्यदेवानां ब्राह्मणानां शुश्रुवुषामनूचानानामाहुतिभिरेव देवान्प्रीणाति

दक्षिणाभिर्मनुष्यदेवान्ब्राह्मणाञ्छुश्रुवुषोऽनूचानांस्त एनमुभये देवाः प्रीताः स्वर्गं लोकमभिवहन्ति - ४.३.४.[४]

ता वा एताः । ऋत्विजामेव दक्षिणा अन्यं वा एत एतस्यात्मानं संस्कुर्वन्त्येतं यज्ञमृङ्मयं यजुर्मयं साममयमाहुतिमयं सोऽस्यामुष्मिंलोक आत्मा भवति तद्ये माऽजीजनन्तेति तस्मादृत्विग्भ्य एव दक्षिणा दद्यान्नानृत्विग्भ्यः - ४.३.४.[५]

अथ प्रतिपरेत्य गार्हपत्यम् । दक्षिणानि जुहोति स दशाहोमीये वाससि हिरण्यम्प्रबध्यावधाय जुहोति देवलोके मेऽप्यसदिति वै यजते यो यजते सोऽस्यैष यज्ञो देवलोकमेवाभिप्रैति तदनूची दक्षिणा यां ददाति सैति दक्षिणामन्वारभ्य यजमानः - ४.३.४.[६]

चतस्रो वै दक्षिणाः । हिरण्यं गौर्वासोऽश्वो न वै तदवकल्पते यदश्वस्य पादमवध्याद्यद्वा गौः पादमवदध्यात्तस्माद्दशाहोमीये वाससि हिरण्यम्प्रबध्यावधाय जुहोति - ४.३.४.[७]



सौरीभ्यामृग्भ्यां जुहोति । तमसा वा असौ लोकोऽन्तर्हितः स एतेन ज्योतिषा तमो ऽपहत्य स्वर्गं लोकमुपसंक्रामति तस्मात्सौरीभ्यामृग्भ्यां जुहोति - ४.३.४.[८]

स जुहोति । उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यं स्वाहेत्येतया गायत्र्या गायत्री वा इयं पृथिवी सेयं प्रतिष्ठा तदस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति - ४.३.४.[९]

अथ द्वितीयां जुहोति । चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च स्वाहेत्येतया त्रिष्टुभा लोकमेवैतयोपप्रैति - ४.३.४.[१०]

अथाग्नीध्रे । द्वे वैकां वा जुहोति तद्यदग्नावाग्नीध्रे द्वे वैकां वा जुहोत्यग्निर्वै पशूनामीष्टे त एनमभितः परिणिविशन्ते तमेतयाहुत्या प्रीणाति सोऽस्मै प्रीतोऽनुमन्यते तेनानुमतां ददाति - ४.३.४.[११]

स जुहोति । अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम स्वाहेत्यथ यद्यश्वं युक्तं वाऽयुक्तं वा दास्यन्त्स्यादथ द्वितीयां जुहुयाद्यद्यु न नाद्रियेत - ४.३.४.[१२]

स जुहोति । अयं नो अग्निर्वरिवस्कृणोत्वयं मृधः पुर एतु प्रभिन्दन्। अयं वाजाञ्जयतु वाजसातावयं शत्रूञ्जयतु जर्हृषाणः स्वाहेति वाजसा ह्यश्वः - ४.३.४.[१३]

अथ हिरण्यमादाय शालामभ्यैति । दक्षिणेन वेदिं दक्षिणा उपतिष्ठन्ते सोऽग्रेण शालां तिष्ठन्नभिमन्त्रयते रूपेण वो रूपमभ्यागामिति न ह वा अग्रे पशवो दानाय चक्षमिरे तेऽपनिधाय स्वानि रूपाणि शरीरैः प्रत्युपातिष्ठन्त तानेतद्देवाः स्वैरेव रूपैर्यज्ञस्यार्धादुपायंस्ते स्वानि रूपाणि जानाना अभ्यवायंस्ते रातमनसोऽलं दानायाभवंस्तथो एवैनानेष एतत्स्वैरेव रूपैर्यज्ञस्यार्धादुपैति ते स्वानि रूपाणि जानाना अभ्यवायन्ति ते रातमनसोऽलं दानाय भवन्ति - ४.३.४.[१४]

तुथो वो विश्ववेदा विभजत्विति । ब्रह्म वै तुथस्तदेना ब्रह्मणा विभजति ब्रह्म वै दक्षिणीयं चादक्षिणीयं च वेद तथो हास्यैता दक्षिणीयायैव दत्ता भवन्ति नादक्षिणीयाय - ४.३.४.[१५]

ऋतस्य पथा प्रेतेति । यो वै देवानां पथैति स ऋतस्य पथैति चन्द्रदक्षिणा इति तदेतेन ज्योतिषा यन्ति - ४.३.४.[१६]

अथ सदोऽभ्यैति । वि स्वः पश्य व्यन्तरिक्षमिति वि त्वया दक्षिणया लोकं ख्येषमित्येवैतदाह - ४.३.४.[१७]

अथ सदः प्रेक्षते । यतस्व सदस्यैरिति मा त्वा सदस्या अतिरिक्षतेत्येवैतदाह - ४.३.४.[१८]

अथ हिरण्यमादायाग्नीध्रमभ्यैति । ब्राह्मणमद्य विदेयं पितृमन्तम्पैतृमत्यमिति यो वै ज्ञातो ज्ञातकुलीनः स पितृमान्पैतृमत्यो या वै ज्ञातायापि कतिपयीर्दक्षिणा ददाति ताभिर्महज्जयत्यृषिमार्षेयमिति यो वै ज्ञातोऽनूचानः स ऋषिरार्षेयः सुधातुदक्षिणामिति स हि सुधातुदक्षिणः - ४.३.४.[१९]

अथैवमुपसद्य । अग्नीधे हिरण्यं ददात्यस्मद्राता देवत्रा गच्छतेति यां वै रातमना अविचिकित्सन्दक्षिणां ददाति तया महज्जयति देवत्रा गच्छतेति देवलोके मेऽप्यसदिति वै यजते यो यजते तद्देवलोक एवैनमेतदपित्विनं करोति प्रदातारमाविशतेति मामाविशतेत्येवैतदाह तथो हास्मादेताः पराच्यो न प्रणश्यन्ति तद्यदग्नीधे प्रथमाय दक्षिणां ददात्यतो हि विश्वे देवा अमृतत्वमपाजयंस्तस्मादग्नीधे प्रथमाय दक्षिणां ददाति - ४.३.४.[२०]



अथैवमेवोपसद्य । आत्रेयाय हिरण्यं ददाति यत्र वा अदः प्रातरनुवाकमन्वाहुस्तद्ध स्मैतत्पुरा शंसन्त्यत्रिर्वा ऋषीणां होताऽऽसाथैतत्सदोऽसुरतमसमभिपुप्रुवे तऽऋषयोऽत्रिमब्रुवन्नेहि प्रत्यङ्ङिदं तमोऽपजहीति स एतत्तमोऽपाहन्नयं वै ज्योतिर्य इदं तमोऽपावधीदिति तस्मा एतज्ज्योतिर्हिरण्यं दक्षिणामनयन् ज्योतिर्हि हिरण्यं तद्वै स तत्तेजसा वीर्येणऽर्षिस्तमोऽपजघानाथैष एतेनैवैतज्ज्योतिषा तमोऽपहन्ति तस्मादात्रेयाय हिरण्यं दधाति - ४.३.४.[२१]

अथ ब्रह्मणे । ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायत्यथोद्गात्रेऽथ होत्रेऽथाध्वर्युभ्यां हविर्धान आसीनाभ्यामथ पुनरेत्य प्रस्तोत्रेऽथ मैत्रावरुणायाथ ब्राह्मणाच्छंसिनेऽथ पोत्रेऽथ नेष्ट्रेऽथाच्छावाकायाथोन्नेत्रेऽथ ग्रावस्तुतेऽथ सुब्रह्मण्यायै प्रतिहर्त्र उत्तमाय ददाति प्रतिहर्ता वा एष सोऽस्मा एतदन्ततः प्रतिहरति तथो हास्मादेताः पराच्यो न प्रणश्यन्ति - ४.३.४.[२२]

अथाहेन्द्राय मरुत्वतेऽनुब्रूहीति । यत्र वै प्रजापतिरग्रे ददौ तद्धेन्द्र ईक्षां चक्रे सर्वं वा अयमिदं दास्यति नास्मभ्यं किं चन परिशेक्ष्यतीति स एतं वज्रमुदयच्छदिन्द्राय मरुत्वतेऽनुब्रूहीत्यदानाय ततो नाददात्स एषोऽप्येतर्हितथैव वज्र उद्यम्यत इन्द्राय मरुत्वतेऽनुब्रूहीत्यदानाय ततो न ददाति - ४.३.४.[२३]

चतस्रो वै दक्षिणाः । हिरण्यमायुरेवैतेनात्मनस्त्रायत आयुर्हि हिरण्यं तदग्नय आग्नीध्रं कुर्वतेऽददात्तस्मादप्येतर्ह्यग्नीधे हिरण्यं दीयते - ४.३.४.[२४]

अथ गौः । प्राणमेवैतयात्मनस्त्रायते प्राणो हि गौरन्नं हि गौरन्नं हि प्राणस्तां रुद्राय होत्रेऽददात् - ४.३.४.[२५]

अथ वासः । त्वचमेवैतेनात्मनस्त्रायते त्वग्घि वासस्तद्बृहस्पतय उद्गायतेऽददात् - ४.३.४.[२६]



अथाश्वः । वज्रो वा अश्वो वज्रमेवैतत्पुरोगां कुरुते यमलोके मेऽप्यसदिति वै यजते यो यजते तद्यमलोक एवैनमेतदपित्विनं करोति तं यमाय ब्रह्मणेऽददात् - ४.३.४.[२७]

स हिरण्यं प्रत्येति । अग्नये त्वा मह्यं वरुणो ददात्वित्यग्नये ह्येतद्वरुणोऽदधात्सोऽमृतत्वमशीयायुर्दात्र एधि मयो मह्यं प्रतिग्रहीत्र इति - ४.३.४.[२८]

अथ गां प्रत्येति । रुद्राय त्वा मह्यं वरुणो ददात्विति रुद्राय ह्येतां वरुणोऽददात्सोऽमृतत्वमशीय प्राणो दात्र एधि वयो मह्यं प्रतिग्रहीत्र इति - ४.३.४.[२९]

अथ वासः प्रत्येति । बृहस्पतये त्वा मह्यं वरुणो ददात्विति बृहस्पतये ह्येतद्वरुणोऽददात्सोऽमृतत्वमशीय त्वग्दात्र एधि मयो मह्यं प्रतिग्रहीत्र इति - ४.३.४.[३०]

अथाश्वं प्रत्येति । यमाय त्वा मह्यं वरुणो ददात्विति यमाय ह्येतं वरुणोऽददात्सोऽमृतत्वमशीय हयो दात्र एधि वयो मह्यं प्रतिग्रहीत्र इति - ४.३.४.[३१]

अथ यदन्यद्ददाति । कामेनैव तद्ददातीदं मेऽप्यमुत्रासादिति तत्प्रत्येति कोऽदात्कस्मा अदात्कामोऽदात्कामायादात् कामो दाता कामः प्रतिग्रहीता कामैतत्त इति तद्देवताया अतिदिशति - ४.३.४.[३२]

तदाहुः । न देवताया अतिदिशेदिदं वै यां देवतां समिन्द्धे सा दीप्यमाना श्वःश्वः श्रेयसी भवतीदं वै यस्मिन्नग्नावभ्यादधति स दीप्यमान एव श्वःश्वः श्रेयान्भवति श्वःश्वो ह वै श्रेयान्भवति य एवं विद्वान्प्रतिगृह्णाति तद्यथा समिद्धे जुहुयादेवमेतां जुहोति यामधीयते ददाति तस्मादधीयन्नातिदिशेत् - ४.३.४.[३३]

##४.३.५ अथ तृतीयसवनग्रहाः
आदित्यग्रहः

त्रया वै देवाः । वसवो रुद्रा आदित्यास्तेषां विभक्तानि सवनानि वसूनामेव प्रातःसवनं रुद्राणां माध्यन्दिनं सवनमादित्यानां तृतीयसवनं तद्वा अमिश्रमेव वसूनां प्रातःसवनममिश्रं रुद्राणां माध्यन्दिनं सवनम्मिश्रमादित्यानां तृतीयसवनम् - ४.३.५.[१]

ते हादित्या ऊचुः । यथेदममिश्रं वसूनां प्रातःसवनममिश्रं रुद्राणाम्माध्यन्दिनं सवनमेवं न इमं पुरा मिश्राद्ग्रहं जुहुथेति तथेति देवा अब्रुवंस्ते संस्थित एव माध्यन्दिने सवने पुरा तृतीयसवनादेतमजुहवुः स एषोऽप्येतर्हि तथैव ग्रहो हूयते संस्थित एव माध्यन्दिने सवने पुरातृतीयसवनात् - ४.३.५.[२]

ते हादित्या ऊचुः । नेव वा इतरस्मिन्त्सवने स्मो नेवेतरस्मिन्यद्वै नो रक्षांसि न हिंस्युरिति - ४.३.५.[३]

ते ह द्विदेवत्यानूचुः । रक्षोभ्यो वै बिभीमो हन्त युष्मान्प्रविशामेति - ४.३.५.[४]

ते ह द्विदेवत्या ऊचुः । किमस्माकं ततः स्यादित्यस्माभिरनुवषट्कृता भविष्यथेत्यु हादित्या ऊचुस्तथेति ते द्विदेवत्यान्प्राविशन् - ४.३.५.[५]

स यत्र प्रातःसवने । द्विदेवत्यैः प्रचरति तत्प्रतिप्रस्थातादित्यपात्रेण द्रोणकलशात्प्रतिनिगृह्णीत उपयामगृहीतोऽसीत्येतावताध्वर्युरेवाश्रावयत्यध्वर्योरनु होमं जुहोति प्रतिप्रस्थातादित्येभ्यस्त्वेति संस्रवमवनयत्येतावतैवमेव सर्वेषु - ४.३.५.[६]

तद्यत्प्रतिप्रस्थाता प्रतिनिगृह्णीते । द्विदेवत्यान्वै प्राविशन्नस्माभिरनुवषट्कृता भविष्यथेत्यु हादित्या ऊचुर्यां वा अमूं द्वितीयामाहुतिं जुहोति स्विष्टकृते वै तां जुहोति स्विष्टकृतो वा एतेऽनुवषड्क्रियन्ते तथो हास्यैतेऽनुवषट्कृता इष्टस्विष्टकृतो
भवन्त्युत्तरार्धे जुहोत्येषा ह्येतस्य देवस्य दिक्तस्मादुत्तरार्धे जुहोति - ४.३.५.[७]



यद्वेव प्रतिप्रस्थाता प्रतिनिगृह्णीते । द्विदेवत्यान्वै प्राविशन्त्स यानेव प्राविशंस्तेभ्य एवैतन्निर्मिमीतेऽथापिदधाति रक्षोभ्यो ह्यबिभयुर्विष्णऽउरुगायैष ते सोमस्तं रक्षस्व मा त्वा दभन्निति यज्ञो वै विष्णुस्तद्यज्ञायैवैतत्परिददाति गुप्त्या अथाह संस्थित एव माध्यन्दिने सवने पुरा तृतीयसवनादेहि यजमानेति - ४.३.५.[८]

सम्प्रपद्यन्ते । अध्वर्युश्च यजमानश्चाग्नीध्रश्च प्रतिप्रस्थाता चोन्नेताथ योऽन्यः परिचरो भवत्युभे द्वारे अपिदधति रक्षोभ्यो ह्यबिभयुरथाध्वर्युरादित्यस्थालीं चादित्यपात्रं चादत्ते स उपर्युपरि पूतभृतं विगृह्णाति नेद्व्यवश्चोतदिति - ४.३.५.[९]

अथ गृह्णाति । कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यत आदित्येभ्यस्त्वेति - ४.३.५.[१०]

तं वै नोपयामेन गृह्णीयात् । अग्रे ह्येवैष उपयामेन गृहीतो भवत्यजामितायै जामि ह कुर्याद्यदेनमत्राप्युपयामेन गृह्णीयात् - ४.३.५.[११]

अथापगृह्य पुनरानयति । कदा चन प्रयुच्छस्युभे निपासि जन्मनी तुरीयादित्यसवनं त इन्द्रियमातस्थावमृतं दिव्यादित्येभ्यस्त्वेति - ४.३.५.[१२]

अथ दधि गृह्णाति । आदित्यानां वै तृतीयसवनमादित्यान्वा अनु पशवस्तत्पशुष्वेवैतत्पयो दधाति तदिदं पशुषु पयो हितं मध्यत इव गृह्णीयादित्याहुर्मध्यत इव हीदं पशूनां पय इति पश्चादिव त्वेव गृह्णीयात्पश्चादिव हीदं पशूनां पयः - ४.३.५.[१३]

यद्वेव दधि गृह्णाति । हुतोच्छिष्टा वा एते संस्रवा भवन्ति नालमाहुत्यै तानेवैतत्पुनराप्याययति तथालमाहुत्यै भवन्ति तस्माद्दधि गृह्णाति - ४.३.५.[१४]

स गृह्णाति । यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः आ वोऽर्वाची सुमतिर्ववृत्यादंहोश्चिद्या वरिवोवित्तरासदादित्येभ्यस्त्वेति - ४.३.५.[१५]



तमुपांशुसवनेन मेक्षयति । विवस्वान्वा एष आदित्यो निदानेन यदुपांशुसवन आदित्यग्रहो वा एष भवति तदेनं स्व एव भागे प्रीणाति - ४.३.५.[१६]

तं न दशाभिर्न पवित्रेणोपस्पृशति एते वै शुक्रवती रसवती सवने यत्प्रातःसवनं च माध्यन्दिनं च सवनमथैतन्निर्धीतशुक्रं यत्तृतीयसवनं स यन्न दशाभिर्न पवित्रेणोपस्पृशति तेनो हास्यैतच्छुक्रवद्रसवत्तृतीयसवनं भवति तस्मान्न दशाभिर्न पवित्रेणोपस्पृशति - ४.३.५.[१७]

स मेक्षयति । विवस्वन्नादित्यैष ते सोमपीथस्तस्मिन्मत्स्वेत्यथोन्नेत्र उपांशुसवनं प्रयच्छत्यथाहोन्नेतारमासृज ग्राव्ण इति तानाधवनीये वा सृजति चमसे वा - ४.३.५.[१८]

राजानमुन्नीय । आदित्यानां वै तृतीयसवनमादित्यान्वा अनु ग्रावाणस्तदेनान्त्स्व एव भागे प्रीणात्यपोर्णुवन्ति द्वारे - ४.३.५.[१९]

अथापिधायोपनिष्क्रामति । रक्षोभ्यो ह्यबिभयुरथाहादित्येभ्योऽनुब्रूहीत्यत्र सम्पश्येद्यदि कामयेताश्राव्य त्वेव सम्पश्येदादित्येभ्यः प्रेष्य प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्य इति वषड्कृते जुहोति नानुवषड्करोति नेत्पशूनग्नौ प्रवृणजानीति प्रयच्छति प्रतिप्रस्थात्रे संस्रवौ - ४.३.५.[२०]

अथ पुनः प्रपद्य । आग्रयणमादत्त उदीचीनदशं पवित्रं वितन्वन्ति प्रस्कन्दयत्यध्वर्युराग्रयणस्य प्रतिप्रस्थाता सम्प्रगृह्णाति संस्रवावानयत्युन्नेता चमसेन वोदञ्चनेन वा - ४.३.५.[२१]

तं चतसृणां धाराणामाग्रयणं गृह्णाति । आदित्यानां वै तृतीयसवनमादित्यान्वा अनु गावस्तस्मादिदं गवां चतुर्धाविहितं पयस्तस्माच्चतसृणां धाराणामाग्रयणं गृह्णाति - ४.३.५.[२२]



तद्यत्प्रतिप्रस्थाता संस्रवौ सम्प्रगृह्णाति । आदित्यग्रहो वा एष भवति न वा आदित्यग्रहस्यानुवषड्करोत्येतस्माद्वै सावित्रं ग्रहं ग्रहीष्यन्भवति तदस्य सावित्रेणैवानुवषड्कृतो भवति - ४.३.५.[२३]

यद्वेव प्रतिप्रस्थाता संस्रवौ सम्प्रगृह्णाति । पुरा वा एभ्य एतन्मिश्राद्ग्रहमहौषुः पुरा तृतीयसवनात्तृतीयसवनाय वा एष ग्रहो गृह्यते तदादित्यास्तृतीयसवनमपियन्ति तथा न बहिर्द्धा यज्ञाद्भवन्ति तस्मात्प्रतिप्रस्थाता संस्रवौ सम्प्रगृह्णाति - ४.३.५.[२४]
##४.४.१ सावित्रग्रहः
मनो ह वा अस्य सविता । तस्मात्सावित्रं गृह्णाति प्राणो ह वा अस्य सविता तमेवास्मिन्नेतत्पुरस्तात्प्राणं दधाति यदुपांशु गृह्णाति तमेवास्मिन्नेतत्पश्चात्प्राणं दधाति यत्सावित्रं गृह्णाति ताविमा उभयतः प्राणौ हितौ यश्चायमुपरिष्टाद्यश्चाधस्तात् - ४.४.१.[१]

ऋतवो वै संवत्सरो यज्ञः । तेऽदः प्रातःसवने प्रत्यक्षमवकल्प्यन्ते यदृतुग्रहान्गृह्णात्यथैतत्परोऽक्षं माध्यन्दिने सवनेऽवकल्प्यन्ते यदृतुपात्राभ्यां मरुत्वतीयान्गृह्णाति न वा अत्रर्तुभ्य इति कं चन ग्रहं गृह्णन्ति नर्तुपात्राभ्यां कश्चन ग्रहो गृह्यते - ४.४.१.[२]

एष वै सविता य एष तपति । एष उ एव सर्व ऋतवस्तदृतवः संवत्सरस्तृतीयसवने प्रत्यक्षमवकल्प्यन्ते तस्मात्सावित्रं गृह्णाति - ४.४.१.[३]

तं वा उपांशुपात्रेण गृह्णाति । मनो ह वा ऽऽअस्य सविता प्राण उपांशुस्तस्मादुपांशुपात्रेण गृह्णात्यन्तर्यामपात्रेण वा समानं ह्येतद्यदुपांश्वन्तर्यामौ प्राणोदानौ हि - ४.४.१.[४]

आग्रयणाद्गृह्णाति । मनो ह वा अस्य सवितात्माऽऽग्रयण आत्मन्येवैतन्मनो दधाति प्राणो ह वा अस्य सविताऽऽत्माग्रयण आत्मन्येवैतत्प्राणं दधाति - ४.४.१.[५]



अथातो गृह्णात्येव । वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यं सावीः वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम उपयामगृहीतोऽसि सावित्रोऽसि चनोधाश्चनोधा असि चनो मयि धेहि जिन्व यज्ञं जिन्व यज्ञपतिम्भगायेति - ४.४.१.[६]

तं गृहीत्वा न सादयति । मनो ह वा अस्य सविता तस्मादिदमसन्नं मनः प्राणो ह वा अस्य सविता तस्मादयमसन्नः प्राणः संचरत्यथाह देवाय सवित्रेऽनुब्रूहीत्याश्राव्याह देवाय सवित्रे प्रेष्येति वषट्कृते जुहोति नानुवषट्करोति मनो ह वा अस्य सविता नेन्मनोऽग्नौ प्रवृणजानीति प्राणो ह वा अस्य सविता नेत्प्राणमग्नौ प्रवृणजानीति - ४.४.१.[७]

वैश्वदेवग्रहः

अथाभक्षितेन पात्रेण । वैश्वदेवं ग्रहं गृह्णाति तद्यदभक्षितेन पात्रेण वैश्वदेवं ग्रहं गृह्णाति न वै सावित्रस्यानुवषट्करोत्येतस्माद्वै वैश्वदेवं ग्रहं ग्रहीष्यन्भवति तदस्य वैश्वदेवेनैवानुवषट्कृतो भवति - ४.४.१.[८]

यद्वेव वैश्वदेवं ग्रहं गृह्णाति । मनो ह वा अस्य सविता सर्वमिदं विश्वे देवा इदमेवैतत्सर्वं मनसः कृतानुकरमनुवर्त्म करोति तदिदं सर्वं मनसः कृतानुकरमनुवर्त्म - ४.४.१.[९]

यद्वेव वैश्वदेवं ग्रहं गृह्णाति । प्राणो ह वा अस्य सविता सर्वमिदं विश्वे देवाअस्मिन्नेवैतत्सर्वस्मिन्प्राणोदानौ दधाति ताविमावस्मिन्त्सर्वस्मिन्प्राणोदानौ हितौ - ४.४.१.[१०]

यद्वेव वैश्वदेवं ग्रहं गृह्णाति । वैश्वदेवं वै तृतीयसवनं तदुच्यत एव सामतो यस्माद्वैश्वदेवं तृतीयसवनमुच्यत ऋक्तोऽथैतदेव यजुष्टः पुरश्चरणतो यदेतं महावैश्वदेवं गृह्णाति - ४.४.१.[११]

तं वै पूतभृतो गृह्णाति । वैश्वदेवो वै पूतभृदतो हि देवेभ्य उन्नयन्त्यतो मनुष्येभ्योऽतः पितृभ्यस्तस्माद्वैश्वदेवः पूतभृत् - ४.४.१.[१२]



तं वा अपुरोरुक्कं गृह्णाति । विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति सर्वं वै विश्वेदेवा यदृचो यद्यजूंषि यत्सामानि स यदेवैनं विश्वेभ्यो देवेभ्यो गृह्णाति तेनो हास्यैष पुरोरुङ्गान्भवति तस्मादपुरोरुक्कं गृह्णाति - ४.४.१.[१३]

अथातो गृह्णात्येव । उपयामगृहीतोऽसि सुशर्मासि सुप्रतिष्ठान इति प्राणो वै सुशर्मा सुप्रतिष्ठानो बृहदुक्षाय नम इति प्रजापतिर्वै बृहदुक्षः प्रजापतये नम इत्येवैतदाह विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयति विश्वेभ्यो ह्येनं देवेभ्यो गृह्णात्यथेत्य प्राङुपविशति - ४.४.१.[१४]

स यत्रैतां होता शंसति । एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विंशती च तिसृभिश्च वहसे त्रिंशता च नियुद्भिर्वायविह ता विमुञ्चेति तदेतस्यां वायव्यायामृचि पात्राणि विमुच्यन्ते वायुप्रणेत्रा वै पशवः प्राणो वै वायुः प्राणेन हि पशवश्चरन्ति - ४.४.१.[१५]

स ह देवेभ्यः पशुभिरपचक्राम । तं देवाः प्रातःसवनेऽन्वमन्त्रयन्त स नोपाववर्त तं माध्यन्दिने सवनेऽन्वमन्त्रयन्त स ह नैवोपाववर्त तं तृतीयसवनेऽन्वमन्त्रयन्त - ४.४.१.[१६]

स होपावर्त्स्यन्नुवाच । यद्व उपावर्तेय किं मे ततः स्यादिति त्वयैवैतानि पात्राणि युज्येरंस्त्वया विमुच्येरन्निति तदेनेनैतत्पात्राणि युज्यन्ते यदैन्द्रवायवाग्रान्प्रातःसवने गृह्णात्यथैनेनैतत्पात्राणि विमुच्यन्ते यदाहनियुद्भिर्वायविह ता विमुञ्चेति पशवो वै नियुतस्तत्पशुभिरेवैतत्पात्राणि - ४.४.१.[१७]

87स यत्प्रातःसवन उपावर्त्स्यत् । गायत्रं वै प्रातःसवनं ब्रह्म गायत्री ब्राह्मणेषु ह पशवोऽभविष्यन्नथ यन्माध्यन्दिने सवन उपावर्त्स्यदैन्द्रं वै माध्यन्दिनं सवनं क्षत्रमिन्द्रः क्षत्रियेषु ह पशवोऽभविष्यन्नथ यत्तृतीयसवन उपावर्तत वैश्वदेवं वै तृतीयसवनं सर्वमिदं विश्वे देवास्तस्मादिमे सर्वत्रैव पशवः - ४.४.१.[१८]



##४.४.२ सौम्यश्चरुः

सौम्येन चरुणा प्रचरति । सोमो वै देवानां हविरथैतत्सोमायैव हविष्क्रियते तथाऽतः सोमोऽनन्तर्हितो भवति चरुर्भवति चरुर्वै देवानामन्नमोदनो हि चरुरोदनो हि प्रत्यक्षमन्नं तस्माच्चरुर्भवति - ४.४.२.[१]

तेन न प्रातःसवने प्रचरति । न माध्यन्दिने सवन एते वै देवानां निष्केवल्ये सवने यत्प्रातःसवनं च माध्यन्दिनं च सवनं पितृदेवत्यो वै सोमः - ४.४.२.[२]

स यत्प्रातःसवने वा प्रचरेत् । माध्यन्दिने वा सवने समदं ह कुर्याद्देवेभ्यश्च पितृभ्यश्च तेन तृतीयसवने प्रचरति वैश्वदेवं वै तृतीयसवनं तथा हासमदं करोति नानुवाक्यामन्वाह सकृदु ह्येव पराञ्चः पितरस्तस्मान्नानुवाक्यामन्वाह - ४.४.२.[३]

अथ चतुर्गृहीतमाज्यं गृहीत्वा । आश्राव्याह घृतस्य यजेति वषट्कृते जुहोति तद्या

अतः प्राच्य आहुतयो हुता भवन्ति ताभ्य एवैतदन्तर्दधाति तथा हासमदं करोति - ४.४.२.[४]

स आज्यस्योपस्तीर्य । द्विश्चरोरवद्यत्यथोपरिष्टादाज्यस्याभिघारयत्याश्राव्याह सौम्यस्य यजेति वषट्कृते जुहोति - ४.४.२.[५]

अथापरं चतुर्गृहीतमाज्यं गृहीत्वा । आश्राव्याह घृतस्य यजेति वषट्कृते जुहोति तद्या अत ऊर्ध्वा आहुतीर्होष्यन्भवति ताभ्य एवैतदन्तर्दधाति तथा हासमदं करोति स यदि कामयेतोभयतः परियजेद्यद्यु कामयेतान्यतरतः परियजेत् - ४.४.२.[६]

४.४.२.[७] पात्नीवतग्रहः
अथ प्रचरणीति स्रुग्भवति । तस्यां चतुर्गृहीतमाज्यं गृहीत्वाध्वर्युः शालाकैर्धिष्ण्यान्व्याघारयति तद्यच्छालाकैर्धिष्ण्यान्व्याघारयति यदेवैनानदो देवा अब्रुवंस्तृतीयसवने वो घृत्याहुतिः प्राप्स्यति न सौम्यापहृतो हि युष्मत्सोमपीथस्तेन सोमाहुतिं सैनानेषा तृतीयसवन एव घृत्याहुतिः प्राप्नोति न सौम्या यच्छालाकैर्धिष्ण्यान्व्याघारयति तानेतैरेव यजुर्भिर्यथोपकीर्णं यथापूर्वं व्याघारयति मार्जालीय एवोत्तमम् - ४.४.२.[७]



तद्धैके । आग्नीध्रीये पुनराघारयन्त्युदग्र इदं कर्मानुसंतिष्ठाता इति तदु तथा न कुर्यान्मार्जालीय एवोत्तमम् - ४.४.२.[८]

स यत्राध्वर्युः । शालाकैर्धिष्ण्यान्व्याघारयति तत्प्रतिप्रस्थाता पात्नीवतं ग्रहं गृह्णाति यज्ञाद्वै प्रजाः प्रजायन्ते यज्ञात्प्रजायमाना मिथुनात्प्रजायन्ते मिथुनात्प्रजायमाना अन्ततो यज्ञस्य प्रजायन्ते तदेना एतदन्ततो यज्ञस्य मिथुनात्प्रजननात्प्रजनयति तस्मान्मिथुनात्प्रजननादन्ततो यज्ञस्येमाः प्रजाः प्रजायन्ते तस्मात्पात्नीवतं गृह्णाति - ४.४.२.[९]

तं वा उपांशुपात्रेण गृह्णाति । यदि सावित्रमुपांशुपात्रेण गृह्णीयादन्तर्यामपात्रेणैतं यदि सावित्रमन्तर्यामपात्रेण गृह्णीयादुपांशुपात्रेणैतं समानं ह्येतद्यदुपांश्वन्तर्यामौ प्राणो हि यो वै प्राणः स उदानो वृषा वै प्राणो योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते - ४.४.२.[१०]

तं वा अपुरोरुक्कं गृह्णाति । वीर्यं वै पुरोरुङ्नेत्स्त्रीषु वीर्यं दधानीति तस्मादपुरोरुक्कं गृह्णाति - ४.४.२.[११]

अथातो गृह्णात्येव । उपयामगृहीतोऽसि बृहस्पतिसुतस्य देव सोम त इति ब्रह्म वै बृहस्पतिर्ब्रह्मप्रसूतस्य देव सोम त इत्येवैतदाहेन्दोरिन्द्रियावत इति वीर्यवत इत्येवैतदाह यदाहेन्दोरिन्द्रियावत इति पत्नीवतो ग्रहां ऋध्यासमिति न सम्प्रति पत्नीभ्यो गृह्णाति नेत्स्त्रीषु वीर्यं दधानीति तस्मान्न सम्प्रति पत्नीभ्यो गृह्णाति - ४.४.२.[१२]

अथ यः प्रचरण्यां संस्रवः परिशिष्टो भवति । तेनैनं श्रीणाति समर्धयति वा अन्यान्ग्रहाञ्छ्रीणन्नथैतं व्यर्धयति वज्रो वा आज्यमेतेन वै देवा वज्रेणाज्येन घ्नन्नेव पत्नीर्निराक्ष्णुवंस्ता हता निरष्टा नात्मनश्चनैशत न दायस्य चनैशत तथो एवैष एतेन वज्रेणाज्येन हन्त्येव पत्नीर्निरक्ष्णोति ता हता निरष्टा नात्मनश्चनेशते न दायस्य चनेशते - ४.४.२.[१३]



स श्रीणाति । अहं परस्तादहमवस्ताद्यदन्तरिक्षं तदु मे पिताभूत् अहं सूर्यमुभयतो ददर्शाहं देवानां परमं गुहा यदिति स यदहमहमिति श्रीणाति पुंस्वेवैतद्वीर्यं दधाति - ४.४.२.[१४]

अथाहाग्नीत्पात्नीवतस्य यजेति । वृषा वा अग्नीद्योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते स जुहोत्यग्ना३ऽइ पत्नीवन् इति वृषा वा अग्निर्योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते - ४.४.२.[१५]

सजूर्देवेन त्वष्ट्रेति । त्वष्टा वै सिक्तं रेतो विकरोति तदेष एवैतत्सिक्तं रेतो विकरोति सोमं पिब स्वाहेत्युत्तरार्धे जुहोति या इतरा आहुतयस्ते देवा अथैताः पत्न्य

एवमिव हि मिथुनं क्लृप्तमुत्तरतो हि स्त्री पुमांसमुपशेत आहरत्यध्वर्युरग्नीधे भक्षं स आहाध्वर्य उप मा ह्वयस्वेति तं न प्रत्युपह्वयेत को हि हतस्य निरष्टस्य प्रत्युपहवस्तं वै प्रत्येवोपह्वयेत जुह्वत्यस्याग्नौ वषट्कुर्वन्ति तस्मात्प्रत्येवोपह्वयेत - ४.४.२.[१६]

अथ सम्प्रेष्यति । अग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोद्गात्रा संख्यापयोन्नेतर्होतुश्चमसमनून्नय सोमं माऽतिरीरिच इति यद्यग्निष्टोमः स्यात् - ४.४.२.[१७]

यद्युक्थ्यः स्यात् । सोमं प्रभावयेति ब्रूयात्स बिभ्रदेवैतत्पात्रमग्नीन्नेष्टुरुपस्थमासीदत्यग्निर्वा एष निदानेन यदाग्नीध्रो योषा नेष्टा वृषा वा अग्नीद्योषा नेष्टा मिथुनमेवैतत्प्रजननं क्रियत उदानयति नेष्टा पत्नीं तामुद्गात्रा संख्यापयति प्रजापतिर्वृषासि रेतोधा रेतो मयि धेहीति प्रजापतिर्वा उद्गाता योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते - ४.४.२.[१८]

##४.४.३ हारियोजनग्रहः



पशवो वै देवानां छन्दांसि । तद्यथेदं पशवो युक्ता मनुष्येभ्यो वहन्त्येवं छन्दांसि युक्तानि देवेभ्यो यज्ञं वहन्ति तद्यत्र छन्दांसि देवान्त्समतर्पयन्नथ छन्दांसि देवाः समतर्पयंस्तदतस्तत्प्रागभूद्यच्छन्दांसि युक्तानि देवेभ्यो यज्ञमवाक्षुर्यदेनान्त्समतीतृपन् ४.४.३.१

अथ हारियोजनं गृह्णाति । छन्दांसि वै हारियोजनश्छन्दांस्येवैतत्संतर्पयति तस्माद्धारियोजनं गृह्णाति ४.४.३.२

तं वा अतिरिक्तं गृह्णाति । यदा हि शम्योराहाथैनं गृह्णातीदं वै देवा अथ छन्दांस्यतिरिक्तान्यथ मनुष्या अथ पशवोऽतिरिक्तास्तस्मादतिरिक्तं गृह्णाति ४.४.३.३

द्रोणकलशे गृह्णाति । वृत्रो वै सोम आसीत्तं यत्र देवा अघ्नंस्तस्य मूर्द्धोद्ववर्त स द्रोणकलशोऽभवत्तस्मिन्यावान्वा यावान्वा रसः समस्रवदतिरिक्तो वै स आसीदतिरिक्त एष ग्रहस्तदतिरिक्त एवैतदतिरिक्तं दधाति तस्माद्द्रोणकलशे गृह्णाति ४.४.३.४

तं वा अपुरोरुक्कं गृह्णाति । च्छन्दोभ्यो ह्येनं गृह्णाति स यदेवैनं च्छन्दोभ्यो गृह्णाति तेनो हास्यैष पुरोरुङ्गान्भवति तस्मादपुरोरुक्कं गृह्णाति ४.४.३.५

अथातो गृह्णात्येव । उपयामगृहीतोऽसि हरिरसि हारियोजनो हरिभ्यां त्वेत्यृसामे वै हरी ऋक्कसामाभ्यां ह्येनं गृह्णाति ४.४.३.६

अथ धाना आवपति । हर्योर्धाना स्थ सहसोमा इन्द्रायेति तद्यदेवात्र मितं च च्छन्दोऽमितं च तदेवैतत्सर्वं भक्षयति ४.४.३.७

तस्योन्नेताऽऽश्रावयति । अतिरिक्तो वा उन्नेता न ह्येषोऽन्यस्याश्रावयत्यतिरिक्त एष ग्रहस्तदतिरिक्त एवैतदतिरिक्तं दधाति तस्मादुन्नेताऽऽश्रावयति ४.४.३.८



मूर्धन्नभिनिधायाश्रावयति । मूर्द्धा ह्यस्यैषोऽथाह धानासोमेभ्योऽनुब्रूहीत्याश्राव्याह धानासोमान्प्रस्थितान्प्रेष्येति वषट्कृते जुहोत्यनुवषट्कृतेऽथ धाना विलिप्सन्ते भक्षाय ४.४.३.९

तद्धैके । होत्रे द्रोणकलशं प्रतिपराहरन्ति वषट्कर्तुर्भक्ष इति वदन्तस्तदु तथा न कुर्याद्यथाचमसं वा अन्ये भक्षा अथैषोऽतिरिक्तस्तस्मादेतस्मिन्त्सर्वेषामेव भक्षस्तस्माद्धाना विलिप्सन्ते भक्षाय ४.४.३.१०

ता न दद्भिः खादेयुः । पशवो वा एते नेत्पशून्प्रम्रदे करवामहा इति प्राणैरेव भक्षयन्ति यस्ते अश्वसनिर्भक्षो यो गोसनिरिति पशवो ह्येते तस्मादाह यस्ते अश्वसनिर्भक्षो यो गोसनिरिति तस्य त इष्टयजुष स्तुतस्तोमस्येतीष्टानि हि यजूंषि भवन्ति स्तुता स्तोमाः शस्तोक्थस्येति शस्तानि ह्युक्थानि भवन्त्युपहूतस्योपहूतो भक्षयामीत्युपहूतस्य ह्येतदुपहूतो भक्षयति ४.४.३.११

ता नाग्नौ प्रकिरेयुः । नेदुच्छिष्टमग्नौ जुहवामेत्युत्तरवेदावेव निवपन्ति तथा न बहिर्द्धा यज्ञाद्भवन्ति ४.४.३.१२

अथ पूर्णपात्रान्त्समवमृशन्ति । यानेकेऽप्सुषोमा इत्याचक्षते यथा वै युक्तो वहेदेवमेते य आर्त्विज्यं कुर्वन्त्युत वै युक्तः क्षणुते वा वि वा लिशते शान्तिरापो भेषजं तद्यदेवात्र क्षण्वते वा वि वा लिशन्ते शान्तिरापस्तदद्भिः शान्त्या शमयन्ते तदद्भिः संदधते तस्मात्पूर्णपात्रान्त्समवमृशन्ति ४.४.३.१३

ते समवमृशन्ति । सं वर्चसा पयसा स तनूभिरगन्महि मनसा सं शिवेन त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टमिति यद्विवृढं तत्संदधते ४.४.३.१४

अथ मुखान्युपस्पृशन्ते । द्वयं तद्यस्मान्मुखान्युपस्पृशन्तेऽमृतं वा आपोऽमृतेनैवैतत्संस्पृशन्त एतदु चैवैतत्कर्मात्मन्कुर्वते तस्मान्मुखान्युपस्पृशन्ते ४.४.३.१५



##४.४.४ समिष्टयजुः

तानि वा एतानि । नव समिष्टयजूंषि जुहोति तद्यन्नव समिष्टयजूंषि जुहोति नव वा अमूर्बहिष्पवमाने स्तोत्रिया भवन्ति सैषोभयतो न्यूना विराट्प्रजननायैतस्माद्वा उभयतो न्यूनात्प्रजननात्प्रजापतिः प्रजाः ससृज इतश्चोर्ध्वा इतश्चावाचीस्तथो एवैष एतस्मादुभयत एव न्यूनात्प्रजननात्प्रजाः सृजत इतश्चोर्ध्वा इतश्चावाचीः - ४.४.४.[१]

हिङ्कार स्तोत्रियाणां दशमः । स्वाहाकार एतेषां तथो हास्यैषा न्यूना विराड्ढंशदशिनी भवति - ४.४.४.[२]

अथ यस्मात्समिष्टयजूंषि नाम । या वा एतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायते सर्वा वै तत्ताः समिष्टा भवन्ति तद्यत्तासु सर्वासु समिष्टास्वथैतानि जुहोति तस्मात्समिष्टयजूंषि नाम- ४.४.४.[३]

अथ यस्मात्समिष्टयजूंषि जुहोति । रिरिचान इव वा एतदीजानस्यात्मा भवति यद्धयस्य भवति तस्य हि ददाति तमेवातस्त्रिभिः पुनराप्याययति - ४.४.४.[४]

अथ यान्युत्तराणि त्रीणि जुहोति । या वा एतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायत उप हैव ता आसते यावन्न समिष्टयजूंषि जुह्वतीमानि नु नो जुह्वत्विति ता एवैतद्यथायथं व्यवसृजति यत्र यत्रासां चरणं तदनु - ४.४.४.[५]

अथ यान्युत्तमानि त्रीणि जुहोति । यज्ञं वा एतदजीजनत यदेनमतत तं जनयित्वा यत्रास्य प्रतिष्ठा तत्प्रतिष्ठापयति तस्मात्समिष्टयजूंषि जुहोति - ४.४.४.[६]

स जुहोति । समिन्द्र णो मनसा नेषि गोभिरिति मनसेति तन्मनसा रिरिचानमाप्याययति गोभिरिति तद्गोभी रिरिचानमाप्याययति सं सूरिभिर्मघवन्त्सं स्वस्त्या सं ब्रह्मणा देवकृतं यदस्तीति ब्रह्मणेति तद्ब्रह्मणा रिरिचानमाप्याययति सं देवानां सुमतौ यज्ञियानां स्वाहा - ४.४.४.[७]

सं वर्चसा । पयसा सं तनूभिरिति वर्चसेति तद्वर्चसा रिरिचानमाप्याययति पयसेति रसो वै पयस्तत्पयसा रिरिचानमाप्याययत्यगन्महि मनसा सं शिवेन त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टमिति विवृढं तत्संदधाति - ४.४.४.[८]

सवितेदं जुषन्तां प्रजापतिर्निधिपा देवो अग्निः । त्वष्टा विष्णुः प्रजया संरराणा यजमानाय द्रविणं दधात स्वाहेति तद्वेव रिरिचानं पुनराप्याययति यदाह यजमानाय द्रविणं दधात स्वाहेति - ४.४.४.[९]

सुगा वो देवाः । सदना अकर्म य आजग्मेदं सवनं जुषाणा इति सुगानि वो देवाः सदनान्यकर्म य आगन्तेदं सवनं जुषाणा इत्येवैतदाह भरमाणा वहमाना हवींषीति

तद्देवता व्यवसृजति भरमाणा अह ते यन्तु येऽवाहना वहमाना उ ते यन्तु ये वाहनवन्त इत्येवैतदाह तस्मादाह भरमाणा वहमाना हवींष्यस्मे धत्त वसवो वसूनि स्वाहा - ४.४.४.[१०]

यां आवहः । उशतो देव देवांस्तान्प्रेरय स्वे अग्ने सधस्थ इत्यग्निं वा आहामून्देवानावहामून्देवानावहेति तमेवैतदाह यान्देवानावाक्षीस्तान्गमय यत्रयत्रैषां चरणं तदन्विति जक्षिवांसः पपिवांसश्च विश्व इति जक्षिवांसो हि पशुं पुरोडाशं भवन्ति पपिवांस इति पपिवांसो हि सोमं राजानं भवन्ति तस्मादाह जक्षिवांसः पपिवांसश्च विश्वेऽसुं घर्मं स्वरातिष्ठतानु स्वाहेति तद्वेव देवता व्यवसृजति - ४.४.४.[११]

वयं हि त्वा । प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह ऋधगया ऋधगुताशमिष्ठाः प्रजानन्यज्ञमुपयाहि विद्वान्त्स्वाहेत्यग्निमेवैतया विमुञ्चत्यग्निं व्यवसृजति - ४.४.४.[१२]



देवा गातुविद इति । गातुविदो हि देवा गातुं वित्त्वेति यज्ञं वित्त्वेत्येवैतदाह गातुमितेति तदेतेन यथायथं व्यवसृजति मनसस्पत इमं देव यज्ञं स्वाहा वाते धा इत्ययं वै यज्ञो योऽयं पवते तदिमं यज्ञं सम्भृत्यैतस्मिन्यज्ञे प्रतिष्ठापयति यज्ञेन यज्ञं संदधाति तस्मादाह स्वाहा वाते धा इति - ४.४.४.[१३]

यज्ञ यज्ञं गच्छ । यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहेति तत्प्रतिष्ठितमेवैतद्यज्ञं सन्तं स्वायां योनौ प्रतिष्ठापयत्येष ते यज्ञो यज्ञपते सहसूक्तवाकः सर्ववीरस्तं जुषस्व स्वाहेति तत्प्रतिष्ठितमेवैतद्यज्ञं सन्तं सहसूक्तवाकः सर्ववीरं यजमानेऽन्ततः प्रतिष्ठापयति - ४.४.४.[१४]

##४.४.५ अवभृथस्नानम्

स वा अवभृथमभ्यवैति । तद्यदवभृथमभ्यवैति यो वा अस्य रसोऽभूदाहुतिभ्यो वा अस्य तमजीजनदथैतच्छरीरं तस्मिन्न रसोऽस्ति तन्न परास्यंस्तदपोऽभ्यवहरन्ति रसो वा

आपस्तदस्मिन्नेतं रसं दधाति तदेनमेतेन रसेन संगमयति तदेनमतो जनयति स एनं जात एव सञ्जनयति तद्यदपोऽभ्यवहरन्ति तस्मादवभृथः - ४.४.५.[१]

अथ समिष्टयजूंषि जुहोति । समिष्टयजूंषि ह्येवान्तो यज्ञस्य स हुत्वैव समिष्टयजूंषि यदेतमभितो भवति तेन चात्वालमुपसमायन्ति स कृष्णविषाणाम्मेखलां च चात्वाले प्रास्यति - ४.४.५.[२]

माहिर्भूर्मा पृदाकुरिति । असौ वा ऋजीषस्य स्वगाकारो यदेनदपोऽभ्यवहरन्त्यथैष एवैतस्य स्वगाकारो रज्जुरिव हि सर्पाः कूपा इव हि सर्पाणामायतनान्यस्ति वै मनुष्याणां च सर्पाणां च विभ्रातृव्यमिव नेत्तदतःसम्भवदिति तस्मादाह माहिर्भूर्मा पृदाकुरिति - ४.४.५.[३]

अथ वाचयति । उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ इति यथायमुरुरभयोऽनाष्ट्रः सूर्याय पन्था एवं मेऽयमुरुरभयोऽनाष्ट्रःपन्था अस्त्वित्येवैतदाह - ४.४.५.[४]



अपदे पादा प्रतिधातवेऽकरिति । यदि ह वा अप्यपाद्भवत्यलमेव प्रतिक्रमणाय भवत्युतापवक्ता हृदयाविधश्चिदिति तदेनं सर्वस्माद्धृद्यादेनसः पाप्मनः प्रमुञ्चति - ४.४.५.[५]

अथाह साम गायेति । साम ब्रूहीति वा गायेति त्वेव ब्रूयाद्गायन्ति हि साम तद्यत्साम गायति नेदिदं बहिर्द्धा यज्ञाच्छरीरं नाष्ट्रा रक्षांसि हिनसन्निति साम हि नाष्ट्राणां रक्षसामपहन्ता- ४.४.५.[६]

आग्नेय्यां गायति । अग्निर्हि रक्षसामपहन्तातिच्छन्दसि गायत्येषा वै सर्वाणि छन्दांसि यदतिच्छन्दास्तस्मादतिच्छन्दसि गायति - ४.४.५.[७]

स गायति । अग्निष्टपति प्रतिदहत्यहावोऽहाव इति तन्नाष्ट्रा एवैतद्रक्षांस्यतोऽपहन्ति - ४.४.५.[८]

त उदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्रेणाग्नीध्रं स यस्यां ततो दिश्यापोभवन्ति तद्यन्ति - ४.४.५.[९]

स यः स्यन्दमानानां स्थावरो ह्रदः स्यात् । तमपोऽभ्यवेयादेता वा अपां वरुणगृहीता याः स्यन्दमानानां न स्यन्दन्ते वरुण्यो वा अवभृथो निर्वरुणतायै यद्यु ता न विन्देदपि या एव काश्चापोऽभ्यवेयात् - ४.४.५.[१०]

तमपोऽवक्रमयन्वाचयति । नमो वरुणायाभिष्ठितो वरुणस्य पाश इति तदेनं सर्वस्माद्वरुणपाशात्सर्वस्माद्वरुण्यात्प्रमुञ्चति - ४.४.५.[११]



अथ चतुर्गृहीतमाज्यं गृहीत्वा । समिधं प्रास्याभिजुहोत्यग्नेरनीकमप आविवेशापां नपात्प्रतिरक्षन्नसुर्यं दमेदमे समिधं यक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्यत्स्वाहेति - ४.४.५.[१२]

अग्नेर्ह वै देवाः । यावद्वा यावद्वाप्सु प्रवेशयांचक्रुर्नेदतो नाष्ट्रा रक्षांस्युपोत्तिष्ठानित्यग्निर्हि रक्षसामपहन्ता तमेतया च समिधैतया चाहुत्या समिन्द्धे समिद्धे देवेभ्यो जुहवानीति- ४.४.५.[१३]

अथापरं चतुर्गृहीतमाज्यं गृहीत्वा । आश्राव्याह समिधो यजेति सोऽपबर्हिषश्चतुरः प्रयाजान्यजति प्रजा वै बर्हिर्वरुण्यो वा अवभृथो नेत्प्रजा वरुणो गृह्णादिति तस्मादपबर्हिषश्चतुरः प्रयाजान्यजति - ४.४.५.[१४]

अथ वारुण एककपालः पुरोडाशो भवति । यो वा अस्य रसोऽभूदाहुतिभ्यो वा अस्य

तमजीजनदथैतच्छरीरं तस्मिन्न रसोऽस्ति रसो वै पुरोडाशस्तदस्मिन्नेतं रसं दधाति तदेनमेतेन रसेन संगमयति तदेनमतो जनयति स एनं जात एव सञ्जनयति तस्माद्वारुण एककपालः पुरोडाशो भवति - ४.४.५.[१५]

स आज्यस्योपस्तीर्य । पुरोडाशस्यावद्यन्नाह वरुणायानुब्रूहीत्यत्र हैक ऋजीषस्य द्विरवद्यन्ति तदु तथा न कुर्याच्छरीरं वा एतद्भवति नालमाहुत्यै द्विरवद्यति सकृदभिघारयति प्रत्यनक्त्यवदाने आश्राव्याह वरुणं यजेति वषट्कृते जुहोति - ४.४.५.[१६]

अथाज्यस्योपस्तीर्य । पुरोडाशमवदधदाहाग्नीवरुणाभ्यामनुब्रूहीति तत्स्विष्टकृते स यन्नाग्नय इत्याह नेदग्निं वरुणो गृह्णादिति स यद्यमुत्रऽर्जीषस्य द्विरवद्येदथात्र सकृद्यद्यु न नाद्रियेताथोपरिष्टाद्द्विराज्यस्याभिघारयत्याश्राव्याहाग्नीवरुणौ यजेति वषट्कृते जुहोति - ४.४.५.[१७]

ता वा एताः । षडाहुतयो भवन्ति षड्वा ऋतवः संवत्सरस्य संवत्सरो वरुणस्तस्मात्षडाहुतयो भवन्ति - ४.४.५.[१८]



एतदादित्यानामयनम् । आदित्यानीमानि यजूंषीत्याहुः स यावदस्य वशः स्यादेवमेव चिकीर्षेद्यद्यु एनमितरथा यजमानः कर्तवै ब्रूयादितरथो तर्हि कुर्यादेतानेव चतुरः प्रयाजानपबर्हिषो यजेद्द्वावाज्यभागौ वरुणमग्नीवरुणौ द्वावनुयाजावपबर्हिषौ तद्दश दशाक्षरा वै विराड्विराड्वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयति - ४.४.५.[१९]

एतदङ्गिरसामयनम् । अतोऽन्यतरत्कृत्वा यस्मिन्कुम्भ ऋजीषं भवति तम्प्रप्लावयति समुद्रे ते हृदयमप्स्वन्तरित्यापो वै समुद्रो रसो वा आपस्तदस्मिन्नेतं रसं दधाति तदेनमेतेन रसेन संगमयति तदेनमतो जनयति स एनं जात एव सञ्जनयति सं त्वा विशन्त्वोषधीरुताप इति तदस्मिन्नुभयं रसं दधाति यश्चौषधिषु यश्चाप्सु यज्ञस्य त्वा यज्ञपते सूक्तोक्तौ नमोवाके विधेम यत्स्वाहेति तद्यदेव यज्ञस्य साधु तदेवास्मिन्नेतद्दधाति - ४.४.५.[२०]

अथानुसृज्योपतिष्ठते । देवीराप एष वो गर्भ इत्यपां ह्येष गर्भस्तं सुप्रीतं सुभृतं बिभृतेति तदेनमद्भ्यः परिददाति गुप्त्यै देव सोमैष ते लोक इत्यापोह्येतस्य लोकस्तस्मिञ्छं च वक्ष्व परि च वक्ष्वेति तस्मिन्नः शं चैधि सर्वाभ्यश्च न आर्तिभ्यो गोपायेत्येवैतदाह - ४.४.५.[२१]

अथोपमारयति । अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः अव देवैर्देवकृतमेनो ऽयासिषमव मर्त्यैर्मर्त्यकृतमित्यवह्येतद्देवैर्देवकृतमेनोऽयासीत्सोमेन राज्ञा अव मर्त्यैर्मर्त्यकृतमित्यव ह्येतन्मर्त्यैर्मर्त्यकृतमेनोऽयासीत्पशुना पुरोडाशेन पुरुराव्णो देव रिषस्पाहीतिसर्वाभ्यो मार्तिभ्यो गोपायेत्येवैतदाह - ४.४.५.[२२]

अथाभ्यवेत्य स्नातः । अन्योऽन्यस्य पृष्ठे प्रधावतस्तावन्ये वाससी परिधायोदेतः स यथाहिस्त्वचो निर्मुच्येतैवं सर्वस्मात्पाप्मनो निर्मुच्यते तस्मिन्न तावच्चनैनो भवति यावत्कुमारेऽदति स येनैव निष्क्रामन्ति तेन पुनरायन्ति पुनरेत्याहवनीये समिधमभ्यादधाति देवानां समिदसीति यजमानमेवैतया समिद्धे देवानां हि समिद्धिमनु यजमानः समिध्यते - ४.४.५.[२३]



##४.५.१ उदयनीयेष्टिः
आदित्येन चरुणोदयनीयेन प्रचरति । तद्यदादित्यश्चरुर्भवति यदेवैनामदो देवा अब्रुवंस्तवैव प्रायणीयस्तवोदयनीय इति तमेवास्या एतदुभयत्र भागं करोति - ४.५.१.[१]

स यदमुत्र राजानं क्रेष्यन्नुपप्रैष्यन्यजते । तस्मात्तत्प्रायणीयं नामाथ यदत्रावभृथादुदेत्य यजते तस्मादेतदुदयनीयं नाम तद्वा एतत्समानमेव हविरदित्या एव प्रायणीयमदित्या उदयनीयमियं ह्येवादितिः - ४.५.१.[२]

स वै पथ्यामेवाग्रे स्वस्तिं यजति । तद्देवा अप्रज्ञायमाने वाचैव प्रत्यपद्यन्त वाचा हि मुग्धं प्रज्ञायतेऽथात्र प्रज्ञाते यथापूर्वं करोति - ४.५.१.[३]

सोऽग्निमेव प्रथमं यजति । अथ सोममथ सवितारमथ पथ्यां स्वस्तिमथादितिं वाग्वै पथ्या स्वस्तिरियमदितिरस्यामेव तद्देवा वाचम्प्रत्यष्ठापयन्त्सेयं वागस्यां प्रतिष्ठिता वदति - ४.५.१.[४]

अनुबन्ध्यायागः
अथ मैत्रावरुणीं वशामनूबन्ध्यामालभते । स एषोऽन्य एव यज्ञस्तायते पशुबन्ध एव समिष्टयजूंषि ह्येवान्तो यज्ञस्य - ४.५.१.[५]

तद्यन्मैत्रावरुणी वशा भवति । यद्वा ईजानस्य स्विष्टं भवति मित्रोऽस्य तद्गृह्णाति यद्वस्य दुरिष्टं भवति वरुणोऽस्य तद्गृह्णाति - ४.५.१.[६]

तदाहुः । क्वे जानोऽभूदिति तद्यदेवास्यात्र मित्रः स्विष्टं गृह्णाति तदेवास्मा एतया प्रीतः प्रत्यवसृजति यदु चास्य वरुणो दुरिष्टं गृह्णाति तच्चैवास्मा एतया प्रीतः स्विष्टं करोति तदु चास्मै प्रत्यवसृजति सोऽस्यैष स्व एव यज्ञो भवति स्वं सुकृतम् - ४.५.१.[७]



तद्यन्मैत्रावरुणी वशा भवति । यत्र वै देवा रेतः सिक्तम्प्राजनयंस्तदाग्निमारुतमित्युक्थं तस्मिंस्तद्व्याख्यायते यथा तद्देवा रेतः प्राजनयंस्ततोऽङ्गाराः समभवन्नङ्गारेभ्योऽङ्गिरसस्तदन्वन्ये पशवः - ४.५.१.[८]

अथ यदासाः पांसवः पर्यशिष्यन्त । ततो गर्दभः समभवत्तस्माद्यत्र पांसुलं भवति गर्दभस्थानमिव बतेत्याहुरथ यदा न कश्चन रसः पर्यशिष्यत तत एषा मैत्रावरुणी वशा समभवत्तस्मादेषा न प्रजायते रसाद्धि रेतः सम्भवति रेतसः पशवस्तद्यदन्ततः समभवत्तस्मादन्तं यज्ञस्यानुवर्तते तस्माद्वा एषात्र मैत्रावरुणी वशावक्लृप्ततमा भवति यदि वशां न विन्देदप्युक्षवश एव स्यात् - ४.५.१.[९]

अथेतरं विश्वे देवा अमरीमृश्यन्त । ततो वैश्वदेवी समभवदथ बार्हस्पत्यासोऽन्तोऽन्तो हि बृहस्पतिः - ४.५.१.[१०]

स यः सहस्रं वा भूयो वा दद्यात् । स एनाः सर्वा आलभेत सर्वं वै तस्याप्तम्भवति सर्वं जितं यः सहस्रं वा भूयो वा ददाति सर्वमेता एवमेव यथापूर्वम्मैत्रावरुणीमेवाग्रेऽथ वैश्वदेवीमथ बार्हस्पत्यम् - ४.५.१.[११]

अथो ये दीर्घसत्त्रमासीरन् । संवत्सरं वा भूयो वा त एनाः सर्वा आलभेरन्त्सर्वं वै तेषामाप्तं भवति सर्वं जितं ये दीर्घसत्त्रमासते संवत्सरं वा भूयो वा सर्वमेता एवमेव यथापूर्वम् - ४.५.१.[१२]

उदवसानीयेष्टिः

अथोदवसानीययेष्ट्या यजते । स आग्नेयं पञ्चकपालं पुरोडाशं निर्वपति तस्य पञ्चपदाः पङ्क्त्यो याज्यानुवाक्या भवन्ति यातयामेव वा एतदीजानस्य यज्ञो भवति सोऽस्मात्पराङिव भवत्यग्निर्वै सर्वे यज्ञा अग्नौ हि सर्वान्यज्ञांस्तन्वते ये च पाकयज्ञा ये चेतरे तद्यज्ञमेवैतत्पुनरारभते तथास्यायातयामा यज्ञो भवति तथो अस्मान्न पराङ्भवति - ४.५.१.[१३]

तद्यत्पञ्चकपालः पुरोडाशो भवति । पञ्चपदाः पङ्क्त्यो याज्यानुवाक्याः पाङ्क्तो वै यज्ञस्तद्यज्ञमेवैतत्पुनरारभते तथास्यायातयामा यज्ञो भवति तथो अस्मान्न पराङ्भवति - ४.५.१.[१४]

तस्य हिरण्यं दक्षिणा । आग्नेयो वा एष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणानड्वान्वा स हि वहेनाग्नेयोऽग्निदग्धमिव ह्यस्य वहम्भवति - ४.५.१.[१५]

अथो चतुर्गृहीतमेवाज्यं गृहीत्वा । वैष्णव्यर्चा जुहोत्युरु विष्णो विक्रमस्वोरुक्षयाय नस्कृधि घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहेति यज्ञो वै विष्णुस्तद्यज्ञमेवैतत्पुनरारभते तथास्यायातयामा यज्ञो भवति तथो अस्मान्न पराङ्भवति तत्रो यच्छक्नुयात्तद्दद्यान्नादक्षिणं

हविः स्यादिति ह्याहुरथ यदेवैषोदवसानीयेष्टिः संतिष्ठतेऽथ सायमाहुतिं जुहोति काल एव प्रातराहुतिम् - ४.५.१.[१६]

##४.५.२ अनुबन्ध्याप्रायश्चित्तम्
वशामालभते । तामालभ्य संज्ञपयन्ति संज्ञप्याह वपामुत्खिदेत्युत्खिद्य वपामनुमर्शं गर्भमेष्टवै ब्रूयात्स यदि न विन्दन्ति किमाद्रियेरन्यद्यु विन्दन्ति तत्र प्रायश्चित्तिः क्रियते - ४.५.२.[१]

न वै तदवकल्पते । यदेकां मन्यमाना एकयेवैतया चरेयुर्यद्वे मन्यमाना द्वाभ्यामिव चरेयु स्थालीं चैवोष्णीषं चोपकल्पयितवै ब्रूयात् - ४.५.२.[२]

अथ वपया चरन्ति । यथैव तस्यै चरणं वपया चरित्वाध्वर्युश्च यजमानश्च पुनरेतः स आहाध्वर्युर्निरूहैतं गर्भमिति तं ह नोदरतो निरूहेदार्ताया वै मृताया उदरतो निरूहन्ति यदा वै गर्भः समृद्धो भवति प्रजननेन वै स तर्हि प्रत्यङ्ङैति तमपि विरुज्य श्रोणी प्रत्यञ्चं निरूहितवै ब्रूयात् - ४.५.२.[३]

तं निरुह्यमाणमभिमन्त्रयते । एजतु दशमास्यो गर्भो जरायुणा सहेति स यदाहैजत्विति प्राणमेवास्मिन्नेतद्दधाति दशमास्य इति यदा वै गर्भः समृद्धो भवत्यथ दशमास्यस्तमेतदप्यदशमास्यं सन्तं ब्रह्मणैव यजुषा दशमास्यं करोति - ४.५.२.[४]

जरायुणा सहेति । तद्यथा दशमास्यो जरायुणा सहेयादेवमेतदाह यथायं वायुरेजति यथा समुद्र एजतीति प्राणमेवास्मिन्नेतद्दधात्येवायं दशमास्यो अस्रज्जरायुणा सहेति तद्यथा दशमास्यो जरायुणा सह स्रंसेतैवमेतदाह - ४.५.२.[५]

तदाहुः । कथमेतं गर्भं कुर्यादित्यङ्गादङ्गाद्धैवास्यावद्येयुर्यथैवेतरेषामवदानानामवदानं तदु तथा न कुर्यादुत ह्येषोऽविकृताङ्गो भवत्यधस्तादेव ग्रीवा अपिकृत्यैतस्यां स्थाल्यामेतं मेधं

श्चोतयेयुः सर्वेभ्यो वा अस्यैषोऽङ्गेभ्यो मेध श्चोतति तदस्य सर्वेषामेवाङ्गानामवत्तं भवत्यवद्यन्ति वशाया अवदानानि यथैव तेषामवदानम् - ४.५.२.[६]

तानि पशुश्रपणे श्रपयन्ति । तदेवैतं मेधं श्रपयन्त्युष्णीषेणावेष्ट्य गर्भं पार्श्वतः पशुश्रपणस्योपनिदधाति यदा शृतो भवत्यथ समुद्यावदानान्येवाभिजुहोति नैतं मेधमुद्वासयन्ति पशुं तदेवैतम्मेधमुद्वासयन्ति - ४.५.२.[७]

तं जघनेन चात्वालमन्तरेण यूपं चाग्निं च हरन्ति । दक्षिणतो निधाय प्रतिप्रस्थातावद्यत्यथ स्रुचोरुपस्तृणीतेऽथ मनोतायै हविषोऽनुवाच आहावद्यन्ति वशाया अवदानानां यथैव तेषामवदानम् - ४.५.२.[८]

अथ प्रचरणीति स्रुग्भवति । तस्यां प्रतिप्रस्थाता मेधायोपस्तृणीते द्विरवद्यति सकृदभिघारयति प्रत्यनक्त्यवदाने अथानुवाच आहाश्राव्याह प्रेष्येति वषट्कृतेऽध्वर्युर्जुहोत्यध्वर्योरनु होमं जुहोति प्रतिप्रस्थाता - ४.५.२.[९]



यस्यै ते यज्ञियो गर्भ इति । अयज्ञिया वै गर्भास्तमेतद्ब्रह्मणैव यजुषा यज्ञियं करोति यस्यै योनिर्हिरण्ययीत्यदो वा एतस्यै योनिं विच्छिन्दन्ति यददो निष्कर्षन्त्यमृतमायुर्हिरण्यं तामेवास्या एतदमृतां योनिं करोत्यङ्गान्यह्रुता यस्य तं मात्रा समजीगमं स्वाहेति यदि पुमान्त्स्याद्यद्यु स्त्री स्यादङ्गान्यह्रुता यस्यै तां मात्रा समजीगमं स्वाहेति यद्यु अविज्ञातो गर्भो भवति पुंस्कृत्यैव जुहुयात्पुमांसो हि गर्भा अङ्गान्यह्रुता यस्य तं मात्रा समजीगमं स्वाहेत्यदो वा एतं मात्रा विष्वञ्चं कुर्वन्ति यददो निष्कर्षन्ति तमेतद्ब्रह्मणैव यजुषा समर्ध्य मध्यतो यज्ञस्य पुनर्मात्रा सङ्गमयति - ४.५.२.[१०]

अथाध्वयुर्वनस्पतिना चरति । वनस्पतिनाध्वर्युश्चरित्वा यान्युपभृत्यवदानानि भवन्ति तानि समानयमान आहाग्नये स्विष्टकृतेऽनुब्रूहीत्यत्याक्रामति प्रतिप्रस्थाता स एतं सर्वमेव मेधं गृह्णीतेऽथोपरिष्टाद्द्विराज्यस्याभिघारयत्याश्राव्याह प्रेष्येति वषट्कृतेऽध्वर्युर्जुहोत्यध्वर्योरनु होमं जुहोति प्रतिप्रस्थाता - ४.५.२.[११]

पुरुदस्मो विषुरूप इन्दुरिति । बहुदान इति हैतद्यदाह पुरुदस्म इति विषुरूप इति विषुरूपा इव हि गर्भा इन्दुरन्तर्महिमानमानञ्ज धीर इत्यन्तर्ह्येषमातर्यक्तो भवत्येकपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टापदीं भुवनानु प्रथन्तां स्वाहेति प्रथयत्येवैनामेतत्सुभूयो ह जयत्यष्टापद्येष्ट्वा यदु चानष्टापद्या - ४.५.२.[१२]

तदाहुः । क्वैतं गर्भं कुर्यादिति वृक्ष एवैनमुद्दध्युरन्तरिक्षायतना वै गर्भा अन्तरिक्षमिवैतद्यद्वृक्षस्तदेनं स्व एवायतने प्रतिष्ठापयति तदु वा आहुर्य एनं तत्रानुव्याहरेद्वृक्ष एनं मृतमुद्धास्यन्तीति तथा हैव स्यात् - ४.५.२.[१३]

अप एवैनमभ्यवहरेयुः । आपो वा अस्य सर्वस्य प्रतिष्ठा तदेनमप्स्वेव प्रतिष्ठापयति तदु वा आहुर्य एनं तत्रानुव्याहरेदप्स्वेव मरिष्यतीति तथा हैव स्यात् - ४.५.२.[१४]



आखूत्कर एवैनमुपकिरेयुः । इयं वा अस्य सर्वस्य प्रतिष्ठा तदेनमस्यामेवप्रतिष्ठापयति तदु वा आहुर्य एनं तत्रानुव्याहरेत्क्षिप्रेऽस्मै मृताय श्मशानं करिष्यन्तीति तथा हैव स्यात् - ४.५.२.[१५]

पशुश्रपण एवैनं मरुद्भ्यो जुहुयात् । अहुतादो वै देवानां मरुतो विडहुतमिवैतद्यदश्र्टतो गर्भ आहवनीयाद्वा एष आहृतो भवति पशुश्रपणस्तथा ह न बहिर्धा यज्ञाद्भवति न प्रत्यक्षमिवाहवनीये देवानां वै मरुतस्तदेनं मरुत्स्वेव प्रतिष्ठापयति - ४.५.२.[१६]

स हुत्वैव समिष्टयजूंषि । प्रथमावशान्तेष्वङ्गारेष्वेतं सोष्णीषं गर्भमादत्ते तं प्राङ्तिष्ठञ्जुहोति मारुत्यर्चा मरुतो यस्य हि क्षये पाथा दिवो विमहसः स सुगोपातमो जन इति न स्वाहाकरोत्यहुतादो वै देवानां मरुतो विडहुतमिवैतद्यदस्वाहाकृतं देवानां वै मरुतस्तदेनं मरुत्स्वेव प्रतिष्ठापयति - ४.५.२.[१७]

अथाङ्गारैरभिसमूहति । मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्पिपृतां नो भरीमभिरिति - ४.५.२.[१८]
इत्यग्निष्टोमः
##४.५.३ षोडशीग्रहः
इन्द्रो ह वै षोडशी । तं नु सकृदिन्द्रं भूतान्यत्यरिच्यन्त प्रजा वै भूतानि ता हैनेन सदृग्भवमिवासुः - ४.५.३.[१]

इन्द्रो ह वा ईक्षां चक्रे । कथं न्वहमिदं सर्वमतितिष्ठेयमर्वागेव मदिदं सर्वं स्यादिति स एतं ग्रहमपश्यत्तमगृह्णीत स इदं सर्वमेवात्यतिष्ठदर्वागेवास्मादिदं सर्वमभवत्सर्वं ह वा इदमतितिष्ठत्यर्वागेवास्मादिदं सर्वं भवति यस्यैवं विदुष एतं ग्रहं गृह्णन्ति - ४.५.३.[२]

तस्मादेतदृषिणाभ्यानूक्तम् । न ते महित्वमनुभूदध द्यौर्यदन्यया स्फिग्या क्षामवस्था इति न ह वा अस्यासौ द्यौरन्यतरां चन स्फिचीमनुबभूव तथेदं सर्वमेवात्यतिष्ठदर्वागेवास्मादिदं सर्वमभवत्सर्वं ह वा इदमतितिष्ठत्यर्वागेवास्मादिदं सर्वं भवति यस्यैवं विदुष एतं ग्रहं गृह्णन्ति - ४.५.३.[३]



तं वै हरिवत्यर्चा गृह्णाति । हरिवतीषु स्तुवते हरिवतीरनुशंसति वीर्यं वै हर इन्द्रोऽसुराणां सपत्नानां समवृङ्क्त तथो एवैष एतद्वीर्यं हरः सपत्नानां संवृङ्क्ते तस्माद्धरिवत्यर्चा गृह्णाति हरिवतीषु स्तुवते हरिवतीरनुशंसति - ४.५.३.[४]

तं वा अनुष्टुभा गृह्णाति । गायत्रं वै प्रातःसवनं त्रैष्टुभं माध्यन्दिनं सवनं जागतं तृतीयसवनमथातिरिक्तानुष्टुबत्येवैनमेतद्रेचयति तस्मादनुष्टुभा गृह्णाति - ४.५.३.[५]

तं वै चतुःस्रक्तिना पात्रेण गृह्णाति । त्रयो वा इमे लोकास्तदिमानेव लोकांस्तिसृभिः स्रक्तिभिराप्नोत्यत्येवैनं चतुर्थ्या स्रक्त्या रेचयति तस्माच्चतुःस्रक्तिना पात्रेण गृह्णाति - ४.५.३.[६]

तं वै प्रातःसवने गृह्णीयात् । आग्रयणं गृहीत्वा स प्रातःसवने गृहीत एतस्मात्कालादुपशेते तदेनं सर्वाणि सवनान्यतिरेचयति - ४.५.३.[७]

माध्यन्दिने वैनं सवने गृह्णीयात् । आग्रयणं गृहीत्वा सो एषा मीमांसैव प्रातःसवन एवैनं गृह्णीयादाग्रयणं गृहीत्वा स प्रातःसवने गृहीत ऐतस्मात्कालादुपशेते - ४.५.३.[८]

अथातो गृह्णात्येव । आतिष्ठ वृत्रहन्नथं युक्ता ते ब्रह्मणा हरी अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुना उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिन इति - ४.५.३.[९]

अनया वा । युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिन इति - ४.५.३.[१०]



अथेत्य स्तोत्रमुपाकरोति । सोमोऽत्यरेच्युपावर्तध्वमित्यत्येवैनमेतद्रेचयति तं वै पुरास्तमयादुपाकरोत्यस्तमितेऽनुशंसति तदेनेनाहोरात्रे संदधाति तस्मात्पुरास्तमयादुपाकरोत्यस्तमितेऽनुशंसति - ४.५.३.[११]

##४.५.४ अतिग्राह्याग्रहाः

सर्वे ह वै देवाः । अग्रे सदृशा आसुः सर्वे पुण्यास्तेषां सर्वेषां सदृशानां सर्वेषाम्पुण्यानां त्रयोऽकामयन्तातिष्ठावानः स्यामेत्यग्निरिन्द्रः सूर्यः - ४.५.४.[१]

तेऽर्चन्तः श्राम्यन्तश्चेरुः । त एतानतिग्राह्यान्ददृशुस्तानत्यगृह्णत तद्यदेनानत्यगृह्णत तस्मादतिग्राह्या नाम तेऽतिष्ठावानोऽभवन्यथैत एतदतिष्ठेवातिष्ठेव ह वै भवति यस्यैवं विदुष एतान्ग्रहान्गृह्णन्ति - ४.५.४.[२]

नो ह वा इदमग्रेऽग्नौ वर्च आस । यदिदमस्मिन्वर्चः सोऽकामयतेदं मयि वर्चः स्यादिति स एतं ग्रहमपश्यत्तमगृह्णीत ततोऽस्मिन्नेतद्वर्च आस - ४.५.४.[३]

नो ह वा इदमग्र इन्द्र ओज आस । यदिदमस्मिन्नोजः सोऽकामयतेदं मय्योजःस्यादिति स एतं ग्रहमपश्यत्तमगृह्णीत ततोऽस्मिन्नेतदोज आस - ४.५.४.[४]

नो ह वा इदमग्रे सूर्ये भ्राज आस । यदिदमस्मिन्भ्राजः सोऽकामयतेदं मयि भ्राजः स्यादिति स एतं ग्रहमपश्यत्तमगृह्णीत ततोऽस्मिन्नेतद्भ्राज आसैतानि ह वै तेजांस्येतानि वीर्याण्यात्मन्धत्ते यस्यैवं विदुष एतान्ग्रहान् गृह्णन्ति - ४.५.४.[५]

तान्वै प्रातःसवने गृह्णीयात् । आग्रयणं गृहीत्वात्मा वा आग्रयणो बहु वा इदमात्मन एकैकमतिरिक्तं क्लोम हृदयं त्वद्यत्त्वत् - ४.५.४.[६]

माध्यन्दिने वैनान्त्सवने गृह्णीयात् । उक्थ्यं गृहीत्वोपाकरिष्यन्वा पूतभृतोऽयं ह वा अस्यैषोऽनिरुक्त आत्मा यदुक्थ्यः सो एषा मीमांसैव प्रातःसवन एवैनान्गृह्णीयादाग्रयणं गृहीत्वा - ४.५.४.[७]

ते माहेन्द्रस्यैवानु होमं हूयन्ते । एष वा इन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रोऽप्यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्यं शस्त्रमिन्द्रो वै यजमानो यजमानस्य वा एते कामाय गृह्यन्ते तस्मान्माहेन्द्रस्यैवानु होमं हूयन्ते - ४.५.४.[८]

अथातो गृह्णात्येव । अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यं दधद्रयिं मयि पोषमुपयामगृहीतोऽस्यग्नये त्वा वर्चस एष ते योनिरग्नये त्वा वर्चसे - ४.५.४.[९]

उत्तिष्ठन्नोजसा । सह पीत्वी शिप्रे अवेपयः सोममिन्द्र चमूसुतमुपयामगृहीतोऽसीन्द्राय त्वौजस एष ते योनिरिन्द्राय त्वौजसे - ४.५.४.[१०]

अदृश्रमस्य केतवः । वि रश्मयो जनां अनु भ्राजन्तो अग्नयो यथा उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजायेति - ४.५.४.[११]

तेषां भक्षः । अग्ने वर्चस्विन्वर्चस्वांस्त्वं देवेष्वसि वर्चस्वानहम्मनुष्येषु भूयासमिन्द्रौजिष्ठौजिष्ठस्त्वं देवेष्वस्योजिष्ठोऽहम्मनुष्येषु भूयासं सूर्य भ्राजिष्ठ भ्राजिष्ठस्त्वं देवेष्वसि भ्राजिष्ठोऽहम्मनुष्येषु भूयासमित्येतानि ह वै भ्राजांस्येतानि वीर्याण्यात्मन्धत्ते यस्यैवंविदुष एतान्ग्रहान् गृह्णन्ति - ४.५.४.[१२]

तान्वै पृष्ठ्ये षडहे गृह्णीयात् । पूर्वे त्र्यह आग्नेयमेव प्रथमेऽहन्नैन्द्रं द्वितीये सौर्यं तृतीय एवमेवान्वहम् - ४.५.४.[१३]

तानु हैक उत्तरे त्र्यहे गृह्णन्ति । तदु तथा न कुर्यात्पूर्व एवैनांस्त्र्यहे गृह्णीयाद्यद्युत्तरे त्र्यहे ग्रहीष्यन्त्स्यात्पूर्व एवैनांस्त्र्यहे गृहीत्वाथोत्तरे त्र्यहे गृह्णीयादेवमेव यथापूर्वं विश्वजिति सर्वपृष्ठ एकाह एव गृह्यन्ते - ४.५.४.[१४]



##४.५.५

एष वै प्रजापतिः । य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते - ४.५.५.[१]

उपांशुपात्रमेवान्वजाः प्रजायन्ते । तद्वै तत्पुनर्यज्ञे प्रयुज्यते तस्मादिमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते - ४.५.५.[२]

अन्तर्यामपात्रमेवान्ववयः प्रजायन्ते । तद्वै तत्पुनर्यज्ञे प्रयुज्यते तस्मादिमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते - ४.५.५.[३]

अथ यदेतयोरुभयोः । सह सतोरुपांशु पूर्वं जुहोति तस्मादु सह सतोऽजाविकस्योभयस्यैवाजाः पूर्वा यन्त्यनूच्योऽवयः - ४.५.५.[४]

अथ यदुपांशुं हुत्वा । ऊर्ध्वमुन्मार्ष्टि तस्मादिमा अजा अराडीतरा आक्रममाणा इव यन्ति - ४.५.५.[५]

अथ यदन्तर्यामं हुत्वा । अवाञ्चमवमार्ष्टि तस्मादिमा अवयोऽवाचीनशीर्ष्ण्यः खनन्त्य इव यन्त्येता वै प्रजापतेः प्रत्यक्षतमां यदजावयस्तस्मादेतास्त्रिः संवत्सरस्य विजायमाना द्वौ त्रीनिति जनयन्ति - ४.५.५.[६]

शुक्रपात्रमेवानु मनुष्याः प्रजायन्ते । तद्वै तत्पुनर्यज्ञे प्रयुज्यते तस्मादिमाः प्रजाः पुनरभ्यावर्तं प्रजायन्त एष वै शुक्रो य एष तपत्येष उ एवेन्द्रः पुरुषो वै पशूनामैन्द्रस्तस्मात्पशूनामीष्टे - ४.५.५.[७]

ऋतुपात्रमेवान्वेकशफं प्रजायते । तद्वै तत्पुनर्यज्ञे प्रयुज्यते तस्मादिमाः प्रजाः पुनरभ्यावर्तं प्रजायन्त इतीव वा ऋतुपात्रमितीवैकशफस्य शिर आग्रयणपात्रमुक्थ्यपात्रमादित्यपात्रमेतान्येवानु गावः प्रजायन्ते तानि वै तानि पुनर्यज्ञे प्रयुज्यन्ते तस्मादिमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते - ४.५.५.[८]



अथ यदजाः । कनिष्ठानि पात्राण्यनु प्रजायन्ते तस्मादेतास्त्रिः संवत्सरस्य विजायमाना द्वौ त्रीनिति जनयन्त्यः कनिष्ठाः कनिष्ठानि हि पात्राण्यनु प्रजायन्ते - ४.५.५.[९]

अथ यद्गावः । भूयिष्ठानि पात्राण्यनु प्रजायन्ते तस्मादेताः सकृत्संवत्सरस्य विजायमाना एकैकं जनयन्त्यो भूयिष्ठा भूयिष्ठानि हि पात्राण्यनु प्रजायन्ते - ४.५.५.[१०]

अथ द्रोणकलशे । अन्ततो हारियोजनं ग्रहं गृह्णाति प्रजापतिर्वै द्रोणकलशः स इमाः प्रजा उपावर्तते ता अवति ता अभिजिघ्रत्येतद्वा एना भवति यदेनाः प्रजनयति - ४.५.५.[११]

पञ्च ह त्वेव तानि पात्राणि । यानीमाः प्रजा अनु प्रजायन्ते समानमुपांश्वन्तर्यामयोः शुक्रपात्रमृतुपात्रमाग्रयणपात्रमुक्थ्यपात्रम्पञ्च वा ऋतवः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञो यद्यु षडेवर्तवः संवत्सरस्येत्यादित्यपात्रमेवैतेषां षष्ठम् - ४.५.५.[१२]

एकं ह त्वेव तत्पात्रम् । यदिमाः प्रजा अनु प्रजायन्त उपांशुपात्रमेव प्राणो ह्युपांशुः प्राणो हि प्रजापतिः प्रजापतिं ह्येवेदं सर्वमनु - ४.५.५.[१३]

##४.५.६ पात्रावकाशमन्त्राः

एष वै प्रजापतिः । य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते स आश्विनं ग्रहं गृहीत्वावकाशानवकाशयति - ४.५.६.[१]

स उपांशुमेव प्रथममवकाशयति । प्राणाय मे वर्चोदा वर्चसे पवस्वेत्यथोपांशुसवनं व्यानाय मे वर्चोदा वर्चसे पवस्वेत्यथान्तर्याममुदानाय मे वर्चोदा वर्चसे पवस्वेत्यथैन्द्रवायवं वाचे मे वर्चोदा वर्चसे पवस्वेत्यथ मैत्रावरुणं क्रतूदक्षाभ्यां मे वर्चोदा वर्चसे पवस्वेत्यथाश्विनं श्रोत्राय मे वर्चोदा वर्चसे पवस्वेत्यथ शुक्रामन्थिनौ चक्षुर्भ्यां मे वर्चोदसौ वर्चसे पवेथामिति - ४.५.६.[२]



अथाग्रयणम् । आत्मने मे वर्चोदा वर्चसे पवस्वेत्यथोक्थ्यमोजसे मे वर्चोदा वर्चसे पवस्वेत्यथ ध्रुवमायुषे मे वर्चोदा वर्चसे पवस्वेत्यथाम्भृणौ विश्वाभ्यो मे प्रजाभ्यो वर्चोदसौ वर्चसे पवेथामिति वैश्वदेवौ वा अम्भृणावतोहि देवेभ्य उन्नयन्त्यतो मनुष्येभ्योऽतः पितृभ्यस्तस्माद्वैश्वदेवावम्भृणौ - ४.५.६.[३]

अथ द्रोणकलशम् । कोऽसि कतमोऽसीति प्रजापतिर्वै कः कस्यासि को नामासीति प्रजापतिर्वै को नाम यस्य ते नामामन्महीति मनुते ह्यस्य नाम यं त्वा सोमेनातीतृपामेति तर्पयति ह्येनं सोमेन स आश्विनं ग्रहं गृहीत्वान्वङ्गमाशिषमाशास्ते सुप्रजाः प्रजाभिः स्यामिति तत्प्रजामाशास्ते सुवीरो वीरैरिति तद्वीरानाशास्ते सुपोषः पोषैरिति तत्पुष्टिमाशास्ते - ४.५.६.[४]

तान्वै न सर्वमिवावकाशयेत् । यो न्वेव ज्ञातमवकाशयेद्यो वास्य प्रियः स्याद्यो वानूचानोऽनूक्तेनैनान्प्राप्नुयात्स आश्विनं ग्रहं गृहीत्वा कृत्स्नं यज्ञं जनयति तं कृत्स्नं यज्ञं जनयित्वा तमात्मन्धत्ते तमात्मन्कुरुते - ४.५.६.[५]

##४.५.७ प्रायश्चित्तम्
ता वा एताः । चतुस्त्रिंशद्व्याहृतयो भवन्ति प्रायश्चित्तयो नामैष वै प्रजापतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते - ४.५.७.[१]

अष्टौ वसवः । एकादश रुद्रा द्वादशादित्या इमे एव द्यावापृथिवी त्रयस्त्रिंश्यौ त्रयस्त्रिंशद्वै देवाः प्रजापतिश्चतुस्त्रिंशस्तदेनं प्रजापतिं करोत्येतद्वा अस्त्येतद्ध्यमृतं यद्ध्यमृतं तद्ध्यस्त्येतदु तद्यन्मर्त्यं स एष प्रजापतिः सर्वं वै प्रजापतिस्तदेनं प्रजापतिं करोति तस्मादेताश्चतुस्त्रिंशद्व्याहृतयो भवन्ति प्रायश्चित्तयो नाम - ४.५.७.[२]



ता हैके । यज्ञतन्व इत्याचक्षते यज्ञस्य ह त्वेवैतानि पर्वाणि स एष यज्ञस्तायमान एता एव देवता भवन्नेति - ४.५.७.[३]

स यदि घर्मदुघा ह्वलेत् । अन्यामुपसंक्रामेयुः स यस्यामेवैनं वेलायां पुरा पिन्वयन्ति तद्धैवैनामुदीचीं स्थापयेदग्रेण वा शालां प्राचीम् - ४.५.७.[४]

तद्ये एते अभितः । पुच्छकाण्डं शिखण्डास्थे अनुच्छयाते तयोर्यद्दक्षिणं तस्मिन्नेताश्चतुस्त्रिंशतमाज्याहुतीर्जुहोत्येतावान्वै सर्वो यज्ञो यावत्य एताश्चतुस्त्रिंशद्व्याहृतयो भवन्ति तदस्यां कृत्स्नमेव सर्वं यज्ञं दधात्येषा ह्यतो घर्मं पिन्वत एषो तत्र प्रायश्चित्तिः क्रियते - ४.५.७.[५]

अथ यद्यज्ञस्य ह्वलेत् । तत्समन्वीक्ष्य जुहुयाद्दीक्षोपसत्स्वाहवनीये प्रसुतआग्नीध्रे वि वा एतद्यज्ञस्य पर्व स्रंसते यद्ध्वलति सा यैव तर्हि तत्र देवता भवति तयैवैतद्भिषज्यति तया संदधाति - ४.५.७.[६]

अथ यदि स्कन्देत् । तदद्भिरुपनिनयेदद्भिर्वा इदं सर्वमाप्तं सर्वस्यैवास्यै वैष्णववारुण्यर्चा यद्वा इदं किं चार्चति वरुण एवेदं सर्वमार्पयति ययोरोजसा स्कभिता रजांसि वीर्येभिर्वीरतमा शविष्ठा या पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूताविति यज्ञो वै विष्णुस्तस्यैतदार्च्छति वरुणो वा आर्पयिता तद्यस्याश्चैवैतद्देवताया आर्च्छति यो च देवतार्पयति ताभ्यामवैतदुभाभ्याम्भिषज्यत्युभाभ्यां संदधाति - ४.५.७.[७]

अथो अभ्येव मृशेत् । देवान्दिवमगन्यज्ञस्ततो मा द्रविणमष्टु मनुष्यानन्तरिक्षमगन्यज्ञस्ततो मा द्रविणमष्टुपितॄन्पृथिवीमगन्यज्ञस्ततो मा द्रविणमष्टु यं कं च लोकमगन्यज्ञस्ततो मे भद्रमभूदित्येवैतदाह - ४.५.७.[८]

तद्ध स्मैतदारुणिराह । किं स यजेत यो यज्ञस्य व्यृद्ध्या पापीयान्मन्येत यज्ञस्य वा अहं व्यृद्ध्या श्रेयान्भवामीत्येतद्ध स्म स तदभ्याह यदेता आशिष उपगच्छति - ४.५.७.[९]]
##४.५.८ गर्गत्रिरात्रमहीनम्
तद्यत्रैतत्त्रिरात्रे सहस्रं ददाति । तदेषा साहस्री क्रियते स प्रथमेऽहंस्त्रीणि च शतानि नयति त्रयस्त्रिंशतं चैवमेव द्वितीयेऽहंस्त्रीणि चैव शतानि नयति त्रयस्त्रिंशतं चैवमेव तृतीयेऽहंस्त्रीणि चैव शतानि नयति त्रयस्त्रिंशतं चाथैषा साहस्यतिरिच्यते - ४.५.८.[१]

सा वै त्रिरूपा स्यादित्याहुः । एतद्ध्यस्यै रूपतमिवेति रोहिणी ह त्वेवोपध्वस्ता स्यादेतद्धैवास्यै रूपतममिव - ४.५.८.[२]

सा स्यादप्रवीता । वाग्वा एषा निदानेन यत्साहस्ययातयाम्नी वाऽइयं वागयातयाम्न्यप्रवीता तस्मादप्रवीता स्यात् - ४.५.८.[३]

तां प्रथमेऽहन्नयेत् । वाग्वा एषा निदानेन यत्साहस्त्री तस्या एतत्सहस्रं वाचः प्रजातं पूर्वा हैषैति पश्चादेनां प्रजातमन्वेत्युत्तमेवैनामहन्नयेत्पूर्वमहास्यै प्रजातमेति पश्चादेषान्वेति सो एषा मीमांसैवोत्तम एवैनामहन्नयेत्पूर्वमहास्यै प्रजातमेति पश्चादेषान्वेति - ४.५.८.[४]

तामुत्तरेण हविर्धाने । दक्षिणेनाग्नीध्रं द्रोणकलशमवघ्रापयति यज्ञो वै द्रोणकलशो यज्ञमेवैनामेतद्दर्शयति - ४.५.८.[५]

आजिघ्र कलशम् । मह्या त्वा विशन्त्विन्दव इति रिरिचान इव वा एष भवति यः सहस्रं ददाति तमेवैतद्रिरिचानं पुनराप्याययति यदाहाजिघ्र कलशं मह्यात्वा विशन्त्विन्दव इति - ४.५.८.[६]

पुनरूर्जा निवर्तस्वेति । तद्वेव रिरिचानं पुनराप्याययति यदाह पुनरूर्जा निवर्तस्वेति - ४.५.८.[७]



सा नः सहस्रं धुक्ष्वेति । तत्सहस्रेण रिरिचानं पुनराप्याययति यदाह सा नः सहस्रं धुक्ष्वेति - ४.५.८.[८]

उरुधारा पयस्वती पुनर्माविशताद्रयिरिति । तद्वेव रिरिचानं पुनराप्याययति यदाह पुनर्माविशताद्रयिरिति - ४.५.८.[९]

अथ दक्षिणे कर्ण आजपति । इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतेऽदिति सरस्वति महि विश्रुति एता ते अघ्न्ये नामानि देवेभ्यो मा सुकृतं ब्रूतादिति वोचेरिति वैतानि ह वा अस्यै देवत्रा नामानि सा यानि ते देवत्रा नामानि तैर्मा देवेभ्यः सुकृतम्ब्रूतादित्येवैतदाह - ४.५.८.[१०]

तामवार्जन्ति । सा यद्यपुरुषाभिवीता प्राचीयात्तत्र विद्यादरात्सीदयं यजमानः कल्याणं लोकमजैषीदिति यद्युदीचीयाञ्छ्रेयानस्मिंलोके यजमानो भविष्यतीति विद्याद्यदि प्रतीचीयादिभ्यतिल्विल इव धान्यतिल्विलो भविष्यतीति विद्याद्यदि दक्षिणेयात्क्षिप्रेऽस्माल्लोकाद्यजमानः प्रैष्यतीति विद्यादेतानि विज्ञानानि - ४.५.८.[११]

तद्या एतास्तिस्रस्तिस्रस्त्रिंशत्यधि भवन्ति । तास्वेतामुपसमाकुर्वन्ति वि वा एतां विराजं वृहन्ति यां व्याकुर्वन्ति विच्छिन्नो एषा विराड्या विवृढा दशाक्षरा वै विराड्वत्कृत्स्नां विराजं संदधाति तां होत्रे दद्याद्धोता हि साहस्रस्तस्मात्तां होत्रे दद्यात् - ४.५.८.[१२]

द्वौ वोन्नेतारौ कुर्वीत । तयोर्यतरो नाश्रावयेत्तस्मा एनां दद्याद्व्यृद्धो वा एष उन्नेता य ऋत्विक्सन्नाश्रावयति व्यृद्धो एषा विराड्या विवृढा तद्व्यृद्ध एवैतद्व्यृद्धं दधाति - ४.५.८.[१३]



तदाहुः । न सहस्रेऽधि किं चन दद्यात्सहस्रेण ह्येव सर्वान् कामानाप्नोतीति तदु होवाचासुरिः काममेव दद्यात्सहस्रेणाह सर्वान् कामानाप्नोति कामेनोअस्येतरद्दत्तं भवतीति - ४.५.८.[१४]

अथ यदि रथं वा युक्तं दास्यन्त्स्यात् । यद्वा वशायै वा वपायां हुतायां दद्यादुदवसानीयायां वेष्टौ - ४.५.८.[१५]

स वै दक्षिणा नयन् । अन्यूना दशतो नयेद्यस्मा एकां दास्यन्त्स्याद्दशभ्यस्तेभ्यो दशतमुपावर्तयेद्यस्मै द्वे दास्यन्त्स्यात्पञ्चभ्यस्तेभ्यो दशतमुपावर्तयेद्यस्मै तिस्रो दास्यन्त्स्यात्त्रिभ्यस्तेभ्यो दशतमुपावर्तयेद्यस्मै पञ्च दास्यन्त्स्याद्द्वाभ्यां ताभ्यां दशतमुपावर्तयेदेवमा शतात्तथो हास्यैषान्यूना विराडमुष्मिंलोके कामदुघा भवति - ४.५.८.[१६]

##४.५.९ व्यूढद्वादशाहः

तद्यत्रैतद्द्वादशाहेन व्यूढच्छन्दसा यजते । तद्ग्रहान्व्यूहति व्यूहत उद्गाता च होता च छन्दांसि स एष प्रज्ञात एव पूर्वस्त्र्यहो भवति समूढच्छन्दास्तदैन्द्रवायवाग्रान्गृह्णाति - ४.५.९.[१]

अथ चतुर्थेऽहन्व्यूहति । ग्रहान्व्यूहन्ति छन्दांसि तदाग्रयणाग्रान् गृह्णाति प्राजापत्यं वा एतच्चतुर्थमहर्भवत्यात्मा वा आग्रयण आत्मा वै प्रजापतिस्तस्मादाग्रयणाग्रान्गृह्णाति - ४.५.९.[२]

तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यत्सादयेत्तं धारयन्त एवोपासतेऽथ ग्रहान् गृह्णात्यथ यदा ग्रहान्गृह्णात्यथ यत्रैवैतस्य कालस्तदेनं हिंकृत्य सादयत्यथैतत्प्रज्ञातमेव पञ्चममहर्भवति तदैन्द्रवायवाग्रान् गृह्णाति - ४.५.९.[३]

अथ षष्ठेऽहन्व्यूहति । ग्रहान्व्यूहन्ति छन्दांसि तच्छुक्राग्रान् गृह्णात्यैन्द्रं वा एतत्षष्ठमहर्भवत्येष वै शुक्रो य एष तपत्येष उ एवेन्द्रस्तस्माच्छुक्राग्रान्गृह्णाति - ४.५.९.[४]



तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यत्सादयेत्तं धारयन्त एवोपासतेऽथ ग्रहान् गृह्णात्यथ यदा ग्रहान्गृह्णात्यथ यत्रैवैतस्य कालस्तदेनं सादयति - ४.५.९.[५]

अथ सप्तमेऽहन्व्यूहति । ग्रहान्व्यूहन्ति छन्दांसि तच्छुक्राग्रान् गृह्णाति बार्हतं वा एतत्सप्तममहर्भवत्येष वै शुक्रो य एष तपत्येष उ एव बृहंस्तस्माच्छुक्राग्रान् गृह्णाति - ४.५.९.[६]

तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यत्सादयेत्तं धारयन्त एवोपासतेऽथ ग्रहान् गृह्णात्यथ यदा ग्रहान्गृह्णात्यथ यत्रैवैतस्य कालस्तदेनंसादयत्यथैतत्प्रज्ञातमेवाष्टममहर्भवति तदैन्द्रवायवाग्रान् गृह्णाति - ४.५.९.[७]

अथ नवमेऽहन्व्यूहति । ग्रहान्व्यूहन्ति छन्दांसि तदाग्रयणाग्रान् गृह्णाति जागतं वा एतन्नवममहर्भवत्यात्मा वा आग्रयणः सर्वं वा इदमात्मा जगत्तस्मादाग्रयणाग्रान् गृह्णाति - ४.५.९.[८]

तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यत्सादयेत्तं धारयन्त एवोपासतेऽथ ग्रहान् गृह्णात्यथ यदा ग्रहान्गृह्णात्यथ यत्रैवैतस्य कालस्तदेनं हिंकृत्य सादयति - ४.५.९.[९]

तदाहुः । न व्यूहेद्ग्रहान्प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यद्व्यूहेत्तस्मान्न व्यूहेत् - ४.५.९.[१०]



तदु व्यूहेदेव । अङ्गानि वै ग्रहाः कामं वा इमान्यङ्गानि व्यत्यासं शेते तस्मादु व्यूहेदेव - ४.५.९.[११]

तदु नैव व्यूहेत् । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यद्व्यूहेत्तस्मान्न व्यूहेत् - ४.५.९.[१२]

किं नु तत्राध्वर्योः । यदुद्गाता च होता च छन्दांसि व्यूहत एतद्वा अध्वर्युर्व्यूहतिग्रहान्यदैन्द्रवायवाग्रान्प्रातःसवने गृह्णाति शुक्राग्रान्माध्यन्दिने सवन आग्रयणाग्रांस्तृतीयसवने - ४.५.९.[१३]

##४.५.१०

यदि सोममपहरेयुः । विधावतेच्छतेति ब्रूयात्स यदि विन्दन्ति किमाद्रियेरन्यद्यु न विन्दन्ति तत्र प्रायश्चित्तिः क्रियते - ४.५.१०.[१]

द्वयानि वै फाल्गुनानि । लोहितपुष्पाणि चारुणपुष्पाणि च स यान्यरुणपुष्पाणि फाल्गुनानि तान्यभिषुणुयादेष वै सोमस्य न्यङ्गो यदरुणपुष्पाणि फाल्गुनानि तस्मादरुणपुष्पाण्यभिषुणुयात् - ४.५.१०.[२]

यद्यरुणपुष्पाणि न विन्देयुः । श्येनहृतमभिषुणुयाद्यत्र वै गायत्री सोममच्छापतत्तस्या आहरन्त्यै सोमस्यांशुरपतत्तच्छ्येनहृतमभवत्तस्माच्छ्येनहृतमभिषुणुयात् - ४.५.१०.[३]

यदि श्येनहृतं न विन्देयुः । आदारानभिषुणुयाद्यत्र वै यज्ञस्य शिरोऽच्छिद्यत्तस्य यो रसो व्यप्रुष्यत्तत आदाराः समभवंस्तस्मादादारानभिषुणुयात् - ४.५.१०.[४]



यद्यादारान्न विन्देयुः । अरुणदूर्वा अभिषुणुयादेष वै सोमस्य न्यङ्गो यदरुणदूर्वास्तस्मादरुणदूर्वा अभिषुणुयात् - ४.५.१०.[५]

यद्यरुणदूर्वा न विन्देयुः । अपि यानेव कांश्च हरितान्कुशानभिषुणुयात्तत्राप्येकामेव गां दद्यादथावभृथादेवोदेत्य पुनर्दीक्षेत पुनर्यज्ञो ह्येव तत्र प्रायश्चित्तिरिति नु सोमापहृतानाम् - ४.५.१०.[६]

अथ कलशदिराम् । यदि कलशो दीर्येतानुलिप्सध्वमिति ब्रूयात्स यद्यनुलभेरन्प्रसृतमात्रं वाञ्जलिमात्रं वा तदन्यैरेकधनैरभ्युन्नीय यथाप्रभावं प्रचरेयुर्यद्यु नानुलभेरन्नाग्रयणस्यैव प्रस्कन्द्यान्यैरेकधनैरभ्युन्नीय यथाप्रभावं प्रचरेयुः स यद्यनीतासु दक्षिणासु कलशो दीर्येत तत्राप्येकामेव गां दद्यादथावभृथादेवोदेत्य पुनर्दीक्षेत पुनर्यज्ञो ह्येव तत्र प्रायश्चित्तिरिति नु कलशदिराम्
- ४.५.१०.[७]

अथ सोमातिरिक्तानाम् । यद्यग्निष्टोममतिरिच्येत पूतभृत एवोक्थ्यं गृह्णीयाद्यद्युक्थ्यमतिरिच्येत षोडशिनमुपेयुर्यदि षोडशिनमतिरिच्येत रात्रिमुपेयुर्यदि रात्रिमतिरिच्येताहरुपेयुर्नेत्त्वेवातीरेकोऽस्ति - ४.५.१०.[८]

##४.६.१ अंशुग्रहः
प्रजापतिर्वा एष यदंशुः । सोऽस्यैष आत्मैवात्मा ह्ययम्प्रजापतिस्तदस्यैतमात्मानं कुर्वन्ति यत्रैतं गृह्णन्ति तस्मिन्नेतान्प्राणान्दधाति यथा यथैते प्राणा ग्रहा व्याख्यायन्ते स ह सर्वतनूरेव यजमानोऽमुष्मिंलोके सम्भवति - ४.६.१.[१]

तदारम्भणवत् । यत्रैतं गृह्णन्त्यथैतदनारम्भणमिव यत्रैतं न गृह्णन्ति तस्माद्वा अंशुं गृह्णाति - ४.६.१.[२]



तं वा औदुम्बरेण पात्रेण गृह्णाति । प्रजापतिर्वा एष प्राजापत्य उदुम्बरस्तस्मादौदुम्बरेण पात्रेण गृह्णाति - ४.६.१.[३]

तं वै चतुःस्रक्तिना पात्रेण गृह्णाति । त्रयो वा इमे लोकास्तदिमानेव लोकांस्तिसृभिराप्नोति प्रजापतिर्वा अतीमांल्लोकांश्चतुर्थस्तत्प्रजापतिमेव चतुर्थ्याप्नोति तस्माच्चतुःस्रक्तिना पात्रेण गृह्णाति - ४.६.१.[४]

स वै तूष्णीमेव ग्रावाणमादत्ते । तूष्णीमंशून्निवपति तूष्णीमप उपसृजति तूष्णीमुद्यत्य सकृदभिषुणोति तूष्णीमेनमनवानन्जुहोति तदेनं प्रजापतिं करोति - ४.६.१.[५]

अथास्यां हिरण्यं बद्धं भवति । तदुपजिघ्रति स यदेवात्र क्षणुते वा वि वा लिशतेऽमृतमायुर्हिरण्यं तदमृतमायुरात्मन्धत्ते - ४.६.१.[६]

तदु होवाच राम औपतस्विनिः । काममेव प्राण्यात्काममुदन्याद्यद्वै तूष्णीं जुहोति तदेवैनं प्रजापतिं करोतीति - ४.६.१.[७]

अथास्यां हिरण्यं बद्धं भवति । तदुपजिघ्रति स यदेवात्र क्षणुते वा वि वा लिशतेऽमृतमायुर्हिरण्यं तदमृतमायुरात्मन्धत्ते - ४.६.१.[८]

तदु होवाच बुडिल आश्वतराश्विः । उद्यत्यैव गृह्णीयान्नाभिषुणुयादभिषुण्वन्ति वा अन्याभ्यो देवताभ्यस्तदन्यथा ततः करोति यथो चान्याभ्यो देवताभ्योऽथ यदुद्यच्छति तदेवास्याभिषुतं भवतीति - ४.६.१.[९]

तदु होवाच याज्ञवल्क्यः । अभ्येव षुणुयान्न सोम इन्द्रमसुतो ममाद नाब्रह्माणो मघवानं सुतास इत्यृषिणाभ्यनूक्तं न वा अन्यस्यै कस्यै चन देवतायै सकृदभिषुणोति तदन्यथा ततः करोति यथो चान्याभ्यो देवताभ्यस्तस्मादभ्येव षुणुयादिति - ४.६.१.[१०]



तस्य द्वादश प्रथमगर्भाः । पष्ठौह्यो दक्षिणा द्वादश वै मासाः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिरंशुस्तदेनं प्रजापतिं करोति - ४.६.१.[११]

तासां द्वादश गर्भाः । ताश्चतुर्विंशतिश्चतुर्विंशतिर्वै संवत्सरस्यार्धमासाः संवत्सरः प्रजापतिः प्रजापतिरंशुस्तदेनं प्रजापतिं करोति - ४.६.१.[१२]

तदु ह कौकूस्तः । चतुर्विंशतिमेवैताः प्रथमगर्भाः पष्ठौहीर्दक्षिणा ददावृषभं पञ्चविंशं हिरण्यमेतदु ह स ददौ - ४.६.१.[१३]

स वा एष न सर्वस्यैव ग्रहीतव्यः । आत्मा ह्यस्यैष यो न्वेव ज्ञातस्तस्य ग्रहीतव्यो यो वास्य प्रियः स्याद्यो वानूचानोऽनूक्तेनैनं प्राप्नुयात् - ४.६.१.[१४]

सहस्त्रे ग्रहीतव्यः । सर्वं वै सहस्त्रं सर्वमेष सर्ववेदसे ग्रहीतव्यः सर्वं वै सर्ववेदसं सर्वमेष विश्वजिति सर्वपृष्ठे ग्रहीतव्यः सर्वं वै विश्वजित्सर्वपृष्ठः सर्वमेष वाजपेये राजसूये ग्रहीतव्यः सर्वं हि तत्सत्त्रे ग्रहीतव्यः सर्वं वै सत्त्रं सर्वमेष एतानि ग्रहणानि - ४.६.१.[१५]

##४.६.२ विषुवदहः
एतं वा एते गच्छन्ति । षड्भिर्मासैर्य एष तपति ये संवत्सरमासते तदुच्यत एव सामतो यथैतस्य रूपं क्रियत उच्यत ऋक्तोऽथैतदेव यजुष्टः पुरश्चरणतो यदेतं गृह्णन्त्येतेनो एवैनं गच्छन्ति - ४.६.२.[१]

अथातो गृह्णात्येव । उदु त्यं जातवेदसं देवं वहन्ति केतवः दृशे विश्वाय सूर्यम् उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजायेति - ४.६.२.[२]



##४.६.३
अथातः पश्वयनस्यैव । पश्वेकादशिन्यैवेयात्स आग्नेयं प्रथमम्पशुमालभतेऽथ वारुणमथ पुनराग्नेयमेवमेवैतया पश्वेकादशिन्येयात् - ४.६.३.[१]

अथो अप्यैन्द्राग्नमेवाहरहः पशुमालभेत । अग्निर्वै सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वतीन्द्रो वै यज्ञस्य देवता तत्सर्वाश्चैवैतद्देवतानापराध्नोति यो च यज्ञस्य देवता तां नापराध्नोति - ४.६.३.[२]

अथात स्तोमायनस्यैव । आग्नेयमग्निष्टोम आलभेत तद्धि सलोम यदाग्नेयमग्निष्टोम आलभेत यद्युक्थ्यः स्यादैन्द्राग्नं द्वितीयमालभेतैन्द्राग्नानि ह्युक्थानि यदि षोडशी स्यादैन्द्रं तृतीयमालभेतेन्द्रो हि षोडशी यद्यतिरात्रः स्यात्सारस्वतं चतुर्थमालभेत वाग्वै सरस्वती योषा वै वाग्योषा रात्रिस्तद्यथायथं यज्ञक्रतून्व्यावर्तयत्येतानि त्रीण्ययनानि तेषां यतमत्कामयेत तेनेयाद्वा उपालम्भ्यौ पशू सौर्यं द्वितीयं पशुमालभते वैषुवतेऽहन्प्राजापत्यं महाव्रते - ४.६.३.[३]

##४.६.४
अथातो महाव्रतीयस्यैव । प्रजापतेर्ह वै प्रजाः ससृजानस्य पर्वाणि विसस्रंसुः स विस्रस्तैः पर्वभिर्न शशाक संहातुं ततो देवा अर्चन्तः श्राम्यन्तश्चेरुस्त एतम्महाव्रतीयं ददृशुस्तमस्मा अगृह्णस्तेनास्य पर्वाणि समदधुः - ४.६.४.[१]

स संहितैः पर्वभिः । इदमन्नाद्यमभ्युत्तस्थौ यदिदं प्रजापतेरन्नाद्यं यद्वै मनुष्याणामशनं तद्देवानां व्रतं महद्वा इदं व्रतमभूद्येनायं समहास्तेति तस्मान्महाव्रतीयो नाम - ४.६.४.[२]

एवं वा एते भवन्ति । ये संवत्सरमासते यथैव तत्प्रजापतिः प्रजाः ससृजान आसीत्स यथैव तत्प्रजापतिः संवत्सरेऽन्नाद्यमभ्युदतिष्ठदेवमेवैत एतत्संवत्सरेऽन्नाद्यमभ्युत्तिष्ठन्ति येषामेवं विदुषामेतं ग्रहं गृह्णन्ति - ४.६.४.[३]

तं वा इन्द्रायैव विमृधे गृह्णीयात् । सर्वा वै तेषां मृधो हता भवन्ति सर्वंजितं ये संवत्सरमासते तस्माद्विमृधे वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः । यो अस्मानभिदासत्यधरं गमया तमः । उपयामगृहीतोऽसीन्द्राय त्वा विमृध एष ते योनिरिन्द्राय त्वा विमृध इति - ४.६.४.[४]

अथो विश्वकर्मणे । विश्वं वै तेषां कर्म कृतं सर्वं जितं भवति ये संवत्सरमासते तस्माद्विश्वकर्मणे वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम । स नो विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्मा उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्मण एष ते योनिरिन्द्राय त्वा विश्वकर्मण इति - ४.६.४.[५]

यद्यु ऐन्द्रीं वैश्वकर्मणीं विद्यात् । तथैव गृह्णीयाद्विश्वकर्मन्हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम् । तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् । उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्मण एष ते योनिरिन्द्राय त्वा विश्वकर्मण इति
- ४.६.४.[६]

##४.६.५ ग्रहोपासनाब्राह्मणम्
एष वै ग्रहः । य एष तपति येनेमाः सर्वाः प्रजा गृहीतास्तस्मादाहुर्ग्रहान्गृह्णीम इति चरन्ति ग्रहगृहीताः सन्त इति - ४.६.५.[१]

४.६.५.[२]
वागेव ग्रहः । वाचा हीदं सर्वं गृहीतं किमु तद्यद्वाग्ग्रहः - ४.६.५.[२]

नामैव ग्रहः । नाम्ना हीदं सर्वं गृहीतं किमु तद्यन्नाम ग्रहो बहूनां वै नामानि विद्माथ नस्तेन ते न गृहीता भवन्ति - ४.६.५.[३]

अन्नमेव ग्रहः । अन्नेन हीदं सर्वं गृहीतं तस्माद्यावन्तो नोऽशनमश्नन्ति ते नः सर्वे गृहीता भवन्त्येषैव स्थितिः - ४.६.५.[४]



स य एष सोमग्रहः । अन्नं वा एष स यस्यै देवताया एतं ग्रहं गृह्णाति सास्मै देवतैतेन ग्रहेण गृहीता तं कामं समर्धयति यत्काम्या गृह्णाति स उद्यन्तं वादित्यमुपतिष्ठतेऽस्तं यन्तं वा ग्रहोऽस्यमुमनयार्त्या गृहाणासावदो मा प्रापदिति यं द्विष्यादसावस्मै कामो मा समर्धीति वा न हैवास्मै स कामः समृध्यते यस्मा एवमुपतिष्ठते - ४.६.५.[५]

##४.६.६ यज्ञोपचारः
देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसङ्गाद्बिभयां चक्रुस्ते होचुः को नो दक्षिणत आसिष्यतेऽथाभयेऽनाष्ट्र उत्तरतो यज्ञमुपचरिष्याम इति - ४.६.६.[१]

ते होचुः । य एव नो वीर्यवत्तमः स दक्षिणत आस्तामथाभयेऽनाष्ट्र उत्तरतो यज्ञमुपचरिष्याम इति - ४.६.६.[२]

ते होचुः । इन्द्रो वै नो वीर्यवत्तम इन्द्रो दक्षिणत आस्तामथाभयेऽनाष्ट्र उत्तरतो यज्ञमुपचरिष्याम इति - ४.६.६.[३]

ते हेन्द्रमूचुः । त्वं वै नो वीर्यवत्तमोऽसि त्वं दक्षिणत आस्वाथाभयेऽनाष्ट्र ऽउत्तरतो यज्ञमुपचरिष्याम इति - ४.६.६.[४]

स होवाच । किं मे ततः स्यादिति ब्राह्मणाच्छंस्या ते ब्रह्मसाम त इति तस्माद्ब्राह्मणाच्छंसिनं प्रवृणीत इन्द्रो ब्रह्मा ब्राह्मणादितीन्द्रस्य ह्येषा स इन्द्रो दक्षिणत आस्ताथाभयेऽनाष्ट्र उत्तरतो यज्ञमुपाचरंस्तस्माद्य एव वीर्यवत्तमः स्यात्स दक्षिणत आसीताथाभयेऽनाष्ट्र उत्तरतो यज्ञमुपचरेयुर्यो वै ब्राह्मणानामनूचानतमः स एषां वीर्यवत्तमोऽथ यदिदं य एव कश्च ब्रह्मा भवति कुवित्तूष्णीमास्त इति तस्माद्य एव वीर्यवत्तमः स्यात्स दक्षिणत आसीताथाभयेऽनाष्ट्र उत्तरतो यज्ञमुपचरेयुस्तस्माद्ब्राह्मणा दक्षिणत आसतेऽथाभयेऽनाष्ट्र उत्तरतो यज्ञमुपचरन्ति - ४.६.६.[५]



स यत्राह । ब्रह्मन्त्स्तोष्यामः प्रशास्तरिति तद्ब्रह्मा जपत्येतं ते देवसवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे तेन यज्ञमव तेन यज्ञपतिं तेन मामव स्तुत सवितुः प्रसव इति सोऽसावेव बन्धुरेतेन न्वेव भूयिष्ठा इवोपचरन्ति - ४.६.६.[६]

अनेन त्वेवोपचरेत् । देव सवितरेतद्बृहस्पते प्रेति तत्सवितारं प्रसवायोपधावति स हि देवानां प्रसविता बृहस्पते प्रेति बृहस्पतिर्वै देवानां ब्रह्मा तद्य एव देवानां ब्रह्मा तस्मा एवैतत्प्राह तस्मादाह बृहस्पते प्रेति - ४.६.६.[७]

अथ मैत्रावरुणो जपति । प्रसूतं देवेन सवित्रा जुष्टं मित्रावरुणाभ्यामिति तत्सवितारं प्रसवायोपधावति स हि देवानां प्रसविता जुष्टम्मित्रावरुणाभ्यामिति मित्रावरुणौ वै मैत्रावरुणस्य देवते तद्ये एव मैत्रावरुणस्य देवते ताभ्यामेवैतत्प्राह तस्मादाह जुष्टं मित्रावरुणाभ्यामिति - ४.६.६.[८]

##४.६.७ पुरश्चरणोपनिषत्

त्रयी वै विद्या । ऋचो यजूंषि सामानीयमेवऽर्चोऽस्यां ह्यर्चति योऽर्चति स वागेवऽर्चो वाचा ह्यर्चति योऽर्चति सोऽन्तरिक्षमेव यजूंषि द्यौः सामानि सैषा त्रयी विद्या सौम्येऽध्वरे प्रयुज्यते - ४.६.७.[१]

इममेव लोकमृचा जयति । अन्तरिक्षं यजुषा दिवमेव साम्ना तस्माद्यस्यैकाविद्यानूक्ता स्यादन्वेवापीतरयोर्निर्मितं विवक्षेतेममेव लोकमृचा जयत्यन्तरिक्षं यजुषा दिवमेव साम्ना - ४.६.७.[२]

तद्वा एतत् । सहस्रं वाचः प्रजातं द्वे इन्द्रस्तृतीये तृतीयं विष्णुर्ऋचश्च सामानि चेन्द्रो यजूंषि विष्णुस्तस्मात्सदस्यृक्सामाभ्यां कुर्वन्त्यैन्द्रं हि सदः - ४.६.७.[३]

अथैतं विष्णुं यज्ञम् । एतैर्यजुर्भिः पुर इवैव बिभ्रति तस्मात्पुरश्चरणं नाम - ४.६.७.[४]



वागेवऽर्चश्च सामानि च । मन एव यजूंषि सा यत्रेयं वागासीत्सर्वमेव तत्राक्रियत सर्वं प्राज्ञायताथ यत्र मन आसीन्नैव तत्र किं चनाक्रियत न प्राज्ञायत नो हि मनसा ध्यायतः कश्चनाजानाति - ४.६.७.[५]

ते देवा वाचमब्रुवन् । प्राची प्रेहीदं प्रज्ञपयेति सा होवाच किं मे ततः स्यादिति यत्किं चावषट्कृतं स्वाहाकारेण यज्ञे हूयते तत्त इति तस्माद्यत्किं चावषट्कृतं स्वाहाकारेण यज्ञे हूयते तद्वाचः सा प्राची प्रैत्सैतत्प्राज्ञपयदितीदं कुरुतेतीदं कुरुतेति - ४.६.७.[६]

तस्मादु कुर्वन्त्येवऽर्चा हविर्धाने । प्रातरनुवाकमन्वाह सामिधेनीरन्वाह ग्राव्णोऽभिष्टौत्येवं हि सयुजावभवताम् - ४.६.७.[७]

तस्मादु कुर्वन्त्येव सदसि । यजुषौदुम्बरीमुच्छ्रयन्ति सदः संमिन्वन्ति धिष्ण्यानुपकिरन्त्येवं हि सयुजावभवताम् - ४.६.७.[८]

तद्वा एतत्सदः परिश्रयन्ति । एतस्मै मिथुनाय तिर इवेदं मिथुनं चर्याता इति व्यृद्धं वा एतन्मिथुनं यदन्यः पश्यति तस्माद्यद्यपि जायापती मिथुनं चरन्तौ पश्यन्ति व्येव द्रवत आग एव कुर्वाते तस्माददद्वारेण सदः प्रेक्षमाणं ब्रूयान्मा प्रेक्षथा इति यथा ह मिथुनं चर्यमाणं पश्येदेवं तत्कामं द्वारेण देवकृतं हि द्वारम् - ४.६.७.[९]

एवमेवैतद्धविर्धानं परिश्रयन्ति । एतस्मै मिथुनाय तिर इवेदं मिथुनं चर्याता इति व्यृद्धं वा एतन्मिथुनं यदन्यः पश्यति तस्माद्यद्यपि जायापती मिथुनं चरन्तौ पश्यन्ति व्येव द्रवत आग एव कुर्वाते तस्माददद्वारेण हविर्धानं प्रेक्षमाणं ब्रूयान्मा प्रेक्षथा इति यथा ह मिथुनं चर्यमाणम्पश्येदेवं तत्कामं द्वारेण देवकृतं हि द्वारम् - ४.६.७.[१०]



तद्वा एतद्वृषा साम । योषामृचं सदस्यध्येति तस्मान्मिथुनादिन्द्रो जातस्तेजसो वै तत्तेजो जातं यदृचश्च साम्नश्चेन्द्रऽ इन्द्र इति ह्येतमाचक्षते य एष तपति - ४.६.७.[११]

अथैतद्वृषा सोमः । योषा अपो हविर्धानेऽध्येति तस्मान्मिथुनाच्चन्द्रमा जातोऽन्नाद्वै तदन्नं जातं यदद्भ्यश्च सोमाच्च चन्द्रमाश्चन्द्रमा ह्येतस्यान्नं य एष तपति तद्यजमानं चैवैतज्जनयत्यन्नाद्यं चास्मै जनयत्यृचश्च साम्नश्च यजमानं जनयत्यद्भ्यश्च सोमाच्चास्मा अन्नाद्यम् - ४.६.७.[१२]

यजुषा ह वै देवाः । अग्रे यज्ञं तेनिरेऽथर्चाथ साम्ना तदिदमप्येतर्हि यजुषैवाग्रे यज्ञं तन्वतेऽथर्चाथ साम्ना यजो ह वै नामैतद्यद्यजुरिति - ४.६.७.[१३]

यत्र वै देवाः । इमा विद्याः कामान्दुदुह्रे तद्ध यजुर्विद्यैव भूयिष्ठान्कामान्दुदुहे सा निर्धीततमेवास सा नेतरे विद्ये प्रत्यास नान्तरिक्षलोक इतरौ लोकौ प्रत्यास - ४.६.७.[१४]

ते देवा अकामयन्त । कथं न्वियं विद्येतरे विद्ये प्रतिस्यात्कथमन्तरिक्षलोक इतरौ लोकौ प्रतिस्यादिति - ४.६.७.[१५]

ते होचुः । उपांश्वेव यजुर्भिश्चराम तत एषा विद्येतरे विद्ये प्रतिभविष्यति ततोऽन्तरिक्षलोक इतरौ लोकौ प्रतिभविष्यतीति - ४.६.७.[१६]

तैरुपांश्वचरन् । आप्याययन्नेवैनानि तत्तत एषा विद्येतरे विद्ये प्रत्यासीत्ततोऽन्तरिक्षलोक इतरौ लोकौ प्रत्यासीत्तस्माद्यजूंषि निरुक्तानि सन्त्यनिरुक्तानि तस्मादयमन्तरिक्षलोको निरुक्तः सन्ननिरुक्तः - ४.६.७.[१७]

स य उपांशु यजुर्भिश्चरति । आप्याययत्येवैनानि स तान्येनमापीनान्याप्याययन्त्यथ य उच्चैश्चरति रूक्षयत्येवैनानि स तान्येनं रूक्षाणि रुक्षयन्ति - ४.६.७.[१८]



वागेवऽर्चश्च सामानि च । मन एव यजूंषि स य ऋचा च साम्ना च चरन्ति वाक्ते भवन्त्यथ ये यजुषा चरन्ति मनस्ते भवन्तितस्मान्नानभिप्रेषितमध्वर्युणा किं चन क्रियते यदैवाध्वर्युराहानुब्रूहि यजेत्यथैव ते कुर्वन्ति य ऋचा कुर्वन्ति यदैवाध्वर्युराह सोमः पवत उपावर्तध्वमित्यथैव ते कुर्वन्ति ये साम्ना कुर्वन्ति नो ह्यनभिगतं मनसा वाग्वदति - ४.६.७.[१९]

तद्वा एतन्मनोऽध्वर्युः । पुर इवैव चरति तस्मात्पुरश्चरणं नाम पुर इव ह वै श्रिया यशसा भवति य एवमेतद्वेद - ४.६.७.[२०]

तद्वा एतदेव पुरश्चरणम् । य एष तपति स एतस्यैवावृता चरेद्ग्रहं गृहीत्वैतस्यैवावृतमन्वावर्तेत प्रतिगीर्यैतस्यैवावृतमन्वावर्तेत ग्रहं हुत्वैतस्यैवावृतमन्वावर्तेत स हैष भर्ता स यो हैवं विद्वानेतस्यावृता शक्नोति चरितुं शक्नोति हैव भार्यान्भर्तुम् - ४.६.७.[२१]

##४.६.८ सत्रोत्थानम्
या वै दीक्षा सा निषत् । तत्सत्त्रं तस्मादेनानासत इत्याहुरथ यत्ततो यज्ञं तन्वते तद्यन्ति तन्नयति यो नेता भवति स तस्मादेनान्यन्तीत्याहुः - ४.६.८.[१]

या ह दीक्षा सा निषत् । तत्सत्त्रं तदयनं तत्सत्त्रायणमथ यत्ततो यज्ञस्योदृचं गत्वोत्तिष्ठन्ति तदुत्थानं तस्मादेनानुदस्थुरित्याहुरिति नु पुरस्ताद्वदनम् - ४.६.८.[२]

अथ दीक्षिष्यमाणाः समवस्यन्ति । ते यद्यग्निं चेष्यमाणा भवन्त्यरणिष्वेवाग्नीन्त्समारोह्योपसमायन्ति यत्र प्राजापत्येन पशुना यक्ष्यमाणा भवन्ति मथित्वोपसमाधायोद्धृत्याहवनीयं यजन्त एतेन प्राजापत्येन पशुना - ४.६.८.[३]

तस्य शिरो निदधति । तेषां यदि तदहर्दीक्षा न समैत्यरणिष्वेवाग्नीन्त्समारोह्य यथायथं विपरेत्य जुह्वति - ४.६.८.[४]



अथ यदहरेषां दीक्षा समैति । अरणिष्वेवाग्नीन्त्समारोह्योपसमायन्ति यत्र दीक्षिष्यमाणा भवन्ति गृहपतिरेव प्रथमो मन्थते मध्यं प्रति शालाया अथेतरेषामर्धा दक्षिणत उपविशन्त्यर्धा उत्तरतो मथित्वोपसमाधायैकैकमेवोल्मुकमादायोपसमायन्ति गृहपतेर्गार्हपत्यं गृहपतेरेव गार्हपत्यादुद्धृत्याहवनीयं दीक्षन्ते तेषां समान आहवनीयो भवति नाना गार्हपत्या दीक्षोपसत्सु - ४.६.८.[५]

अथ यदहरेषां क्रयो भवति । तदहर्गार्हपत्यां चितिमुपदधात्यथेतरेभ्य उपवसथे धिष्ण्यान्वैसर्जिनानां काले प्राच्यः पत्न्य उपसमायन्ति प्रजहत्येतानपरानग्नीन्हुत एव वैसर्जिने - ४.६.८.[६]

राजानं प्रणयति । उद्यत एवैष आग्नीध्रीयोऽग्निर्भवत्यथैत एकैकमेवोल्मुकमादाय यथाधिष्ण्यं विपरायन्ति तैरेव तेषामुल्मुकैः प्रघ्नन्तीति स स्माह याज्ञवल्क्यो ये तथा कुर्वन्तीत्येतन्न्वेकमयनम् - ४.६.८.[७]

अथेदं द्वितीयम् । अरणिष्वेवाग्नीन्त्समारोह्योपसमायन्ति यत्र प्राजापत्येन पशुना यक्ष्यमाणा भवन्ति मथित्वोपसमाधायोद्धृत्याहवनीयं यजन्त एतेन प्राजापत्येन पशुना - ४.६.८.[८]

तस्य शिरो निदधति । तेषां यदि तदहर्दीक्षा न समैत्यरणिष्वेवाग्नीन्त्समारोह्य यथायथं विपरेत्य जुह्वति - ४.६.८.[९]

अथ यदहरेषां दीक्षा समैति । अरणिष्वेवाग्नीन्त्समारोह्योपसमायन्ति यत्र दीक्षिष्यमाणा भवन्ति गृहपतिरेव प्रथमो मन्थतेऽथेतरे पर्युपविश्य मन्थन्ते ते जातं जातमेवानुप्रहरन्ति गृहपतेर्गार्हपत्ये गृहपतेरेव गार्हपत्यादुद्धृत्याहवनीयं दीक्षन्ते तेषां समान आहवनीयो भवति समानो गार्हपत्यो दीक्षोपसत्सु - ४.६.८.[१०]



अथ यदहरेषां क्रयो भवति । तदहर्गार्हपत्यां चितिमुपदधात्यथेतरेभ्य उपवसथे धिष्ण्यान्वैसर्जिनानां काले प्राच्यः पत्न्य उपसमायन्ति प्रजहत्येतमपरमग्निं हुत एव वैसर्जिने - ४.६.८.[११]

राजानं प्रणयति । उद्यत एवैष आग्नीध्रीयोऽग्निर्भवत्यथैतऽ एकैकमेवोल्मुकमादाय यथाधिष्ण्यं विपरायन्ति समदमु हैव ते कुर्वन्ति समद्धैनान्विन्दत्यर्तुका ह भवन्त्यपि ह तमर्धं समद्विन्दति यस्मिन्नर्धे यजन्ते ये तथा कुर्वन्ति एतद्द्वितीयमयनम् - ४.६.८.[१२]

अथेदं तृतीयम् । गृहपतेरेवारण्योः संवदन्ते य इतोऽग्निर्जनिष्यते स नः सह यदनेन यज्ञेन जेष्यामोऽनेन पशुबन्धेन तन्नः सह सह नः साधुकृत्या य एव पापं करवत्तस्यैव तदित्येवमुक्त्वा गृहपतिरेव प्रथमः समारोहयतेऽथेतरेभ्यः समारोहयति स्वयं वैव समारोहयन्ते त आयन्ति यत्र प्राजापत्येन पशुना यक्ष्यमाणा भवन्ति मथित्वोपसमाधायोद्धृत्याहवनीयं यजन्त एतेन प्राजापत्येन पशुना - ४.६.८.[१३]

तस्य शिरो निदधति । तेषां यदि तदहर्दीक्षा न समैत्यरणिष्वेवाग्नीन्त्समारोह्य यथायथं विपरेत्य जुह्वति - ४.६.८.[१४]

अथ यदहरेषां दीक्षा समैति । गृहपतेरेवारण्योः संवदन्ते य इतोऽग्निर्जनिष्यते स नः सह यदनेन यज्ञेन जेष्यामोऽनेन सत्त्रेण तन्नः सह सह नः साधुकृत्या य एव पापं करवत्तस्यैव तदित्येवमुक्त्वा गृहपतिरेव प्रथमः समारोहयतेऽथेतरेभ्यः समारोहयति स्वयं वैव समारोहयन्ते त आयन्ति यत्र दीक्षिष्यमाणा भवन्ति मथित्वोपसमाधायोद्धृत्याहवनीयं दीक्षन्ते तेषां समान आहवनीयो भवति समानो गार्हपत्यो दीक्षोपसत्सु - ४.६.८.[१५]

अथ यदहरेषां क्रयो भवति । तदहर्गार्हपत्यां चितिमुपदधात्यथेतरेभ्य उपवसथे धिष्ण्यान्वैसर्जिनानां काले प्राच्यः पत्न्य उपसमायन्ति प्रजहत्येतमपरमग्निं हुत एव वैसर्जिने - ४.६.८.[१६]



राजानं प्रणयति । उद्यत एवैष आग्नीध्रीयोऽग्निर्भवत्यथैतऽएकैकमेवोल्मुकमादाय यथाधिष्ण्यं विपरायन्ति तत्तत्कृतं नानाकृतं यन्नानाधिष्ण्या भवन्ति वरीयानाकाशोऽसत्परिचरणायेत्यथ यन्नानापुरोडाशा भूयो हविरुच्छिष्टमसत्समाप्त्या ऽइति - ४.६.८.[१७]

अथ येन सत्त्रेण देवाः । क्षिप्र एव पाप्मानमपाघ्नतेमां जितिमजयन्यैषामियं जितिस्तदत उद्यत एकगृहपतिका वै देवा एकपुरोडाशा एकधिष्ण्याः क्षिप्र एव पाप्मानमपाघ्नत क्षिप्रे प्राजायन्त तथो एवैतऽएकगृहपतिका एकपुरोडाशा एकधिष्ण्याः क्षिप्रऽएव पाप्मानमपघ्नते क्षिप्रे प्रजायन्ते - ४.६.८.[१८]

अथादः पूर्वस्मिन्नुदीचीनवंशा शाला भवति । तन्मानुषं समान आहवनीयो भवति नाना गार्हपत्यास्तद्विकृष्टं गृहपतेरेव गार्हपत्ये जाघन्या पत्नीः संयाजयन्त्याज्येनेतरे प्रतियजन्त आसते तद्विकृष्टम् - ४.६.८.[१९]

अथात्र प्राचीनवंशा शाला भवति । तद्देवत्रा समान आहवनीयो भवति समानो गार्हपत्यः समान आग्नीध्रीयस्तदेतत्सत्त्रं समृद्धं यथैकाहः समृद्धऽ एवं तस्य न ह्वलास्ति तस्यैषैव समान्यावृद्यदन्यद्धिष्ण्येभ्यः - ४.६.८.[२०]

##४.६.९
देवा ह वै सत्त्रमासत । श्रियं गच्छेम यशः स्यामान्नादाः स्यामेति तेभ्य एतदन्नाद्यमभिजितमपाचिक्रमिषत्पशवो वा अन्नं पशवो हैवैभ्यस्तदपाचिक्रमिषन्यद्वै न इमे श्रान्ता न हिंस्युः कथमिव स्विन्नः सक्ष्यन्त इति - ४.६.९.[१]

त एते गार्हपत्ये द्वे आहुती अजुहवुः । गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तदेनान्गृहेष्वेव न्ययच्छंस्तथैभ्य एतदन्नाद्यमभिजितं नापाक्रामत् - ४.६.९.[२]

तथो एवेमे सत्त्रमासते । ये सत्त्रमासते श्रियं गच्छेम यशः स्यामान्नादाः स्यामेति तेभ्य एतदन्नाद्यमभिजितमपचिक्रमिषति पशवो वा अन्नं पशवो हैवैभ्यस्तदपचिक्रमिषन्ति यद्वै न इमे श्रान्ता न हिंस्युः कथमिव स्विन्नः सक्ष्यन्त इति - ४.६.९.[३]

त एते गार्हपत्ये द्वे आहुती जुह्वति गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तदेनान्गृहेष्वेव नियच्छन्ति तथैभ्य एतदन्नाद्यमभिजितं नापक्रामति - ४.६.९.[४]

तथो एवैतस्मात् । एतदन्नाद्यमुपाहृतमपचिक्रमिषति यद्वै माऽयं न हिंस्यात्कथमिव स्विन्मा सक्ष्यत इति - ४.६.९.[५]

तस्य परस्तादेवाग्रेऽल्पश इव प्राश्नाति । तदेनदुपनिमदति तद्वेद न वै तथाऽभूद्यथाऽमंसि न वै माऽहिंसीदिति तदेनमुपावश्रयते स ह प्रिय एवान्नस्यान्नादो भवति य एवं विद्वानेतस्य व्रतं शक्नोति चरितुम् - ४.६.९.[६]

तद्वा एतत् । दशमेऽहन्त्सत्त्रोत्थानं क्रियते तेषामेकैक एव वाचंयम आस्ते वाचमाप्याययंस्तयाऽऽपीनयाऽयातयाम्न्योत्तरमहस्तन्वतेऽथेतरे विसृज्यन्ते समिद्धारा वा स्वाध्यायं वा तत्राप्यश्नन्ति - ४.६.९.[७]

तेऽपराह्ण उपसमेत्य । अप उपस्पृश्य पत्नीशालं सम्प्रपद्यन्ते तेषु समन्वारब्धेष्वेते आहुती जुहोतीह रतिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वाहेति पशूनेवैतदाह पशूनेवैतदात्मन्नियच्छन्ते - ४.६.९.[८]

अथ द्वितीयां जुहोति । उपसृजन्धरुणं मात्र इत्यग्निमेवैतत्पृथिव्या उपसृजन्नाह धरुणो मातरं धयन्नित्यग्निमेवैतत्पृथिवीं धयन्तमाह रायस्पोषमस्मासु दीधरत्स्वाहेति पशवो वै रायस्पोषः पशूनेवैतदात्मन्नियच्छन्ते - ४.६.९.[९]

ते प्राञ्च उपनिष्क्रामन्ति । ते पश्चात्प्राञ्चो हविर्धाने सम्प्रपद्यन्ते पुरस्ताद्वै प्रत्यञ्चस्तंस्यमाना अथैवं सत्रोत्थाने - ४.६.९.[१०]



त उत्तरस्य हविर्धानस्य । जघन्यायां कूबर्यां सामाभिगायन्ति सत्त्रस्य ऋद्धिरिति राद्धिमेवैतदभ्युत्तिष्ठन्त्युत्तरवेदेर्वोत्तरायां श्रोणावितरं तु कृततरम् - ४.६.९.[११]

यदुत्तरस्य हविर्धानस्य । जघन्यायां कूबर्यामगन्म ज्योतिरमृता अभूमेति ज्योतिर्वा एते भवन्त्यमृता भवन्ति ये सत्त्रमासते दिवं पृथिव्या अध्यारुहामेति दिवं वा एते पृथिव्या अध्यारोहन्ति ये सत्त्रमासतेऽविदाम देवानिति विन्दन्ति हि देवान्त्स्वर्ज्योतिरिति त्रिर्निधनमुपावयन्ति स्वर्ह्येते ज्योतिर्ह्येते भवन्ति तद्यदेवैतस्य साम्नो रूपं तदेवैते भवन्ति ये सत्त्रमासते - ४.६.९.[१२]

ते दक्षिणस्य हविर्धानस्य । अधोऽधोऽक्षं सर्पन्ति स यथाहिस्त्वचोनिर्मुच्येतैवं सर्वस्मात्पाप्मनो निर्मुच्यन्तेऽतिच्छन्दसा सर्पन्त्येषा वै सर्वाणि छन्दांसि यदतिच्छन्दास्तथैनान्पाप्मा नान्वत्येति तस्मादतिच्छन्दसा सर्पन्ति - ४.६.९.[१३]

ते सर्पन्ति । युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तं तमिद्धतं वज्रेण तं तमिद्धतम् । दूरे चत्ताय च्छन्त्सद्गहने यदिनक्षत् । अस्माकं शत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट विश्वत इति - ४.६.९.[१४]

ते प्राञ्च उपनिष्क्रामन्ति । ते पुरस्तात्प्रत्यञ्चः सदः सम्प्रपद्यन्ते पश्चाद्वै प्राञ्चस्तंस्यमाना अथैवं सत्रोत्थाने - ४.६.९.[१५]

ते यथाधिष्ण्यमेवोपविशन्ति । देवेभ्यो ह वै वाचो रसोऽभिजितोऽपचिक्रमिषांचकार स इमामेव पराङत्यसिसृप्सदियं वै वाक्तस्या एष रसो यदोषधयो यद्वनस्पतयस्तमेतेन साम्नाऽऽप्नुवन्त्स एनानाप्तोऽभ्यावर्तत तस्मादस्यामूर्ध्वा ओषधयो जायन्त ऊर्ध्वा वनस्पतयस्तथो एवैतेभ्य एतद्वाचो रसोऽभिजितोऽपचिक्रमिषति स इमामेव पराङतिसिसृप्सतीयं वै वाक्तस्या एष रसो यदोषधयो यद्वनस्पतयस्तमेतेन साम्नाऽऽप्नुवन्ति स एनानाप्तोऽभ्यावर्तते तस्मादस्यामूर्ध्वा ओषधयो जायन्त ऊर्ध्वा वनस्पतयः - ४.६.९.[१६]



सर्पराज्ञ्या ऋक्षु स्तुवते । इयं वै पृथिवी सर्पराज्ञी तदनयैवैतत्सर्वमाप्नुवन्ति स्वयम्प्रस्तुतमनुपगीतं यथा नान्य उपश्रृणुयादति ह रेचयेद्यदन्यः प्रस्तुयादतिरेचयेद्यदन्य उपगायेदतिरेचयेद्यदन्य उपश्रृणुयात्तस्मात्स्वयम्प्रस्तुतमनुपगीतम् - ४.६.९.[१७]

चतुर्होतॄन्होता व्याचष्टे । एतदेवैतत्स्तुतमनुशंसति यदि होता न विद्याद्गृहपतिर्व्याचक्षीत होतुस्त्वेव व्याख्यानम् - ४.६.९.[१८]

अथाध्वर्योः प्रतिगरः । अरात्सुरिमे यजमाना भद्रमेभ्योऽभूदिति कल्याणमेवैतन्मानुष्यै वाचो वदति - ४.६.९.[१९]

अथ वाकोवाक्ये ब्रह्मोद्यं वदन्ति । सर्वं वै तेषामाप्तं भवति सर्वं जितं ये सत्त्रमासतेऽचारिषुर्यजुर्भिस्तत्तान्यापंस्तदवारुत्सताशंसिषुर्ऋचस्तत्ताऽआपस्तदवारुत्सता स्तोषत सामभिस्तत्तान्यापंस्तदवारुत्सताथैषामेतदेवानाप्तमनवरुद्धं भवति यद्वाकोवाक्यं ब्राह्मणं तदेवैतेनाप्नुवन्ति तदवरुन्धते - ४.६.९.[२०]

औदुम्बरीमुपसंसृप्य वाचं यच्छन्ति । विदुहन्ति वा एते यज्ञं निर्धयन्ति ये वाचा यज्ञं तन्वते वाग्घि यज्ञस्तामेषां पुरैकैक एव वाचंयम आस्ते वाचमाप्याययंस्तयाऽऽपीनयाऽयातयाम्न्योत्तरमहस्तन्वतेऽथात्र सर्वैव वागाप्ता भवत्यपवृक्ता तां सर्व एव वाचंयमा वाचमाप्याययन्ति तयाऽऽपीनयाऽयातयाम्न्याऽतिरात्रं तन्वते - ४.६.९.[२१]

औदुम्बरीमन्वारभ्यासते । अन्नं वा ऊर्गुदुम्बर ऊर्जैवैतद्वाचमाप्याययन्ति - ४.६.९.[२२]



तेऽस्तमिते प्राञ्च उपनिष्क्रामन्ति । ते जघनेनाहवनीयमासतेऽग्रेण हविर्धाने तान्वाचंयमानेव वाचंयमः प्रतिप्रस्थाता वसतीवरीभिरभिपरिहरति ते यत्कामा आसीरंस्तेन वाचं विसृजेरन्कामैर्ह स्म वै पुरर्षयः सत्त्रमासतेऽसौ नः कामः स नः समृध्यतामिति यद्यु अनेककामाः स्युर्लोककामा वा प्रजाकामा वा पशुकामा वा - ४.६.९.[२३]

अनेनैव वाचं विसृजेरन् । भूर्भुवः स्वरिति तत्सत्येनैवैतद्वाचं समर्धयन्ति तया समृद्धयाशिष आशासते सुप्रजाः प्रजाभिः स्यामेति तत्प्रजामाशासते सुवीरा वीरैरिति तद्वीरानाशासते सुपोषाः पोषैरिति तत्पुष्टिमाशासते - ४.६.९.[२४]

अथ गृहपतिः सुब्रह्मण्यामाह्वयति । यं वा गृहपतिर्ब्रूयात्पृथगु हैवैके सुब्रह्मण्यामाह्वयन्ति गृहपतिस्त्वेव सुब्रह्मण्यामाह्वयेद्यं वा गृहपतिर्ब्रूयात्तस्मिन्त्समुपहवमिष्ट्वा समिधोऽभ्यादधति -

##५.१.१ वाजपेययज्ञः

देवाश्च वा असुराश्च । उभये प्राजापत्याः पस्पृधिरे ततोऽसुरा अतिमानेनैव कस्मिन्नु वयं जुहुयामेति स्वेष्वेवास्येषु जुह्वतश्चेरुस्तेऽतिमानेनैव पराबभूवुस्तस्मान्नातिमन्येत पराभवस्य हैतन्मुखं यदतिमानः - ५.१.१.[१]

अथ देवाः । अन्योऽन्यस्मिन्नेव जुह्वतश्चेरुस्तेभ्यः प्रजापतिरात्मानं प्रददौ यज्ञो हैषामास यज्ञो हि देवानामन्नम् - ५.१.१.[२]

ते होचुः । कस्य न इदं भविष्यतीति ते मम ममेत्येव न सम्पादयां चक्रुस्ते हासम्पाद्योचुराजिमेवास्मिन्नजामहै स यो न उज्जेष्यति तस्य न इदं भविष्यतीति तथेति तस्मिन्नाजिमाजन्त - ५.१.१.[३]

स बृहस्पतिः । सवितारमेव प्रसवायोपाधावत्सविता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूत इदमुज्जयानीति तदस्मै सविता प्रसविता प्रासुवत्तत्सवितृप्रसूत उदजयत्स इदं सर्वमभवत्स इदं सर्वमुदजयत्प्रजापतिं ह्युदजयत्सर्वमु ह्येवेदं प्रजापतिस्तेनेष्ट्वैतामेवोर्ध्वां दिशमुदक्रामत्तस्माद्यश्च वेद यश्च नैषोर्ध्वा बृहस्पतेर्दिगित्येवाहुः - ५.१.१.[४]

तद्ये ह स्म पुरा वाजपेयेन यजन्ते । एतां ह स्मैवोर्ध्वां दिशमुत्क्रामन्ति तत औपाविनैव जानश्रुतेयेन प्रत्यवरूढं ततोऽर्वाचीनं प्रत्यवरोहन्ति - ५.१.१.[५]

तेनेन्द्रोऽयजत । स इदं सर्वमभवत्स इदं सर्वमुदजयत्प्रजापतिं ह्युदजयत्सर्वमु ह्येवेदं प्रजापतिस्तेनेष्ट्वैतामेवोर्ध्वां दिशमुदक्रामत् - ५.१.१.[६]

तद्ये ह स्म पुरा वाजपेयेन यजन्ते । एतां ह स्मैवोर्ध्वां दिशमुत्क्रामन्ति तत औपाविनैव जानश्रुतेयेन प्रत्यवरूढं ततोऽर्वाचीनं प्रत्यवरोहन्ति - ५.१.१.[७]

स यो वाजपेयेन यजते । स इदं सर्वं भवति स इदं सर्वमुज्जयति प्रजापतिं ह्युज्जयति सर्वमु ह्येवेदं प्रजापतिः - ५.१.१.[८]

तदाहुः । न वाजपेयेन यजेत सर्वं वा एष इदमुज्जयति यो वाजपेयेन यजते प्रजापतिं ह्युज्जयति सर्वमु ह्येवेदं प्रजापतिः स इह न किं चन परिशिनष्टि तस्येश्वरः प्रजा पापीयसी भवितोरिति - ५.१.१.[९]

तदु वै यजेतैव । य एवमेतं यज्ञं क्लृप्तं विद्युर्ऋक्तो यजुष्टः सामतो ये प्रजज्ञयस्त एनं याजयेयुरेषा ह त्वेतस्य यज्ञस्य समृद्धिर्यदेनं विद्वांसो याजयन्ति तस्मादु यजेतैव - ५.१.१.[१०]

स वा एष ब्राह्मणस्यैव यज्ञः । यदेनेन बृहस्पतिरयजत ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणोऽथो राजन्यस्य यदेनेनेन्द्रोऽयजत क्षत्रं हीन्द्रः क्षत्रं राजन्यः - ५.१.१.[११]



राज्ञ एव राजसूयम् । राजा वै राजसूयेनेष्ट्वा भवति न वै ब्राह्मणो राज्यायालमवरं वै राजसूयं परं वाजपेयम् - ५.१.१.[१२]

राजा वै राजसूयेनेष्ट्वा भवति । सम्राड्वाजपेयेनावरं हि राज्यं परं साम्राज्यं कामयेत वै राजा सम्राड्भवितुमवरं हि राज्यं परं साम्राज्यं न सम्राड्कामयेत राजा भवितुमवरं हि राज्यं परं साम्राज्यम् - ५.१.१.[१३]

स यो वाजपेयेनेष्ट्वा सम्राड्भवति । स इदं सर्वं संवृङ्क्ते सकर्मणःकर्मणः पुरस्तादेतां सावित्रीमाहुतिं जुहोति देव सवितः प्रसुव यज्ञम्प्रसुव यज्ञपतिं भगायेति - ५.१.१.[१४]

तद्यथैवादो बृहस्पतिः । सवितारं प्रसवायोपाधावत्सविता वै देवानाम्प्रसवितेदं मे प्रसुव त्वत्प्रसूत इदमुज्जयानीति तदस्मै सविता प्रसविता प्रासुवत्तत्सवितृप्रसूत उदजयदेवमेवैष

एतत्सवितारमेव प्रसवायोपधावति सविता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूत इदमुज्जयानीति तदस्मै सविता प्रसविता प्रसौति तत्सवितृप्रसूत उज्जयति - ५.१.१.[१५]

तस्मादाह । देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाजं नः स्वदतु स्वाहेति प्रजापतिर्वै वाचस्पतिरन्नं वाजः प्रजापतिर्न इदमद्यान्नं स्वदत्वित्येवैतदाह स एतामेवाहुतिं जुहोत्या श्वःसुत्याया एतद्ध्यस्यैतत्कर्मारब्धं भवति प्रसन्न एतं यज्ञं भवति - ५.१.१.[१६]
##५.१.२
अंशुं गृह्णाति । सर्वत्वायैव तस्माद्वा अंशुं गृह्णात्यथैतान्प्रज्ञातानेवाग्निष्टोमिकान्ग्रहान्गृह्णात्याग्रयणात् - ५.१.२.[१]

अथ पृष्ठ्यान्गृह्णाति । तद्यदेवैतैर्देवा उदजयंस्तदेवैष एतैरुज्जयति - ५.१.२.[२]

अथ षोडशिनं गृह्णाति । तद्यदेवैतेनेन्द्र उदजयत्तदेवैष एतेनोज्जयति - ५.१.२.[३]

अथैतान्पञ्च वाजपेयग्रहान्गृह्णाति । ध्रुवसदं त्वा नृषदम्मनःसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति सादयत्येषां वै लोकानामयमेव ध्रुव इयं पृथिवीममेवैतेन लोकमुज्जयति - ५.१.२.[४]

अप्सुषदं त्वा घृतसदं व्योमसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति सादयत्येषां वै लोकानामयमेव व्योमेदमन्तरिक्षमन्तरिक्षलोकमेवैतेनोज्जयति - ५.१.२.[५]

पृथिविसदं त्वान्तरिक्षसदं दिविसदं देवसदं नाकसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति सादयत्येष वै देवसन्नाकसदेष एव देवलोको देवलोकमेवैतेनोज्जयति - ५.१.२.[६]

अपां रसमुद्वयसं सूर्ये सन्तं समाहितमपां रसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति सादयत्येष वा अपां रसो योऽयं पवते स एष सूर्ये समाहितः सूर्यात्पवत एतमेवैतेन रसमुज्जयति - ५.१.२.[७]

ग्रहा ऊर्जाहुतयः । व्यन्तो विप्राय मतिं तेषां विशिप्रियाणां वोऽहमिषमूर्जं समग्रभमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति सादयत्यूर्ग्वै रसो रसमेवैतेनोज्जयति - ५.१.२.[८]

तान्वा एतान् । पञ्च वाजपेयग्रहान्गृह्णाति प्रजापतिं वा एष उज्जयति यो वाजपेयेन यजते संवत्सरो वै प्रजापतिः पञ्च वा ऋतवः संवत्सरस्य तत्प्रजापतिमुज्जयति तस्मात्पञ्च वाजपेयग्रहान्गृह्णाति - ५.१.२.[९]



अथ सप्तदश सोमग्रहान्गृह्णाति । सप्तदश सुराग्रहान्प्रजापतेर्वा एते अन्धसी यत्सोमश्च सुरा च ततः सत्यं श्रीर्ज्योतिः सोमोऽनृतं पाप्मा तमः सुरैते एवैतदुभे अन्धसी उज्जयति सर्वं वा एष इदमुज्जयति यो वाजपेयेन यजते प्रजापतिं ह्युज्जयति सर्वमु ह्येवेदं प्रजापतिः - ५.१.२.[१०]

स यत्सप्तदश । सोमग्रहान्गृह्णाति सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावतैवास्यैतत्सत्यं श्रियं ज्योतिरुज्जयति - ५.१.२.[११]

अथ यत्सप्तदश । सुराग्रहान्गृह्णाति सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावतैवास्यैतदनृतं पाप्मानं तम उज्जयति - ५.१.२.[१२]

त उभये चतुस्त्रिंशद्ग्रहाः सम्पद्यन्ते । त्रयस्त्रिंशद्वै देवाः प्रजापतिश्चतुस्त्रिंशस्तत्प्रजापतिमुज्जयति - ५.१.२.[१३]

अथ यत्र राजानं क्रीणाति । तद्दक्षिणतः प्रतिवेशतः केशवात्पुरुषात्सीसेन परिस्रुतं क्रीणाति न वा एष स्त्री न पुमान्यत्केशवः पुरुषो यदह पुमांस्तेन न स्त्री यदु केशवस्तेन न पुमान्नैतदयो न हिरण्यं यत्सीसं नैष सोमो न सुरा यत्परिस्रुत्तस्मात्केशवात्पुरुषात्सीसेन परिस्रुतं क्रीणाति

अथ पूर्वेद्युः । द्वौ खरौ कुर्वन्ति पुरोऽक्षमेवान्यं पश्चादक्षमन्यं नेत्सोमग्रहांश्च सुराग्रहांश्च सह सादयामेति तस्मात्पूर्वेद्युर्द्वौ खरौ कुर्वन्ति पुरोऽक्षमेवान्यं पश्चादक्षमन्यम् - ५.१.२.[१५]

अथ यत्र पूर्वया द्वारा । वसतीवरीः प्रपादयन्ति तदपरया द्वारा नेष्टा परिस्रुतं प्रपादयति दक्षिणतः पात्राण्यभ्यवहरन्ति पुरोऽक्षमेव प्रत्यङ्ङासीनोऽध्वर्युः सोमग्रहान्गृह्णाति पश्चादक्षं प्राङासीनो नेष्टा सुराग्रहान्त्सोमग्रहमेवाध्वर्युर्गृह्णाति सुराग्रहं नेष्टा सोमग्रहमेवाध्वर्युर्गृह्णाति सुराग्रहं नेष्टैवमेवैनान्व्यत्यासं गृह्णीतः - ५.१.२.[१६]



न प्रत्यञ्चमक्षमध्वर्युः । सोमग्रहमतिहरति न प्राञ्चमक्षं नेष्टा सुराग्रहं नेज्ज्योतिश्च तमश्च संसृजावेति - ५.१.२.[१७]

उपर्युपर्येवाक्षमध्वर्युः । सोमग्रहं धारयत्यधोऽधोऽक्षं नेष्टा सुराग्रहं सम्पृचौ स्थः सं मा भद्रेण पृङ्क्तमिति नेत्पापमिति ब्रवावेति तौ पुनर्विहरतो विपृचौ स्थो वि मा पाप्मना पृङ्क्तमिति तद्यथेषीकाम्मुञ्जाद्विवृहेदेवमेनं सर्वस्मात्पाप्मनो विवृहतस्तस्मिन्न तावच्चनैनो भवति यावत्तृणस्याग्रं तौ सादयतः - ५.१.२.[१८]

अथाध्वर्युः । हिरण्यपात्रेण मधुग्रहं गृह्णाति तं मध्ये सोमग्रहाणां सादयत्यथोक्थ्यं गृह्णात्यथ ध्रुवमथैतान्त्सोमग्रहानुत्तमे स्तोत्र ऋत्विजां चमसेषु व्यवनीय जुह्वति तान्भक्षयन्त्यथ माध्यन्दिने सवने मधुग्रहस्य च सुराग्रहाणां चोद्यते तस्यातः - ५.१.२.[१९]

##५.१.३ पशुतन्त्रम्

आग्नेयमग्निष्टोमऽआलभते । अग्निर्वा अग्निष्टोमोऽग्निष्टोममेवैतेनोज्जयत्यैन्द्राग्नमुक्थेभ्य आलभत ऐन्द्राग्नानि वाऽउक्थ्यान्युक्थान्येवैतेनोज्जयत्यैन्द्रं षोडशिनऽआलभत इन्द्रो वै षोडशी षोडशिनमेवैतेनोज्जयति - ५.१.३.[१]

सारस्वतं सप्तदशाय स्तोत्रायालभते । तदेतदनतिरात्रे सति रात्रे रूपं क्रियते प्रजापतिं वा एष उज्जयति यो वाजपेयेन यजते संवत्सरो वै प्रजापतिस्तदेतेन सारस्वतेन रात्रिमुज्जयति तस्मादेतदनतिरात्रे सति रात्रे रूपं क्रियते - ५.१.३.[२]

अथ मरुद्भ्य उज्जेषेभ्यः । वशां पृश्निमालभत इयं वै वशा पृश्निर्यदिदमस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं वशा पृश्निरन्नं वा एष उज्जयति यो वाजपेयेन यजतेऽन्नपेयं ह वै नामैतद्यद्वाजपेयं विशो वै मरुतोऽन्नं वै विश उज्जेषेभ्य इत्युज्जित्या एव दुर्वेदे उज्जेषवत्यौ याज्यानुवाक्ये यद्युज्जेषवत्यौ न विन्देदपि ये एव के च मारुत्यौ स्यातां दुर्वेदो एव वशापृश्निर्यदि वशां पृश्निं न विन्देदपि यैव का च वशा स्यात् - ५.१.३.[३]



तस्या आवृत् । यत्र होता माहेन्द्रं ग्रहमनुशंसति तदस्यै वपया प्रचरेयुरेष वा इन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रोऽप्यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्यं शस्त्रमिन्द्रो वै यजमानस्तन्मध्यत एवैतद्यजमाने वीर्यं दधाति तस्मादस्या अत्र वपया प्रचरेयुः - ५.१.३.[४]

द्वेधावदानानि श्रपयन्ति । ततोऽर्द्धानां जुह्वामुपस्तीर्य द्विर्द्विरवद्यति सकृदभिघारयति प्रत्यनक्त्यवदानान्यथोपभृति सकृत्सकृदवद्यति द्विरभिघारयति न प्रत्यनक्त्यवदानानि तद्यदर्द्धानां द्विर्द्विरवद्यति तथैषा कृत्स्ना भवत्यथ यदेतैः प्रचरति तेन दैवीं विशमुज्जयत्यथार्द्धानि मानुष्यै विश उपहरति तेनो मानुषीं विशमुज्जयति - ५.१.३.[५]

तदु तथा न कुर्यात् । ह्वलति वा एष यो यज्ञपथादेत्येति वा एष यज्ञपथाद्य एवं करोति तस्माद्यत्रैवैतरेषां पशूनां वपाभिः प्रचरन्ति तदेवैतस्यै वपया प्रचरेयुरेकधावदानानि श्रपयन्ति न मानुष्यै विश उपहरन्ति - ५.१.३.[६]

अथ सप्तदश प्राजापत्यान्पशूनालभते । ते वै सर्वे तूपरा भवन्ति सर्वे श्यामाः सर्वे मुष्कराः प्रजापतिं वा एष उज्जयति यो वाजपेयेन यजतेऽन्नं वै प्रजापतिः पशुर्वा अन्नं तत्प्रजापतिमुज्जयति सोमो वै प्रजापतिः पशुर्वै प्रत्यक्षं सोमस्तत्प्रत्यक्षं प्रजापतिमुज्जयति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति - ५.१.३.[७]

ते वै सर्वे तूपरा भवन्ति । पुरुषो वै प्रजापतेर्नेदिष्ठं सोऽयं तूपरोऽविषाणस्तूपरो वा अविषाणः प्रजापतिः प्राजापत्या एते तस्मात्सर्वे तूपरा भवन्ति - ५.१.३.[८]

सर्वे श्यामाः । द्वे वै श्यामस्य रूपे शुक्लं चैव लोम कृष्णं च द्वन्द्वं वै मिथुनं प्रजननं प्रजननं प्रजापतिः प्राजापत्या एते तस्मात्सर्वे श्यामा भवन्ति - ५.१.३.[९]

सर्वे मुष्कराः । प्रजननं वै मुष्करः प्रजननं प्रजापतिः प्राजापत्या एते तस्मात्सर्वे मुष्करा भवन्ति दुर्वेदा एवं समृद्धाः पशवो यद्येवं समृद्धान्न विन्देदपि कतिपया एवैवं समृद्धाः स्युः सर्वमु ह्येवेदं प्रजापतिः - ५.१.३.[१०]

तद्धैके । वाच उत्तममालभन्ते यदि वै प्रजापतेः परमस्ति वागेव तदेतद्वाचमुज्जयाम इति वदन्तस्तदु तथा न कुर्यात्सर्वं वा इदम्प्रजापतिर्यदिमे लोका यदिदं किं च सा यदेवैषु लोकेषु वाग्वदति तद्वाचमुज्जयति तस्मादु तन्नाद्रियेत - ५.१.३.[११]

तेषामावृत् । यत्र मैत्रावरुणो वामदेव्यमनुशंसति तदेषां वपाभिः प्रचरेयुः प्रजननं वै वामदेव्यं प्रजननं प्रजापतिः प्राजापत्या एते तस्मादेषां वपाभिरत्र प्रचरेयुः - ५.१.३.[१२]

अथेष्टा अनुयाजा भवन्ति । अव्यूढे स्रुचावथैषां हविर्भिः प्रचरन्ति सोऽन्तोऽन्तो वै प्रजापतिस्तदन्तत एवैतत्प्रजापतिमुज्जयत्यथ यत्पुरा प्रचरेद्यथा यमध्वानमेष्यन्त्स्यात्तं गत्वा स क्व ततः स्यादेवं तत्तस्मादेषामत्र हविर्भिः प्रचरन्ति - ५.१.३.[१३]

तदु तथा न कुर्यात् । ह्वलति वा एष यो यज्ञपथादेत्येति वा एष यज्ञपथाद्य एवं करोति तस्माद्यत्रैवेतरेषां पशूनां वपाभिः प्रचरन्ति तदेवैतेषां वपाभिः प्रचरेयुर्यत्रैवेतरेषां पशूनां हविर्भिः प्रचरन्ति तदेवैतेषां हविषा प्रचरेयुरेकानुवाक्या एका याज्यैकदेवत्या हि प्रजापतय इत्युपांशूक्त्वा च्छागानां हविषोऽनुब्रूहीति प्रजापतय इत्युपांशूक्त्वा च्छागानां हविः प्रस्थितं प्रेष्येति वषट्कृते जुहोति - ५.१.३.[१४]

##५.१.४ माध्यन्दिनेसवने कर्तव्ये प्रयोगः
तं वै माध्यन्दिने सवनेऽभिषिञ्चति । माध्यन्दिने सवन आजिं धावन्त्येष वै प्रजापतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते तन्मध्यत एवैतत्प्रजापतिमुज्जयति - ५.१.४.[१]

अगृहीते माहेन्द्रे । एष वा इन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रोऽप्यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्यं शस्त्रमिन्द्रो वै यजमानस्तदेनं स्व एवायतनेऽभिषिञ्चति तस्मादगृहीते माहेन्द्रे - ५.१.४.[२]



अथ रथमुपावहरति । इन्द्रस्य वज्रोऽसीति वज्रो वै रथ इन्द्रो वै यजमानस्तस्मादाहेन्द्रस्य वज्रोऽसीति वाजसा इति वाजसा हि रथस्त्वयाऽयं वाजं सेदित्यन्नं वै वाजस्त्वयाऽयमन्नमुज्जयत्वित्येवैतदाह - ५.१.४.[३]

तं धूर्गृहीतमन्तर्वेद्यभ्यववर्तयति । वाजस्य नु प्रसवे मातरम्महीमित्यन्नं वै वाजोऽन्नस्य नु प्रसवे मातरं महीमित्येवैतदाहादितिं नाम वचसा करामहा इतीयं वै पृथिव्यदितिस्तस्मादाहादितिं नाम वचसा करामह इति यस्यामिदं विश्वं भुवनमाविवेशेत्यस्यां हीदं सर्वं भुवनमाविष्टं तस्यां नो देवः सविता धर्म साविषदिति तस्यां नो देवः सविता यजमानं सुवतामित्येवैतदाह - ५.१.४.[४]

अथाश्वानद्भिरभ्युक्षति । स्नपनायाभ्यवनीयमानान्स्नपितान्वोदानीतानद्भ्यो ह वा अग्रेऽश्वः सम्बभूव सोऽद्भ्यः सम्भवन्न सर्वः समभवदसर्वो हि वै समभवत्तस्मान्न सर्वैः पद्भिः प्रतितिष्ठत्येकैकमेव पादमुदच्य तिष्ठति तद्यदेवास्यात्राप्स्वहीयत तेनैवैनमेतत्समर्धयति कृत्स्नं करोति तस्मादश्वानद्भिरभ्युक्षति स्नपनायाभ्यवनीयमानान्स्नपितान्वोदानीतान् - ५.१.४.[५]

सोऽभ्युक्षति । अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवत वाजिन इत्यनेनापि देवीरापो यो व ऊर्मिः प्रतूर्तिः ककुन्मान्वाजसास्तेनायं वाजं सेदित्यन्नं वै वाजस्तेनायमन्नमुज्जयत्वित्येवैतदाह - ५.१.४.[६]

अथ रथं युनक्ति । स दक्षिणायुग्यमेवाग्रे युनक्ति सव्यायुग्यं वा अग्रे मानुषेऽथैवं देवत्रा - ५.१.४.[७]



स युनक्ति । वातो वा मनो वेति न वै वातात्किं चनाशीयोऽस्ति न मनसः किं चनाशीयोऽस्ति तस्मादाह वातो वा मनो वेति गन्धर्वाः सप्तविंशतिस्तेऽग्रेऽश्वमयुञ्जन्निति गन्धर्वा ह वा अग्रेऽश्वं युयुजुस्तद्येऽग्रेऽश्वमयुञ्जंस्ते त्वा युञ्जन्त्वित्येवैतदाह ते अस्मिन्जवमादधुरिति तद्येऽस्मिन्जवमादधुस्ते त्वयि जवमादधत्वित्येवैतदाह - ५.१.४.[८]

अथ सव्यायुग्यं युनक्ति । वातरंहा भव वाजिन्युज्यमान इति वातजवो भव वाजिन्युज्यमान इत्येवैतदाहेन्द्रस्येव दक्षिणः श्रियैधीति यथेन्द्रस्य दक्षिणः श्रियैवं यजमानस्य श्रियैधीत्येवैतदाह युञ्जन्तु त्वा मरुतो विश्ववेदस इति युञ्जन्तु त्वा देवा इत्येवैतदाहा ते त्वष्टा पत्सु जवं दधात्विति नात्र तिरोहितमिवास्त्यथ दक्षिणाप्रष्टिं युनक्ति सव्याप्रष्टिं वा अग्रे मानुषेऽथैवं देवत्रा - ५.१.४.[९]

स युनक्ति । जवो यस्ते वाजिन्निहितो गुहा यः श्येने परीत्तो अचरच्च वात इति जवो यस्ते वाजिन्नप्यन्यत्रापनिहितस्तेन न इमं यज्ञं प्रजापतिमुज्जयेत्येवैतदाह तेन नो

वाजिन्बलवान्बलेन वाजजिच्च भव समने च पारयिष्णुरित्यन्नं वै वाजोऽन्नजिच्च न एध्यस्मिंश्च नो यज्ञे देवसमन इमं यज्ञं प्रजापतिमुज्जयेत्येवैतदाह - ५.१.४.[१०]

ते वा एत एव त्रयो युक्ता भवन्ति । त्रिवृद्धि देवानां तद्धि देवत्राऽधिप्रष्टियुग एव चतुर्थोऽन्वेति मानुषा हि स तं यत्र दास्यन्भवति तच्चतुर्थमुपयुज्य ददाति तस्मादपीतरस्मिन्यज्ञ एत एव त्रयो युक्ता भवन्ति त्रिवृद्धि देवानां तद्धि देवत्राऽधिप्रष्टियुग एव चतुर्थोऽन्वेति मानुषो हि स तं यत्र दास्यन्भवति तच्चतुर्थमुपयुज्य ददाति - ५.१.४.[११]

अथ बार्हस्पत्यं चरुं नैवारं सप्तदशशरावं निर्वपति अन्नं वा एष उज्जयति यो वाजपेयेन यजतेऽन्नपेयं ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्नमुदजैषीत्तदेवास्मा एतत्करोति - ५.१.४.[१२]



अथ यद्बार्हस्पत्यो भवति । बृहस्पतिर्ह्येतमग्र उदजयत्तस्माद्बार्हस्पत्यो भवति - ५.१.४.[१३]

अथ यन्नैवारो भवति । ब्रह्म वै बृहस्पतिरेते वै ब्रह्मणा पच्यन्ते यन्नीवारास्तस्मान्नैवारो भवति सप्तदशशरावो भवति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति - ५.१.४.[१४]

तमश्वानवघ्रापयति । वाजिन इति वाजिनो ह्यश्वास्तस्मादाह वाजिन इति वाजजित इत्यन्नं वै वाजोऽन्नजित इत्येवैतदाह वाजं सरिष्यन्त इत्याजिं हि सरिष्यन्तो भवन्ति बृहस्पतेर्भागमवजिघ्रतेति बृहस्पतेर्ह्येष भागो भवति तस्मादाह बृहस्पतेर्भागमवजिघ्रतेति तद्यदश्वानवघ्रापयतीममुज्जयानीति तस्माद्वा अश्वानवघ्रापयति - ५.१.४.[१५]

##५.१.५.

तद्यदाजिं धावन्ति । इममेवैतेन लोकमुज्जयत्यथ यद्ब्रह्मा रथचक्रे साम गायति नाभिदघ्न उद्धितेऽन्तरिक्षलोकमेवैतेनोज्जयत्यथ यद्यूपं रोहति देवलोकमेवैतेनोज्जयतितस्माद्वा एतत्त्रयं क्रियते - ५.१.५.[१]

स ब्रह्मा रथचक्रमधिरोहति । नाभिदघ्न उद्धितं देवस्याहं सवितुः सवे सत्यसवसो बृहस्पतेरुत्तमं नाकं रुहेयमिति यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः - ५.१.५.[२]

अथ यदि राजन्यो यजते । देवस्याहं सवितुः सवे सत्यसवस इन्द्रस्योत्तमं नाकं रुहेयमिति क्षत्रं हीन्द्रं क्षत्रं राजन्यः - ५.१.५.[३]

त्रिः सामाभिगायति । त्रिरभिगीयावरोहति देवस्याहं सवितुः सवे सत्यप्रसवसो बृहस्पतेरुत्तमं नाकमरुहमिति यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः - ५.१.५.[४]
अथ यदि राजन्यो यजते । देवस्याहं सवितुः सवे सत्यप्रसवस इन्द्रस्योत्तमं नाकमरुहमिति क्षत्रं हीन्द्रः क्षत्रं राजन्यः - ५.१.५.[५]

अथ सप्तदश दुन्दुभीननुवेद्यन्तं सम्मिन्वन्ति । प्रतीच आग्नीध्रात्प्रजापतिं वा एष उज्जयति यो वाजपेयेन यजते वाग्वै प्रजापतिरेषा वै परमा वाग्या सप्तदशानां दुन्दुभीनां परमामेवैतद्वाच परमं प्रजापतिमुज्जयति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति - ५.१.५.[६]
अथैतेषां दुन्दुभीनाम् । एकं यजुषाऽऽहन्ति तत्सर्वे यजुषाऽऽहता भवन्ति - ५.१.५.[७]

स आहन्ति । बृहस्पते वाजं जय बृहस्पतये वाचं वदत बृहस्पतिं वाजं जापयतेति
यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः - ५.१.५.[८]

अथ यदि राजन्यो यजते । इन्द्र वाजं जयेन्द्राय वाचं वदतेन्द्रं वाजं जापयतेति क्षत्रं हीन्द्रः क्षत्रं राजन्यः - ५.१.५.[९]

अथैतेष्वाजिसृत्सु रथेषु । पुनरासृतेष्वेतेषां दुन्दुभीनामेकं यजुषोपावहरति तत्सर्वे यजुषोपावहृता भवन्ति - ५.१.५.[१०]

स उपावहरति । एषा वः सा सत्या संवागभूद्यया बृहस्पतिं वाजमजीजपताजीजपत बृहस्पतिं वाजं वनस्पतयो विमुच्यध्वमिति यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः - ५.१.५.[११]

अथ यदि राजन्यो यजते । एषा वः सा सत्या संवागभूद्ययेन्द्रं वाजमजीजपताजीजपतेन्द्रं वाजं वनस्पतयो विमुच्यध्वमिति क्षत्रं हीन्द्रः क्षत्रं राजन्यः - ५.१.५.[१२]



अथ वेद्यन्तात् । राजन्य उदङ्सप्तदश प्रव्याधान्प्रविध्यति यावान्वा एकः प्रव्याधस्तावांस्तिर्यङ्प्रजापतिरथ यावत्सप्तदश प्रव्याधास्तावानन्वङ्प्रजापतिः - ५.१.५.[१३]

तद्यद्राजन्यः प्रविध्यति । एष वै प्रजापतेः प्रत्यक्षतमां यद्राजन्यस्तस्मादेकः सन्बहूनामीष्टे यद्वेव चतुरक्षरः प्रजापतिश्चतुरक्षरो राजन्यस्तस्माद्राजन्यः प्रविध्यति सप्तदश प्रव्याधान्प्रविध्यति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति - ५.१.५.[१४]

अथ यं यजुषा युनक्ति । तं यजमान आतिष्ठति देवस्याहं सवितुः सवे सत्यप्रसवसो बृहस्पतेर्वाजजितो वाजं जेषमिति - ५.१.५.[१५]

तद्यथैवादो बृहस्पतिः । सवितारं प्रसवायोपाधावत्सविता वै देवानाम्प्रसवितेदं मे प्रसुव त्वत्प्रसूत इदमुज्जयानीति तदस्मै सविता प्रसविता प्रासुवत्तत्सवितृप्रसूत उदजयदेवमेवैष एतत्सवितारमेव प्रसवायोपधावति सविता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूत इदमुज्जयानीति तदस्मै सविता प्रसविता प्रसौति तत्सवितृप्रसूत उज्जयति - ५.१.५.[१६]

अथ यद्यध्वर्योः । अन्तेवासी वा ब्रह्मचारी वैतद्यजुरधीयात्सोऽन्वास्थाय वाचयति वाजिन इति वाजिनो ह्यश्वास्तस्मादाह वाजिन इति वाजजित इत्यन्नं वै वाजोऽन्नजित इत्येवैतदाहाध्वन स्कभ्नुवन्त इत्यध्वनो हि स्कभ्नुवन्तो धावन्ति योजना मिमाना इति योजनशो हि मिमाना अध्वानं धावन्ति काष्ठां गच्छतेति यथैनानन्तरा नाष्ट्रा रक्षांसि न हिंस्युरेवमेतदाह धावन्त्याजिमाघ्नन्ति दुन्दुभीनभि साम गायति - ५.१.५.[१७]

अथैताभ्यां जगतीभ्याम् । जुहोति वाऽनु वा मन्त्रयते यदि जुहोति यद्यनुमन्त्रयते समान एव बन्धुः - ५.१.५.[१८]

स जुहोति । एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि क्रतुं दधिक्रा अनु संसनिष्यदत्पथामङ्कांस्यन्वापनीफणत्स्वाहा - ५.१.५.[१९]



उत स्म । अस्य द्रवतस्तुरण्यतः पर्णं न वेरनुवाति प्रगर्द्धिनः श्येनस्येव ध्रजतो अङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः स्वाहेति - ५.१.५.[२०]

अथोत्तरेण त्रिचेन । जुहोति वाऽनु वा मन्त्रयते द्वयं तद्यस्माज्जुहोति वाऽनु वा मन्त्रयते यदि जुहोति यद्यनुमन्त्रयते समान एव बन्धुरेतानेवैतदश्वान्धावत उपवाजयत्येतेषु वीर्यं दधाति तिस्रो वा इमाः पृथिव्य इयमहैका द्वे अस्याः परे ता एवैतदुज्जयति - ५.१.५.[२१]

सोऽनुमन्त्रयते । शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद्युयवन्नमीवाः - ५.१.५.[२२]

ते नोऽअर्वन्तः । हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रवः सहस्रसा मेधसाता सनिष्यवो महो ये धनं समिथेषु जभ्रिरे - ५.१.५.[२३]

वाजेवाजेऽवत । वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः ॥ अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैरिति - ५.१.५.[२४]
अथ बार्हस्पत्येन चरुणा प्रत्युपतिष्ठते । तमुपस्पृशत्यन्नं वा एष उज्जयति यो वाजपेयेन यजतेऽन्नपेयं ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्नमुदजैषीत्तेनैवैतदेतां गतिं गत्वा संस्पृशते तदात्मन्कुरुते - ५.१.५.[२५]

स उपस्पृशति । आ मा वाजस्य प्रसवो जगम्यादित्यन्नं वै वाज आ माऽन्नस्य प्रसवो जगम्यादित्येवैतदाहेमे द्यावापृथिवी विश्वरूपे इति द्यावापृथिवी हि प्रजापतिरा मा गन्तां पितरा मातरा चेति मातेव च हि पितेव च प्रजापतिरा मा सोमो ऽअमृतत्वेन गम्यादिति सोमो हि प्रजापतिः - ५.१.५.[२६]

तमश्वानवघ्रापयति । वाजिन इति वाजिनो ह्यश्वास्तस्मादाह वाजिन इति वाजजित इत्यन्नं वै वाजोऽन्नजित इत्येवैतदाह वाजं ससृवांसं इति सरिष्यन्त इति वा अग्र आह सरिष्यन्त इव हि तर्हि भवन्त्यथात्र ससृवांस इति ससृवांस इव ह्यत्र भवन्ति तस्मादाह ससृवांस इति बृहस्पतेर्भागमवजिघ्रतेति बृहस्पतेर्ह्येष भागो भवति तस्मादाह बृहस्पतेर्भागमवजिघ्रतेति निमृजाना इति तद्यजमाने वीर्यं दधाति तद्यदश्वानवघ्रापयतीममुज्जयानीति वा अग्रेऽवघ्रापयत्यथात्रेममुदजैषमिति तस्माद्वा अश्वानवघ्रापयति - ५.१.५.[२७]



अथैतेषामाजिश्रितां रथानाम् । एकस्मिन्वैश्यो वा राजन्यो वोपास्थितो भवति स वेदेरुत्तरायां श्रोणा उपविशत्यथाध्वर्युश्च यजमानश्च पूर्वया द्वारा मधुग्रहमादाय निष्क्रामतस्तं वैश्यस्य वा राजन्यस्य वा प्राणावाधत्तोऽथ नेष्टाऽपरया द्वारा सुराग्रहानादाय निष्क्रामति स जघनेन शालां पर्येत्यैकं वैश्यस्य वा राजन्यस्य वा प्राणावादधदाहानेन त इमं निष्क्रीणामीति सत्यं वै श्रीर्ज्योतिः सोमोऽनृतं पाप्मा तमः सुरा सत्यमेवैतच्छ्रियं ज्योतिर्यजमाने दधात्यनृतेन पाप्मना तमसा वैश्यं विध्यति तैः स यं भोगं कामयते तं कुरुतेऽथैतं सहिरण्यपात्रमेव मधुग्रहं ब्रह्मणे ददाति तं ब्रह्मणे ददमृतमायुरात्मन्धत्तेऽमृतं ह्यायुर्हिरण्यं तेन स यं भोगं कामयते तं कुरुते - ५.१.५.[२८]

##५.२.१ यूपारोहणम्

अथ स्रुवं चाज्यविलापनीं चादाय । आहवनीयमभ्यैति स एता द्वादशाप्तीर्जुहोति वा वाचयति वा यदि जुहोति यदि वाचयति समान एव बन्धुः - ५.२.१.[१]

स जुहोति । आपये स्वाहा स्वापये स्वाहाऽपिजाय स्वाहा क्रतवे स्वाहा वसवे स्वाहाऽहर्पतये स्वाहाऽह्ने मुग्धाय स्वाहा मुग्धाय वैनंशिनाय स्वाहा विनंशिन आन्त्यायनाय स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहेत्येता द्वादशाप्तीर्जुहोति द्वादश वै मासाः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यैवास्याप्तिर्या सम्पत्तामेवैतदुज्जयति तामात्मन्कुरुते - ५.२.१.[२]

अथ षड्क्लृप्तीः । जुहोति वा वाचयति वा यदि जुहोति यदि वाचयति समान एव बन्धुः - ५.२.१.[३]



स वाचयति । आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पतां श्रोत्रं यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पतामित्येताः षड्क्लृप्तीर्वाचयति षड्वा ऋतवः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यैवास्य क्लृप्तिर्या सम्पत्तामेवैतदुज्जयति तामात्मन्कुरुते - ५.२.१.[४]

अष्टाश्रिर्यूपो भवति । अष्टाक्षरा वै गायत्री गायत्रमग्नेश्छन्दो देवलोकमेवैतेनोज्जयति सप्तदशभिर्वासोभिर्यूपो वेष्टितो वा विग्रथितो वा भवति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति - ५.२.१.[५]

गौधूमं चषालं भवति । पुरुषो वै प्रजापतेर्नेदिष्ठं सोऽयमत्वगेते वै पुरुषस्यौषधीनां नेदिष्ठतमां यद्गोधूमास्तेषां न त्वगस्ति मनुष्यलोकमेवैतेनोज्जयति - ५.२.१.[६]

गर्तन्वान्यूपोऽतीक्ष्णाग्रो भवति । पितृदेवत्यो वै गर्तः पितृलोकमेवैतेनोज्जयति। सप्तदशारत्निर्भवति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति - ५.२.१.[७]

अथ नेष्टा पत्नीमुदानेष्यन् । कौशं वासः परिधापयति कौशं वा चण्डातकमन्तरं दीक्षितवसनाज्जघनार्द्धो वा एष यज्ञस्य यत्पत्नी तामेतत्प्राचीं यज्ञं प्रसादयिष्यन्भवत्यस्ति वै पत्न्या अमेध्यं यदवाचीनं नाभेर्मेध्या वै दर्भास्तद्यदेवास्या अमेध्यं तदेवास्या एतद्दर्भैर्मेध्यं कृत्वाथैनां प्राचीं यज्ञं प्रसादयति तस्मान्नेष्टा पत्नीमुदानेस्यन्कौशं वासः परिधापयति कौशं वा चण्डातकमन्तरं दीक्षितवसनात् - ५.२.१.[८]

अथ निश्रयणीं निश्रयति । स दक्षिणत उदङ् रोहेदुत्तरतो वा दक्षिणा दक्षिणतस्त्वेवोदङ्रोहेत्तथा ह्युदग्भवति - ५.२.१.[९]

स रोक्ष्यञ्जायामामन्त्रयते । जाय एहि स्वो रोहावेति रोहावेत्याह जाया तद्यज्जायामामन्त्रयतेऽर्द्धो ह वा एष आत्मनो यज्जाया तस्माद्यावज्जायां न विन्दते नैव तावत्प्रजायतेऽसर्वो हि तावद्भवत्यथ यदैव जायां विन्दतेऽथ प्रजायते तर्हि हि सर्वो भवति सर्व एतां गतिं गच्छानीति तस्माज्जायामामन्त्रयते - ५.२.१.[१०]

स रोहति । प्रजापतेः प्रजा अभूमेति प्रजापतेर्ह्येष प्रजा भवति यो वाजपेयेन यजते - ५.२.१.[११]

अथ गोधूमानुपस्पृशति । स्वर्देवा अगन्मेति स्वर्ह्येष गच्छति यो वाजपेयेन यजते - ५.२.१.[१२]

तद्यद्गोधूमानुपस्पृशति । अन्नं वै गोधूमा अन्नं वा एष उज्जयति यो वाजपेयेन यजतेऽन्नपेयं ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्नमुदजैषीत्तेनैवैतदेतां गतिं गत्वा संस्पृशते तदात्मन्कुरुते तस्माद्गोधूमानुपस्पृशति - ५.२.१.[१३]

अथ शीर्ष्णा यूपमत्युज्जिहीते । अमृता अभूमेति देवलोकमेवैतेनोज्जयति - ५.२.१.[१४]

अथ दिशोऽनुवीक्षमाणो जपति । अस्मे वो अस्त्विन्द्रियमस्मे नृम्णमुत क्रतुरस्मेवर्चांसि सन्तु व इति सर्वं वा एष इदमुज्जयति यो वाजपेयेन यजते प्रजापतिं ह्युज्जयति सर्वमु ह्येवेदं प्रजापतिः सोऽस्य सर्वस्य यश इन्द्रियं वीर्यं संवृज्य तदात्मन्धत्ते तदात्मन्कुरुते तस्माद्दिशोऽनुवीक्षमाणो जपति- ५.२.१.[१५]

अथैनमूषपुटैरनूदस्यन्ति । पशवो वा ऊषा अन्नं वै पशवोऽन्नं वा एष उज्जयति यो वाजपेयेन यजतेऽन्नपेयं ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्नमुदजैषीत्तेनैवैतदेतां गतिं गत्वा संस्पृशते तदात्मन्कुरुते तस्मादेनमूषपुटैरनूदस्यन्ति - ५.२.१.[१६]

आश्वत्थेषु पलाशेषूपनद्धा भवन्ति । स यदेवादोऽश्वत्थे तिष्ठत इन्द्रो मरुत उपामन्त्रयत तस्मादाश्वत्थेषु पलाशेषूपनद्धा भवन्ति विशोऽनूदस्यन्ति विशो वै मरुतोऽन्नं विशस्तस्माद्विशोऽनूदस्यन्ति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति - ५.२.१.[१७]

अथेमामुपावेक्षमाणो जपति । नमो मात्रे पृथिव्यै नमो मात्रे पृथिव्या इति बृहस्पतेर्ह वा अभिषिषिचानात्पृथिवी बिभयांचकार महद्वा अयमभूद्योऽभ्यषेचि यद्वै मायं नावद्दृणीयादिति बृहस्पतिर्ह पृथिव्यै बिभयांचकार यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्रधेयमकुरुत न हि माता पुत्रं हिनस्ति न पुत्रो मातरम् - ५.२.१.[१८]

बृहस्पतिसवो वा एष यद्वाजपेयम् । पृथिव्यु हैतस्माद्बिभेति महद्वा अयमभूद्योऽभ्यषेचि यद्वै मायं नावद्दृणीयादित्येष उ हास्यै बिभेति यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्रधेयं कुरुते न हि माता पुत्रं हिनस्ति न पुत्रो मातरम् - ५.२.१.[१९]

अथ हिरण्यमभ्यवरोहति । अमृतमायुर्हिरण्यं तदमृत आयुषि प्रतितिष्ठति - ५.२.१.[२०]

अथाजर्षभस्याजिनमुपस्तृणाति । तदुपरिष्टाद्रुक्मं निदधाति तमभ्यवरोहतीमां वैव - ५.२.१.[२१]

अथास्मा आसन्दीमाहरन्ति । उपरिसद्यं वा एष जयति यो जयत्यन्तरिक्षसद्यं तदेनमुपर्यासीनमधस्तादिमाः प्रजा उपासते तस्मादस्मा आसन्दीमाहरन्ति - ५.२.१.[२२]

औदुम्बरी भवति । अन्नं वा ऊर्गुदुम्बर ऊर्जोऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरी भवति तामग्रेण हविर्धाने जघनेनाहवनीयं निदधाति - ५.२.१.[२३]

अथाजर्षभस्याजिनमास्तृणाति । प्रजापतिर्वा एष यदजर्षभ एता वै प्रजापतेः प्रत्यक्षतमां यदजास्तस्मादेतास्त्रिः संवत्सरस्य विजायमाना द्वौ त्रीनिति जनयन्ति तत्प्रजापतिमेवैतत्करोति तस्मादजर्षभस्याजिनमास्तृणाति - ५.२.१.[२४]



स आस्तृणाति । इयं ते राडिति राज्यमेवास्मिन्नेतद्दधात्यथैनमासादयति यन्तासि यमन इति यन्तारमेवैनमेतद्यमनमासां प्रजानां करोति ध्रुवोऽसि धरुण इति ध्रुवमेवैनमेतद्धरुणमस्मिंलोके करोति कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वेति साधवे त्वेत्येवैतदाह - ५.२.१.[२५]

##५.२.२
बार्हस्पत्येन चरुणा प्रचरति । तस्यानिष्ट एव स्विष्टकृद्भवत्यथास्मा अन्नं सम्भरत्यन्नं वा एष उज्जयति यो वाजपेयेन यजतेऽन्नपेयं ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्नमुदजैषीत्तदेवास्मा एतत्सम्भरति - ५.२.२.[१]

औदुम्बरे पात्रे । अन्नं वा ऊर्गुदुम्बर ऊर्जोऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरे पात्रे सोऽप एव प्रथमाः सम्भरत्यथ पयोऽथ यथोपस्मारमन्नानि - ५.२.२.[२]

तद्धैके । सप्तदशान्नानि सम्भरन्ति सप्तदशः प्रजापतिरिति वदन्तस्तदु तथा न कुर्यात्प्रजापतेर्न्वेव सर्वमन्नमनवरुद्धं क उ तस्मै मनुष्यो यः सर्वमन्नमवरुन्धीत तस्मादु सर्वमेवान्नं यथोपस्मारं सम्भरन्नेकमन्नं न सम्भरेत् - ५.२.२.[३]

स यन्न सम्भरति । तस्योद्धवीत तस्य नाश्नीयाद्यावज्जीवं तथा नान्तमेति तथा ज्योग्जीवति स एतस्य सर्वस्यान्नाद्यस्य सम्भृतस्य स्रुवेणोपघातं वाजप्रसवीयानि जुहोति तद्याभ्य एवैतद्देवताभ्यो जुहोति ता अस्मै प्रसुवन्ति ताभिः प्रसूत उज्जयति तस्माद्वाजप्रसवीयानि जुहोति - ५.२.२.[४]

स जुहोति । वाजस्येमं प्रसवः सुषुवेऽग्रे सोमं राजानमोषधीष्वप्सु ॥ ता अस्मभ्यं मधुमतीर्भवन्तु वयं राष्ट्रे जागृयाम पुरोहिताः स्वाहा - ५.२.२.[५]

वाजस्येमाम् । प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट्। अदित्सन्तं दापयति प्रजानन्त्स नो रयिं सर्ववीरं नियच्छतु स्वाहा - ५.२.२.[६]



वाजस्य नु । प्रसव आबभूवेमा च विश्वा भुवनानि सर्वतः॥ सनेमि राजा परियाति विद्वान्प्रजां पुष्टिं वर्धयमानो अस्मे स्वाहा - ५.२.२.[७]

सोमं राजानमवसेऽग्निमन्वारभामहे । आदित्यान्विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिं स्वाहा - ५.२.२.[८]

अर्यमणं बृहस्पतिम् । इन्द्रं दानाय चोदय वाचं विष्णुं सरस्वतीं सवितारं च वाजिनं स्वाहा - ५.२.२.[९]

अग्ने अच्छा । वदेह नः प्रति नः सुमना भव। प्र नो यच्छ सहस्रजित्त्वं हि धनदा असि स्वाहा - ५.२.२.[१०]

प्र नः । यच्छत्वर्यमा प्र पूषा प्र बृहस्पतिः प्र वाग्देवी ददातु नः स्वाहेति - ५.२.२.[११]

अथैनं परिशिष्टेनाभिषिञ्चति ।अन्नाद्येनैवैनमेतदभिषिञ्चत्यन्नाद्यमेवास्मिन्नेतद्दधाति तस्मादेनम्परिशिष्टेनाभिषिञ्चति - ५.२.२.[१२]

सोऽभिषिञ्चति । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिति देवहस्तैरेवैनमेतदभिषिञ्चति सरस्वत्यै वाचो यन्तुर्यन्त्रिये दधामीति वाग्वै सरस्वती तदेनं वाच एव यन्तुर्यन्त्रिये दधाति - ५.२.२.[१३]

तदु हैक आहुः । विश्वेषां त्वा देवानां यन्तुर्यन्त्रिये दधामीति सर्वं वै विश्वेदेवास्तदेनं सर्वस्यैव यन्तुर्यन्त्रिये दधाति तदु तथा न ब्रूयात्सरस्वत्यै त्वा वाचो यन्तुर्यन्त्रिये दधामीत्येव ब्रूयाद्वाग्वै सरस्वती तदेनं वाच एव यन्तुर्यन्त्रिये दधाति बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसाविति नाम गृह्णाति तद्बृहस्पतेरेवैनमेतत्सायुज्यं सलोकतां गमयति - ५.२.२.[१४]



अथाह । सम्राडयमसौ सम्राडयमसाविति निवेदितमेवैनमेतत्सन्तं देवेभ्यो निवेदयत्ययं महावीर्यो योऽभ्यषेचीत्ययं युष्माकैकोऽभूत्तं गोपायतेत्येवैतदाह त्रिष्कृत्व आह त्रिवृद्धि यज्ञः - ५.२.२.[१५]

अथोज्जितीः । जुहोति वा वाचयति वा यदि जुहोति यदि वाचयति समान एव बन्धुः - ५.२.२.[१६]

स वाचयति । अग्निरेकाक्षरेण प्राणमुदजयत्तमुज्जेषं प्रजापतिः सप्तदशाक्षरेण सप्तदशं स्तोममुदजयत्तमुज्जेषमिति तद्यदेवैताभिरेतादेवता उदजयंस्तदेवैष एताभिरुज्जयति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति - ५.२.२.[१७]

अथाहाग्नये स्विष्टकृतेऽनुब्रूहीति । तद्यदन्तरेणाहुती एतत्कर्म क्रियत एष वै प्रजापतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते तन्मध्यत एवैतत्प्रजापतिमुज्जयति तस्मादन्तरेणाहुती एतत्कर्म क्रियत आश्राव्याहाग्निं स्विष्टकृतं यजेति वषट्कृते जुहोति - ५.२.२.[१८]

अथेडामादधाति । उपहूतायामिडायामप उपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति तं स्तोत्राय प्रमीवति स उपावरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य - ५.२.२.[१९]

तद्धैके । एतत्कृत्वाथैतत्कुर्वन्ति तदु तथा न कुर्यादात्मा वै स्तोत्रं प्रजा शस्त्रमेतस्माद्ध स यजमानं प्रणाशयति स जिह्म एति स ह्वलति तस्मादेतदेव कृत्वाऽथैतत्कुर्यात् - ५.२.२.[२०]



अथेडामादधाति । उपहूतायामिडायामप उपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति तं स्तोत्राय प्रमीवति स उपावरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य - ५.२.२.[२१]
इति वाजपेययज्ञाधिकारः

## ५.२.३ अथ राजसूययज्ञः
पूर्णाहुतिं जुहोति । सर्वं वै पूर्णं सर्वं परिगृह्य सूया इति तस्यां वरं ददाति सर्वं वै वरः सर्वं परिगृह्य सूया इति स यदि कामयेत जुहुयादेतां यद्यु कामयेतापि नाद्रियेत - ५.२.३.[१]

अथ श्वो भूते । अनुमत्यै हविरष्टाकपालं पुरोडाशं निर्वपति स ये जघनेन शम्यां पिष्यमाणानामवशीयन्ते पिष्टानि वा तण्डुला वा तान्त्स्रुवे सार्धं संवपत्यन्वाहार्यपचनादुल्मुकमाददते तेन दक्षिणा यन्ति स यत्र स्वकृतं वेरिणं विन्दति श्वभ्रप्रदरं वा - ५.२.३.[२]

तदग्निं समाधाय जुहोति । एष ते निर्ऋते भागस्तं जुषस्व स्वाहेतीयं वै निर्ऋतिः सा यं पाप्मना गृह्णाति तं निर्ऋत्या गृह्णाति तद्यदेवास्या अत्र नैर्ऋतं रूपं तदेवैतच्छमयति तथो हैनं सूयमानं निर्ऋतिर्न गृह्णात्यथ यत्स्वकृते वेरिणे जुहोति श्वभ्रप्रदरे वैतदु ह्यस्यै निर्ऋतिगृहीतम् - ५.२.३.[३]

अथाप्रतीक्षं पुनरायन्ति । अथानुमत्या अष्टाकपालेन पुरोडाशेन प्रचरतीयं वा अनुमतिः स यस्तत्कर्म शक्नोति कर्तुं यच्चिकीर्षतीयं हास्मै तदनुमन्यते तदिमामेवैतत्प्रीणात्यनयाऽनुमत्याऽनुमतः सूया इति - ५.२.३.[४]

अथ यदष्टाकपालो भवति । अष्टाक्षरा वै गायत्री गायत्री वा इयं पृथिव्यथ यत्समानस्य हविष उभयत्र जुहोत्येषा ह्येवैतदुभयं तस्य वासो दक्षिणा यद्वै सवासा अरण्यं नोदाशंसते निधाय वै तद्वासोऽतिमुच्यते तथो हैनं सूयमानमासङ्गो न विन्दति - ५.२.३.[५]



अथ श्वो भूते । आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपति तेन यथेष्ट्यैवं यजते तद्यदेवादः प्रजातमाग्नावैष्णवं दीक्षणीयं हविस्तदेवैतदग्निर्वै सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वत्यग्निर्वै यज्ञस्यावराध्यो विष्णुः परार्ध्यस्तत्सर्वाश्चैवैतद्देवताः परिगृह्य सर्वं च यज्ञं परिगृह्य सूया इति तस्मादाग्नावैष्णव एकादशकपालः पुरोडाशो भवति तस्य हिरण्यं दक्षिणाग्नेयो वा एष यज्ञो भवत्यग्ने रेतो हिरण्यं यो वै विष्णुः स यज्ञोऽग्निरु वै यज्ञ एव तदु तदाग्नेयमेव तस्माद्धिरण्यं दक्षिणा - ५.२.३.[६]

अथ श्वो भूते । अग्नीषोमीयमेकादशकपालं पुरोडाशं निर्वपति तेन यथेष्ट्यैवं यजत एतेन वा इन्द्रो वृत्रमहन्नेतेनो एव व्यजयत याऽस्येयं विजितिस्तां तथो एवैष एतेन पाप्मानं द्विषन्तं भ्रातृव्यं हन्ति तथो एव विजयते विजितेऽभयेऽनाष्ट्रे सूया इति तस्मादग्नीषोमीय एकादशकपालः पुरोडाशो भवति तस्योत्सृष्टो गौर्दक्षिणोत्सर्जं वा अमुं चन्द्रमसं घ्नन्ति पौर्णमासेनाह घ्नन्त्यामावास्येनोत्सृजन्ति तस्मादुत्सृष्टो गौर्दक्षिणा - ५.२.३.[७]

अथ श्वो भूते । ऐन्द्राग्नं द्वादशकपालं पुरोडाशं निर्वपति तेन यथेष्ट्यैवं यजते यत्र वा इन्द्रो वृत्रमहंस्तदस्य भीतस्येन्द्रियं वीर्यमपचक्राम स एतेन हविषेन्द्रियं वीर्यं पुनरात्मन्नधत्त तथो एवैष एतेन हविषेन्द्रियं वीर्यमात्मन्धत्ते तेजो वा अग्निरिन्द्रियं वीर्यमिन्द्र उभे वीर्ये परिगृह्य सूया इति तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति तस्यर्षभोऽनड्वान्दक्षिणा स हि वहेनाग्नेय आण्डाभ्यामैन्द्रस्तस्माद्दृषभोऽनड्वान्दक्षिणा - ५.२.३.[८]

अथाग्रयणेष्ट्या यजते । सर्वान्वा एष यज्ञक्रतूनवरुन्द्धे सर्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वा एषेष्टिर्यदाग्रयणेष्टिरनया मेऽपीष्टमसदनयापि सूया इति तस्मादाग्रयणेष्ट्या यजत ओषधीर्वा एष सूयमानोऽभिसूयते तदोषधीरेवैतदनमीवा अकिल्विषाः कुरुतेऽनमीवा अकिल्विषा ओषधीरभिसूया इति तस्य गौर्दक्षिणा - ५.२.३.[९]

अथ चातुर्मास्यैर्यजते । सर्वान्वा एष यज्ञक्रतूनवरुन्द्धे सर्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वा एष यज्ञक्रतुर्यच्चातुर्मास्यान्येभिर्मेऽपीष्टमसदेभिरपि सूया इति तस्माच्चातुर्मास्यैर्यजते - ५.२.३.[१०]



##५.२.४ चातुर्मास्यादियागाः

वैश्वदेवेन यजते । वैश्वदेवेन वै प्रजापतिर्भूमानं प्रजाः ससृजे भूमानम्प्रजाः सृष्ट्वा सूया इति तथो एवैष एतद्वैश्वदेवेनैव भूमानं प्रजाः सृजते भूमानं प्रजाः सृष्ट्वा सूया इति - ५.२.४.[१]

अथ वरुणप्रघासैर्यजते । वरुणप्रघासैर्वै प्रजापतिः प्रजा वरुणपाशात्प्रामुञ्चत्ता अस्यानमीवा अकिल्विषाः प्रजा प्राजायन्तानमीवा अकिल्विषाः प्रजा अभि सूया इति तथो एवैष एतद्वरुणप्रघासैरेव प्रजा वरुणपाशात्प्रमुञ्चति ता अस्यानमीवा अकिल्विषाः प्रजाः प्रजायन्तेऽनमीवा अकिल्विषाः प्रजा अभि सूया इति - ५.२.४.[२]

अथ साकमेधैर्यजते । साकमेधैर्वै देवा वृत्रमघ्नंस्तैर्वेव व्यजयन्त येयमेषां विजितिस्तां तथो एवैष एतैः पाप्मानं द्विषन्तं भ्रातृव्यं हन्ति तथो एव विजयते विजितेऽभयेऽनाष्ट्रे सूया इति - ५.२.४.[३]

अथ शुनासीर्येण यजते । उभौ रसौ परिगृह्य सूया इत्यथ पञ्चवातीयं स पञ्चधाऽऽहवनीयं व्युह्य स्रुवेणोपघातं जुहोति - ५.२.४.[४]

स पूर्वार्ध्ये जुहोति । अग्निनेत्रेभ्यो देवेभ्यः पुरःसद्भ्यः स्वाहेत्यथ दक्षिणार्ध्ये जुहोति यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहेत्यथ पश्चार्ध्ये जुहोति विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहेत्यथोत्तरार्ध्ये जुहोति मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्यो उत्तरासद्भ्यः स्वाहेत्यथ मध्ये जुहोति सोमनेत्रेभ्यो देवेभ्य उपरिसद्भ्यो
दुवस्वद्भ्यः स्वाहेति - ५.२.४.[५]



अथ सार्द्धं समुह्य जुहोति । ये देवा अग्निनेत्राः पुरःसदस्तेभ्यः स्वाहा ये देवा यमनेत्रा दक्षिणासदस्तेभ्यः स्वाहा ये देवा विश्वदेवनेत्राः पश्चात्सदस्तेभ्यः स्वाहा ये देवा मित्रावरुणनेत्रा वा मरुन्नेत्रा वोत्तरासदस्तेभ्यः स्वाहा ये देवाः सोमनेत्रा उपरिसदो दुवस्वन्तस्तेभ्यः स्वाहेति तद्यदेवं जुहोति - ५.२.४.[६]

यत्र वै देवाः । साकमेधैर्व्यजयन्त येयमेषां विजितिस्तां तद्धोचुरुत्पिबन्ते वा इमानि दिक्षु नाष्ट्रा रक्षांसि हन्तैभ्यो वज्रं प्रहरामेति वज्रो वा आज्यं त एतेन वज्रेणाज्येन दिक्षु नाष्ट्रा रक्षांस्यवाघ्नंस्ते व्यजयन्त येयमेषां विजितिस्तां तथो एवैष एतेन वज्रेणाज्येन दिक्षु नाष्ट्रा रक्षांस्यवहन्ति तथो एव विजयते विजितेऽभयेऽनाष्ट्रे सूया इति - ५.२.४.[७]

अथ यदेता अपराः पञ्चाहुतीर्जुहोति । क्षण्वन्ति वा एतदग्नेर्विवृहन्ति यत्पञ्चधाहवनीयं व्यूहन्ति तदेवास्यैतेन संदधाति तस्मादेता अपराः पञ्चाहुतीर्जुहोति - ५.२.४.[८]

तस्य प्रष्टिवाहनोऽश्वरथो दक्षिणा । त्रयोऽश्वा द्वौ सव्यष्टृसारथी ते पञ्चप्राणा यो वै प्राणः स वातस्तद्यदेतस्य कर्मण एषा दक्षिणा तस्मात्पञ्चवातीयं नाम - ५.२.४.[९]

स हैतेनापि भिषज्येत् । अयं वै प्राणो योऽयं पवते यो वै प्राणः स आयुः सोऽयमेक इवैव पवते सोऽयं पुरुषेऽन्तः प्रविष्टो दशधा विहितो दश वा एता आहुतीर्जुहोति तदस्मिन्दश प्राणान्कृत्स्नमेव सर्वमायुर्दधाति स यदिहापि गतासुरिव भवत्या हैवैनेन हरति - ५.२.४.[१०]

अथेन्द्रतुरीयम् । आग्नेयोऽष्टाकपालः पुरोडाशो भवति वारुणो यवमयश्चरू रौद्रो गावेधुकश्चरुरनडुह्यै वहलाया ऐन्द्रं दधि तेनेन्द्रतुरीयेण यजत इन्द्राग्नी उ हैवैतत्समूदाते उत्पिबन्ते वा इमानि दिक्षु नाष्ट्रा रक्षांसि हन्तैभ्यो वज्रं प्रहरावेति - ५.२.४.[११]

स हाग्निरुवाच । त्रयो मम भागाः सन्त्वेकस्तवेति तथेति तावेतेन हविषा दिक्षु नाष्ट्रा रक्षांस्यवाहतां तौ व्यजयेतां यैनयोरियं विजितिस्तां तथो एवैष एतेन हविषा दिक्षु नाष्ट्रा रक्षांस्यवहन्ति तथो एव विजयते विजितेऽभयेऽनाष्ट्रे सूया इति - ५.२.४.[१२]



स य एष आग्नेयोऽष्टाकपालः पुरोडाशो भवति । सोऽग्नेरेको भागोऽथ यद्वारुणो यवमयश्चरुर्भवति यो वै वरुणः सोऽग्निः सोऽग्नेर्द्वितीयो भागोऽथ यद्रौद्रो गावेधुकश्चरुर्भवति यो वै रुद्रः सोऽग्निः सोऽग्नेस्तृतीयो भागोऽथ यद्गावेधुको भवति वास्तव्यो वा एष देवो वास्तव्या गवेधुकास्तस्माद्गावेधुको भवत्यथ यदनडुह्यै वहलाया ऐन्द्रं दधि भवति स इन्द्रस्य चतुर्थो भागो यद्वै चतुर्थं तत्तुरीयं तस्मादिन्द्रतुरीयं नाम तस्यैषैवानडुही वहला दक्षिणा सा हि वहेनाग्नेय्यग्निदग्धमिव ह्यस्यै वहं भवत्यथ यत्स्त्री सती वहत्यधर्मेण तदस्यै वारुणं रूपमथ यद्गौस्तेन रौद्र्यथ यदस्या ऐन्द्रं दधि तेनैन्द्र्येषा हि वा एतत्सर्वं व्यश्नुते तस्मादेषैवानडुही वहला दक्षिणा - ५.२.४.[१३]

अथापामार्गहोमं जुहोति । अपामार्गैर्वै देवा दिक्षु नाष्ट्रा रक्षांस्यपामृजत ते व्यजयन्त येयमेषां विजितिस्तां तथो एवैष एतदपामार्गैरेव दिक्षु नाष्ट्रा रक्षांस्यपमृष्टे तथो एव विजयते विजितेऽभयेऽनाष्ट्रे सूया इति - ५.२.४.[१४]

स पालाशे वा स्रुवे वैकङ्कते वा । अपामार्गतण्डुलानादत्तेऽन्वाहार्यपचनादुल्मुकमाददते तेन प्राञ्चो वोदञ्चो वा यन्ति तदग्निं समाधाय जुहोति - ५.२.४.[१५]

स उल्मुकमादत्ते । अग्ने सहस्व पृतना इति युधो वै पृतना युधः सहस्वेत्येवैतदाहाभिमातीरपास्येति सपत्नो वा अभिमातिः सपत्नमपजहीत्येवैतदाह दुष्टरस्तरन्नरातीरिति दुस्तरो ह्येष रक्षोभिर्नाष्ट्राभिस्तरन्नरातीरिति सर्वं ह्येष पाप्मानं तरति तस्मादाह तरन्नरातीरिति वर्चो धा यज्ञवाहसीति साधु यजमानं दधदित्येवैतदाह - ५.२.४.[१६]



तदग्निं समाधाय जुहोति । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामुपांशोर्वीर्येण जुहोमीति यज्ञमुखं वा उपांशुर्यज्ञमुखेनैवैतन्नाष्ट्रा रक्षांसि हन्ति हतं रक्षः स्वाहेति तन्नाष्ट्रा रक्षांसि हन्ति - ५.२.४.[१७]

स यदि पालाशः स्रुवो भवति । ब्रह्म वै पलाशो ब्रह्मणैवैतन्नाष्ट्रा रक्षांसि हन्ति यद्यु वैकङ्कतो वज्रो वै विकङ्कतो वज्रेणैवैतन्नाष्ट्रा रक्षांसि हन्ति रक्षसां त्वा वधायेति तन्नाष्ट्रा रक्षांसि हन्ति - ५.२.४.[१८]

स यदि प्राङित्वा जुहोति । प्राञ्चं स्रुवमस्यति यद्युदङ्ङित्वा जुहोत्युदञ्चं स्रुवमस्यत्यवधिष्म रक्ष इति तन्नाष्ट्रा रक्षांसि हन्ति - ५.२.४.[१९]

अथाप्रतीक्षं पुनरायन्ति । स हैतेनापि प्रतिसरं कुर्वीत स यस्यां ततो दिशि भवति तत्प्रतीत्य जुहोति प्रतीचीनफलो वा अपामार्गः स यो हास्मै तत्र किंचित्करोति तमेव

तत्प्रत्यग्धूर्वति तस्य नामादिशेदवधिष्मामुमसौ हत इति तन्नाष्ट्रा रक्षांसि हन्ति - ५.२.४.[२०]

##५.२.५ त्रिषंयुक्तादियागाः
आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपति । ऐन्द्रावैष्णवं चरुं वैष्णवं त्रिकपालं वा पुरोडाशं चरुं वा तेन त्रिषंयुक्तेन यजते पुरुषानेतद्देवा उपायंस्तथो एवैष एतत्पुरुषानेवोपैति - ५.२.५.[१]

स यदाग्नावैष्णवः । एकादशकपालः पुरोडाशो भवत्यग्निर्वै दाता वैष्णवाः पुरुषास्तदस्मा अग्निर्दाता पुरुषान्ददाति - ५.२.५.[२]

अथ यदैन्द्रावैष्णवः । चरुर्भवतीन्द्रो वै यजमानो वैष्णवाः पुरुषास्तदस्मा अग्निर्दाता पुरुषान्ददाति तैरेवैतत्संस्पृशते तानात्मन्कुरुते - ५.२.५.[३]



अथ यद्वैष्णवः । त्रिकपालो वा पुरोडाशो भवति चरुर्वा यानेवास्मा अग्निर्दाता पुरुषान्ददाति तेष्वेवैतदन्ततः प्रतितिष्ठति यद्वै पुरुषवान्कर्म चिकीर्षति शक्नोति वै तत्कर्तुं तत्पुरुषानेवैतदुपैति पुरुषवान्त्सूया इति तस्य वामनो गौर्दक्षिणा स हि वैष्णवो यद्वामनः - ५.२.५.[४]

अथापरेण त्रिषंयुक्तेन यजते । स आग्नापौष्णमेकादशकपालं पुरोडाशं निर्वपत्यैन्द्रापौष्णं चरुं पौष्णं चरुं तेन त्रिषंयुक्तेन यजते पशूनेव तद्देवा उपायंस्तथो एवैष एतत्पशूनेवोपैति - ५.२.५.[५]

स यदाग्नापौष्णः । एकादशकपालः पुरोडाशो भवत्यग्निर्वै दाता पौष्णाः पशवस्तदस्मा अग्निरेव दाता पशून्ददाति - ५.२.५.[६]

अथ यदैन्द्रापौष्णः । चरुर्भवतीन्द्रो वै यजमानः पौष्णाः पशवः स यानेवास्मा अग्निर्दाता पशून्ददाति तैरेवैतत्संस्पृशते तानात्मन्कुरुते - ५.२.५.[७]

अथ यत्पौष्णः । चरुर्भवति यानेवास्मा अग्निर्दाता पशून्ददाति तेष्वेवैतदन्ततः प्रतितिष्ठति यद्वै पशुमान्कर्म चिकीर्षति शक्नोति वै तत्कर्तुं तत्पशूनेवैतदुपैति पशुमान्त्सूया इति तस्य श्यामो गौर्दक्षिणा स हि पौष्णो यच्छ्यामो द्वे वै श्यामस्य रूपे शुक्लं चैव लोम कृष्णं च द्वन्द्वं वै मिथुनं प्रजननं वै पूषा पशवो हि पूषा पशवो हि प्रजननम्मिथुनमेवैतत्प्रजननं क्रियते तस्माच्छ्यामो गौर्दक्षिणा - ५.२.५.[८]

अथापरेण त्रिषंयुक्तेन यजते । सोऽग्नीषोमीयमेकादशकपालं पुरोडाशं निर्वपत्यैन्द्रासौम्यं चरुं सौम्यं चरुं तेन त्रिषंयुक्तेन यजते वर्च एव तद्देवा उपायंस्तथो एवैष एतद्वर्च एवोपैति - ५.२.५.[९]



स यदग्नीषोमीयः । एकादशकपालः पुरोडाशो भवत्यग्निर्वै दाता वर्चः सोमस्तदस्मा अग्निरेव दाता वर्चो ददाति - ५.२.५.[१०]

अथ यदैन्द्रासौम्यः । चरुर्भवतीन्द्रो वै यजमानो वर्चः सोमः स यदेवास्माअग्निर्दाता वर्चो ददाति तेनैवैतत्संस्पृशते तदात्मन्कुरुते - ५.२.५.[११]

अथ यत्सौम्यः । चरुर्भवति यदेवास्मा अग्निर्दाता वर्चो ददाति तस्मिन्नेवैतदन्ततः प्रतितिष्ठति यद्वै वर्चस्वी कर्म चिकीर्षति शक्नोति वै तत्कर्तुं तद्वर्च एवैतदुपैति वर्चस्वी सूया इति नो ह्यवर्चसो व्याप्त्या चनार्थोऽस्ति तस्य बभ्रुर्गौर्दक्षिणा स हि सौम्यो यद्बभ्रुः - ५.२.५.[१२]

अथ श्वोभूते । वैश्वानरं द्वादशकपालं पुरोडाशं निर्वपति वारुणं यवमयं चरुं ताभ्यामनूचीनाहं वेष्टिभ्यां यजते समानबर्हिर्भ्यां वा - ५.२.५.[१३]

स यद्वैश्वानरो भवति । संवत्सरो वै वैश्वानरः संवत्सरः प्रजापतिः प्रजापतिरेव तद्भूमानं प्रजाः ससृजे भूमानं प्रजाः सृष्ट्वा सूया इति तथो एवैष एतद्भूमानं प्रजाः सृजते भूमानं प्रजाः सृष्ट्वा सूया इति - ५.२.५.[१४]

अथ यद्द्वादशकपालो भवति । द्वादश वै मासाः संवत्सरस्य संवत्सरो वैश्वानरस्तस्माद्द्वादशकपालो भवति - ५.२.५.[१५]

अथ यद्वारुणो यवमयश्चरुर्भवति ।तत्सर्वस्मादेवैतद्वरुणपाशात्सर्वस्माद्वरुण्यात्प्रजाः प्रमुञ्चति ता अस्यानमीवा अकिल्विषाः प्रजाः प्रजायन्तेऽनमीवा अकिल्विषाः प्रजा अभि सूया इति - ५.२.५.[१६]

ऋषभो वैश्वानरस्य दक्षिणा । संवत्सरो वै वैश्वानरः संवत्सरः प्रजापतिर्ऋषभो वै पशूनां प्रजापतिस्तस्मादृषभो वैश्वानरस्य दक्षिणा कृष्णं वासो वारुणस्य तद्धि वारुणं यत्कृष्णं यदि कृष्णं न विन्देदपि यदेव किं च वासः स्याद्ग्रन्थिभिर्हि वासो वारुणं वरुण्यो हि ग्रन्थिः - ५.२.५.[१७]



##५.३.१ रत्नयागाः

अरण्योरग्नी समारोह्य । सेनान्यो गृहान्परेत्याग्नयेऽनीकवतेऽष्टाकपालम्पुरोडाशं निर्वपत्यग्निर्वै देवतानामनीकं सेनाया वै सेनानीरनीकं तस्मादग्नयेऽनीकवत एतद्वा अस्यैकं रत्नं यत्सेनानीस्तस्मा एवैतेन सूयते तं स्वमनपक्रमिणं कुरुते तस्य हिरण्यं दक्षिणाग्नेयो वा एष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणा - ५.३.१.[१]

अथ श्वो भूते । पुरोहितस्य गृहान्परेत्य बार्हस्पत्यं चरुं निर्वपति बृहस्पतिर्वै देवानां पुरोहित एष वा एतस्य पुरोहितो भवति तस्माद्बार्हस्पत्यो भवत्येतद्वा अस्यैकं रत्नं यत्पुरोहितस्तस्मा एवैतेन सूयते तं स्वमनपक्रमिणं कुरुते तस्य शितिपृष्ठो गौर्दक्षिणैषा वा ऊर्ध्वा बृहस्पतेर्दिक्तदेष उपरिष्टादर्यम्णः पन्थास्तस्माच्छितिपृष्ठो बार्हस्पत्यस्य दक्षिणा - ५.३.१.[२]

अथ श्वो भूते । सूयमानस्य गृह ऐन्द्रमेकादशकपालं पुरोडाशं निर्वपति क्षत्रं वा इन्द्रः क्षत्रं सूयमानस्तस्मादैन्द्रो भवति तस्यर्षभो दक्षिणा स ह्यैन्द्रो यदृषभः - ५.३.१.[३]

अथ श्वो भूते । महिष्यै गृहान्परेत्य आदित्यं चरुं निर्वपतीयं वै पृथिव्यदितिः सेयं देवानां पत्न्येषा वा एतस्य पत्नी भवति तस्मादादित्यो भवत्येतद्वा अस्यैकं रत्नं यन्महिषी तस्या एवैतेन सूयते तां स्वामनपक्रमिणीं कुरुते तस्यै धेनुर्दक्षिणा धेनुरिव वा इयं मनुष्येभ्यः सर्वान्कामान्दुहे माता धेनुर्मातेव वा इयं मनुष्यान्बिभर्ति तस्माद्धेनुर्दक्षिणा - ५.३.१.[४]

अथ श्वो भूते । सूतस्य गृहान्परेत्य वारुणं यवमयं चरुं निर्वपति सवो वै सूतः सवो वै देवानां वरुणस्तस्माद्वारुणो भवत्येतद्वा अस्यैकं रत्नं यत्सूतस्तस्मा एवैतेन सूयते तं स्वमनपक्रमिणं कुरुते तस्याश्वो दक्षिणा स हि वारुणो यदश्वः - ५.३.१.[५]



अथ श्वो भूते । ग्रामण्यो गृहान्परेत्य मारुतं सप्तकपालं पुरोडाशं निर्वपति विशो वै मरुतो वैश्यो वै ग्रामणीस्तस्मान्मारुतो भवत्येतद्वा अस्यैकं रत्नं यद्ग्रामणीस्तस्मा एवैतेन सूयते तं स्वमनपक्रमिणं कुरुते तस्य पृषन्गौर्दक्षिणा भूमा वा एतद्रूपाणां यत्पृषतो गोर्विशो वै मरुतो भूमो वै विट्तस्मात्पृषन्गौर्दक्षिणा - ५.३.१.[६]

अथ श्वो भूते । क्षत्तुर्गृहान्परेत्य सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोडाशं निर्वपति सविता वै देवानां प्रसविता प्रसविता वै क्षत्ता तस्मात्सावित्रो भवत्येतद्वा अस्यैकं रत्नं यत्क्षत्ता तस्मा एवैतेन सूयते तं स्वमनपक्रमिणं कुरुते तस्य श्येतोऽनड्वान्दक्षिणैष वै सविता य एष तपत्येति वा एष एत्यनड्वान्युक्तस्तद्यच्छ्येतो भवति श्येत इव ह्येष उद्यंश्चास्तं च यन्भवति तस्माच्छ्येतोऽनड्वान्दक्षिणा - ५.३.१.[७]

अथ श्वो भूते । संग्रहीतुर्गृहान्परेत्याश्विनं द्विकपालं पुरोडाशं निर्वपति सयोनी वा अश्विनौ सयोनी सव्यष्टृसारथी समानं हि रथमधितिष्ठतस्तस्मादाश्विनो भवत्येतद्वा अस्यैकं रत्नं यत्संग्रहीता तस्मा एवैतेन सूयते तं स्वमनपक्रमिणं कुरुते तस्य यमौ गावौ दक्षिणा तौ

हि सयोनी यद्यमौ यदि यमौ न विन्देदप्यनूचीनगर्भावेव गावौ दक्षिणा स्यातां ता उ ह्यपि समानयोनी - ५.३.१.[८]

अथ श्वो भूते । भागदुघस्य गृहान्परेत्य पौष्णं चरुं निर्वपति पूषा वै देवानां भागदुघ एष वा एतस्य भागदुघो भवति तस्मात्पौष्णो भवत्येतद्वा अस्यैकं रत्नं यद्भागदुघस्तस्मा एवैतेन सूयते तं स्वमनपक्रमिणं कुरुते तस्य श्यामो गौर्दक्षिणा तस्यासावेव बन्धुर्योऽसौ त्रिषंयुक्तेषु - ५.३.१.[९]

अथ श्वो भूते । अक्षावापस्य च गृहेभ्यो गोविकर्तस्य च गवेधुकाः सम्भृत्य सूयमानस्य गृहे रौद्रं गावेधुकं चरुं निर्वपति ते वा एते द्वे सती रत्ने एकं करोति सम्पदः कामाय तद्यदेतेन यजते यां वा इमां सभायां घ्नन्ति रुद्रो हैतामभिमन्यतेऽग्निर्वै रुद्रोऽधिदेवनं वा अग्निस्तस्यैतेऽङ्गारा यदक्षास्तमेवैतेन प्रीणाति तस्य ह वा एषानुमता गृहेषु हन्यते यो वा राजसूयेन यजते यो वैतदेवं वेदैतद्वा अस्यैकं रत्नं यदक्षावापश्च गोविकर्तश्च ताभ्यामेवैतेन सूयते तौ स्वावनपक्रमिणौ कुरुते तस्य द्विरूपो गौर्दक्षिणा शितिबाहुर्वा शितिबालो वासिर्नखरो बालदाम्नाक्षावपनं प्रबद्धमेतदु हि तयोर्भवति - ५.३.१.[१०]

अथ श्वो भूते । पालागलस्य गृहान्परेत्य चतुर्गृहीतमाज्यं गृहीत्वाध्वन आज्यं जुहोति जुषाणोऽध्वाज्यस्य वेतु स्वाहेति प्रहेयो वै पालागलोऽध्वानं वै प्रहित एति तस्मादध्वन आज्यं जुहोत्येतद्वा अस्यैकं रत्नं यत्पालागलस्तस्मा एवैतेन सूयते तं स्वमनपक्रमिणं कुरुते तस्य दक्षिणाऽप्युक्षणवेष्टितं धनुश्चर्ममया बाणवन्तो लोहित उष्णीष एतदु हि तस्य भवति - ५.३.१.[११]

तानि वा एतानि । एकादश रत्नानि सम्पादयत्येकादशाक्षरा वै त्रिष्टुब्वीर्यं त्रिष्टुब्वीर्यमेवैतद्रत्नान्यभिसम्पादयति तद्यद्रत्निनां हविर्भिर्यजत एतेषां वै राजा भवति तेभ्य एवैतेन सूयते तान्त्स्वाननपक्रमिणः कुरुते - ५.३.१.[१२]

अथ श्वो भूते । परिवृत्त्यै गृहान्परेत्य नैर्ऋतं चरुं निर्वपति या वा अपुत्रा पत्नी सा परिवृत्ती स कृष्णानां व्रीहीणां नखैर्निर्भिद्य तण्डुलान्नैर्ऋतं चरुं श्रपयति स जुहोत्येष ते निर्ऋते भागस्तं जुषस्व स्वाहेति या वा अपुत्रा पत्नी सा निर्ऋतिगृहीता तद्यदेवास्य अत्र नैर्ऋतं रूपं तदेवैतच्छमयति तथो हैनं सूयमानं निर्ऋतिर्न गृह्णाति तस्य दक्षिणा कृष्णा गौः परिमूर्णी पर्यारिणी सा ह्यपि निर्ऋतिगृहीता तामाह मामेऽद्येशायां वात्सीदिति तत्पाप्मानमपादत्ते - ५.३.१.[१३]

##५.३.२ अथोपरियागाः

उपरिष्टाद्रत्नानां सौमारौद्रेण यजते । स श्वेतायै श्वेतवत्सायै पयसि श्रृतो भवति तद्यदुपरिष्टाद्रत्नानां सौमारौद्रेण यजते - ५.३.२.[१]

स्वर्भानुर्ह वा आसुरः । सूर्यं तमसा विव्याध स तमसा विद्धो न व्यरोचत तस्य सोमारुद्रावेवैतत्तमोऽपाहतां स एषोऽपहतपाप्मा तपति तथो एवैष एतत्तमः प्रविशत्येतं वा तमः प्रविशति यदयज्ञियान्यज्ञेन प्रसजत्ययज्ञियान्वा एतद्यज्ञेन प्रसजति शूद्रांस्त्वद्यांस्त्वत्तस्य सोमारुद्रावेवैतत्तमोऽपहतः सोऽपहतपाप्मैव दीक्षते तद्यच्छ्वेतायै श्वेतवत्सायै पयसि श्रृतो भवति कृष्णं वै तमस्तत्तमोऽपहन्ति तस्यैषैव श्वेता श्वेतवत्सा दक्षिणा - ५.३.२.[२]

स हैतेनापि यजेत । योऽलं यशसे सन्नयशो भवति यो वा अनूचानः सोऽलं यशसेसन्नयशो भवति यो न यशो भवति स तमसा वै स तत्प्रावृतो भवति तस्य सोमारुद्रावेवैतत्तमोऽपहतः सोऽपहतपाप्मा ज्योतिरेव श्रिया यशसा भवति - ५.३.२.[३]

अथ मैत्राबार्हस्पत्यं चरुं निर्वपति । ह्वलति वा एष यो यज्ञपथादेत्येति वा एष यज्ञपथाद्यदयज्ञियान्यज्ञेन प्रसजत्ययज्ञियान्वा एतद्यज्ञेन प्रसजति शूद्रांस्त्वद्यांस्त्वन्मित्राबृहस्पती वै यज्ञपथो ब्रह्म हि मित्रो ब्रह्म हि यज्ञो ब्रह्म हि बृहस्पतिर्ब्रह्म हि यज्ञस्तत्पुनर्यज्ञपथमपिपद्यते सोऽपिपद्यैव यज्ञपथं दीक्षते तस्मान्मैत्राबार्हस्पत्यं चरुं निर्वपति - ५.३.२.[४]

तस्यावृत् । या स्वयम्प्रशीर्णाऽऽश्वत्थी शाखा प्राची वोदीची वा भवति तस्यै मैत्रम्पात्रं करोति वरुण्या वा एषा या परशुवृक्णाऽथैषा मैत्री या स्वयम्प्रशीर्णा तस्मात्स्वयम्प्रशीर्णायै शाखायै मैत्रं पात्रं करोति - ५.३.२.[५]

अथातच्य दधि । विनाट आसिच्य रथं युक्त्वाऽऽबध्य देदीयितवा आह तद्यत्स्वयमुदितं नवनीतं तदाज्यं भवति वरुण्यं वा एतद्यन्मथितमथैतन्मैत्रं यत्स्वयमुदितं तस्मात्स्वयमुदितमाज्यम्भवति - ५.३.२.[६]

द्वेधा तण्डुलान्कुर्वन्ति । स येऽणीयांसः परिभिन्नास्ते बार्हस्पत्या अथ येस्थवीयांसोऽपरिभिन्नास्ते मैत्रा न वै मित्रः कं चन हिनस्ति न मित्रं कश्चन हिनस्ति नैनं कुशो न कण्टको विभिनत्ति नास्य व्रणश्चनास्ति सर्वस्य ह्येव मित्रो मित्रम् - ५.३.२.[७]



अथ बार्हस्पत्यं चरुमधिश्रयति । तं मैत्रेण पात्रेणापिदधाति तदाज्यमानयति तत्तण्डुलानावपति स एष ऊष्मणैव श्रप्यते वरुण्यो वा एष योऽग्निना श्रृतोऽथैष मैत्रो य ऊष्मणा श्रृतस्तस्मादूष्मणा श्रृतो भवति तयोरुभयोरवद्यन्नाह मित्राबृहस्पतिभ्यामनुब्रूहीत्याश्राव्याह मित्राबृहस्पती यजेति वषट्कृते जुहोति - ५.३.२.[८]

##५.३.३ दीक्षणीययागाः

स वै दीक्षते । स उपवसथेऽग्नीषोमीयं पशुमालभते तस्य वपया प्रचर्याग्नीषोमीयमेकादशकपालं पुरोडाशं निर्वपति तदनु देवस्वां हवींषि निरुप्यन्ते - ५.३.३.[१]

सवित्रे सत्यप्रसवाय । द्वादशकपालं वाष्टाकपालं वा पुरोडाशं निर्वपति प्लाशुकानां व्रीहीणां सविता वा देवानां प्रसविता सवितृप्रसूतः सूया इत्यथ यत्प्लाशुकानां व्रीहीणां क्षिप्रे मा प्रसुवानिति - ५.३.३.[२]

अथाग्नये गृहपतये । अष्टाकपालं पुरोडाशं निर्वपत्याशूनां श्रीर्वै गार्हपतं यावतो यावत ईष्टे तदेनमग्निरेव गृहपतिर्गार्हपतमभि परिणयत्यथ यदाशूनां क्षिप्रे मा परिणयानिति - ५.३.३.[३]

अथ सोमाय वनस्पतये । श्यामाकं चरुं निर्वपति तदेनं सोम एव वनस्पतिरोषधिभ्यः सुवत्यथ यच्छ्यामाको भवत्येते वै सोमस्यौषधीनां प्रत्यक्षतमां यच्छ्यामाकास्तस्माच्छ्यामाको भवति - ५.३.३.[४]

अथ बृहस्पतये वाचे । नैवारं चरुं निर्वपति तदेनं बृहस्पतिरेव वाचे सुवत्यथ यन्नैवारो भवति ब्रह्म वै बृहस्पतिरेते वै ब्रह्मणा पच्यन्ते यन्नीवारास्तस्मान्नैवारो भवति - ५.३.३.[५]

अथेन्द्राय ज्येष्ठाय । हायनानां चरुं निर्वपति तदेनमिन्द्र एव ज्येष्ठो ज्यैष्ठ्यमभि परिणयत्यथ यद्धायनानां भवत्यतिष्ठा वा एता ओषधयोयद्धायना अतिष्ठो वा इन्द्रस्तस्माद्धायनानां भवति - ५.३.३.[६]



अथ रुद्राय पशुपतये । रौद्रं गावेधुकं चरुं निर्वपति तदेनं रुद्र एव पशुपतिः पशुभ्यः सुवत्यथ यद्गावेधुको भवति वास्तव्यो वा एष देवो वास्तव्या गवेधुकास्तस्माद्गावेधुको भवति - ५.३.३.[७]

अथ मित्राय सत्याय । नाम्बानां चरुं निर्वपति तदेनं मित्र एव सत्यो ब्रह्मणे सुवत्यथ यन्नाम्बानां भवति वरुण्या वा एता ओषधयो याः कृष्टे जायन्तेऽथैते मैत्रा यन्नाम्बास्तस्मान्नाम्बानां भवति - ५.३.३.[८]

अथ वरुणाय धर्मपतये । वारुणं यवमयं चरुं निर्वपति तदेनं वरुण एव धर्मपतिर्धर्मस्य पतिं करोति परमता वै सा यो धर्मस्य पतिरसद्यो हि परमतां गच्छति तं हि धर्म उपयन्ति तस्माद्वरुणाय धर्मपतये - ५.३.३.[९]

अथाग्नीषोमीयेन पुरोडाशेन प्रचरति । तस्यानिष्ट एव स्विष्टकृद्भवत्यथैतैर्हविर्भिः प्रचरति यदैतैर्हविर्भिः प्रचरति - ५.३.३.[१०]

अथैनं दक्षिणे बाहावभिपद्य जपति । सविता त्वा सवानां सुवतामग्निर्गृहपतीनां सोमो वनस्पतीनां बृहस्पतिर्वाच इन्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो वरुणो धर्मपतीनाम् - ५.३.३.[११]

इमं देवाः । असपत्नं सुवध्वमितीमं देवा अभ्रातृव्यं सुवध्वमित्येवैतदाह महते क्षत्राय महते ज्यैष्ठ्यायेति नात्र तिरोहितमिवास्ति महते जानराज्यायेति महते जनानां राज्यायेत्येवैतदाहेन्द्रस्येन्द्रियायेति वीर्यायेत्येवैतदाह यदाहेन्द्रस्येन्द्रियायेतीमममुष्यै पुत्रममुष्यै पुत्रमिति तद्यदेवास्य जन्म तत एवैतदाहास्यै विश इति यस्यै विशो राजा भवत्येष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजेति तदस्मा इदं सर्वमाद्यं करोति ब्राह्मणमेवापोद्धरति तस्माद्ब्राह्मणोऽनाद्यः सोमराजा हि भवति - ५.३.३.[१२]



एता ह वै देवाः सवस्येशते । तस्माद्देवस्वो नाम तदेनमेता एव देवताः सुवते ताभिः सूतः श्वः सूयते - ५.३.३.[१३]

ता वै द्विनाम्न्यो भवन्ति । द्वन्द्वं वै वीर्यं वीर्यवत्यः सुवान्ता इति तस्माद्द्विनाम्न्यो भवन्ति - ५.३.३.[१४]

अथाहाग्नये स्विष्टकृतेऽनुब्रूहीति । तद्यदन्तरेणाहुती एतत्कर्म क्रियत एष वै प्रजापतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनुप्रजायन्ते तदेनं मध्यत एवैतस्य प्रजापतेर्दधाति मध्यतः सुवति तस्मादन्तरेणाहुती एतत्कर्म क्रियत आश्राव्याहाग्नये स्विष्टकृते प्रेष्येति वषट्कृते जुहोति - ५.३.३.[१५]

##५.३.४ अभिषेचनीयानामपां संभरणम्

स वा अपः सम्भरति । तद्यदपः सम्भरति वीर्यं वा आपो वीर्यमेवैतद्रसमपां सम्भरति - ५.३.४.[१]

औदुम्बरे पात्रे । अन्नं वा ऊर्गुदुम्बर ऊर्जोऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरे पात्रे - ५.३.४.[२]

स सारस्वतीरेव प्रथमा गृह्णाति । अपो देवा मधुमतीरगृभ्णन्नित्यपो देवा रसवतीरगृह्णन्नित्येवैतदाहोर्जस्वती राजस्वश्चिताना इति रसवतीरित्येवैतदाह यदाहोर्जस्वतीरिति राजस्वश्चिताना इति याः प्रज्ञाता राजस्व इत्येवैतदाह याभिर्मित्रावरुणावभ्यषिञ्चन्नित्येताभिर्हि मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीरित्येताभिर्हीन्द्रं नाष्ट्रा रक्षांस्यत्यनयंस्ताभिरभिषिञ्चति वाग्वै सरस्वती वाचैवैनमेतदभिषिञ्चत्येता वा एका आपस्ता एवैतत्सम्भरति - ५.३.४.[३]



अथाध्वर्युः । चतुर्गृहीतमाज्यं गृहीत्वापोऽभ्यवैति तद्या ऊर्मी व्यर्दतः पशौ वा पुरुषे वाभ्यवेते तौ गृह्णाति - ५.३.४.[४]

स यः प्राङ्ङुदर्दति । तं गृह्णाति वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देहीति - ५.३.४.[५]

अथ यः प्रत्यङ्ङुदर्दति । तं गृह्णाति वृषसेनोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृषसेनोऽसि राष्ट्रदा राष्ट्रममुष्मै देहीति ताभिरभिषिञ्चति वीर्यं वा एतदपामुदर्दति पशौ वा पुरुषे वाभ्यवेते वीर्येणैवैनमेतदभिषिञ्चत्येता वा एका आपस्ता एवैतत्सम्भरति - ५.३.४.[६]

अथ स्यन्दमाना गृह्णाति । अर्थेत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहार्थेत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति वीर्येण वा एताः स्यन्दन्ते तस्मादेनाः स्यन्दमाना न किंचन प्रतिधारयते वीर्येणैवैनमेतदभिषिञ्चत्येता वा एका आपस्ता एवैतत्सम्भरति - ५.३.४.[७]

अथ याः स्यन्दमानानां प्रतीपं स्यन्दन्ते । ता गृह्णात्योजस्वती स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहौजस्वती स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति वीर्येण वा एताः स्यन्दमानानां प्रतीपं स्यन्दन्ते वीर्येणैवैनमेतदभिषिञ्चत्येता वा एका आपस्ता एवैतत्सम्भरति - ५.३.४.[८]

अथापयतीर्गृह्णाति । आपः परिवाहिणी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चत्येतस्यै वा एषापच्छिद्यैषैव पुनर्भवत्यपि ह वा अस्यान्यराष्ट्रीयो राष्ट्रे भवत्यप्यन्यराष्ट्रीयमवहरते तथास्मिन्भूमानं दधाति भूम्नैवैनमेतदभिषिञ्चत्येता वा एका आपस्ता एवैतत्सम्भरति - ५.३.४.[९]

अथ नदीपतिं गृह्णाति । अपां पतिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहाऽपां पतिरसि राष्ट्रदा राष्ट्रममुष्मै देहीति ताभिरभिषिञ्चत्यपां वा एष पतिर्यन्नदीपतिर्विशामेवैनमेतत्पतिं करोत्येता वा एका आपस्ता एवैतत्सम्भरति - ५.३.४.[१०]



अथ निवेष्यं गृह्णाति । अपां गर्भोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहापां गर्भोऽसि राष्ट्रदा राष्ट्रममुष्मै देहीति ताभिरभिषिञ्चति गर्भं वाऽएतदाप उपनिवेष्टन्ते विशामेवैनमेतद्गर्भं करोत्येता वा एका आपस्ता एवैतत्सम्भरति - ५.३.४.[११]

अथ यः स्यन्दमानानां स्थावरो ह्रदो भवति । प्रत्यातापे ता गृह्णाति सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रममुष्मैदत्तेति ताभिरभिषिञ्चति वर्चसैवैनमेतदभिषिञ्चति सूर्यत्वचसमेवैनमेतत्करोति वरुण्या वा एता आपो भवन्ति याः स्यन्दमानानां न स्यन्दन्ते वरुणसवो वा एष यद्राजसूयं तस्मादेताभिरभिषिञ्चत्येता वा एका आपस्ता एवैतत्सम्भरति - ५.३.४.[१२]

अथ या आतपति वर्षन्ति । ता गृह्णाति सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति वर्चसैवैनमेतदभिषिञ्चति

सूर्यवर्चसमेवैनमेतत्करोति मेध्या वा एता आपो भवन्ति या आतपति वर्षन्त्यप्राप्ता हीमां भवन्त्यथैना गृह्णाति मेध्यमेवैनमेतत्करोत्येता वा एका आपस्ता एवैतत्सम्भरति - ५.३.४.[१३]

अथ वैशन्तीर्गृह्णाति । मान्दा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति विशमेवास्मा एतत्स्थावरामनपक्रमिणीं करोत्येता वा एका आपस्ता एवैतत्सम्भरति - ५.३.४.[१४]

अथ कूप्या गृह्णाति । व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा व्रजक्षित स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति तद्या इमां परेणापस्ता एवैतत्सम्भरत्यपामु चैव सर्वत्वाय तस्मादेताभिरभिश्चत्येता वा एका आपस्ता एवैतत्सम्भरति - ५.३.४.[१५]

अथ प्रुष्वा गृह्णाति । वाशा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा वाशा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चत्यन्नाद्येनैवैनमेतदभिषिञ्चत्यन्नाद्यमेवास्मिन्नेतद्दधातीदं वा असावादित्य उद्यन्नेव यथायमग्निर्निर्दहेदेवमोषधीरन्नाद्यं निर्दहति तदेता आपोऽभ्यवयत्यः शमयन्ति न ह वा इहान्नाद्यं परिशिष्यते यदेता आपो नाभ्यवेयुरन्नाद्येनैवैनमेतदभिषिञ्चत्येता वा एका आपस्ता एवैतत्सम्भरति - ५.३.४.[१६]

अथ मधु गृह्णाति । शविष्टा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शविष्ठा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चत्यपां चैवैनमेतदोषधीनां च रसेनाभिषिञ्चत्येता वा एका आपस्ता एवैतत्सम्भरति - ५.३.४.[१७]

अथ गोर्विजायमानाया उल्ब्या गृह्णाति । शक्वरो स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शक्वरी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति पशुभिरेवैनमेतदभिषिञ्चत्येता वा एका आपस्ता एवैतत्सम्भरति - ५.३.४.[१८]

अथ पयो गृह्णाति । जनभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति पशुभिरेवैनमेतदभिषिञ्चत्येता वा एका आपस्ता एवैतत्सम्भरति - ५.३.४.[१९]

अथ घृतं गृह्णाति । विश्वभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा विश्वभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति पशूनामेवैनमेतद्रसेनाभिषिञ्चत्येता वा एका आपस्ता एवैतत्सम्भरति - ५.३.४.[२०]

अथ मरीचीः । अञ्जलिना संगृह्यापिसृजत्यापः स्वराज स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेत्येता वा आपः स्वराजो यन्मरीचयस्ता यत्स्यन्दन्त इवान्योऽन्यस्या एवैतच्छ्रिया अतिष्ठमाना उत्तराधरा इव भवन्त्यो यन्ति स्वाराज्यमेवास्मिन्नेतद्दधात्येता वा एका आपस्ता एवैतत्सम्भरति - ५.३.४.[२१]



ता वा एताः । सप्तदशापः सम्भरति सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञस्तस्मात्सप्तदशापः सम्भरति - ५.३.४.[२२]

षोडश ता आपो या अभिजुहोति । षोडशाहुतीर्जुहोति ता द्वात्रिंशद्द्वयीषु न जुहोति सारस्वतीषु च मरीचिषु च ताश्चतुस्त्रिंशत्त्रयस्त्रिंशद्वै देवाः प्रजापतिश्चतुस्त्रिंशस्तदेनं प्रजापतिं करोति - ५.३.४.[२३]

अथ यद्धुत्वाहुत्वा गृह्णाति । वज्रो वा आज्यं वज्रेणैवैतदाज्येन स्पृत्वास्पृत्वा स्वीकृत्य गृह्णाति - ५.३.४.[२४]

अथ यत्सारस्वतीषु न जुहोति । वाग्वै सरस्वती वज्र आज्यं नेद्वज्रेणाज्येन वाचं हिनसानीति तस्मात्सारस्वतीषु न जुहोति - ५.३.४.[२५]

अथ यन्मरीचिषु न जुहोति । नेदनद्धे वै तामाहुतिं जुहवानीति तस्मान्मरीचिषु न जुहोति - ५.३.४.[२६]

ताः सार्धमौदुम्बरे पात्रे समवनयति । मधुमतीर्मधुमतीभिः पृच्यन्तामिति रसवती रसवतीभिः पृच्यन्तामित्येवैतदाह महि क्षत्रं क्षत्रियाय वन्वाना इति तत्परोऽक्षं यजमानायाशिषमाशास्ते यदाह महि क्षत्रं क्षत्रियाय वन्वाना इति - ५.३.४.[२७]

ता अग्रेण मैत्रावरुणस्य धिष्ण्यं सादयति । अनाधृष्टाः सीदत सहौजस इत्यनाधृष्टाः सीदत रक्षोभिरित्येवैतदाह सहौजस इति सवीर्या इत्येवैतदाह महि क्षत्रं क्षत्रियाय दधतीरिति तत्प्रत्यक्षं क्षत्रं यजमानायाशिषमाशास्ते यदाह महि क्षत्रं क्षत्रियाय दधतीरिति - ५.३.४.[२८]

##५.३.५ अथ अभिषेकः

तं वै माध्यदिने सवनेऽभिषिञ्चति । एष वै प्रजापतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यत एवैतस्य प्रजापतेर्दधाति मध्यतः सुवति - ५.३.५.[१]

अगृहीते माहेन्द्रे । एष वा इन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रोऽप्यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्यं शस्त्रमिन्द्रो वै यजमानस्तदेनं स्व एवायतनेऽभिषिञ्चति तस्मादगृहीते माहेन्द्रे - ५.३.५.[२]

अग्रेण मैत्रावरुणस्य धिष्ण्यम् । शार्दूलचर्मोपस्तृणाति सोमस्य त्विषिरसीति यत्र वै सोम इन्द्रमत्यपवत स यत्ततः शार्दूलः समभवत्तेन सोमस्य त्विषिस्तस्मादाह सोमस्य त्विषिरसीति तवेव मे त्विषिर्भूयादिति शार्दूलत्विषिमेवास्मिन्नेतद्दधाति तस्मादाह तवेव मे त्विषिर्भूयादिति - ५.३.५.[३]

अथ पार्थानि जुहोति । पृथा ह वै वैन्यो मनुष्याणां प्रथमोऽभिषिषिचे सोऽकामयत सर्वमन्नाद्यमवरुन्धीयेति तस्मा एतान्यजुहवुः स इदं सर्वमन्नाद्यमवरुरुधेऽपि ह स्मास्मा आरण्यान्पशूनभिह्वयन्त्यसावेहि राजा त्वापक्ष्यत इति तथेदं सर्वमन्नाद्यमवरुरुधे सर्वं ह वा अन्नाद्यमवरुन्द्धे यस्यैवं विदुष एतानि हूयन्ते - ५.३.५.[४]

तानि वै द्वादश भवन्ति । द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश भवन्ति - ५.३.५.[५]

षड्पुरस्तादभिषेकस्य जुहोति । षडुपरिष्टात्तदेनं मध्यत एवैतस्य प्रजापतेर्दधाति मध्यतः सुवति - ५.३.५.[६]

स यानि पुरस्तादभिषेकस्य जुहोति । बृहस्पतिस्तेषामुत्तमो भवत्यथ यान्युपरिष्टादभिषेकस्य जुहोतीन्द्रस्तेषां प्रथमो भवति ब्रह्म वै बृहस्पतिरिन्द्रियं वीर्यमिन्द्र एताभ्यामेवैनमेतद्वीर्याभ्यामुभयतः परिबृंहति - ५.३.५.[७]



स जुहोति । यानि पुरस्तादभिषेकस्य जुहोत्यग्नये स्वाहेति तेजो वा अग्निस्तेजसैवैनमेतदभिषिञ्चति सोमाय स्वाहेति क्षत्रं वै सोमः क्षत्रेणैवैनमेतदभिषिञ्चति सवित्रे स्वाहेति सविता वै देवानां प्रसविता सवितृप्रसूत एवैनमेतदभिषिञ्चति सरस्वत्यै स्वाहेति वाग्वै सरस्वती वाचैवैनमेतदभिषिञ्चति पूष्णे स्वाहेति पशवो वै पूषा पशुभिरेवैनमेतदभिषिञ्चति बृहस्पतये स्वाहेति ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनमेतदभिषिञ्चत्येतानि पुरस्तादभिषेकस्य जुहोति तान्येतान्यग्निनामानीत्याचक्षते - ५.३.५.[८]

अथ जुहोति । यान्युपरिष्टादभिषेकस्य जुहोतीन्द्राय स्वाहेति वीर्यं वा इन्द्रो वीर्येणैवैनमेतदभिषिञ्चति घोषाय स्वाहेति वीर्यं वै घोषो वीर्येणैवैनमेतदभिषिञ्चति श्लोकाय स्वाहेति वीर्यं वै श्लोको वीर्येणैवैनमेतदभिषिञ्चत्यंशाय स्वाहेति वीर्यं वा अंशो वीर्येणैवैनमेतदभिषिञ्चति भगाय स्वाहेति वीर्यं वै भगो वीर्येणैवैनमेतदभिषिञ्चत्यर्यम्णे

स्वाहेति तदेनमस्य सर्वस्यार्यमणं करोत्येतान्युपरिष्टादभिषेकस्य जुहोति तान्येतान्यादित्यनामानीत्याचक्षते - ५.३.५.[९]

अग्रेण मैत्रावरुणस्य धिष्ण्यम् । अभिषेचनीयानि पात्राणि भवन्ति यत्रैता आपोऽभिषेचनीया भवन्ति - ५.३.५.[१०]

पालाशं भवति । तेन ब्राह्मणोऽभिषिञ्चति ब्रह्म वै पलाशो ब्रह्मणैवैनमेतदभिषिञ्चति - ५.३.५.[११]

औदुम्बरं भवति । तेन स्वोऽभिषिञ्चत्यन्नं वा ऊर्गुदुम्बर ऊर्ग्वै स्वं यावद्वै पुरुषस्य स्वं भवति नैव तावदशनायति तेनोक्स्वं तस्मादौदुम्बरेण स्वोऽभिषिञ्चति - ५.३.५.[१२]

नैयग्रोधपादं भवति । तेन मित्र्यो राजन्योऽभिषिञ्चति पद्भिर्वै न्यग्रोधः प्रतिष्ठितो मित्रेण वै राजन्यः प्रतिष्ठितस्तस्मान्नैयग्रोधपादेन मित्र्यो राजन्योऽभिषिञ्चति - ५.३.५.[१३]



आश्वत्थं भवति । तेन वैश्योऽभिषिञ्चति स यदेवादोऽश्वत्थे तिष्ठत इन्द्रो मरुत उपामन्त्रयत तस्मादाश्वत्थेन वैश्योऽभिषिञ्चत्येतान्यभिषेचनीयानि पात्राणि भवन्ति - ५.३.५.[१४]

अथ पवित्रे करोति । पवित्रे स्थो वैष्णव्याविति सोऽसावेव बन्धुस्तयोर्हिरण्यम्प्रवयति ताभ्यामेता अभिषेचनीया अप उत्पुनाति तद्यद्धिरण्यम्प्रवयत्यमृतमायुर्हिरण्यं तदा-स्वमृतमायुर्दधाति तस्माद्धिरण्यं प्रवयति - ५.३.५.[१५]

स उत्पुनाति । सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिरिति सो ऽसावेव बन्धुरनिभृष्टमसि वाचो बन्धुस्तपोजा इत्यनाधृष्टा स्थ रक्षोभिरित्येवैतदाह यदाहानिभृष्टमसीति वाचो बन्धुरिति यावद्वै प्राणेष्वापो भवन्ति तावद्वाचा वदति तस्मादाह वाचो बन्धुरिति - ५.३.५.[१६]

तपोजा इति । अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद्वृष्टिरग्नेर्वा एता जायन्ते तस्मादाह तपोजा इति - ५.३.५.[१७]

सोमस्य दात्रमसीति । यदा वा एनमेताभिरभिषुण्वन्त्यथाहुतिर्भवति तस्मादाह सोमस्य दात्रमसीति स्वाहा राजस्व इति तदेनाः स्वाहाकारेणैवोत्पुनाति - ५.३.५.[१८]

ता एतेषु पात्रेषु व्यानयति । सधमादो द्युम्निनीराप एता इत्यनतिमानिन्य इत्येवैतदाह यदाह सधमाद इति द्युम्निनीराप एता इति वीर्यवत्य इत्येवैतदाहानाधृष्टा अपस्यो वसाना इत्यनाधृष्टा स्थ रक्षोभिरित्येवैतदाह यदाहानाधृष्टा अपस्यो वसाना इति पस्त्यासु चक्रे वरुणः सधस्थमिति विशो वै पस्त्या विक्षु चक्रे वरुणः प्रतिष्ठामित्येवैतदाहापां शिशुर्मातृतमास्वन्तरिति - ५.३.५.[१९]



अथैनं वासांसि परिधापयति । तार्प्यमिति वासो भवति तस्मिन्त्सर्वाणि यज्ञरूपाणि निष्यूतानि भवन्ति तदेनं परिधापयति क्षत्रस्योल्बमसीति तद्यदेव क्षत्रस्योल्बं तत एवैनमेतज्जनयति - ५.३.५.[२०]

अथैनं पाण्ड्वं परिधापयति । क्षत्रस्य जराय्वसीति तद्यदेव क्षत्रस्य जरायु तत एवैनमेतज्जनयति - ५.३.५.[२१]

अथाधीवासं प्रतिमुञ्चति । क्षत्रस्य योनिरसीति तद्यैव क्षत्रस्य योनिस्तस्या एवैनमेतज्जनयति - ५.३.५.[२२]

अथोष्णीषं संहृत्य । पुरस्तादवगूहति क्षत्रस्य नाभिरसीति तद्यैव क्षत्रस्य नाभिस्तामेवास्मिन्नेतद्दधाति - ५.३.५.[२३]

तद्धैके । समन्तं परिवेष्टयन्ति नाभिर्वा अस्यैषा समन्तं वा इयं नाभिः पर्येतीति वदन्तस्तदु तथा न कुर्यात्पुरस्तादेवावगूहेत्पुरस्ताद्धीयं नाभिस्तद्यदेनं वासांसि परिधापयति जनयत्येवैनमेतज्जातमभिषिञ्चानीति तस्मादेनं वासांसि परिधापयति - ५.३.५.[२४]

तद्धैके । निदधत्येतानि वासांस्यथैनं पुनर्दीक्षितवसनं परिधापयन्ति तदु तथा न कुर्यादङ्गानि वा अस्य जनूर्वासांस्यङ्गैर्हैनं सजन्वा तन्वा व्यर्धयन्ति वरुण्यं दीक्षितवसनं स एतेषामेवैकं वाससां परिदधीत तदेनमङ्गैर्जन्वा तन्वा समर्धयति वरुण्यं दीक्षितवसनं तदेनं वरुण्याद्दीक्षितवसनात्प्रमुञ्चति - ५.३.५.[२५]

स यत्रावभृथमभ्यवैति । तदेतदभ्यवहरन्ति तत्सलोम क्रियते स एतेषामेवैकं वाससां परिधायोदैति तानि वशायै वा वपायां हुतायां दद्यादुदवसानीयायां वेष्टौ - ५.३.५.[२६]

अथ धनुरधितनोति । इन्द्रस्य वार्त्रघ्नमसीति वार्त्रघ्नं वै धनुरिन्द्रो वै यजमानो द्वयेन वा एष इन्द्रो भवति यच्च क्षत्रियो यदु च यजमानस्तस्मादाहेन्द्रस्य वार्त्रघ्नमसीति - ५.३.५.[२७]



अथ बाहू विमार्ष्टि । मित्रस्यासि वरुणस्यासीति बाह्वोर्वै धनुर्बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मादाह मित्रस्यासि वरुणस्यासीति तदस्मै प्रयच्छति त्वयाऽयं वृत्रम्वधेदिति त्वयायं द्विषन्तं भ्रातृव्यं वधेदित्येवैतदाह - ५.३.५.[२८]

अथास्मै तिस्र इषूः प्रयच्छति । स यया प्रथमया समर्पणेन पराभिनत्ति सैका सेयं पृथिवी सैषा दृबा नामाथ यया विद्धः शयित्वा जीवति वा म्रियते वा सा द्वितीया तदिदमन्तरिक्षं सैषा रुजा नामाथययाऽपैव राध्नोति सा तृतीया साऽसौ द्यौः सैषा क्षुमा नामैता हि वै तिस्र इषवस्तस्मादस्मै तिस्र इषूः प्रयच्छति - ५.३.५.[२९]

ताः प्रयच्छति । पातैनं प्राञ्चं पातैनं प्रत्यञ्चं पातैनं तिर्यञ्चं दिग्भ्यः पातेति तदस्मै सर्वा एव दिशोऽशरव्याः करोति तद्यदस्मै धनुः प्रयच्छति वीर्यं वा एतद्राजन्यस्य यद्धनुर्वीर्यवन्तमभिषिञ्चानीति तस्माद्वा अस्मा आयुधम्प्रयच्छति - ५.३.५.[३०]

अथैनमाविदो वाचयति । आविर्मर्या इत्यनिरुक्तं प्रजापतिर्वा अनिरुक्तस्तदेनम्प्रजापतय आवेदयति सोऽस्मै सवमनुमन्यते तेनानुमतः सूयते - ५.३.५.[३१]

आवित्तो अग्निर्गृहपतिरिति । ब्रह्म अग्निस्तदेनं ब्रह्मण आवेदयति तदस्मै सवमनुमन्यते तेनानुमतः सूयते - ५.३.५.[३२]

आवित्तऽइन्द्रो वृद्धश्रवा इति । क्षत्रं वा इन्द्रस्तदेनं क्षत्रायावेदयति तदस्मै सवमनुमन्यते तेनानुमतः सूयते - ५.३.५.[३३]



आवित्तौ मित्रावरुणौ धृतव्रताविति । प्राणोदानौ वै मित्रावरुणौ तदेनम्प्राणोदानाभ्यामावेदयति तावस्मै सवमनुमन्येते ताभ्यामनुमतः सूयते - ५.३.५.[३४]

आवित्तः पूषा विश्ववेदा इति । पशवो वै पूषा तदेनं पशुभ्य आवेदयति तेऽस्मै सवमनुमन्यन्ते तैरनुमतः सूयते - ५.३.५.[३५]

आवित्ते द्यावापृथिवी विश्वशम्भुवाविति । तदेनमाभ्यां द्यावापृथिवीभ्यामावेदयति ते अस्मै सवमनुमन्येते ताभ्यामनुमतः सूयते - ५.३.५.[३६]

आवित्ताऽदितिरुरुशर्मेति । इयं वै पृथिव्यदितिस्तदेनमस्मै पृथिव्या आवेदयति साऽस्मै सवमनुमन्यते तयाऽनुमतः सूयते तद्याभ्य एवैनमेतद्देवताभ्य आवेदयति ता अस्मै सवमनुमन्यन्ते ताभिरनुमतः सूयते - ५.३.५.[३७]

##५.४.१
केशवस्य पुरुषस्य । लोहायसमास्य आविध्यत्यवेष्टा दन्दशूका इति सर्वान्वा एष मृत्यूनतिमुच्यते सर्वान्वधान्यो राजसूयेन यजते तस्य जरैव मृत्युर्भवति तद्यो मृत्युर्यो वधस्तमेवैतदतिनयति यद्दन्दशूकान् - ५.४.१.[१]

अथ यत्केशवस्य पुरुषस्य । न वा एष स्त्री न पुमान्यत्केशवः पुरुषो यदह पुमांस्तेन न स्त्री यदु केशवस्तेनो न पुमान्नैतदयो न हिरण्यं यल्लोहायसं नैते क्रिमयो नाक्रिमयो यद्दन्दशूका अथ यल्लोहायसं भवति लोहिता इव हि दन्दशूकास्तस्मात्केशवस्य पुरुषस्य - ५.४.१.[२]

अथैनं दिशः समारोहयति । प्राचीमारोह गायत्री त्वावतु रथन्तरं साम त्रिवृत्स्तोमो वसन्त ऋतुर्ब्रह्म द्रविणम् - ५.४.१.[३]



दक्षिणामारोह । त्रिष्टुप्त्वाऽवतु बृहत्साम पञ्चदश स्तोमो ग्रीष्म ऋतुः क्षत्रं द्रविणम् - ५.४.१.[४]

प्रतीचीमारोह । जगती त्वाऽवतु वैरूपं साम सप्तदश स्तोमो वर्षा ऋतुर्विड्द्रविणम् - ५.४.१.[५]

उदीचीमारोह । अनुष्टुप्त्वाऽवतु वैराजं सामैकविंश स्तोमः शरदृतुः फलं द्रविणाम् - ५.४.१.[६]

ऊर्ध्वामारोह । पङ्क्तिस्त्वाऽवतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रिंशौ स्तोमौ हेमन्तशिशिरावृतू वर्चो द्रविणमिति - ५.४.१.[७]

तद्यदेनं दिशः समारोहयति । ऋतूनामेवैतद्रूपमृतूनेवैनमेतत्संवत्सरं समारोहयति स ऋतून्त्संवत्सरं समारुह्य सर्वमेवेदमुपर्युपरि भवत्यर्वागेवास्मादिदं सर्वं भवति - ५.४.१.[८]

शार्दूलचर्मणो जघनार्धे । सीसं निहितं भवति तत्पदा प्रत्यस्यति प्रत्यस्तं नमुचेः शिर इति नमुचिर्ह वै नामासुर आस तमिन्द्रो निविव्याध तस्य पदा शिरोऽभितष्ठौ स यदभिष्ठित उदबाधत स उच्छ्वङ्कस्तस्य पदा शिरः प्रचिच्छेद ततो रक्षः समभवत्तद्ध स्मैनमनुभाषते क्व गमिष्यसि क्व मे मोक्ष्यस इति - ५.४.१.[९]

तत्सीसेनापजघान । तस्मात्सीसं मृदु सृतजवं हि सर्वेण हि वीर्येणापजघान तस्माद्धिरण्यरूपं सन्न कियच्चनार्हति सृतजवं हि सर्वेण हि वीर्येणापजघान तद्वै स तन्नाष्ट्रा रक्षांस्यपजघान तथो एवैष एतन्नाष्ट्रा रक्षांस्यतोऽपहन्ति - ५.४.१.[१०]

अथैनं शार्दूलचर्मारोहयति । सोमस्य त्विषिरसीति यत्र वै सोम इन्द्रमत्यपवत स यत्ततः शार्दूलः समभवत्तेन सोमस्य त्विषिस्तस्मादाह सोमस्य त्विषिरसीति तवेव मे त्विषिर्भूयादिति शार्दूलत्विषिमेवास्मिन्नेतद्दधाति तस्मादाह तवेव मे त्विषिर्भूयादिति - ५.४.१.[११]



अथ रुक्ममधस्तादुपास्यति । मृत्योः पाहीत्यमृतमायुर्हिरण्यं तदमृत ऽआयुषि प्रतितिष्ठति - ५.४.१.[१२]

अथ रुक्मः शतवितृणो वा भवति । नववितृणो वा स यदि शतवितृण्णः शतायुर्वा अयं पुरुषः शततेजाः शतवीर्यस्तस्माच्छतवितृण्णो यद्यु नववितृण्णो नवेमे पुरुषे प्राणास्तस्मान्नववितृण्णः - ५.४.१.[१३]

तमुपरिष्टाच्छीर्ष्णो निदधाति । ओजोऽसि सहो ऽस्यमृतमसीत्यमृतमायुर्हिरण्यं तदस्मिन्नमृतमायुर्दधाति तद्यद्रुक्मा उभयतो भवतोऽमृतमायुर्हिरण्यं तदमृतेनैवैनमेतदायुषोभयतः परिबृंहति तस्माद्रुक्मा उभयतो भवतः - ५.४.१.[१४]

अथ बाहू उद्गृह्णाति । हिरण्यरूपा उषसो विरोक उभाविन्द्रो उदिथः सूर्यश्च आरोहतं

वरुण मित्र गर्तं ततश्चक्षाथामदितिं दितिं चेति बाहू वै मित्रावरुणौ पुरुषो गर्तस्तस्मादाहारोहतं वरुण मित्र गर्तमिति ततश्चक्षाथामदितिं दितिं चेति ततः पश्यतं स्वं चारणं चेत्येवैतदाह - ५.४.१.[१५]

नैतेनोद्गृह्णीयात् । मित्रोऽसि वरुणोऽसीत्येवोद्गृह्णीयाद्बाहू वै मित्रावरुणौ बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मान्मित्रोऽसि वरुणोऽसीत्येवोद्गृह्णीयात् - ५.४.१.[१६]

तद्यदेनमूर्ध्वबाहुमभिषिञ्चति । वीर्यं वा एतद्राजन्यस्य यद्बाहू वीर्यं वा एतदपां रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति नेन्म इदं वीर्यं वीर्यमपां रसः सम्भृतो बाहू व्लिनादिति तस्मादेनमूर्ध्वबाहुमभिषिञ्चति - ५.४.१.[१७]

##५.४.२

तं वै प्राञ्चं तिष्ठन्तमभिषिञ्चति । पुरस्ताद्ब्राह्मणोऽभिषिञ्चत्यध्वर्युर्वा यो वाऽस्य पुरोहितो भवति पश्चादितरे - ५.४.२.[१]



सोमस्य त्वा द्युम्नेनाभिषिञ्चामीति । वीर्येणैतदाहाग्नेर्भ्राजसेति वीर्येणैवैतदाह सूर्यस्य वर्चसेति वीर्येणैवैतदाहेन्द्रस्येन्द्रियेणेति वीर्येणैवैतदाह क्षत्राणां क्षत्रपतिरेधीति राज्ञामधिराज एधीत्येवैतदाहाति दिद्यून्पाहीतीषवो वै दिद्यव इषुवधमेवैनमेतदतिनयति तस्मादाहाति दिद्यून्पाहीति - ५.४.२.[२]

इमं देवाः । असपत्नं सुवध्वमितीमं देवा अभ्रातृव्यं सुवध्वमित्येवैतदाह महते क्षत्राय महते ज्यैष्ठ्यायेति नात्र तिरोहितमिवास्ति महते जानराज्यायेति महते जनानां राज्यायेत्येवैतदाहेन्द्रस्येन्द्रियायेति वीर्यायेत्येवैतदाह यदाहेन्द्रस्येन्द्रियायेतीमममुष्य पुत्रममुष्यै पुत्रमिति तद्यदेवास्य जन्म तत एवैतदाहास्यै विश इति यस्यै विशो राजा भवत्येष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजेति तदस्मा इदं सर्वमाद्यं करोति । ब्राह्मणमेवापोद्धरति तस्माद्ब्राह्मणोऽनाद्यः सोम राजा हि भवति - ५.४.२.[३]

अथैतमभिषेकम् । कृष्णविषाणयाऽनुविमृष्टे वीर्यं वा एतदपां रसः सम्भृतो भवति येनैनमेतदभिषिञ्चतीदं मे वीर्यं सर्वमात्मानमुपस्पृशादिति तस्माद्वा ऽअनुविमृष्टे - ५.४.२.[४]

सोऽनुविमृष्टे । प्र पर्वतस्य वृषभस्य पृष्ठादिति यथायं पर्वतोऽतिष्ठावा यथऽर्षभः पशूनतिष्ठावैवं वा एष इदं सर्वमतितिष्ठत्यर्वागेवास्मादिदं सर्वं भवति यो राजसूयेन यजते तस्मादाह प्र पर्वतस्य वृषभस्य पृष्ठान्नावश्चरन्ति स्वसिच इयानाः ता आववृत्रन्नधरागुदक्ता अहिं बुध्न्यमनुरीयमाणा इति - ५.४.२.[५]

अथैनमन्तरेव शार्दूलचर्मणि विष्णुक्रमान्क्रमयति । विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः क्रान्तमसीतीमे वै लोका विष्णोर्विक्रमणं विष्णोर्विक्रान्तं विष्णोः क्रान्तं तदिमानेव लोकान्त्समारुह्य सर्वमेवेदमुपर्युपरि भवत्यर्वागेवास्मादिदं सर्वं भवति - ५.४.२.[६]



अथ ब्राह्मणस्य पात्रे । संस्रवान्त्समवनयति तद्ब्राह्मणं राजानमनु यशः करोति तस्माद्ब्राह्मणो राजानमनु यशः - ५.४.२.[७]

तद्योऽस्य पुत्रः प्रियतमो भवति । तस्मा एतत्पात्रं प्रयच्छतीदं मेऽयं वीर्यं पुत्रोऽनुसंतनवदिति- ५.४.२.[८]

अथ प्रतिपरेत्य गार्हपत्यमन्वारब्धे जुहोति । प्रजापते न त्वदेतान्यन्यो विश्वारूपाणि परि ता बभूव यत्कामास्ते जुहुमस्तन्नो अस्त्वयममुष्य पितेति तद्यः पुत्रस्तं पितरं करोति यः पिता तं पुत्रं तदेनयोर्वीर्ये व्यतिषजत्यसावस्य पितेति तद्यः पिता तं पितरं करोति यः पुत्रस्तं पुत्रं तदेनयोर्वीर्ये व्यतिषज्य पुनरेव यथायथं करोति वयं स्याम पतयो रयीणां स्वाहेत्याशीरेवैषैतस्य कर्मण आशिषमेवैतदाशास्ते - ५.४.२.[९]

अथ य एष संस्रवोऽतिरिक्तो भवति तमाग्नीध्रीये जुहोत्यतिरिक्तो वा एष संस्रवो भवत्यतिरिक्त आग्नीध्रीयो गार्हपत्ये हवींषि श्रपयन्त्याहवनीये जुह्वत्यथैषोऽतिरिक्तं तदतिरिक्त एवैतदतिरिक्तं दधात्युत्तरार्धे जुहोत्येष ह्येतस्य देवस्य दिक्तस्मादुत्तरार्धे जुहोति स जुहोति रुद्र यत्ते क्रिवि परं नाम तस्मिन्हुतमस्यमेष्टमसि स्वाहेति - ५.४.२.[१०]

##५.४.३ अभिषेकोत्तरकर्माणि
तद्योऽस्य स्वो भवति । तस्य शतं वा परःशता वा गा उत्तरेणाहवनीयं स्थापयति तद्यदेवं करोति - ५.४.३.[१]

वरुणाद्ध वा अभिषिषिचानात् । इन्द्रियं वीर्यमपचक्राम शश्वद्य एषोऽपां रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति सोऽस्येन्द्रियं वीर्यं निर्जघान तत्पशुष्वन्वविन्दत्तस्मात्पशवो यशो यदेष्वन्वविन्दत्तत्पशुष्वनुविद्येन्द्रियं वीर्यं पुनरात्मन्नधत्त तथो एवैष एतन्नाहैवास्मात्त्विन्द्रियं वीर्यमपक्रामति वरुणसवो वा एष यद्राजसूयमिति वरुणो ऽकरोदिति त्वेवैष एतत्करोति - ५.४.३.[२]



अथ रथमुपावहरति । यद्वै राजन्यात्पराग्भवति रथेन वै तदनुयुङ्क्ते तस्माद्रथमुपावहरति - ५.४.३.[३]

स उपावहरति । इन्द्रस्य वज्रोऽसीति वज्रो वै रथ इन्द्रो वै यजमानो द्वयेन वा एष इन्द्रो भवति यच्च क्षत्रियो यदु च यजमानस्तस्मादाहेन्द्रस्य वज्रोऽसीति - ५.४.३.[४]

तमन्तर्वेद्यभ्यववर्त्य युनक्ति । मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीति बाहू वै मित्रावरुणौ बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मादाह मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीति - ५.४.३.[५]

तं चतुर्युजं युनक्ति । स जघनेन सदोऽग्रेण शालां येनैव दक्षिणा यन्ति तेन प्रतिपद्यते तं जघनेन चात्वालमग्रेणाग्नीध्रमुद्यच्छति - ५.४.३.[६]

तमातिष्ठति । अव्यथायै त्वा स्वधायै त्वेत्यनार्त्यै त्वेत्येवैतदाह यदाहाव्यथायै त्वेति स्वधायै त्वेति रसाय त्वेत्येवैतदाहारिष्टो अर्जुन इत्यर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नाम द्वयेन वा एष इन्द्रो भवति यच्च क्षत्रियो यदु च यजमानस्तस्मादाहारिष्टो अर्जुन इति - ५.४.३.[७]

अथ दक्षिणायुग्यमुपार्षति । मरुतां प्रसवेन जयेति विशो वै मरुतो विशा वै तत्क्षत्रियो जयति यज्जिगीषति तस्मादाह मरुतां प्रसवेन जयेति - ५.४.३.[८]

अथ मध्ये गवामुद्यच्छति । आपाम मनसेति मनसा वा इदं सर्वमाप्तं तन्मनसैवैतत्सर्वमाप्नोति तस्मादाहापाम मनसेति - ५.४.३.[९]

अथ धनुरार्त्न्या गामुपस्पृशति । समिन्द्रियेणेतीन्द्रियं वै वीर्यं गाव इन्द्रियमेवैतद्वीर्यमात्मन्धत्तेऽथाह जिनामीमाः कुर्व इमा इति - ५.४.३.[१०]



तद्यत्स्वस्य गोषूद्यच्छति । यद्वै पुरुषात्पराग्भवति यशो वा किंचिद्वा स्वं हैवास्य तत्प्रतमामिवाभ्यपक्रामति तत्स्वादेवैतदिन्द्रियं वीर्यम्पुनरात्मन्धत्ते तस्मात्स्वस्य गोषूद्यच्छति - ५.४.३.[११]

तस्मै तावन्मात्रीर्वा भूयसीर्वा प्रतिददाति । न वा एष क्रूरकर्मणे भवति यद्यजमानः क्रूरमिव वा एतत्करोति यदाह जिनामीमाः कुर्व इमा इति तथो हास्यैतदक्रूरं कृतं भवति तस्मात्तावन्मात्रीर्वा भूयसीर्वा प्रतिददाति - ५.४.३.[१२]

अथ दक्षिणानायच्छति । सोऽग्रेण यूपं दक्षिणेन वेदिं येनैव दक्षिणा यन्ति तेन प्रतिपद्यते तं जघनेन सदोऽग्रेण शालामुद्यच्छति - ५.४.३.[१३]

मा त इन्द्र ते वयं तुराषाट् । अयुक्तासो अब्रह्मता विदसाम तिष्ठा रथमधि यं वज्रहस्ता रश्मीन्देव यमसे स्वश्वानित्युद्यच्छत्येवैतयाऽभीशवो वै रश्मयस्तस्मादाहा रश्मीन्देव यमसे

स्वश्वानित्यथ रथविमोचनीयानि जुहोति प्रीतो रथो विमुच्याता इति तस्माद्रथविमोचनीयानि जुहोति - ५.४.३.[१४]

स जुहोति । अग्नये गृहपतये स्वाहेति स यदेवाग्नेयं रथस्य तदेवैतेन प्रीणाति वहा वा आग्नेया रथस्य वहानेवैतेन प्रीणाति श्रीर्वै गार्हपतं यावतोयावत ईष्टे तच्छ्रियमेवास्यैतद्गार्हपतं राज्यमभिविमुच्यते - ५.४.३.[१५]

सोमाय वनस्पतये स्वाहेति । द्वयानि वै वानस्पत्यानि चक्राणि रथ्यानि चानसानि च तेभ्यो न्वेवैतदुभयेभ्योऽरिष्टिं कुरुते सोमो वै वनस्पतिः स यदेव वानस्पत्यं रथस्य तदेवैतेन प्रीणाति दारूणि वै वानस्पत्यानि रथस्य दारूण्येवैतेन प्रीणाति क्षत्रं वै सोमः क्षत्रमेवास्यैतद्राज्यमभिविमुच्यते - ५.४.३.[१६]

मरुतामोजसे स्वाहेति । स यदेव मारुतं रथस्य तदेवैतेन प्रीणाति चत्वारोऽश्वा रथः पञ्चमो द्वौ सव्यष्टृसारथी ते सप्त सप्तसप्त व मारुतो गणः सर्वमेवैतेन रथं प्रीणाति विशो वै मरुतो विशमेवास्यैतद्राज्यमभिविमुच्यते - ५.४.३.[१७]



इन्द्रस्येन्द्रियाय स्वाहेति । स यदेवैन्द्रं रथस्य तदेवैतेन प्रीणाति सव्यष्ठा वा ऐन्द्रो रथस्य सव्यष्ठारमेवैतेन प्रीणातीन्द्रियं वै वीर्यमिन्द्र इन्द्रियमेवास्यैतद्वीर्यं राज्यमभिविमुच्यते - ५.४.३.[१८]

अथ वाराह्या उपानहा उपमुञ्चते । अग्नौ ह वै देवा घृतकुम्भं प्रवेशयांचक्रुस्ततो वराहः सम्बभूव तस्माद्वराहो मेदुरो घृताद्धि सम्भूतस्तस्माद्वराहे गावः संजानते स्वमेवैतद्रसमभिसंजानते तत्पशूनामेवैतद्रसे प्रतितिष्ठति तस्माद्वाराह्या उपानहा उपमुञ्चते - ५.४.३.[१९]

अथेमां प्रत्यवेक्षमाणो जपति । पृथिवि मातर्मा मा हिंसीर्मो अहं त्वामिति वरुणाद्ध वा अभिषिषिचानात्पृथिवी बिभयाञ्चकार महद्वा अयमभूद्योऽभ्यषेचि यद्वै मायं

नावद्दणीयादिति वरुण उ ह पृथिव्यै बिभयाञ्चकार यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्रधेयमकुरुत न हि माता पुत्रं हिनस्ति न पुत्रो मातरम् - ५.४.३.[२०]

वरुणसवो वा एष यद्राजसूयम् । पृथिव्यु हैतस्माद्बिभेति महद्वा अयमभूद्योऽभ्यषेचि यद्वै मायं नावद्दणीयादित्येष उ हास्यै बिभेति यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्रधेयं कुरुते न हि माता पुत्रं हिनस्ति न पुत्रो मातरं तस्मादेवं जपति - ५.४.३.[२१]

सोऽवतिष्ठति । हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहदित्येतामतिच्छन्दसं जपन्नेषा वै सर्वाणि छन्दांसि यदतिच्छन्दास्तथैनं पाप्मा नान्ववतिष्ठति - ५.४.३.[२२]

तं न संग्रहीताऽन्ववतिष्ठेत् । नेत्तं लोकमन्ववतिष्ठाद्यं सुषुवाणोऽन्ववास्थादिति तं सरथमेव रथवाहन आदधति ततोऽवाङपप्रवते तथा तं लोकं नान्ववतिष्ठति यं सुषुवाणोऽन्ववास्थात् - ५.४.३.[२३]



उत्तरेणाहवनीयं पूर्वाग्निरुद्वृत्तो भवति । स रथवाहनस्य दक्षिणमन्वनुष्यन्दं शतमानौ प्रवृत्तावाबध्नाति - ५.४.३.[२४]

औदुम्बरीं शाखामुपगूहति । तयोरन्यतरमुपस्पृशतीयदस्यायुरस्यायुर्मयिधेहि युङ्ङसि वर्चो मयि धेहीति तदायुर्वर्च आत्मन्धत्ते - ५.४.३.[२५]

अथौदुम्बरीं शाखामुपस्पृशति । ऊर्गस्यूर्जं मयि धेहीति तदूर्जमात्मन्धत्ते तस्यैतस्य कर्मण एतावेव शतमानौ प्रवृत्तौ दक्षिणा तौ ब्रह्मणे ददाति ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायति तस्मात्तौ ब्रह्मणे ददाति - ५.४.३.[२६]

अग्रेण मैत्रावरुणस्य धिष्ण्यम् । मैत्रावरुणी पयस्या निहिता भवति तामस्य बाहू अभ्युपावहरतीन्द्रस्य वां वीर्यकृतो बाहू अभ्युपावहरामीति पशूनां वा एष रसोयत्पयस्या

तत्पशूनामेवास्यैतद्रसं बाहू अभ्युपावहरति तद्यन्मैत्रावरुणी भवति मित्रावरुणा उ हि बाहू तस्मान्मैत्रावरुणी भवति - ५.४.३.[२७]

##५.४.४
मैत्रावरुण्या पयस्यया प्रचरति । तस्या अनिष्ट एव स्विष्टकृद्भवत्यथास्मा आसन्दीमाहरन्त्युपरिसद्यं वा एष जयति यो जयत्यन्तरिक्षसद्यं तदेनमुपर्यासीनमधस्तादिमाः प्रजा उपासते तस्मादस्मा आसन्दीमाहरन्ति सैषा खादिरी वितृण्णा भवति येयं वर्ध्रव्यूता भरतानाम् - ५.४.४.[१]

तामग्रेण । मैत्रावरुणस्य धिष्ण्यं निदधाति स्योनाऽसि सुषदाऽसीति शिवामेवैतच्छग्मां करोति - ५.४.४.[२]

अथाधीवासमास्तृणाति । क्षत्रस्य योनिरसीति तद्यैव क्षत्रस्य योनिस्तामेवैतत्करोति - ५.४.४.[३]



अथैनमासादयति । स्योनामासीद सुषदामासीदेति शिवां शग्मामासीदेत्येवैतदाह क्षत्रस्य योनिमासीदेति तद्यैव क्षत्रस्य योनिस्तस्यामेवैनमेतद्दधाति - ५.४.४.[४]

अथान्तरांसेऽभिमृश्य जपति । निषसाद धृतव्रत इति धृतव्रतो वै राजा न वा एष सर्वस्मा इव वदनाय न सर्वस्मा इव कर्मणे यदेव साधु वदेद्यत्साधु कुर्यात्तस्मै वा एष च श्रोत्रियश्चैतौ ह वै द्वौ मनुष्येषु धृतव्रतौ तस्मादाह निषसाद धृतव्रत इति वरुणः पस्त्यास्वेति विशो वै पस्त्या विक्ष्वेत्येवैतदाह साम्राज्याय सुक्रतुरिति राज्यायेत्येवैतदाह यदाह साम्राज्याय सुक्रतुरिति - ५.४.४.[५]

अथास्मै पञ्चाक्षान्पाणावावपति अभिभूरस्येतास्ते पञ्च दिशः कल्पन्तामित्येष वा अयानभिभूर्यत्कलिरेष हि सर्वानयानभिभवति तस्मादाहाभिभूरसीत्येतास्त पञ्च दिशः कल्पन्तामिति पञ्च वै दिशस्तदस्मै सर्वा एव दिशः कल्पयति - ५.४.४.[६]

अथैनं पृष्ठतस्तूष्णीमेव दण्डैर्घ्नन्ति । तं दण्डैर्घ्नन्तो दण्डवधमतिनयन्ति तस्माद्राजा ऽदण्ड्यो यदेनं दण्डवधमतिनयन्ति - ५.४.४.[७]

अथ वरं वृणीते । यं ह वै कं च सुषुवाणो वरं वृणीते सोऽस्मै सर्वः समृध्यते तस्माद्वरं वृणीते - ५.४.४.[८]

स ब्रह्मन्नित्येव प्रथममामन्त्रयते । ब्रह्म प्रथममभिव्याहराणि ब्रह्मप्रसूतां वाचं वदानीति तस्माद्ब्रह्मन्नित्येव प्रथममामन्त्रयते त्वं ब्रह्मासीतीतरः प्रत्याह सवितासि सत्यप्रसव इति वीर्यमेवास्मिन्नेतद्दधाति सवितारमेव सत्यप्रसवं करोति - ५.४.४.[९]

ब्रह्मन्नित्येव द्वितीयमामन्त्रयते । त्वं ब्रह्मासीतीतरः प्रत्याह वरुणोऽसि सत्यौजा इति वीर्यमेवास्मिन्नेतद्दधाति वरुणमेव सत्यौजसं करोति - ५.४.४.[१०]



ब्रह्मन्नित्येव तृतीयमामन्त्रयते । त्वं ब्रह्मासीतीतरः प्रत्याहेन्द्रोऽसि विशौजा इति वीर्यमेवास्मिन्नेतद्दधातीन्द्रमेव विशौजसं करोति - ५.४.४.[११]

ब्रह्मन्नित्येव चतुर्थमामन्त्रयते । त्वं ब्रह्मासीतीतरः प्रत्याह रुद्रोऽसि सुशेव इति तद्वीर्याण्येवास्मिन्नेतत्पूर्वाणि दधात्यथैनमेतच्छमयत्येव तस्मादेष सर्वस्येशानो मृडयति यदेनं शमयति - ५.४.४.[१२]

ब्रह्मन्नित्येव पञ्चममामन्त्रयते । त्वं ब्रह्मासीतीतरोऽनिरुक्तं प्रत्याह परिमितं वै निरुक्तं तत्परिमितमेवास्मिन्नेतत्पूर्वं वीर्यं दधात्यथात्रानिरुक्तं प्रत्याहापरिमितं वा अनिरुक्तं तदपरिमितमेवास्मिन्नेतत्सर्वं वीर्यं दधाति तस्मादत्रानिरुक्तं प्रत्याह - ५.४.४.[१३]

अथ सुमङ्गलनामानं ह्वयति । बहुकार श्रेयस्कर भूयस्करेति य एवंनामा भवति कल्याणमेवैतन्मानुष्यै वाचो वदति - ५.४.४.[१४]

अथास्मै ब्राह्मण स्फ्यं प्रयच्छति । अध्वर्युर्वा यो वाऽस्य पुरोहितो भवतीन्द्रस्य वज्रोऽसि तेन मे रध्येति वज्रो वै स्फ्यः स एतेन वज्रेण ब्राह्मणो राजानमात्मनोऽबलीयांसं कुरुते यो वै राजा ब्राह्मणादबलीयानमित्रेभ्यो वै स बलीयान्भवति तदमित्रेभ्य एवैनमेतद्बलीयांसं करोति - ५.४.४.[१५]

तं राजा राजभ्रात्रे प्रयच्छति । इन्द्रस्य वज्रोऽसि तेन मे रध्येति तेन राजा राजभ्रातरमात्मनोऽबलीयांसं कुरुते - ५.४.४.[१६]

तं राजभ्राता सूताय वा स्थपतये वा प्रयच्छति । इन्द्रस्य वज्रोऽसि तेन मे रध्येति तेन राजभ्राता सूतं वा स्थपतिं वाऽऽत्मनोऽबलीयांसं कुरुते - ५.४.४.[१७]

तं सूतो वा स्थपतिर्वा ग्रामण्ये प्रयच्छति । इन्द्रस्य वज्रोऽसि तेन मे रध्येति तेन सूतो वा स्थपतिर्वा ग्रामण्यमात्मनोऽबलीयांसं कुरुते - ५.४.४.[१८]



तं ग्रामणीः सजाताय प्रयच्छति । इन्द्रस्य वज्रोऽसि तेन मे रध्येति तेन ग्रामणीः सजातमात्मनोऽबलीयांसं कुरुते तद्यदेवं सम्प्रयच्छन्ते नेत्पापवस्यसमसद्यथापूर्वमसदिति तस्मादेवं सम्प्रयच्छन्ते - ५.४.४.[१९]

अथ सजातश्च प्रतिप्रस्थाता च । एतेन स्फ्येन पूर्वाग्नौ शुक्रस्य पुरोरुचाऽधिदेवनं कुरुतोऽत्ता वै शुक्रोऽत्तारमेवैतत्कुरुतः - ५.४.४.[२०]

अथ मन्थिनः पुरोरुचा विमितं विमिनुतः । आद्यो वै मन्थी तदत्तारमेवैतत्कृत्वाऽथास्मा एतदाद्यं जनयतस्तस्मान्मन्थिनः पुरोरुचा विमितं विमिनुतः - ५.४.४.[२१]

अथाध्वर्युः । चतुर्गृहीतमाज्यं गृहीत्वाऽधिदेवने हिरण्यं निधाय जुहोत्यग्निः पृथुर्धर्मणस्पतिर्जुषाणो अग्निः पृथुर्धर्मणस्पतिराज्यस्य वेतु स्वाहेति - ५.४.४.[२२]

अथाक्षान्निवपति । स्वाहाकृताः सूर्यस्य रश्मिभिर्यतध्वं सजातानाम्मध्यमेष्ठ्यायेत्येष वा अग्निः पृथुर्यदधिदेवनं तस्यैतेऽङ्गारा यदक्षास्तमेवैतेन प्रीणाति तस्य ह वा एषाऽनुमता गृहेषु हन्यते यो वा राजसूयेन यजते यो वैतदेवं वेदैतेष्वक्षेष्वाह गां दीव्यध्वमिति पूर्वाग्निवाहौ दक्षिणा - ५.४.४.[२३]

अथाहाग्नये स्विष्टकृतेऽनुब्रूहीति । तद्यदन्तरेणाहुती एतत्कर्म क्रियत एष वै प्रजापतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यत एवैतस्य प्रजापतेर्दधाति मध्यतः सुवति तस्मादन्तरेणाहुती एतत्कर्म क्रियत आश्राव्याहाग्निं स्विष्टकृतं यजेति वषट्कृते जुहोति - ५.४.४.[२४]

अथेडामादधाति । उपहूतायामिडायामप उपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति तं स्तोत्राय प्रमीवति स उपावरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य - ५.४.४.[२५]

##५.४.५
वरुणाद्ध वा अभिषिषिचानाद्भर्गोऽपचक्राम । वीर्यं वै भर्ग ऽएष विष्णुर्यज्ञः सोऽस्मादपचक्राम शश्वद्ध एषोऽपां रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति सोऽस्य भर्गं निर्जघान - ५.४.५.[१]

तमेताभिर्देवताभिरनुसमसर्पत् । सवित्रा प्रसवित्रा सरस्वत्या वाचा त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणास्मे बृहस्पतिना ब्रह्मणा वरुणेनौजसाऽग्निना तेजसा सोमेन राज्ञा विष्णुनैव दशम्या देवतयान्वविन्दत् - ५.४.५.[२]

तद्यदेनमेताभिर्देवताभिरनुसमसर्पत् । तस्मात्संसृपो नामाथ यद्दशमेऽहन्प्रसुतो भवति तस्माद्दशपेयोऽथो यद्दश दशैकैकं चमसमनुप्रसृप्ता भवन्ति तस्माद्वेव दशपेयः - ५.४.५.[३]

तदाहुः । दश पितामहान्त्सोमपान्त्संख्याय प्रसर्पेत्तथो हास्य सोमपीथमश्नुते दशपेयो हीति तद्वै ज्या द्वौ त्रीनित्येव पितामहान्त्सोमपान्विन्दन्ति तस्मादेता एव देवताः संख्याय प्रसर्पेत् - ५.४.५.[४]

एताभिर्वै देवताभिर्वरुण एतस्य सोमपीथमाश्नुत । तथो एवैष एताभिरेव देवताभिरेतस्य सोमपीथमश्नुते तस्मादेता एव देवताः संख्याय प्रसर्पेदथ यदैवैषोदवसानीयेष्टिः संतिष्ठत एतस्याभिषेचनीयस्य - ५.४.५.[५]

अथैतानि हवींषि निर्वपति । सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोडाशं सविता वै देवानां प्रसविता सवितृप्रसूत एव तद्वरुणोऽनुसमसर्पत्तथो एवैष एतत्सवितृप्रसूत एवानुसंसर्पति तत्रैकं पुण्डरीकं प्रयच्छति - ५.४.५.[६]

अथ सारस्वतं चरुं निर्वपति । वाग्वै सरस्वती वाचैव तद्वरुणोऽनुसमसर्पत्तथो एवैष एतद्वाचैवानुसंसर्पति तत्रैकं पुण्डरीकं प्रयच्छति - ५.४.५.[७]



अथ त्वाष्ट्रं दशकपालं पुरोडाशं निर्वपति । त्वष्टा वै रूपाणामीष्टे त्वष्ट्रैव तद्रूपैर्वरुणोऽनुसमसर्पत्तथो एवैष एतत्त्वष्ट्रैव रूपैरनुसंसर्पति तत्रैकं पुण्डरीकं प्रयच्छति - ५.४.५.[८]

अथ पौष्णं चरुं निर्वपति । पशवो वै पूषा पशुभिरेव तद्वरुणोऽनुसमसर्पत्तथो एवैष एतत्पशुभिरेवानुसंसर्पति तत्रैकं पुण्डरीकं प्रयच्छति - ५.४.५.[९]

अथैन्द्रमेकादशकपालं पुरोडाशं निर्वपति । इन्द्रियं वै वीर्यमिन्द्र इन्द्रियेणैव तद्वीर्येण वरुणोऽनुसमसर्पत्तथो एवैष एतदिन्द्रियेणैव वीर्येणानुसंसर्पति तत्रैकं पुण्डरीकं प्रयच्छति - ५.४.५.[१०]

अथ बार्हस्पत्यं चरुं निर्वपति । ब्रह्म वै बृहस्पतिर्ब्रह्मणैव तद्वरुणोऽनुसमसर्पत्तथो एवैष एतद्ब्रह्मणैवानुसंसर्पति तत्रैकं पुण्डरीकं प्रयच्छति - ५.४.५.[११]

अथ वारुणं यवमयं चरुं निर्वपति । स येनैवौजसेमाः प्रजा वरुणोऽगृह्णात्तेनैव तदोजसा वरुणोऽनुसमसर्पत्तेनो एवैष तदोजसानुसंसर्पति तत्रैकं पुण्डरीकं प्रयच्छति - ५.४.५.[१२]

उपसदो दशम्यो देवताः । तत्र पञ्च पुण्डरीकाण्युपप्रयच्छति तां द्वादशपुण्डरीकां स्रजं प्रतिमुञ्चते सा दीक्षा तया दीक्षया दीक्षते - ५.४.५.[१३]

अथ यद्वादश भवन्ति । द्वादश वै मासाः संवत्सरस्य सर्वं वै संवत्सरः सर्वेणैवैनमेतद्दीक्षयति यानि पुण्डरीकाणि तानि दिवो रूपं तानि नक्षत्राणां रूपं ये वधकास्तेऽन्तरिक्षस्य रूपं यानि बिसानि तान्यस्यै तदेनमेषु लोकेष्वधि दीक्षयति - ५.४.५.[१४]



अथ राजानं क्रीत्वा । द्वेधोपनह्य परिवहन्ति ततोऽर्धमासन्द्यामासाद्य प्रचरत्यथ य एषोऽर्धो ब्रह्मणो गृहे निहितो भवति तमासन्द्यामासाद्यातिथ्येन प्रचरति यदातिथ्येन प्रचरत्यथोपसद्भिः प्रचरति यदोपसद्भिः प्रचरति - ५.४.५.[१५]

अथैतानि हवींषि निर्वपति । आग्नेयमष्टाकपालं पुरोडाशं सौम्यं चरुं वैष्णवं त्रिकपालं वा पुरोडाशं चरुं वा तेन यथेष्ट्यैवं यजते - ५.४.५.[१६]

तदु तथा न कुर्यात् । ह्वलति वा एष यो यज्ञपथादेत्येति वा एष यज्ञपथाद्य उपसत्पथादेति तस्मादुपसत्पथादेव नेयात् - ५.४.५.[१७]

स यदग्निं यजति । अग्निनैवैतत्तेजसाऽनुसंसर्पत्यथ यत्सोमं यजति सोमेनैवैतद्राज्ञाऽनुसंसर्पत्यथ यद्विष्णुं यजति यज्ञो वै विष्णुस्तद्यज्ञम्प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते - ५.४.५.[१८]

स एष सप्तदशोऽग्निष्टोमो भवति । सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते - ५.४.५.[१९]

तस्य द्वादश प्रथमगर्भाः । पष्ठौह्यो दक्षिणा द्वादश वै मासाः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वात्मन्कुरुते - ५.४.५.[२०]

तासां द्वादश गर्भाः । ताश्चतुर्विंशतिश्चतुर्विंशतिर्वै संवत्सरस्यार्धमासाः संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते - ५.४.५.[२१]

ता ब्रह्मणे ददाति । ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायति तस्मात्ता ब्रह्मणे ददाति हिरण्मयीं स्त्रजमुद्गात्रे रुक्मं होत्रे हिरण्मयौ प्राकाशावध्वर्युभ्यामश्वं प्रस्तोत्रे वशां मैत्रावरुणायऽर्षभं ब्राह्मणाच्छंसिने वाससी नेष्टापोतृभ्यामन्यतरतो युक्तं यवाचितमच्छावाकाय गामग्नीधे - ५.४.५.[२२]



ता वा एताः । द्वादश वा त्रयोदश वा दक्षिणा भवन्ति द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते - ५.४.५.[२३]

##५.५.१ पञ्चबिलाख्यश्चरुहोमाः

आग्नेयोऽष्टाकपालः पुरोडाशो भवति । तं पूर्वार्ध आसादयत्यैन्द्र ऽएकादशकपालः पुरोडाशो भवति सौम्यो वा चरुस्तं दक्षिणार्ध ऽआसादयति वैश्वदेवश्चरुर्भवति तं पश्चार्ध ऽआसादयति मैत्रावरुणी पयस्या भवति तामुत्तरार्ध आसादयति बार्हस्पत्यश्चरुर्भवति तं मध्य आसादयत्येष चरुः पञ्चबिलस्तद्यत्पञ्च हवींषि भवन्ति तेषां पञ्च बिलानि तस्माच्चरुः पञ्चबिलो नाम - ५.५.१.[१]

तद्यदेतेन राजसूययाजी यजते । यदेवैनं दिशः समारोहयति यद्दतून्यत्स्तोमान्यच्छन्दांसि तस्मादेवैनमेतेन निष्क्रीणाति स यद्धैतेन राजसूययाजी न यजेतोद्वा ह माद्येत्प्र वा पतेत्तस्माद्वा एतेन राजसूययाजी यजते - ५.५.१.[२]

स यदाग्नेयेनाष्टाकपालेन पुरोडाशेन प्रचरति । यदेवैनं प्राचीं दिशं समारोहयति यद्दतून्यत्स्तोमान्यच्छन्दांसि तस्मादेवैनमेतेन निष्क्रीणाति संस्रवं बार्हस्पत्ये चरावनयति - ५.५.१.[३]

अथ यदैन्द्रेणैकादशकपालेन पुरोडाशेन प्रचरति । सौम्येन वा चरुणा यदेवैनं दक्षिणां दिशं समारोहयति यद्दतून्यत्स्तोमान्यच्छन्दांसि तस्मादेवैनमेतेन निष्क्रीणाति संस्रवं बार्हस्पत्ये चरावनयति - ५.५.१.[४]

अथ यद्वैश्वदेवेन चरुणा प्रचरति । यदेवैनं प्रतीचीं दिशं समारोहयति यद्दतून्यत्स्तोमान्यच्छन्दांसि तस्मादेवैनमेतेन निष्क्रीणाति संस्रवं बार्हस्पत्ये चरावनयति - ५.५.१.[५]



अथ यन्मैत्रावरुण्या पयस्याया प्रचरति । यदेवैनमुदीचीं दिशं समारोहयतियद्दतून्यत्स्तोमान्यच्छन्दांसि तस्मादेवैनमेतेन निष्क्रीणाति संस्रवं बार्हस्पत्ये चरावनयति तद्यत्संस्रवान्बार्हस्पत्ये चरावनयति सर्वत एवास्मिन्नेतदन्नाद्यं दधाति तस्मादु दिशोदिश एव राज्ञेऽन्नाद्यमभिह्रियते - ५.५.१.[६]

अथ यद्बार्हस्पत्येन चरुणा प्रचरति । यदेवैनमूर्ध्वां दिशं समारोहयति यद्दतून्यत्स्तोमान्यच्छन्दांसि तस्मादेवैनमेतेन निष्क्रीणाति - ५.५.१.[७]

स य एष आग्नेयोऽष्टाकपालः पुरोडाशो भवति । तस्य हिरण्यं दक्षिणाग्नेयो वा एष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणा तदग्नीधे ददात्यग्निर्वा एष निदानेन यदाग्नीध्रस्तस्मात्तदग्नीधे ददाति - ५.५.१.[८]

अथ य एष ऐन्द्र एकादशकपालः पुरोडाशो भवति । तस्यर्षभो दक्षिणा स ह्यैन्द्रो यदृषभो यद्यु सौम्यश्चरुर्भवति तस्य बभ्रुर्गौर्दक्षिणा स हि सौम्यो यद्बभ्रुस्तं ब्रह्मणे ददाति ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायति तस्मात्तं ब्रह्मणे ददाति - ५.५.१.[९]

अथ य एष वैश्वदेवश्चरुर्भवति । तस्य पृषन्गौर्दक्षिणा भूमा वा एतद्रूपाणां यत्पृषतो गोर्विशो वै विश्वे देवा भूमा वै विट्तस्मात्पृषन्गौर्दक्षिणा तं होत्रे ददाति होता हि भूमा तस्मात्तं होत्रे ददाति - ५.५.१.[१०]

अथ यैषा मैत्रावरुणी पयस्या भवति । तस्यै वशा दक्षिणा सा हि मैत्रावरुणी यद्वशा यदि वशां न विन्देदपि यैव का चाप्रवीता स्यात्सर्वा ह्येव वशाऽप्रवीता तामध्वर्युभ्यां ददाति प्राणोदानौ वा अध्वर्यू प्राणोदानौ मित्रावरुणौ तस्मात्तामध्वर्युभ्यां ददाति - ५.५.१.[११]



अथ य एष बार्हस्पत्यश्चरुर्भवति । तस्य शितिपृष्ठो गौर्दक्षिणैषा वा ऊर्ध्वा बृहस्पतेर्दिक्तदेष उपरिष्टादर्यम्णः पन्थास्तस्माच्छितिपृष्ठो बार्हस्पत्यस्य दक्षिणा तं ब्रह्मणे ददाति बृहस्पतिर्वै देवानां ब्रह्मैष वा एतस्य ब्रह्मा भवति तस्मात्तं ब्रह्मणे ददाति स हैतेनापि विष्ठाव्राज्यन्नाद्यकामो यजेत तदस्मिन्त्सर्वतोऽन्नाद्यं दधाति स हान्नाद एव भवति - ५.५.१.[१२]

##५.५.२ द्वादश प्रयुजां हवींषि
स वै प्रयुजां हविर्भिर्यजते । तद्यत्प्रयुजां हविर्भिर्यजत ऋतून्वा एतत्सुषुवाणो युङ्क्ते त एनमृतवो युक्ता वहन्त्यृतून्वा प्रयुक्ताननुचरति तस्मात्प्रयुजां हविर्भिर्यजते - ५.५.२.[१]

तानि वै द्वादश भवन्ति । द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश भवन्ति मासिमासि यजेतेत्याहुः को वेद मनुष्यस्य तस्मान्न मासिमासि यजेत शम्यापराव्याधे शम्यापराव्याध

एव षड्भिर्यजते प्राङ्ग्यानथ पुनरावृत्तः शम्यापराव्याधे शम्यापराव्याध एव षड्भिर्यजते - ५.५.२.[२]

तदु तथा न कुर्यात् । षडेवैतानि पूर्वाणि हवींषि निर्वपति समानबर्हींषि तासां देवतानां रूपं यथा शिशिरे युक्त्वा प्राञ्च आप्रावृषं यायुस्तत्षड्तून्युङ्क्ते त एनं षड्तवो युक्ताः प्राञ्च आप्रावृषं वहन्ति षड्वऽर्तून्प्रयुक्तानाप्रावृषमनुचरति पूर्वाग्निवाहां द्वौ दक्षिणा - ५.५.२.[३]

षडेवोत्तराणि हवींषि निर्वपति । समानबर्हींषि तासां देवतानां रूपं यथा पुनरावर्तेरन्वार्षिकमभि तत्षड्तून्युङ्क्ते त एनं षड्तवो युक्ता वार्षिकमभि वहन्ति षड्वर्तून्प्रयुक्तान्वार्षिकमनुचरति पूर्वाग्निवाहां द्वौ दक्षिणा तद्यत्पूर्वाग्निवाहो दक्षिणऽर्तून्वा एतत्सुषवाणो युङ्क्ते वहन्ति वा अनड्वाहस्तस्मात्पूर्वाग्निवाहो दक्षिणा - ५.५.२.[४]

तद्ध स्मैतत्पुरा कुरुपञ्चाला आहुः । ऋतवो वा अस्मान्युक्ता वहन्त्यृतून्वा प्रयुक्ताननुचराम इति यदेषां राजानो राजसूययाजिन आसुस्तद्ध स्म तदभ्याहुः - ५.५.२.[५]



आग्नेयोऽष्टाकपालः पुरोडाशो भवति । सौम्यश्चरुः सावित्रो द्वादशकपालो वाऽष्टाकपालो वा पुरोडाशो बार्हस्पत्यश्चरुस्त्वाष्ट्रो दशकपालः पुरोडाशो वैश्वानरो द्वादशकपाल एतानि षड्पूर्वाणि हवींषि भवन्ति - ५.५.२.[६]

षडेवोत्तरे चरवः । सारस्वतश्चरुः पौष्णश्चरुर्मैत्रश्चरुः क्षैत्रपत्यश्चरुर्वारुणश्चरुरादित्यश्चरुरेत उ षडुत्तरे चरवः - ५.५.२.[७]

अथ पशुद्वयम्

अथ श्येनीं विचित्रगर्भामदित्या आलभते । तस्या एषैवावृद्याऽष्टापद्यै वशाया इयं वा अदितिरस्या एवैनमेतद्गर्भं करोति तस्या एताद्दश्येव श्येनी विचित्रगर्भा दक्षिणा - ५.५.२.[८]

अथ पृषतीं विचित्रगर्भां मरुद्भ्य आलभते । तस्या एषैवावृद्विशो वै मरुतो विशामेवैनमेतद्गर्भं करोति तस्या एतादृश्येव पृषती विचित्रगर्भा दक्षिणा - ५.५.२.[९]

एतौ पशुबन्धौ । तदेतावेव सन्तावन्यथेवालभन्ते यामदित्या आलभन्त आदित्येभ्यस्तामालभन्ते सर्वं वा आदित्याः सर्वस्यैवैनमेतद्गर्भं करोति याम्मरुद्भ्य आलभन्ते विश्वेभ्यस्तां देवेभ्य आलभन्ते सर्वं वै विश्वे देवाः सर्वस्यैवैनमेतद्गर्भं करोति - ५.५.२.[१०]

##५.५.३ केशवपनीयोऽतिरात्रः
अभिषेचनीयेनेष्ट्वा । केशान्न वपते तद्यत्केशान्न वपते वीर्यं वा एतदपां रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति तस्याभिषिक्तस्य केशान्प्रथमान्प्राप्नोति स यत्केशान्वपेतैतां श्रियं जिह्मां विनाशयेद्व्युदुह्यात्तस्मात्केशान्न वपते - ५.५.३.[१]



संवत्सरं न वपते । संवत्सरसम्मिता वै व्रतचर्या तस्मात्संवत्सरं न वपते स एष व्रतविसर्जनीयोपयोगो नाम स्तोमो भवति केशवपनीयः - ५.५.३.[२]

तस्यैकविंशं प्रातःसवनम् । सप्तदशं माध्यन्दिनं सवनं पञ्चदशं तृतीयसवनं सहोक्थैः सह षोडशिना सह रात्र्या - ५.५.३.[३]

त्रिवृद्राथन्तरः संधिर्भवति । एष एवैकविंशो य एष तपति स एतस्मादेकविंशादपयुङ्क्ते स सप्तदशमभिप्रत्यवैति सप्तदशात्पञ्चदशं पञ्चदशादस्यामेव त्रिवृति प्रतिष्ठायां प्रतितिष्ठति - ५.५.३.[४]

तस्य रथन्तरं पृष्ठं भवति । इयं वै रथन्तरमस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठत्यतिरात्रो भवति प्रतिष्ठा वा अतिरात्रस्तस्मादतिरात्रो भवति - ५.५.३.[५]

स वै न्येव वर्तयते केशान्न वपते वीर्यं वा एतदपां रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति तस्याभिषिक्तस्य केशान्प्रथमान्प्राप्नोति स यत्केशान्वपेतैतां श्रियं जिह्मां विनाशयेद्व्युह्याादथ यन्निवर्तयते तदात्मन्येवैतां श्रियं नियुनक्ति तस्मान्येव वर्तयते केशान्न वपते तस्यैषैव व्रतचर्या भवति यावज्जीवं नास्यां प्रतितिष्ठति - ५.५.३.[६]

आसन्द्या उपानहा उपमुञ्चते । उपानड्भ्यामधि यदस्य यानं भवति रथो वा किंचिद्वा सर्वं वा एष इदमुपर्युपरि भवत्यर्वागेवास्मादिदं सर्वं भवति यो राजसूयेन यजते तस्मादस्यैषैव व्रतचर्या भवति यावज्जीवं नास्यां प्रतितिष्ठति - ५.५.३.[७]

##५.५.४ चरकसौत्रामणिः
श्येत आश्विनो भवति । श्येताविव ह्यश्विनाववविर्मल्हा सारस्वती भवत्यृषभमिन्द्राय सुत्राम्ण आलभते दुर्वेदा एवं समृद्धाः पशवो यद्येवं समृद्धान्न विन्देदप्यजानेवालभेरंस्ते हि सुश्रपतरा भवन्ति स यद्यजानालभेरंल्लोहित आश्विनो भवति तद्यदेतया यजते - ५.५.४.[१]



त्वष्टुर्ह वै पुत्रः । त्रिषीर्षा षडक्ष आस तस्य त्रीण्येव मुखान्यासुस्तद्यदेवं रूप आस तस्माद्विश्वरूपो नाम - ५.५.४.[२]

तस्य सोमपानमेवैकं मुखमास । सुरापाणमेकमन्यस्मा अशनायैकं तमिन्द्रो दिद्वेष तस्य तानि शीर्षाणि प्रचिच्छेद - ५.५.४.[३]

स यत्सोमपानमास । ततः कपिञ्जलः समभवत्तस्मात्स बभ्रुक इव बभ्रुरिव हि सोमो राजा - ५.५.४.[४]

अथ यत्सुरापाणमास । ततः कलविङ्कः समभवत्तस्मात्सोऽभिमाद्यत्क इव वदत्यभिमाद्यन्निव हि सुरां पीत्वा वदति - ५.५.४.[५]

अथ यदन्यास्मा अशनायास । ततस्तित्तिरिः समभवत्तस्मात्स विश्वरूपतम इव सन्त्येव घृतस्तोका इव त्वन्मधुस्तोका इव त्वत्पर्णेष्वाश्चुतिता एवंरूपमिव हि स तेनाशनमावयत् - ५.५.४.[६]

स त्वष्टा चुक्रोध । कुविन्मे पुत्रमवधीदिति सोऽपेन्द्रमेव सोममाजह्रे स यथायं सोमः प्रसुतऽ एवमपेन्द्र एवास - ५.५.४.[७]

इन्द्रो ह वा ऽईक्षांचक्रे । इदं वै मा सोमादन्तर्यन्तीति स यथा बलीयानबलीयस एवमनुपहूत एव यो द्रोणकलशे शुक्र आस तं भक्षयांचकार स हैनं जिहिंस सोऽस्य विष्वङ्ङेव प्राणेभ्यो दुद्राव मुखाद्धैवास्य न दुद्राव तस्मात्प्रायश्चित्तिरास स यद्धापि मुखादद्रोष्यन्न हैव प्रायश्चित्तिरभविष्यत् - ५.५.४.[८]

चत्वारो वै वर्णाः । ब्राह्मणो राजन्यो वैश्यः शूद्रो न हैतेषामेकश्चन भवति यः सोमं वमति स यद्धैतेषामेकश्चित्स्यात्स्याद्धैव प्रायश्चित्तिः - ५.५.४.[९]



स यन्नस्तोऽद्रवत् । ततः सिंहः समभवदथ यत्कर्णाभ्यामद्रवत्ततो वृकः समभवदथ यदवाचः प्राणादद्रवत्ततः शार्दूलज्येष्ठाः श्वापदाः समभवन्नथ यदुत्तरात्प्राणादद्रवत्सा परिस्रुदथ त्रिर्निरष्ठीवत्ततः कुवलं कर्कन्धु बदरमिति समभवत्स सर्वेणैव व्यार्ध्यत सर्वं हि सोमः - ५.५.४.[१०]

स सोमातिपूतो मङ्कुरिव चचार । तमेतयाश्विनावभिषज्यतां तं सर्वेणैव समार्धयतां सर्वं हि सोमः स वसीयानेवेष्ट्वाऽभवत् - ५.५.४.[११]

ते देवा अब्रुवन् । सुत्रातं बतैनमत्रासतामिति तस्मात्सौत्रामणी नाम - ५.५.४.[१२]

स हैतयापि सोमातिपूतं भिषज्येत् । सर्वेण वा एष व्यृध्यते यं सोमोऽतिपवते सर्वं हि सोमस्तं सर्वेणैव समर्धयति सर्वं हि सोमः स वसीयानेवेष्ट्वा भवति तस्मादु हैतयापि सोमातिपूतं भिषज्येत् - ५.५.४.[१३]

तद्यदेतया राजसूययाजी यजते । सर्वान्वा एष यज्ञक्रतूनवरुन्द्धे सर्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टा वा एषेष्टिर्यत्सौत्रामण्यनया मेऽपीष्टमसदनयापि सूया इति तस्माद्वा एतया राजसूययाजी यजते - ५.५.४.[१४]

अथ यदाश्विनो भवति । अश्विनौ वा एनमभिषज्यतां तथो एवैनमेष एतदश्विभ्यामेव भिषज्यति तस्मादाश्विनो भवति - ५.५.४.[१५]

अथ यत्सारस्वतो भवति । वाग्वै सरस्वती वाचा वा एनमश्विनावभिषज्यतां तथो एवैनमेष एतद्वाचैव भिषज्यति तस्मात्सारस्वतो भवति - ५.५.४.[१६]



अथ यदैन्द्रो भवति इन्द्रो वै यज्ञस्य देवता तयैवैनमेतद्भिषज्यति तस्मादैन्द्रो भवति - ५.५.४.[१७]

एतेषु पशुषु । सिंहलोमानि वृकलोमानि शार्दूललोमानीत्यावपत्येतद्वै ततः समभवद्यदेनं सोमोऽत्यपवत तेनैवैनमेतत्समर्धयति कृत्स्नं करोति तस्मादेतान्यावपति - ५.५.४.[१८]

तदु तथा न कुर्यात् । उल्कया ह स नखिन्या पशूननुषुवति य एतानि पशुष्वावपति तस्मादु परिस्रुत्येवावपेत्तथा होल्कया नखिन्या पशून्नानुषुवति तथो एवैनं समर्धयति कृत्स्नं करोति तस्मादु परिस्रुत्येवावपेत - ५.५.४.[१९]

अथ पूर्वेद्युः । परिस्रुतं संदधात्याश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेति सा यदा परिस्रुद्भवत्यथैनया प्रचरति - ५.५.४.[२०]

द्वावग्नी उद्धरन्ति । उत्तरवेदावेवोत्तरमुद्धते दक्षिणं नेत्सोमाहुतीश्च सुराहुतीश्च सह जुहवामेति तस्माद्द्वावग्नी उद्धरन्त्युत्तरवेदावेवोत्तरमुद्धते दक्षिणमथ यदा वपाभिः प्रचरत्यथैतया परिस्रुता प्रचरति - ५.५.४.[२१]

तां दर्भैः पावयति । पूतासदिति वायुः पूतः पवित्रेण प्रत्यङ्सोमो अतिस्रुतः । इन्द्रस्य युज्यः सखेति तत्कुवलसक्तून्कर्कन्धुसक्तून्बदरसक्तूनित्यावपत्येतद्वै ततःसमभवद्यत्त्रिर्निरष्ठीवत्तेनैवैनमेतत्समर्धयति कृत्स्नं करोति तस्मादेतानावपति - ५.५.४.[२२]

अथ ग्रहान्गृह्णाति । एकं वा त्रीन्वैकस्त्वेव ग्रहीतव्य एका हि पुरोरुग्भवत्येकानुवाक्यैका याज्या तस्मादेका एव ग्रहीतव्यः - ५.५.४.[२३]

स गृह्णाति । कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमउक्तिं यजन्ति उपयामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्ण इति यद्यु त्रीन्गृह्णीयादेतयैव गृह्णीयादुपयामैस्तु तर्हि नाना गृह्णीयादथाहाश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णेऽनुब्रूहीति - ५.५.४.[२४]

सोऽन्वाह । युवं सुराममश्विना नमुचावासुरे सचा विपिपाना शुभस्पती इन्द्रं कर्मस्वावतमित्याश्राव्याहाश्विनौ सरस्वतीमिन्द्रं सुत्रामाणं यजेति - ५.५.४.[२५]

स यजति । पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दंसनाभिः यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णगिति द्विर्होता वषट्करोति द्विरध्वर्युर्जुहोत्याहरति भक्षं यद्यु त्रीन्गृह्णीयादेतस्यैवानु होममितरौ हूयेते - ५.५.४.[२६]

अथ कुम्भः । शतवितृण्णो वा भवति नववितृण्णो वा स यदि शतवितृण्णः शतायुर्वा अयं पुरुषः शततेजाः शतवीर्यस्तस्माच्छतवितृण्णो यद्यु नववितृण्णो नवेमे पुरुषे प्राणास्तस्मान्नववितृण्णः - ५.५.४.[२७]

तं शिक्योदुतम् । उपर्युपर्याहवनीयं धारयन्ति सा या परिशिष्टा परिस्नुद्भवति तामासिञ्चति तां विक्षरन्तीमुपतिष्ठते पितॄणां सोमवतां तिसृभिर्ऋग्भिः पितॄणां बर्हिषदां तिसृभिर्ऋग्भिः पितॄणामग्निष्वात्तानां तिसृभिर्ऋग्भिस्तद्यदेवमुपतिष्ठते यत्र वै सोम इन्द्रमत्यपवत स यत्पितॄनगच्छत्त्वया वै पितरस्तेनैवैनमेतत्समर्धयति कृत्स्नं करोति तस्मादेवमुपतिष्ठते - ५.५.४.[२८]

अथैतानि हवींषि निर्वपति । सावित्रं द्वादशकपालं वाऽष्टाकपालं वा पुरोडाशं वारुणं यवमयं चरुमैन्द्रमेकादशकपालं पुरोडाशम् - ५.५.४.[२९]

स यत्सावित्रो भवति । सविता वै देवानां प्रसविता सवितृप्रसूत एवैतद्भिषज्यति तस्मात्सावित्रो भवति - ५.५.४.[३०]



अथ यद्वारुणो भवति । वरुणो वा आर्पयिता तद्य एवार्पयिता तेनैवैतद्भिषज्यति तस्माद्वारुणो भवति - ५.५.४.[३१]

अथ यदैन्द्रो भवति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैतद्भिषज्यति तस्मादैन्द्रो भवति - ५.५.४.[३२]

स यदि हैतयापि सोमातिपूतं भिषज्येत् । इष्टा अनुयाजा भवन्त्यव्यूढेस्नुचावथैतैर्हविर्भिः प्रचरति पश्चाद्वै सोमोऽतिपवते पश्चादेवैनमेतेन मेधेनापिदधात्याश्विनमु तर्हि द्विकपालं पुरोडाशं निर्वपेदथ यदा वपाभिः प्रचरत्यथैतेनाश्विनेन द्विकपालेन पुरोडाशेन प्रचरति - ५.५.४.[३३]

तदु तथा न कुर्यात् । ह्वलति वा एष यो यज्ञपथादेत्येति वा एष यज्ञपथाद्य एवं करोति तस्माद्यत्रैवैतेषां पशूनां वपाभिः प्रचरन्ति तदेवैतैर्हविर्भिः प्रचरेयुर्नो तर्ह्याश्विनं द्विकपालं पुरोडाशं निर्वपेत् - ५.५.४.[३४]

तस्य नपुंसको गौर्दक्षिणा । न वा एष स्त्री न पुमान्यन्नपुंसको गौर्यदह पुमांस्तेन न स्त्री यदु स्त्री तेनो न पुमांस्तस्मान्नपुंसको गौर्दक्षिणाऽश्वा वा रथवाही सा हि न स्त्री न पुमान्यदश्वा रथवाही यदह रथं वहति तेन न स्त्री यदु स्त्री तेनो न पुमांस्तस्मादश्वा रथवाही दक्षिणा - ५.५.४.[३५]

##५.५.५ त्रैधातवीयसंज्ञिका उदवसानीयेष्टिः
ऐन्द्रावैष्णवं द्वादशकपालं पुरोडाशं निर्वपति । तद्यदेतया यजते वृत्रे ह वा इदमग्रे सर्वमास यदृचो यद्यजूंषि यत्सामानि तस्मा इन्द्रो वज्रं प्राजिहीर्षत् - ५.५.५.[१]

स ह विष्णुमुवाच । वृत्राय वै वज्रं प्रहरिष्याम्यनु मा तिष्ठस्वेति तथेति ह विष्णुरुवाचानु त्वा स्थास्ये प्रहरेति तस्मा इन्द्रो वज्रमुद्ययाम स उद्यताद्वज्राद्वृत्रो बिभयाञ्चकार - ५.५.५.[२]



स होवाच । अस्ति वा इदं वीर्यं तन्नु ते प्रयच्छानि मा तु मे प्रहार्षीरिति तस्मै यजूंषि प्रायच्छत्तस्मै द्वितीयमुद्ययाम - ५.५.५.[३]

स होवाच । अस्ति वा इदं वीर्यं तन्नु ते प्रयच्छानि मा तु मे प्रहार्षीरिति तस्मा ऋचः प्रायच्छत्तस्मै तृतीयमुद्ययाम - ५.५.५.[४]

अस्ति वा इदं वीर्यं तन्नु ते प्रयच्छानि मा तु मे प्रहाषीरिति तस्मै सामानि प्रायच्छत्तस्मादप्येतर्ह्येवमेवैतैर्वेदैर्यज्ञं तन्वते यजुर्भिरेवाग्रेऽथर्ग्भिरथ सामभिरेवं ह्यस्मा एतत्प्रायच्छत् - ५.५.५.[५]

तस्य यो योनिराशय आस । तमनुपरामृश्य संलुप्याच्छिनत्सैषेष्टिरभवत्तद्यदेतस्मिन्नाशये त्रिधातुरिवैषा विद्याऽऽशेत तस्मात्त्रैधातवी नाम - ५.५.५.[६]

अथ यदैन्द्रावैष्णवं हविर्भवति । इन्द्रो हि वज्रमुदयच्छद्विष्णुरन्वतिष्ठत - ५.५.५.[७]

अथ यद्द्वादशकपालो भवति । द्वादश वै मासाः संवत्सरस्य संवत्सरसम्मितैषेष्टिस्तस्माद्द्वादशकपालो भवति - ५.५.५.[८]

तमुभयेषां व्रीहियवाणां गृह्णाति । व्रीहिमयमेवाग्रे पिण्डमधिश्रयति तद्यजुषां रूपमथ यवमयं तदृचां रूपमथ व्रीहिमयं तत्साम्नां रूपम् । तदेतत्त्रय्यै विद्यायै रूपं क्रियते सैषा राजसूययाजिन उदवसानीयेष्टिर्भवति - ५.५.५.[९]

सर्वान्वा एष यज्ञक्रतूनवरुन्द्धे । सर्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते तस्य यातयामेव यज्ञो भवति सोऽस्मात्पराङिव भवत्येतावान्वै सर्वो यज्ञो यावानेष त्रयो वेदस्तस्यैतद्रूपं क्रियत एष योनिराशयस्तदेतेन त्रयेण वेदेन पुनर्यज्ञमारभते तथाऽस्यायातयामा यज्ञो भवति तथो अस्मान्न पराङ्भवति - ५.५.५.[१०]



सर्वान्वा एष यज्ञक्रतूनवरुन्द्धे । सर्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वा एषेष्टिर्यत्त्रैधातव्यनया मेऽपीष्टमसदनयापि सूया इति तस्माद्वा एषा राजसूययाजिन उदवसानीयेष्टिर्भवति - ५.५.५.[११]

अथो यः सहस्रं वा भूयो वा दद्यात् । तस्य हाप्युदवसानीया स्याद्रिरिचान इव वा एष भवति यः सहस्रं वा भूयो वा ददात्येतद्वै सहस्रं वाचः प्रजातं यदेष त्रयोवेदस्तत्सहस्रेण रिरिचानं पुनराप्याययति तस्मादु ह तस्याप्युदवसानीया स्यात् - ५.५.५.[१२]

अथो ये दीर्घसत्त्रमासीरन् । संवत्सरं वा भूयो वा तेषां हाप्युदवसानीया स्यात्सर्वं वै तेषामाप्तं भवति सर्वं जितं ये दीर्घसत्त्रमासते संवत्सरं वा भूयो वा सर्वमेषा तस्मादु ह तेषामप्युदवसानीया स्यात् - ५.५.५.[१३]

अथो हैनयाऽप्यभिचरेत् । एतया वै भद्रसेनमाजातशत्रवमारुणिरभिचचार क्षिप्रं किलास्तृणुतेति ह स्माह याज्ञवल्क्योऽपि ह वा एनयेन्द्रो वृत्रस्यास्थानमच्छिनदपि ह वा एनयाऽऽस्थानं छिनत्ति य एनयाभिचरति तस्मादु हैनयाऽप्यभिचरेत् - ५.५.५.[१४]

अथो हैनयापि भिषज्येत् । यं न्वेवैकयर्चा भिषज्येदेकेन यजुषैकेन साम्ना तं न्वेवागदं कुर्यात्किमु यं त्रयेण वेदेन तस्मादु हैनयापि भिषज्येत् - ५.५.५.[१५]

तस्यै त्रीणि शतमानानि हिरण्यानि दक्षिणा । तानि ब्रह्मणे ददाति न वै ब्रह्मा प्रचरति न स्तुते न शंसत्यथ स यशो न वै हिरण्येन किं चन कुर्वन्त्यथ तद्यशस्तस्मात्त्रीणि शतमानानि ब्रह्मणे ददाति - ५.५.५.[१६]

तिस्रो धेनूर्होत्रे । भूमा वै तिस्रो धेनवो भूमा होता तस्मात्तिस्रो धेनूर्होत्रे - ५.५.५.[१७]



त्रीणि वासांस्यध्वर्यवे । तनुते वा अध्वर्युर्यज्ञं तन्वते वासांसि तस्मात्त्रीणि वासांस्यध्वर्यवे गामग्नीधे - ५.५.५.[१८]

ता वा एताः । द्वादश वा त्रयोदश वा दक्षिणा भवन्ति द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः संवत्सरसम्मितैषेष्टिस्तस्माद्द्वादश वा त्रयोदश वा दक्षिणा भवन्ति - ५.५.५.[१९]

चतुर्थ प्रपाठकः पञ्चमोऽध्यायः समाप्तः ।
इति माध्यंदिनीये शतपतब्राह्मणे सवनाम पञ्चमं काण्डं समाप्तम् ।।५।।
##६.१.१ अथाग्निचित्याब्राह्मणम्
असद्वा इदमग्र आसीत् । तदाहुः किं तदसदासीदित्यृषयो वाव तेऽग्रेऽसदासीत्तदाहुः के त ऽऋषय इति प्राणा वा ऋषयस्ते यत्पुराऽस्मात्सर्वस्मादिदमिच्छन्तः श्रमेण तपसारिषंस्तस्मादृषयः - ६.१.१.[१]

स यो यं मध्ये प्राणः । एष एवेन्द्रस्तानेष प्राणान्मध्यत इन्द्रियेणैन्द्ध यदैन्द्ध तस्मादिन्ध इन्धो ह वै तमिन्द्र इत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्त इद्धाः सप्त नाना पुरुषानसृजन्त - ६.१.१.[२]

तेऽब्रुवन् । न वा इत्थं सन्तः शक्ष्यामः प्रजनयितुमिमान्त्सप्त पुरुषानेकम्पुरुषं करवामेति त एतान्त्सप्त पुरुषानेकं पुरुषमकुर्वन्यदूर्ध्वं नाभेस्तौ द्वौ समौब्जन्यदवाङ्नाभेस्तौ द्वौ पक्षः पुरुषः पक्षः पुरुषः प्रतिष्ठैक आसीत् - ६.१.१.[३]

अथ यैतेषां सप्तानां पुरुषाणां श्रीः । यो रस आसीत्तमूर्ध्वं समुदौहंस्तदस्यशिरोऽभवद्यच्छ्रियं समुदौहंस्तस्माच्छिरस्तस्मिन्नेतस्मिन्प्राणा अश्रयन्त तस्माद्वेवैतच्छिरोऽथ यत्प्राणा अश्रयन्त तस्मादु प्राणाः श्रियोऽथ यत्सर्वस्मिन्नश्रयन्त तस्मादु शरीरम् - ६.१.१.[४]



स एव पुरुषः प्रजापतिरभवत् । स यः स पुरुषः प्रजापतिरभवदयमेव स योऽयमग्निश्चीयते - ६.१.१.[५]

स वै सप्तपुरुषो भवति । सप्तपुरुषो ह्ययं पुरुषो यच्चत्वार आत्मा त्रयः पक्षपुच्छानि चत्वारो हि तस्य पुरुषस्यात्मा त्रयः पक्षपुच्छान्यथ यदेकेन पुरुषेणात्मानं वर्धयति तेन वीर्येणायमात्मा पक्षपुच्छान्युद्यच्छति - ६.१.१.[६]

अथ यश्चितेऽग्निर्निधीयते । यैवैतेषां सप्तानां पुरुषाणां श्रीर्यो रसस्तमेतदूर्ध्वं समुदूहन्ति तदस्यैतच्छिरस्तस्मिन्त्सर्वे देवाः श्रिता अत्र हि सर्वेभ्यो देवेभ्यो जुह्वति तस्माद्वेवैतच्छिरः - ६.१.१.[७]

सोऽयं पुरुषः प्रजापतिरकामयत भूयान्त्स्यां प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत स श्रान्तस्तेपानो ब्रह्मैव प्रथममसृजत त्रयीमेव विद्यां सैवास्मै प्रतिष्ठाऽभवत्तस्मादाहुर्ब्रह्मास्य

सर्वस्य प्रतिष्ठेति तस्मादनूच्य प्रतितिष्ठति प्रतिष्ठा ह्येषा यद्ब्रह्म तस्यां प्रतिष्ठायां प्रतिष्ठितोऽतप्यत - ६.१.१.[८]

सोऽपोऽसृजत । वाच एव लोकाद्वागेवास्य साऽसृज्यत सेदं सर्वमाप्नोद्यदिदं किं च यदाप्नोत्तस्मादापो यदवृणोत्तस्माद्वाः - ६.१.१.[९]

सोऽकामयत । आभ्योऽद्भ्योऽधि प्रजायेयेति सोऽनया त्रय्या विद्यया सहापः प्राविशत्तत आण्डं समवर्तत तदभ्यमृशदस्त्वित्यस्तु भूयोऽस्त्वित्येवतदब्रवीत्ततो ब्रह्मैव प्रथममसृज्यत त्रय्येव विद्या तस्मादाहुर्ब्रह्मास्य सर्वस्य प्रथमजमित्यपि हि तस्मात्पुरुषाद्ब्रह्मैव पूर्वमसृज्यत तदस्य तन्मुखमेवासृज्यत तस्मादनूचानमाहुरग्निकल्प इति मुखं ह्येतदग्नेर्यद्ब्रह्म - ६.१.१.[१०]

अथ यो गर्भोऽन्तरासीत् । सोऽग्निरसृज्यत स यदस्य सर्वस्याग्रमसृज्यत तस्मादग्रिरग्निर्ह वै तमग्निरित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा अथ यदश्रु संक्षरितमासीत्सोऽश्रुरभवदश्रुर्ह वै तमश्व इत्याचक्षते परोऽक्षम्परोऽक्षकामा हि देवा अथ यदरसदिव स रासभोऽभवदथ यः कपाले रसो लिप्त आसीत्सोऽजोऽभवदथ यत्कपालमासीत्सा पृथिव्यभवत् - ६.१.१.[११]



सोऽकामयत । आभ्योऽद्भ्योऽधीमां प्रजनयेयमिति तां संक्लिश्याप्सु प्राविध्यत्तस्यै यः पराङ्सोऽत्यक्षरत्स कूर्मोऽभवदथ यदूर्ध्वमुदौक्ष्यतेदं तद्यदिदमूर्ध्वमद्भ्योऽधि जायते सेयं सर्वाप एवानुव्यैत्तदिदमेकमेव रूपं समदृश्यताप एव - ६.१.१.[१२]

सोऽकामयत । भूय एव स्यात्प्रजायेतेति सोऽश्राम्यत्स तपोऽतप्यत स श्रान्तस्तेपानः फेनमसृजत सोऽवेदन्यद्वा एतद्रूपं भूयो वै भवति श्राम्याण्येवेति स श्रान्तस्तेपानो मृदं शुष्कापमूषसिकतं शर्करामश्मानमयो हिरण्यमोषधिवनस्पत्यसृजत तेनेमां पृथिवीं प्राच्छादयत् - ६.१.१.[१३]

ता वा एता नव सृष्टयः । इयमसृज्यत तस्मादाहुस्त्रिवृदग्निरितीयं ह्यग्निरस्यै हि सर्वोऽग्निश्चीयते - ६.१.१.[१४]

अभूद्वा इयं प्रतिष्ठेति । तद्भूमिरभवत्तामप्रथयत्सा पृथिव्यभवत्सेयं सर्वा कृत्स्ना मन्यमानाऽगायद्यदगायत्तस्मादियं गायत्र्यथो आहुरग्निरेवास्यै पृष्ठे सर्वः कृत्स्नो मन्यमानोऽगायद्यदगायत्तस्मादग्निर्गायत्र इति तस्मादुहैतद्यः सर्वः कृत्स्नो मन्यते गायति वैव गीते वा रमते - ६.१.१.[१५]

## ६.१.२ वाय्वन्तरिक्षादिसृष्टिः प्रजापतेश्चित्याग्निरूपता च

सोऽकामयत प्रजापतिः । भूय एव स्यात्प्रजायेतेति सोऽग्निना पृथिवीं मिथुनं समभवत्तत आण्डं समवर्तत तदभ्यमृशत्पुष्यत्विति पुष्यतु भूयोऽस्त्वित्येव तदब्रवीत् - ६.१.२.[१]

स यो गर्भोऽन्तरासीत् । स वायुरसृज्यताथ यदश्रु संक्षरितमासीत्तानि वयांस्यभवन्नथ यः कपाले रसो लिप्त आसीत्ता मरीचयोऽभवन्नथ यत्कपालमासीत्तदन्तरिक्षमभवत् - ६.१.२.[२]



सोऽकामयत । भूय एव स्यात्प्रजायेतेति स वायुनान्तरिक्षं मिथुनं समभवत्तत आण्डं समवर्तत तदभ्यमृशद्यशो बिभृहीति ततोऽसावादित्योऽसृज्यतैष वै यशोऽथ यदश्रु संक्षरितमासीत्सोऽश्मा पृश्निरभवदश्रुर्ह वै तमश्मेत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा अथ यः कपाले रसो लिप्त आसीत्ते रश्मयोऽभवन्नथ यत्कपालमासीत्सा द्यौरभवत् - ६.१.२.[३]

सोऽकामयत । भूय एव स्यात्प्रजायेतेति स आदित्येन दिवं मिथुनं समभवत्तत आण्डं समवर्तत तदभ्यमृशद्रेतो बिभृहीति ततश्चन्द्रमा असृज्यतैष वै रेतोऽथ यदश्रु संक्षरितमासीत्तानि नक्षत्राण्यभवन्नथ यः कपाले रसो लिप्त आसीत्ता अवान्तरदिशोऽभवन्नथ यत्कपालमासीत्ता दिशोऽभवन् - ६.१.२.[४]

स इमांल्लोकान्त्सृष्ट्वाऽकामयत । ताः प्रजाः सृजेय या मऽएषु लोकेषु स्युरिति - ६.१.२.[५]

स मनसा वाचं मिथुनं समभवत् । सोऽष्टौ द्रप्सान्गर्भ्यभवत्तेऽष्टौ वसवोऽसृज्यन्त तानस्यामुपादधात् - ६.१.२.[६]

स मनसैव । वाचं मिथुनं समभवत्स एकादश द्रप्सान्गर्भ्यभवत्त एकादश रुद्रा असृज्यन्त तानन्तरिक्षऽउपादधात् - ६.१.२.[७]

स मनसैव । वाचं मिथुनं समभवत्स द्वादश द्रप्सान्गर्भ्यभवत्ते द्वादशादित्या असृज्यन्त तान्दिव्युपादधात् - ६.१.२.[८]

स मनसैव । वाचं मिथुनं समभवत्स गर्भ्यभवत्स विश्वान्देवानसृजत तान्दिक्षूपादधात् - ६.१.२.[९]



अथो आहुः । अग्निमेव सृष्टं वसवोऽन्वसृज्यन्त तानस्यामुपादधाद्वायुं रुद्रास्तानन्तरिक्ष आदित्यमादित्यास्तान्दिवि विश्वे देवाश्चन्द्रमसं तान्दिक्षूपादधादिति - ६.१.२.[१०]

अथो आहुः । प्रजापतिरेवेमांल्लोकान्त्सृष्ट्वा पृथिव्यां प्रत्यतिष्ठत्तस्मा इमा ओषधयोऽन्नमपच्यन्त तदाश्नात्स गर्भ्यभवत्स ऊर्ध्वेभ्य एव प्राणेभ्यो देवानसृजत ये ऽवाञ्चः प्राणास्तेभ्यो मर्त्याः प्रजा इत्यतो यतमथाऽसृजत तथाऽसृजत प्रजापतिस्त्वेवेदं सर्वमसृजत यदिदं किं च - ६.१.२.[११]

स प्रजाः सृष्ट्वा । सर्वमाजिमित्वा व्यस्रंसत तस्मादु हैतद्यः सर्वमाजिमेति व्येव स्रंसते तस्माद्विस्रस्तात्प्राणो मध्यत उदक्रामत्तस्मिन्नेनमुत्क्रान्ते देवा अजहुः - ६.१.२.[१२]

सोऽग्निमब्रवीत् । त्वं मा संधेहीति किं मे ततो भविष्यतीति त्वया माऽऽचक्षान्तै यो

वै पुत्राणां राध्यते तेन पितरं पितामहं पुत्रं पौत्रमाचक्षते त्वया माऽऽचक्षान्ता अथ मा संधेहीति तथेति तमग्निः समदधात्तस्मादेतं प्रजापतिं सन्तमग्निरित्याचक्षत आ ह वा एनेन पितरं पितामहं पुत्रं पौत्रं चक्षते य एवं वेद - ६.१.२.[१३]

तमब्रवीत् । कस्मिंस्त्वोपधास्यामीति हित एवेत्यब्रवीत्प्राणो वै हितं प्राणो हि सर्वेभ्यो भूतेभ्यो हितस्तद्यदेनं हित उपादधात्तस्मादाहोपधास्याम्युपदधामिति - ६.१.२.[१४]

तदाहुः । किं हितं किमुपहितमिति प्राण एव हितं वागुपहितं प्राणे हीयं वागुपेव हिता प्राणस्त्वेव हितमङ्गान्युपहितं प्राणे हीमान्यङ्गान्युपेव हितानि - ६.१.२.[१५]

सोऽस्यैष चित्य आसीत् । चेतव्यो ह्यस्यासीत्तस्माच्चित्यश्चित्य उ एवायं यजमानस्य भवति चेतव्यो ह्यस्य भवति तस्माद्वेव चित्यः - ६.१.२.[१६]



तदेता वा अस्य ताः । पञ्च तन्वो व्यस्रंसन्त लोम त्वङ्मांसमस्थि मज्जा ता एवैताः पञ्च चितयस्तद्यत्पञ्च चितीश्चिनोत्येताभिरेवैनं तत्तनूभिश्चिनोति यच्चिनोति तस्माच्चितयः - ६.१.२.[१७]

स यः स प्रजापतिर्व्यस्रंसत । संवत्सरः सोऽथ या अस्यैताः पञ्च तन्वो व्यस्रंसन्तऽर्तवस्ते पञ्च वा ऋतवः पञ्चैताश्चितयस्तद्यत्पञ्चचितीश्चिनोत्यृतुभिरेवैनं तच्चिनोति यच्चिनोति तस्माच्चितयः - ६.१.२.[१८]

स यः स संवत्सरः प्रजापतिर्व्यस्रंसत । अयमेव स वायुर्योऽयं पवतेऽथ या अस्य ता ऋतवः पञ्च तन्वो व्यस्रंसन्त दिशस्ताः पञ्च वै दिशः पञ्चैताश्चितयस्तद्यत्पञ्च चितीश्चिनोति दिग्भिरेवैनं तच्चिनोति यच्चिनोति तस्माच्चितयः - ६.१.२.[१९]

अथ यश्चितेऽग्निर्निधीयते । असौ स आदित्यः स एष एवैषोऽग्निश्चित एतावन्नु तद्यदेनमग्निः समदधात् - ६.१.२.[२०]

अथो आहुः । प्रजापतिरेव विस्रस्तो देवानब्रवीत्सं मा धत्तेति ते देवा अग्निमब्रुवंस्त्वयीमं पितरं प्रजापतिं भिषज्यामेति स वा अहमेतस्मिन्त्सर्वस्मिन्नेव विशानीति तथेति तस्मादेतं प्रजापतिं सन्तमग्निरित्याचक्षते - ६.१.२.[२१]

तं देवा अग्नावाहुतिभिरभिषज्यन् । ते यां यामाहुतिमजुहवुः सा सैनम्पक्वेष्टका भूत्वाप्यपद्यत तद्यदिष्टात्समभवंस्तस्मादिष्टकास्तस्मादग्निनेष्टकाः पचन्त्याहुतीरेवैनास्तत्कुर्वन्ति - ६.१.२.[२२]

सोऽब्रवीत् । यावद्यावद्वै जुहुथ तावत्तावन्म कं भवतीति तद्यदस्मा इष्टे कमभवत्तस्माद्वेवेष्टकाः - ६.१.२.[२३]

तद्ध स्माहात्ताक्ष्यः । य एव यजुष्मतीर्भूयसीरिष्टका विद्यात्सोऽग्निं चिनुयाद्भूय एव तत्पितरं प्रजापतिं भिषज्यतीति - ६.१.२.[२४]

अथ ह स्माह ताण्ड्यः । क्षत्रं वै यजुष्मत्य इष्टका विशो लोकम्पृणा अत्ता वै क्षत्रियोऽन्नं विड्यत्र वा अत्तुरन्न भूयो भवति तद्राष्ट्रं समृद्धं भवति तदेधते तस्माल्लोकम्पृणा एव भूयसीरुपदध्यादित्येतदु ह तयोर्वचोऽन्या त्वेवात स्थितिः - ६.१.२.[२५]

स एष पिता पुत्रः । यदेषोऽग्निमसृजत तेनैषोऽग्नेः पिता यदेतमग्निः समदधात्तेनैतस्याग्निः पिता यदेष देवानसृजत तेनैष देवानां पिता यदेतं देवाः समदधुस्तेनैतस्य देवाः पितरः - ६.१.२.[२६]

उभयं हैतद्भवति । पिता च पुत्रश्च प्रजापतिश्चाग्निश्चाग्निश्च प्रजापतिश्च प्रजापतिश्च देवाश्च प्रजापतिश्च य एवं वेद - ६.१.२.[२७]

स उपदधाति । तया देवतयेति वाग्वै सा देवताङ्गिरस्वदिति प्राणो वा अङ्गिरा ध्रुवा

सीदेति स्थिरा सीदेत्येतदथो प्रतिष्ठिता सीदेति वाचा चैवैनमेतत्प्राणेन च चिनोति वाग्वा अग्निः प्राण इन्द्र ऐन्द्राग्नोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतच्चिनोतीन्द्राग्नी वै सर्वे देवाः सर्वदेवत्योऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतच्चिनोति - ६.१.२.[२८]

तदाहुः । कस्मादस्या अग्निश्चीयत इति यत्र वै सा देवता व्यस्रंसत तदिमामेव रसेनानु व्यक्षरत्तं यत्र देवाः समस्कुर्वंस्तदेनमस्या एवाधि समभरन्त्सैषैकैवेष्टकेयमेवेयं ह्यग्निरस्यै हि सर्वोऽग्निश्चीयते सेयं चतुःस्रक्तिर्दिशो ह्यस्यै स्रक्तयस्तस्माच्चतुःस्रक्तय इष्टका भवन्तीमां ह्यनु सर्वा इष्टकाः - ६.१.२.[२९]

तदाहुः । यदेवमेकेष्टकोऽथ कथं पञ्चेष्टक इतीयं न्वेव प्रथमा मृन्मयीष्टका तद्यत्किं चात्र मृन्मयमुपदधात्येकैव सेष्टकाथ यत्पशुशीर्षाण्युपदधाति सा पश्विष्टकाथ यद्रुक्मपुरुषा उपदधाति यद्धिरण्यशकलैः प्रोक्षति सा हिरण्येष्टकाथ यत्स्रुचा उपदधाति यदुलूखलमुसले याः समिध आदधाति सा वानस्पत्येष्टकाथ यत्पुष्करपर्णमुपदधाति यत्कूर्मं यद्दधि मधु घृतं यत्किंचात्रान्नमुपदधाति सैवान्नं पञ्चमीष्टकैवमु पञ्चेष्टकः - ६.१.२.[३०]



तदाहुः । कतरत इष्टकायाः शिर इति यत उपस्पृश्य यजुर्वदतीत्यु हैक आहुः स स्वयमातृण्णाया एवार्धादुपस्पृश्य यजुर्वदेत्तथो हास्यैताः सर्वाः स्वयमातृण्णामभ्यावृत्ता भवन्तीति न तथा कुर्यादङ्गानि वा अस्यैतानि परूंषि यदिष्टका यथा वा अङ्गेऽङ्गे पर्वन्पर्वञ्छिरः कुर्यात्तादृक्तद्यो वाव चितेऽग्निर्निधीयते तदेवैतासां सर्वासां शिरः - ६.१.२.[३१]

तदाहुः । कति पशवोऽग्ना उपधीयन्त इति पञ्चेति न्वेव ब्रूयात्पञ्च ह्येतान्पशूनुपदधाति - ६.१.२.[३२]

अथो एक इति ब्रूयात् । अविरितीयं वा अविरियं हीमाः सर्वाः प्रजा अवतीयमु वा अग्निरस्यै हि सर्वोऽग्निश्चीयते तस्मादेक इति ब्रूयात् - ६.१.२.[३३]

अथो द्वाविति ब्रूयात् । अवी इतीयं चासौ चेमे हीमाः सर्वाः प्रजा अवतो यन्मृदियं तद्यदापोऽसौ तन्मृच्चापश्चेष्टका भवन्ति तस्माद्द्वाविति ब्रूयात् - ६.१.२.[३४]

अथो गौरिति ब्रूयात् । इमे वै लोका गौर्यद्धि किं च गच्छतीमांस्तल्लोकान्गच्छतीम उ लोका एषोऽग्निश्चितस्तस्माद्गौरिति ब्रूयात् - ६.१.२.[३५]

तदाहुः । कस्मै कामायाग्निश्चीयत इति सुपर्णो मा भूत्वा दिवं वहादित्यु हैक आहुर्न तथा विद्यादेतद्वै रूपं कृत्वा प्राणाः प्रजापतिरभवन्नेतद्रूपं कृत्वा प्रजापतिर्देवानसृजतैतद्रूपं कृत्वा देवा अमृता अभवंस्तद्यदेवैतेन प्राणा अभवन्यत्प्रजापतिर्यद्देवास्तदेवैतेन भवति - ६.१.२.[३६]

##
६.१.३



प्रजापतिर्वा इदमग्र आसीत् । एक एव सोऽकामयत स्यां प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्माच्छ्रान्तात्तेपानादापोऽसृज्यन्त तस्मात्पुरुषात्तप्तादापो जायन्ते - ६.१.३.[१]

आपोऽब्रुवन् । क्व वयं भवामेति तप्यध्वमित्यब्रवीत्ता अतप्यन्त ताः फेनमसृजन्त तस्मादपां तप्तानां फेनो जायते - ६.१.३.[२]

फेनोऽब्रवीत् । क्वाहं भवानीति तप्यस्वेत्यब्रवीत्सोऽतप्यत स मृदमसृजतैतद्वै फेनस्तप्यते यदप्स्वावेष्टमानः प्लवते स यदोपहन्यते मृदेव भवति - ६.१.३.[३]

मृदब्रवीत् । क्वाहं भवानीति तप्यस्वेत्यब्रवीत्साऽतप्यत सा सिकता असृजतैतद्वै मृत्तप्यते यदेनां विकृषन्ति तस्माद्यद्यपि सुमार्त्स्नं विकृषन्ति सैकतमिवैव भवत्येतावन्नु तद्यत्क्वाहं भवानि क्वाहं भवानीति - ६.१.३.[४]

सिकताभ्यः शर्करामसृजत । तस्मात्सिकताः शर्करैवान्ततो भवति शर्कराया अश्मानं तस्माच्छर्कराश्मैवान्ततो भवत्यश्मनोऽयस्तस्मादश्मनोऽयो धमन्त्ययसो हिरण्यं तस्मादयो बहुध्मातं हिरण्यसंकाशमिवैव भवति - ६.१.३.[५]

तद्यदसृज्यताक्षरत् तद्यदक्षरत्तस्मादक्षरं यदष्टौ कृत्वोऽक्षरत्सैवाष्टाक्षरा गायत्र्य भवत् - ६.१.३.[६]

अभूद्वा इयं प्रतिष्ठेति । तद्भूमिरभवत्तामप्रथयत्सा पृथिव्यभवत्तस्यामस्यां प्रतिष्ठायां भूतानि च भूतानां च पतिः संवत्सरायादीक्षन्त भूतानां पतिर्गृहपतिरासीदुषाः पत्नी - ६.१.३.[७]

तद्यानि तानि भूतानि । ऋतवस्तेऽथ यः स भूतानां पतिः संवत्सरः सोऽथ या सोषाः पत्न्यौषसी सा तानीमानि भूतानि च भूतानां च पतिः संवत्सर उषसि रेतोऽसिञ्चन्त्स संवत्सरे कुमारोऽजायत सोऽरोदीत् - ६.१.३.[८]



तं प्रजापतिरब्रवीत् । कुमार किं रोदिषि यच्छ्रमात्तपसोऽधि जातोऽसीति सोऽब्रवीदनपहतपाप्मा वा अस्म्यहितनामा नाम मे धेहीति तस्मात्पुत्रस्य जातस्य नाम कुर्यात्पाप्मानमेवास्य तदपहन्त्यपि द्वितीयमपि तृतीयमभिपूर्वमेवास्य तत्पाप्मानमपहन्ति - ६.१.३.[९]

तमब्रवीद्रुद्रोऽसीति । तद्यदस्य तन्नामाकरोदग्निस्तद्रूपमभवदग्निर्वै रुद्रो यदरोदीत्तस्माद्रुद्रः सोऽब्रवीज्ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति - ६.१.३.[१०]

तमब्रवीत्सर्वोऽसीति । तद्यदस्य तन्नामाकरोदापस्तद्रूपमभवन्नापो वै सर्वोऽद्भ्यो हीदं सर्वं जायते सोऽब्रवीज्ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति - ६.१.३.[११]

तमब्रवीत्पशुपतिरसीति । तद्यदस्यतन्नामाकरोदोषधयस्तद्रूपमभवन्नोषधयो वै पशुपतिस्तस्माद्यदा पशव ओषधीर्लभन्तेऽथ पतीयन्ति सोऽब्रवीज्ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति - ६.१.३.[१२]

तमब्रवीदुग्रोऽसीति । तद्यदस्य तन्नामाकरोद्वायुस्तद्रूपमभवद्वायुर्वा उग्रस्तस्माद्यदा बलवद्वायुग्रो वातीत्याहुः सोऽब्रवीज्ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति - ६.१.३.[१३]

तमब्रवीदशनिरसीति । तद्यदस्य तन्नामाकरोद्विद्युत्तद्रूपमभवद्विद्युद्वा अशनिस्तस्माद्यं विद्युद्धन्त्यशनिरवधीदित्याहुः सोऽब्रवीज्ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति - ६.१.३.[१४]

तमब्रवीद्भवोऽसीति । तद्यदस्य तन्नामाकरोत्पर्जन्यस्तद्रूपमभवत्पर्जन्यो वै भवः पर्जन्याद्धीदं सर्वं भवति सोऽब्रवीज्ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति - ६.१.३.[१५]



तमब्रवीन्महान्देवोऽसीति । तद्यदस्य तन्नामाकरोच्चन्द्रमास्तद्रूपमभवत्प्रजापतिर्वै चन्द्रमाः प्रजापतिर्वैमहान्देवः सोऽब्रवीज्ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति- ६.१.३.[१६]

तमब्रवीदीशानोऽसीति । तद्यदस्य तन्नामाकरोदादित्यस्तद्रूपमभवदादित्यो वा ईशान आदित्यो ह्यस्य सर्वस्येष्टे सोऽब्रवीदेतावान्वा अस्मि मा मेतः परो नाम धा इति - ६.१.३.[१७]

तान्येतान्यष्टावग्निरूपाणि । कुमारो नवमः सैवाग्नेस्त्रिवृत्ता - ६.१.३.[१८]

यद्वेवाष्टावग्निरूपाणि । अष्टाक्षरा गायत्री तस्मादाहुर्गायत्रोऽग्निरिति सोऽयं कुमारो रूपाण्यनुप्राविशन्न वा अग्निं कुमारमिव पश्यन्त्येतान्येवास्य रूपाणि पश्यन्त्येतानि हि रूपाण्यनुप्राविशत् - ६.१.३.[१९]

तमेतं संवत्सर एव चिनुयात् । संवत्सरेऽनुब्रूयाद्द्योरित्यु हैक आहुः संवत्सरे वै तद्रेतोऽसिञ्चन्त्स संवत्सरे कुमारोऽजायत तस्माद्द्योरेव चिनुयाद्द्वयोरनुब्रूयादिति संवत्सरे त्वेव चिनुयात्संवत्सरेऽनुब्रूयाद्यद्वाव रेतः सिक्तं तदेव जायते तत्ततो विक्रियमाणमेव वर्धमानं शेते तस्मात्संवत्सर एव चिनुयात्संवत्सरेऽनुब्रूयात्तस्य चितस्य नाम करोति पाप्मानमेवास्य तदपहन्ति चित्रनामानं करोति चित्रोऽसीति सर्वाणि हि चित्राण्यग्निः - ६.१.३.[२०]

##६.२.१
प्रजापतिरग्निरूपाण्यभ्यध्यायत् । स योऽयं कुमारो रूपाण्यनुप्रविष्ट आसीत्तमन्वैच्छत्सोऽग्निरवेदनु वै मा पिता प्रजापतिरिच्छति हन्त तद्रूपमसानि यन्म एष न वेदेति - ६.२.१.[१]

स एतान्पञ्च पशूनपश्यत् । पुरुषमश्वं गामविमजं यदपश्यत्तस्मादेते पशवः - ६.२.१.[२]



स एतान्पञ्च पशून्प्राविशत् । स एते पञ्च पशवोऽभवत्तमु वै प्रजापतिरन्वेवैच्छत् - ६.२.१.[३]

स एतान्पञ्च पशूनपश्यत् । यदपश्यत्तस्मादेते पशवस्तेष्वेतमपश्यत्तस्माद्वेवैते पशवः - ६.२.१.[४]

स ऐक्षत । इमे वा अग्निरिमानेवात्मानमभिसंस्करवै यथा वा अग्निः समिद्धो दीप्यत एवमेषां चक्षुर्दीप्यते यथाग्नेर्धूम उदयत एवमेषामूष्मोदयते यथाग्निरभ्याहितं दहत्येवं बप्सति यथाग्नेर्भस्म सीदत्येवमेषाम्पुरीषं सीदतीमे वा अग्निरिमानेवात्मानमभिसंस्करवा इति तान्नाना देवताभ्य आलिप्सत वैश्वकर्मणं पुरुषं वारुणमश्वमैन्द्रमृषभं त्वाष्ट्रमविमाग्नेयमजम् - ६.२.१.[५]

स ऐक्षत । नाना वा इदं देवताभ्य आलिप्सेऽग्नेर्वहं रूपाणि कामये हन्तैनानग्निभ्यः कामायालभा इति तानग्निभ्यः कामायालभत तद्यदग्निभ्य इति बहूनि ह्यग्निरूपाण्यभ्यध्यायदथ यत्कामायेति कामेन ह्यालभत तानाप्रीतान्पर्यग्निकृतानुदीचो नीत्वा समज्ञपयत् - ६.२.१.[६]

स ऐक्षत । या वै श्रीरभ्यधासिषमिमास्ताः शीर्षसु हन्त शीर्षाण्येवोपदधा इति स शीर्षाण्येवोत्कृत्योपाधत्ताथेतराणि कुसिन्धान्यप्सु प्राप्लावयदजेन यज्ञं समस्थापयन्नेन्मे यज्ञो विकृष्टोऽसदित्यात्मा वै यज्ञो नेन्मेऽयमात्मा विकृष्टोऽसदित्येतेन पशुनेष्ट्वा तत्प्रजापतिरपश्यद्यथैतस्याग्नेरन्तं न पर्यैत् - ६.२.१.[७]

स ऐक्षत । यमिममात्मानमप्सु प्रापिप्लवं तमन्विच्छानीति तमन्वैच्छत्तद्यदेषामप्सु प्रविद्धानां प्रत्यतिष्ठत्ता अपः समभरदथ यदस्यां तां मृदं तदुभयं सम्भृत्य मृदं चापश्चेष्टकामकरोत्तस्मादेतदुभयमिष्टका भवति मृच्चापश्च - ६.२.१.[८]



स ऐक्षत । यदि वा इदमित्थमेव सदात्मानमभिसंस्करिष्ये- मर्त्यः कुणपोऽनपहतपाप्मा भविष्यामि हन्तैतदग्निना पचानीति तदग्निनापचत्तदेनदमृतमकरोदेतद्वै हविरमृतं भवति यदग्निना पचन्ति तस्मादग्निनेष्टकाः पचन्त्यमृता एवैनास्तत्कुर्वन्ति - ६.२.१.[९]

तद्यदिष्ट्वा पशुनापश्यत् । तस्मादिष्टकास्तस्मादिष्ट्वैव पशुनेष्टकाः कुर्यादनिष्टका ह ता भवन्ति याः पुरा पशोः कुर्वन्त्यथो ह तदन्यदेव - ६.२.१.[१०]

तद्यास्ताः श्रियः । एतानि तानि पशुशीर्षाण्यथ यानि तानि कुसिन्धान्येतास्ताः पञ्च चितयस्तद्यत्पशुशीर्षाण्युपधाय चितीश्चिनोत्येतैरेव तच्छीर्षभिरेतानि कुसिन्धानि संदधाति - ६.२.१.[११]

त एते सर्वे पशवो यदग्निः । तस्मादग्नौ पशवो रमन्ते पशुभिरेव तत्पशवो रमन्ते तस्माद्यस्य पशवो भवन्ति तस्मिन्नग्निराधीयते ऽग्निर्ह्येष यत्पशवस्ततो वै प्रजापतिरग्निरभवत् - ६.२.१.[१२]

तद्धैके आहुः । अत्रैवैतैः सर्वैः पशुभिर्यजेत यद्वा एतैरत्र सर्वैः प्रजापतिरयक्ष्यत तदेवाग्नेरन्तं पर्यैष्यत्तद्यदेतैरत्र सर्वैर्यजेत तदेवाग्नेरन्तं परीयादिति न तथा कुर्याद्देवानां तदितादियादथो पथस्तदियादथो किं ततः सम्भरेदेतानि वा एतत्कुसिन्धान्येताश्चितीः सम्भरति तस्मात्तथा न कुर्यात् - ६.२.१.[१३]

यद्वेवैतान्पशूनालभते । आयतनमेवैतदग्नये करोति न ह्यनायतने कश्चन रमतेऽन्नं वा आयतनं तदेतत्पुरस्तान्निदधाति तदेनं पश्यन्नग्निरुपावर्तते - ६.२.१.[१४]

पुरुषोऽश्वो गौरविरजो भवन्ति । एतावन्तो वै सर्वे पशवोऽन्नम्पशवस्तद्यावदन्नं तदेतत्पुरस्तान्निदधाति तदेनं पश्यन्नग्निरुपावर्तते - ६.२.१.[१५]



पञ्च भवन्ति । पञ्च ह्येतेऽग्नयो यदेताश्चितयस्तेभ्य एतत्पञ्चायतनानि निदधाति तदेनं पश्यन्नग्निरुपावर्तते - ६.२.१.[१६]

तद्यदग्निभ्य इति । बहवो ह्येतेऽग्नयो यदेताश्चितयोऽथ यत्कामायेति यथा तं काममाप्नुयाद्यजमानो यत्काम एतत्कर्म कुरुते - ६.२.१.[१७]

पुरुषं प्रथममालभते । पुरुषो हि प्रथमः पशूनामथाश्वं पुरुषं ह्यन्वश्वोऽथ गामश्वं ह्यनु गौरथाविं गां ह्यन्वविरथाजमविं ह्यन्वजस्तदेनान्यथापूर्वं यथाश्रेष्ठमालभते - ६.२.१.[१८]

तेषां विषमा रशनाः स्युः । पुरुषस्य वर्षिष्ठाऽथ ह्रसीयस्यथ ह्रसीयसी तद्यथारूपं पशूनां रशनाः करोत्यपापवस्यसाय सर्वास्त्वेव समाः स्युः सर्वाः सदृश्यः सर्वे ह्येते समाः सर्वे सदृशा अग्नयो ह्युच्यन्तेऽन्नं ह्युच्यन्ते तेन समास्तेन सदृशाः - ६.२.१.[१९]

तदाहुः । कथमस्यैषोऽग्निः पञ्चेष्टकः सर्वः पशुष्वारब्धा भवतीति पुरोडाशकपालेषु न्वेवाऽऽप्यत इयं प्रथमा मृन्मयीष्टकाथ यत्पशुमालभते तेन पश्विष्टकाप्यतेऽथ यद्वपामभितो हिरण्यशकलौ भवतस्तेन हिरण्येष्टकाप्यतेऽथ यदिध्मो यूपः परिधयस्तेन वानस्पत्येष्टकाप्यतेऽथ यदाज्यं प्रोक्षण्यः पुरोडाशस्तेनान्नं पञ्चमीष्टकाऽऽप्यत एवमु हास्यैषोऽग्निः पञ्चेष्टकः सर्वः पशुष्वारब्धो भवति - ६.२.१.[२०]

तेषां चतुर्विंशतिः सामिधेन्यः । चतुर्विंशत्यर्धमासो वै संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे - ६.२.१.[२१]

यद्वेव चतुर्विंशतिः । चतुर्विंशत्यक्षरा वै गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे - ६.२.१.[२२]

यद्वेव चतुर्विंशतिः । चतुर्विंशो वै पुरुषो दश हस्त्या अङ्गुलयो दश पाद्याश्चत्वार्यङ्गानि पुरुषः प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे - ६.२.१.[२३]

उभयीर्गायत्रीश्च त्रिष्टुभश्चान्वाह । प्राणो गायत्र्यात्मा त्रिष्टुप्प्राणमेवास्य गायत्रीभिः समिन्द्ध आत्मानं त्रिष्टुब्भिर्मध्ये त्रिष्टुभो भवन्त्यभितो गायत्र्यो मध्ये ह्ययमात्माऽभितः प्राणा भूयसीः पुरस्ताद्गायत्रीरन्वाह कनीयसीरुपरिष्टाद्भूयांसो हीमे पुरस्तात्प्राणाः कनीयांस उपरिष्टात् - ६.२.१.[२४]

सोऽन्वाह । समास्त्वाग्न ऋतवो वर्धयन्त्विति प्रजापतिं विस्रस्तं यत्राग्निः समदधात्तमब्रवीद्या मत्संमिताः सामिधेन्यस्ताभिर्मा समिन्त्स्वेति - ६.२.१.[२५]

स एता अपश्यत् । समास्त्वाग्न ऋतवो वर्धयन्त्विति समाश्च त्वाग्न ऋतवश्च वर्धयन्त्वित्येतत्संवत्सरा ऋषयो यानि सत्येति संवत्सराश्च त्वऽर्षयश्च सत्यानि च

वर्धयन्त्वित्येतत्सं दिव्येन दीदिहि रोचनेनेत्यसौ वा आदित्यो दिव्यं रोचनं तेन संदीदिहीत्येतद्विश्वा आभाहि प्रदिशश्चतस्र इति सर्वा आभाहि प्रदिशश्चतस्र इत्येतत् - ६.२.१.[२६]

ता एता एकव्याख्यानाः । एतमेवाभि यथैतमेव संस्कुर्यादेतं संदध्यादेतं जनयेत्ता आग्नेय्यः प्राजापत्या यदग्निरपश्यत्तेनाग्नेय्यो यत्प्रजापतिं समैन्द्ध तेन प्राजापत्याः - ६.२.१.[२७]

द्वादशाप्रियः । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदाप्रीणाति - ६.२.१.[२८]

यद्वेव द्वादश । द्वादशाक्षरा वै जगतीयं वै जगत्यस्यां हीदं सर्वं जगदियमु वा अग्निरस्यै हि सर्वोऽग्निश्चीयते यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदाप्रीणाति - ६.२.१.[२९]



यद्वेव द्वादश । द्वादशाक्षरा वै जगती जगती सर्वाणि छन्दांसि सर्वाणि छन्दांसि प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदाप्रीणाति - ६.२.१.[३०]

ता एता ऊर्ध्वा अस्य समिधो भवन्तीति । प्रजापतिं विस्रस्तं यत्राग्निः समदधात्तमब्रवीद्या मत्सम्मिताऽआप्रियस्ताभिर्माऽऽप्रीणीहीति - ६.२.१.[३१]

स एता अपश्यत् । ऊर्ध्वा अस्य समिधो भवन्तीत्यूर्ध्वा ह्येतस्य समिद्धस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचींष्यग्नेरित्यूर्ध्वानि ह्येतस्य शुक्राणि शोचींष्यर्चींषि भवन्ति द्युमत्तमेति वीर्यवत्तमेत्येतत्सुप्रतीकस्येति सर्वतो वा अग्निः सुप्रतीकः सूनोरिति यदेनं जनयति तेनास्यैष सूनुः - ६.२.१.[३२]

ता एता एकव्याख्यानाः । एतमेवाभि यथैतमेव संस्कुर्यादेतं संदध्यादेतं जनयेत्ता आग्नेय्यः प्राजापत्या यदग्निरपश्यत्तेनाग्नेय्यो यत्प्रजापतिमाप्रीणात्तेन प्राजापत्याः - ६.२.१.[३३]

ता विषमा विषमपदाः । विषमाक्षरा विषमाणि हि छन्दांस्यथो यान्यस्याध्यात्ममङ्गानि विषमाणि तान्यस्यैताभिराप्रीणाति - ६.२.१.[३४]

वैश्वानरः पशुपुरोडाशः । वैश्वानरो वै सर्वेऽग्नयः सर्वेषामग्नीनामुपाप्त्यै - ६.२.१.[३५]

यद्वेव वैश्वानरः । ऋतवो हैते यदेताश्चितयोऽग्नयो वा ऋतव ऋतवः संवत्सरः संवत्सरो वैश्वानरो यदग्नय इति स्यादति तद्रेचयेद्द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरो वैश्वानर आग्नेय्यो याज्यानुवाक्या अग्निरूपाणामुपात्यै कामवत्यः कामानामुपात्यै - ६.२.१.[३६]



तद्धैके । इत्येवैतानि पशुशीर्षाणि वित्त्वोपदधत्युभयेनैते पशव इति ते ह ते मर्त्याः कुणपाः सम्भवन्त्यनाप्रीतानि हि तानि तद्ध तथाऽऽषाढेः सौश्रोमतेयस्योपदधुः स ह क्षिप्र एव ततो ममार - ६.२.१.[३७]

हिरण्मयान्यु हैके कुर्वन्ति । अमृतेष्टका इति वदन्तस्ता ह ता अमृतेष्टका न हि तानि पशुशीर्षाणि - ६.२.१.[३८]

मृन्मयान्यु हैके कुर्वन्ति । उत्सन्ना वा एते पशवो यद्वै किंचोत्सन्नमियं तस्य सर्वस्य प्रतिष्ठा तद्यत्रैते पशवो गतास्तत एनानधि सम्भराम इति न तथा कुर्याद्यो वा एतेषामावृतं च ब्राह्मणं च न विद्यात्तस्यैत उत्सन्नाः स्युः स एतानेव पञ्च पशूनालभेत यावदस्य वशः स्यात्तान्हैतान्प्रजापतिः प्रथम आलेभे श्यापर्णः सायकायनोऽन्तमोऽथ ह स्मैतानेवान्तरेणालभन्तेऽथैतर्हीमौ द्वावेवालभ्येते प्राजापत्यश्च वायव्यश्च तयोरतो ब्राह्मणमुद्यते - ६.२.१.[३९]

##६.२.२
प्राजापत्यं चरका आलभन्ते । प्रजापतिरग्निं चित्वाग्निरभवत्तद्यदेतमालभते तदेवाग्नेरन्तं पर्येतीते - ६.२.२.[१]

श्यामो भवति । द्वयानि वै श्यामस्य लोमानि शुक्लानि च कृष्णानि च द्वन्द्वम् मिथुनं प्रजननं तदस्य प्राजापत्यं रूपं तूपरो भवति तूपरो हि प्रजापतिः - ६.२.२.[२]

तस्यैकविंशति सामिधेन्यः । द्वादश मासाः पञ्चऽर्तवस्त्रय इमे लोका असावादित्य एकविंश एष प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे - ६.२.२.[३]



यद्वेवैकविंशतिः । एकविंशो वै पुरुषो दश हस्त्या अङ्गुलयो दश पाद्या आत्मैकविंशः पुरुषः प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे - ६.२.२.[४]

उभयीर्गायत्रीश्च त्रिष्टुभश्चान्वाह । तासामुक्तो बन्धुरुक्तम्वेवान्वृचं हिरण्यगर्भवत्याऽऽघारमाघारयति प्रजापतिर्वै हिरण्यगर्भः प्रजापतिरग्निर्द्वादशाप्रियस्तासामुक्तो बन्धुरुक्तम्वेवान्वृचं प्राजापत्यः पशुपुरोडाशो य एव पशोर्बन्धुः स पुरोडाशस्य द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरः प्रजापतिः कद्वत्यो याज्यानुवाक्याः को हि प्रजापतिः - ६.२.२.[५]

अथैतं वायवे नियुत्वते । शुक्लं तूपरमालभते प्रजापतिः प्रजाः सृष्ट्वानुव्यैक्षत तस्यात्यानन्देन रेतः परापतत्सोऽजः शुक्लस्तूपरो लप्सुद्यभवद्रसो वै रेतो यावानु वै रसस्तावानात्मा तद्यदेतमालभते तदेवाग्नेरन्तं पर्येति शुक्लो भवति शुक्लं हि रेतस्तूपरो

भवति तूपरं हि रेतो वायवे भवति प्राणो वै वायुर्नियुत्वते भवत्युदानो वै नियुतः प्राणोदानावेवास्मिन्नेतद्दधाति - ६.२.२.[६]

यद्वेवैतं वायवे नियुत्वते । शुक्लं तूपरमालभते प्रजापतिं विस्रस्तं यत्र देवाः समस्कुर्वन्त्स योऽस्मात्प्राणो मध्यत उदक्रामत्तमस्मिन्नेतेन पशुनाऽदधुस्तथैवास्मिन्नयमेतद्दधाति वायवे भवति प्राणो वै वायुर्नियुत्वते भवत्युदानो वै नियुतः प्राणोदानावेवास्मिन्नेतद्दधाति शुक्लो भवति शुक्लो हि वायुस्तूपरो भवति तूपरो हि वायुः - ६.२.२.[७]

तस्य सप्तदश सामिधेन्यः । सप्तदशो वै संवत्सरो द्वादश मासाः पञ्चऽर्तवः संवत्सरः प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे - ६.२.२.[८]

यद्वेव सप्तदश । सप्तदशो वै पुरुषो दश प्राणाश्चत्वार्यङ्गान्यात्मा पञ्चदशो ग्रीवाः षोडश्यः शिरः सप्तदशं पुरुषः प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे - ६.२.२.[९]



उभयीर्गायत्रीश्च त्रिष्टुभश्चान्वाह । तासामुक्तो बन्धुरुक्तम्वेवान्वृचं द्वादशाप्रियस्तासामुक्तो बन्धुरुक्तम्वेवान्वृचं प्राजापत्यः पशुपुरोडाशोऽत्रो स काम उपाप्त इति ह स्माह माहित्थिर्यं चरकाः प्राजापत्ये पशावाहुरिति - ६.२.२.[१०]

यद्वेव वायव्यः पशुर्भवति । प्राजापत्यः पशुपुरोडाशोऽर्धं ह प्रजापतेर्वायुरर्धं प्रजापतिस्तद्यदुभौ वायव्यौ स्यातामुभौ वा प्राजापत्यावर्धं हैवास्य कृतं स्यान्नार्धमथ यद्वायव्यः पशुर्भवति प्राजापत्यः पशुपुरोडाशस्तेन हैवैतं सर्वं कृत्स्नं प्रजापतिं संस्करोति - ६.२.२.[११]

यद्वेव वायव्यः पशुर्भवति । प्राजापत्यः पशुपुरोडाशः प्रजापतिं विस्रस्तं यत्र देवाः समस्कुर्वन्त्स योऽस्मात्प्राणो मध्यत उदक्रामत्तमस्मिन्नेतेन पशुनाऽदधुरथास्यैतेन पुरोडाशेनात्मानं समस्कुर्वन्त्स यत्प्राजापत्यो भवति प्रजापतिर्ह्यात्मा द्वादशकपालो द्वादश

मासाः संवत्सरः संवत्सरः प्रजापतिः कद्वत्यौ याज्यानुवाक्ये को हि प्रजापतिः - ६.२.२.[१२]

तद्यद्वपां पुरस्ताज्जुहोति । य एवायं पुरस्तात्प्राणस्तमस्मिन्नेतद्दधात्यथ यदेतेन मध्यतश्चरन्ति मध्यतो ह्ययमात्माथ यद्धविषोपरिष्टाच्चरन्ति य एवायमुपरिष्टात्प्राणस्तमस्मिन्नेतद्दधाति शुक्लवत्यो याज्यानुवाक्याः स्युः शुक्लरूपाणामुपाप्त्यै नियुत्वत्यो यदेव नियुत्वद्रूपं तस्योपाप्त्यै - ६.२.२.[१३]

तदु वा आहुः । वपाया एव शुक्लवत्यौ स्यातामेतावद्वै पशौ शुक्लं यद्वपा शुक्लवत्यौ नियुत्वत्यौ हविषो यदेव नियुत्वद्रूपं तस्योपाप्त्या इति - ६.२.२.[१४]

यद्वेवैतं पशुमालभते । एतस्मिन्ह पशौ सर्वेषां पशूनां रूपं यत्तूपरो लप्सुदी तत्पुरुषस्य रूपं तूपरो हि लप्सुदी पुरुषो यत्तूपरः केसरवांस्तदश्वस्य रूपं तूपरो हि केसरवानश्वो यदष्टाशफस्तद्गो रूपमष्टाशफो हि गौरथ यदस्यावेरिव शफास्तदवे रूपं यदजस्तदजस्य तद्यदेतमालभते तेन हैवास्यैते सर्वे पशव आलब्धा भवन्त्यतो यतमदस्य कर्मोपकल्पेतैते वा पञ्च पशव एष वा प्राजापत्य एष वा नियुत्वतीयः - ६.२.२.[१५]

तं पौर्णमास्यामालभेत । अमावास्यायामालभेतेत्यु हैक आहुरसौ वै चन्द्रः प्रजापतिः स एतां रात्रिमिह वसति तद्यथोपतिष्ठन्तमालभेतैवं तदिति - ६.२.२.[१६]

तद्वै पौर्णमास्यामेव । असौ वै चन्द्रः पशुस्तं देवाः पौर्णमास्यामालभन्ते यत्रैनं देवा आलभन्ते तदेनमालभा इति तस्मात्पौर्णमास्यां यद्वेव पौर्णमास्यां पौर्णमासी ह वाव प्रथमा व्युवास तस्माद्वेव पौर्णमास्याम् - ६.२.२.[१७]

तद्वै फाल्गुन्यामेव । एषा ह संवत्सरस्य प्रथमा रात्रिर्यत्फाल्गुनी पौर्णमासी योत्तरैषोत्तमा या पूर्वा मुखत एव तत्संवत्सरमारभते - ६.२.२.[१८]

स वा इष्ट्वैव पौर्णमासेन । अथ पशुमालभेत पौर्णमासेन वा इन्द्रो वृत्रं पाप्मानं हत्वाऽपहतपाप्मैतत्कर्मारभत तथैवैतद्यजमानः पौर्णमासेनैव वृत्रं पाप्मानं हत्वाऽपहतपाप्मैतत्कर्मारभते - ६.२.२.[१९]

तद्वा उपांशु भवति । एतद्धैतैः प्रजापतिः पशुभिः कर्मेयेष तद्धात्रानद्धेवैवासानिरुक्तमिव तस्मादुपांशु - ६.२.२.[२०]

यद्वेवोपांशु । प्राजापत्यं वा एतत्कर्म प्रजापतिं ह्येतेन कर्मणारभतेऽनिरुक्तो वै प्रजापतिः - ६.२.२.[२१]

यद्वेवोपांशु । रेतो वा अत्र यज्ञ उपांशु वै रेतः सिच्यते वपा पशुपुरोडाशो हविरेतावान्हि पशुः - ६.२.२.[२२]



अष्टकायामुखां सम्भरति । प्राजापत्यमेतदहर्यदष्टका प्राजापत्यमेतत्कर्म यदुखा प्राजापत्य एव तदहन्प्राजापत्यं कर्म करोति - ६.२.२.[२३]

यद्वेवाष्टकायाम् । पर्वैतत्संवत्सरस्य यदष्टका पर्वैतदग्नेर्यदुखा पर्वण्येव तत्पर्व करोति - ६.२.२.[२४]

यद्वेवाष्टकायाम् । अष्टका वा उखा निधिर्द्वा उद्धी तिरश्ची रास्ना तच्चतुश्चतस्र ऊर्ध्वास्तदष्टावष्टकायामेव तदष्टकां करोति - ६.२.२.[२५]

अमावास्यायां दीक्षते । अमावास्यायै वा अधि यज्ञस्तायते यतो यज्ञस्तायते ततो यज्ञं जनयानीति - ६.२.२.[२६]

यद्वेवामावास्यायाम् । रेतो वा एतद्भूतमात्मानं सिञ्चत्युखायां योनौ यद्दीक्षते तस्मा एतं पुरस्ताल्लोकं करोति यद्दीक्षितो भवति तं कृतं लोकमभि जायते तस्मादाहुः कृतं लोकं पुरुषोऽभि जायत इति - ६.२.२.[२७]

स यत्कनीयः संवत्सराद्दीक्षितः स्यात् । अलोका इष्टका उपदध्यादिष्टका लोकानतिरिच्येरन्नथ यद्भूयसो लोकान्कृत्वेष्टका नानूपदध्याल्लोका इष्टका अतिरिच्येरन्नथ यदमावास्यायां दीक्षित्वाऽमावास्यायां क्रीणाति तद्यावन्तमेव लोकं करोति तावतीरिष्टका उपदधात्यथास्यापूर्यमाणपक्षे सर्वोऽग्निश्चीयते - ६.२.२.[२८]

तदाहुः । यद्यावत्य एतस्याग्नेरिष्टकास्तावन्ति क्रयेऽहोरात्राणि सम्पद्यन्तेऽथ यान्यूर्ध्वानि क्रयादहानि कथमस्य ते लोका अनूपहिता भवन्तीति यद्वा अमावास्यायां दीक्षित्वाऽमावास्यायां क्रीणाति तद्यावन्तमेव लोकं करोति तावतीरिष्टका उपदधात्यथ यान्यूर्ध्वानि क्रयादहानि तस्मिन्नवकाशेऽध्वर्युरग्निं चिनोति को हि चिनुयान्न च सोऽवकाशः स्याद्यावन्ति वै संवत्सरस्याहोरात्राणि तावत्य एतस्याग्नेरिष्टका उप च त्रयोदशो मासस्त्रयोदशो वा एष मासो यान्यूर्ध्वानि
क्रयादहानि तद्वा अमूस्त्रयोदशस्य मास इष्टकास्ताभिरस्य ते लोका अनूपहिता भवन्ति तत्समा लोकाश्चेष्टकाश्च भवन्ति - ६.२.२.[२९]

एतद्वै यैव प्रथमा पौर्णमासी । तस्यां पशुमालभते या प्रथमाष्टका तस्यामुखां सम्भरति या प्रथमामावास्या तस्यां दीक्षत एतद्वै यान्येव संवत्सरस्य प्रथमान्यहानि तान्यस्य तदारभते तानि च तदाप्नोत्यथातः सम्पदेव - ६.२.२.[३०]

तदाहुः । कथमस्यैतत्कर्म संवत्सरमग्निमाप्नोति कथं संवत्सरेणाग्निना सम्पद्यत इत्येतेषां वै पञ्चानां पशूनां चतुर्विंशतिः सामिधेन्यो द्वादशाप्रियस्तत्षड्त्रिंशदेकादशानुयाजा एकादशोपयजस्तदष्टापञ्चाशत् - ६.२.२.[३१]

ततो याष्टाचत्वारिंशत् । साष्टाचत्वारिंशदक्षरा जगतीयं वै जगत्यस्यां हीदं सर्वं जगदियमु वा अग्निरस्यै हि सर्वोऽग्निश्चीयते यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति - ६.२.२.[३२]

यद्वेवाष्टाचत्वारिंशत् । अष्टाचत्वारिंशदक्षरा वै जगती जगती सर्वाणि छन्दांसि सर्वाणि छन्दांसि प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति - ६.२.२.[३३]

अथ यानि दश । सा दशाक्षरा विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति - ६.२.२.[३४]

वपा पशुपुरोडाशः । तत्षष्टिः षष्टिर्मासस्याहोरात्राणि तन्मासमाप्नोति मास आप्त ऋतुमाप्नोत्यृतुः संवत्सरं तत्संवत्सरमग्निमाप्नोति ये च संवत्सरे कामा अथ यदतोऽन्यद्यदेव संवत्सरेऽन्नं तत्तत् - ६.२.२.[३५]



अथैतस्य प्राजापत्यस्य । एकविंशतिः सामिधेन्यो द्वादशाप्रियस्तत्त्रयस्त्रिंशदेकादशानुयाजा एकादशोपयज तत्पञ्चपञ्चाशद्वपापशुपुरोडाशो हविस्तदष्टापञ्चाशत्स योऽष्टापञ्चाशति कामोऽत्रैव तमाप्नोति द्वावाघारौ तत्षष्टिः स यः षष्ट्यां कामोऽत्रैव तमाप्नोत्यथ यदतोऽन्यद्यदेवं संवत्सरेऽन्नं तत्तत् - ६.२.२.[३६]

अथैतस्य नियुत्वतीयस्य । सप्तदश सामिधेन्यो द्वादशाप्रियस्तदेकान्न त्रिंशदेकादशानुयाजा एकादशोपयजस्तदेकपञ्चाशद्वपा पशुपुरोडाशो हविस्तच्चतुष्पञ्चाशद्वावाघारौ द्वौ स्विष्टकृतौ तदष्टापञ्चाशत्स योऽष्टापञ्चाशति कामोऽत्रैव तमाप्नोति वनस्पतिश्च वसाहोमश्च तत्षष्टिः स यः षष्ट्यां कामोऽत्रैव तमाप्नोत्यथ यदतोऽन्यद्यदेव संवत्सरेऽन्नं तत्तदेवमु हास्यैतत्कर्म संवत्सरमग्निमाप्नोत्येवं संवत्सरेणाग्निना सम्पद्यते - ६.२.२.[३७]

तदाहुः । नैतस्य पशोः समिष्टयजूंषि जुहुयान्न हृदयशूलेनावभृथमभ्यवेयादारम्भो वा एषोऽग्नेः पशुर्व्यवसर्गो देवतानां समिष्टयजूंषि संस्थाऽवभृथो नेदारम्भे देवता व्यवसृजानि नेद्यज्ञं संस्थापयानीति स वै समेव स्थापयेदेतेन पशुनेष्ट्वा तत्प्रजापतिरपश्यद्यथैतस्याग्नेरन्तं

न पर्यैत्तस्मात्संस्थापयेद्यद्वेव संस्थापयति प्राण एष पशुस्तस्य यदन्तरियात्प्राणस्य तदन्तरियाद्यदु वै प्राणस्यान्तरियात्तत एवं म्रियेत तस्मात्समेव स्थापयेदथातो व्रतानामेव - ६.२.२.[३८]

तदाहुः । नैतेन पशुनेष्ट्वोपरि शयीत न मांसमश्नीयान्न मिथुनमुपेयात्पूर्वदीक्षा वा एष पशुरनवक्लृप्तं वै तद्यद्दीक्षित उपरिशयीत यन्मांसमश्नीयाद्यन्मिथुनमुपेयादिति नेत्वेवैषा दीक्षा नेव हि मेखलाऽस्ति न कृष्णाजिनमिष्टकां वा एतां कुरुते तस्मादु काममेवोपरि शयीतैतदु सर्वमन्नं यदेते पशवस्तदस्यात्राप्तमारब्धं भवति तद्यानि कानि चाऽऽमधुनोऽशनानि तेषामस्य सर्वेषां कामाशनं यदि लभेत मिथुनं तु नोपेयात्पुरा मैत्रावरुण्यै पयस्यायै तस्योपरि बन्धुः - ६.२.२.[३९]

तदाहुः । दद्यादेतस्मिन्यज्ञे दक्षिणां नेन्मेऽयं यज्ञोऽदक्षिणोऽसद्ब्रह्मणऽआदिष्टदक्षिणां दद्याद्ब्रह्मा वै सर्वो यज्ञस्तदस्य सर्वो यज्ञो भिषज्यितो भवतीति न तथा कुर्यादिष्टकां वा एतां कुरुते तद्यथेष्टकायामिष्टकायां दद्यात्तादृक्तदमूर्ह्येव दद्याद्यदस्योपकल्पेत - ६.२.२.[४०]



##६.२.३
एतद्वै देवा अब्रुवन् । चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तेषां चेतयमानानां प्रजापतिरिमां प्रथमां स्वयमातृण्णां चितिमपश्यत्तस्मात्तां प्रजापतिनोपदधाति - ६.२.३.[१]

तमग्निरब्रवीत् । उपाहमायानीति केनेति पशुभिरिति तथेति पश्विष्टकया ह तदुवाचैषा वाव पश्विष्टका यद्दूर्वेष्टका तस्मात्प्रथमायै स्वयमातृण्णाया अनन्तर्हिता दूर्वेष्टकोपधीयते तस्मादस्या अनन्तर्हिता ओषधयोऽनन्तर्हिताः पशवोऽनन्तर्हितोऽग्निरनन्तर्हितो ह्येष एतयोपैत् - ६.२.३.[२]

तेऽब्रुवन् । चेतयध्वमेवेति चितिमिच्छतेति वाव तदब्रुवन्नित ऊर्ध्वमिच्छतेति तेषां

चेतयमानानामिन्द्राग्नी च विश्वकर्मा चान्तरिक्षं द्वितीयां स्वयमातृण्णां चितिमपश्यंस्तस्मात्तामिन्द्राग्निभ्यां च विश्वकर्मणा चोपदधाति - ६.२.३.[३]

तान्वायुरब्रवीत् । उपाहमायानीति केनेति दिग्भिरिति तथेति दिश्याभिर्ह तदुवाच तस्माद्द्वितीयायै स्वयमातृण्णाया अनन्तर्हिता दिश्या उपधीयन्ते तस्मादन्तरिक्षादनन्तर्हिता दिशोऽनन्तर्हितो वायुरनन्तर्हितो ह्येष एताभिरुपैत् - ६.२.३.[४]

तेऽब्रुवन् । चेतयध्वमेवेति चितिमिच्छतेति वाव तदब्रुवन्नित ऊर्ध्वमिच्छतेति तेषां चेतयमानानां परमेष्ठी दिवं तृतीयं स्वयमातृण्णां चितिमपश्यत्तस्मात्तां परमेष्ठिनोपदधाति - ६.२.३.[५]

तमसावादित्योऽब्रवीत् । उपाहमायानीति केनेति लोकम्पृणयेति तथेत्येष वाव लोकम्पृणात्मना हैव तदुवाच तस्मात्तृतीया स्वयमातृण्णानन्तर्हिता लोकम्पृणाया उपधीयते तस्मादसावादित्योऽनन्तर्हितो दिवोऽनन्तर्हितो ह्येष एतयोपैत् - ६.२.३.[६]



तदेता वाव षड्देवताः । इदं सर्वमभवन्यदिदं किं च ते देवाश्चऽर्षयश्चाब्रुवन्निमा वाव षड्देवता इदं सर्वमभूवन्नुप तज्जानीत यथा वयमिहाप्यसामेति तेऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत यथा वयमिहाप्यसामेति तेषां चेतयमानानां देवा द्वितीयां चितिमपश्यन्नृषयश्चतुर्थीम् - ६.२.३.[७]

तेऽब्रुवन् । उप वयमायामेति केनेति यदेषु लोकेषूपेति तथेति तद्यदूर्ध्वं पृथिव्या अर्वाचीनमन्तरिक्षात्तेन देवा उपायंस्तदेषा द्वितीया चितिरथ यदूर्ध्वमन्तरिक्षादर्वाचीनं दिवस्तेनऽर्षय उपायंस्तदेषा चतुर्थी चितिः - ६.२.३.[८]

ते यदब्रुवन् । चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवन्यच्चेतयमाना अपश्यंस्तस्माच्चितयः - ६.२.३.[९]

प्रजापतिः प्रथमां चितिमपश्यत् । प्रजापतिरेव तस्या आर्षेयं देवा द्वितीयां चितिमपश्यन्देवा एव तस्या आर्षेयमिन्द्राग्नी च विश्वकर्मा च तृतीयां चितिमपश्यंस्त एव तस्या आर्षेयमृषयश्चतुर्थीं चितिमपश्यन्नृषय एव तस्या आर्षेयं परमेष्ठी पञ्चमीं चितिमपश्यत्परमेष्ठ्येव तस्या आर्षेयं स यो हैतदेवं चितीनामार्षेयं वेदार्षेयवत्यो हास्य बन्धुमत्यश्चितयो भवन्ति - ६.२.३.[१०]

##६.३.१
एतद्वै देवा अब्रुवन् । चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तेषां चेतयमानानां सवितैतानि सावित्राण्यपश्यद्यत्सविताऽपश्यत्तस्मात्सावित्राणि स एतामष्टागृहीतामाहुतिमजुहोत्तां हुत्वेमामष्टधाविहितामषाढामपश्यत्पुरैव सृष्टां सतीम् - ६.३.१.[१]

ते यदब्रुवन् चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवन्यच्चेतयमाना अपश्यंस्तस्माच्चितिराहुतिर्वै यज्ञो यदिष्ट्वाऽपश्यत्तस्मादिष्टका - ६.३.१.[२]



तां वा एताम् । एकां सतीमष्टागृहीतामष्टाभिर्यजुर्भिर्जुहोति तस्मादियमेका सत्यष्टधा विहिता - ६.३.१.[३]

तामूर्ध्वामुद्गृह्णन्जुहोति । इमां तदूर्ध्वां रूपैरुद्गृह्णाति तस्मादियमूर्ध्वा रूपैः - ६.३.१.[४]

तां संततां जुहोति । एतद्वै देवा अबिभयुर्यद्वै न इह रक्षांसि नाष्ट्रा नान्ववेयुरिति त एतं संततहोममपश्यन्रक्षसां नाष्ट्राणामनन्ववायनाय तस्मात्संततां जुहोति - ६.३.१.[५]

यद्वेवैतामाहुतिं जुहोति । सवितैषोऽग्निस्तमेतयाऽऽहुत्या पुरस्तात्प्रीणाति तमिष्ट्वा प्रीत्वाऽथैनं सम्भरति तद्यदेतया सवितारं प्रीणाति तस्मात्सावित्राणि तस्माद्वा एतामाहुतिं जुहोति - ६.३.१.[६]

यद्वेवैतामाहुतिं जुहोति । सवितैषोऽग्निस्तमेतयाऽऽहुत्या पुरस्ताद्रेतोभूतं सिञ्चति यादृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यदेतया सवितारं रेतो भूतं सिञ्चति तस्मात्सावित्राणि तस्माद्वा एतामाहुतिं जुहोति - ६.३.१.[७]

स्रुवश्चात्र स्रुक्च प्रयुज्येते । वाग्वै स्रुक्प्राणः स्रुवो वाचा च वै प्राणेन चैतदग्रे देवाः कर्मान्वैच्छंस्तस्मात्स्रुवश्च स्रुक्च - ६.३.१.[८]

यद्वेव स्रुवश्च स्रुक्च । यो वै स प्रजापतिरासीदेष स स्रुवः प्राणो वै स्रुवः प्राणः प्रजापतिरथ या सा वागासीदेषा सा स्रुग्योषा वै वाग्योषा स्रुगथ यास्ता आप आयन्वाचो लोकादेतास्ता यामेतामाहुतिं जुहोति - ६.३.१.[९]

तां संततां जुहोति । संतता हि ता आप आयन्नथ यः स प्रजापतिस्त्रय्या विद्यया सहापः प्राविशदेष स यैरेतद्यजुर्भिर्जुहोति - ६.३.१.[१०]



तद्यानि त्रीणि प्रथमानि । इमे ते लोका अथ यच्चतुर्थं यजुस्त्रयी सा विद्या जगती सा भवति जगती सर्वाणि छन्दांसि सर्वाणि छन्दांसि त्रयी विद्याऽथ यानि चत्वार्युत्तमानि दिशस्तानीमे च वै लोका दिशश्च प्रजापतिरथैषा त्रयी विद्या - ६.३.१.[११]

स जुहोति । युञ्जानः प्रथमं मन इति प्रजापतिर्वै युञ्जानः स मन एतस्मै कर्मणे ऽयुङ्क्त तद्यन्मन एतस्मै कर्मणेऽयुङ्क्त तस्मात्प्रजापतिर्युञ्जानः - ६.३.१.[१२]

तत्त्वाय सविता धिय इति । मनो वै सविता प्राणा धियोऽग्नेर्ज्योतिर्निचाय्येत्यग्नेर्ज्योतिर्दृष्ट्वेत्येतत्पृथिव्या अध्याभरदिति पृथिव्यै ह्येनदध्याभरति - ६.३.१.[१३]

युक्तेन मनसा वयमिति । मन एवैतदेतस्मै कर्मणे युङ्क्ते न ह्ययुक्तेन मनसा किं चन सम्प्रति शक्नोति कर्तुं देवस्य सवितुः सव इति देवेन सवित्रा प्रसूता इत्येतत्स्वर्ग्याय शक्त्येति

यथैतेन कर्मणा स्वर्गं लोकमियादेवमेतदाह शक्त्येति शक्त्या हि स्वर्गं लोकमेति - ६.३.१.[१४]

युक्त्वाय सविता देवानिति । मनो वै सविता प्राणा देवाः स्वर्यतो धिया दिवमिति स्वर्गं हैनां लोकं यतो धियैतस्मै कर्मणे युयुजे बृहज्ज्योतिः करिष्यत इत्यसौ वा आदित्यो बृहज्ज्योतिरेष उ एषोऽग्निरेतम्वेते संस्करिष्यन्तो भवन्ति सविता प्रसुवाति तानिति सवितृप्रसूता एतत्कर्म करवन्नित्येतत् - ६.३.१.[१५]

युञ्जते मन उत युञ्जते धिय इति । मनश्चैवैतत्प्राणांश्चैतस्मै कर्मणे युङ्क्ते विप्रा विप्रस्येति प्रजापतिर्वै विप्रो देवा विप्रा बृहतो विपश्चित इति प्रजापतिर्वै बृहन्विपश्चिद्वि होत्रा दध इति यद्वा एष चीयते तदेष होत्रा विधत्ते चिते ह्येतस्मिन्होत्रा अधिविधीयन्ते वयुनाविदित्येष हीदं वयुनमविन्ददेक इदित्येको ह्येष इदं सर्वं वयुनमविन्दन्मही देवस्य सवितुः परिष्टुतिरिति महती देवस्य सवितुः परिष्टुतिरित्येतत् - ६.३.१.[१६]



युजे वां ब्रह्म पूर्व्यं नमोभिरिति । प्राणो वै ब्रह्म पूर्व्यमन्नं नमस्तत्तदेषैवाहुतिरन्नमेतयैव तदाहुत्यैतेनान्नेन प्राणानेतस्मै कर्मणे युङ्क्ते विश्लोक एतु पथ्येव सूरेरिति यथोभयेषु देवमनुष्येषु कीर्ति श्लोको यजमानस्य स्यादेवमेतदाह श्रृण्वन्तु विश्वे अमृतस्य पुत्रा इति प्रजापतिर्वा अमृतस्तस्य विश्वे देवाः पुत्रा आ ये धामानि दिव्यानि तस्थुरितीमे वै लोका दिव्यानि धामानि तद्य एषु लोकेषु देवास्तानेतदाह - ६.३.१.[१७]

यस्य प्रयाणमन्वन्य इद्ययुरिति । प्रजापतिर्वा एतदग्रे कर्माकरोत्तत्ततो देवा अकुर्वन्देवा देवस्य महिमानमोजसेति यज्ञो वै महिमा देवा देवस्य यज्ञं वीर्यमोजसेत्येतद्यः पार्थिवानि विममे स एतश इति यद्वै किं चास्यां तत्पार्थिवं तदेष सर्वं विमिमीते रश्मिभिर्ह्येनदभ्यवतनोति रजांसि देवः सविता महित्वनेतीमे वै लोका रजांस्यसावादित्यो देवः सविता तानेष महिम्ना विमिमीते - ६.३.१.[१८]

देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगायेति । असौ वा आदित्यो देवः सविता यज्ञो भगस्तमेतदाह प्रसुव यज्ञं प्रसुव यज्ञपतिं भगायेति दिव्यो गन्धर्वः केतपूः केतं नः पुनात्वित्यसौ वा आदित्यो दिव्यो गन्धर्वोऽन्नं केतोऽन्नपूरन्नं नः पुनात्वित्येतद्वाचस्पतिर्वाचं नः स्वदत्विति वाग्वा इदं कर्म प्राणो वाचस्पतिः प्राणो न इदं कर्म स्वदत्वित्येतत् - ६.३.१.[१९]

इमं नो देव सवितर्यज्ञं प्रणयेति । असौ वा आदित्यो देवः सविता यदु वा एष यज्ञियं कर्म प्रणयति तदनार्तं स्वस्त्युदृचमश्नुते देवाव्यमिति यो देवानवदित्येतत्सखिविदं सत्राजितं धनजितं स्वर्जितमिति य एतत्सर्वं विन्दादित्येतदृचेत्यृचा स्तोमं समर्धय गायत्रेण रथन्तरं बृहद्गायत्रवर्तनीति सामानि स्वाहेति यजूंषि सैषा त्रयी विद्या प्रथमं जायते यथैवादोऽमुत्राजायतैवमथ यः सोऽग्निरसृज्यतैष स योऽत ऊर्द्ध्वमग्निश्चीयते - ६.३.१.[२०]

तान्येतान्यष्टौ सावित्राणि । अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतं सिञ्चति तानि नव भवन्ति स्वाहाकारो नवमो नव दिशो दिशोऽग्निर्नव प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतं सिञ्चति तानि दश भवन्त्याहुतिर्दशमी दशाक्षरा विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति - ६.३.१.[२१]



एतस्यामाहुत्यां हुतायाम् । अग्निर्देवेभ्य उदक्रामत्ते देवा अब्रुवन्पशुर्वा अग्निः पशुभिरिममन्विच्छाम स स्वाय रूपायाविर्भविष्यतीति तं पशुभिरन्वैच्छन्त्स स्वाय रूपायाविरभवत्तस्मादु हैतत्पशुः स्वाय रूपायाविर्भवति गौर्वा गवेऽश्वो वाऽश्वाय पुरुषो वा पुरुषाय - ६.३.१.[२२]

तेऽब्रुवन् । यद्यह सर्वैरन्वेषिष्यामो यातयामा अनुपजीवनीया भविष्यन्ति यद्यु असर्वैरसर्वमनुवेत्स्याम इति त एतमेकं पशुं द्वाभ्यां पशुभ्यां प्रत्यपश्यन्रासभं गोश्चावेश्च तद्यदेतमेकं पशुं द्वाभ्यां पशुभ्यां प्रत्यपश्यंस्तस्मादेष एकः सन्द्विरेताः - ६.३.१.[२३]

अनद्धापुरुषं पुरुषात् । एष ह वा अनद्धापुरुषो यो न देवानवति न पितॄन्न मनुष्यांस्तत्सर्वैरह पशुभिरन्वैच्छन्नो यातयामा अनुपजीवनीया अभवन् - ६.३.१.[२४]

त्रिभिरन्विच्छति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्विच्छति पञ्च सम्पदा भवन्ति पञ्चचितिकोऽग्निः पञ्चऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति - ६.३.१.[२५]

ते मौञ्जीभिरभिधानीभिरभिहिता भवन्ति । अग्निर्देवेभ्य उदक्रामत्स मुञ्जं प्राविशत्तस्मात्स सुषिरस्तस्माद्धेवान्तरतो धूमरक्त इव सैषा योनिरग्नेर्यन्मुञ्जोऽग्निरिमे पशवो न वै योनिर्गर्भं हिनस्त्यहिंसायै योनिर्वै जायमानो जायते योनेर्जायमानो जायाता इति - ६.३.१.[२६]

त्रिवृतो भवन्ति । त्रिवृद्ध्यग्निरश्वाभिधानीकृता भवन्ति सर्वतो वा अश्वाभिधानी मुखं परिशेते सर्वतो योनिर्गर्भं परिशेते योनिरूपमेतत्क्रियते - ६.३.१.[२७]



ते प्राञ्चस्तिष्ठन्ति । अश्वः प्रथमोऽथ रासभोऽथाज एवं ह्येतेऽनुपूर्वं यद्वै तदश्रु संक्षरितमासीदेष सोऽश्वोऽथ यत्तदरसदिवैष रासभोऽथ यः स कपाले रसो लिप्त आसीदेष सोऽजोऽथ यत्तत्कपालमासीदेषा सा मृद्यामेतदाहरिष्यन्तो भवन्त्येतेभ्यो वा एष रूपेभ्योऽग्रेऽसृज्यत तेभ्य एवैनमेतज्जनयति - ६.३.१.[२८]

ते दक्षिणतस्तिष्ठन्ति । एतद्वै देवा अबिभयुर्यद्वै नो यज्ञं दक्षिणतो रक्षांसि नाष्ट्रा न हन्युरिति त एतं वज्रमपश्यन्नमुमेवादित्यमसौ वा आदित्य एषोऽश्वस्त एतेन वज्रेण दक्षिणतो रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्र एतं यज्ञमातन्वत तथैवैतद्यजमान एतेन वज्रेण दक्षिणतो रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्र एतं यज्ञं तनुते - ६.३.१.[२९]

दक्षिणत आहवनीयो भवति । उत्तरत एषाभ्रिरुपशेते वृषा वा आहवनीयो योषाऽभ्रिर्दक्षिणतो वै वृषा योषामुपशेतेऽरत्निमात्रेऽरत्निमात्राद्धि वृषा योषामुपशेते - ६.३.१.[३०]

सा वैणवी स्यात् । अग्निर्देवेभ्य उदक्रामत्स वेणुं प्राविशत्तस्मात्स सुषिरः स एतानि वर्माण्यभितोऽकुरुत पर्वाण्यननुप्रज्ञानाय यत्रयत्र निर्ददाह तानि कल्माषाण्यभवन् - ६.३.१.[३१]

सा कल्माषी स्यात् । सा ह्याग्नेयी यदि कल्माषीं न विन्देदप्यकल्माषी स्यात्सुषिरा तु स्यात्सैवाग्नेयी सैषा योनिरग्नेर्यद्वेणुरग्निरियं मृन्न वै योनिर्गर्भं हिनस्त्यहिंसायै योनेर्वै जायमानो जायते योनेर्जायमानो जायाता इति - ६.३.१.[३२]

प्रादशमात्री स्यात् । प्रादेशमात्रं हीदमभि वाग्वदत्यरत्निमात्री त्वेव भवति बाहुर्वा अरत्निर्बाहुनो वै वीर्यं क्रियते वीर्यसम्मितैव तद्भवति - ६.३.१.[३३]

अन्यतः क्ष्णुत्स्यात् । अन्यतरतो हीदं वाचः क्ष्णुतमुभयतः क्ष्णुत्त्वेव भवत्युभयतो हीदं वाचः क्ष्णुतं यदेनया दैवं च वदति मानुषं चाथो यत्सत्यं चानृतं च तस्मादुभयतः क्ष्णुत् - ६.३.१.[३४]



यद्वेवोभयतः क्ष्णुत् । अतो वा अभ्रेर्वीर्यं यतोऽस्यै क्ष्णुतमुभयत एवास्यामेतद्वीर्यं दधाति - ६.३.१.[३५]

यद्वेवोभयतः क्ष्णुत् । एतद्वा एनं देवा अनुविद्यैभ्यो लोकेभ्योऽखनंस्तथैवैनमयमेतदनुविद्यैभ्यो लोकेभ्यः खनति - ६.३.१.[३६]

स यदिति खनति । तदेनमस्माल्लोकात्खनत्यथ यदूर्ध्वोच्चरतितदमुष्माल्लोकादथ यदन्तरेण संचरति तदन्तरिक्षलोकात्सर्वेभ्यएवैनमेतदेभ्यो लोकेभ्यः खनति - ६.३.१.[३७]

तामादत्ते । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे गायत्रेण च्छन्दसाङ्गिरस्वदिति सवितृप्रसूत एवैनामेतदेताभिर्देवताभिरादत्ते गायत्रेण च्छन्दसाऽथो अस्यां गायत्रं च्छन्दो दधाति पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभरेति पशवो वै पुरीषं पृथिव्या उपस्थादग्निं पशव्यमग्निवदाभरेत्येतत्त्रैष्टुभेन च्छन्दसाऽङ्गिरस्वदिति तदेनां त्रैष्टुभेन च्छन्दसाऽऽदत्तेऽथो अस्यां त्रैष्टुभं छन्दो दधाति - ६.३.१.[३८]

अभ्रिरसीति । अभ्रिर्ह्येषा तदेनं सत्येनादत्ते नार्यसीति वज्रो वा अभ्रिर्योषा नारी न वै योषा कं चन हिनस्ति शमयत्येवैनामेतदहिंसायै त्वया वयमग्निं शकेम खनितुं सधस्थ एतीदं वै सधस्थं त्वया वयमग्निं शकेम खनितुमस्मिन्त्सधस्थ इत्येतज्जागतेन च्छन्दसाङ्गिरस्वदिति तदेनां जागतेन च्छन्दसाऽऽदत्तेऽथो अस्यां जागतं च्छन्दो दधाति - ६.३.१.[३९]

त्रिभिरादत्ते । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनामेतदादत्ते त्रिभिरादायाथैनां चतुर्थेनाभिमन्त्रयत एतद्वा एनां देवास्त्रिभिरादायाथास्यां चतुर्थेन वीर्यमदधुस्तथैवैनामयमेतत्त्रिभिरादायाथास्यां चतुर्थेन वीर्यं दधाति - ६.३.१.[४०]



हस्त आधाय सवितेति । हस्ते ह्यस्याहिता भवति बिभ्रदभ्रिमिति बिभर्ति ह्येनां हिरण्ययीमिति हिरण्मयी ह्येषा या च्छन्दोमय्यग्नेर्ज्योतिर्निचाय्येत्यग्नेर्ज्योतिर्दृष्ट्वेत्येतत्पृथिव्या अध्याभरदिति पृथिव्यै ह्येनदध्याभरत्यानुष्टुभेन च्छन्दसाऽङ्गिरस्वदिति तदेनामानुष्टुभेन च्छन्दसाऽऽदत्तेऽथो अस्यामानुष्टुभं च्छन्दो दधाति तान्येतान्येव छन्दांस्येषाभ्रिरारम्भायैवेयं वैणवी क्रियते - ६.३.१.[४१]

तां हैके हिरण्मयीं कुर्वन्ति । हिरण्ययीति वा अभ्युक्तेति न तथा कुर्याद्यद्वा एषा छन्दांसि तेनैषा हिरण्यममृतं हिरण्यममृतानि च्छन्दांसि - ६.३.१.[४२]

तां चतुर्भिरादत्ते । चतुरक्षरा वै सर्वा वाग्वागित्येकमक्षरमक्षरमिति त्र्यक्षरं तद्यत्तद्वागित्येकमक्षरं यैवैषानुष्टुबुत्तमा सा साऽथ यदक्षरमिति त्र्यक्षरमेतानि तानि पूर्वाणि यजूंषि सर्वयैवैतद्वाचाग्निं खनति सर्वया वाचा सम्भरति तस्माच्चतुर्भिः - ६.३.१.[४३]

यद्वेव चतुर्भिः । चतस्रो वै दिशश्चतसृषु तद्दिक्षु वाचं दधाति तस्माच्चतसृषु दिक्षु वाग्वदति च्छन्दोभिश्च यजुर्भिश्चादत्ते तदष्टौ चतस्रो दिशश्चतस्रोऽवान्तरदिशः सर्वासु तद्दिक्षु वाचं दधाति तस्मात्सर्वासु दिक्षु वाग्वदति - ६.३.१.[४४]

##६.३.२
हस्त एषाभ्रिर्भवत्यथ पशूनभिमन्त्रयते । एतद्वा एषु देवा अन्वेषिष्यन्तः पुरस्ताद्वीर्यमदधुस्तथैवैष्वयमेतदन्वेषिष्यन्पुरस्ताद्वीर्यं दधाति - ६.३.२.[१]

सोऽश्वमभिमन्त्रयते । प्रतूर्तं वाजिन्नाद्रवेति यद्वै क्षिप्रं तत्तूर्तमथ यत्क्षिप्रात्क्षेपीयस्तत्प्रतूर्तं वरिष्ठामनु संवतमितीयं वै वरिष्ठा संवदिमामनु संवतमित्येतद्दिवि ते जन्म परममन्तरिक्षे तव नाभिः पृथिव्यामधि योनिरिदिति तदेनमेता देवताः करोत्यग्निं वायुमादित्यं तदश्वे वीर्यं दधाति - ६.३.२.[२]

अथ रासभम् । युञ्जाथां रासभं युवमित्यध्वर्युं चैतद्यजमानं चाहास्मिन्यामे वृषण्वसू इत्यस्मिन्कर्मणि वृषण्वसू इत्येतदग्निं भरन्तमस्मयुमित्यग्निं भरन्तमस्मत्प्रेषितमित्येतत्तद्रासभे वीर्यं दधाति - ६.३.२.[३]

अथाजम् । योगे योगे तवस्तरं वाजे वाजे हवामह इत्यन्नं वै वाजः कर्मणि कर्मणि तवस्तरमन्नेऽन्ने हवामह इत्येतत्सखाय इन्द्रमूतय इतीन्द्रियवन्तमूतय इत्येतत्तदजे वीर्यं दधाति - ६.३.२.[४]

त्रिभिरभिमन्त्रयते । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैष्वेतद्वीर्यं दधाति - ६.३.२.[५]

अथैनान्प्राच उत्क्रमयति । तदेनमेतैः पशुभिरन्विच्छति नोपस्पृशत्यग्निरेष यत्पशवो नेन्माऽयमग्निर्हिनसदिति - ६.३.२.[६]

सोऽश्वमुत्क्रमयति । प्रतूर्वन्नेह्यवक्रामन्नशस्तीरिति पाप्मा वा अशस्तिस्त्वरमाण एह्यवक्रामन्पाप्मानमित्येतद्रुद्रस्य गाणपत्यं मयोभूरेहीति रौद्रा वै पशवो या ते देवता तस्यै गाणपत्यं मयोभूरेहीत्येतत्तदेनमश्वेनान्विच्छति - ६.३.२.[७]

अथ रासभम् । उर्वन्तरिक्षं वीहि स्वस्ति गव्यूतिरभयानि कृण्वन्निति यथैव यजुस्तथा बन्धुः पूष्णा सयुजा सहेतीयं वै पूषाऽनया सयुजा सहेत्येतत्तदेनं रासभेनान्विच्छति - ६.३.२.[८]

अथाजम् । पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभरेति पृथिव्या उपस्थादग्निं पशव्यमग्निवदाभरेत्येतत्तदेनमजेनान्विच्छति - ६.३.२.[९]



त्रिभिरन्विच्छति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्विच्छति त्रिभिः पुरस्तादभिमन्त्रयते तत्षड्वृतवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति - ६.३.२.[१०]

##६.३.३
प्रदीप्ता एतेऽग्नयो भवन्ति । अथ मृदमच्छयन्तीमे वै लोका एतेऽग्नयस्ते यदा प्रदीप्ता अथैत इमे लोकाः पुरो वा एतदेभ्यो लोकेभ्योऽग्रे देवाः कर्मान्वैच्छंस्तद्यदेतानग्नीनतीत्य मृदमाहरति तदेनं पुरैभ्यो लोकेभ्योऽन्विच्छति - ६.३.३.[१]

प्राञ्चो यन्ति । प्राची हि दिगग्नेः स्वायामेवैनमेतद्दिश्यन्विच्छति स्वायां दिशि विन्दति - ६.३.३.[२]

ते प्रयन्ति । अग्निं पुरीष्यमङ्गिरस्वदच्छेम इत्यग्निं पशव्यमग्निवदच्छेम इत्येतत् - ६.३.३.[३]

अथानड्वापुरुषमीक्षते । अग्निं पुरीष्यमङ्गिरस्वद्भरिष्याम इत्यग्निं पशव्यमग्निवद्भरिष्याम इत्येतत्तदेनमनड्वापुरुषेणान्विच्छति - ६.३.३.[४]

अथ वल्मीकवपा सुषिरा व्यध्वे निहिता भवति । तामन्वीक्षत इयं वै वल्मीकवपेयमु वा इमे लोका एतद्वा एनं देवा एषु लोकेषु विग्राहमैच्छंस्तथैवैनमयमेतदेषु लोकेषु विग्राहमिच्छति - ६.३.३.[५]

अन्वग्निरुषसामग्रमख्यदिति । तदेनमुषःस्वैच्छन्नन्वहानि प्रथमो जातवेदा इति तदेनमहःस्वैच्छन्ननु सूर्यस्य पुरुत्रा च रश्मीनिति तदेनं सूर्यस्य रश्मिष्वैच्छन्ननु द्यावापृथिवी आततन्थेति तदेनं द्यावापृथिव्योरैच्छंस्तमविन्दंस्तथैवैनमयमेतद्विन्दति तं यदा परापश्यत्यथ तामवास्यत्यागच्छन्ति मृदम् - ६.३.३.[६]



अथाश्वमभिमन्त्रयते । एतद्वै देवा अब्रुवन्पाप्मानमस्यापहनामेति श्रमो वै पाप्मा श्रममस्य पाप्मानमपहनामेति तस्य श्रमं पाप्मानमपाघ्नंस्तथैवास्यायमेतच्छ्रमं पाप्मानमपहन्ति - ६.३.३.[७]

आगत्य वाज्यध्वानमिति । आगतो ह्यस्याध्वा भवति सर्वा मृधो विधूनुत इति पाप्मा वै मृधः सर्वान्पाप्मनो विधूनुत इत्येतत्तस्मादु हैतदश्वः स्यत्त्वा विधूनुते
ऽग्निं सधस्थे महति चक्षुषा निचिकीषत इतीदं वै महत्सधस्थमग्निमस्मिन्महति सधस्थे चक्षुषा दिदृक्षत इत्येतत् - ६.३.३.[८]

अथैनमाक्रमयति । एतद्वा एष एतं देवेभ्योऽनुविद्य प्राब्रवीद्यथाऽयमिहेवेत्येवम् - ६.३.३.[९]

यद्देवाक्रमयति । एतद्वै देवा अबिभयुर्यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति तस्मा एतं वज्रमुपरिष्टादभिगोप्तारमकुर्वन्नमुमेवादित्यमसौ वा आदित्य एषोऽश्वस्तथैवास्मा अयमेतं वज्रमुपरिष्टादभिगोप्तारं करोति - ६.३.३.[१०]

आक्रम्य वाजिन् । पृथिवीमग्निमिच्छ रुचा त्वमिति चक्षुर्वै रुगाक्रम्य त्वं वाजिन्पृथिवीमग्निमिच्छ चक्षुषेत्येतद्भूम्या वृत्त्वाय नो ब्रूहि यतः खनेम तं वयमिति भूमेस्तत्स्पाशयित्वाय नो ब्रूहि यत एनं खनेमेत्येतत् - ६.३.३.[११]

अथैनमुन्मृशति । एतद्वा एनं देवाः प्रोचिवांसं वीर्येण समार्धयंस्तथैवैनमयमेतत्प्रोचिवांसं वीर्येण समर्धयति द्यौस्ते पृष्ठं पृथिवी सधस्थमात्माऽन्तरिक्षं समुद्रो योनिरितीत्थमसीत्थमसीत्येवैतदाह विख्याय चक्षुषा त्वमभितिष्ठ पृतन्यत इति विख्याय चक्षुषा त्वमभितिष्ठ सर्वान्पाप्मन इत्येतन्नोपस्पृशति वज्रो वाऽअश्वो नेन्मायं वज्रो हिनसदिति - ६.३.३.[१२]



अथैनमुत्क्रमयति । एतद्वै देवा अब्रुवन्किमिममभ्युत्क्रमिष्याम इति महत्सौभगमिति तं महत्सौभगमभ्युदक्रमयंस्तथैवैनमयमेतन्महत्सौभगमभ्युत्क्रमयत्युत्क्राम महते सौभगायेत्युत्क्राम महत्ते सौभगमित्येतत्तस्मादु हैतदश्वः पशूनां भगितमोऽस्मादास्थानादिति यत्रैतत्तिष्ठसीत्येतद्द्रविणोदा इति द्रविणं ह्येभ्यो ददाति वाजिन्निति वाजी ह्येष वयं स्याम सुमतौ पृथिव्या अग्निं खनन्त उपस्थे अस्या इति वयमस्मै पृथिव्यै सुमतौ स्यामाग्निमस्या उपस्थे खनन्त इत्येतत् - ६.३.३.[१३]

अथैनमुत्क्रान्तमभिमन्त्रयते । एतद्वा एनं देवाः प्रोचिवांसं यथा ददिवांसं वन्देतैवमुपास्तुवन्नुपामहयंस्तथैवैनमयमेतदुपस्तौत्युपमहयत्युदक्रमीदित्युद्ध्यक्रमीद्द्रविणो दा इति द्रविणं ह्येभ्यो ददाति वाज्यर्वेति वाजी च ह्येषोऽर्वा चाकः सुलोकं सुकृतं पृथिव्यामित्यकरः सुलोकं सुकृतं पृथिव्यामित्येतत्ततः खनेम सुप्रतीकमग्निमिति तत एनं खनेमेत्येतत्सुप्रतीकमिति सर्वतो वा अग्निः सुप्रतीकः स्वो रुहाणा अधि नाकमुत्तममिति स्वर्गो वै लोको नाकः स्वर्गं लोकं रोहन्तोऽधि नाकमुत्तममित्येतत्तं दक्षिणोपसंक्रमयति

यत्रेतरौ पशू भवतस्ते दक्षिणतः प्राञ्चस्तिष्ठन्ति स य एवामुत्र दक्षिणत स्थानस्य बन्धुः सोऽत्र - ६.३.३.[१४]

अथोपविश्य मृदमभिजुहोति । एतद्वै देवा अब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमाना एतामाहुतिमपश्यंस्तामजुहवुस्तां हुत्वेमांल्लोकानुखामपश्यन् - ६.३.३.[१५]

तेऽब्रुवन् । चेतयध्वमेवेति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमाना एतां द्वितीयामाहुतिमपश्यंस्तामजुहवुस्तां हुत्वा विश्वज्योतिषोऽपश्यन्नेता देवता अग्निं वायुमादित्यमेता ह्येव देवता विश्वं ज्योतिस्तथैवैतद्यजमान एते आहुती हुत्वेमांश्च लोकानुखां पश्यत्येताश्च देवता विश्वज्योतिषो व्यतिषक्ताभ्यां जुहोतीमांश्च तल्लोकानेताश्च देवता व्यतिषजति - ६.३.३.[१६]



यद्वेवैते आहुती जुहोति । मृदं च तदपश्च प्रीणाति ते इष्टा प्रीत्वाथैने सम्भरति व्यतिषक्ताभ्यां जुहोति मृदं च तदपश्च व्यतिषजति - ६.३.३.[१७]

आज्येन जुहोति । वज्रो वा आज्यं वज्रमेवास्मा एतदभिगोप्तारं करोत्यथो रेतो वा आज्यं रेत एवैतत्सिञ्चति स्रुवेण वृषा वै स्रुवो वृषा वै रेतः सिञ्चति स्वाहाकारेण वृषा वै स्वाहाकारो वृषा वै रेतः सिञ्चति - ६.३.३.[१८]

आ त्वा जिघर्मि मनसा घृतेनेति । आ त्वा जुहोमि मनसा च घृतेन चेत्येतत्प्रतिक्षियन्तं भुवनानि विश्वेति प्रत्यङ्ङ्येष सर्वाणि भुवनानि क्षियति पृथुं तिरश्चा वयसा बृहन्तमिति पृथुर्वा एष तिर्यङ्ङ्यसो बृहन्धूमेन व्यचिष्ठमन्नै रभसं दृशानमित्यवकाशवन्तमन्नैरन्नादं दीप्यमानमित्येतत् - ६.३.३.[१९]

आ विश्वतः प्रत्यञ्चं जिघर्मीति । आ सर्वतः प्रत्यञ्चं जुहोमीत्येतदरक्षसा मनसा तज्जुषेतेत्यहीडमानेन मनसा तज्जोषयेतेत्येतन्मर्यश्री स्पृहयद्वर्णो अग्निरिति मर्यश्रीर्ह्येष

स्पृहयद्वर्णोऽग्निर्नाभिमृशे तन्वा जर्भुराण इति न ह्येषोऽभिमृशे तन्वा दीप्यमानो भवति - ६.३.३.[२०]

द्वाभ्यामभिजुहोति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्द्रेतो भूतं सिञ्चत्याग्नेयीभ्यामग्निमेवैतद्रेतो भूतं सिञ्चति ते यदाग्नेय्यौ तेनाग्निरथ यत्त्रिष्टुभौ तेनेन्द्र ऐन्द्राग्नोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतं सिञ्चतीन्द्राग्नी वै सर्वे देवाः सर्वदेवत्योऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतोभूतं सिञ्चति - ६.३.३.[२१]

अश्वस्य पदे जुहोति । अग्निरेष यदश्वस्तथो हास्यैते अग्निमत्येवाहुती हुते भवतः - ६.३.३.[२२]

अथैनं परिलिखति । मात्रामेवास्मा एतत्करोति यथैतावानसीत्येवम् - ६.३.३.[२३]



यद्वेवैनं परिलिखति । एतद्वै देवा अबिभयुर्यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति तस्मा एतां पुरं पर्यश्रयंस्तथैवास्मा अयमेतां पुरं परिश्रयत्यभ्रया वज्रो वा अभ्रिर्वज्रमेवास्मा एतदभिगोप्तारं करोति सर्वतः परिलिखति सर्वत एवास्मा एतं वज्रमभिगोप्तारं करोति त्रिष्कृत्वः परिलिखति त्रिवृतमेवास्मा एतं वज्रमभिगोप्तारं करोति - ६.३.३.[२४]

परि वाजपतिः कविः । परि त्वाग्ने पुरं वयं त्वमग्ने द्युभिरित्यग्निमेवास्मा एतदुपस्तुत्य वर्म करोति परिवतीभिः परीव हि पुर आग्नेयीभिरग्निपुरामेवास्मा एतत्करोति सा हैषाग्निपुरा दीप्यमाना तिष्ठति तिसृभिस्त्रिपुरमेवास्मा एतत्करोति
तस्मादु हैतत्पुरां परमं रूपं यत्त्रिपुरं स वै वर्षीयसा वर्षीयसा च्छन्दसा परां परां लेखां वरीयसीं करोति तस्मात्पुरां परा परा वरीयसी लेखा भवन्ति लेखा हि पुरः - ६.३.३.[२५]

अथैनमस्यां खनति । एतद्वै देवा अबिभयुर्यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति तस्मा इमामेवात्मानमकुर्वन्गुप्त्या आत्माऽऽत्मानं गोप्स्यतीति सासमम्बिला स्यात्तदस्येयमात्मा

भवति यद्वेव समंबिला योनिर्वा इयं रेत इदं यद्वै रेतसो योनिमतिरिच्यतेऽमुया तद्भवत्यथ यन्न्यूनं व्यृद्धं तदेतद्वै रेतसः समृद्धं यत्समम्बिलं चतुःस्रक्तिरेष कूपो भवति चतस्रो वै दिशः सर्वाभ्य एवैनमेतद्दिग्भ्यः खनति - ६.३.३.[२६]

##६.४.१
अथैनमतः खनत्येव । एतद्वा एनं देवा अनुविद्याखनंस्तथैवैनमयमेतदनुविद्य खनति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत्खनामीति सवितृप्रसूत एवैनमेतदेताभिर्देवताभिः पृथिव्या उपस्थादग्निं पशव्यमग्निवत्खनति - ६.४.१.[१]

ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमिति । ज्योतिष्मान्वा अयमग्निः सुप्रतीकोऽजस्रेणभानुना दीद्यतमित्यजस्रेणार्चिषा दीप्यमानमित्येतच्छिवं प्रजाभ्योऽहिंसन्तं पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत्खनाम इति शिवं प्रजाभ्योऽहिंसन्तं पृथिव्या उपस्थादग्निं पशव्यमग्निवत्खनाम इत्येतत् - ६.४.१.[२]



द्वाभ्यां खनति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्खनत्यथो द्वयं ह्येवैतद्रूपं मृच्चापश्च - ६.४.१.[३]

स वै खनामि खनाम इति खनति । खनामीति वा एतं प्रजापतिरखनत्खनाम इति देवास्तस्मात्खनामि खनाम इति - ६.४.१.[४]

स वा अभ्र्या खनन् । वाचा खनामि खनाम इत्याह वाग्वा अभ्रिरारम्भायैवेयं वैणवी क्रियते वाचा वा एतमभ्र्या देवा अखनंस्तथैवैनमयमेतद्वाचैवाभ्र्या खनति - ६.४.१.[५]

अथैनं कृष्णाजिने सम्भरति । यज्ञो वै कृष्णाजिनं यज्ञ एवैनमेतत्सम्भरति लोमतश्छन्दांसि वै लोमानि छन्दःस्वेवैनमेतत्सम्भरति तत्तूष्णीमुपस्तृणाति यज्ञो वै कृष्णाजिनं प्रजापतिर्वै यज्ञोऽनिरुक्तो वै प्रजापतिरुत्तरतस्तस्योपरिबन्धुः प्राचीनग्रीवे तद्धि देवत्रा - ६.४.१.[६]
अथैन पुष्करपर्णे सम्भरति । योनिर्वै पुष्करपर्णं योनौ तद्रेतः सिञ्चति यद्वै योनौ रेतः सिच्यते तत्प्रजनिष्णु भवति तन्मन्त्रेणोपस्तृणाति वाग्वै मन्त्रो वाक्पुष्करपर्णम्
- ६.४.१.[७]

अपां पृष्ठमसि योनिरग्नेरिति । अपां ह्येतत्पृष्ठं योनिर्ह्येतदग्नेः समुद्रमभितः पिन्वमानमिति समुद्रो ह्येतदभितः पिन्वते वर्धमानो महां आ च पुष्कर इति वर्धमानो महीयस्व पुष्कर इत्येतद्दिवो मात्रया वरिम्णा प्रथस्वेत्यनुविमार्ष्ट्यसौ वा आदित्य एषोऽग्निर्नो हैतमन्यो दिवो वरिमा यन्तुमर्हति द्यौर्भूत्वनं यच्छेत्येवैतदाह - ६.४.१.[८]

तदुत्तरं कृष्णाजिनादुपस्तृणाति । यज्ञो वै कृष्णाजिनमियं वै कृष्णाजिनमियमु वै यज्ञोऽस्यां हि यज्ञस्तायते द्यौष्पुष्करपर्णमापो वै द्यौरापः पुष्करपर्णमुत्तरो वा असावस्यै - ६.४.१.[९]



अथैने अभिमृशति । संज्ञामेवाभ्यामेतत्करोति शर्म च स्थो वर्म च स्थ इति शर्म च ह्यस्यैते वर्म चाच्छिद्रे बहुले उभे इत्यच्छिद्रे ह्येते बहुले उभे व्यचस्वती संवसाथामित्यवकाशवती संवसाथामित्येतद्भृतमग्निं पुरीष्यमिति बिभृतमग्निं पशव्यमित्येतत् - ६.४.१.[१०]

संवसाथां स्वर्विदा । समीची उरसाऽऽत्मनेति संवसाथामेनं स्वर्विदा समीचीऽउरसा चात्मना चेत्येतदग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमिदित्यसौ वा आदित्य एषोऽग्निः स एष ज्योतिष्मानजस्रस्तमेते अन्तरा बिभृतस्तस्मादाह ज्योतिष्मन्तमजस्रमिदिति - ६.४.१.[११]

द्वाभ्यामभिमृशति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवाभ्यामेतत्संज्ञां करोत्यथो द्वयं ह्येवैतद्रूपं कृष्णाजिनं च पुष्करपर्णं च - ६.४.१.[१२]

##६.४.२
अथ मृत्पिण्डमभिमृशति । पुरीष्योऽसीति पशव्योऽसीत्येतद्विश्वंभरा इत्येष हीदं सर्वं बिभर्त्यथर्वा त्वा प्रथमो निरमन्थदग्न इति प्राणो वा अथर्वा प्राणो वा एतमग्रे निरमन्थत्तद्योऽसावग्रेऽग्निरसृज्यत सोऽसीति तदाह तमेवैनमेतत्करोति - ६.४.२.[१]

अथैनं परिगृह्णाति । अभ्र्या च दक्षिणतो हस्तेन च हस्तेनैवोत्तरतस्त्वामग्ने पुष्करादध्यथर्वा निरमन्थतेत्यापो वै पुष्करं प्राणोऽथर्वा प्राणो वा एतमग्रेऽद्भ्यो निरमन्थन्मूर्ध्नो विश्वस्य वाघत इत्यस्य सर्वस्य मूर्ध्न इत्येतत् - ६.४.२.[२]

तमु त्वा दध्यङ्ङृषिः । पुत्र ईधे अथर्वण इति वाग्वै दध्यङ्ङाथर्वणः स एनं तत ऐन्द्ध वृत्रहणं पुरंदरमिति पाप्मा वै वृत्रः पाप्महनं पुरंदरमित्येतत् - ६.४.२.[३]



तमु त्वा पाथ्यो वृषा । समीधे दस्युहन्तममिति मनो वै पाथ्यो वृषा स एनं तत ऐन्द्ध धनंजयं रणेरण इति यथैव यजुस्तथा बन्धुः - ६.४.२.[४]

गायत्रीभिः । प्राणो गायत्री प्राणमेवास्मिन्नेतद्दधाति तिसृभिस्त्रयो वै प्राणाः प्राण उदानो व्यानस्तानेवास्मिन्नेतद्दधाति तासां नवपदानि नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तानेवास्मिन्नेतद्दधाति - ६.४.२.[५]

अथैते त्रिष्टुभा उत्तरे भवतः । आत्मा वै त्रिष्टुबात्मानमेवास्यैताभ्यां संस्करोति सीद होत स्व उ लोके चिकित्वानित्यग्निर्वै होता तस्यैष स्वो लोको यत्कृष्णाजिनं चिकित्वानिति विद्वानित्येतत्सादया यज्ञं सुकृतस्य योनाविति कृष्णाजिनं वै सुकृतस्य योनिर्देवावीर्देवान्हविषा यजासीति देवः सन्देवानवन्हविषा यजासीत्येतदग्ने बृहद्यजमाने वयो धा इति यजमानायाशिषमाशास्ते - ६.४.२.[६]

नि होता होतृषदने विदान इति । अग्निर्वै होता कृष्णाजिनं होतृषदनं विदान इति विद्वानित्येतत्त्वेषो दीदिवां असदत्सुदक्ष इति त्वेषो दीप्यमानोऽसदत्सुदक्ष इत्येतददब्धव्रतप्रमतिर्वसिष्ठ इत्यदब्धव्रतप्रमतिर्ह्येष वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निरिति सर्वं वै सहस्रं सर्वम्भरः शुचिजिह्वोऽग्निरित्येतद्द्वाभ्यामाग्नेयीभ्यां त्रिष्टुब्भ्यां तस्योक्तो बन्धुः - ६.४.२.[७]

अथैषा बृहत्युत्तमा भवति । बृहतीं वा एष संचितोऽभिसम्पद्यते यादृग्वैयोनौ रेतः सिच्यते तादृग्जायते तद्यदेतामत्र बृहतीं करोति तस्मादेष संचितो बृहतीमभिसम्पद्यते - ६.४.२.[८]

संसीदस्व महां असीति । इदमेवैतद्रेतः सिक्तं संसादयति तस्माद्योनौ रेतः सिक्तं संसीदति शोचस्व देववीतम इति दीप्यस्व देववीतम इत्येतद्वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतमिति यदा वा एष समिध्यतेऽथैष धूममरुषं विसृजते दर्शतमिति ददृश इव ह्येषः - ६.४.२.[९]



ताः षड्सम्पद्यन्ते । षड्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति यद्वेव संवत्सरमभिसम्पद्यते तद्बृहतीमभिसम्पद्यते बृहती हि संवत्सरो द्वादश पौर्णमास्यो द्वादशाष्टका द्वादशामावास्यास्तत्षट्त्रिंशत्षट्त्रिंशदक्षरा बृहती तं दक्षिणत उदञ्चमाहरति दक्षिणतो वा उदग्योनौ रेतः सिच्यत एषो अस्यैतर्हि योनिरविच्छेदमाहरति रेतसोऽविच्छेदाय - ६.४.२.[१०]

##६.४.३
अथ तत्राप उपनिनयति । यद्वा अस्यै क्षतं यद्विलिष्टमद्भिर्वै तत्संधीयतेऽद्भिरेवास्या एतत्क्षतं विलिष्टं संतनोति संदधाति - ६.४.३.[१]

अपो देवीरुपसृज । मधुमतीरयक्ष्माय प्रजाभ्य इति रसो वै मधु रसवतीरयक्ष्मत्वाय प्रजाभ्य इत्येतत्तासामास्थानादुज्जिहतामोषधयः सुपिप्पला इत्यपां वा आस्थानादुज्जिहत ओषधयः सुपिप्पलाः - ६.४.३.[२]

अथैनां वायुना संदधाति । यद्वा अस्यै क्षतं यद्विलिष्टं वायुना वै तत्संधीयते वायुनैवास्या एतत्क्षतं विलिष्टं संतनोति संदधाति - ६.४.३.[३]

सं ते वायुर्मातरिश्वा दधात्विति । अयं वै वायुर्मातरिश्वा योऽयं पवत उत्तानाया हृदयं यद्विकस्तमित्युत्तानाया ह्यस्या एतद्धृदयं विकस्तं यो देवानां चरसि प्राणथेनेत्येष हि सर्वेषां देवानां चरति प्राणथेन कस्मै देव वषडस्तु तुभ्यमिति प्रजापतिर्वै कस्तस्मा एवैतदिमां वषट्करोति नो हैतावत्यन्याऽऽहुतिरस्ति यथैषा - ६.४.३.[४]



अथैनां दिग्भिः संदधाति । यद्वा अस्यै क्षतं यद्विलिष्टं दिग्भिर्वै तत्संधीयते दिग्भिरेवास्या एतत्क्षतं विलिष्टं संतनोति संदधाति स इमां चेमां च दिशौ संदधाति तस्मादेते दिशौ संहिते अथेमां चेमां च तस्माद्वेवैते संहिते इत्यग्रेऽथेति अथेत्यथेति तद्दक्षिणावृत्तद्धि देवत्राऽनयाऽनया वै भेषजं क्रियतेऽनयैवैनामेतद्भिषज्यति - ६.४.३.[५]

अथ कृष्णाजिनं च पुष्करपर्णं च समुद्गृह्णाति । योनिर्वै पुष्करपर्णं योन्या तद्रेतः सिक्तं समुद्गृह्णाति तस्माद्योन्या रेतः सिक्तं समुद्गृह्यते सुजातो ज्योतिषा सह शर्म वरूथमासदत्स्वरिति सुजातो ह्येष ज्योतिषा सह शर्म चैतद्वरूथं च स्वश्चासीददति - ६.४.३.[६]

अथैनमुपनह्यति । योनौ तद्रेतो युनक्ति तस्माद्योनौ रेतो युक्तं न निष्पद्यते योक्रेण योक्रेण हि योग्यं युञ्जन्ति मौञ्जेन त्रिवृता तस्योक्तो बन्धुः - ६.४.३.[७]

तत्पर्यस्यति । वासो अग्ने विश्वरूपं संव्ययस्व विभावसविति वरुण्या वै यज्ञे रज्जुरवरुण्यमेवैनदेतत्कृत्वा यथा वासः परिधापयेदेवं परिधापयति - ६.४.३.[८]

अथैनमादायोत्तिष्ठति । असौ वा आदित्य एषोऽग्निरमुं तदादित्यमुत्थापयत्युदु तिष्ठ स्वध्वरेत्यध्वरो वै यज्ञ उदु तिष्ठ सुयज्ञियेत्येतदवा नो देव्या धियेति या ते दैवी धीस्तया नोऽवेत्येतद्दृशे च भासा बृहता सुशुक्वनिरिति दर्शनाय च भासा बृहता सुशुक्वनिरित्येतदाऽग्ने याहि सुशस्तिभिरिति ये वोढारस्ते सुशस्तय आऽग्ने याहि वोढृभिरित्येतत् - ६.४.३.[९]

अथैनमित ऊर्ध्वं प्राञ्चं प्रगृह्णाति । असौ वा आदित्य एषोऽग्निरमुं तदादित्यमित ऊर्ध्वं प्राञ्चं दधाति तस्मादसावादित्य इत ऊर्ध्वः प्राङ्धीयत ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सवितेति यथैव यजुस्तथा बन्धुरूर्ध्वो वाजस्य सनितेत्यूर्ध्वो वा एष तिष्ठन्वाजमन्नं सनोति यदञ्जिभिर्वाघद्भिर्विह्वयामह इति रश्मयो वा एतस्याञ्जयो वाघतस्तानेतदाह परोबाहु प्रगृह्णाति परोबाहु ह्येष इतोऽथैनमुपावहरति तमुपावहृत्योपरिनाभि धारयति तस्योपरि बन्धुः - ६.४.३.[१०]



##६.४.४
हस्त एष भवत्यथ पशूनभिमन्त्रयते । एतद्वा एषु देवाः सम्भरिष्यन्तः पुरस्ताद्वीर्यमदधुस्तथैवैष्वयमेतत्सम्भरिष्यन्पुरस्ताद्वीर्यं दधाति - ६.४.४.[१]

सोऽश्वमभिमन्त्रयते । स जातो गर्भोऽअसि रोदस्योरितीमे वै द्यावापृथिवी रोदसी तयोरेष जातो गर्भोऽग्ने चारुर्विभृत ओषधीष्विति सर्वासु ह्येष चारुर्विभृत ओषधिषु चित्रः शिशुः परि तमांस्यक्तूनिति चित्रो वा एष शिशुः परेण तमांस्यक्तूनति रोचते प्र मातृभ्यो अधि कनिक्रदद्गा इत्योषधयो वा एतस्य मातरस्ताभ्य एष कनिक्रदत्प्रैति तदश्वे वीर्यं दधाति - ६.४.४.[२]

अथ रासभम् । स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन्निति स्थिरश्च भव वीड्वङ्गश्चाशुश्च भव वाजी चार्वन्नित्येतत्पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहण इति पृथुर्भव सुशीमस्त्वमग्नेः पशव्यवाहन इत्येतत्तद्रासभे वीर्यं दधाति - ६.४.४.[३]

अथाजम् । शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिर इत्यङ्गिरा वा अग्निराग्नेयो ऽजः शमयत्येवैनमेतदहिंसायै मा द्यावापृथिवी अभिशोचीर्मान्तरिक्षं मा वनस्पतीनित्येतत्सर्वं मा हिंसीरित्येतत्तदजे वीर्यं दधाति - ६.४.४.[४]

त्रिभिरभिमन्त्रयते । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैष्वेतद्वीर्यं दधाति - ६.४.४.[५]

अथैनमेतेषां पशूनामुपरिष्टात्प्रगृह्णाति । तदेनमेतैः पशुभिः सम्भरति नोपस्पृशति वज्रो वै पशवो रेत इदं नेदिदं रेतो वज्रेण हिनसानीत्यथो अग्निरयं पशव इमे नेदयमग्निरिमान्पशून्हिनसदिति - ६.४.४.[६]

तमश्वस्योपरिष्टात्प्रगृह्णाति । प्रैतु वाजी कनिक्रददिति प्रैतु वाजी कनिक्रद्यमान इत्येतन्नानदद्रासभः पत्वेति तदश्वस्य यजुषि रासभं निराह तद्रासभे शुचं दधाति भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरेति भरन्नग्निं पशव्यं मो अस्मात्कर्मणः पुरा पादीत्येतत्तदेनमश्वेन सम्भरति - ६.४.४.[७]



अथ रासभस्य । वृषाग्निं वृषणं भरन्निति वृषा वा अग्निर्वृषा रासभः स वृषा वृषाणं भरत्यपां गर्भं समुद्रियमित्यपां ह्येष गर्भः समुद्रियस्तदेनं रासभेन सम्भरति - ६.४.४.[८]

अथापादत्ते । अग्न आयाहि वीतय इत्यवितव इत्येतत्तदेनं ब्रह्मणा यजुषैतस्माच्छौद्राद्वर्णादपादत्ते - ६.४.४.[९]

अथाजस्य । ऋतं सत्यमृतं सत्यमित्ययं वा अग्निर्ऋतमसावादित्यः सत्यं यदि वाऽसावृतमयं सत्यमुभयम्वेतदयमग्निस्तस्मादाहऽर्तं सत्यमृतं सत्यमिति तदेनमजेन सम्भरति - ६.४.४.[१०]

त्रिभिः सम्भरति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्सम्भरति त्रिभिः पुरस्तादभिमन्त्रयते तत्षट् तस्योक्तो बन्धुः - ६.४.४.[११]

अथैतान्पशूनावर्तयन्ति । तेषामजः प्रथम एत्यथ रासभोऽथाश्वोऽथेतो यतामश्वः प्रथम एत्यथ रासभोऽथाजः क्षत्रं वा अन्वश्वो वैश्यं च शूद्रं चानु रासभो ब्राह्मणमजः - ६.४.४.[१२]

तद्यदितो यताम् । अश्वः प्रथम एति तस्मात्क्षत्रियं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चादनुयन्त्यथ यदमुत आयतामजः प्रथम एति तस्माद्ब्राह्मणं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चादनुयन्त्यथ यन्नैवेतो यतां नामुतो रासभः प्रथम एति तस्मान्न कदा चन ब्राह्मणश्च क्षत्रियश्च वैश्यं च शूद्रं च पश्चादन्वितस्तस्मादेवं यन्त्यपापवस्यसायाथो ब्रह्मणा चैवैतत्क्षत्रेण चैतौ वर्णावभितः परिगृह्णीतेऽनपक्रमिणौ कुरुते- ६.४.४.[१३]



अथानद्धापुरुषमीक्षते । अग्निं पुरीष्यमङ्गिरस्वद्भराम इत्यग्निं पशव्यमग्निवद्भराम इत्येतत्तदेनमनद्धापुरुषेण सम्भरति - ६.४.४.[१४]

तमजस्योपरिष्टात्प्रगृह्णन्नैति । आग्नेयो वा अजः स्वेनैवैनमेतदात्मना स्वया देवतया सम्भरत्यथो ब्रह्म वा अजो ब्रह्मणैवैनमेतत्सम्भरति - ६.४.४.[१५]

अथैनमुपावहरति । ओषधयः प्रतिमोदध्वमग्निमेतं शिवमायन्तमभ्यत्र युष्मा इत्येतद्धैतस्मादायत ओषधयो बिभ्यति यद्वै नोऽयं न हिंस्यादिति ताभ्य एवैनमेतच्छमयति प्रत्येनं मोदध्वं शिवो वोऽभ्यैति न वो हिंसिष्यतीति व्यस्यन्विश्वा अनिरा अमीवा निषीदन्नो अप दुर्मतिं जहीति व्यस्यन्विश्वा अनिराश्चामीवाश्च निषीदन्नोऽप सर्वं पाप्मानं जहीत्येतत् - ६.४.४.[१६]

ओषधयः प्रतिगृभ्णीत । पुष्पवतीः सुपिप्पला इत्येतद्धैतासां समृद्धं रूपं यत्पुष्पवत्यः सुपिप्पलाः समृद्धा एनं प्रतिगृह्णीतेत्येतदयं वो गर्भ ऋत्वियः प्रत्नं सधस्थमासददित्ययं वो गर्भ ऋतव्यः सनातनं सधस्थमासददित्येतत् - ६.४.४.[१७]

द्वाभ्यामुपावहरति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदुपावहरति तं दक्षिणत उदञ्चमुपावहरति तस्योक्तो बन्धुरुद्धतमवोक्षितं भवति यत्रैनमुपावहरत्युद्धते वा अवोक्षितेऽग्निमादधति सिकता उपकीर्णा भवन्ति तासामुपरि बन्धुः - ६.४.४.[१८]

परिश्रितं भवति । एतद्वै देवा अबिभयुर्यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति तस्मा एतां पुरं पर्यश्रयंस्तथैवास्मा अयमेतां पुरं परिश्रयत्यथो योनिर्वा इयं रेत इदं तिर इव वै योनौ रेतः सिच्यते योनिरूपमेतत्क्रियते तस्मादपि स्वया जायया तिर इवैव चिचरिषति - ६.४.४.[१९]



अथैनं विष्यति । तद्यदेवास्यात्रोपनद्धस्य संशुच्यति तामेवास्मादेतच्छुचं बहिर्धा दधात्यथो एतस्या एवैनमेतद्योनेः प्रजनयति - ६.४.४.[२०]

वि पाजसा पृथुना शोशुचान इति । वि पाजसा पृथुना दीप्यमान इत्येतद्बाधस्व द्विषो रक्षसो अमीवा इति बाधस्व सर्वान्पाप्मन इत्येतत्सुशर्मणो बृहतः शर्मणि स्यामग्नेरहं सुहवस्य प्रणीतावित्याशिषमाशास्ते - ६.४.४.[२१]

अथाजलोमान्याच्छिद्य । उदीचः प्राचः पशून्प्रसृजत्येषा होभयेषां देवमनुष्याणां दिग्यदुदीची प्राच्येतस्यां तद्दिशि पशून्दधाति तस्मादुभये देवमनुष्याः पशूनुपजीवन्ति - ६.४.४.[२२]

##६.५.१

पर्णकषायनिष्पक्वा एता आपो भवन्ति । स्थेम्ने न्वेव यद्वेव पर्णकषायेण सोमो वै पर्णश्चन्द्रमा उ वै सोम एतदु वा एकमग्निरूपमेतस्यै वाग्निरूपस्योपाप्त्यै - ६.५.१.[१]

ता उपसृजति । आपो हि ष्ठा मयोभुव इति यां वै देवतामृगभ्यनूक्ता यां यजुः सैव देवता सऽर्क्सो देवता तद्यजुस्ता हैता आप एवैष त्रिचस्तद्या अमूराप एकं रूपं समद्दश्यन्त ता एतास्तदेवैतद्रूपं करोति - ६.५.१.[२]

अथ फेनं जनयित्वान्ववदधाति । यदेव तत्फेनो द्वितीयं रूपमसृज्यत तदेवैतद्रूपं करोत्यथ यामेव तत्र मृदं संयौति सैव मृद्यत्तत्तृतीयं रूपमसृज्यतैतेभ्यो वा एष रूपेभ्योऽग्रेऽसृज्यत तेभ्य एवैनमेतज्जनयति - ६.५.१.[३]

अथाजलोमैः संसृजति । स्थेम्ने न्वेव यद्वेवाजलोमैरेतद्वा एनं देवाः पशुभ्योऽधि समभरंस्तथैवैनमयमेतत्पशुभ्योऽधि सम्भरति तद्यदजलोमैरेवाजे हि सर्वेषां पशूनां रूपमथ यल्लोम लोम हि रूपम् - ६.५.१.[४]



मित्रः संसृज्य । पृथिवीं भूमिं च ज्योतिषा सहेति प्राणो वै मित्रः प्राणो वा एतदग्रे कर्माकरोत्सुजातं जातवेदसमयक्ष्माय त्वा संसृजामि प्रजाभ्य इति यथैव यजुस्तथा बन्धुः - ६.५.१.[५]

अथैतत्त्रयं पिष्टं भवति । शर्कराश्मायोरसस्तेन संसृजति स्थेम्ने न्वेव यद्वेव तेनैतावती वा इयमग्रेऽसृज्यत तद्यावतीयमग्रेऽसृज्यत तावतीमेवैनामेतत्करोति - ६.५.१.[६]

रुद्राः संसृज्य । पृथिवीं बृहज्ज्योतिः समीधिर इत्यसौ वा आदित्य एषोऽग्निरेतद्वै तद्रुद्राः संसृज्य पृथिवीं बृहज्ज्योतिः समीधिरे तेषां भानुरजस्र इच्छुक्रो देवेषु रोचत इत्येष वा एषां भानुरजस्रः शुक्रो देवेषु रोचते - ६.५.१.[७]

द्वाभ्यां संसृजति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्संसृजति - ६.५.१.[८]

अथ प्रयौति । संसृष्टां वसुभी रुद्रैरिति संसृष्टा ह्येषा वसुभिश्च भवति यन्मित्रेण तद्वसुभिर्यद्रुद्रैस्तद्रुद्रैर्धीरैः कर्मण्यां मृदमिति धीरा हि ते कर्मण्यो इयं मृद्धस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु तामिति वाग्वै सिनीवाली सैनां हस्ताभ्यां मृद्वीं कृत्वा करोत्वित्येतत् - ६.५.१.[९]

सिनीवाली सुकपर्दा सुकुरीरा स्वौपशेति । योषा वै सिनीवाल्येतदु वै योषायै समृद्धं रूपं यत्सुकपर्दा सुकुरीरा स्वौपशा समर्धयत्येवैनामेतत्सा तुभ्यमदिते मह्योखां दधातु हस्तयोरितीयं वा अदितिर्मह्यस्यै तदाह - ६.५.१.[१०]

उखां कृणोतु । शक्त्या बाहुभ्यामदितिर्धियेति शक्त्या च हि करोति बाहुभ्यां च धिया च माता पुत्रं यथोपस्थे साग्निं बिभर्तु गर्भ एति यथा माता पुत्रमुपस्थे बिभृयादेवमग्निं गर्भे बिभर्त्वित्येतत् - ६.५.१.[११]



त्रिभिः प्रयौति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्प्रयौति द्वाभ्यां संसृजति तत्पञ्च पञ्चचितिकोऽग्निः पञ्चऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति त्रिभिरप उपसृजति तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवत्यथो अष्टाक्षरा वा इयमग्रेऽसृज्यत तद्यावतीयमग्रेऽसृज्यत तावतीमेवैनामेतत्करोति - ६.५.१.[१२]

##६.५.२
अथ मृत्पिण्डमपादत्ते । यावन्तं निधयेऽलं मखस्य शिरोऽसीति यज्ञो वै मखस्तस्यैतच्छिर आहवनीयो वै यज्ञस्य शिर आहवनीयमु वा एतं चेष्यन्भवति तस्मादाह मखस्य शिरोऽसीति - ६.५.२.[१]

यद्वेवाह मखस्य शिरोऽसीति । जायत एष एतद्यच्चीयते शीर्षतो वै मुखतो जायमानो जायते शीषतो मुखतो जायमानो जायाता इति- ६.५.२.[२]

तं प्रथयति । वसवस्त्वा कृण्वन्तु गायत्रेण च्छन्दसाङ्गिरस्वदित्ययं हैष लोको निधिस्तमेतद्वसवो गायत्रेण च्छन्दसा कुर्वंस्तथैवैनमयमेतद्गायत्रेण च्छन्दसा करोत्यङ्गिरस्वदिति प्राणो वा अङ्गिरा ध्रुवासीति स्थिरासीत्येतदथो प्रतिष्ठितासीति पृथिव्यसीति पृथिवी ह्येष निधिर्धारया मयि प्रजां रायस्पोषं गौपत्यं सुवीर्यं सजातान्यजमानायेत्येतद्वै वसव इमं लोकं कृत्वा तस्मिन्नेतामाशिषमाशासत तथैवैतद्यजमान इमं लोकं कृत्वा तस्मिन्नेतामाशिषमाशास्ते तां प्रादेशमात्रीं कृत्वाथास्यै सर्वतस्तीरमुन्नयति - ६.५.२.[३]

अथ पूर्वमुद्धिमादधाति । रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन च्छन्दसाङ्गिरस्वदित्यन्तरिक्षं हैष उद्धिस्तमेतद्रुद्रास्त्रैष्टुभेन च्छन्दसाकुर्वंस्तथैवैनमयमेतत्त्रैष्टुभेन च्छन्दसा करोत्यङ्गिरस्वदिति प्राणो वा अङ्गिरा ध्रुवासीति स्थिरासीत्येतदथो प्रतिष्ठितासीत्यन्तरिक्षमसीत्यन्तरिक्षं ह्येष उद्धिर्धारया मयि प्रजां रायस्पोषं गौपत्यं सुवीर्यं सजातान्यजमानायेत्येतद्वै रुद्रा अन्तरिक्षं कृत्वा तस्मिन्नेतामाशिषमाशासत
तथैवैतद्यजमानोऽन्तरिक्षं कृत्वा तस्मिन्नेतामाशिषमाशास्ते तां संलिप्य संश्लक्ष्ण्य - ६.५.२.[४]



अथोत्तरमुद्धिमादधाति । आदित्यास्त्वा कृण्वन्तु जागतेन च्छन्दसाङ्गिरस्वदिति द्यौर्हैष उद्धिस्तमेतदादित्या जागतेन च्छन्दसाकुर्वंस्तथैवैनमयमेतज्जागतेन च्छन्दसा करोत्यङ्गिरस्वदिति प्राणो वा अङ्गिरा ध्रुवासीति स्थिरासीत्येतदथो प्रतिष्ठितासीति द्यौरसीति द्यौर्ह्येष उद्धिर्धारया मयि प्रजां रायस्पोषं गौपत्यं सुवीर्यं सजातान्यजमानायेत्येतद्वा आदित्या दिवं कृत्वा तस्यामेतामाशिषमाशासत तथैवैतद्यजमानो दिवं कृत्वा तस्यामेतामाशिषमाशास्ते - ६.५.२.[५]

अथैतेन चतुर्थेन यजुषा करोति । विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन च्छन्दसाङ्गिरस्वदिति दिशो हैतद्यजुरेतद्वै विश्वे देवा वैश्वानरा एषु लोकेषूखायामेतेन चतुर्थेन यजुषा दिशोऽदधुस्तथैवैतद्यजमान एषु लोकेषूखायामेतेन चतुर्थेन यजुषा दिशो दधात्यङ्गिरस्वदिति प्राणो वा अङ्गिरा ध्रुवासीति स्थिरासीत्येतदथो प्रतिष्ठितासीति दिशोऽसीति दिशो ह्येतद्यजुर्धारया मयि प्रजां रायस्पोषं गौपत्यं सुवीर्यं सजातान्यजमानायेत्येतद्वै विश्वे देवा वैश्वानरा दिशः कृत्वा तास्वेतामाशिषमाशासत तथैवैतद्यजमानो दिशः कृत्वा तास्वेतामाशिषमाशास्ते - ६.५.२.[६]

तेनैतेनान्तरतश्च बाह्यतश्च करोति । तस्मादेषां लोकानामन्तरतश्च बाह्यतश्च दिशाऽपरिमितमेतेन करोत्यपरिमिता हि दिशः - ६.५.२.[७]

तां प्रादेशमात्रीमेवोर्ध्वां करोति । प्रादेशमात्रीं तिरश्चीं प्रादेशमात्रो वै गर्भो विष्णुर्योनिरेषा गर्भसम्मितां तद्योनिं करोति - ६.५.२.[८]



सा यदि वर्षीयसी प्रादेशात्स्यात् । एतेन यजुषा ह्रसीयसीं कुर्याद्यदि ह्रसीयस्येतेन वर्षीयसीम् - ६.५.२.[९]

स यद्येकः पशुः स्यात् । एकप्रादेशां कुर्यादथ यदि पञ्च पशवः स्युः पञ्चप्रादेशां कुर्यादिषुमात्रीं वा वीर्यं वा इषुर्वीर्यसम्मितैव तद्भवति पञ्चप्रादेशा ह स्म त्वेव पुरेषुर्भवति - ६.५.२.[१०]

अथ तिरश्चीं रास्नां पर्यस्यति । दिशो हैव सैतद्वै देवा इमांल्लोकानुखां कृत्वा दिग्भिरदृंहन्दिग्भिः पर्यतन्वंस्तथैवैतद्यजमान इमांल्लोकानुखां कृत्वा दिग्भिर्दृंहति दिग्भिः परितनोति - ६.५.२.[११]

तामुत्तरे वितृतीये पर्यस्यति । अत्र हैषां लोकानामन्ताः समायन्ति तदेवैनांस्तद्दृंहति - ६.५.२.[१२]

अदित्यै रास्नासीति । वरुण्या वै यज्ञे रज्जुरवरुण्यामेवैनामेतद्रास्नां कृत्वा पर्यस्यति - ६.५.२.[१३]

अथ चतस्र ऊर्ध्वाः करोति । तूष्णीमेव दिशो हैव ता एतद्वै देवा इमांल्लोकानुखां कृत्वा दिग्भिः सर्वतोऽदृंहंस्तथैवैतद्यजमान इमांल्लोकानुखां कृत्वा दिग्भिः सर्वतो दृंहति - ६.५.२.[१४]

ता एता ऐतस्यै भवन्ति । एतद्वा एता एतामस्तभ्नुवंस्तथैवैनामेतत्स्तभ्नुवन्ति तद्यदत ऊर्ध्वं तदेतया तिरश्च्या दृढमथ यदतोऽर्वाक्तदेताभिः - ६.५.२.[१५]

तासामग्रेषु स्तनानुन्नयन्ति । एतद्वै देवा इमांल्लोकानुखां कृत्वैतै स्तनैः सर्वान्कामानदुहत तथैवैतद्यजमान इमांल्लोकानुखां कृत्वैतै स्तनैः सर्वान्कामान्दुहे - ६.५.२.[१६]



सैषा गौरेव । इमे वै लोका उखेमे लोका गौस्तस्या एतदूधो यैषा तिरश्ची रास्ना सा वितृतीये भवति वितृतीये हि गोरूधः - ६.५.२.[१७]

तस्यै स्तनानुन्नयति । ऊधसस्तत्स्तनानुन्नयति सा चतुस्तना भवति चतुस्तना हि गौः - ६.५.२.[१८]

तां हैके द्विस्तनां कुर्वन्ति । अथो अष्टस्तनां न तथा कुर्याद्ये वै गोः कनीयस्तनाः पशवो ये भूयस्तना अनुपजीवनीयतरा वा अस्यैतेऽनुपजीवनीयतरां हैनां ते कुर्वतेऽथो ह ते न गां कुर्वते शुनीं वाविं वा वडबां वा तस्मात्तथा न कुर्यात् - ६.५.२.[१९]

अथास्यै बिलमभिपद्यते । अदितिष्टे बिलं गृभ्णात्विति वाग्वा अदितिरेतद्वा एनां देवाः कृत्वा वाचादित्या निरष्ठापयंस्तथैवैनामयमेतत्कृत्वा वाचादित्या निष्ठापयति - ६.५.२.[२०]

तां परिगृह्य निदधाति । कृत्वाय सा महीमुखामिति कृत्वाय सा महतीमुखामित्येतन्मृन्मयीं योनिमग्नय इति मृन्मयी ह्येषा योनिरग्नेः पुत्रेभ्यः प्रायच्छददितिः श्रपयानित्येतद्वा एनामदितिः कृत्वा देवेभ्यः पुत्रेभ्यः श्रपणाय प्रायच्छत्तथैवैनामयमेतत्कृत्वा देवेभ्यः श्रपणाय प्रयच्छति - ६.५.२.[२१]

ता हैके तिस्रः कुर्वन्ति । त्रयो वा इमे लोका इमे लोका उखा इति वदन्तोऽथो अन्यो ऽन्यस्यै प्रायश्चित्यै यदीतरा भेत्स्यतेऽथेतरस्यां भरिष्यामो यदीतराथेतरस्यामिति न तथा कुर्याद्यो वा एष निधिः प्रथमोऽयं स लोको यः पूर्व उद्धिरन्तरिक्षं तद्य उत्तरो द्यौः साथ यदेतच्चतुर्थं यजुर्दिशो हैव तदेतावद्वा इदं सर्वं यावदिमे च लोका दिशश्च स यदत्रोपाहरेदति तद्रेचयेद्यदु वै यज्ञेऽतिरिक्तं क्रियते यजमानस्य तद्द्विषन्तं भ्रातृव्यमभ्यतिरिच्यते यदु भिन्नायै प्रायश्चित्तिरुत्तरस्मिंस्तदन्वाख्याने- ६.५.२.[२२]



##६.५.३
तस्या एतस्या अषाढां पूर्वां करोति । इयं वा अषाढेयमु वा एषां लोकानां प्रथमाऽसृज्यत तामेतस्या एव मृदः करोत्येषां ह्येव लोकानामियं महिषी करोति महिषी हीयं तद्यैव प्रथमा वित्ता सा महिषी - ६.५.३.[१]

पादमात्री भवति । प्रतिष्ठा वै पाद इयमु वै प्रतिष्ठा त्र्यालिखिता भवति त्रिवृद्धीयम् - ६.५.३.[२]

अथोखां करोति । इमांस्तल्लोकान्करोत्यथ विश्वज्योतिषः करोत्येता देवता अग्निं वायुमादित्यमेता ह्येव देवता विश्वं ज्योतिस्ता एतस्या एव मृदः करोत्येभ्यस्तल्लोकेभ्य एतान्देवान्निर्मिमीते यजमानः करोति त्र्यलिखिता भवन्ति
त्रिवृतो ह्येते देवा इत्यधिदेवतम् - ६.५.३.[३]

अथाध्यात्मम् । आत्मैवोखा वागषाढा तां पूर्वां करोति पुरस्ताद्धीयमात्मनो वाक्तामेतस्या एव मृदः करोत्यात्मनो ह्येवेयं वाङ्महिषी करोति महिषी हि वाक्त्र्यालिखिता भवति त्रेधाविहिता हि वागृचो यजूंषि सामान्यथो यदिदं त्रयं वाचो
रूपमुपांशु व्यन्तरामुच्चैः - ६.५.३.[४]

अथोखां करोति । आत्मानं तत्करोत्यथ विश्वज्योतिषः करोति प्रजा वै विश्वज्योतिः प्रजा ह्येव विश्वं ज्योतिः प्रजननमेवैतत्करोति ता एतस्या एव मृदः करोत्यात्मनस्तत्प्रजां निर्मिमीते यजमानः करोति यजमानस्तदात्मनः प्रजां करोत्यनन्तर्हिताः करोत्यनन्तर्हितां तदात्मनः प्रजां करोत्युत्तराः करोत्युत्तरां तदात्मनः प्रजां करोति त्र्यालिखिता भवन्ति त्रिवृद्धि प्रजातिः पिता माता पुत्रोऽथो गर्भ उल्बं जरायु - ६.५.३.[५]

ता एता यजुष्कृतायै करोति । अयजुष्कृताया इतरा निरुक्ता एता भवन्त्यनिरुक्ता इतराः परिमिता एता भवन्त्यपरिमिता इतराः - ६.५.३.[६]



प्रजापतिरेषोऽग्निः । उभयम्वेतत्प्रजापतिर्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्या यजुष्कृतायै करोति यदेवास्य निरुक्तं परिमितं रूपं तदस्य तेन संस्करोत्यथ या अयजुष्कृतायै यदेवास्यानिरुक्तमपरिमितं रूपं तदस्य तेन संस्करोति स ह वा एतं सर्वं कृत्स्नं प्रजापतिं संस्करोति य एवं विद्वानेतदेवं करोत्यथोपशयायै पिण्डं परिशिनष्टि प्रायश्चित्तिभ्यः - ६.५.३.[७]

अथैनां धूपयति । स्थेम्ने न्वेवाथो कर्मणः प्रकृततायै यद्वेव धूपयति शिर एतद्यज्ञस्य यदुखा प्राणो धूमः शीर्षंस्तत्प्राणं दधाति - ६.५.३.[८]

अश्वशकैर्धूपयति । प्राजापत्यो वा अश्वः प्रजापतिरग्निर्नो वा आत्मात्मानं हिनस्त्यहिंसायै तद्वै शक्नैव तद्धि जग्धं यातयाम तथो ह नैवाश्वं हिनस्ति नेतरान्पशून् - ६.५.३.[९]

वसवस्त्वा धूपयन्तु । गायत्रेण च्छन्दसाऽङ्गिरस्वद्रुद्रास्त्वा धूपयन्तुत्रैष्टुभेन च्छन्दसाऽङ्गिरस्वदादित्यास्त्वा धूपयन्तु जागतेन च्छन्दसाऽङ्गिरस्वद्विश्वेत्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन च्छन्दसाऽङ्गिरस्वदिन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयत्वित्येताभिरेवैनामेतद्देवताभिर्धूपयति - ६.५.३.[१०]

सप्ताश्वशकानि भवन्ति । सप्त यजूंषि सप्ततय्य एता देवताः सप्त शीर्षन्प्राणा यदु वा अपि बहुकृत्वः सप्तसप्त सप्तैव तच्छीर्षण्येव तत्सप्त प्राणान्दधाति- ६.५.३.[११]

##६.५.४
अथैनमस्यां खनति । एतद्वै देवा अबिभयुर्यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति तस्मा इमामेवात्मानमकुर्वन्गुप्त्या आत्मात्मानं गोप्स्यतीति - ६.५.४.[१]

तं वा अदित्या खनति । इयं वा अदितिर्नो वा आत्मात्मानं हिनस्त्यहिंसायै यदन्यया देवतया खनेद्धिंस्याद्धैनम् - ६.५.४.[२]



अदितिष्ट्वा देवी विश्वदेव्यावती । पृथिव्याः सधस्थे अङ्गिरस्वत्खनत्ववटेत्यवटो हैष देवत्राऽत्र सा वैणव्यभ्रिरुत्सीदति चतुःस्रक्तिरेष कूपो भवति चतस्रो वै दिशः सर्वाभ्य एवैनमेतद्दिग्भ्यः खनत्यथ पचनमवधायाषाढामवदधाति तूष्णीमेव तां हि पूर्वां करोति - ६.५.४.[३]

अथोखामवदधाति । देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वद्दधतूख इति देवानां हैतामग्रे पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वद्दधुस्ताभिरेवैनामेतद्दधाति ता ह ता ओषधय एवौषधयो वै देवानां पत्न्य ओषधिभिर्हीदं सर्वं हितमोषधिभिरेवैनामेतद्दधात्यथ विश्वज्योतिषोऽवदधाति तूष्णीमेवाथ पचनमवधायाभीद्धे - ६.५.४.[४]

धिषणास्त्वा देवीः । विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वदभीन्धतामुख इति धिषणा हैतामग्रे देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वदभीधिरे ताभिरेवैनामेतदभीन्द्धे सा ह सा वागेव वाग्वै धिषणा वाचा हीदं सर्वमिद्धं वाचैवैनामेतदभीन्द्धेऽथैतानि त्रीणि यजूंषीक्षमाण एव जपति - ६.५.४.[५]

वरूत्रीष्ट्वा देवीः । विश्वदेव्यावतीः पृथिव्याः सधस्थ अङ्गिरस्वच्छ्रपयन्तूख इति वरूत्रीर्हैतामग्रे देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वच्छ्रपयांचक्रुस्ताभिरेवैनामेतच्छ्रपयति तानि ह तान्यहोरात्राण्येवाहोरात्राणि वै वरूत्रयोऽहोरात्रैर्हीदं सर्वं वृतमहोरात्रैरेवैनामेतच्छ्रपयति - ६.५.४.[६]

ग्नास्त्वा देवीः । विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वत्पचन्तूख इति ग्ना हैतामग्रे देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वत्पेचुस्ताभिरवैनामेतत्पचति तानि ह तानि च्छन्दांस्येव छन्दांसि वै ग्नाश्छन्दोभिर्हि स्वर्गं लोकं गच्छन्ति च्छन्दोभिरेवैनामेतत्पचति - ६.५.४.[७]



जनयस्त्वाच्छिन्नपत्रा देवीः । विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वत्पचन्तूख इति जनयो हैतामग्रेऽच्छिन्नपत्रा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वत्पेचुस्ताभिरेवैनामेतत्पचति तानि ह तानि नक्षत्राण्येव नक्षत्राणि वै जनयो ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति तेषामेतानि ज्योतींषि नक्षत्रैरेवैनामेतत्पचति - ६.५.४.[८]

स वै खनत्येकेन । अवदधात्येकेनाभीन्द्ध एकेन श्रपयत्येकेन द्वाभ्यां पचति तस्माद्द्विः संवत्सरस्यान्नं पच्यते तानि षड्भम्पद्यन्ते षड्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति - ६.५.४.[९]

अथ मित्रस्य चर्षणीधृत इति । मैत्रेण यजुषोपन्याचरति यावत्कियच्चोपन्याचरति न वै मित्रं कं चन हिनस्ति न मित्रं कश्चन हिनस्ति तथो हैष एतां न हिनस्ति नो एतमेषा तां दिवैवोपवपेद्दिवोद्वपेदहर्ह्याग्नेयम् - ६.५.४.[१०]

तां सावित्रेण यजुषोद्वपति । सविता वै प्रसविता सवितृप्रसूत एवैनामेतदुद्वपति देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्येति सर्वमु ह्येतत्सविता - ६.५.४.[११]

अथैनां पर्यावर्तयति । अव्यथमाना पृथिव्यामाशा दिश आपृणेत्यव्यथमाना त्वं पृथिव्यामाशा दिशो रसेनापूरयेत्येतत् - ६.५.४.[१२]

अथैनामुद्यच्छति । उत्थाय बृहती भवेत्युत्थाय हीमे लोका बृहन्त उदु तिष्ठ ध्रुवा त्वमित्युदु तिष्ठ स्थिरा त्वं प्रतिष्ठितेत्येतत् - ६.५.४.[१३]



तां परिगृह्य निदधाति । मित्रैतां त उखां परिददाम्यभित्त्या एषा मा भेदीत्ययं वै वायुर्मित्रो योऽयं पवते तस्मा एवैनामेतत्परिददाति गुप्त्यै ते हेमे लोका मित्रगुप्तास्तस्मादेषां लोकानां न किं चन मीयते - ६.५.४.[१४]

अथैनामाच्छृणत्ति । स्थेम्ने न्वेवाथो कर्मणः प्रकृततायै यद्वेवाच्छृणत्ति शिर एतद्यज्ञस्य यदुखा प्राणः पयः शीर्षंस्तत्प्राणं दधात्यथो योषा वा उखा योषायां तत्पयो दधाति तस्माद्योषायां पयः - ६.५.४.[१५]

अजायै पयसाऽऽच्छृणत्ति । प्रजापतेर्वै शोकादजा समभवन्प्रजापतिरग्निर्नो वा आत्मात्मानं हिनस्त्यहिंसायै यद्वेवाजाया अजा ह सर्वा ओषधीरत्तिसर्वासामेवैनामेतदोषधीनां रसेनाऽऽच्छृणत्ति - ६.५.४.[१६]

वसवस्त्वाऽऽच्छृन्दन्तु । गायत्रेण च्छन्दसाऽङ्गिरस्वद्रुद्रास्त्वाऽऽच्छृन्दन्तु त्रैष्टुभेन च्छन्दसाऽङ्गिरस्वदादित्यास्त्वाऽऽच्छृन्दन्तु जागतेन च्छन्दसाऽङ्गिरस्वद्विश्वे त्वा देवा

वैश्वानराऽ आच्छृन्दन्त्वानुष्टुभेन च्छन्दसाऽङ्गिरस्वदित्येताभिरेवैनामेतद्देवताभिराच्छृणत्ति स वै याभिरेव देवताभिः करोति ताभिर्धूपयति ताभिराच्छृणत्ति यो वाव कर्म करोति स एवं तस्योपचारं वेद
तस्माद्याभिरेव देवताभिः करोति ताभिर्धूपयति ताभिराच्छृणत्ति - ६.५.४.[१७]

##६.६.१
भूयांसि हवींषि भवन्ति । अग्निचित्यायां यदु चानग्निचित्यायामतीनि ह कर्माणि सन्ति यान्यन्यत्कर्माति तान्यतीनि तेषामग्निचित्या राजसूयो वाजपेयोऽश्वमेधस्तद्यत्तान्यन्यानि कर्माण्यति तस्मात्तान्यतीनि - ६.६.१.[१]

आग्नावैष्णव एकादशकपालः । तदध्वरस्य दीक्षणीयं वैश्वानरो द्वादशकपालऽ आदित्यश्च चरुस्ते अग्नेः - ६.६.१.[२]



स यदाग्नावैष्णवमेव निर्वपेत् । नेतरे हविषी अध्वरस्यैव दीक्षणीयं कृतं स्यान्नाग्नेरथ यदितरे एव हविषी निर्वपेन्नाग्नावैष्णवमग्नेरेव दीक्षणीयं कृतं स्यान्नाध्वरस्य - ६.६.१.[३]

उभयानि निर्वपति । अध्वरस्य चाग्नेश्चोभयं ह्येतत्कर्माध्वरकर्म चाग्निकर्म चाध्वरस्य पूर्वमथाग्नेरुपायि ह्येतत्कर्म यदग्निकर्म - ६.६.१.[४]

स य एष आग्नावैष्णवः । तस्य तदेव ब्राह्मणं यत्पुरश्चरणे वैश्वानरो द्वादशकपालो वैश्वानरो वै सर्वेऽग्नयः सर्वेषामग्नीनामुपाप्त्यै द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरो वैश्वानरः - ६.६.१.[५]

यद्वेवैतं वैश्वानरं निर्वपति । वैश्वानरं वा एतमग्निं जनयिष्यन्भवति तमेतत्पुरस्ताद्दीक्षणीयायां रेतो भूतं सिञ्चति यादृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यदेतमत्र वैश्वानरं रेतो भूतं सिञ्चति तस्मादेषोऽमुत्र वैश्वानरो जायते - ६.६.१.[६]

यद्वैवैते हविषी निर्वपति । क्षत्रं वै वैश्वानरो विडेष आदित्यश्चरुः क्षत्रं च तद्विशं च करोति वैश्वानरं पूर्वं निर्वपति क्षत्रं तत्कृत्वा विशं करोति - ६.६.१.[७]

एक एष भवति । एकदेवत्य एकस्थं तत्क्षत्रमेकस्थां श्रियं करोति चरुरितरो बहुदेवत्यो भूमा वा एष तण्डुलानां यच्चरुर्भूमो एष देवानां यदादित्या विशि तद्भूमानं दधातीत्यधिदेवतम् - ६.६.१.[८]

अथाध्यात्मम् । शिर एव वैश्वानर ऽआत्मैष आदित्यश्चरुः शिरश्च तदात्मानं च करोति वैश्वानरं पूर्वं निर्वपति शिरस्तत्कृत्वाऽऽत्मानं करोति - ६.६.१.[९]

एक एष भवति । एकमिव हि शिरश्चरुरितरो बहुदेवत्यो भूमा वा एष तण्डुलानां यच्चरुर्भूमो एषोऽङ्गानां यदात्माऽऽत्मंस्तदङ्गानां भूमानं दधाति - ६.६.१.[१०]



घृत एष भवति । घृतभाजना ह्यादित्याः स्वेनैवैनानेतद्भागेन स्वेन रसेन प्रीणात्युपांश्वेतानि हवींषि भवन्ति रेतो वा अत्र यज्ञ उपांशु वै रेतः सिच्यते - ६.६.१.[११]

अथौद्ग्रभणानि जुहोति । औद्ग्रभणैर्वै देवा आत्मानमस्माल्लोकात्स्वर्गं लोकमभ्युदगृह्णत यदुदगृह्णत तस्मादौद्ग्रभणानि तथैवैतद्यजमानऽ औद्ग्रभणैरेवात्मानमस्माल्लोकात्स्वर्गं लोकमभ्युद्गृह्णीते - ६.६.१.[१२]

तानि वै भूयांसि भवन्ति । अग्निचित्यायां यदु चानग्निचित्यायां तस्यात्क्तो बन्धुरुभयानि भवन्ति तस्योक्तोऽध्वरस्य पूर्वाण्यथाग्नेस्तस्यो एवोक्तः - ६.६.१.[१३]

पञ्चाध्वरस्य जुहोति । पाङ्क्तो यज्ञो यावान्यज्ञो यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतं सिञ्चति सप्ताग्नेः सप्तचितिकोऽग्निः सप्तऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतं सिञ्चति तान्युभयानि द्वादश सम्पद्यन्ते द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति - ६.६.१.[१४]

स जुहोति । आकूतिमग्निं प्रयुजं स्वाहेत्याकूताद्वा एतदग्रे कर्म समभवत्तदेवैतदेतस्मै कर्मणे प्रयुङ्क्ते - ६.६.१.[१५]

मनो मेधामग्निं प्रयुजं स्वाहेति । मनसो वा एतदग्रे कर्म समभवत्तदेवैतदेतस्मै कर्मणे प्रयुङ्क्ते - ६.६.१.[१६]

चित्तं विज्ञातमग्निं प्रयुजं स्वाहेति । चित्ताद्वा एतदग्रे कर्म समभवत्तदेवैतदेतस्मै कर्मणे प्रयुङ्क्ते - ६.६.१.[१७]

वाचो विधृतिमग्निं प्रयुजं स्वाहेति । वाचो वा एतदग्रे कर्म समभवत्तामेवैतदेतस्मै कर्मणे प्रयुङ्क्ते - ६.६.१.[१८]



प्रजापतये मनवे स्वाहेति । प्रजापतिर्वै मनुः स हीदं सर्वममनुत प्रजापतिर्वा एतदग्रे कर्माकरोत्तमेवैतदेतस्मै कर्मणे प्रयुङ्क्ते - ६.६.१.[१९]

अग्नये वैश्वानराय स्वाहेति । संवत्सरो वा अग्निर्वैश्वानरः संवत्सरो वा एतदग्रे कर्माकरोत्तमेवैतदेतस्मै कर्मणे प्रयुङ्क्ते - ६.६.१.[२०]

अथ सावित्रीं जुहोति । सविता वा एतदग्रे कर्माकरोत्तमेवैतदेतस्मै कर्मणे प्रयुङ्क्ते विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यं विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहेति यो देवस्य सवितुः सख्यं वृणीते स द्युम्नं च पुष्टिं च वृणीत एष अस्य सख्यं वृणीते य एतत्कर्म करोति - ६.६.१.[२१]

तान्यु हैके । उखायामेवैतान्यौद्ग्रभणानि जुह्वति कामेभ्यो वा एतानि हूयन्त आत्मोऽ एष यजमानस्य यदुखाऽऽत्मन्यजमानस्य सर्वान्कामान्प्रतिष्ठापयाम इति न तथा कुर्यादेतस्य वै यज्ञस्य संस्थितस्यैतासामाहुतीनां यो रसस्तदेतदर्चिर्यद्दीप्यते तद्यत्संस्थिते यज्ञे

हुतेष्वौद्ग्रभणेषूखां प्रवृणक्ति तदेनामेष यज्ञ आरोहति तं यज्ञं बिभर्ति तस्मात्संस्थित एव यज्ञे हुतेष्वौद्ग्रभणेषूखां प्रवृञ्ज्यात् - ६.६.१.[२२]

मुञ्जकुलायेनावस्तीर्णा भवति । आदीप्यादिति न्वेव यद्वेव मुञ्जकुलायेन योनिरेषाग्नेर्यन्मुञ्जो न वै योनिर्गर्भं हिनस्त्यहिंसायै योनेर्वै जायमानो जायते योनेर्जायमानो जायाता इति - ६.६.१.[२३]

शणकुलायमन्तरं भवति । आदीप्यादिति न्वेव यद्वेव शणकुलायं प्रजापतिर्यस्यै योनेरसृज्यत तस्याऽ उमाऽ उल्बमासञ्छणा जरायु तस्मात्ते पूतयो जरायु हि तेन वै जरायु गर्भं हिनस्त्यहिंसायै जरायुणो वै जायमानो जायते जरायुणो जायमानो जायाता इति - ६.६.१.[२४]

##६.६.२

तां तिष्ठन्प्रवृणक्ति इमे वै लोका उखा तिष्ठन्तीव वा इमे लोका अथो तिष्ठन्वै वीर्यवत्तमः - ६.६.२.[१]

उदङ्ङ्प्राङ्तिष्ठन् । उदङ्वै प्राङ्तिष्ठन्प्रजापतिः प्रजा असृजत् - ६.६.२.[२]

यद्वेवोदङ्ङ्प्राङ्तिष्ठन् । एषा होभयेषां देवमनुष्याणां दिग्यदुदीची प्राची - ६.६.२.[३]

यद्वेवोदङ्ङ्प्राङ्तिष्ठन् । एतस्यां ह दिशि स्वर्गस्य लोकस्य द्वारं तस्मादुदङ्ङ्प्राङ्तिष्ठन्नाहुतीर्जुहोत्युदङ्ङ्प्राङ्तिष्ठन्दक्षिणा नयति द्वारैव तत्स्वर्गस्य लोकस्य वित्तं प्रपादयति - ६.६.२.[४]

मा सु भित्था मा सु रिष इति । यथैव यजुस्तथा बन्धुरम्ब धृष्णु वीरयस्व स्विति योषा वा उखाऽम्बेति वै योषाया आमन्त्रणं स्विव वीरयस्वाग्निश्चेदं करिष्यथ इत्यग्निश्च ह्येतत्करिष्यन्तौ भवतः - ६.६.२.[५]

दृंहस्व देवी पृथिवी स्वस्तय इति । यथैव यजुस्तथा बन्धुरासुरी माया स्वधयाकृताऽसीति प्राणो वा असुस्तस्यैषा माया स्वधया कृता जुष्टं देवेभ्य इदमस्तु हव्यमिति या एवैतस्मिन्नग्नावाहुतीर्होष्यन्भवति ता एतदाहाथो एषैव हव्यमरिष्टा त्वमुदिहि यज्ञे अस्मिन्निति यथैवारिष्टाऽनार्तैतस्मिन्यज्ञ उदियादेवमेतदाह - ६.६.२.[६]

द्वाभ्यां प्रवृणक्ति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनामेतत्प्रवृणक्ति गायत्र्या च त्रिष्टुभा च प्राणो गायत्र्यात्मा त्रिष्टुबेतावान्वै पशुर्यावान्प्राणश्चात्मा च तद्यावान्पशुस्तावतैवैनामेतत्प्रवृणक्त्यथो अग्निर्वै गायत्रीन्द्रस्त्रिष्टुबैन्द्राग्नोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनामेतत्प्रवृणक्तीन्द्राग्नी वै सर्वे देवाः सर्वदेवत्योऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनामेतत्प्रवृणक्ति तयोः सप्त पदानि सप्तचितिकोऽग्निः सप्तऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति - ६.६.२.[७]



तां यदाग्निः संतपति । अथैनामर्चिरारोहति योषा वा उखा वृषाऽग्निस्तस्माद्यदा वृषा योषां संतपत्यथास्यां रेतो दधाति - ६.६.२.[८]

तद्धैके । यदि चिरमर्चिरारोहत्यङ्गारानेवावपन्त्युभयेनैषोऽग्निरिति न तथा कुर्यादस्थन्वान्वाव पशुर्जायतेऽथ तं नाग्र ऽएवास्थन्वन्तमिव न्यृषन्ति रेतऽइवैव दधति रेत उ एतद्नस्थिकं यदर्चिस्तस्मादेनामर्चिरेवारोहेत् - ६.६.२.[९]

तां यदार्चिरारोहति । अथास्मिन्त्समिधमादधाति रेतो वा एनामेतदापद्यत एषोऽग्निस्तस्मिन्नेतां रेतसि सम्भूतिं दधाति - ६.६.२.[१०]

सा कार्मुकी स्यात् । देवाश्चासुराश्चोभये प्राजापत्या अस्पर्द्धन्त ते देवा अग्निमनीकं

कृत्वाऽसुरानभ्यायंस्तस्यार्चिषः प्रगृहीतस्यासुरा अग्रं प्रावृश्चंस्तदस्यां प्रत्यतिष्ठत्स कृमुकोऽभवत्तस्मात्स स्वादू रसो हि तस्मादु लोहितोऽर्चिर्हि स एषोऽग्निरेव यत्कृमुकोऽग्निमेवास्मिन्नेतत्सम्भूतिं दधाति - ६.६.२.[११]

प्रादेशमात्री भवति । प्रादेशमात्रो वै गर्भो विष्णुरात्मसम्मितामेवास्मिन्नेतत्सम्भूतिं दधाति - ६.६.२.[१२]

घृते न्युत्ता भवति । अग्निर्यस्यै योनेरसृज्यत तस्यै घृतमुल्बमासीत्तस्मात्तत्प्रत्युद्दीप्यत ऽआत्मा ह्यस्यैष तस्मात्तस्य न भस्म भवत्यात्मैव तदात्मानमप्येति न वा उल्बं गर्भं हिनस्त्यहिंसायाऽ उल्बाद्वै जायमानो जायत उल्बाज्जायमानो जायाता इति - ६.६.२.[१३]

तामादधाति । द्वन्नः सर्पिरासुतिरिति दार्वन्नः सर्पिरशन इत्येतत्प्रत्नो होतावरेण्य इति सनातनो होता वरेण्य इत्येतत्सहसस्पुत्रो अद्भुत इति बलं वै सहो बलस्य पुत्रो ऽद्भुत इत्येतत्तिष्ठन्नादधाति स्वाहाकारेण तस्योपरि बन्धुः - ६.६.२.[१४]



तद्वा आत्मैवोखा । योनिर्मुञ्जाः शणा जरायूल्बं घृतं गर्भः समित् - ६.६.२.[१५]

बाह्योखा भवति । अन्तरे मुञ्जा बाह्यो ह्यात्माऽन्तरा योनिर्बाह्ये मुञ्जा भवन्त्यन्तरे शणा बाह्या हि योनिरन्तरं जरायु बाह्ये शणा भवन्त्यन्तरं घृतं बाह्यं हि जराय्वन्तरमुल्बं बाह्यं घृतं भवत्यन्तरा समिद्बाह्यं ह्युल्बमन्तरो गर्भ एतेभ्यो वै जायमानो जायते तेभ्य एवैनमेतज्जनयति - ६.६.२.[१६]

##६.६.३
अथ वैकङ्कतीमादधाति । प्रजापतिर्यां प्रथमामाहुतिमजुहोत्स हुत्वा यत्र न्यमृष्ट ततो विकङ्कतः समभवत्सैषा प्रथमाहुतिर्यद्विकङ्कतस्तामस्मिन्नेतज्जुहोति तयैनमेतत्प्रीणाति परस्या अधि संवतोऽवरां अभ्यातर यत्राहमस्मि तां अवेति यथैव यजुस्तथा बन्धुः - ६.६.३.[१]

अथौदुम्बरीमादधाति । देवाश्चासुराश्चोभये प्राजापत्या अस्पर्धन्त ते ह सर्वऽएव वनस्पतयोऽसुरानभ्युपेयुरुदुम्बरो हैव देवान्न जहौ ते देवा असुराञ्जित्वा तेषां वनस्पतीनवृञ्जत - ६.६.३.[२]

ते होचुः । हन्त यैषु वनस्पतिषूर्ग्यो रस उदुम्बरे तं दधाम ते यद्यपक्रामेयुर्यातयामा अपक्रामेयुर्यथा धेनुर्दुग्धा यथाऽनड्वानूहिवानिति तद्यैषु वनस्पतिषूर्ग्यो रस आसीदुदुम्बरे तमदधुस्तयैतदूर्जा सर्वान्वनस्पतीन्प्रति पच्यते तस्मात्स सर्वदार्द्रः सर्वदा क्षीरी तदेतत्सर्वमन्नं यदुदुम्बरः सर्वे वनस्पतयः सर्वेणैवैनमेतदन्नेन प्रीणाति सर्वैर्वनस्पतिभिः समिन्द्धे - ६.६.३.[३]

परमस्याः परावत इति । या परमा परावदित्येतद्रोहिदश्व इहागहीति रोहितो हाग्नेरश्वः पुरीष्यः पुरुप्रिय इति पशव्यो बहुप्रिय इत्येतदग्ने त्वं तरा मृध इत्यग्ने त्वं तर सर्वान्पाप्मन इत्येतत् - ६.६.३.[४]



अथापरशुवृक्णमादधाति । जायत एष एतद्यच्चीयते स एष सर्वास्मा अन्नाय जायत एतद्वेकमन्नं यदपरशुवृक्णं तेनैनमेतत्प्रीणाति यदग्ने कानि कानि चिदा ते दारूणि दध्मसि सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्येति यथैव यजुस्तथा बन्धुस्तद्यत्किं चापरशुवृक्णं तदस्मा एतत्स्वदयति तदस्मा अन्नं कृत्वाऽपिदधाति - ६.६.३.[५]

अथाधःशयमादधाति । जायत एष एतद्यच्चीयते स एष सर्वस्मा अन्नाय जायत एतद्वेकमन्नं यदधःशयं तेनैनमेतत्प्रीणाति यदत्त्युपजिह्विका यद्वम्रो अतिसर्पतीत्युपजिह्विका वा हि तदत्ति वम्रो वातिसर्पति सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्येति यथैव यजुस्तथा बन्धुस्तद्यत्किं चाधःशयं तदस्मा एतत्स्वदयति तदस्मा अन्नं कृत्वाऽपिदधाति - ६.६.३.[६]

अथैता उत्तराः पालाश्यो भवन्ति । ब्रह्म वै पलाशो ब्रह्मणैवैनमेतत्समिन्द्धे यद्वेव पालाश्यः सोमो वै पलाश एषो हपरमाहुतिर्यत्सोमाहुतिस्तामस्मिन्नेतज्जुहीति तयैनमेतत्प्रीणाति - ६.६.३.[७]

अहरहरप्रयावं भरन्त इति । अहरहरप्रमत्ता आहरन्त इत्येतदश्वायेव तिष्ठते घासमस्मा इति यथाश्वाय तिष्ठते घासमित्येतद्रायस्पोषेण समिषा मदन्त इति रय्या च पोषेण च समिषा मदन्त इत्येतदग्ने मा ते प्रतिवेशा रिषामेति यथैवास्य प्रतिवेशो न रिष्येदेवमेतदाह - ६.६.३.[८]

नाभा पृथिव्याः समिधाने अग्नाविति । एषा ह नाभिः पृथिव्यै यत्रैष एतत्समिध्यते रायस्पोषाय बृहते हवामह इति रय्यै च पोषाय च बृहते हवामह इत्येतदिरम्मदमितीरया ह्येष मत्तो बृहदुक्थमिति बृहदुक्थो ह्येष यजत्रमिति यज्ञियमित्येतज्जेतारमग्निं पृतनासु सासहिमिति जेता ह्यग्निः पृतना उ सासहिः - ६.६.३.[९]



याः सेना अभीत्वरीः । दंष्ट्राभ्यां मलिम्लून्ये जनेषु मलिम्लवो योऽअस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः निन्दाद्यो अस्मान्धिप्साच्च सर्वं तं मस्मसा कुर्विति - ६.६.३.[१०]

एतद्वै देवाः । यश्चैनानद्वेड्यं चाद्विषुस्तमस्मा अन्नं कृत्वाप्यदधुस्तेनैनमप्रीणन्नन्नमहैतस्याभवददहदु देवानां पाप्मानं तथैवैतद्यजमानो यश्चैनं द्वेष्टि यं च द्वेष्टि तमस्मा अन्नं कृत्वाऽपिदधाति तेनैनं प्रीणात्यन्नमहैतस्य भवति दहत्यु यजमानस्य पाप्मानम् - ६.६.३.[११]

ता एता एकादशादधाति । अक्षत्रियस्य वाऽपुरोहितस्य वाऽसर्वं वै तद्यदेकादशा सर्वं तद्यदक्षत्रियो वाऽपुरोहितो वा - ६.६.३.[१२]

द्वादश क्षत्रियस्य वा पुरोहितस्य वा । सर्वं वै तद्यद्द्वादश सर्वं तद्यत्क्षत्रियो वा पुरोहितो वा - ६.६.३.[१३]

स पुरोहितस्यादधाति । संशितं मे ब्रह्म संशितं वीर्यं बलं संशितं क्षत्रं जिष्णु यस्याहमस्मि पुरोहित इति तदस्य ब्रह्म च क्षत्रं च संश्यति - ६.६.३.[१४]

अथ क्षत्रियस्य । उदेषां बाहू अतिरमुद्वर्चो अथो बलं क्षिणोमि ब्रह्मणाऽमित्रानुन्नयामि स्वां अहमिति यथैवक्षिणुयादमित्रानुन्नयेत्स्वानेवमेतदाहोभे त्वेवैते आदध्यादयं वा अग्निर्ब्रह्म च क्षत्रं चेममेवैतदग्निमेताभ्यामुभाभ्यां समिन्द्धे ब्रह्मणा च क्षत्रेण च - ६.६.३.[१५]

तास्त्रयोदश सम्पद्यन्ते । त्रयोदश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति - ६.६.३.[१६]



प्रादेशमात्र्यो भवन्ति । प्रादेशमात्रो वै गर्भो विष्णुरन्नमेतदात्मसम्मितेनैवैनमेतदन्नेन प्रीणाति यदु वाऽआत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति तिष्ठन्नादधाति तस्योपरि बन्धुः स्वाहाकारेण रेतो वा इदं सिक्तमयमग्निस्तस्मिन्यत्काष्ठान्यस्वाहाकृतान्यभ्यादध्याद्धिंस्याद्धैनं ता यत्समिधस्तेन नाहुतयो यदु स्वाहाकारेण तेनान्नमन्नं हि स्वाहाकारस्तथो हैनं न हिनस्ति - ६.६.३.[१७]

##६.६.४
अथ विष्णुक्रमान्क्रान्त्वा । वात्सप्रेणोपस्थायास्तमित आदित्ये भस्मैव प्रथममुद्वपत्येतद्वा एनमेतेनान्नेन प्रीणात्येताभिः समिद्भिस्तस्यान्नस्य जग्धस्यैष पाप्मा सीदति भस्म तेनैनमेतद्व्यावर्तयति तस्मिन्नपहतपाप्मन्वाचं विसृजते वाचं विसृज्य समिधमादधाति रात्र्या एवैनमेतदन्नेन प्रीणाति रात्रींरात्रीमप्रयावं भरन्त इति तस्योक्तो बन्धू रात्र्या

एवैतामरिष्टिं स्वस्तिमाशास्ते तद्यत्किं चाती रात्र्योपसमादधात्याहुतिकृतं हैवास्मै तदुपसमादधाति - ६.६.४.[१]

अथ प्रातरुदित आदित्ये । भस्मैव प्रथममुद्वपत्येतद्वा एनमेतेनान्नेन प्रीणात्येतया समिधा यच्च रात्र्योपसमादधाति तस्यान्नस्य जग्धस्यैष पाप्मा सीदति भस्म तेनैनमेतद्व्यावर्तयति तस्मिन्नपहतपाप्मन्वाचं विसृजते वाचं विसृज्य समिधमादधात्यह्न एवैनमेतदन्नेन प्रीणात्यहरहरप्रयावम्भरन्त इति तस्योक्तो बन्धुरह्न एवैतामरिष्टिं स्वस्तिमाशास्ते तद्यत्किं चातोऽह्नोपसमादधात्याहुतिकृतं हैवास्मै तदुपसमादधाति - ६.६.४.[२]

अहोरात्रे वा ऽअभिवर्तमाने संवत्सरमाप्नुतः संवत्सरऽ इदं सर्वमाह्नायैवैतामरिष्टिं स्वस्तिमाशास्ते - ६.६.४.[३]

अथ यदास्मै व्रतं प्रयच्छन्ति । अथ व्रते न्यज्य समिधमादधाति न व्रते न्यञ्ज्यादित्यु हैक आहुराहुतिं तज्जुहुयादनवक्लृप्तं वै तद्यदीक्षित आहुतिं जुहुयादिति - ६.६.४.[४]



स वै न्यञ्ज्यादेव । देवो वा अस्यैष आत्मा मानुषोऽयं स यन्न न्यञ्ज्यान्न हैतं दैवमात्मानं प्रीणीयादथ यन्न्यनक्ति तथो हैतं दैवमात्मानं प्रीणाति सा यत्समित्तेन नाहुतिर्यदु व्रते न्यक्ता तेनान्नमन्नं हि व्रतम् - ६.६.४.[५]

स वै समिधमाधायाथ व्रतयति । दैवो वा अस्यैष आत्मा मानुषोऽयं देवा उ वाअग्रेऽथ मनुष्यास्तस्मात्समिधमाधायाथ व्रतयति - ६.६.४.[६]

अन्नपतेऽन्नस्य नो देहीति । अशनपतेऽशनस्य नो देहीत्येतदनमीवस्य शुष्मिण इत्यनशनायस्य शुष्मिण इत्येतत्प्रप्र दातारं तारिष इति यजमानो वै दाता प्र यजमानं तारिष इत्येतदूर्जं नो धेहि द्विपदे चतुष्पद इत्याशिषमाशास्ते यदु भिन्नायै प्रायश्चित्तिमाहोत्तरस्मिंस्तदन्वाख्यान इति - ६.६.४.[७]

यद्येषोखा भिद्येत । याऽभिन्ना नवा स्थाल्युरुबिलो स्यात्तस्यामेनं पर्यावपेदार्च्छति वा एषोखा या भिद्यतेऽनार्तो वा इयं देवतानार्तायामिममनार्तं बिभराणीति तत्रोखायै कपालं पुरस्तात्प्रास्यति तथो हैष एतस्यै योनेर्न च्यवते - ६.६.४.[८]

अथ मृदमाहृत्य । उखां चोपशयां च पिष्ट्वा संसृज्योखां करोत्येतयैवावृताऽनुपहरन्यजुस्तूष्णीमेव पक्त्वा पर्यावपति कर्मणिरेव तत्र प्रायश्चित्तिः पुनस्तत्कपालमुखायामुपसमस्योखां चोपशयां च पिष्ट्वा संसृज्य निदधाति प्रायश्चित्तिभ्यः - ६.६.४.[९]

अथ यद्येष उख्योऽग्निरनुगच्छेत् । गार्हपत्यं वाव स गच्छति गार्हपत्याद्धि स आहृतो भवति गार्हपत्यादेवैनं प्राञ्चमुद्धृत्योपसमाधायोखां प्रवृञ्ज्यादेतयैवावृतानुपहरन्यजुस्तूष्णीमेव तां यदाऽग्निरारोहति - ६.६.४.[१०]

अथ प्रायश्चित्ती करोति । सर्वेभ्यो वा एष एतं कामेभ्यो आधत्ते तद्यदेवास्यात्र कामानां व्यवच्छिद्यतेऽग्नावनुगते तदेवैतत्संतनोति संदधात्युभे प्रायश्चित्ती करोत्यध्वरप्रायश्चित्तिं चाग्निप्रायश्चित्तिं चाध्वरस्य पूर्वामथाग्नेस्तस्योक्तो बन्धुः - ६.६.४.[११]



स समिधाऽऽज्यस्योपहत्य । आसीन आहुतिं जुहोति विश्वकर्मणे स्वाहेत्यथोपोत्थाय समिधमादधाति पुनस्त्वाऽऽऽदित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैरित्येतास्त्वा देवताः पुनः समिन्धतामित्येतद्धृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामा इति घृतेनाह त्वं तन्वं वर्द्धयस्व येभ्यऽ उ त्वां कामेभ्यो यजमान आधत्त तेऽस्य सर्वे सत्याः सन्त्वित्येतत् - ६.६.४.[१२]

अथ यदि गार्हपत्योऽनुगच्छेत् । अरणी वाव स गच्छत्यरणिभ्यां हि स आहृतो भवत्यरणिभ्यामेवैनं मथित्वोपसमाधाय प्रायश्चित्ती करोति - ६.६.४.[१३]

अथ यदि प्रसुत आहवनीयोऽनुगच्छेत् । गार्हपत्यं वाव स गच्छति गार्हपत्याद्धि स

आहृतो भवति गार्हपत्यादेवैनं प्राञ्चं सांकाशिनेन हृत्वोपसमाधाय प्रायश्चित्ती करोति यस्तस्मिन्कालेऽध्वरः स्यात्तामध्वरप्रायश्चित्तिं कुर्यात्समान्यग्निप्रायश्चित्तिः - ६.६.४.[१४]

अथ यद्याग्नीध्रीयोऽनुगच्छेत् । गार्हपत्यं वाव स गच्छति गार्हपत्याद्धि स आहृतो भवति गार्हपत्यादेवैनं प्राञ्चमुत्तरेण सदो हृत्वोपसमाधाय प्रायश्चित्ती करोत्यथ यदि गार्हपत्योऽनुगच्छेत्तस्योक्तो बन्धुः - ६.६.४.[१५]
इति षष्ठोऽध्यायः समाप्तः ।।

##६.७.१
रुक्मं प्रतिमुच्य बिभर्ति । सत्यं हैतद्यद्रुक्मः सत्यं वा एतं यन्तुमर्हति सत्येनैतं देवा अबिभरुः सत्येनैवैनमेतद्बिभर्ति - ६.७.१.[१]

तद्यत्तत्सत्यम् । असौ स आदित्यः स हिरण्मयो भवति ज्योतिर्वै हिरण्यं ज्योतिरेषो ऽमृतं हिरण्यममृतमेष परिमण्डलो भवति परिमण्डलो ह्येष एकविंशतिनिर्बाध एकविंशो ह्येष बहिष्टान्निर्बाधं बिभर्ति रश्मयो वा एतस्य निर्बाधा बाह्यत उ वा एतस्य रश्मयः - ६.७.१.[२]



यद्वेव रुक्मं प्रतिमुच्य बिभर्ति । असौ वा आदित्य एष रुक्मो नो हैतमग्निम्मनुष्यो मनुष्यरूपेण यन्तुमर्हत्येतेनैव रूपेणैतद्रूपं बिभर्ति - ६.७.१.[३]

यद्वेव रुक्मं प्रतिमुच्य बिभर्ति । रेतो वा इदं सिक्तमयमग्निस्तेजो वीर्यं रुक्मोऽस्मिंस्तद्रेतसि तेजो वीर्यं दधाति - ६.७.१.[४]

यदेव रुक्मं प्रतिमुच्य बिभर्ति । एतद्वै देवा अबिभयुर्यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति तस्मा एतमन्तिकाद्गोप्तारमकुर्वन्नमुमेवादित्यमसौ वा आदित्य एष रुक्मस्तथैवास्मा अयमेतमन्तिकाद्गोप्तारं करोति - ६.७.१.[५]

कृष्णाजिने निष्यूतो भवति । यज्ञो वै कृष्णाजिनं यज्ञो वा एतं यन्तुमर्हति यज्ञेनैतं देवा अबिभरुर्यज्ञेनैवैतमेतद्बिभर्ति लोमतश्छन्दांसि वै लोमानि छन्दांसि वा एतं यन्तुमर्हन्ति च्छन्दोभिरेतं देवा अबिभरुश्छन्दोभिरेवैनमेतद्बिभर्ति - ६.७.१.[६]

अभि शुक्लानि च कृष्णानि च लोमानि निष्यूतो भवति । ऋक्सामयोर्हैते रूपे ऋक्सामे वाऽएतं यन्तुमर्हत ऋक्सामाभ्यामेतं देवा अबिभरुर्ऋक्सामाभ्यामेवैनमेतद्बिभर्ति शाणो रुक्मपाशस्त्रिवृत्तस्योक्तो बन्धुः - ६.७.१.[७]

तमुपरिनाभि बिभर्ति । असौ वा आदित्य एष रुक्म उपरिनाभ्यु वा ऽएषः - ६.७.१.[८]

यद्वेवोपरिनाभि । अवाग्वै नाभे रेतः प्रजापतिस्तेजो वीर्यं रुक्मो नेन्मे रेतः प्रजातिं तेजो वीर्यं रुक्मः प्रदहादिति - ६.७.१.[९]



यद्वेवोपरिनाभि । एतद्वै पशोर्मेध्यतरं यदुपरिनाभि पुरीषसंहिततरं यदवाङ्नाभेस्तद्यदेव पशोर्मेध्यतरं तेनैनमेतद्बिभर्ति - ६.७.१.[१०]

यद्वेवोपरिनाभि । यद्वै प्राणस्यामृतमूर्ध्वं तन्नाभेरूर्ध्वैः प्राणैरुच्चरत्यथ यन्मर्त्यं पराक्तन्नाभिमत्येति तद्यदेव प्राणस्यामृतं तदेनमेतदभिसम्पादयति तेनैनमेतद्बिभर्ति - ६.७.१.[११]

अथैनमासन्द्या बिभर्ति । इयं वा आसन्द्यस्यां हीदं सर्वमासन्नमियं वा एतं यन्तुमर्हत्यनयैतं देवा अबिभरुरनयैवैनमेतद्बिभर्ति - ६.७.१.[१२]

औदुम्बरी भवति । ऊर्ग्वै रस उदुम्बर ऊर्जैवैनमेतद्रसेन बिभर्त्यथो सर्व एते वनस्पतयो यदुदुम्बरः सर्वे वा एतं वनस्पतयो यन्तुमर्हन्ति सर्वैरेतं वनस्पतिभिर्देवा अबिभरुः सर्वैरेवैनमेतद्वनस्पतिभिर्बिभर्ति - ६.७.१.[१३]

प्रादेशमात्र्यूर्ध्वा भवति । प्रादेशमात्रो वै गर्भो विष्णुर्योनिरेषा गर्भसम्मितां तद्योनिं करोत्यरत्निमात्री तिरश्ची बाहुर्वा अरत्निर्बाहुनो वै वीर्यं क्रियते वीर्यसम्मितैव तद्भवति वीर्यं वा एतं यन्तुमर्हति वीर्येणैतं देवा अबिभरुर्वीर्येणैवैनमेतद्बिभर्ति - ६.७.१.[१४]

चतुःस्रक्तयः पादा भवन्ति । चतुःस्रक्तीन्यनूच्यानि चतस्रो वै दिशो दिशो वा एतं यन्तुमर्हन्ति दिग्भिरेतं देवा अबिभरुर्दिग्भिरेवैनमेतद्बिभर्ति मौञ्जीभी रज्जुभिर्व्युता भवति त्रिवृद्भिस्तस्योक्तो बन्धुर्मृदा दिग्धा तस्यो एवोक्तोऽथो ऽअनतिदाहाय - ६.७.१.[१५]

अथैनं शिक्येन बिभर्ति । इमे वै लोका एषोऽग्निर्दिशः शिक्यं दिग्भिर्हीमे लोकाः शक्नुवन्ति स्थातुं यच्छक्नुवन्ति तस्माच्छिक्यं दिग्भिरेवैनमेतद्बिभर्ति षडुद्यामं भवति षड्ढि दिशो मौञ्जं त्रिवृत्तस्योक्तो बन्धुर्मृदा दिग्धं तस्यो एवोक्तोऽथो ऽअनतिदाहाय - ६.७.१.[१६]

तस्याप ऽएव प्रतिष्ठा । अप्सु हीमे लोकाः प्रतिष्ठिता आदित्य आसञ्जनमादित्ये हीमे लोका दिग्भिरासक्ताः स यो हैतदेवं वेदैतेनैव रूपेणैतद्रूपं बिभर्ति - ६.७.१.[१७]



यद्वेवैनं शिक्येन बिभर्ति । संवत्सर एषोऽग्निर्ऋतवः शिक्यमृतुभिर्हि संवत्सरः शक्नोति स्थातुं यच्छक्नोति तस्माच्छिक्यमृतुभिरेवैनमेतद्बिभर्ति षडुद्यामं भवति षड्ढ्यृतवः - ६.७.१.[१८]

तस्याहोरात्रे एव प्रतिष्ठा । अहोरात्रयोर्ह्ययं संवत्सरः प्रतिष्ठितश्चन्द्रमा आसञ्जनं चन्द्रमसि ह्ययं संवत्सर ऋतुभिरासक्तः स यो हैतदेवं वेदैतेनैवरूपेणैतद्रूपं बिभर्ति तस्य ह वा एष संवत्सरभृतो भवति य एवं वेद संवत्सरोपासितो हैव तस्य भवति य एवं न वेदेत्यधिदेवतम् - ६.७.१.[१९]

अथाध्यात्मम् । आत्मैवाग्निः प्राणाः शिक्यं प्राणैर्ह्ययमात्मा शक्नोति स्थातुं यच्छक्नोति तस्माच्छिक्यं प्राणैरेवैनमेतद्बिभर्ति षडुद्यामं भवति षड्ढि प्राणाः - ६.७.१.[२०]

तस्य मन एव प्रतिष्ठा । मनसि ह्ययमात्मा प्रतिष्ठितोऽन्नमासञ्जनमन्ने ह्ययमात्मा प्राणैरासक्तः स यो हैतदेवं वेदैतेनैव रूपेणैतद्रूपं बिभर्ति - ६.७.१.[२१]

अथैनमुखया बिभर्ति । इमे वै लोका उखेमे वा ऽएतं लोका यन्तुमर्हन्त्येभिरेतं लोकैर्देवा अबिभरुरेभिरेवैनमेतल्लोकैर्बिभर्ति - ६.७.१.[२२]

सा यदुखा नाम । एतद्वै देवा एतेन कर्मणैतयावृतेमांल्लोकानुदखनन्यदुदखनंस्तस्मादुत्खोत्खा ह वै तामुखेत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवाः - ६.७.१.[२३]

तद्वा उखेति द्वे अक्षरे । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्बिभर्ति सो एव कुम्भी सा स्थाली तत्षट् षड्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति - ६.७.१.[२४]



अथैनमिण्ड्वा परिगृह्णाति । असौ वा आदित्य एषोऽग्निरहोरात्रे इण्ड्वे अमुं तदादित्यमहोरात्राभ्यां परिगृह्णाति तस्मादेषोऽहोरात्राभ्यां परिगृहीतः - ६.७.१.[२५]

यद्वेवैननमिण्ड्वाभ्यां परिगृह्णाति । असौ वा आदित्य एषोऽग्निरिमा उ लोकाविण्ड्वे अमुं तदादित्यमाभ्यां लोकाभ्यां परिगृह्णाति तस्मादेष आभ्यां लोकाभ्याम्परिगृहीतः परिमण्डले भवतः परिमण्डलौ हीमौ लोकौ मौञ्जे त्रिवृती तस्योक्तो बन्धुर्मृदा दिग्धे तस्यो ऽएवोक्तोऽथो अनतिदाहाय - ६.७.१.[२६]

अथातः सम्पदेव । आसन्दी चोखा च शिक्यं च रुक्मपाशश्चाग्निश्च रुक्मश्च तत्षट् षड्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवतीण्ड्वे तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति - ६.७.१.[२७]

अथ सर्वसम्पत् । चत्वारः पादाश्चत्वार्यनूच्यानि शिक्यं च रुक्मपाशश्च यदु किंच रज्जव्यं शिक्यं तदनूखाग्नी रुक्मस्तत्त्रयोदश त्रयोदश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति - ६.७.१.[२८]

##६.७.२
तं तिष्ठन्प्रतिमुञ्चते । असौ वा आदित्य एष रुक्मस्तिष्ठतीव वा असावादित्योऽथो तिष्ठन्वै वीर्यवत्तर उदङ्ङाङ्गिष्ठंस्तस्योक्तो बन्धुः - ६.७.२.[१]

दृशानो रुक्म उर्व्या व्यद्यौदिति । दृश्यमानो ह्येष रुक्म उर्व्या विद्योतते दुर्मर्षमायुः श्रिये रुचान इति दुर्मरं वा एतस्यायुः श्रियो एष रोचतेऽग्निरमृतो अभवद्वयोभिरिति सर्वैर्वा एष वयोभिरमृतोऽभवद्यदेनं द्यौरजनयदिति द्यौर्वा एतमजनयत्सुरेता इति सुरेता ह्येषा यस्या एष रेतः - ६.७.२.[२]



अथैनमिण्ड्वाभ्यां परिगृह्णाति । नक्तोषासा समनसा विरूपे इत्यहोरात्रे वै नक्तोषासा समनसा विरूपे धापयेते शिशुमेकं समीची इति यद्वै किञ्चाहोरात्रयोस्तेनैतमेव समीची धापयेते द्यावाक्षामा रुक्मो अन्तर्विभातीति हरन्नेतद्यजुर्जपतीमे वै द्यावापृथिवी द्यावाक्षामा ते एष यन्नन्तरा विभाति तस्मादेतद्धरन्यजुर्जपति देवा अग्निं धारयन्द्रविणोदा इति परिगृह्य निदधाति प्राणा वै देवा द्रविणोदास्त एतमग्र एवमधारयंस्तैरेवैनमेतद्धारयति - ६.७.२.[३]

अथ शिक्यपाशं प्रतिमुञ्चते । विश्वा रूपाणि प्रतिमुञ्चते कविरित्यसौ वा आदित्यः कविर्विश्वा रूपा शिक्यं प्रासावीद्भद्रं द्विपदे चतुष्पद इत्युद्यन्वा एष द्विपदे चतुष्पदे च भद्रं प्रसौति वि नाकमख्यत्सविता वरेण्य इति स्वर्गो वै लोको नाकस्तमेष उद्यन्नेवानुविपश्यत्यनु प्रयाणमुषसो विराजतीत्युषा वा अग्रे व्युच्छति तस्या एष व्युष्टिं विराजन्ननूदेति - ६.७.२.[४]

अथैनमतो विकृत्या विकरोति । इदमेवैतद्रेतः सिक्तं विकरोति तस्माद्यौनौ रेतः सिक्तं विक्रियते - ६.७.२.[५]

सुपर्णोऽसि गरुत्मानिति । वीर्यं वै सुपर्णो गरुत्मान्वीर्यमेवैनमेतदभिसंस्करोति त्रिवृत्ते शिर इति त्रिवृतमस्य स्तोमं शिरः करोति गायत्रं चक्षुरिति गायत्रं चक्षुः करोति बृहद्रथन्तरे पक्षाविति बृहद्रथन्तरे पक्षौ करोति स्तोम आत्मेति स्तोममात्मानं करोति पञ्चविंशं छन्दांस्यङ्गानीति छन्दांसि वा एतस्याङ्गानि यजूंषि नामेति यदेनमग्निरित्याचक्षते तदस्य यजूंषि नाम साम ते तनूर्वामदेव्यमित्यात्मा वै तनूरात्मा ते तनूर्वामदेव्यमित्येतद्यज्ञायज्ञियं पुच्छमिति यज्ञायज्ञियं पुच्छं करोति धिष्ण्याः शफा इति धिष्ण्यैर्वा एषोऽस्मिंलोके प्रतिष्ठितः सुपर्णोऽसि गरुत्मान्दिवं
गच्छ स्वः पतेति तदेनं सुपर्णं गरुत्मन्तं कृत्वाह देवान्गच्छ स्वर्गं लोकं पतेति - ६.७.२.[६]

तं वा एतम् । अत्र पक्षपुच्छवन्तं विकरोति यादृग्वै योनौ रेतो विक्रियते तादृग्जायते तद्यदेतमत्र पक्षपुच्छवन्तं विकरोति तस्मादेषोऽमुत्र पक्षपुच्छवाञ्जायते - ६.७.२.[७]



तं हैके । एतया विकृत्याऽभिमन्त्र्यान्यां चितिं चिन्वन्ति द्रोणचितं वा रथचक्रचितं वा कङ्कचितं वा प्रउगचितं वोभयतः प्रउगं वा समुह्य पुरीषं वा न तथा कुर्याद्यथा पक्षपुच्छवन्तं गर्भं परिवृश्चेत्तादृक्तत्तस्मादेनं सुपर्णचितमेव चिनुयात् - ६.७.२.[८]

तमेतया विकृत्या । इत ऊर्ध्वं प्राञ्चं प्रगृह्णात्यसौ वा आदित्य एषोऽग्निरमुं तदादित्यमित ऊर्ध्वं प्राञ्चं दधाति तस्मादसावादित्य इत ऊर्ध्वः प्राङ्धीयते परोबाहु प्रगृह्णाति परोबाहु ह्येष इतोऽथैनमुपावहरति तमुपावहृत्योपरिनाभि धारयति तस्योक्तो बन्धुः - ६.७.२.[९]

अथ विष्णुक्रमान्क्रमते । एतद्वै देवा विष्णुर्भूत्वेमांल्लोकानक्रमन्त यद्विष्णुर्भूत्वाऽक्रमन्त तस्माद्विष्णुक्रमास्तथैवैतद्यजमानो विष्णुर्भूत्वेमांल्लोकान्क्रमते - ६.७.२.[१०]

स यः स विष्णुर्यज्ञः सः । स यः स यज्ञोऽयमेव स योऽयमग्निरुखायामेतमेव तद्देवा आत्मानं कृत्वेमांल्लोकानक्रमन्त तथैवैतद्यजमान एतमेवात्मानं कृत्वेमांल्लोकान्क्रमते - ६.७.२.[११]

उदङ्ङाङ्क्षिष्ठन् । एतद्वै तत्प्रजापतिर्विष्णुक्रमैरुदङ्ङाङ्क्षिष्ठन्प्रजा असृजत तथैवैतद्यजमानो विष्णुक्रमैरुदङ्क्षिष्ठन्प्रजाः सृजते - ६.७.२.[१२]

विष्णोः क्रमोऽसीति । विष्णुर्हि भूत्वा क्रमते सपत्नहेति सपत्नान्हात्र हन्ति गायत्रं च्छन्द आरोहेति गायत्रं च्छन्द आरोहति पृथिवीमनु विक्रमस्वेति पृथिवीमनु विक्रमते प्रहरति पादं क्रमत ऊर्द्धमग्निमुद्गृह्णात्यूर्ध्वो हि रोहति - ६.७.२.[१३]

विष्णोः क्रमोऽसीति विष्णुर्हि भूत्वा क्रमतेऽभिमातिहेत्यभिमातीर्हात्र हन्ति त्रैष्टुभं छन्द आरोहेति त्रैष्टुभं छन्द आरोहत्यन्तरिक्षमनु विक्रमस्वेत्यन्तरिक्षमनु विक्रमत प्रहरति पादं क्रमत ऽऊर्द्धमग्निमुद्गृह्णात्यूर्ध्वो हि रोहति - ६.७.२.[१४]

विष्णोः क्रमोऽसीति । विष्णुर्हि भूत्वा क्रमतेऽरातीयतो हन्तेत्यरातीयतो हात्र हन्ति जागतं छन्द आरोहेति जागतं छन्द आरोहति दिवमनु विक्रमस्वेति दिवमनुविक्रमते प्रहरति पादं क्रमत ऊर्ध्वमग्निमुद्गृह्णात्यूर्ध्वो हि रोहति - ६.७.२.[१५]



विष्णोः क्रमोऽसीति । विष्णुर्हि भूत्वा क्रमते शत्रूयतो हन्तेति शत्रूयतो हात्र हन्त्यानुष्टुभं छन्द आरोहेत्यानुष्टुभं छन्द आरोहति दिशोऽनु विक्रमस्वेति सर्वा दिशोऽनु वीक्षते न प्रहरति पादं नेदिमांल्लोकानतिप्रणश्यानीत्यूर्ध्वमेवाग्निमुद्गृह्णाति सं ह्यारोहति - ६.७.२.[१६]

##६.७.३
अथैनमिति प्रगृह्णाति । एतद्वै देवा अकामयन्त पर्जन्यो रूपं स्यामेति त एतेनात्मना पर्जन्यो रूपमभवंस्तथैवैतद्यजमान एतेनात्मना पर्जन्यो रूपं भवति - ६.७.३.[१]

अक्रन्ददग्नि स्तनयन्निव द्यौरिति । क्रन्दतीव हि पर्जन्य स्तनयन्क्षामा रेरिहद्वीरुधः समञ्जन्निति क्षामा वै पर्जन्यो रेरिह्यमाणो वीरुधः समनक्ति सद्यो जज्ञानो वि हीमिद्धो

अख्यदिति सद्यो वा एष जज्ञान इदं सर्वं विख्यापयत्या रोदसी भानुना भात्यन्तरितीमे वै द्यावापृथिवी रोदसी ते एष भानुना भाति परोबाहु प्रगृह्णाति परोबाहु हि पर्जन्यः - ६.७.३.[२]

अथैनमुपावहरति । एतद्वै योऽस्मिंलोके रसो यदुपजीवनं तेनैतत्सहोर्ध्व इमांल्लोकान्रोहत्यग्निर्वा अस्मिंलोके रसोऽग्निरुपजीवनं तद्यत्तावदेव स्यान्न हास्मिंलोके रसो नोपजीवनं स्यादथ यत्प्रत्यवरोहत्यस्मिन्नेवैतल्लोके रसमुपजीवनं दधाति - ६.७.३.[३]

यद्वेव प्रत्यवरोहति । एतद्वा एतदिमांल्लोकानित ऊर्ध्वो रोहति स स पराङिव रोहऽ इयमु वै प्रतिष्ठा तद्यत्तावदेव स्यात्प्र हास्माल्लोकाद्यजमानश्च्यवेताथ यत्प्रत्यवरोहतीमामेवैतत्प्रतिष्ठामभिप्रत्यैत्यस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति - ६.७.३.[४]

यदेवं प्रत्यवरोहति । एतद्वा एतदिमांल्लोकानित ऊर्द्धो जयति स स पराङिव जयो यो वै पराङेव जयत्यन्ये वै तस्य जितमन्ववस्यन्त्यथ य उभयथा जयति तस्य तत्र कामचरणं भवति तद्यत्प्रत्यवरोहतीमानेवैतल्लोकानितश्चोर्ध्वानमुतश्चार्वाचो जयति - ६.७.३.[५]

अग्नेऽभ्यावर्तिन् । अभि मा निवर्तस्वाग्ने अङ्गिरः पुनरूर्जा सह रय्येत्येतेन मा सर्वेणाभिनिवर्तस्वेत्येतच्चतुष्कृत्वः प्रत्यवरोहति चतुर्हि कृत्व ऊर्ध्वो रोहति तद्यावत्कृत्व ऊर्ध्वो रोहति तावत्कृत्वः प्रत्यवरोहति तमुपावहृत्योपरिनाभि धारयति तस्योक्तो बन्धुः - ६.७.३.[६]

अथैनमभिमन्त्रयते । आयुर्वा अग्निरायुरेवैतदात्मन्धत्त आ त्वाहार्षमित्या ह्येनं हरन्त्यन्तरभूरित्यायुरेवैतदात्मन्धत्ते ध्रुवस्तिष्ठाविचाचलिरित्यायुरेवैतद्ध्रुवमन्तरात्मन्धत्ते विशस्त्वा सर्वा वाञ्छन्त्वित्यन्नं वै विशोऽन्नं त्वा सर्वं वाञ्छत्वित्येतन्मा त्वद्राष्ट्रमधिभ्रशदिति श्रीर्वै राष्ट्रं मा त्वच्छ्रीरधिभ्रशदित्येतत् - ६.७.३.[७]

अथ शिक्यपाशं च रुक्मपाशं चोन्मुञ्चते । वारुणो वै पाशो वरुणपाशादेव तत्प्रमुच्यते वारुण्यऽर्चा स्वेनैव तदात्मना स्वया देवतया वरुणपाशात्प्रमुच्यत उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथायेति यथैव यजुस्तथा बन्धुरथा वयमादित्य व्रते तवानागसो अदितये स्यामेतीयं वा अदितिरनागसस्तुभ्यं चास्यै स्यामेत्येतत् - ६.७.३.[८]

अथैनमिति प्रगृह्णाति । एतद्वा एनमदो विकृत्येत ऊर्ध्वं प्राञ्चं प्रगृह्णाति तं तत इति प्रगृह्णाति तद्यत्तावदेवाभविष्यदत्र हैवैष व्यरंस्यताथ यदेनमिति प्रगृह्णाति तस्मादेष इतीत्वाऽथेति पुनरैति - ६.७.३.[९]

अग्रे बृहन्नुषसामूर्ध्वो अस्थादिति । अग्रे ह्येष बृहन्नुषसामूर्ध्वस्तिष्ठति निर्जगन्वान्तमसो ज्योतिषागादिति निर्जगन्वान्वा एष रात्र्यै तमसोऽह्ना ज्योतिषैत्यग्निर्भानुना रुशता स्वङ्ग इत्यग्निर्वा एष भानुना रुशता स्वङ्ग आ जातो
विश्वा सद्मान्यप्रा इतीमे वै लोका विश्वा सद्मानि तानेष जातऽ आपूरयति परोबाहु
प्रगृह्णाति परोबाहु ह्येष
इतोऽथैनमुपावहरतीमामेवैतत्प्रतिष्ठामभिप्रत्यैत्यस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति जगत्या जगती हेमांल्लोकानमुतोऽर्वाचो व्यश्नुते - ६.७.३.[१०]



हंसः शुचिषदिति । असौ वा आदित्यो हंसः शुचिषद्वसुरन्तरिक्षसदिति वायुर्वै वसुरन्तरिक्षसद्धोता वेदिषदित्यग्निर्वै होता वेदिषदतिथिरिति सर्वेषां वा एष भूतानामतिथिर्दुरोणसदिति विषमसदित्येतन्नृषदिति प्राणो वै नृषन्मनुष्यानरस्तद्योऽयं मनुष्येषु प्राणोऽग्निस्तमेतदाह वरसदिति सर्वेषु ह्येष वरेषु सन्न ऋतसदिति सत्यसदित्येतद्व्योमसदिति सर्वेषु ह्येष व्योमसु सन्नोऽब्जा गोजा इत्यब्जाश्च ह्येष गोजाश्चऽर्तजा इति सत्यजा इत्येतदद्रिजा इत्यद्रिजा ह्येष ऋतमितिसत्यमित्येतद्बृहदिति निदधाति बृहद्ध्येष तद्यदेष तदेनमेतत्कृत्वा निदधाति - ६.७.३.[११]

द्वाभ्यामक्षराभ्याम् । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतन्निदधाति - ६.७.३.[१२]

अथैनमुपतिष्ठते । एतद्वा एनमेतल्लघूयतीव यदेनेन सहेति चेति चेमांल्लोकान्क्रमते तस्मा एवैतन्निह्नुतेऽहिंसायै - ६.७.३.[१३]

यद्वेवोपतिष्ठते । एतद्वै देवा अबिभयुर्यद्वै नोऽयमिमांल्लोकानन्तिकान्न हिंस्यादिति तदेभ्य एवैनमेतल्लोकेभ्योऽशमयंस्तथैवैनमयमेतदेभ्यो लोकेभ्यः शमयति - ६.७.३.[१४]

सीद त्वं मातुः । अस्या उपस्थेऽन्तरग्ने रुचा त्वं शिवो भूत्वा मह्यमग्ने अथो सीद शिवस्त्वमिति शिवः शिव इति शमयत्येवैनमेतदहिंसायै तथो हैष इमांल्लोकाञ्छान्तो न हिनस्ति - ६.७.३.[१५]

त्रिभिरुपतिष्ठते । त्रय इमे लोका अथो त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मा एतन्निह्नुतेऽथो तावतैवैनमेतदेभ्यो लोकेभ्यः शमयति - ६.७.३.[१६]



##६.७.४
अथ वात्सप्रेणोपतिष्ठते । एतद्वै प्रजापतिर्विष्णुक्रमैः प्रजाः सृष्ट्वा ताभ्यो वात्सप्रेणायुष्यमकरोत्तथैवैतद्यजमानो विष्णुक्रमैः प्रजाः सृष्ट्वा ताभ्यो वात्सप्रेणायुष्यं करोति - ६.७.४.[१]

स हैष दाक्षायणहस्तः । यद्वात्सप्रं तस्माद्यं जातं कामयेत सर्वमायुरियादिति वात्सप्रेणैनमभिमृशेत्तदस्मै जातायायुष्यं करोति तथो ह स सर्वमायुरेत्यथ यं कामयेत वीर्यवान्त्स्यादिति विकृत्यैनं पुरस्तादभिमन्त्रयेत तथो ह स वीर्यवान्भवति - ६.७.४.[२]

दिवस्परि प्रथमं जज्ञे अग्निरिति । प्राणो वै दिवः प्राणादु वा एष प्रथममजायतास्मद्द्वितीयं परि जातवेदा इति यदेनमदो द्वितीयं पुरुषविधोऽजनयत्तृतीयमप्स्विति यदेनमदस्तृतीयमद्भ्योऽजनयन्नृमणा अजस्रमिति प्रजापतिर्वै नृमणा अग्निरजस्रऽ इन्धान एनं जरते स्वाधीरिति यो वा एनमिन्द्धे स एनं जनयते स्वाधीः - ६.७.४.[३]

विद्म ते अग्ने त्रेधा त्रयाणीति । अग्निर्वायुरादित्य एतानि हास्य तानि त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रेति यदिदं बहुधा विह्नियते विद्मा ते नाम परमं गुहा यदिति यविष्ठ इति वा अस्य तन्नाम परमं गुहा विद्मा तमुत्सं यत आजगन्थेत्यापो वा उत्सोऽद्भ्यो वा एष प्रथममाजगाम - ६.७.४.[४]

समुद्रे त्वा नृमणाऽअप्स्वन्तरिति प्रजापतिर्वै नृमणा अप्सु त्वा प्रजापतिरित्येतन्नृचक्षा ईधे दिवो अग्नऊधन्निति प्रजापतिर्वै नृचक्षा आपो दिव ऊधस्तृतीये त्वा रजसि तस्थिवांसमिति द्यौर्वै तृतीयं रजोऽपामुपस्थे महिषा अवर्द्धन्निति प्राणा वै महिषा दिवि त्वा प्राणा अवर्द्धन्नित्येतत् - ६.७.४.[५]

ता एता एकव्याख्यानाः । एतमेवाभि ता आग्नेय्यस्त्रिष्टुभस्ता यदाग्नेय्यस्तेनाग्निरथ यत्त्रिष्टुभो यदेकादश तेनेन्द्र ऐन्द्राग्नोऽग्निर्यावत्यस्य मात्रा तावतैवैनमेतदुपतिष्ठत इन्द्राग्नी वै सर्वे देवाः सर्वदेवत्योऽग्निर्यावत्यस्य मात्रा तावतैवैनमेतदुपतिष्ठते - ६.७.४.[६]



यद्वेव विष्णुक्रमवात्सप्रे भवतः । विष्णुक्रमैर्वै प्रजापतिरिमं लोकमसृजत वात्सप्रेणाग्निं विष्णुक्रमैर्वै प्रजापतिरन्तरिक्षमसृजत वात्सप्रेण वायं विष्णुक्रमैर्वै प्रजापतिर्दिवमसृजत वात्सप्रेणादित्यं विष्णुक्रमैर्वै प्रजापतिर्दिशोऽसृजत वात्सप्रेण चन्द्रमसं विष्णुक्रमैर्वै प्रजापतिर्भूतमसृजत वात्सप्रेण भविष्यद्विष्णुक्रमैर्वै प्रजापतिर्वित्तमसृजत वात्सप्रेणाशां विष्णुक्रमैर्वै प्रजापतिरहरसृजत वात्सप्रेण रात्रिं विष्णुक्रमैर्वै प्रजापतिः पूर्वपक्षानसृजत वात्सप्रेणापरपक्षान्विष्णुक्रमैर्वै प्रजापतिरर्द्धमासानसृजत वात्सप्रेण मासान्विष्णुक्रमैर्वै प्रजापतिर्ऋतूनसृजत वात्सप्रेण संवत्सरं तद्यद्विष्णुक्रमवात्सप्रे भवत एतदेव तेन सर्वं सृजते - ६.७.४.[७]

यद्वेव विष्णुक्रमवात्सप्रे भवतः । विष्णुक्रमैर्वै प्रजापतिः स्वर्गंलोकमभिप्रायात्स एतदवसानमपश्यद्वात्सप्रं तेनावास्यदप्रदाहाय यद्धि युक्तं न विमुच्यते प्र तद्दह्यते तथैवैतद्यजमानो विष्णुक्रमैरेव स्वर्गंलोकमभिप्रयाति वात्सप्रेणावस्यति - ६.७.४.[८]

स वै विष्णुक्रमान्क्रान्त्वा । अथ तदानीमेव वात्सप्रेणोपतिष्ठते यथा प्रयायाथतदानीमेव विमुञ्चेत्ताद्दक्तद्देवानां वै विधामनु मनुष्यास्तस्मादु हेदमुत मानुषो ग्रामः प्रयायाथ तदानीमेवावस्यति - ६.७.४.[९]

तद्वा अहोरात्रे एव विष्णुक्रमा भवन्ति । अहोरात्रे वात्सप्रमहोरात्रे एव तद्यात्यहोरात्रे क्षेम्यो भवति तस्मादु हेदमुत मानुषो ग्रामोऽहोरात्रे यात्वाऽहोरात्रे क्षेम्यो भवति - ६.७.४.[१०]

स वा अर्द्धमेव संवत्सरस्य विष्णुक्रमान्क्रमते । अर्द्धं वात्सप्रेणोपतिष्ठते मध्ये ह संवत्सरस्य स्वर्गो लोकः स यत्कनीयोऽर्द्धात्क्रमेत न हैतं स्वर्गंलोकमभिप्राप्नुयादथ यद्भूयोऽर्द्धात्पराङ्हैतं स्वर्गंलोकमतिप्रणश्येदथ यदर्द्धं क्रमतेऽर्द्धमुपतिष्ठते तत्सम्प्रति स्वर्गंलोकमाप्त्वा विमुञ्चते - ६.७.४.[११]



ताभ्यां वै विपर्यासमेति । यथा महान्तमध्वानं विमोकं समश्नुवीत ताद्दक्तत्स वै पुरस्ताच्चोपरिष्टाच्चोभे विष्णुक्रमवात्सप्रे समस्यत्यहर्वै विष्णुक्रमा रात्रिर्वात्सप्रमेमेतद्वा इदं सर्वं प्रजापतिः प्रजनयिष्यंश्च प्रजनयित्वा चाहोरात्राभ्यामुभयतः परिगृह्णाति - ६.७.४.[१२]

तदाहुः । यदहर्विष्णुक्रमा रात्रिर्वात्सप्रमथोभे एवाहन्भवतो न रात्र्यां कथमस्यापि रात्र्यां कृते भवत इत्येतद्वा एने अदो दीक्षमाणः पुरस्तादपराह्ण उभे समस्यति रात्रिर्हैतद्यदपराह्णोऽथैने एतत्संनिवप्स्यन्नुपरिष्टात्पूर्वाह्ण उभे समस्यत्यहर्हैतद्यत्पूर्वाह्ण एवमु हास्योभे एवाहन्कृते भवत उभे रात्र्याम् - ६.७.४.[१३]

स यदहः संनिवप्स्यन्त्स्यात् तदहः प्रातरुदित आदित्ये भस्मैव प्रथममुद्वपति भस्मोदुप्य वाचं विसृजते वाचं विसृज्य समिधमादधाति समिधमाधाय भस्मापोऽभ्यवहरति यथैव

तस्याभ्यवहरणं तथाऽपादाय भस्मनः प्रत्येत्योखायामोप्योपतिष्ठतेऽथ प्रायश्चित्ती करोति - ६.७.४.[१४]

स यदि विष्णुक्रमीयमहः स्यात् । विष्णुक्रमान्क्रान्त्वा वात्सप्रेणोपतिष्ठेताथ यदि वात्सप्रीयं वात्सप्रेणोपस्थाय विष्णुक्रमान्क्रान्त्वा वात्सप्रमन्ततः कुर्यान्न विष्णुक्रमानन्ततः कुर्याद्यथा प्रयाय न विमुञ्चेत्तादृक्तदथ यद्वात्सप्रमन्ततः करोति प्रतिष्ठा वै वात्सप्रं यथा प्रतिष्ठापयेदवसाययेत्तादृक्तत्तस्मादु वात्सप्रमेवान्ततः कुर्यात् - ६.७.४.[१५]

इति सप्तमोऽध्यायः समाप्तः ।।

##६.८.१

वनीवाह्येताग्निं बिभ्रदित्याहुः । देवाश्चासुराश्चोभये प्राजापत्या अस्पर्द्धन्त ते देवाश्चक्रमचरञ्छालमसुरा आसंस्ते देवाश्चक्रेण चरन्त एतत्कर्मापश्यंश्चक्रेण हि वै देवाश्चरन्त एतत्कर्मापश्यंस्तस्मादनस एव पौरोडाशेषु यजूंष्यनसोऽग्नौ - ६.८.१.[१]



स यो वनीवाह्यते । देवान्कर्मणैति दैवं हास्य कर्म कृतं भवत्यथ यो न वनीवाह्यतेऽसुरान्कर्मणैत्यसुर्यं हास्य कर्म कृतं भवति - ६.८.१.[२]

तद्धैक आहुः । स्वयं वा एष वनीवाहितो विष्णुक्रमैर्वा एष प्रयाति वात्सप्रेणावस्यतीति न तथा विद्यादैवं वा अस्य तत्प्रयाणं यद्विष्णुक्रमा दैवमवसानं यद्वात्सप्रमथास्येदं मानुषं प्रयाणं यदिदं प्रयाति मानुषमवसानं यदवस्यति - ६.८.१.[३]

प्रजापतिरेषोग्निः । उभयम्वेतत्प्रजापतिर्यच्च देवा यच्चमनुष्यास्तद्यद्विष्णुक्रमवात्सप्रे भवतो यद्देवास्य दैवं रूपं तदस्य तेन संस्करोत्यथ यद्वनीवाह्यते यदेवास्य मानुषं रूपं तदस्य तेन संस्करोति स ह वा एतं सर्वं कृत्स्नं प्रजापतिं संस्करोति य एवं विद्वान्वनीवाह्यते तस्मादु वनीवाह्येतैव - ६.८.१.[४]

स यदहः प्रयास्यन्त्स्यात् । तदहरुत्तरतोऽग्नेः प्रागन उपस्थाप्याथास्मिन्त्समिधमादधात्येतद्वा एनं देवा एष्यन्तं पुरस्तादन्नेनाप्रीणन्नेतया समिधा तथैवैनमयमेतदेष्यन्तं पुरस्तादन्नेन प्रीणात्येतया समिधा - ६.८.१.[५]

समिधाग्निं दुवस्यतेति । समिधाग्निं नमस्यतेत्येतद्धृतैर्बोधयतातिथिमाऽस्मिन्हव्या जुहोतनेति घृतैरह बोधयतातिथिमो ऽअस्मिन्हव्यानि जुहुतेत्येतद्बुद्धवत्येत्यायै ह्येनमेतद्बोधयति - ६.८.१.[६]

अथैनमुद्यच्छति । उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिरिति विश्वे वा एतमग्रे देवाश्चित्तिभिरुदभरन्नेतद्ध्येषां तदा चित्तमासीत्तथैवैनमयमेतच्चितिभिरुद्धरत्येतद्ध्यस्य तदा चित्तं भवति स नो भव शिवस्त्वं सुप्रतीको विभावसुरिति यथैव यजुस्तथा बन्धुस्तं दक्षिणत उदञ्चमादधाति तस्योक्तो बन्धुः स्थाल्यां गार्हपत्यं समुप्यापरमादधाति स यदि कामयेतोपाधिरोहेत्पार्श्वतो वा व्रजेत् - ६.८.१.[७]



अथानड्वाहौ युनक्ति । दक्षिणमग्रेऽथ सव्यमेवं देवत्रेतरथा मानुषे स यां कां च दिशं यास्यन्त्स्यात्प्राङेवाग्रे प्रयायात्प्राची हि दिगग्नेः स्वामेव तद्दिशमनु प्रयाति - ६.८.१.[८]

प्रेदग्ने ज्योतिष्मान्याहि । शिवेभिरर्चिभिष्ट्वामिति प्रेदग्ने त्वं ज्योतिष्मान्याहि शिवेभिरर्चिभिर्दीप्यमानैरित्येतद्बृहद्भिर्भानुभिर्भासन्मा हिंसीस्तन्वा प्रजा इति बृहद्भिरर्चिभिर्दीप्यमानैर्मा हिंसीरात्मना प्रजा इत्येतत् - ६.८.१.[९]

स यदाऽक्ष उत्सर्जेत् । अथैतद्यजुर्जपेदसुर्या वा एषा वाग्याऽक्षस्य तामेतच्छमयति तामेतद्देवत्रा करोति - ६.८.१.[१०]

यद्वेवैतद्यजुर्जपति । यस्मिन्वै कस्मिंश्चाहितेऽक्ष उत्सर्जति तस्यैव सा वाग्भवति तद्यदग्नावाहितेऽक्ष उत्सर्जत्यग्नेरेव सा वाग्भवत्यग्निमेव तद्देवा

उपास्तुवन्नुपामहयंस्तथैवैनमयमेतदुपस्तौत्युपमहयत्यक्रन्ददग्नि स्तनयन्निव द्यौरिति तस्योक्तो बन्धुः - ६.८.१.[११]

स यदि पुरा वसत्यै विमुञ्चेत । अनस्येवाग्निः स्यादथ यदा वसत्यै विमुञ्चेत प्रागनऽ उपस्थाप्योत्तरत उद्धत्यावोक्षति यत्रैनमुपावहरति तं दक्षिणत उदञ्चमुपावहरति तस्योक्तो बन्धुः - ६.८.१.[१२]

अथास्मिन्त्समिधमादधाति । एतद्वा एनं देवा ईयिवांसमुपरिष्टादन्नेनाप्रीणन्नेतया समिधा तथैवैनमयमेतदीयिवांसमुपरिष्टादन्नेन प्रीणात्येतया समिधा - ६.८.१.[१३]

प्र प्रायमग्निर्भरतस्य शृण्व इति । प्रजापतिर्वै भरतः स हीदं सर्वं बिभर्ति वि यत्सूर्यो न रोचते बृहद्भा इति वि यत्सूर्य इव रोचते बृहद्भा इत्येतदभि यः पूरुं पृतनासु तस्थाविति पूरुर्ह नामासुररक्षसमास तमग्निः पृतनास्वभितष्ठौ दीदाय दैव्यो अतिथिः शिवो न इति दीप्यमानो दैवोऽतिथिः शिवो न इत्येतत्स्थितवत्या वसत्यै ह्येनं तत्स्थापयति - ६.८.१.[१४]



अथातः सम्पदेव । समिधं प्रथमेनादधात्युद्यच्छत्येकेन प्रयात्येकेनाक्षमेकेनानुमन्त्रयते समिधमेव पञ्मेनादधाति तत्पञ्च पञ्चचितिकोऽग्निः पञ्चऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति - ६.८.१.[१५]

##६.८.२

अथातो भस्मन एवाभ्यवहरणस्य । देवा वा एतदग्रे भस्मोदवपंस्तेऽब्रुवन्यदि वा इदमित्थमेव सदात्मानमभिसंस्करिष्यामहे मर्त्याः कुणपा अनपहतपाप्मानो भविष्यामो यद्यु परावप्स्यामो यदत्राग्नेयं बहिर्द्धा तदग्नेः करिष्याम उप तज्जानीत यथेदं करवामेति तेऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत यथेदं करवामेति - ६.८.२.[१]

ते चेतयमानाः । एतदपश्यन्नप एवैनदभ्यवहरामापो वा अस्य सर्वस्य प्रतिष्ठा तद्यत्रास्य सर्वस्य प्रतिष्ठा तदेनत्प्रतिष्ठाप्य यदत्राग्नेयं तदद्भ्योऽधि जनयिष्याम इति तदपोऽभ्यवाहरंस्तथैवैनदयमेतदपोऽभ्यवहरति - ६.८.२.[२]

आपो देवीः । प्रतिगृभ्णीत भस्मैतत्स्योने कृणुध्वं सुरभा उ लोक इति जग्धं वा एतद्यातयाम भवति तदेतदाह स्वभिष्ठ एनल्लोके कुरुध्वमिति तस्मै नमन्तां जनय इत्यापो वै जनयोऽद्भ्यो हीदं सर्वं जायते सुपत्नीरित्यग्निना वा आपः सुपत्न्यो मातेव पुत्रं बिभृताप्स्वेनदिनि यथा माता पुत्रमुपस्थे बिभृयादेवमेनद्विभृतेत्येतत् - ६.८.२.[३]

अप्स्वग्ने सधिष्टवेति । अप्स्वग्ने योनिष्टवेत्येतत्सौषधीरनुरुध्यस इत्योषधीर्ह्येषोऽनुरुध्यते गर्भे सञ्जायसे पुनरिति गर्भो ह्येष सञ्जायते पुनर्गर्भो अस्योषधीनां गर्भो वनस्पतीनां गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसीति तदेनमस्य सर्वस्य गर्भं करोति - ६.८.२.[४]



त्रिभिरभ्यवहरति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनदेतदभ्यवहरत्येकेनाग्रेऽथ द्वाभ्यां द्वाभ्यां वाग्रेऽथैकेन द्विस्तु कृत्वोऽभ्यवहरति तद्ये द्विपादाः पशवस्तैरेवैनदेतदभ्यवहरति - ६.८.२.[५]

अथापादत्ते । तद्यदत्राग्नेयं तदेतदद्भ्योऽधि जनयत्यनयाऽनया वै भेषजं क्रियतेऽनयैवैनमेतत्सम्भरति प्रसद्य भस्मना योनिमपश्च पृथिवीमग्न इति प्रसन्नो ह्येष भस्मना योनिमपश्च पृथिवीं च भवति संसृज्य मातृभिष्ट्वं ज्योतिष्मान्पुनरासद इति संगत्य मातृभिष्ट्वं ज्योतिष्मान्पुनरासद इत्येतत्पुनरासद्य सदनं पुनरूर्जा सह रय्येत्येतेन मा सर्वेणाभिनिवर्तस्वेत्येतत् - ६.८.२.[६]

चतुर्भिरपादत्ते । तद्ये चतुष्पादाः पशवस्तैरेवैनमेतत्सम्भरत्यथो अन्नं वै पशवोऽन्नेनैवैनमेतत्सम्भरति त्रिभिरभ्यवहरति तत्सप्त सप्तचितिकोऽग्निः सप्तऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति - ६.८.२.[७]

अपादाय भस्मनः प्रत्येत्य । उखायामोप्योपतिष्ठत एतद्वा एतदयथायथं करोति यदग्निमपोऽभ्यवहरति तस्मा एवैतन्निह्नुतेऽहिंसाया आग्नेयीभ्यामग्नय एवैतन्निह्नुते बुद्धवतीभ्यां यथैवास्यैतदग्निर्वचो निबोधेत् - ६.८.२.[८]

बोधा मे अस्य वचसो यविष्ठेति । बोध मेऽस्य वचसो यविष्ठेत्येतन्मंहिष्ठस्य प्रभृतस्य स्वधाव इति भूयिष्ठस्य प्रभृतस्य स्वधाव इत्येतत्पीयति त्वो अनु त्वो गृणातीति पीयत्येकोऽन्वेको गृणाति वन्दारुष्टे तन्वं वन्दे अग्न इति वन्दिता तेऽहं तन्वं वन्देऽग्न इत्येतत्स बोधि सूरिर्मघवा वसुपते वसुदावन् युयोध्यस्मद्द्वेषांसीति यथैवास्माद्द्वेषांसि युयादेवमेतदाह द्वाभ्यामुपतिष्ठते गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः - ६.८.२.[९]

तानि नव भवन्ति । नव दिशो दिशोऽग्निर्नव प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति - ६.८.२.[१०]



अथ प्रायश्चित्ती करोति । सर्वेभ्यो वा एष एतं कामेभ्य आधत्ते तद्यदेवास्यात्र कामानां व्यवच्छिद्यतेऽग्नावपोऽभ्यवह्रियमाणे तदेवैतत्संतनोति संदधात्युभे प्रायश्चित्ती करोति ये एवाग्नावनुगते तस्योक्तो बन्धुः - ६.८.२.[११]

तानि दश भवन्ति । दशाक्षरा विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति - ६.८.२.[१२]

इति माध्यंदिनीये शतपथब्राह्मणे उखासंभरणं नाम षष्ठं काण्डं समाप्तम्।।

##७.१.१ गार्हपत्याग्निचयनम्

गार्हपत्यं चेष्यन्पलाशशाखया व्युदूहति । अवस्यति हैतद्यद्गार्हपत्यं चिनोति य उ वै के चाग्निचितोऽस्यामेव तेऽवसितास्तद्यद्व्युदूहत्यवसितानेव तद्व्युदूहति नेदवसितानध्यवस्यानीति - ७.१.१.[१]

अपेत वीत वि च सर्पतात इति । अप चैवैत वि चेत व्यु च सर्पतात इत्येतद्य उदरसर्पिणस्तानेतदाह येऽत्र स्थ पुराणा ये च नूतना इति येऽत्र स्थ सनातना ये चाधुनातना इत्येतत् - ७.१.१.[२]

अदाद्यमोऽवसानं पृथिव्या इति । यमो ह वा अस्या अवसानस्येष्टे स एवास्मा अस्यामवसानं ददाति - ७.१.१.[३]

अक्रन्निमं पितरो लोकमस्मा इति । क्षत्रं वै यमो विशः पितरो यस्मा उ वै क्षत्रियो विशा संविदानोऽस्यामवसानं ददाति तत्सुदत्तं तथो हास्मै क्षत्रं यमो विशा पितृभिः संविदानोऽस्यामवसानं ददाति - ७.१.१.[४]

पलाशशाखया व्युदूहति । ब्रह्म वै पलाशो ब्रह्मणैव तदवसितान्व्युदूहति मन्त्रेण ब्रह्म वै मन्त्रो ब्रह्मणैव तदवसितान्व्युदूहति तामुदीचीमुदस्यति - ७.१.१.[५]



अथोषान्निवपति । अयं वै लोको गार्हपत्यः पशव ऊषा अस्मिंस्तल्लोके पशून्दधाति तस्मादिमेऽस्मिंलोके पशवः - ७.१.१.[६]

यद्वेवोषान्निवपति । प्रजापतिः प्रजा असृजत ता नानोल्बा असृजत ता न समजानत सोऽकामयत संजानीरन्निति ताः समानोल्बा अकरोत्तासामूषानुल्बमकरोत्ताः समजानत तस्मादप्येतर्हि समानोल्बाः समेव जानते देवैः समानोल्बोऽसानीत्यु वै यजते यो यजते तद्यदूषान्निवपति देवैरेव तत्समानोल्बो भवति - ७.१.१.[७]

संज्ञानमसीति । समजानत ह्येतेन कामधरणमिति पशवो वा ऊषाः कामधरणम्मयि ते कामधरणं भूयादिति मयि ते पशवो भूयासुरित्येतत्तैः सर्वं गार्हपत्यं प्रच्छादयति योनिर्वै गार्हपत्या चितिरुल्बमूषाः सर्वां तद्योनिमुल्बेन प्रच्छादयति - ७.१.१.[८]

अथ सिकता निवपति । अग्नेरेतद्वैश्वानरस्य भस्म यत्सिकता अग्निमु वा एतं वैश्वानरं चेष्यन्भवति न वा अग्निः स्वं भस्मातिदहत्यनतिदाहाय - ७.१.१.[९]

यद्वेव सिकता निवपति । अग्नेरेतद्वैश्वानरस्य रेतो यत्सिकता अग्निमु वा एतं वैश्वानरं चेष्यन्भवति न वा अरेतस्कात्किं चन विक्रियतेऽस्माद्रेतसोऽधि विक्रियाता इति - ७.१.१.[१०]

अग्नेर्भस्मास्यग्नेः पुरीषमसीति । यातयाम वा अग्नेर्भस्मायातयाम्न्यः सिकता अयातयाममेवैनदेतत्करोति ताभिः सर्वं गार्हपत्यं प्रच्छादयति योनिर्वै गार्हपत्या चिती रेतः सिकताः सर्वस्यां तद्योनौ रेतो दधाति - ७.१.१.[११]

अथैनं परिश्रिद्भिः परिश्रयति । योनिर्वै परिश्रित इदमेवैतद्रेतः सिक्तं योन्या परिगृह्णाति तस्माद्योन्या रेतः सिक्तं परिगृह्यते - ७.१.१.[१२]



यद्वेवैनं परिश्रिद्भिः परिश्रयति । अयं वै लोको गार्हपत्य आपः परिश्रित इमं तं लोकमद्भिः परितनोति समुद्रेण हैनं तत्परितनोति सर्वतस्तस्मादिमं लोकं सर्वतः समुद्रः पर्येति दक्षिणावृत्तस्मादिमं लोकं दक्षिणावृत्समुद्रः पर्येति खातेन तस्मादिमं लोकं खातेन समुद्रः पर्येति - ७.१.१.[१३]

चित स्थेति । चिनोति ह्येनाः परिचित स्थेति परि ह्येनाश्चिनोत्यूर्ध्वचितः श्रयध्वमित्यूर्ध्वा उपदधदाह तस्मादूर्ध्व एव समुद्रो विजतेऽथ यत्तिरश्चीरुपदध्यात्सकृद्धैवेदं सर्वं समुद्रो निर्मृज्यान्न सादयत्यसन्ना ह्यापो न सूददोहसाधिवदति - ७.१.१.[१४]

अस्थीनि वै परिश्रितः । प्राणः सूददोहा न वा अस्थिषु प्राणोऽस्त्येकेन यजुषा बह्वीरिष्टका उपदधात्येकं ह्येतद्रूपं यदापोऽथ यद्बह्व्यः परिश्रितो भवन्ति बह्व्यो ह्यापः - ७.१.१.[१५]

तद्वै योनिः परिश्रितः । उल्बमूषा रेतः सिकता बाह्याः परिश्रितो भवन्त्यन्तर ऊषा

बाह्या हि योनिरन्तरमुल्बं बाह्य ऊषा भवन्त्यन्तराः सिकता बाह्यं ह्युल्बमन्तरं रेत एतेभ्यो वै जायमानो जायते तेभ्य एवैनमेतज्जनयति - ७.१.१.[१६]

अथैनमतश्चिनोति । इदमेवैतद्रेतः सिक्तं विकरोति तस्माद्योनौ रेतः सिक्तं विक्रियते - ७.१.१.[१७]

स चतस्रः प्राचीरुपदधाति । द्वे पश्चात्तिरश्च्यौ द्वे पुरस्तात्तद्याश्चतस्रः प्राचीरुपदधाति स आत्मा तद्यत्ताश्चतस्रो भवन्ति चतुर्विधो ह्ययमात्माथ ये पश्चात्ते सक्थ्यौ ये पुरस्तात्तौ बाहू यत्र वा आत्मा तदेव शिरः - ७.१.१.[१८]

तं वा एतम् । अत्र पक्षपुच्छवन्तं विकरोति यादृग्वै योनौ रेतो विक्रियते तादृग्जायते तद्यदेतमत्र पक्षपुच्छवन्तं विकरोति तस्मादेषोऽमुत्र पक्षपुच्छवान्जायते - ७.१.१.[१९]



तं वै पक्षपुच्छवन्तमेव सन्तम् । न पक्षपुच्छवन्तमिव पश्यन्ति तस्माद्योनौ गर्भं न यथारूपं पश्यन्त्यथैनममुत्र पक्षपुच्छवन्तम्पश्यन्ति तस्माज्जातं गर्भं यथारूपं पश्यन्ति - ७.१.१.[२०]

स चतस्रः पूर्वा उपदधाति । आत्मा ह्येवाग्रे सम्भवतः सम्भवति दक्षिणत उदङ्ङासीन उत्तरार्ध्यां प्रथमामुपदधाति तथो हास्यैषोऽभ्यात्ममेवाग्निश्चितो भवति - ७.१.१.[२१]

अयं सो अग्निः । यस्मिन्त्सोममिन्द्रः सुतं दध इत्ययं वै लोको गार्हपत्य आपः सोमः सुतोऽस्मिंस्तल्लोकेऽप इन्द्रोऽधत्त जठरे वावशान इति मध्यं वै जठरं सहस्रियं वाजमत्यं न सप्तिमित्यापो वै सहस्रियो वाजः ससवान्त्सन्त्स्तूयसे जातवेद इति चितः संश्चीयसे जातवेद इत्येतत् - ७.१.१.[२२]

अग्ने यत्ते दिवि वर्च इति । आदित्यो वा अस्य दिवि वर्चः पृथिव्यामित्ययमग्निः पृथिव्यां यदोषधीष्वप्स्वा यजत्रेति य एवौषधिषु चाप्सु चाग्निस्तमेतदाह येनान्तरिक्षमुर्वाततन्थेति

वायुः स त्वेषः स भानुरर्णवो नृचक्षा इति महान्त्स भानुरर्णवो नृचक्षा इत्येतत् - ७.१.१.[२३]

अग्ने दिवो अर्णमच्छा जिगासीति । आपो वा अस्य दिवोऽर्णस्ता एष धूमेनाच्छैत्यच्छा देवां ऊचिषे धिष्ण्या य इति प्राणा वै देवा धिष्ण्यास्ते हि सर्वा धिय इष्णन्ति या रोचने परस्तात्सूर्यस्य याश्चावस्तादुपतिष्ठन्त आप इति रोचनो ह नामैष लोको यत्रैष एतत्तपति तद्याश्चैतं परेणापो याश्चावरेण ता एतदाह - ७.१.१.[२४]

पुरीष्यासो अग्नय इति । पशव्यासोऽग्नय इत्येतत्प्रावणेभिः सजोषस इति प्रायणरूपम्प्रायणं ह्येतदग्नेर्यद्गार्हपत्यो जुषन्तां यज्ञमद्रुहोऽनमीवा इषो महीरिति जुषन्तां यज्ञमद्रुहोऽनशनाया इषो महीरित्येतत् - ७.१.१.[२५]

नानोपदधाति । ये नानाकामा आत्मंस्तांस्तद्दधाति सकृत्सादयत्येकं तदात्मानं करोति सूददोहसाधिवदति प्राणो वै सूददोहाः प्राणेनैवैनमेतत्संतनोति संदधाति - ७.१.१.[२६]



अथ जघनेन परीत्य । उत्तरतो दक्षिणासीनोऽपरयोर्दक्षिणामग्र उपदधातीडामग्ने पुरुदंसं सनिं गोरिति पशवो वा इडा पशूनामेवास्मा एतामाशिषमाशास्ते शश्वत्तमं हवमानाय साधेति यजमानो वै हवमानः स्यान्नः सूनुस्तनयो विजावेति प्रजा वै सूनुरग्ने सा ते सुमतिर्भूत्वस्मे इत्याशिषमाशास्ते - ७.१.१.[२७]

अथोत्तराम् । अयं ते योनिर्ऋत्वियो यतो जातो अरोचथा इत्ययं ते योनिर्ऋतव्यः सनातनो यतो जातोऽदीप्यथा इत्येतत्तं जानन्नग्न आरोहाथा नो वर्धया रयिमिति यथैव यजुस्तथा बन्धुः - ७.१.१.[२८]

सक्थ्यावस्यैते । ते नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हीमे सक्थ्यौ द्वे भवतो द्वे हीमे सक्थ्यौ पश्चादुपदधाति पश्चाद्धीमे सक्थ्यावग्राभ्यां संस्पृष्टे भवत एवं हीमे सक्थ्यावग्राभ्यां संस्पृष्टे - ७.१.१.[२९]

अथ तेनैव पुनः परीत्य । दक्षिणत उदङ्ङासीनः पूर्वयोरुत्तरामग्र उपदधाति चिदसि तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ दक्षिणां परिचिदसि तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति - ७.१.१.[३०]

बाहू अस्यैते । ते नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हीमौ बाहू द्वे भवतो द्वौ हीमौ बाहू पूर्वार्ध उपदधाति पुरस्ताद्धीमौ बाहू अग्राभ्यां संस्पृष्टे भवत एवं हीमौ बाहू अग्राभ्यां संस्पृष्टौ स वा इतीमाऽउपदधातीतीमे इतीमे तद्दक्षिणावृत्तद्धि देवत्रा - ७.१.१.[३१]

अष्टाविष्टका उपदधाति । अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोति पञ्च कृत्वः सादयति पञ्चचितिकोऽग्निः पञ्चऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावनग्निर्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोत्यष्टाविष्टकाः पञ्च कृत्वः सादयति तत्त्रयोदश त्रयोदश मासाः संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति - ७.१.१.[३२]

अथ लोकम्पृणामुपदधाति । तस्या उपरि बन्धुस्तिस्त्रः पूर्वास्त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोति दशोत्तरास्तासामुपरि बन्धुर्द्वे वाग्रेऽथ दशाथैकामेवं हि चितिं चिन्वन्ति तास्त्रयोदश सम्पद्यन्ते तस्योक्तो बन्धुः - ७.१.१.[३३]

ता उभय्य एकविंशतिः सम्पद्यन्ते । द्वादश मासाः पञ्चऽर्तवस्त्रय इमे लोका असावादित्य एकविंशोऽमुं तदादित्यमस्मिन्नग्नौ प्रतिष्ठापयति - ७.१.१.[३४]

एकविंशतिर्वेव परिश्रितः । द्वादश मासाः पञ्चऽर्तवस्त्रय इमे लोका अयमग्निरमुतोऽध्येकविंश इमं तदग्निममुष्मिन्नादित्ये प्रतिष्ठापयति तद्यदेता एवमुपदधात्येतावेवैतदन्योऽन्यस्मिन्प्रतिष्ठापयति तावेतावन्योऽन्यस्मिन्प्रतिष्ठितौ तौ वा

एतावत्र द्वावेकविंशौ सम्पादयत्यत्र ह्येवेमौ तदोभौ भवत आहवनीयश्च गार्हपत्यश्च - ७.१.१.[३५]

अथ पुरीषं निवपति । तस्योपरि बन्धुस्तच्चात्वालवेलाया आहरत्यग्निरेष यच्चात्वालस्तथो हास्यैतदाग्नेयमेव भवति सा समम्बिला स्यात्तस्योक्तो बन्धुः - ७.१.१.[३६]

व्याममात्री भवति । व्याममात्रो वै पुरुषः पुरुषः प्रजापतिः प्रजापतिरग्निरात्मसम्मितां तद्योनिं करोति परिमण्डला भवति परिमण्डला हि योनिरथो अयं वै लोको गार्हपत्यः परिमण्डल उ वा अयं लोकः - ७.१.१.[३७]

अथैनौ संनिवपति । संज्ञामेवाभ्यामेतत्करोति समितं संकल्पेथां सं वाम्मनांसि सं व्रताग्ने त्वं पुरीष्यो भवतं नः समनसाविति शमयत्येवैनावेतदहिंसायै यथा नान्योऽन्यं हिंस्याताम् - ७.१.१.[३८]



चतुर्भिः संनिवपति । तद्ये चतुष्पदाः पशवस्तैरेवाभ्यामेतत्संज्ञां करोत्यथो अन्नं वै पशवोऽन्नेनैवाभ्यामेतत्संज्ञां करोति - ७.१.१.[३९]

तां न रिक्तामवेक्षेत । नेद्रिक्तामवेक्षा इति यद्रिक्तामवेक्षेत ग्रसेत हैनम् - ७.१.१.[४०]

अथास्यां सिकता आवपति । अग्नेरेतद्वैश्वानरस्य रेतो यत्सिकता अग्निमेवास्यामेतद्वैश्वानरं रेतो भूतं सिञ्चति सा समम्बिला स्यात्तस्योक्तो बन्धुः - ७.१.१.[४१]

अथैनां विमुञ्चति । अप्रदाहाय यद्धि युक्तं न विमुच्यते प्र तद्दह्यत एतद्वा एतद्युक्ता रेतोऽभार्षीदितमग्निं तमत्राजीजनदथापरं धत्ते योषा वा उखा तस्माद्यदा योषा पूर्वं रेतः प्रजनयत्यथापरं धत्ते - ७.१.१.[४२]

मातेव पुत्रं पृथिवी पुरीष्यमिति । मातेव पुत्रं पृथिवी पशव्यमित्येतदग्निं स्वे योनावभारुखेत्यग्निं स्वे योनावभार्षीदुखेत्येतत्तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चत्वित्यृतवो वै विश्वे देवास्तदेनां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चति तामुत्तरतोऽग्नेर्निदधात्यरत्निमात्रे तस्योक्तो बन्धुः - ७.१.१.[४३]

अथास्यां पय आनयति । एतद्वा एतद्रेतो धत्तेऽथ पयो धत्ते योषा वा उखा तस्माद्यदा योषा रेतो धत्तेऽथ पयो धत्तेऽधराः सिकता भवन्त्युत्तरं पयोऽधरं हि रेत उत्तरं पयस्तन्मध्य आनयति यथा तत्प्रतिपुरुषशीर्षमुपदध्यात् - ७.१.१.[४४]

७.१.२

प्रजापतिः प्रजा असृजत । स प्रजाः सृष्ट्वा सर्वमाजिमित्वा व्यस्रंसत तस्माद्विस्रस्तात्प्राणो मध्यत उदक्रामदथास्माद्वीर्यमुदक्रामत्तस्मिन्नुत्क्रान्तेऽपद्यत



तस्मात्पन्नादन्नमस्रवद्यच्चक्षुरध्यशेत तस्मादस्यान्नमस्रवन्नो हेह तर्हि का चन प्रतिष्ठाऽऽस - ७.१.२.[१]

ते देवा अब्रुवन् । न वा इतोऽन्या प्रतिष्ठास्तीममेव पितरं प्रजापतिं संस्करवाम सैव नः प्रतिष्ठा भविष्यतीति - ७.१.२.[२]

तेऽग्निमब्रुवन् । न वा इतोऽन्या प्रतिष्ठास्ति त्वयीमं पितरं प्रजापतिं संस्करवाम सैव नः प्रतिष्ठा भविष्यतीति किं मे ततो भविष्यतीति - ७.१.२.[३]

तेऽब्रुवन् । अन्नं वा अयं प्रजापतिस्त्वन्मुखा एतदन्नमदाम त्वन्मुखानां न एषोऽन्नमसदिति तथेति तस्माद्देवा अग्निमुखा अन्नमदन्ति यस्यै हि कस्यै च देवतायै जुह्वत्यग्नावेव जुह्वत्यग्निमुखा हि तद्देवा अन्नमकुर्वत - ७.१.२.[४]

स योऽस्मात्प्राणो मध्यत उदक्रामत् । अयमेव स वायुर्योऽयं पवतेऽथ यदस्माद्वीर्यमुदक्रामदसौ स आदित्योऽथ यदस्मादन्नमस्रवद्यदेव संवत्सरेऽन्नं तत्तत् - ७.१.२.[५]

तं देवा अग्नौ प्रावृञ्जन् । तद्य एनं प्रवृक्तमग्निरारोहद्य एवास्मात्स प्राणो मध्यत उदक्रामत्स एवैनं स आपद्यत तमस्मिन्नदधुरथ यदस्माद्वीर्यमुदक्रामत्तदस्मिन्नदधुरथ यदस्मादन्नमस्रवत्तदस्मिन्नदधुस्तं सर्वं कृत्स्नं संस्कृत्योर्ध्वमुदश्रयंस्तद्यं तमुदश्रयन्निमे स लोकाः - ७.१.२.[६]

तस्यायमेव लोकः प्रतिष्ठा । अथ योऽस्मिंलोकेऽग्निः सोऽस्यावाङ्प्राणोऽथास्यान्तरिक्षमात्माथ योऽन्तरिक्षे वायुर्य एवायमात्मन्प्राणः सोऽस्य स द्यौरेवास्य शिरः सूर्याचन्द्रमसौ चक्षुषी यच्चक्षुरध्यशेत स चन्द्रमास्तस्मात्स मीलिततरोऽन्नं हि तस्मादस्रवत् - ७.१.२.[७]



तदेषा वै सा प्रतिष्ठा । यां तद्देवाः समस्कुर्वन्त्सैवेयमद्यापि प्रतिष्ठा सो एवाप्यतोऽधि भविता - ७.१.२.[८]

स यः स प्रजापतिर्व्यस्रंसत । अयमेव स योऽयमग्निश्चीयत तद्यदेषोखा रिक्ता शेते पुरा प्रवर्जनाद्यथैव तत्प्रजापतिरुत्क्रान्ते प्राण उत्क्रान्ते वीर्ये स्रुतेऽन्ने रिक्तोऽशयदेतदस्य तद्रूपम् - ७.१.२.[९]

तामग्नौ प्रवृणक्ति । यथैवैनमदो देवाः प्रावृञ्जंस्तद्य एनां प्रवृक्तामग्निरारोहति य एवास्मात्स प्राणो मध्यत उदक्रामत्स एवैनं स आपद्यते तमस्मिन्दधात्यथ यद्रुक्मं प्रतिमुच्य बिभर्ति यदेवास्माद्वीर्यमुदक्रामत्तदस्मिन्दधात्यथ याः समिध आदधाति यदेवास्मादन्नमस्रवत्तदस्मिन्दधाति - ७.१.२.[१०]

ता वै सायं प्रातरादधाति । अह्नश्च हि तद्रात्रेश्चान्नमस्रवत्तान्येतानि सर्वस्मिन्नेव संवत्सरे स्युः संवत्सरो हि स प्रजापतिर्यस्मात्तान्युदक्रामंस्तदस्मिन्नेतत्सर्वस्मिन्नेव सर्वं दधाति यस्मिन्हास्यैतदतो न कुर्यान्न हास्य तस्मिन्नेतद्दध्यान्नासंवत्सरभृतस्येक्षकेण चन भवितव्यमिति ह स्माह वामकक्षायणो नेदिमं पितरं प्रजापतिं विच्छिद्यमानं पश्यानीति तं संवत्सरे सर्वं कृत्स्नं संस्कृत्योर्ध्वमुच्छ्रयति यथैवैनमदो देवा उदश्रयन् - ७.१.२.[११]

तस्य गार्हपत्य एवायं लोकः । अथ यो गार्हपत्येऽग्निर्य एवायमस्मिंलोकेऽग्निः सो ऽस्य सोऽथ यदन्तराहवनीयं च गार्हपत्यं च तदन्तरिक्षमथ य आग्नीध्रीयेऽग्निर्य एवायमन्तरिक्षे वायुः सोऽस्य स आहवनीय एव द्यौरथ य आहवनीयेऽग्निस्तौ सूर्याचन्द्रमसौ सोऽस्यैष आत्मैव - ७.१.२.[१२]

तस्य शिर एवाहवनीयः । अथ य आहवनीयेऽग्निर्य एवायं शीर्षन्प्राणः सोऽस्य स तद्यत्स पक्षपुच्छवान्भवति पक्षपुच्छवान्ह्ययं शीर्षन्प्राणश्चक्षुः शिरो दक्षिणं श्रोत्रं दक्षिणः पक्ष उत्तरं श्रोत्रमुत्तरः पक्षः प्राणो मध्यमात्मा वाक्पुच्छं प्रतिष्ठा तद्यत्प्राणा वाचान्नं जग्ध्वा प्रतितिष्ठन्ति तस्मात्प्राणानां वाक्पुच्छं प्रतिष्ठा - ७.१.२.[१३]

अथ यदन्तराहवनीयं च गार्हपत्यं च । स आत्माथ य आग्नीध्रीयेऽग्निर्य एवायमन्तरात्मन्प्राणः सोऽस्य स प्रतिष्ठैवास्य गार्हपत्योऽथ यो गार्हपत्येऽग्निः सोऽस्यावाङ् प्राणः - ७.१.२.[१४]

तं हैके त्रिचितं चिन्वन्ति । त्रयो वा इमे ऽवाञ्चः प्राणा इति न तथा कुर्यादति ते रेचयन्त्येकविंशसम्पदमथो अनुष्टुप्सम्पदमथो बृहतीसम्पदं ये तथा कुर्वन्त्येकं ह्येवैतद्रूपं योनिरेव प्रजातिरेव यदेतेऽवाञ्चः प्राणा यद्धि मूत्रं करोति यत्पुरीषं प्रैव तज्जायते - ७.१.२.[१५]

अथातः सम्पदेव । एकविंशतिरिष्टका नव यजूंषि तत्त्रिंशत्सादनं च सूददोहाश्च तद्द्वात्रिंशद्द्वात्रिंशदक्षरानुष्टुप्सैषाऽनुष्टुप् - ७.१.२.[१६]

एकविंशतिर्वेव परिश्रितः । यजुर्द्वाविंशं व्युदूहनस्य यजुरूषाश्च यजुश्च सिकताश्च यजुश्च पुरीषं च यजुश्च चतुर्भिः संनिवपति विमुञ्चति पञ्चमेन ततस्त्रिभिरियं द्वात्रिंशदक्षरानुष्टुप्सैषानुष्टुप् - ७.१.२.[१७]

अथैते द्वे यजुषी । सो अनुष्टुबेव वाग्वा अनुष्टुप्तद्यदिदं द्वयं वाचो रूपं दैवं च मानुषं चोच्चैश्च शनैश्च तदेते द्वे - ७.१.२.[१८]

ता वा एतास्तिस्रोऽनुष्टुभः । चित एष गार्हपत्यस्तद्यदेता अत्र तिस्रोऽनुष्टुभः सम्पादयन्त्यत्र ह्येवेमे तदा सर्वे लोका भवन्ति ततोऽन्यतरां द्वात्रिंशदक्षरामनुष्टुभमाहवनीयं हरन्ति स आहवनीयः सा द्यौस्तच्छिरोऽथेहान्यतरा परिशिष्यते स गार्हपत्यः सा प्रतिष्ठा स उ अयं लोकः - ७.१.२.[१९]



अथ ये एते द्वे यजुषी । एतत्तद्यदन्तराहवनीयं च गार्हपत्यं च तदन्तरिक्षं स आत्मा तद्यत्ते द्वे भवतस्तस्मादेतत्तनीयो यदन्तराहवनीयं च गार्हपत्यं च तस्मादेषां लोकानामन्तरिक्षलोकस्तनिष्ठः - ७.१.२.[२०]

सैषा त्रेधाविहिता वागनूष्टुप् । तामेषोऽग्निः प्राणो भूत्वाऽनुसंचरति य आहवनीयेऽग्निः स प्राणः सोऽसावादित्योऽथ य आग्नीध्रीयेऽग्निः स व्यानः स उ अयं वायुर्योऽयं पवतेऽथ यो गार्हपत्येऽग्निः स उदानः स उ अयं योऽयमस्मिंलोकेऽग्निरेवंविद्ध वाव सर्वां वाचं सर्वं प्राणं सर्वमात्मानं संस्कुरुते - ७.१.२.[२१]

सैषा बृहत्येव । ये वै द्वे द्वात्रिंशतौ द्वात्रिंशदेव तदथैते द्वे यजुषी तच्चतुस्त्रिंशदग्निरेव पञ्चत्रिंशो नाक्षराच्छन्दो व्येत्येकस्मान्न द्वाभ्यां स उ द्व्यक्षरस्तत्षट्त्रिंशत्षट्त्रिंशदक्षरा बृहती बृहतीं वा एष संचितोऽभिसम्पद्यते यादृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यदेतामत्र बृहतीं करोति तस्मादेष संचितो बृहतीमभिसम्पद्यते - ७.१.२.[२२]

तदाहुः । यदयं लोको गार्हपत्योऽन्तरिक्षं धिष्ण्या द्यौराहवनीयोऽन्तरिक्षलोक उ अस्माल्लोकादनन्तर्हितोऽथ कस्माद्गार्हपत्यं चित्वाहवनीयं चिनोत्यथ धिष्ण्यानिति सह हैवेमावग्रे लोकावासतुस्तयोर्वियतोर्योऽन्तरेणाकाश आसीत्तदन्तरिक्षमभवदीक्षं हैतन्नाम ततः पुरान्तरा वा इदमीक्षमभूदिति तस्मादन्तरिक्षं तद्यद्गार्हपत्यं चित्वाहवनीयं चिनोत्येतौ ह्यग्रे लोकावसृज्येतामथ प्रत्येत्य धिष्ण्यान्निवपति कर्मण एवानन्तरयायाथोऽअन्तयोर्वाव संस्क्रियमाणयोर्मध्यं संस्क्रियते - ७.१.२.[२३]

७.२.१ नैर्ऋतीष्टकाचयनम्

अथातो नैर्ऋतीर्हरन्ति । एतद्वै देवा गार्हपत्यं चित्वा समारोहन्नयं वै लोको गार्हपत्य इममेव तं लोकं संस्कृत्य समारोहंस्ते तम एवानतिदृश्यमपश्यन् - ७.२.१.[१]

तेऽब्रुवन् । उप तज्जानीत यथेदं तमः पाप्मानमपहनामहा इति तेऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत यथेदं तमः पाप्मानमपहनामहा इति - ७.२.१.[२]



ते चेतयमानाः । एता इष्टका अपश्यन्नैर्ऋतीस्ता उपादधत ताभिस्तत्तमः पाप्मानमपाघ्नत पाप्मा वै निर्ऋतिस्तद्यदेताभिः पाप्मानं निर्ऋतिमपाघ्नत तस्मादेता नैर्ऋत्यः - ७.२.१.[३]

तद्वा एतत्क्रियते । यद्देवा अकुर्वन्निदं नु तत्तमः स पाप्मा देवैरेवापहतो यत्त्वेतत्करोति यद्देवा अकुर्वंस्तत्करवाणीत्यथो य एव पाप्मा या निर्ऋतिस्तमेताभिरपहते तद्यदेताभिः पाप्मानं निर्ऋतिमपहते तस्मादेता नैर्ऋत्यः - ७.२.१.[४]

यद्वेवैता नैर्ऋतीर्हरन्ति । प्रजापतिं विस्रस्तं यत्र देवाः समस्कुर्वंस्तमुखायां योनौ रेतो भूतमसिञ्चन्योनिर्वा उखा तस्मा एतां संवत्सरे प्रतिष्ठां समस्कुर्वन्निममेव लोकमयं वै लोको गार्हपत्यस्तस्मिन्नेनं प्राजनयंस्तस्य यः पाप्मा यः श्लेष्मा यदुल्बं यज्जरायु तदस्यैताभिरपाघ्नंस्तद्यदस्यैताभिः पाप्मानं निर्ऋतिमपाघ्नंस्तस्मादेता नैर्ऋत्यः - ७.२.१.[५]

तथैवैतद्यजमानः । आत्मानमुखायां योनौ रेतो भूतं सिञ्चति योनिर्वा उखा तस्मा एतां संवत्सरे प्रतिष्ठां संस्करोतीममेव लोकमयं वै लोको गार्हपत्यस्तस्मिन्नेनं प्रजनयति तस्य यः पाप्मा यः श्लेष्मा यदुल्बं यज्जरायु तदस्यैताभिरपहन्ति तद्यदस्यैताभिः पाप्मानं निर्ऋतिमपहन्ति तस्मादेता नैर्ऋत्यः - ७.२.१.[६]

पादमात्र्यो भवन्ति । अधस्पदमेव तत्पाप्मानं निर्ऋतिं कुरुतेऽलक्षणा भवन्ति यद्वै नास्ति तदलक्षणमसन्तमेव तत्पाप्मानं निर्ऋतिं कुरुते तुषपक्वा भवन्ति नैर्ऋता वै तुषा नैर्ऋतैरेव तन्नैर्ऋतं कर्म करोति कृष्णा भवन्ति कृष्णं हि तत्तम आसीदथो कृष्णा वै निर्ऋतिः - ७.२.१.[७]

ताभिरेतां दिशं यन्ति । एषा वै नैर्ऋती दिङ्नैर्ऋत्यामेव तद्दिशि निर्ऋतिं दधाति स यत्र स्वकृतं वेरिणं श्वभ्रप्रदरो वा स्यात्तदेना उपदध्याद्यत्र वा अस्या अवदीर्यते यत्र वाऽस्या ओषधयो न जायन्ते निर्ऋतिर्हास्यै तद्गृह्णाति नैर्ऋत एव तद्भूमेर्निर्ऋतिं दधाति ताः पराचीर्लोकभाजः कृत्वोपदधाति - ७.२.१.[८]

असुन्वन्तमयजमानमिच्छेति । यो वै न सुनोति न यजते तं निर्ऋतिर्ऋच्छति स्तेनस्येत्यामन्विहि तस्करस्येति स्तेनस्य चेत्यामन्विहि तस्करस्य चेत्येतदथो यथा स्तेनस्तस्करः प्रलायमेत्येवं प्रलायमिहीत्यन्यमस्मदिच्छ सा त इत्येत्यनित्थं विद्वांसमिच्छेत्येतन्नमो देवि निर्ऋते तुभ्यमस्त्विति नमस्कारेणैवैनामपहते - ७.२.१.[९]

नमः सु ते निर्ऋते तिग्मतेज इति । तिग्मतेजा वै निर्ऋतिस्तस्या एतन्नमस्करोत्ययस्मयं विचृता बन्धमेतमित्ययस्मयेन ह वै तं बन्धेन निर्ऋतिर्बध्नाति यं बध्नाति यमेन त्वं यम्या संविदानेत्यग्निर्वै यम इयं यम्याभ्यां हीदं सर्वं यतमाभ्यां त्वं संविदानेत्येतदुत्तमे नाके अधिरोहयैनमिति स्वर्गो वै लोको नाकः स्वर्गे लोके यजमानमधिरोहयेत्येतत् - ७.२.१.[१०]

यस्यास्ते घोर आसञ्जुहोमीति । घोरा वै निर्ऋतिस्तस्या एतदासञ्जुहोति यत्तद्देवत्यं

कर्म करोत्येषां बन्धानामवसर्जनायेति यैर्बन्धैर्बद्धो भवति यां त्वा जनो भूमिरिति प्रमन्दत इतीयं वै भूमिरस्यां वै स भवति यो भवति निर्ऋतिं त्वाऽहं परिवेद विश्वत इति निर्ऋतिरिति त्वाऽहं परिवेद सर्वत इत्येतदियं वै निर्ऋतिरियं वै ते निरर्पयति यो निर्ऋच्छति तद्यथा वै ब्रूयादसावामुष्यायणोऽसि वेद त्वा मा मा हिंसीरित्येवमेतदाह नतरां हि विदित आमन्त्रितो हिनस्ति - ७.२.१.[११]

नोपस्पृशति । पाप्मा वै निर्ऋतिर्नेत्पाप्मना संस्पृशा इति न सादयति प्रतिष्ठा वै सादनं नेत्पाप्मानं प्रतिष्ठापयानीति न सूददोहसाधिवदति प्राणो वै सूददोहा नेत्पाप्मानं प्राणेन संतनवानि संदधानीति - ७.२.१.[१२]

ता हैके परस्तादर्वाचीरुपदधति । पाप्मा वै निर्ऋतिर्नेत्पाप्मानं निर्ऋतिमन्ववायामेति न तथा कुर्यात्पराचीरेवोपदध्यात्पराञ्चमेव तत्पाप्मानं निर्ऋतिमपहते - ७.२.१.[१३]



तिस्र इष्टका उपदधाति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैव तत्पाप्मानं निर्ऋतिमपहते - ७.२.१.[१४]

अथासन्दीं शिक्यम् । रुक्मपाशमिण्ड्वे तत्परार्धे न्यस्यति नैर्ऋतो वै पाशो निर्ऋतिपाशादेव तत्प्रमुच्यते यं ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचृत्यमित्यनेवंविदुषा हाविचृत्यस्तं ते विष्याम्यायुषो न मध्यादित्यग्निर्वा आयुस्तस्यैतन्मध्यं यच्चितो गार्हपत्यो भवत्यचित आहवनीयस्तस्माद्यदि युवाऽग्निं चिनुते यदि स्थविर आयुषो न मध्यादित्येवाहाथैतं पितुमद्धि प्रसूत इत्यन्नं वै पितुरथैतदन्नमद्धि प्रमुक्त इत्येतत्त्रिष्टुब्भिर्वज्रो वै त्रिष्टुब्वज्रेणैव तत्पाप्मानं निर्ऋतिमपहते - ७.२.१.[१५]

तिस्र इष्टका भवन्ति । आसन्दी शिक्यं रुक्मपाश इण्ड्वे तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैव तत्पाप्मानं निर्ऋतिमपहते - ७.२.१.[१६]

अथान्तरेणोदचमसं निनयति । वज्रो वा आपो वज्रेणैव तत्पाप्मानं निर्ऋतिमन्तर्धत्ते नमो भूत्यै येदं चकारेत्युपोत्तिष्ठन्ति भूत्यै वा एतदग्रे देवाः कर्माकुर्वत तस्या एतन्नमोऽकुर्वन्भूत्या उ एवायमेतत्कर्म कुरुते तस्या एतन्नमस्करोत्यप्रतीक्षमायन्त्यप्रतीक्षमेव तत्पाप्मानं निर्ऋतिं जहति - ७.२.१.[१७]

प्रत्येत्याग्निमुपतिष्ठते । एतद्वा एतदयथायथं करोति यदग्नौ सामिचित एतां दिशमेति तस्मा एवैतन्निह्नुतेऽहिंसायै - ७.२.१.[१८]

यद्वेवोपतिष्ठते । अयं वै लोको गार्हपत्यः प्रतिष्ठा वै गार्हपत्य इयमु वै प्रतिष्ठाऽथैतदपथमिवैति यदेतां दिशमेति तद्यदुपतिष्ठत इमामेवैतत्प्रतिष्ठामभिप्रत्यैत्यस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति - ७.२.१.[१९]

निवेशनः संगमनो वसूनामिति । निवेशनो ह्ययं लोकः संगमनो वसूनां विश्वा रूपाभिचष्टे शचीभिरिति सर्वाणि रूपाण्यभिचष्टे शचीभिरित्येतद्देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनामिति यथैव यजुस्तथा बन्धुः - ७.२.१.[२०]



७.२.२

अथ प्रायणीयं निर्वपति । तस्य हविष्कृता वाचं विसृजते वाचं विसृज्य स्तम्बयजुर्हरति स्तम्बयजुर्हृत्वा पूर्वेण परिग्रहेण परिगृह्य लिखित्वाऽऽह हर त्रिरिति हरति त्रिराग्नीध्रः - ७.२.२.[१]

प्रत्येत्य प्रायणीयेन प्रचरति । प्रायणीयेन प्रचर्य सीरं युनक्त्येतद्वा एनं देवाः संस्करिष्यन्तः पुरस्तादन्नेन समार्धयंस्तथैवैनमयमेतत्संस्करिष्यन्पुरस्तादन्नेन समर्धयति सीरम्भवति सेरं हैतद्यत्सीरमिरामेवास्मिन्नेतद्दधाति - ७.२.२.[२]

औदुम्बरं भवति । ऊर्ग्वै रस उदुम्बर ऊर्जैवैनमेतद्रसेन समर्धयति मौञ्जं परिसीर्यं त्रिवृत्तस्योक्तो बन्धुः - ७.२.२.[३]

सोऽग्नेर्दक्षिणां श्रोणिम् । जघनेन तिष्ठन्नुत्तरस्यांसस्य पुरस्ताद्युज्यमानमभिमन्त्रयते सीरा युञ्जन्ति कवयो युगा वितन्वते पृथगिति ये विद्वांसस्ते कवयस्ते सीरं च युञ्जन्ति युगानि च वितन्वते पृथग्धीरा देवेषु सुम्नयेति यज्ञो वै सुम्नं धीरा देवेषु यज्ञं तन्वाना इत्येतत् - ७.२.२.[४]

युनक्त सीरा वि युगा तनुध्वमिति । युञ्जन्ति हि सीरं वि युगानि तन्वन्ति कृते योनौ वपतेह बीजमिति बीजाय वा एषा योनिष्क्रियते यत्सीता यथा ह वा अयोनौ रेतः सिञ्चेदेवं तद्यदकृष्टे वपति गिरा च श्रुष्टिः सभरा असन्न इति वाग्वै गीरन्नं
श्रुष्टिर्नेदीय इत्सृण्यः पक्वमेयादिति यदा वा अन्नं पच्यतेऽथ तत्सृण्योपचरन्ति द्वाभ्यां युनक्ति गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः - ७.२.२.[५]

स दक्षिणमेवाग्रे युनक्ति । अथ सव्यमेवं देवत्रेतरथा मानुषे षड्गवम्भवति द्वादशगवं वा चतुर्विंशतिगवं वा संवत्सरमेवाभिसम्पदम् - ७.२.२.[६]



अथैनं विकृषति । अन्नं वै कृषिरेतद्वा अस्मिन्देवाः संस्करिष्यन्तः पुरस्तादन्नमदधुस्तथैवास्मिन्नयमेतत्संस्करिष्यन्पुरस्तादन्नं दधाति - ७.२.२.[७]

स वा आत्मानमेव विकृषति । न पक्षपुच्छान्यात्मंस्तदन्नं दधाति यदु वा आत्मन्नन्नं धीयते तदात्मानमवति तत्पक्षपुच्छान्यथ यत्पक्षपुच्छेषु नैव तदात्मानमवति न पक्षपुच्छानि - ७.२.२.[८]

स दक्षिणार्द्धेनाग्नेः । अन्तरेण परिश्रितः प्राचीं प्रथमां सीतां कृषति शुनं सुफाला विकृषन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैरिति शुनं शुनमिति यद्वै समृद्धं तच्छुनं समर्धयत्येवैनामेतत् - ७.२.२.[९]

अथ जघनार्धेनोदीचीम् । घृतेन सीता मधुना समज्यतामिति यथैव यजुस्तथा बन्धुर्विश्वैर्देवैरनुमता मरुद्भिरिति विश्वे च वै देवा मरुतश्च वर्षस्येशत ऊर्जस्वती पयसा पिन्वमानेति रसो वै पय ऊर्जस्वती रसेनान्नेन पिन्वमानेत्येतदस्मान्त्सीते पयसाऽभ्याववृत्स्वेत्यस्मान्त्सीते रसेनाभ्याववृत्स्वेत्येतत् - ७.२.२.[१०]

अथोत्तरार्धेन प्राचीं । लाङ्गलं पवीरवदिति लाङ्गलं रयिमदित्येतत्सुशेवं सोमपित्सर्वित्यन्नं वै सोमस्तदुद्वपति गामविं प्रफर्व्यं च पीवरीं प्रस्थावद्रथवाहणमित्येतद्धि सर्वं सीतोद्वपति - ७.२.२.[११]

अथ पूर्वार्धेन दक्षिणाम् । कामं कामदुघे धुक्ष्व मित्राय वरुणाय च इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्य ओषधीभ्य इति सर्वदेवत्या वै कृषिरेताभ्यो देवताभ्यः सर्वान्कामान्धुक्ष्वेत्येतदित्यग्रे कृषत्यथेति अथेत्यथेति तद्दक्षिणावृत्तद्धि देवत्रा - ७.२.२.[१२]



चतस्रः सीता यजुषा कृषति । तद्यच्चतसृषु दिक्ष्वन्नं तदस्मिन्नेतद्दधाति तद्वै यजुषाऽद्धा वै तद्यद्यजुरद्धो तद्यदिमा दिशः - ७.२.२.[१३]

अथात्मानं विकृषति । तद्यदेव संवत्सरेऽन्नं तदस्मिन्नेतद्दधाति तूष्णीमनिरुक्तं वै तद्यत्तूष्णीं सर्वं वा अनिरुक्तं सर्वेणैवास्मिन्नेतदन्नं दधातीत्यग्रे कृषत्यथेति अथेत्यथेति तद्दक्षिणावृत्तद्धि देवत्रा - ७.२.२.[१४]

तिस्रस्तिस्रः सीताः कृषति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति - ७.२.२.[१५]

द्वादश सीतास्तूष्णीं कृषति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति - ७.२.२.[१६]

ता उभय्यः षोडश सम्पद्यन्ते । षोडशकलः प्रजापतिः प्रजापतिरग्निरात्मंसम्मितमेवास्मिन्नेतदन्नं दधाति यदु वा आत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति - ७.२.२.[१७]

यद्वेवैनं विकृषति । एतद्वा अस्मिन्देवाः संस्करिष्यन्तः पुरस्तात्प्राणानदधुस्तथैवास्मिन्नयमेतत्संस्करिष्यन्पुरस्तात्प्राणान्दधाति लेखा भवन्ति लेखासु हीमे प्राणाः - ७.२.२.[१८]

चतस्रः सीता यजुषा कृषति । तद्य इमे शीर्षंश्चत्वारो निरुक्ताः प्राणास्तानस्मिन्नेतद्दधाति तद्वै यजुषाऽद्धा वै तद्यद्यजुरद्धो तद्यदिमे शीर्षन्प्राणाः - ७.२.२.[१९]

यद्वेवात्मानं विकृषति । य एवेमेऽन्तरात्मन्प्राणास्तानस्मिन्नेतद्दधाति तूष्णीं को हि तद्वेद यावन्त इमेऽन्तरात्मन्प्राणाः - ७.२.२.[२०]



अथैनान्विमुञ्चति । आप्त्वा तं कामं यस्मै कामायैनान्युङ्क्ते विमुच्यध्वमघ्न्या इत्यघ्न्या हैते देवत्रा देवयाना इति दैवं ह्येभिः कर्म करोत्यगन्म तमसस्पारमस्येत्यशनाया वै तमोऽगन्मास्या अशनायायै पारमित्येतज्ज्योतिरापामेति ज्योतिर्ह्याप्नोति यो देवान्यो यज्ञमथैनानुदीचः प्राचः प्रसृजति तस्योक्तो बन्धुस्तानध्वर्यवे ददाति स हि तैः करोति तांस्तु दक्षिणानां कालेऽनुदिशेत् - ७.२.२.[२१]

७.२.३ दर्भस्तम्बोपधानम्

अथ दर्भस्तम्बमुपदधाति । एतद्वै देवा ओषधीरुपादधत तथैवैतद्यजमान ओषधीरुपधत्ते - ७.२.३.[१]

यद्वेव दर्भस्तम्बमुपदधाति । जायत एष एतद्यच्चीयते स एष सर्वस्माऽअन्नाय जायत उभयम्वेतदन्नं यद्दर्भा आपश्च ह्येता ओषधयश्च या वै वृत्राद्बीभत्समाना आपो धन्व दृभन्त्य

उदायंस्ते दर्भा अभवन्यद्दृभन्त्य उदायंस्तस्माद्दर्भास्ता हैताः शुद्धा मेध्या आपो वृत्राभिप्रक्षरिता यद्दर्भा यदु दर्भास्तेनौषधय उभयेनैवैन्मेतदन्नेन प्रीणाति - ७.२.३.[२]

सीतासमरे । वाग्वै सीतासमरः प्राणा वै सीतास्तासामयं समयो वाचि वै प्राणेभ्योऽन्नं धीयते मध्यतो मध्यत एवास्मिन्नेतदन्नं दधाति तूष्णीमनिरुक्तं वै तद्यत्तूष्णीं सर्वं वा अनिरुक्तं सर्वेणैवास्मिन्नेतदन्नं दधाति - ७.२.३.[३]

अथैनमभिजुहोति । जायत एष एतद्यच्चीयते स एष सर्वस्मा अन्नाय जायते सर्वस्योऽअस्यैष रसो यदाज्यमपां च ह्येष ओषधीनां च रसोऽस्यैवैनमेतत्सर्वस्य रसेन प्रीणाति यावानु वै रसस्तावानात्माऽनेनैवैनमेतत्सर्वेणस्य प्रीणाति पञ्चगृहीतेन पञ्चचितिकोऽग्निः पञ्चऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति - ७.२.३.[४]



यद्वेवैनमभिजुहोति । एतद्वै यत्रैतं प्राणा ऋषयोऽग्रेऽग्निं समस्कुर्वंस्तदस्मिन्नेतं पुरस्ताद्भागमकुर्वत तस्मात्पुरस्ताद्भागास्तद्यदभिजुहोति य एवास्मिंस्ते प्राणा ऋषयः पुरस्ताद्भागमकुर्वत तानेवैतत्प्रीणात्याज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः - ७.२.३.[५]

यद्वेवैनमभिजुहोति । एतद्वै यान्येतस्मिन्नग्नौ रूपाण्युपधास्यन्भवति यान्त्स्तोमान्यानि पृष्ठानि यानि छन्दांसि तेभ्य एतं पुरस्ताद्भागं करोति तान्येवैतत्प्रीणात्याज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः - ७.२.३.[६]

यद्वेवैनमभिजुहोति । एतद्वै देवा अबिभयुर्दीर्घं वा इदं कर्म यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति त एतामेतस्य कर्मणः पुरस्तात्संस्थामपश्यंस्तमत्रैव सर्वं समस्थापयन्नत्राचिन्वंस्तथैवैनमयमेतदत्रैव सर्वं संस्थापयत्यत्र चिनोति - ७.२.३.[७]

सजूरब्द इति चितिः । अयवोभिरिति पुरीषं सजूरुषा इति चितिररुणीभिरिति पुरीषं

सजोषसावश्विनेति चितिर्दंसोभिरिति पुरीषं सजूः सूर इति चितिरेतशेनेति पुरीषं सजूर्वैश्वानर इति चितिरिडयेति पुरीषं घृतेनेति चितिः स्वेति पुरीषं हेति चितिः - ७.२.३.[८]

त्रयोदशैता व्याहृतयो भवन्ति । त्रयोदश मासाः संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि यावानग्निर्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोत्याज्येन जुहोत्यग्निरेष यदाज्यमग्निमेवैतच्चिनोति पञ्चगृहीतेन पञ्चचितिकोऽग्निः पञ्चऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोत्यूर्ध्वामुद्गृह्णञ्जुहोत्यूर्ध्वं तदग्निं चितिभिश्चिनोति - ७.२.३.[९]

७.२.४.[१] अपां निनयनं सर्वौषधवपनं च

अथोदचमसान्निनयति । एतद्वै देवा अब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमाना वृष्टिमेव चितिमपश्यंस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति



७.२.४.[२]

उदचमसा भवन्ति । आपो वै वृष्टिर्वृष्टिमेवास्मिन्नेतद्दधात्यौदुम्बरेण चमसेन तस्योक्तो बन्धुश्चतुःस्रक्तिना चतस्रो वै दिशः सर्वाभ्य एवास्मिन्नेतद्दिग्भ्यो वृष्टिं दधाति

७.२.४.[३]

त्रींस्त्रीनुदचमसान्निनयति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति

७.२.४.[४]

द्वादशोदचमसान्कृष्टे निनयति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति

७.२.४.[५]

स वै कृष्टे निनयति । तस्मात्कृष्टाय वर्षति स यत्कृष्ट एव निनयेन्नाकृष्टे कृष्टायैव वर्षेन्नाकृष्टायाथ यदकृष्ट एव निनयेन्न कृष्टे अकृष्टायैव वर्षेन्न कृष्टाय कृष्टे चाकृष्टे च निनयति तस्मात्कृष्टाय चाकृष्टाय च वर्षति

७.२.४.[६]
त्रीन्कृष्टे चाकृष्टे च निनयति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति

यद्वेवोदचमसान्निनयति । एतद्वा अस्मिन्देवाः संस्करिष्यन्तः पुरस्तादपोदधुस्तथैवास्मिन्नयमेतत्संस्करिष्यन्पुरस्तादपो दधाति - ७.२.४.[७]

त्रींस्त्रीनुदचमसान्निनयति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति - ७.२.४.[८]



द्वादशोदचमसान्कृष्टे निनयति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति - ७.२.४.[९]

स वै कृष्टे निनयति । प्राणेषु तदपो दधाति स यत्कृष्ट एव निनयेन्नाकृष्टे प्राणेष्वेवापः स्युर्नेतरस्मिन्नात्मन्नथ यदकृष्ट एव निनयेन्न कृष्ट आत्मन्नेवापः स्युर्न प्राणेषु कृष्टे चाकृष्टे च निनयति तस्मादिमा उभयत्रापः प्राणेषु चात्मंश्च - ७.२.४.[१०]

त्रीन्कृष्टे चाकृष्टे च निनयति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति - ७.२.४.[११]

पञ्चदशोदचमसान्निनयति । पञ्चदशो वै वज्र एतेनैवास्यैतत्पञ्चदशेन वज्रेण सर्वं पाप्मानमपहन्ति - ७.२.४.[१२]

अथ सर्वौषधं वपति । एतद्वै देवा अब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमाना अन्नमेव चितिमपश्यंस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति - ७.२.४.[१३]

सर्वौषधं भवति । सर्वमेव तदन्नं यत्सर्वौषधं सर्वमेवास्मिन्नेतदन्नं दधाति तेषामेकमन्नमुद्धरेत्तस्य नाश्नीयाद्यावज्जीवमौदुम्बरेण चमसेन तस्योक्तो बन्धुश्चतुःस्त्रक्तिना चतस्रो वै दिशः सर्वाभ्य एवास्मिन्नेतद्दिग्भ्योऽन्नं दधात्यनुष्टुब्भिर्वपति वाग्वा अनुष्टुब्वाचो वा अन्नमद्यते - ७.२.४.[१४]

तिसृभिस्तिसृभिर्ऋग्भिर्वपति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति - ७.२.४.[१५]

द्वादशभिर्ऋग्भिः कृष्टे वपति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति - ७.२.४.[१६]



स वै कृष्टे वपति । तस्मात्कृष्टेऽन्नं पच्यते यत्कृष्ट एव वपेन्नाकृष्टे कृष्ट एवान्नं पच्येत नाकृष्टेऽथ यदकृष्ट एव वपेन्न कृष्टेऽकृष्ट एवान्नं पच्येत न कृष्टे कृष्टे चाकृष्टे च वपति तस्मात्कृष्टे चाकृष्टे चान्नं पच्यते - ७.२.४.[१७]

तिसृभिः कृष्टे चाकृष्टे च वपति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति - ७.२.४.[१८]

यद्वेव सर्वौषधं वपति । एतद्वा एन देवाः संस्करिष्यन्तः पुरस्तात्सर्वेण भेषजेनाभिषज्यंस्तथैवैनमयमेतत्संस्करिष्यन्पुरस्तात्सर्वेण भेषजेन भिषज्यति - ७.२.४.[१९]

सर्वौषधं भवति । सर्वमेतद्भेषजं यत्सर्वौषधं सर्वेणैवैनमेतद्भेषजेन भिषज्यति - ७.२.४.[२०]

तिसृभिस्तिसृभिर्ऋग्भिर्वपति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्भिषज्यति - ७.२.४.[२१]

द्वादशभिर्ऋग्भिः कृष्टे वपति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्भिषज्यति - ७.२.४.[२२]

स वै कृष्टे वपति । प्राणांस्तद्भिषज्यति स यत्कृष्ट एव वपेन्नाकृष्टे प्राणानेव भिषज्येन्नेतरमात्मानमथ यदकृष्ट एव वपेन्न कृष्ट आत्मानमेव भिषज्येन्न प्राणान्कृष्टे चाकृष्टे च वपति प्राणांश्च तदात्मानं च भिषज्यति - ७.२.४.[२३]

तिसृभिः कृष्टे चाकृष्टे च वपति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्भिषज्यति - ७.२.४.[२४]



पञ्चदशोदचमसान्निनयति पञ्चदशभिर्ऋग्भिर्वपति तत्त्रिंशत्त्रिंशदक्षरा विराड्विराडु कृत्स्नमन्नं सर्वमेवास्मिन्नेतत्कृत्स्नमन्नं दधाति - ७.२.४.[२५]

या ओषधीः पूर्वा जाताः । देवेभ्यस्त्रियुगं पुरेत्यृतवो वै देवास्तेभ्य एतास्त्रिः पुरा जायन्ते वसन्ता प्रावृषि शरदि मनै नु बभ्रूणामहमिति सोमो वै बभ्रुः सौम्या ओषधय ओषधः पुरुषः शतं धामानीति यदिदं शतायुः शतार्घः शतवीर्यः एतानि हास्य तानि शतं धामानि सप्त चेति य एवेमे सप्तशीर्षन्प्राणास्तानेतदाह - ७.२.४.[२६]

शतं वो अम्ब धामानि । सहस्रमुत वो रुह इति यदिदं शतधा च सहस्रधा च विरूढा अधा शतक्रत्वो यूयमिमं मे अगदं कृतेति यमिमं भिषज्यामीत्येतत् - ७.२.४.[२७]

ता एता एकव्याख्यानाः । एतमेवाभि यथैतमेव भिषज्येदेतं पारयेत्ता अनुष्टुभो भवन्ति वाग्वा अनुष्टुब्वागु सर्वं भेषजं सर्वेणैवैनमेतद्भेषजेन भिषज्यति - ७.२.४.[२८]

अथातो निरुक्तानिरुक्तानामेव । यजुषा द्वावनड्वाहौ युनक्ति तूष्णीमितरान्यजुषा चतस्रः कृषति तूष्णीमितरास्तूष्णीं दर्भस्तम्बमुपदधाति यजुषाभिजुहोति तूष्णीमुदचमसान्निनयति यजुषा वपति - ७.२.४.[२९]

प्रजापतिरेषोऽग्निः । उभयम्वेतत्प्रजापतिर्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्यद्यजुषा करोति यदेवास्य निरुक्तं परिमितं रूपं तदस्य तेन संस्करोत्यथ यत्तूष्णीं यदेवास्यानिरुक्तमपरिमितं रूपं तदस्य तेन संस्तरोति स ह वा एतं सर्वं कृत्स्नं प्रजापतिं संस्करोति य एवं विद्वानेतदेवं करोति बाह्यानि रूपाणि निरुक्तानि भवन्त्यन्तराण्यनिरुक्तानि पशुरेष यदग्निस्तस्मात्पशोर्बाह्यानि रूपाणि निरुक्तानि भवन्त्यन्तराण्यनिरुक्तानि - ७.२.४.[३०]



##७.३.१ सोमक्रयणम्

चितो गार्हपत्यो भवति । अचित आहवनीयोऽथ राजानं क्रीणात्ययं वै लोको गार्हपत्यो द्यौराहवनीयोऽथ योऽयं वायुः पवत एष सोम एतं तदिमौ लोकावन्तरेण दधाति तस्मादेष इमौ लोकावन्तरेण पवते - ७.३.१.[१]

यद्वेव चिते गार्हपत्ये । अचित आहवनीयेऽथ राजानं क्रीणात्यात्मा वा अग्निः प्राणः सोम आत्मंस्तत्प्राणं मध्यतो दधाति तस्मादयमात्मन्प्राणो मध्यतः - ७.३.१.[२]

यद्वेव चिते गार्हपत्ये । अचित आहवनीयेऽथ राजानं क्रीणात्यात्मा वा अग्नी रसः सोम आत्मानं तद्रसेनानुषजति तस्मादयमान्तमेवात्मा रसेनानुषक्तः - ७.३.१.[३]

राजानं क्रीत्वा पर्युह्य । अथास्मा आतिथ्यं हविर्निर्वपति तस्य हविष्कृता वाचं विसृजतेऽथ वा एतद्व्यतिषजत्यध्वरकर्म चाग्निकर्म च कर्मणः समानतायै समानमिदं कर्मासदिति - ७.३.१.[४]

यद्वेव व्यतिषजति । आत्मा वा अग्निः प्राणोऽध्वर आत्मंस्तत्प्राणं मध्यतो दधाति तस्मादयमात्मन्प्राणो मध्यतः - ७.३.१.[५]

यद्वेव व्यतिषजति । आत्मा वा अग्नी रसोऽध्वर आत्मानं तद्रसेनानुषजति तस्मादयमान्तमेवात्मा रसेनानुषक्तोऽथाहवनीयस्यार्धमैति - ७.३.१.[६]

तद्धैके । उभयत्रैव पलाशशाखया व्युदूहन्त्युभयत्र वै चिनोतीति न तथा कुर्यादवस्यति वाव गार्हपत्येनोर्ध्व एवाहवनीयेन रोहति तस्मात्तथा न कुर्यात् - ७.३.१.[७]



अथ गार्हपत्य एवोषान्निवपति । नाहवनीयेऽयं वै लोको गार्हपत्यः पशव ऊषा अस्मिंस्तल्लोके पशून्दधाति तस्मादिमेऽस्मिंलोके पशवः - ७.३.१.[८]

अथाहवनीय एव पुष्करपर्णमुपदधाति । न गार्हपत्य आपो वै पुष्करपर्णं द्यौराहवनीयो दिवि तदपो दधात्युभयत्र सिकता निवपति रेतो वै सिकता उभयत्र वै विक्रियते तस्माद्रेतसोऽधि विक्रियाता इति - ७.३.१.[९]

ता नाना मन्त्राभ्यां निवपति । मनुष्यलोको वै गार्हपत्यो देवलोक आहवनीयो नानो वा एतद्यद्दैवं च मानुषं च द्राघीयसा मन्त्रेणाहवनीये निवपति ह्रसीयसा गार्हपत्ये द्राघीयो हि देवायुषं ह्रसीयो मनुष्यायुषं स पूर्वाः परिश्रिद्भ्यो गार्हपत्ये सिकता निवपति रेतो वै सिकता अस्माद्रेतसोऽधीमा विक्रियान्ता इति - ७.३.१.[१०]

तदाहुः । यद्योनिः परिश्रितो रेतः सिकता अथ पूर्वाः परिश्रिद्भ्यो गार्हपत्ये सिकता

निवपति कथमस्यैतद्रेतोऽपरासिक्तं परिगृहीतं भवतीत्युल्बं वा ऊषास्तद्यदूषान्पूर्वान्निवपत्येतेनो हास्यैतदुल्बेन रेतोऽपरासिक्तं परिगृहीतम्भवत्यथाहवनीये परिश्रितोऽभिमन्त्रयते तस्योक्तो बन्धुरथ सिकता निवपति रेतो वै सिकता एतयो अस्यैतद्योन्या रेतोऽपरासिक्तं परिगृहीतं भवति - ७.३.१.[११]

अथाहवनीय एवाप्यानवतीभ्यामभिमृशति । न गार्हपत्येऽयं वै लोको गार्हपत्यः स्वर्गो लोक आहवनीयोऽद्धो वा अयमस्मिंलोके जातो यजमानः स्वर्ग एव लोके प्रजिजनयिषितव्यस्तद्यदाहवनीय एवाप्यानवतीभ्यामभिमृशति न गार्हपत्ये स्वर्ग एवैनं तल्लोके प्रजनयति - ७.३.१.[१२]

लोगेष्टकोपधानम्

अथ लोगेष्टका उपदधाति । इमे वै लोका एषोऽग्निर्दिशो लोगेष्टका एषु तल्लोकेषु दिशो दधाति तस्मादिमा एषु लोकेषु दिशः - ७.३.१.[१३]



बाह्येनाग्निमाहरति । आप्ता वा अस्य ता दिशो या एषु लोकेष्वथ या इमांल्लोकान्परेण दिशस्ता अस्मिन्नेतद्दधाति - ७.३.१.[१४]

बहिर्वेदेरियं वै वेदिः । आप्ता वा अस्य ता दिशो या अस्यामथ या इमां परेण दिशस्ता अस्मिन्नेतद्दधाति - ७.३.१.[१५]

यद्वेव लोगेष्टका उपदधाति । प्रजापतेर्विस्रस्तस्य सर्वा दिशो रसोऽनु व्यक्षरत्तं यत्र देवाः समस्कुर्वंस्तदस्मिन्नेताभिर्लोगेष्टकाभिस्तं रसमदधुस्तथैवास्मिन्नयमेतद्दधाति - ७.३.१.[१६]

बाह्येनाग्निमाहरति । आप्तो वा अस्य स रसो य एषु लोकेष्वथ य इमांल्लोकान्पराङ्रसोऽत्यक्षरत्तमस्मिन्नेतद्दधाति - ७.३.१.[१७]

बहिर्वेदेरियं वै वेदिः । आप्तो वा अस्य स रसो योऽस्यामथ य इमां पराङ्सोऽत्यक्षरत्तमस्मिन्नेतद्दधाति - ७.३.१.[१८]

स्फ्येनाहरति । वज्रो वै स्फ्यो वीर्यं वै वज्रो वित्तिरियं वीर्येण वै वित्तिं विन्दते - ७.३.१.[१९]

स पुरस्तादाहरति । मा मा हिंसीज्जनिता यः पृथिव्या इति प्रजापतिर्वै पृथिव्यै जनिता मा मा हिंसीत्प्रजापतिरित्येतद्यो वा दिवं सत्यधर्मा व्यानडिति यो वा दिवं सत्यधर्माऽसृजतेत्येतद्यश्चापश्चन्द्राः प्रथमो जजानेति मनुष्या वा आपश्चन्द्रा यो मनुष्यान्प्रथमोऽसृजतेत्येतत्कस्मै देवाय हविषा विधेमेति प्रजापतिर्वै कस्तस्मै हविषा विधेमेत्येतत्तामाहृत्यान्तरेण परिश्रित आत्मन्नुपदधाति स यः प्राच्यां दिशि रसोऽत्यक्षरत्तमस्मिन्नेतद्दधात्यथो प्राचीमेवास्मिन्नेतद्दिशं दधाति - ७.३.१.[२०]



अथ दक्षिणतः । अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सहेति यथैव यजुस्तथा बन्धुर्वपां ते अग्निरिषितो अरोहदिति यद्वै किं चास्यां सास्यै वपा तामग्निरिषित उपादीप्तो रोहति तामाहृत्यान्तरेण पक्षसंधिमात्मन्नुपदधाति स यो दक्षिणायां दिशि रसोऽत्यक्षरत्तमस्मिन्नेतद्दधात्यथो दक्षिणामेवास्मिन्नेतद्दिशं दधाति - ७.३.१.[२१]

अथ पश्चात् । अग्ने यत्ते शुक्रं यच्चन्द्रं यत्पूतं यच्च यज्ञियमितीयं वा अग्निरस्यै तदाह तद्देवेभ्यो भरामसीति तदस्मै दैवाय कर्मणे हराम इत्येतत्तामाहृत्यान्तरेण पुच्छसंधिमात्मन्नुपदधाति स यः प्रतीच्यां दिशि रसोऽत्यक्षरत्तमस्मिन्नेतद्दधात्यथो प्रतीचीमेवास्मिन्नेतद्दिशं दधाति स न सम्प्रति पश्चादाहरेन्नेद्यज्ञपथाद्रसमाहराणीतीत इवाहरति - ७.३.१.[२२]

अथोत्तरतः । इषमूर्जमहमित आदमितीषमूर्जमहमित आदद इत्येतदृतस्य योनिमिति सत्यं वा ऋतं सत्यस्य योनिमित्येतन्महिषस्य धारामित्यग्निर्वै महिषः स हीदं जातो महान्त्सर्वमैष्णादा मा गोषु विशत्वा तनूष्वित्यात्मा वै तनूरा मा गोषु चात्मनि च

विशल्वित्येतज्जहामि सेदिमनिराममीवामिति सिकताः प्रध्वंसयति तद्यैव सेदिर्यानिरा यामीवा तामेतस्यां दिशि दधाति तस्मादेतस्यां दिशि प्रजा अशनायुकास्तामाहृत्यान्तरेण पक्षसंधिमात्मन्नुपदधाति स य उदीच्यां दिशि रसो
ऽत्यक्षरत्तमस्मिन्नेतद्दधात्यथो उदीचीमेवास्मिन्नेतद्दिशं दधाति - ७.३.१.[२३]

ता एता दिशः । ताः सर्वत उपदधाति सर्वतस्तद्दिशो दधाति तस्मात्सर्वतो दिशः सर्वतः समीचीः सर्वतस्तत्समीचीर्दिशो दधाति तस्मात्सर्वतः समीच्यो दिशस्ता नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हि दिशस्तिष्ठन्नुपदधाति तिष्ठन्तीव हि दिशोऽथो तिष्ठन्वै वीर्यवत्तरः - ७.३.१.[२४]

ता एता यजुष्मत्य इष्टकाः । ता आत्मन्नेवोपदधाति न पक्षपुच्छेष्वात्मन्ह्येव यजुष्मत्य इष्टका उपधीयन्ते न पक्षपुच्छेषु - ७.३.१.[२५]



तदाहुः । कथमस्यैताः पक्वाः शृता उपहिता भवन्तीति रसो वा एताः स्वयंशृत उ वै रसोऽथो यद्वै किं चैतमग्निं वैश्वानरमुपनिगच्छति तत एव तत्पक्वं शृतमुपहितं भवति - ७.३.१.[२६]

अथोत्तरवेदिं निवपति । इयं वै वेदिर्द्यौरुत्तरवेदिर्दिशो लोगेष्टकास्तद्यदन्तरेण वेदिं चोत्तरवेदिं च लोगेष्टका उपदधातीमौ तल्लोकावन्तरेण दिशो दधाति तस्मादिमौ लोकावन्तरेण दिशस्तां युगमात्रीं वा सर्वतः करोति चत्वारिंशत्पदां वा यतरथा कामयेताथ सिकता निवपति तस्योक्तो बन्धुः - ७.३.१.[२७]

ता उत्तरवेदौ निवपति । योनिर्वा उत्तरवेदिर्योनौ तद्रेतः सिञ्चति यद्वै योनौ रेतः सिच्यते तत्प्रजनिष्णु भवति ताभिः सर्वमात्मानं प्रच्छादयति सर्वस्मिंस्तदात्मन्रेतो दधाति तस्मात्सर्वस्मादेवात्मनो रेतः सम्भवति - ७.३.१.[२८]

अग्ने तव श्रवो वय इति । धूमो वा अस्य श्रवो वयः स ह्येनममुष्मिंलोके श्रावयति महि भ्राजन्ते अर्चयो विभावसविति महतो भ्राजन्तेऽर्चयः प्रभूवसवित्येतद्बृहद्भानो शवसा वाजमुक्थ्यमिति बलं वै शवो बृहद्भानो बलेनान्नमुक्थ्यमित्येतद्दधासि दाशुषे कव इति यजमानो वै दाश्वान्दधासि यजमानाय कव इत्येतत् - ७.३.१.[२९]

पावकवर्चाः शुक्रवर्चा इति । पावकवर्चा ह्येष शुक्रवर्चा अनूनवर्चा उदियर्षि भानुनेत्यनूनवर्चा उद्दीप्यसे भानुनेत्येतत्पुत्रो मातरा विचरन्नुपावसीति पुत्रो ह्येष मातरा विचरन्नुपावति पृणक्षि रोदसी उभे इतीमे वै द्यावापृथिवी रोदसी ते एष उभे पृणक्ति धूमेनामूं वृष्ट्येमाम् - ७.३.१.[३०]

ऊर्जो नपाज्जातवेदः सुशस्तिभिरिति । ऊर्जो नपाज्जातवेदः सुष्टुतिभिरित्येतन्मन्दस्व धीतिभिर्हित इति दीप्यस्व धीतिभिर्हित इत्येतत्त्वे इषः संदधुर्भूरिवर्पस इति त्वे इषः संदधुर्बहुवर्पस इत्येतच्चित्रोतयो वामजाता इति यथैव यजुस्तथा बन्धुः - ७.३.१.[३१]



इरज्यन्नग्ने प्रथयस्व जन्तुभिरिति । मनुष्या वै जन्तवो दीप्यमानोऽग्ने प्रथस्व मनुष्यैरित्येतदस्मे रायो अमर्त्येत्यस्मे रयिं दधदमर्त्येत्येतत्स दर्शतस्य वपुषो विराजसीति दर्शतस्य ह्येष वपुषो विराजति पृणक्षि सानसिं क्रतुमिति पृणक्षि सनातनं क्रतुमित्येतत् - ७.३.१.[३२]

इष्कर्तारमध्वरस्य प्रचेतसमिति । अध्वरो वै यज्ञः प्रकल्पयितारं यज्ञस्य प्रचेतसमित्येतत्क्षयन्तं राधसो मह इति क्षयन्तं राधसि महतीत्येतद्रातिं वामस्य सुभगां महीमिषमिति रातिं वामस्य सुभगाम्महतीमिषमित्येतद्दधासि सानसिं रयिमिति दधासि सनातनं रयिमित्येतत् - ७.३.१.[३३]

ऋतावानमिति । सत्यावानमित्येतन्महिषमित्यग्निर्वै महिषो विश्वदर्शतमिति विश्वदर्शतो ह्येषोऽग्निं सुम्नाय दधिरे पुरो जना इति यज्ञो वै सुम्नं यज्ञाय वा एतं पुरो दधते श्रुत्कर्णं

सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगेत्याश्रृण्वन्तं सप्रथस्तमं त्वा गिरा देवं मनुष्या हवामह इत्येतत् - ७.३.१.[३४]

स एषोऽग्निरेव वैश्वानरः । एतत्षड्डृचमारम्भायैवेमाः सिकता न्युप्यन्तेऽग्निमेवास्मिन्नेतद्वैश्वानरं रेतो भूतं सिञ्चति षड्डृचेन षड्डृतवः संवत्सरः संवत्सरो वैश्वानरः - ७.३.१.[३५]

तदाहुः । यद्रेतः सिकता उच्यन्ते किमासां रेतो रूपमिति शुक्ला इति ब्रूयाच्छुक्लं हि रेतोऽथो पृश्नय इति पृश्नीव हि रेतः - ७.३.१.[३६]

तदाहुः । यदार्द्रं रेतः शुष्काः सिकता निवपति कथमस्यैता आर्द्रा रेतोरूपम्भवन्तीति रसो वै छन्दांस्यार्द्र उ वै रसस्तद्यदेनाश्छन्दोभिर्निवपत्येवमु हास्यैता आर्द्रा रेतोरूपं भवन्ति - ७.३.१.[३७]



तदाहुः । कथमस्यैता अहोरात्राभ्यामुपहिता भवन्तीति द्वे वा अहोरात्रे शुक्लं च कृष्णं च द्वे सिकते शुक्ला च कृष्णा चैवमु हास्यैता अहोरात्राभ्यामुपहिता भवन्ति - ७.३.१.[३८]

तदाहुः । कथमस्यैता अहोरात्रैः सम्पन्ना अन्यूना अनतिरिक्ता उपहिता भवन्तीत्यनन्तानि वा अहोरात्राण्यनन्ताः सिकता एवमु हास्यैता अहोरात्रैः सम्पन्ना
अन्यूना अनतिरिक्ता उपहिता भवन्त्यथ कस्मात्समुद्रियं च्छन्द इत्यनन्तो वै समुद्रोऽनन्ताः सिकतास्तत्समुद्रियं छन्दः - ७.३.१.[३९]

तदाहुः । कथमस्यैताः पृथङ्नाना यजुर्भिरुपहिता भवन्तीति मनो वै यजुस्तदिदं मनो यजुः सर्वाः सिकता अनुविभवत्येवमु हास्यैताः पृथङ्नाना यजुर्भिरुपहिता भवन्ति - ७.३.१.[४०]

तदाहुः । कथमस्यैताः सर्वैश्छन्दोभिरुपहिता भवन्तीति यदेवैना एतेन षड्टचेन निवपति यावन्ति हि सप्तानां च्छन्दसामक्षराणि तावन्त्येतस्य षड्टचस्याक्षराण्येवमु हास्यैताः सर्वैश्छन्दोभिरुपहिता भवन्ति - ७.३.१.[४१]

यद्वेव सिकता निवपति । प्रजापतिरेषोऽग्निः सर्वमु ब्रह्म प्रजापतिस्तद्धैतद्ब्रह्मण उत्सन्नं यत्सिकता अथ यदनुत्सन्नमिदं तद्योऽयमग्निश्चीयते तद्यत्सिकता निवपति यदेव तद्ब्रह्मण उत्सन्नं तदस्मिन्नेतत्प्रतिदधाति ता असंख्याता अपरिमिता निवपति को हि तद्वेद यावत्तद्ब्रह्मण उत्सन्नं स ह वा एतं सर्वं कृत्स्नं प्रजापतिं संस्करोति य एवं विद्वान्सिकता निवपति - ७.३.१.[४२]

तदाहुः । कैतासामसंख्यातानां संख्येति द्वे इति ब्रूयाद्वे हि सिकते शुक्ला च कृष्णा चाथो सप्तविंशतिशतानीति ब्रूयादेतावन्ति हि संवत्सरस्याहोरात्राण्यथो द्वे द्वापञ्चाशे शते इत्येतावन्ति ह्येतस्य षड्टचस्याक्षराण्यथो पञ्चविंशतिरिति पञ्चविंशं हि रेतः - ७.३.१.[४३]



ता एता यजुष्मत्य इष्टकाः । ता आत्मन्नेवोपदधाति न पक्षपुच्छेष्वात्मन्ह्येव यजुष्मत्य इष्टका उपधीयन्ते न पक्षपुच्छेषु न सादयति नेद्रेतः प्रजातिं स्थापयानीति - ७.३.१.[४४]

अथैना आप्यानवतीभ्यामभिमृशति । इदमेवैतद्रेतः सिक्तमाप्याययति तस्माद्योनौ रेतः सिक्तमाप्यायते सौमीभ्यां प्राणो वै सोमः प्राणं तद्रेतसि दधाति तस्माद्रेतः सिक्तं प्राणमभिसम्भवति पूयेद्ध यद्दते प्राणात्सम्भवेदेषो हैवात्र सूददोहाः प्राणो वै सोमः सूददोहाः - ७.३.१.[४५]

आप्यायस्व समेतु ते । विश्वतः सोम वृष्ण्यमिति रेतो वै वृष्ण्यमाप्यायस्व समेतु ते सर्वतः सोम रेत इत्येतद्भवा वाजस्य संगथ इत्यन्नं वै वाजो भवान्नस्य संगथ इत्येतत्सं ते पयांसि समु यन्ति वाजा इति रसो वै पयोऽन्नं वाजाः सं ते रसाः समु यन्त्वन्नानीत्येतत्सं वृष्ण्यभिमातिषाह इति सं रेतांसि पाप्मसह इत्येतदाप्यायमानो अमृताय सोमेति। प्रजात्यां तदमृतं दधाति । तस्मात्प्रजातिरमृता।दिवि श्रवांस्युत्तमानि धिष्वेति चन्द्रमा वा

अस्य दिवि श्रव उत्तमं स ह्येनममुष्मिंलोके श्रावयति द्वाभ्यामाप्याययति गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः - ७.३.१.[४६]

अथातः सम्पदेव । चतस्रो लोगेष्टका उपदधाति षड्चेन निवपति द्वाभ्यामाप्याययति तद्द्वादश द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति - ७.३.१.[४७]

७.३.२

आप्यानवतीभ्यामभिमृश्य । प्रत्येत्यातिथ्येन प्रचरत्यातिथ्येन प्रचर्य प्रवर्ग्योपसद्भ्यां प्रचरति प्रवर्ग्योपसद्भ्यां प्रचर्याथैतां चर्मणि चितिं समवशमयन्ति तद्यच्चर्मणि चर्म वै रूपं रूपाणामुपाप्त्यै लोमतो लोम वै रूपं रूपाणामुपाप्त्यै रोहिते रोहिते ह सर्वाणि रूपाणि सर्वेषां रूपाणामुपाप्त्या आनडुहेऽग्निरेष यदनड्वानग्निरूपाणामुपाप्त्यै प्राचीनग्रीवे तद्धि देवत्रा - ७.३.२.[१]



तदग्रेण गार्हपत्यम् । अन्तर्वेद्युत्तरलोम प्राचीनग्रीवमुपस्तृणाति तदेतां चितिं समवशमयन्त्यथ प्रोक्षति तद्यत्प्रोक्षति शुद्धमेवैतन्मेध्यं करोत्याज्येन तद्धि शुद्धं मेध्यमथो अनभ्यारोहाय न हि किंचनान्यद्धविराज्येन प्रोक्षन्ति तूष्णीमनिरुक्तं वै तद्यत्तूष्णीं सर्वं वा अनिरुक्तं सर्वेणैवैतच्छुद्धं मेध्यं करोत्यथो अनभ्यारोहाय न हि किंचनान्यद्धविस्तूष्णीं प्रोक्षन्ति - ७.३.२.[२]

यद्वेव प्रोक्षति । हविर्वा एतत्तदेतदभिघारयति यद्वै हविरभ्यक्तं यदभिघारितं तज्जुष्टं तन्मेध्यमाज्येनाज्येन हि हविरभिघारयन्ति तूष्णीं तूष्णीं हि हविरभिघारयन्ति दर्भैस्ते हि शुद्धा मेध्या अग्रैरग्रं हि देवानाम् - ७.३.२.[३]

तदाहुः । यत्प्रथमामेव चितिं प्रोक्षति कथमस्यैष सर्वोऽग्निः प्रोक्षितो भवति कथं चर्मणि प्रणीतः कथमश्वप्रणीत इति यदेवात्र सर्वासां चितीनामिष्टकाः प्रोक्षत्येवमु हास्यैष

सर्वोऽग्निः प्रोक्षितो भवत्येवं चर्मणि प्रणीत एवमश्वप्रणीत उद्यच्छन्त्येतां चितिम् - ७.३.२.[४]

अथाहाग्निभ्यः प्रह्रियमाणेभ्योऽनुब्रूहीति । एतद्वै देवानुपप्रैष्यत एतं यज्ञं तंस्यमानात्रक्षांसि नाष्ट्रा अजिघांसन्न यक्ष्यध्वे न यज्ञं तंस्यध्व इति तेभ्य एतानग्नीनेता इष्टका वज्रान्क्षुरपवीन्कृत्वा प्राहरंस्तैरेनानस्तृण्वत तान्त्स्तृत्वाऽभयेऽनाष्ट्र ऽएतं यज्ञमतन्वत - ७.३.२.[५]

तद्वा एतत्क्रियते । यद्देवा अकुर्वन्निदं नु तानि रक्षांसि देवैरेवापहतानि यत्त्वेतत्करोति यद्देवा अकुर्वंस्तत्करवाणीत्यथो यदेव रक्षो यः पाप्मा तेभ्य एतानग्नीनेता इष्टका वज्रान्क्षुरपवीन्कृत्वा प्रहरति तैरेनान्त्स्तृणुते तान्त्स्तृत्वाभयेऽनाष्ट्र ऽएतं यज्ञं तनुते - ७.३.२.[६]



तद्यदग्निभ्य इति । बहवो ह्येतेऽग्नयो यदेताश्चितयोऽथ यत्प्रह्रियमाणेभ्य इति प्र हि हरति - ७.३.२.[७]

तद्धैकेऽन्वाहुः । पुरीष्यासो अग्नयः प्रावणेभिः सजोषस इति प्रायणरूपं न तथा कुर्यादाग्नेयीरेव गायत्रीः कामवतीरनुब्रूयादा ते वत्सो मनो यमत्तुभ्यं ता अङ्गिरस्तमाग्निः प्रियेषु धामस्विति - ७.३.२.[८]

आग्नेयीरन्वाह । अग्निरूपाणामुपाप्त्यै कामवतीः कामानामुपाप्त्यै गायत्रीर्गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतं सिञ्चति तिस्रस्त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतं सिञ्चति ताः सप्त सम्पद्यन्ते सह त्रिरनूक्ताभ्यां सप्तचितिकोऽग्निः सप्तऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवत्युपांश्वन्वाह रेतो वा अत्र यज्ञ उपांशु वै रेतः सिच्यते पश्चादनुब्रुवन्नन्वेति च्छन्दोभिरेवैतद्यज्ञं पश्चादभिरक्षन्नेति - ७.३.२.[९]

अथाश्वं शुक्लं पुरस्तान्नयन्ति । एतद्वै देवा अबिभयुर्यद्वै न इह रक्षांसि नाष्ट्रा न हन्युरिति त एतं वज्रमपश्यन्नमुमेवादित्यमसौ वा आदित्य एषोऽश्वस्तऽ एतेन वज्रेण पुरस्ताद्रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्रे स्वस्ति समाश्नुवत तथैवैतद्यजमान एतेन वज्रेण पुरस्ताद्रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्रे स्वस्ति समश्नुत आगच्छन्त्यग्निं दक्षिणतः पुच्छस्य चितिमुपनिदधत्युत्तरतोऽश्वमाक्रमयन्ति - ७.३.२.[१०]

तमुत्तरार्धेनाग्नेः । अन्तरेण परिश्रितः प्राञ्चं नयन्ति तत्प्राच्यै दिशः पाप्मानमपहन्ति तं दक्षिणा तद्दक्षिणायै दिशः पाप्मानमपहन्ति तं प्रत्यञ्चं तत्प्रतीच्यै दिशः पाप्मानमपहन्ति तमुदञ्चं तदुदीच्यै दिशः पाप्मानमपहन्ति सर्वाभ्य एवैतद्दिग्भ्यो रक्षांसि नाष्ट्रा अपहत्याथैनमुदञ्चं प्राञ्चं प्रसृजति तस्योक्तो बन्धुः - ७.३.२.[११]

तं प्रत्यञ्चं यन्तम् । एतां चितिमवघ्रापयत्यसौ वा आदित्य एषोऽश्व इमा उ सर्वाः प्रजा या इमा इष्टकास्तद्यदवघ्रापयत्यसावेव तदादित्य इमाः प्रजा अभिजिघ्रति तस्मादु हैतत्सर्वोऽस्मीति मन्यते प्रजापतेर्वीर्येण तद्यत्प्रत्यञ्चं यन्तमवघ्रापयति प्रत्यङ्ह्येवैष यन्निमाः सर्वाः प्रजा अभिजिघ्रति - ७.३.२.[१२]



यद्वेवावघ्रापयति । असौ वा आदित्य एषोऽश्व इम उ लोका एताः स्वयमातृण्णास्तद्यदवघ्रापयत्यसावेव तदादित्य इमांल्लोकान्त्सूत्रे समावयते तद्यत्तत्सूत्रमुपरि तस्य बन्धुः - ७.३.२.[१३]

यद्वेवाघ्रापयति । अग्निर्देवेभ्य उदक्रामत्सोऽपः प्राविशत्ते देवाः प्रजापतिमब्रुवंस्त्वमिममन्विच्छ स तुभ्यं स्वाय पित्र आविर्भविष्यतीति तमश्वः शुक्लो भूत्वाऽन्वैच्छत्तमद्भ्य उपोदासृप्तं पुष्करपर्णे विवेद तमभ्यवेक्षां चक्रे स हैनमुदुवोष तस्मादुवोष तस्मादश्वः शुक्ल उदुष्टमुख इवाथो ह दुरक्षो भावुकस्तमु वा ऋत्वेव हिंसित्वेव मेने तं होवाच वरं ते ददामीति - ७.३.२.[१४]

स होवाच । यस्त्वानेन रूपेणान्विच्छाद्विन्दादेव त्वा स इति स यो हैनमेतेन रूपेणान्विच्छति विन्दति हैनं वित्त्वा हैवैनं चिनुते - ७.३.२.[१५]

स शुक्लः स्यात् । तद्ध्येतस्य रूपं य एष तपति यदि शुक्लं न विन्देदप्यशुक्लः स्यादश्वस्त्वेव स्याद्यद्यश्वं न विन्देदप्यनड्वानेव स्यादाग्नेयो वा अनड्वानग्निरु सर्वेषां पाप्मनामपहन्ता - ७.३.२.[१६]

अथातोऽधिरोहणस्यैव । तं हैके पुरस्तात्प्रत्यञ्चमधिरोहन्ति पश्चाद्वा प्राञ्चं न तथा कुर्यात्पशुरेष यदग्निर्यो वै पशुं पुरस्तात्प्रत्यञ्चमधिरोहति विषाणाभ्यां तं हन्त्यथ यः पश्चात्प्राञ्चं पद्भ्यां तमात्मनेवैनमारोहेद्यं वा आत्मना पशुमारोहन्ति स पारयति स न हिनस्त्युत्तरतो यं हि कं च पशुमारोहन्त्युत्तरत एवैनमारोहन्त्यारुह्याग्निमौत्तरवेदिकं कर्म कृत्वाऽऽत्मन्नग्निं गृह्णीत आत्मन्नग्निं गृहीत्वा सत्यं साम गायति पुष्करपर्णमुपदधाति तस्यातः - ७.३.२.[१७]



अथैतं साये भूतेऽश्वं परिणयन्ति । एतद्वै देवा अबिभयुर्यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति तस्मा एतं वज्रमभिगोप्तारमकुर्वन्नमुमेवादित्यमसौ वा आदित्य एषोऽश्वस्तथैवास्मा अयमेतं वज्रमभिगोप्तारं करोति - ७.३.२.[१८]

तं वा उपास्तमयमादित्यस्य परिणयति । एष वा अस्य प्रत्यक्षं दिवा गोप्ता भवति रात्रिसाचयान्यु वै रक्षांसि रात्र्या एवास्मा एतं वज्रमभिगोप्तारं करोति सर्वतः परिणयति सर्वत एवास्मा एतं वज्रमभिगोप्तारं करोति त्रिष्कृत्वः परिणयति त्रिवृतमेवास्मा एतं वज्रमभिगोप्तारं करोत्यथैनमुदञ्चं प्राञ्चं प्रसृजति तस्योक्तो बन्धुरथ स पुनर्विपल्ययते तस्योपरि बन्धुः - ७.३.२.[१९]

##७.४.१
आत्मन्नग्निं गृह्णीते चेष्यन् । आत्मनो वा एतमधिजनयति यादृशाद्वै जायते तादृङ्ङेव भवति स यदात्मन्नगृहीत्वाग्निं चिनुयान्मनुष्यादेव मनुष्यं

जनयेन्मर्त्यान्मर्त्यमनपहतपाप्मनोऽनपहतपाप्मानमथ यदात्मन्नग्निं गृहीत्वा चिनोति तदग्नेरेवाध्यग्निं जनयत्यमृतादमृतमपहतपाप्मनोऽपहतपाप्मानम् - ७.४.१.[१]

स गृह्णाति । मयि गृह्णाम्यग्रे अग्निमिति तदात्मन्नेवाग्रेऽग्निं गृह्णाति रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेति तदु सर्वा आशिष आत्मन्गृह्णीते मामु देवताः सचन्तामिति तदु सर्वान्देवानात्मन्गृह्णीते तद्यत्किं चात्मनोऽधि जनयिष्यन्भवति
तत्सर्वमात्मन्गृह्णीते स वै तिष्ठन्नात्मन्नग्निं गृहीत्वानूपविश्य चिनोति पशुरेष यदग्निस्तस्मात्पशुस्तिष्ठन्गर्भं धित्वानूपविश्य विजायते - ७.४.१.[२]

अथ सत्यं साम गायति । एतद्वै देवा अब्रुवन्त्सत्यमस्य मुखं करवाम ते सत्यं भविष्यामः सत्यं नोऽनुवर्त्स्यति सत्यो नः स कामो भविष्यति यत्कामा एतत्करिष्यामह इति - ७.४.१.[३]



त एतत्सत्यं साम पुरस्तादगायन् । तदस्य सत्यं मुखमकुर्वंस्ते सत्यमभवन्त्सत्यमेनानन्ववर्तत सत्य एषां स कामोऽभवद्यत्कामा एतदकुर्वत - ७.४.१.[४]

तथैवैतद्यजमानः । यत्सत्यं साम पुरस्ताद्गायति तदस्य सत्यं मुखं करोति स सत्यं भवति सत्यमेनमनुवर्तते सत्योऽस्य स कामो भवति यत्काम एतत्कुरुते - ७.४.१.[५]

तद्यत्तत्सत्यम् । आप एव तदापो हि वै सत्यं तस्माद्येनापो यन्ति तत्सत्यस्यरूपमित्याहुरप एव तस्य सर्वस्याग्रमकुर्वंस्तस्माद्यदैवापो यन्त्यथेदं सर्वं जायते यदिदं किं च - ७.४.१.[६]

अथ पुष्करपर्णमुपदधाति । योनिर्वै पुष्करपर्णं योनिमेवैतदुपदधाति - ७.४.१.[७]

यद्वेव पुष्करपर्णमुपदधाति । आपो वै पुष्करं तासामियं पर्णं यथा ह वा इदं पुष्करपर्णमप्स्वध्याहितमेवमियमप्स्वध्याहिता सेयं योनिरग्नेरियं ह्यग्निरस्यै हि सर्वोऽग्निश्चीयत इमामेवैतदुपदधाति तामनन्तर्हितां सत्यादुपदधातीमां तत्सत्ये

प्रतिष्ठापयति तस्मादियं सत्ये प्रतिष्ठिता तस्माद्वियमेव सत्यमियं ह्येवैषां लोकानामद्धातमाम् - ७.४.१.[८]

अपां पृष्ठमसि योनिरग्नेरिति । अपां हीयं पृष्ठं योनिर्हीयमग्नेः समुद्रमभितः पिन्वमानमिति समुद्रो हीमामभितः पिन्वते वर्धमानो महां आ च पुष्कर इति वर्धमानो महीयस्व पुष्कर इत्येतद्दिवो मात्रया वरिम्णा प्रथस्वेत्यनुविमार्ष्ट्यसौ वा आदित्य एषोऽग्निर्नो हैतमन्यो दिवो वरिमा यन्तुमर्हति द्यौर्भूत्वैनं यच्छेत्येवैतदाह स्वराजोपदधाति स्वाराज्यं ह्यपां सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः - ७.४.१.[९]

अथ रुक्ममुपदधाति । असौ वा आदित्य एष रुक्म एष हीमाः सर्वाः प्रजा अतिरोचते रोचो ह वै तं रुक्म इत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा अमुमेवैतदादित्यमुपदधाति स हिरण्मयो भवति परिमण्डल एकविंशतिनिर्बाधस्तस्योक्तो बन्धुरधस्तान्निर्बाधमुपदधाति रश्मयो वा एतस्य निर्बाधा अवस्ताद्‌ु वा एतस्य रश्मयः - ७.४.१.[१०]



तं पुष्करपर्ण उपदधाति । योनिर्वै पुष्करपर्णं योनावेवैनमेतत्प्रतिष्ठापयति - ७.४.१.[११]

यद्वेव पुष्करपर्ण उपदधाति । प्रतिष्ठा वै पुष्करपर्णमियं वै पुष्करपर्णमियमु वै प्रतिष्ठा यो वा अस्यामप्रतिष्ठितोऽपि दूरे सन्नप्रतिष्ठित एव स रश्मिभिर्वा एषोऽस्यां प्रतिष्ठितोऽस्यामेवैनमेतत्प्रतिष्ठायां प्रतिष्ठापयति - ७.४.१.[१२]

यद्वेव पुष्करपर्ण उपदधाति । इन्द्रो वृत्रं हत्वा नास्तृषीति मन्यमानोऽपः प्राविशत्ता अब्रवीद्बिभेमि वै पुरं मे कुरुतेति स योऽपां रस आसीत्तमूर्ध्वं समुदौहंस्तामस्मै पुरमकुर्वंस्तद्यदस्मै पुरमकुर्वंस्तस्मात्पूष्करम्पूष्करं ह वै तत्पुष्करमित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्तद्यत्पुष्करपर्ण उपदधाति यमेवास्यैतमापो रसं समुदौहन्यामस्मै पुरमकुर्वंस्तस्मिन्नेवैनमेतत्प्रतिष्ठापयति - ७.४.१.[१३]

ब्रह्म जज्ञानं प्रथमं पुरस्तादिति । असौ वा आदित्यो ब्रह्माहरहः पुरस्ताज्जायते वि सीमतः सुरुचो वेन आवरिति मध्यं वै सीमेमे लोकाः सुरुचोऽसावादित्यो वेनो यद्वै प्रजिजनिषमाणोऽवेनत्तस्माद्वेनस्तानेष सीमतो मध्यतो विवृण्वन्नुदेति स बुध्न्या उपमा अस्य विष्ठा इति दिशो वा अस्य बुध्न्या उपमा विष्ठास्ता ह्येष उपवितिष्ठते सतश्च योनिमसतश्च विवरितीमे वै लोकाः सतश्च योनिरसतश्च यच्च ह्यस्ति यच्च न तदेभ्य एव लोकेभ्यो जायते त्रिष्टुभोपदधाति त्रैष्टभो ह्येष सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः - ७.४.१.[१४]

अथ पुरुषमुपदधाति । स प्रजापतिः सोऽग्निः स यजमानः स हिरण्मयो भवति ज्योतिर्वै हिरण्यं ज्योतिरग्निरमृतं हिरण्यममृतमग्निः पुरुषो भवति पुरुषो हि प्रजापतिः - ७.४.१.[१५]

यद्वेव पुरुषमुपदधाति । प्रजापतेर्विस्रस्ताद्रम्या तनूर्मध्यत उदक्रामत्तस्यामेनमुत्क्रान्तायां देवा अजहुस्तं यत्र देवाः समस्कुर्वंस्तदस्मिन्नेतां रम्यां तनूं मध्यतोऽदधुस्तस्यामस्य देवा अरमन्त तद्यदस्यैतस्यां रम्यायां तन्वां देवा अरमन्त तस्माद्धिरम्यं हिरम्यं ह वै तद्धिरण्यमित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्तथैवास्मिन्नयमेतां रम्यां तनूं मध्यतो दधाति तस्यामस्य देवारमन्ते प्राणो वा अस्य सा रम्या तनूः प्राणमेवास्मिन्नेतं मध्यतो दधाति - ७.४.१.[१६]



तं रुक्मऽउपदधाति । असौ वा आदित्य एष रुक्मोऽथ य एष एतस्मिन्मण्डले पुरुषः स एष तमेवैतदुपदधाति - ७.४.१.[१७]

उत्तानमुपदधाति । एतद्वै देवा अब्रुवन्यदि वा इमावर्वाञ्चा उपधास्यामः सर्वमेवेदं प्रधक्ष्यतो यद्यु पराञ्चौ पराञ्चावेव तप्स्यतो यद्यु सम्यञ्चावन्तरैवैतावेतज्ज्योतिर्भविष्यत्यथो अन्योऽन्यं हिंसिष्यत इति तेऽर्वाञ्चमन्यमुपादधुः पराञ्चमन्यं स एष रश्मिभिरर्वाङ्पति रुक्मः प्राणैरेष ऊर्ध्वः पुरुषः प्राञ्चमुपदधाति प्राङ्ह्येषोऽग्निश्चीयते- ७.४.१.[१८]

हिरण्यगर्भः समवर्तताग्र इति । हिरण्यगर्भो ह्येष समवर्तताग्रे भूतस्य जातः पतिरेक आसीदित्येष ह्यस्य सर्वस्य भूतस्य जातः पतिरेक आसीत्स दाधार पृथिवीं द्यामुतेमामित्येष वै दिवं च पृथिवीं च दाधार कस्मै देवाय हविषा विधेमेति प्रजा पतिर्वै कस्तस्मै हविषा विधेमेत्येतत् - ७.४.१.[१९]

द्रप्सश्चस्कन्द पृथिवीमनु द्यामिति । असौ वा आदित्यो द्रप्सः स दिवं च पृथिवीं च स्कन्दतीत्यमूमितीमामिमं च योनिमनु यश्च पूर्व इतीमं च लोकममुंचेत्येतदथो यच्चेदमेतर्हि चीयते यच्चादः पूर्वमचीयतेति समानं योनिमनुसंचरन्तमिति समानं ह्येष एतं योनिमनु संचरति द्रप्सं जुहोम्यनु सप्त होत्रा इत्यसौ वा आदित्यो द्रप्सो दिशः सप्त होत्रा अमुं तदादित्यं दिक्षु प्रतिष्ठापयति - ७.४.१.[२०]

द्वाभ्यामुपदधाति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदुपदधाति त्रिष्टुब्भ्यां त्रैष्टुभो ह्येष सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः - ७.४.१.[२१]



अथ साम गायति । एतद्वै देवा एतं पुरुषमुपधाय तमेतादृशमेवापश्यन्यथैतच्छुष्कं फलकम्- ७.४.१.[२२]

तेऽब्रुवन् । उप तज्जानीत यथास्मिन्पुरुषे वीर्यं दधामेति तेऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत यथास्मिन्पुरुषे वीर्यं दधामेति- ७.४.१.[२३]

ते चेतयमानाः ।एतत्सामापश्यंस्तदगायंस्तदस्मिन्वीर्यमदधुस्तथैवास्मिन्नयमेतद्दधाति पुरुषे गायति पुरुषे तद्वीर्यं दधाति चित्रे गायति सर्वाणि हि चित्राण्यग्निस्तमुपधाय न पुरस्तात्परीयान्नेन्मायमग्निर्हिनसदिति - ७.४.१.[२४]

अथ सर्पनामैरुपतिष्ठते । इमे वै लोकाः सर्पास्ते हानेन सर्वेण सर्पन्ति यदिदं किं च सर्वेषामु हैष देवानामात्मा यदग्निस्ते देवा एतमात्मानमुपधायाबिभयुर्यद्वै न इमे लोका अनेनात्मना न सर्पेयुरिति - ७.४.१.[२५]

त एतानि सर्पनामान्यपश्यन् । तैरुपातिष्ठन्त तैरस्मा इमांल्लोकानस्थापयंस्तैरनमयन्यदनमयंस्तस्मात्सर्पनामानि तथैवैतद्यजमानो यत्सर्पनामैरुपतिष्ठत इमानेवास्मा एतल्लोकान्त्स्थापयतीमांल्लोकान्नमयति तथो हास्यैतऽएतेनात्मना न सर्पन्ति- ७.४.१.[२६]

यद्वेव सर्पनामैरुपतिष्ठत । इमे वै लोकाः सर्पा यद्धि किं च सर्पत्येष्वेव तल्लोकेषु सर्पति तद्यत्सर्पनामैरुपतिष्ठते यैवैषु लोकेषु नाष्ट्रा योव्यध्वरो या शिमिदा तदेवैतत्सर्वं शमयति- ७.४.१.[२७]



नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नम इति य एवैषु त्रिषु लोकेषु सर्पास्तेभ्य एतन्नमस्करोति - ७.४.१.[२८]

या इषवो यातुधानानामिति । यातुधानप्रेषिता हैके दशन्ति ये वा वनस्पतीमनु ये वावटेषु शेरते तेभ्यः सर्पेभ्यो नम इति ये चैव वनस्पतिषु सर्पा ये चावटेषु शेरते तेभ्य एतन्नमस्करोति - ७.४.१.[२९]

ये वाऽमी रोचने दिवो । ये वा सूर्यस्य रश्मिषु येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नम इति यत्र यत्रैते तदेवैभ्य एतन्नमस्करोति नमो नम इति यज्ञो वै नमो यज्ञेनैवैनानेतन्नमस्कारेण नमस्यति तस्मादु ह नायज्ञियं ब्रूयान्नमस्त इति यथा हैनं ब्रूयाद्यज्ञस्त इति तादृक्तत् - ७.४.१.[३०]

त्रिभिरुपतिष्ठते । त्रय इमे लोका अथो त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मा एतदिमांल्लोकान्त्स्थापयत्यथो तावतैवैतदिदं सर्वं शमयति तिष्ठन्नुपतिष्ठते तिष्ठन्तीव वा इमे लोका अथो तिष्ठन्वै वीर्यवत्तरः - ७.४.१.[३१]

अथैनमुपविश्याभिजुहोति । आज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः सर्वतः परिसर्पं सर्वाभ्य एवैनमेतद्दिग्भ्योऽन्नेन प्रीणाति - ७.४.१.[३२]

यद्वेवैनमभिजुहोति । एतद्वै देवा एतमात्मानमुपधायाबिभयुर्यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति त एतान्राक्षोघ्नान्प्रतिसरानपश्यन्कृणुष्व पाजः प्रसितिं न पृथ्वीमिति राक्षोघ्ना वै प्रतिसरास्त एतैः प्रतिसरैः सर्वाभ्यो दिग्भ्यो रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्र एतमात्मानं समस्कुर्वत तथैवैतद्यजमान एतैः प्रतिसरैः सर्वाभ्यो दिग्भ्यो रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्र एतमात्मानं संस्कुरुते- ७.४.१.[३३]



आज्येन जुहोति । वज्रो वा आज्यं वज्रेणैवैतद्रक्षांसि नाष्ट्रा अपहन्ति पञ्चगृहीतेन पञ्चचितिकोऽग्निः पञ्चऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैतद्रक्षांसि नाष्ट्रा अपहन्त्याग्नेयीभिरग्निर्वै ज्योती रक्षोहाग्निनैवैतद्रक्षांसि नाष्ट्रा अपहन्ति त्रिष्टुब्भिर्वज्रो वै त्रिष्टुब्वज्रेणैवैतद्रक्षांसि नाष्ट्रा अपहन्ति सर्वतः परिसर्पं सर्वाभ्य एवैतद्दिग्भ्यो रक्षांसि नाष्ट्रा अपहन्ति - ७.४.१.[३४]

पश्चादग्नेः प्राङासीनो ।ऽथोत्तरतो दक्षिणाथ पुरस्तात्प्रत्यङ्ङथ जघनेन परीत्य दक्षिणत उदङ्ङासीनस्तद्दक्षिणावृत्तद्धि देवत्राथानुपरीत्य पश्चात्प्राङासीनस्तथो हास्यैतत्प्रागेव कर्म कृतं भवति - ७.४.१.[३५]

अथ स्रुचा उपदधाति । बाहू वै स्रुचौ बाहू एवास्मिन्नेतत्प्रतिदधाति ते यत्स्रुचौ भवतः स्रुचौ हि बाहू इदमेव कपुच्छलमयं दण्डो द्वे भवतो द्वौ हीमौ बाहू पार्श्वत उपदधाति पार्श्वतो हीमौ बाहू - ७.४.१.[३६]

कार्ष्मर्यमयीं दक्षिणत उपदधाति । एतद्वै देवा अबिभयुर्यद्वै नो यज्ञं दक्षिणतो रक्षांसि नाष्ट्रा न हन्युरिति त एतं रक्षोहणं वनस्पतिमपश्यन्कार्ष्मर्यं त एतेन वनस्पतिना दक्षिणतो रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्र एतं यज्ञमतन्वत तथैवैतद्यजमान एतेन वनस्पतिना दक्षिणतो रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्र एतं यज्ञं तनुत आज्येन पूर्णा भवति वज्रो वा आज्यं वज्रेणैवैतद्दक्षिणतो रक्षांसि नाष्ट्रा अपहन्ति - ७.४.१.[३७]

अथौदुम्बरीमुत्तरत उपदधाति । ऊर्ग्वै रस उदुम्बर ऊर्जमेवास्मिन्नेतद्रसं दधाति दध्ना पूर्णा भवति रसो वै दधि रसमेवास्मिन्नेतद्दधाति - ७.४.१.[३८]

यद्वेव स्रुचा उपदधाति । प्रजापतेर्विस्रस्तस्याग्निस्तेज आदाय दक्षिणाऽकर्षत्सोऽत्रोदरमद्यत्कृष्ट्वोदरमत्तस्मात्कार्ष्मर्योऽथास्येन्द्र ओज आदायोदङ्ङुदक्रामत्स उदुम्बरोऽभवत्- ७.४.१.[३९]



तावब्रवीत् । उप मेतं प्रति म एतद्धत्तं येन मे युवमुदक्रमिष्टमिति ताभ्यां वै नौ सर्वमन्नं प्रयच्छेति तौ वै मा बाहू भूत्वा प्रपद्येथामिति तथेति ताभ्यां वै सर्वमन्नं प्रायच्छत्तावेनं बाहू भूत्वा प्रापद्येतां तस्माद्बाहुभ्यामेवान्नं क्रियते बाहुभ्यामद्यते बाहुभ्यां हि स सर्वमन्नम्प्रायच्छत् - ७.४.१.[४०]

स कार्ष्मर्यमयीं दक्षिणत उपदधाति । अग्नेष्ट्वा तेजसा सादयामीति यदेवास्य तदग्निस्तेज आदाय दक्षिणाकर्षत्तदस्मिन्नेतत्प्रतिदधात्यग्निर्मूर्द्धा दिवः ककुदित्येष उ सोऽग्निर्गायत्र्या गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनामेतदुपदधाति घृतेन पूर्णा भवत्याग्नेयं वै घृतं स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति - ७.४.१.[४१]

अथौदुम्बरीमुत्तरत उपदधाति । इन्द्रस्य त्वौजसा सादयामीति यदेवास्य तदिन्द्र ओज आदायोदङ्ङुदक्रामत्तदस्मिन्नेतत्प्रतिदधाति भुवो यज्ञस्य रजसश्च नेतेत्येष उ स इन्द्रः सा यदाग्नेय्यग्निकर्म ह्यथ यत्त्रिष्टुप्त्रैष्टुभो हीन्द्र ऐन्द्राग्नोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनामेतदुपदधातीन्द्राग्नी वै सर्वे देवाः सर्वदेवत्योऽग्निर्यावानग्निर्यावत्यस्य मात्रा

तावतैवैनामेतदुपदधाति दध्ना पूर्णा भवत्यैन्द्रं वै दधि स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति - ७.४.१.[४२]

तावस्यैताविन्द्राग्नी एव बाहू । तावेनं तेजसा च वीर्येण च सह प्रपद्येते स सम्प्रत्युरः पुरुषमाकाश्य यत्राभ्याप्नोति तदालिख्यैनेऽउपदधात्येष हैतयोर्लोकः - ७.४.१.[४३]

ते हैके तिरश्च्या उपदधति । तिर्यञ्चौ वा इमौ बाहू इति न तथा कुर्यात्प्राच्यावेवोपदध्यात्प्राङ्ह्येषोऽग्निश्चीयतेऽथो एवं वै बाहू वीर्यवत्तरौ ते नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हीमौ बाहू - ७.४.१.[४४]

तदाहुः । नैतस्य पुरुषस्य बाहू कुर्यादितौ वा अस्य बाहू ये एते स्रुचौ नेदतिरेचयानीति स वै कुर्यादेवैतौ वा अस्य बाहू अन्वेते स्रुचावथो एतौ पक्षावथो यान्येतस्मिन्नग्नौ रूपाण्युपधास्यन्भवति यान्स्तोमान्यानि पृष्ठानि यानि छन्दांस्येतयोरेव सा संस्कृतिरेतयोर्वृद्धिस्तस्माद् कुर्यादेवैतस्य पुरुषस्य बाहू - ७.४.१.[४५]



##७.४.२
स्वयमातृण्णामुपदधाति । इयं वै स्वयमातृण्णेमामेवैतदुपदधाति तामनन्तर्हितां पुरुषादुपदधात्यन्नं वै स्वयमातृण्णेयं वै स्वयमातृण्णेयमु वा अन्नमस्यां हि सर्वमन्नं पच्यतेऽनन्तर्हितमेवास्मादेतदन्नं दधात्युत्तरामुत्तरमेवास्मादेतदन्नं दधाति - ७.४.२.[१]

यद्वेव स्वयमातृण्णामुपदधाति । प्राणो वै स्वयमातृण्णा प्राणो ह्येवैतत्स्वयमात्मन आतृन्ते प्राणमेवैतदुपदधाति तामनन्तर्हिताम्पुरुषादुपदधाति प्राणो वै स्वयमातृण्णेयं वै स्वयमातृण्णेयमु वै प्राणो यद्धि किं च प्राणीयं तत्सर्वं बिभर्त्यनन्तर्हितमेवास्मादेतत्प्राणं दधात्युत्तरामुत्तरमेवास्मादेतत्प्राणं दधाति - ७.४.२.[२]

यद्वेव स्वयमातृण्णामुपदधाति । प्रजापतिं विस्रस्तं देवता आदाय व्युदक्रामंस्तासु व्युत्क्रामन्तीषु प्रतिष्ठामभिपद्योपाविशत् - ७.४.२.[३]

स यः स प्रजापतिर्व्यस्रंसत । अयमेव स योऽयमग्निश्चीयतेऽथ या सा प्रतिष्ठैषा सा प्रथमा स्वयमातृण्णा तद्यदेतामत्रोपदधाति यदेवास्यैषात्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेतामत्रोपदधाति - ७.४.२.[४]

तां वै प्रजापतिनोपदधाति । प्रजापतिर्ह्येवैतत्स्वयमात्मनः प्रत्यधत्त ध्रुवासीति स्थिरासीत्येतदथो प्रतिष्ठितासीति धरुणेति प्रतिष्ठा वै धरुणमास्तृता विश्वकर्मणेति प्रजापतिर्वै विश्वकर्मा तेनास्तृतासीत्येतन्मा त्वा समुद्र उद्वधीन्मा सुपर्ण इति रुक्मो वै समुद्रः पुरुषः सुपर्णस्तौ त्वामोद्वधिष्टामित्येतदव्यथमाना पृथिवीं दृंहेति यथैव यजुस्तथा बन्धुः - ७.४.२.[५]

प्रजापतिष्ट्वा सादयत्विति । प्रजापतिर्ह्येतां प्रथमां चितिमपश्यदपां पृष्ठे समुद्रस्येमन्नित्यपां हीयं पृष्ठं समुद्रस्य हीयमेम व्यचस्वतीम्प्रथस्वतीमिति व्यचस्वती च हीयं प्रथस्वती च प्रथस्व पृथिव्यसीति प्रथस्व पृथिवी चासीत्येतत् - ७.४.२.[६]



भूरसीति । भूर्हीयं भूमिरसीति भूमिर्हीयमदितिरसीतीयं वा अदितिरियं हीदं सर्वं ददते विश्वधाया इत्यस्यां हीदं सर्वं हितं विश्वस्य भुवनस्य धर्त्रीति सर्वस्य भुवनस्य धर्त्रीत्येतत्पृथिवीं यच्छ पृथिवीं दृंह पृथिवीं मा हिंसीरित्यात्मानं यच्छात्मानं दृंहात्मानं मा हिंसीरित्येतत् - ७.४.२.[७]

विश्वस्मै प्राणायापानाय । व्यानायोदानायेति प्राणो वै स्वयमातृण्णा सर्वस्मा उ वा एतस्मै प्राणः प्रतिष्ठायै चरित्रायेतीमे वै लोकाः स्वयमातृण्णा इम उ लोकाः प्रतिष्ठा चरित्रमग्निष्ट्वाभिपात्वित्यग्निष्ट्वाभिगोपायत्वित्येतन्मह्या स्वस्त्येति महत्या स्वस्त्येत्येतच्छर्दिषा शंतमेनेति यच्छर्दिः शंतमं तेनेत्येतत्सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुरथ साम गायति तस्योपरि बन्धुः - ७.४.२.[८]

तदाहुः । कथमेष पुरुषः स्वयमातृण्णायानभिनिहितो भवतीत्यन्नं वै स्वयमातृण्णा प्राणः स्वयमातृण्णानभिऽनिहितो वै पुरुषोऽन्नेन च प्राणेन च - ७.४.२.[९]

अथ दूर्वेष्टकामुपदधाति । पशवो वै दूर्वेष्टका पशूनेवैतदुपदधाति तद्यैरदोऽग्निरनन्तर्हितैः पशुभिरुपैत्त एते तानेवैतदुपदधाति तामनन्तर्हितां स्वयमातृण्णाया उपदधातीयं वै स्वयमातृण्णानन्तर्हितास्तदस्यै पशून्दधात्युत्तरामुत्तरांस्तदस्यै पशून्दधाति - ७.४.२.[१०]

यद्वेव दूर्वेष्टकामुपदधाति । प्रजापतेर्विस्रस्तस्य यानि लोमान्यशीयन्त ता इमा ओषधयोऽभवन्नथास्मात्प्राणो मध्यत उदक्रामत्तस्मिन्नुत्क्रान्तेऽपद्यत - ७.४.२.[११]

सोऽब्रवीत् । अयं वाव माऽधूर्वीदिति यदब्रवीदधूर्वीन्मेति तस्माद्धूर्वा धूर्वा ह वै तां दूर्वेत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्तदेतत्क्षत्रं प्राणो ह्येष रसो लोमान्यन्या ओषधय एतामुपदधत्सर्वा ओषधीरुपदधाति - ७.४.२.[१२]



तं यत्र देवाः समस्कुर्वंस्तदस्मिन्नेतं प्राणं रसं मध्यतोऽदधुस्तथैवास्मिन्नयमेतद्दधाति तामनन्तर्हितां स्वयमातृण्णाया उपदधातीयं वै स्वयमातृण्णानन्तर्हितास्तदस्या ओषधीर्दधात्युत्तरामुत्तरास्तदस्या ओषधीर्दधाति सा स्यात्समूला साग्रा कृत्स्नतायै। यथा स्वयमातृण्णायामुपहिता भूमिं प्राप्नुयादेवमुपदध्यादस्यां ह्येवैता जायन्त इमामनु प्ररोहन्ति - ७.४.२.[१३]

काण्डात्काण्डात्प्ररोहन्ती । परुषः परुषस्परीति काण्डात्काण्डाद्ध्येषा पर्वणः पर्वणः प्ररोहत्येवा नो दूर्वे प्रतनु सहस्रेण शतेन चेति यथैव यजुस्तथा बन्धुः - ७.४.२.[१४]

या शतेन प्रतनोषि । सहस्रेण विरोहसीति शतेन ह्येषा प्रतनोति सहस्रेण विरोहति तस्यास्ते देवीष्टके विधेम हविषा वयमिति यथैव यजुस्तथा बन्धुर्द्वाभ्यामुपदधाति तस्योक्तो बन्धुः सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः - ७.४.२.[१५]

अथ द्वियजुषमुपदधाति । इन्द्राग्नी अकामयेतां स्वर्गं लोकमियावेति तावेतामिष्टकामपश्यतां द्वियजुषमिमामेव तामुपादधातां तामुपधायास्यै प्रतिष्ठायै स्वर्गं लोकमैतां तथैवैतद्यजमानो यद्द्वियजुषमुपदधाति येन रूपेण यत्कर्म कृत्वेन्द्राग्नी स्वर्गं लोकमैतां तेन रूपेण तत्कर्म कृत्वा स्वर्गं लोकमयानीति सा यद्द्वियजुर्नाम द्वे ह्येतां देवते अपश्यतां यद्वेव द्वियजुषमुपदधाति यजमानो वै द्वियजुः - ७.४.२.[१६]

तदाहुः । यदसावेव यजमानो योऽसौ हिरण्मयः पुरुषोऽथ कतमदस्येदं रूपमिति दैवो वा अस्य स आत्मा मनुषोऽयं तद्यत्स हिरण्मयो भवत्यमृतं वाऽअस्य तद्रूपं देवरूपममृतं हिरण्यमथ यदियं मृदः कृता भवति मानुषं ह्यस्येदं रूपम् - ७.४.२.[१७]

स यदमूमेवोपदध्यात् । नेमामपशिंष्यात्क्षिप्रे हास्माल्लोकाद्यजमानः प्रेयादथ यदिमामपशिनष्टि यदेवास्येदं मानुषं रूपं तदस्यैतदपशिनष्टि तथो हानेनात्मना सर्वमायुरेति - ७.४.२.[१८]



स यन्नानूपदध्यात् । न हैतं दैवमात्मानमनुप्रजानीयादथ यदनूपदधाति तथो हैतं दैवमात्मानमनुप्रजानाति तामनन्तर्हितां दूर्वेष्टकाया उपदधाति पशवो वै दूर्वेष्टका यजमानं तत्पशुषु प्रतिष्ठापयति - ७.४.२.[१९]

तदाहुः । कथमस्यैतावात्मानौ प्राणेन संततावव्यवच्छिन्नौ भवत इति प्राणो वै स्वयमातृण्णा प्राणो दूर्वेष्टका यजमानो द्वियजुः स यदनन्तर्हितां स्वयमातृण्णायै दूर्वेष्टकामुपदधाति प्राणेणैव तत्प्राणं संतनोति संदधात्यथ यदनन्तर्हितां दूर्वेष्टकायै द्वियजुषमुपदधाति प्राणो वै दूर्वेष्टका यजमानो द्वियजुरेवमु हास्यैतावात्मानौ प्राणेन संततावव्यवच्छिन्नौ भवतः - ७.४.२.[२०]

यास्ते अग्ने सूर्ये रुचो । या वो देवाः सूर्ये रुच इति रुचं रुचमित्यमृतत्वं वै रुगमृतत्वमेवास्मिन्नेतद्दधाति द्वाभ्यामुपदधाति तस्योक्तो बन्धुरथो द्वयं ह्येवैतद्रूपं मृच्चापश्च सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः - ७.४.२.[२१]

अथ रेतःसिचा उपदधाति । इमौ वै लोकौ रेतःसिचाविमौ ह्येव लोकौ रेतः सिञ्चत इतो वा अयमूर्ध्वं रेतः सिञ्चति धूमं सामुत्र वृष्टिर्भवति तामसावमुतोवृष्टिं तदिमा अन्तरेण प्रजायन्ते तस्मादिमौ लोकौ रेतःसिचौ - ७.४.२.[२२]

विराड्ज्योतिरधारयदिति । अयं वै लोको विराड् इममग्निं ज्योतिर्धारयति स्वराड्ज्योतिरधारयदित्यसौ वै लोकः स्वराड्सो मुमादित्यं ज्योतिर्धारयति विराड्हेमौ लोकौ स्वराड् नानोपदधाति नाना हीमौ लोकौ सकृत्सादयति समानं तत्करोति तस्मादु हानयोर्लोकयोरन्ताः समायन्ति - ७.४.२.[२३]

यद्वेव रेतःसिचा उपदधाति । आण्डौ वै रेतःसिचौ यस्य ह्याण्डौ भवतः स एव रेतः सिञ्चति विराड्ज्योतिरधारयत्स्वराड्ज्योतिरधारयदिति विराड्हेमावाण्डौ स्वराड् तावेतज्ज्योतिर्धारयतो रेत एव प्रजापतिमेव नानोपदधाति नाना हीमावाण्डौ सकृत्सादयति समानं तत्करोति तस्मात्समानसम्बन्धनौ ते अनन्तर्हिते द्वियजुष उपदधाति यजमानो वै द्वियजुरनन्तर्हितौ तद्यजमानादाण्डौ दधाति - ७.४.२.[२४]



अथ विश्वज्योतिषमुपदधाति । अग्निर्वै प्रथमा विश्वज्योतिरग्निर्ह्येवास्मिंलोके विश्वं ज्योतिरग्निमेवैतदुपदधाति तामनन्तर्हितां रेतःसिग्भ्यामुपदधातीमौ वै लोकौ रेतःसिचावनन्तर्हितं तदाभ्यां लोकाभ्यामग्निं दधात्यन्तरेवोपदधात्यन्तरेव हीमौ लोकावग्निः - ७.४.२.[२५]

यद्वेव विश्वज्योतिषमुपदधाति । प्रजा वै विश्वज्योतिः प्रजा ह्येव विश्वं ज्योतिः प्रजननमेवैतदुपदधाति तामनन्तर्हितां रेतःसिग्भ्यामुपदधात्याण्डौ वै रेतःसिचावनन्तर्हितां तदाण्डाभ्यां प्रजातिं दधात्यन्तरेवोपदधात्यन्तरेव ह्याण्डौ प्रजाः प्रजायन्ते - ७.४.२.[२६]

प्रजापतिष्ट्वा सादयत्विति । प्रजापतिर्ह्येतां प्रथमां चितिमपश्यत्पृष्ठे पृथिव्या ज्योतिष्मतीमिति पृष्ठे ह्ययं पृथिव्यै ज्योतिष्मानग्निः - ७.४.२.[२७]

विश्वस्मै प्राणायापानाय । व्यानायेति प्राणो वै विश्वज्योतिः सर्वस्मा उ एतस्मै प्राणो विश्वं ज्योतिर्यच्छेति सर्वं ज्योतिर्यच्छेत्येतदग्निष्टेऽधिपतिरित्यग्निमेवास्या अधिपतिं करोति सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः - ७.४.२.[२८]

अथऽर्तव्ये उपदधाति । ऋतव एते यदृतव्ये ऋतूनेवैतदुपदधाति मधुश्च माधवश्च वासन्तिकावृतू इति नामनी एनयोरेते नामभ्यामेवैने एतदुपदधाति द्वे इष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोति - ७.४.२.[२९]

तद्यदेते अत्रोपदधाति । संवत्सर एषोऽग्निरिम उ लोकाः संवत्सरस्तस्यायमेव लोकः प्रथमा चितिरयमस्य लोको वसन्त ऋतुस्तद्यदेते अत्रोपदधाति यदेवास्यैते आत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेते अत्रोपदधाति - ७.४.२.[३०]



यद्वेवैते अत्रोपदधाति । प्रजापतिरेषोऽग्निः संवत्सर उ प्रजापतिस्तस्य प्रतिष्ठैव प्रथमा चितिः प्रतिष्ठो अस्य वसन्त ऋतुस्तद्यदेते अत्रोपदधाति यदेवास्यैते आत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेते अत्रोपदधाति ते अनन्तर्हिते विश्वज्योतिष उपदधाति प्रजा वै विश्वज्योतिरनन्तर्हितास्तत्प्रजा ऋतुभ्यो दधाति तस्मात्प्रजा ऋतूनेवानुप्रजायन्त ऋतुभिर्ह्येव गर्भे सन्तं सम्पश्यन्त्यृतुभिर्जातम्- ७.४.२.[३१]

अथाषाढामुपदधाति । इयं वा अषाढेमामेवैतदुपदधाति तां पूर्वार्धे उपदधाति प्रथमा हीयमसृज्यत - ७.४.२.[३२]

सा यदषाढा नाम । देवाश्चासुराश्चोभये प्राजापत्या अस्पर्धन्त ते देवा एतामिष्टकामपश्यन्नषाढामिमामेव तामुपादधत तामुपधायासुरान्त्सपत्नान्भ्रातृव्यानस्मात्सर्वस्मादसहन्त यदसहन्त तस्मादषाढा तथैवैतद्यजमान एतामुपधाय द्विषन्तम्भ्रातृव्यमस्मात्सर्वस्मात्सहते - ७.४.२.[३३]

यद्वेवाषाढामुपदधाति । वाग्वा अषाढा वाचैव तद्देवा असुरान्त्सपत्नान्भ्रातृव्यानस्मात्सर्वस्मादसहन्त तथैवैतद्यजमानो वाचैव द्विषन्तं भ्रातृव्यमस्मात्सर्वस्मात्सहते वाचमेव तद्देवा उपादधत तथैवैतद्यजमानो वाचमेवोपधत्ते - ७.४.२.[३४]

सेयं वामभृत् । प्राणा वै वामं यद्धि किं च प्राणीयं तत्सर्वं बिभर्ति तेनेयं वामभृद्वाग्घ त्वेव वामभृत्प्राणा वै वामं वाचि वै प्राणेभ्योऽन्नं धीयते तस्माद्वाग्वामभृत् - ७.४.२.[३५]

त एते सर्वे प्राणा यदषाढा । तां पूर्वार्ध उपदधाति पुरस्तात्तत्प्राणान्दधाति तस्मादिमे पुरस्तात्प्राणास्तान्नान्यया यजुष्मत्येष्टकया पुरस्तात्प्रत्युपदध्यादेतस्यां चितौ नेत्प्राणानपिदधानीति - ७.४.२.[३६]

यद्वपस्याः पञ्च पुरस्तादुपदधाति । अन्नं वा आपोऽनपिहिता वा अन्नेन प्राणास्तामनन्तर्हितामृतव्याभ्यामुपदधात्यृतुषु तद्वाचं प्रतिष्ठापयति सेयं वागृतुषु प्रतिष्ठिता वदति - ७.४.२.[३७]



तदाहुः । यत्प्रजा विश्वज्योतिर्वागषाढाऽथ कस्मादन्तरेणऽर्तव्ये उपदधातीति संवत्सरो वा ऋतव्ये संवत्सरेण तत्प्रजाभ्यो वाचमन्तर्दधाति तस्मात्संवत्सरवेलायां प्रजा वाचं प्रवदन्ति - ७.४.२.[३८]

अषाढासि सहमानेति । असहन्त ह्येतया देवा असुरान्त्सहस्वारातीः सहस्व पृतनायत इति यथैव यजुस्तथा बन्धुः सहस्रवीर्यासि सा मा जिन्वेति सर्वं वै सहस्रं सर्ववीर्याऽसि सा मा जिन्वेत्येतत्सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः - ७.४.२.[३९]

तदाहुः । कस्मादभिस्वयमातृण्णमन्या इष्टका उपधीयन्ते प्राच्य एता इति द्वे वै योनी इति ब्रूयाद्देवयोनिरन्यो मनुष्ययोनिरन्यः प्राचीनप्रजनना वै देवाः प्रतीचीनप्रजनना मनुष्यास्तद्यदेताः प्राचीरुपदधाति देवयोनेरेवैतद्यजमानं प्रजनयति - ७.४.२.[४०]

##
७.५.१
कूर्ममुपदधाति । रसो वै कूर्मो रसमेवैतदुपदधाति यो वै स एषां लोकानामप्सु प्रविद्धानां पराङ्रसोऽत्यक्षरत्स एष कूर्मस्तमेवैतदुपदधाति यावानु वै रसस्तावानात्मा स एष इम एव लोकाः - ७.५.१.[१]

तस्य यदधरं कपालम् । अयं स लोकस्तत्प्रतिष्ठितमिव भवति प्रतिष्ठित इव ह्ययं लोकोऽथ यदुत्तरं सा द्यौस्तद्व्यवगृहीतान्तमिव भवति व्यवगृहीतान्तेव हि द्यौरथ यदन्तरा तदन्तरिक्षं स एष इम एव लोका इमानेवैतल्लोकानुपदधाति - ७.५.१.[२]



तमभ्यनक्ति । दध्ना मधुना घृतेन दधि हैवास्य लोकस्य रूपं घृतमन्तरिक्षस्य मध्वमुष्य स्वेनैवैनमेतद्रूपेण समर्धयत्यथो दधि हैवास्य लोकस्य रसो घृतमन्तरिक्षस्य मध्वमुष्य स्वेनैवैनमेतद्रसेन समर्धयति - ७.५.१.[३]

मधु वाता ऋतायत इति । यां वै देवतामृगभ्यनूक्ता यां यजुः सैव देवता सऽर्क्सो देवता तद्यजुस्तद्धैतन्मध्वेवैष त्रिचो रसो वै मधु रसमेवास्मिन्नेतद्दधाति गायत्रीभिस्तिसृभिस्तस्योक्तो बन्धुः - ७.५.१.[४]

स यत्कूर्मो नाम । एतद्वै रूपं कृत्वा प्रजापतिः प्रजा असृजत यदसृजताकरोत्तद्यदकरोत्तस्मात्कूर्मः कश्यपो वै कूर्मस्तस्मादाहुः सर्वाः प्रजाः काश्यप्य इति - ७.५.१.[५]

स यः कूर्मोऽसौ स आदित्योऽमुमेवैतदादित्यमुपदधाति तं पुरस्तात्प्रत्यञ्चमुपदधात्यमुं तदादित्यं पुरस्तात्प्रत्यञ्चं दधाति तस्मादसावादित्यः पुरस्तात्प्रत्यङ्धीयते दक्षिणतोऽषाढायै वृषा वै कूर्मो योषाऽषाढा दक्षिणतो वै वृषा योषामुपशेतेऽरत्निमात्रेऽरत्निमात्राद्धि वृषा योषामुपशेते सैषा सर्वासामिष्टकानां महिषी यदषाढैतस्यै दक्षिणतः सन्त्सर्वासामिष्टकानां दक्षिणतो भवति - ७.५.१.[६]

यद्वेव कूर्ममुपदधाति । प्राणो वै कूर्मः प्राणो हीमाः सर्वाः प्रजाः करोति प्राणमेवैतदुपदधाति तं पुरस्तात्प्रत्यञ्चमुपदधाति पुरस्तात्तत्प्रत्यञ्चम्प्राणं दधाति तस्मात्पुरस्तात्प्रत्यङ्प्राणो धीयते पुरुषमभ्यावृत्तं यजमाने तत्प्राणं दधाति दक्षिणतोऽषाढायै प्राणो वै कूर्मो वागषाढा प्राणो वै वाचो वृषा प्राणो मिथुनम् - ७.५.१.[७]

अपां गम्भन्त्सीदेति । एतद्धापां गम्भिष्ठं यत्रैष एतत्तपति मा त्वा सूर्योऽभिताप्सीन्माग्निर्वैश्वानर इति मैव त्वा सूर्यो हिंसीन्मो अग्निर्वैश्वानर इत्येतदच्छिन्नपत्राः प्रजा अनुवीक्षस्वेतीमा वै सर्वाः प्रजा या इमा इष्टकास्ता अरिष्टा
अनार्ता अनुवीक्षस्वेत्येतदनु त्वा दिव्या वृष्टिः सचतामिति यथैवैनं दिव्या वृष्टिरनुसचेतैवमेतदाह - ७.५.१.[८]

अथैनमेजयति । त्रीन्त्समुद्रान्त्समसृपत्स्वर्गानितीमे वै त्रयः समुद्राः स्वर्गा लोकास्तानेष कूर्मो भूत्वानुसंससर्पापां पतिर्वृषभ इष्टकानामित्यपां ह्येष पतिर्वृषभ इष्टकानां पुरीषं वसानः सुकृतस्य लोक इति पशवो वै पुरीषम्पशून्वसानः सुकृतस्य लोक इत्येतत्तत्र गच्छ यत्र पूर्वे परेता इति तत्र गच्छ यत्रैतेन पूर्वे कर्मणेयुरित्येतत्- ७.५.१.[९]

मही द्यौः पृथिवी च न इति । महती द्यौः पृथिवी च न इत्येतदिमं यज्ञम्मिमिक्षतामितीमं यज्ञमवतामित्येतत्पिपृतां नो भरीमभिरिति बिभृतां नो भरीमभिरित्येतद्द्यावापृथिव्ययोत्तमयोपदधाति द्यावापृथिव्यो हि कूर्मः - ७.५.१.[१०]

त्रिभिरुपदधाति । त्रय इमे लोका अथो त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदुपदधाति त्रिभिरभ्यनक्ति तत्षड्वस्योक्तो बन्धुरवका अधस्ताद्भवन्त्यवका उपरिष्टादापो वा अवका अपामेवैनमेतन्मध्यतो दधाति सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः - ७.५.१.[११]

अथोलूखलमुसले उपदधाति । विष्णुरकामयतान्नादः स्यामिति स एते इष्टके अपश्यदुलूखलमुसले ते उपाधत्त ते उपधायान्नादोऽभवत्तथैवैतद्यजमानो यदुलूखलमुसले उपदधाति येन रूपेण यत्कर्म कृत्वा विष्णुरन्नादोऽभवत्तेन रूपेण तत्कर्म कृत्वान्नादोऽसानीति तदेतत्सर्वमन्नं यदुलूखलमुसले उलूखलमुसलाभ्यां ह्येवान्नं क्रियत उलूखलमुसलाभ्यामद्यते- ७.५.१.[१२]

ते रेतःसिचोर्वेलयोपदधाति । पृष्टयो वै रेतःसिचौ मध्यमु पृष्टयो मध्यत एवास्मिन्नेतदन्नं दधात्युत्तरे उत्तरमेवास्मादेतदन्नं दधात्यरत्निमात्रेऽरत्निमात्राद्ध्यन्नमद्यते - ७.५.१.[१३]



प्रादेशमात्रे भवतः । प्रादेशमात्रो वै गर्भो विष्णुरन्नमेतदात्मसम्मितमेवास्मिन्नेतदन्नं दधाति यदु वा आत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति - ७.५.१.[१४]

औदुम्बरे भवतः । ऊर्ग्वै रस उदुम्बर ऊर्जमेवास्मिन्नेतद्रसं दधात्यथो सर्व एते वनस्पतयो यदुदुम्बर एते उपदधत्सर्वान्वनस्पतीनुपदधाति रेतःसिचोर्वेलयेमे वै रेतःसिचावनयोस्तद्वनस्पतीन्दधाति तस्मादनयोर्वनस्पतयश्चतुःस्रक्ति भवति चतस्रो वै दिशः सर्वासु तद्दिक्षु वनस्पतीन्दधाति तस्मात्सर्वासु दिक्षु वनस्पतयो मध्ये संगृहीतम्भवत्युलूखलरूपतायै - ७.५.१.[१५]

यद्वेवोलूखलमुसले उपदधाति । प्रजापतेर्विस्रस्तात्प्राणो मध्यत उदचिक्रमिषत्तमन्नेनागृह्णात्तस्मात्प्राणोऽन्नेन गृहीतो यो ह्येवान्नमत्ति स प्राणिति - ७.५.१.[१६]

प्राणे गृहीतेऽस्मादन्नमुदचिक्रमिषत्तत्प्राणेनागृह्णात्तस्मात्प्राणेनान्नं गृहीतं यो ह्येव प्राणिति सोऽन्नमत्ति - ७.५.१.[१७]

एतयोरुभयोर्गृहीतयोः ।अस्मादूर्गुदचिक्रमिषत्तामेताभ्यामुभाभ्यामगृह्णात्तस्मादेताभ्यामुभाभ्यामूर्ग्गृहीता यो ह्येवान्नमत्ति स प्राणिति तमूर्जयति - ७.५.१.[१८]

ऊर्जि गृहीतायाम् । अस्मादेते उभे उदचिक्रमिषतां ते ऊर्जाऽगृह्णात्तस्मादेते उभे ऊर्जा यं ह्येवोर्जयति स प्राणिति सोऽन्नमत्ति - ७.५.१.[१९]

तान्येतान्यन्योऽन्येन गृहीतानि । तान्यन्योऽन्येन गृहीत्वात्मन्प्रापादयत तदेतदन्नं प्रपद्यमानं सर्वे देवा अनुप्रापद्यन्तान्नजीवनं हीदं सर्वम् - ७.५.१.[२०]



तदेष श्लोकोऽभ्युक्तः । तद्वै स प्राणोऽभवदिति तद्धि स प्राणोऽभवन्महान्भूत्वा प्रजापतिरिरिति महान्हि स तदभवद्यदेनमेते देवाः प्रापद्यन्त भुजोभुजिष्या वित्त्वेति प्राणा वै भुजोऽन्नं भुजिष्या एतत्सर्वं वित्त्वेत्येतद्यत्प्राणान्प्राणयत्पुरीत्यात्मा वै पूर्यद्वै प्राणान्प्राणयत्तस्मात्प्राणा देवा अथ यत्प्रजापतिः प्राणयत्तस्मादु प्रजापतिः प्राणो यो वै स प्राण एषा सा गायत्र्यथ यत्तदन्नमेष स विष्णुर्देवताथ या सोऽर्गेष स उदुम्बरः - ७.५.१.[२१]

सोऽब्रवीत् । अयं वाव मा सर्वस्मात्पाप्मन उदभार्षीदिति यदब्रवीदुदभार्षीन्मेति तस्मादुदुम्भर उदुम्भरो ह वै तमुदुम्बर इत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा उरु मे करदिति तस्मादुरुकरमुरुकरं ह वै तदुलूखलमित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवाः सैषा सर्वेषां प्राणानां योनिर्यदुलूखलं शिरो वै प्राणानां योनिः - ७.५.१.[२२]

तत्प्रादेशमात्रं भवति । प्रादेशमात्रमिव हि शिरश्चतुःस्रक्ति भवति चतुःस्रक्तीव हि शिरो मध्ये संगृहीतं भवति मध्ये संगृहीतमिव हि शिरः - ७.५.१.[२३]

तं यत्र देवाः समस्कुर्वन् । तदस्मिन्नेतत्सर्वं मध्यतोऽदधुः प्राणमन्नमूर्जं तथैवास्मिन्नयमेतद्दधाति रेतःसिचोर्वेलया पृष्ट्यो वै रेतःसिचौ मध्यमु पृष्ट्यो मध्यत एवास्मिन्नेतत्सर्वं दधाति - ७.५.१.[२४]

विष्णोः कर्माणि पश्यतेति । वीर्यं वै कर्म विष्णोर्वीर्याणि पश्यतेत्येतद्यतो व्रतानि पस्पश इत्यन्नं वै व्रतं यतोऽन्नं स्पाशयांचक्र इत्येतदिन्द्रस्य युज्यः सखेतीन्द्रस्य ह्येष युज्यः सखा द्विदेवत्ययोपदधाति द्वे ह्युलूखलमुसले सकृत्सादयति समानं तत्करोति समानं ह्येतदन्नमेव सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः - ७.५.१.[२५]

अथोखामुपदधाति योनिर्वा उखा योनिमेवैतदुपदधाति तामुलूखल उपदधात्यन्तरिक्षं वा उलूखलं यद्वै किं चास्या ऊर्द्धमन्तरिक्षमेव तन्मध्यं वा अन्तरिक्षं मध्यतस्तद्योनिं दधाति तस्मात्सर्वेषां भूतानाम्मध्यतो योनिरपि वनस्पतीनाम् - ७.५.१.[२६]



यद्वेवोखामुपदधाति । यो वै स प्रजापतिर्व्यस्रंसतैषा सोखेमे वै लोका उखेमे लोकाः प्रजापतिस्तामुलूखल उपदधाति तदेनमेतस्मिन्त्सर्वस्मिन्प्रतिष्ठापयति प्राणेऽन्न ऊर्ज्यथो एतस्मादेवैनमेतत्सर्वस्मादनन्तर्हितं दधाति - ७.५.१.[२७]

अथोपशयां पिष्ट्वा । लोकभाजमुखां कृत्वा पुरस्तादुखाया उपनिवपत्येष हैतस्यै लोकस्तथो हास्यैषानन्तरिता भवति - ७.५.१.[२८]

तदाहुः । कथमस्यैषा पक्का श्रृतोपहिता भवतीति यदेव यजुष्कृता तेनाथो यद्वै किं चैतमग्निं वैश्वानरमुपनिगच्छति तत एव तत्पक्वं श्रृतमुपहितम्भवति - ७.५.१.[२९]

ध्रुवासि धरुणेति । तस्योक्तो बन्धुरितो जज्ञे प्रथममेभ्यो योनिभ्यो अधि जातवेदा इत्येतेभ्यो हि योनिभ्यः प्रथमं जातवेदा अजायत स गायत्र्या त्रिष्टुभानुष्टुभा च देवेभ्यो हव्यं वहतु प्रजानन्नित्येतैर्वाऽएष छन्दोभिर्देवेभ्यो हव्यं वहति प्रजानन् - ७.५.१.[३०]

इषे राये रमस्व । सहसे द्युम्न ऊर्जे अपत्यायेत्येतस्मै सर्वस्मै रमस्वेत्येतत्सम्राडसि स्वराडसीति सम्राड्ढ ह्येष स्वराड्ढ सारस्वतौ त्वोत्सौ प्रापवतामिति मनो वै सरस्वान्वाक्सरस्वत्येतौ सारस्वता उत्सौ तौ त्वा प्रावतामित्येतद्द्वाभ्यामुपदधाति तस्योक्तो बन्धुरथो द्वयं ह्येवैतद्रूपम्मृच्चाऽपश्च सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः - ७.५.१.[३१]

अथैनामभिजुहोति । एतद्वा अस्यामेतत्पूर्वं रेतः सिक्तं भवति सिकतास्तदेतदभिकरोति तस्माद्योनौ रेतः सिक्तमभिक्रियत आज्येन जुहोति स्रुवेण
स्वाहाकारेण द्वाभ्यामाग्नेयीभ्यां गायत्रीभ्यां तस्योक्तो बन्धुः - ७.५.१.[३२]

अग्ने युक्ष्वा हि ये तव । युक्ष्वा हि देवहूतमानिति युक्तवतीभ्यामिदमेवैतद्योनौ रेतो युनक्ति तस्माद्योनौ रेतो युक्तं न निष्पद्यते - ७.५.१.[३३]



स यदि संवत्सरभृतः स्यात् । अथाभिजुहुयात्सर्वं वै तद्यत्संवत्सरभृतः सर्वं तद्यदभिजुहोत्यथ यद्यसंवत्सरभृतः स्यादुपैव तिष्ठेतासर्वं वै तद्यदसंवत्सरभृतोऽसर्वं तद्यदुपतिष्ठतेऽभि त्वेव जुहुयात्- ७.५.१.[३४]

पशुरेष यदग्निः । सोऽत्रैव सर्वः कृत्स्नः संस्कृतस्तस्यावाङ्ग्राणः स्वयमातृण्णा श्रोणी द्वियजुः पृष्टयो रेतःसिचौ कीकसा विश्वज्योतिः ककुदमृतव्ये ग्रीवा अषाढा शिरः कूर्मो ये कूर्मे प्राणा ये शीर्षन्प्राणास्ते ते - ७.५.१.[३५]

तं वा एतम् । इत ऊर्ध्वं प्राञ्चं चिनोत्यसौ वा आदित्य एषोऽग्निरमुं तदादित्यमित
ऊर्ध्वं प्राञ्चं दधाति तस्मादसावादित्य इत ऊर्ध्वः प्राङ्चीयते - ७.५.१.[३६]

अथैनं प्रसलव्यावर्तयति । अमुं तदादित्यं प्रसलव्यावर्तयति तस्मादसावादित्य इमांल्लोकान्प्रसलव्यनुपर्यैति - ७.५.१.[३७]

उदरमुखा । योनिरुलूखलमुत्तरोखा भवत्यधरमुलूखलमुत्तरं ह्युदरमधरा योनिः शिश्नं मुसलं तद्वृत्तमिव भवति वृत्तमिव हि शिश्नं तद्दक्षिणत उपदधाति दक्षिणतो वै वृषा योषामुपशेते यदु पशोः संस्कृतस्यान्नं तद्दूर्वेष्टका तस्य वा एतस्योत्तरोऽर्ध उदाहिततरो भवति पशुरेष यदग्निस्तस्मात्पशोः सुहितस्योत्तरः कुक्षिरुन्नततरो भवति - ७.५.१.[३८]

७.५.२ पञ्चपशुशीर्षेष्टकोपधानम्

पशुशीर्षाण्युपदधाति । पशवो वै पशुशीर्षाणि पशूनेवैतदुपदधाति तान्युखायामुपदधातीमे वै लोका उखा पशवः पशुशीर्षाण्येषु तल्लोकेषु पशून्दधाति तस्मादिम एषु लोकेषु पशवः - ७.५.२.[१]

यद्वेवोखायाम् । योनिर्वा उखा पशवः पशुशीर्षाणि योनौ तत्पशून्प्रतिष्ठापयति तस्मादद्यमानाः पच्यमानाः पशवो न क्षीयन्ते योनौ ह्येनान्प्रतिष्ठापयति - ७.५.२.[२]

यद्वेव पशुशीर्षाण्युपदधाति । या वै ताः श्रिय एतानि तानि पशुशीर्षाण्यथ यानि तानि कुसिन्धान्येतास्ताः पञ्च चितयस्तद्यास्ताः पञ्च चितय इमे ते लोकास्तद्ये त इमे लोका एषा सोखा तद्यदुखायां पशुशीर्षाण्युपदधात्येतैरेव तच्छीर्षभिरेतानि कुसिन्धानि संदधाति - ७.५.२.[३]

तान्पुरस्तात्प्रतीच उपदधाति । एतद्वै यत्रैतान्प्रजापतिः पशूनालिप्सत त आलिप्स्यमाना उदचिक्रमिषंस्तान्प्राणेषु समगृह्णात्तान्प्राणेषु संगृह्य पुरस्तात्प्रतीच आत्मन्नधत्त - ७.५.२.[४]

तद्वा एतत्क्रियते । यद्देवा अकुर्वन्निदं न्वस्मात्ते पशवो नोच्चिक्रमिषन्ति यत्त्वेतत्करोति यद्देवा अकुर्वंस्तत्करवाणीत्यथो प्राणेष्वेवैनानेतत्संगृह्य पुरस्तात्प्रतीच आत्मन्धत्ते - ७.५.२.[५]

यद्वेव पशुशीर्षाण्युपदधाति । प्रजापतिर्वा इदमग्र आसीदेक एव सोऽकामयतान्नं सृजेय प्रजायेयेति स प्राणेभ्य एवाधि पशून्निरमिमीत मनसः पुरुषं चक्षुषोऽश्वं प्राणाद्गां श्रोत्रादविं वाचोऽजं तद्यदेनान्प्राणेभ्योऽधि निरमिमीत तस्मादाहुः प्राणाः पशव इति मनो वै प्राणानां प्रथमं तद्यत्मनसः पुरुषं निरमिमीत तस्मादाहुः पुरुषः प्रथमः पशूनां वीर्यवत्तम इति मनो वै सर्वे प्राणा मनसि हि सर्वे प्राणाः प्रतिष्ठितास्तद्यन्मनसः पुरुषं निरमिमीत तस्मादाहुः पुरुषः सर्वे पशव इति पुरुषस्य ह्येवैते सर्वे भवन्ति - ७.५.२.[६]

तदेतदन्नं सृष्ट्वा । पुरस्तात्प्रत्यगात्मन्नधत्त तस्माद्यः कश्चान्नं सृजते पुरस्तादेवैनत्प्रत्यगात्मन्धत्ते तद्वा उखायामुदरं वा उखोदरे तदन्नं दधाति - ७.५.२.[७]

अथैषु हिरण्यशकलान्प्रत्यस्यति । प्राणा वै हिरण्यमथ वा एतेभ्यः पशुभ्यः संज्ञप्यमानेभ्य एव प्राणा उत्क्रामन्ति तद्यद्धिरण्यशकलान्प्रत्यस्यति प्राणानेवैष्वेतद्दधाति - ७.५.२.[८]



सप्त प्रत्यस्यति । सप्त वै शीर्षन्प्राणास्तानस्मिन्नेतद्दधात्यथ यदि पञ्च पशवः स्युः पञ्चैव कृत्वः सप्त सप्त प्रत्यस्येत्पञ्च वा एतान्पशूनुपदधाति सप्त सप्त वा एकैकस्मिन्पशौ प्राणास्तदेषु सर्वेषु प्राणान्दधाति - ७.५.२.[९]

तद्धैकेऽपि । यद्येकः पशुर्भवति पञ्चैव कृत्वः सप्त सप्त प्रत्यस्यन्ति पञ्च वा एतान्पशूनुपदधाति सप्त सप्त वा एकैकस्मिन्पशौ प्राणास्तदेषु सर्वेषु प्राणान्दध्म इति न तथा कुर्यादेतस्मिन्वै पशौ सर्वेषां पशूनां रूपं तद्यदेतस्मिन्प्रत्यस्यति तदेवैषु सर्वेषु प्राणान्दधाति - ७.५.२.[१०]

मुखे प्रथमं प्रत्यस्यति । सम्यक्स्रवन्ति सरितो न धेना इत्यन्नं वै धेनास्तदिदं सम्यङ्मुखमभिसंस्रवत्यन्तर्हृदा मनसा पूयमाना इत्यन्तर्वै हृदयेन मनसा सताऽन्नं पूतं य ऋजुस्तस्य घृतस्य धारा अभिचाकशीमीति या एवैतस्मिन्नग्नावाहुतीर्होष्यन्भवति ता

एतदाह हिरण्ययो वेतसो मध्ये अग्नेरिति य एवैष हिरण्मयः पुरुषस्तमेतदाह - ७.५.२.[११]

ऋचे त्वेतीह । प्राणो वा ऋक्प्राणेन ह्यर्चति रुचे त्वेतीह प्राणो वै रुक्प्राणेन हि रोचतेऽथो प्राणाय हीदं सर्वं रोचते भासे त्वेतीह ज्योतिषे त्वेतीह भास्वती हीमे ज्योतिष्मती चक्षुषी अभूदिदं विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य चेतीहाग्निर्ज्योतिषा ज्योतिष्मान्रुक्मो वर्चसा वर्चस्वानितीह विश्वावतीभ्यां विश्वं हि श्रोत्रम् - ७.५.२.[१२]

अथ पुरुषशीर्षमुद्गृह्णाति । महयत्येवैनदेतत्सहस्रदा असि सहस्राय त्वेति सर्वं वै सहस्रं सर्वस्य दातासि सर्वस्मै त्वेत्येतत् - ७.५.२.[१३]

अथैनानुपदधाति । पुरुषं प्रथमं पुरुषं तद्वीर्येणाप्त्वा दधाति मध्ये पुरुषमभित इतरान्पशून्पुरुषं तत्पशूनां मध्यतोऽत्तारं दधाति तस्मात्पुरुष एव पशूनां मध्यतोऽत्ता - ७.५.२.[१४]



अश्वं चाविं चोत्तरत । एतस्यां तद्दिश्येतौ पशू दधाति तस्मादेतस्यां दिश्येतौ पशू भूयिष्ठौ - ७.५.२.[१५]

गां चाजं च दक्षिणत । एतस्यां तद्दिश्येतौ पशू दधाति तस्मादेतस्यां दिश्येतौ पशू भूयिष्ठौ - ७.५.२.[१६]

पयसि पुरुषमुपदधाति । पशवो वै पयो यजमानं तत्पशुषु प्रतिष्ठापयत्यादित्यं गर्भं पयसा समङ्ग्धीत्यादित्यो वा एष गर्भो यत्पुरुषस्तं पयसा समङ्ग्धीत्येतत्सहस्रस्य प्रतिमां विश्वरूपमिति पुरुषो वै सहस्रस्य प्रतिमा पुरुषस्य ह्येव सहस्रं भवति परिवृङ्ग्धि हरसा माऽभिमंस्था इति पर्येनं वृङ्ग्ध्यर्चिषा मैनं हिंसीरित्येतच्छतायुषं कृणुहि चीयमान इति पुरुषं तत्पशूनां शतायुं करोति तस्मात्पुरुष एव पशूनां शतायुः - ७.५.२.[१७]

अथोत्तरतोऽश्वम् । वातस्य जूतिमिति वातस्य वा एष जूतिर्यदश्वो वरुणस्य नाभिमिति वारुणो ह्यश्वोऽश्वं जज्ञानं सरिरस्य मध्य इत्यापो वै सरिरमप्सुजा उ वा अश्वः शिशुं नदीनां हरिमद्रिबुध्नमिति गिरिर्वा अद्रिर्गिरिबुध्ना उ वा आपोऽग्ने मा हिंसीः परमे व्योमन्निती मे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिंसीरित्येतत् - ७.५.२.[१८]

अथ दक्षिणतो गाम् । अजस्रमिन्दुमरुषमिति सोमो वा इन्दुः स हैष सोमोऽजस्रो यद्गौर्भुरण्युमिति भर्तारमित्येतदग्निमीडे पूर्वचित्तिं नमोभिरित्याग्नेयो वै गौः पूर्वचित्तिमिति प्राञ्चं ह्यग्निमुद्धरन्ति प्राञ्चमुपचरन्ति स पर्वभिर्ऋतुशः कल्पमान इति यद्वा एष चीयते तदेष पर्वभिर्ऋतुशः कल्पते गां मा हिंसीरदितिं विराजमिति विराड्वै गौरन्नं वै विराडन्नमु गौः - ७.५.२.[१९]

अथोत्तरतोऽविम् । वरूत्रीं त्वष्टुर्वरुणस्य नाभिमिति वारुणी च हि त्वाष्ट्री चाविरविं जज्ञानां रजसः परस्मादिति श्रोत्रं वै परं रजो दिशो वै श्रोत्रं परं रजो महीं साहस्रीमसुरस्य मायामिति महतीं साहस्रीमसुरस्य मायामित्येतदग्ने मा हिंसीः परमे व्योमन्निती मे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिंसीरित्येतत् - ७.५.२.[२०]

अथ दक्षिणतोऽजम् । यो अग्निरग्नेरध्यजायतेत्यग्निर्वा एषोऽग्नेरध्यजायत शोकात्पृथिव्या उत वा दिवस्परीति यद्वै प्रजापतेः शोकादजायत तद्दिवश्च पृथिव्यै
च शोकादजायत येन प्रजा विश्वकर्मा जजानेति वाग्वा अजो वाचो वै प्रजा विश्वकर्मा जजान तमग्ने हेडः परि ते वृणक्त्विति यथैव यजुस्तथा बन्धुः - ७.५.२.[२१]

त एते पशवः । तान्नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना ह्येते पशवः - ७.५.२.[२२]

अथ पुरुषशीर्षमभिजुहोति । आहुतिर्वै यज्ञः पुरुषं तत्पशूनां यज्ञियं करोति तस्मात्पुरुष एव पशूनां यजते - ७.५.२.[२३]

यद्वैवैनदभिजुहोति । शीर्षंस्तद्वीर्यं दधात्याज्येन जुहोति वज्रो वा आज्यं वीर्यं वै वज्रो वीर्यमेवास्मिन्नेतद्दधाति स्वाहाकारेण वृषा वै स्वाहाकारो वीर्यं वै वृषा वीर्यमेवास्मिन्नेतद्दधाति त्रिष्टुभा वज्रो वै त्रिष्टुब्वीर्यं वै वज्रो वीर्यं त्रिष्टुब्वीर्येणैवास्मिन्नेतद्वीर्यं दधाति - ७.५.२.[२४]

स वा अर्धर्चमनुद्रुत्य स्वाहाकरोति । अस्थि वा ऋगिदं तच्छीर्षकपालं विहाप्य यदिदमन्तरतः शीर्ष्णो वीर्यं तदस्मिन्दधाति - ७.५.२.[२५]

अथोत्तरमर्धर्चमनुद्रुत्य स्वाहाकरोति । इदं तच्छीर्षकपालं संधाय यदिदमुपरिष्टाच्छीर्ष्णो वीर्यं तदस्मिन्दधाति - ७.५.२.[२६]

चित्रं देवानामुदगादनीकमिति । असौ वा आदित्य एष पुरुषस्तदेतच्चित्रं देवानामुदेत्यनीकं चक्षुर्मित्रस्य वरुणस्याग्नेरित्युभयेषां हैतद्देवमनुष्याणां चक्षुराप्रा द्यावापृथिवी अन्तरिक्षमित्युद्यन्वा एष इमांल्लोकानापूरयति सूर्य आत्मा जगतस्तस्थुषश्चेत्येष ह्यस्य सर्वस्यात्मा यच्च जगद्यच्च तिष्ठति - ७.५.२.[२७]



अथोत्सर्गैरुपतिष्ठत । एतद्वै यत्रैतान्प्रजापतिः पशूनालिप्सत त आलिप्स्यमाना अशोचंस्तेषामेतैरुत्सर्गैः शुचं पाप्मानमपाहंस्तथैवैषामयमेतदेतैरुत्सर्गैः शुचं पाप्मानमपहन्ति - ७.५.२.[२८]

तद्धैके । यंयमेव पशुमुपदधति । तस्यतस्य शुचमुत्सृजन्ति नेच्छुचं पाप्मानमभ्युपदधामहा इति ते ह ते शुचं पाप्मानमभ्युपदधति यां हि पूर्वस्य शुचमुत्सृजन्ति तामुत्तरेण सहोपदधति - ७.५.२.[२९]

विपरिक्राममु हैक उपतिष्ठन्ते । ऊर्ध्वां शुचमुत्सृजाम इति ते ह ते शुचं पाप्मानमनूद्यन्त्यूर्ध्वो ह्येतेन कर्मणैत्यूर्ध्वामु शुचमुत्सृजन्ति - ७.५.२.[३०]

बाह्येनैवाग्निमुत्सृजेत् । इमे वै लोका एषोऽग्निरेभ्यस्तल्लोकेभ्यो बहिर्धा शुचं दधाति बहिर्वेदीयं वै वेदिरस्यै तद्बहिर्धा शुचं दधात्युदङ् तिष्ठन्नेतस्यां ह दिश्येते पशवस्तद्यत्रैते पशवस्तदेवैष्वेतच्छुचं दधाति - ७.५.२.[३१]

पुरुषस्य प्रथममुत्सृजति । तं हि प्रथममुपदधातीमं मा हिंसीर्द्विपादं पशुमिति द्विपाद्वा एष पशुर्यत्पुरुषस्तं मा हिंसीरित्येतत्सहस्राक्षो मेधाय चीयमान इति हिरण्यशकलैर्वा एष सहस्राक्षो मेधायेत्यन्नायेत्येतन्मयुं पशुं मेधमग्ने जुषस्वेति किम्पुरुषो वै मयुः किम्पुरुषमग्ने जुषस्वेत्येतत्तेन चिन्वानस्तन्वो निषीदेत्यात्मा वै
तनूस्तेन चिन्वान आत्मानं संस्कुरुष्वेत्येतन्मयुं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विति तन्मयौ च शुचं दधाति यं च द्वेष्टि तस्मिंश्च - ७.५.२.[३२]

अथाश्वस्य । इमं मा हिंसीरेकशफं पशुमित्येकशफो वा एष पशुर्यदश्वस्तं मा हिंसीरित्येतत्कनिक्रदं वाजिनं वाजिनेष्विति कनिक्रदो वा एष वाज्यु वाजिनेषु गौरमारण्यमनु ते दिशामीति तदस्मै गौरमारण्यमनुदिशति तेन चिन्वानस्तन्वो निषीदेति तेन चिन्वान आत्मानं संस्कुरुष्वेत्येतद्गौरं ते शुगृच्छतु यं द्विषमस्तं ते शुगृच्छत्विति तद्गौरे च शुचं दधाति यं च द्वेष्टि तस्मिंश्च - ७.५.२.[३३]



अथ गोः । इमं साहस्रं शतधारमुत्समिति साहस्रो वा एष शतधार उत्सो यद्गौर्व्यच्यमानं सरिरस्य मध्य इतीमे वै लोकाः सरिरमुपजीव्यमानमेषु लोकेष्वित्येतद्घृतं दुहानामदितिं जनायेति घृतं वा एषाऽदितिर्जनाय दुहेऽग्ने मा हिंसीः परमे व्योमन्निती मे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिंसीरित्येतद्गवयमारण्यमनु ते दिशामीति तदस्मै गवयमारण्यमनुदिशति तेन चिन्वानस्तन्वो निषीदेति तेन चिन्वान आत्मानं संस्कुरुष्वेत्येतद्गवयं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विति तद्गवये च शुचं दधाति यं च द्वेष्टि तस्मिंश्च - ७.५.२.[३४]

अथावेः । इममूर्णायुमित्यूर्णाबलमित्येतद्वरुणस्य नाभिमिति वारुणो ह्यविस्त्वचम्

पशूनां द्विपदां चतुष्पदामित्युभयेषां हैष पशूनां त्वग्द्विपदां च चतुष्पदां च त्वष्टुः प्रजानां प्रथमं जनित्रमित्येतद्ध त्वष्टा प्रथमं रूपं विचकाराग्रे मा हिंसीः परमे व्योमन्नितीमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिंसीरित्येतदुष्ट्रमारण्यमनु ते दिशामीति तदस्मा उष्ट्रमारण्यमनुदिशति तेन चिन्वानस्तन्वो निषीदेति तेन चिन्वान आत्मानं संस्कुरुष्वेत्येतदुष्ट्रं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विति तदुष्ट्रे च शुचं दधाति यं च द्वेष्टि तस्मिंश्च - ७.५.२.[३५]

अथाजस्य । अजो ह्यग्नेरजनिष्ट शोकादिति यद्वै प्रजापतेः शोकादजायत तदग्नेः शोकादजायत सो अपश्यज्जनितारमग्र इति प्रजापतिर्वै जनिता सोऽपश्यत्प्रजापतिमग्र इत्येतत्तेन देवा देवतामग्र आयन्निति वाग्वा अजो वाचो वै देवा देवतामग्रमायंस्तेन रोहमायन्नुप मेध्यास इति स्वर्गो वै लोको रोहस्तेन स्वर्गं लोकमायुन्नुप मेध्यास इत्येतच्छरभमारण्यमनु ते दिशामीति तदस्मै शरभमारण्यमनुदिशति तेन चिन्वानस्तन्वो निषीदेति तेन चिन्वान आत्मानं संस्कुरुष्वेत्येतच्छरभं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विति तच्छरभे च शुचं दधाति यं च द्वेष्टि तस्मिंश्च - ७.५.२.[३६]



तदाहुः । यां वै तत्प्रजापतिरेतेषां पशूनां शुचं पाप्मानमपाहंस्त एते पञ्च पशवोऽभवंस्त एत उत्क्रान्तमेधा अमेध्या अयज्ञियास्तेषां ब्राह्मणो नाश्नीयात्तानेतस्यां दिशि दधाति तस्मादेतस्यां दिशि पर्जन्यो न वर्षुको यत्रैते भवन्ति - ७.५.२.[३७]

प्रत्येत्याग्निमुपतिष्ठते । एतद्वा एतदयथायथं करोति यदग्नौ सामिचितेबहिर्वेद्येति तस्मा एवैतन्निह्नुतेऽहिंसाया आग्नेय्याग्नय एवैतन्निह्नुते गायत्र्या गायत्र्योऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मा एतन्निह्नुतेऽनिरुक्तया सर्वं वा अनिरुक्तं सर्वेणैवास्मा एतन्निह्नुते यविष्टवत्यैतद्धास्य प्रियं धाम यद्यविष्ठ इति यद्वै जात इदं सर्वमयुवत तस्माद्यविष्ठः - ७.५.२.[३८]

त्वं यविष्ठ दाशुष इति । यजमानो वै दाश्वान्नॄं पाहीति मनुष्या वै नरः श्रृणुधी गिर इति श्रृणु न इमां स्तुतिमित्येतद्रक्षा तोकमुत त्मनेति प्रजा वै तोकं रक्ष प्रजां चात्मानं चेत्येतत् - ७.५.२.[३९]

आरुह्याग्निं जघनेन स्वयमातृण्णां परीत्यापस्या उपदधाति । आप एता यदपस्या अथ वा एतेभ्यः पशुभ्य आप उत्क्रान्ता भवन्ति तद्यदपस्या उपदधात्येष्वेवैतत्पशुष्वपो दधात्यनन्तर्हिताः पशुभ्य उपदधात्यनन्तर्हितास्तत्पशुभ्योऽपो दधाति पञ्चपञ्चोपदधाति पञ्च ह्येते पशवः सर्वत उपदधाति सर्वत एवैष्वेतदपो दधाति - ७.५.२.[४०]

तद्याः पञ्चदश पूर्वाः । ता अपस्या वज्रो वा आपो वज्रः पञ्चदशस्तस्माद्येनापो यन्त्यपैव तत्र पाप्मानं घ्नन्ति वज्रो हैव तस्यार्धस्य पाप्मानमपहन्ति तस्माद्वर्षत्यप्रावृतो व्रजेदयं मे वज्रः पाप्मानमपहनदिति - ७.५.२.[४१]



अथ याः पञ्चोत्तराः । ताश्छन्दस्याः पशवो वै छन्दांस्यन्नं पशवोऽन्नमु पशोर्मांसमथ वा एतेभ्यः पशुभ्यो मांसान्युत्क्रान्तानि भवन्ति तद्यच्छन्दस्या उपदधात्येष्वेवैतत्पशुषु मांसानि दधात्यनन्तर्हिताः पशुभ्य उपदधात्यनन्तर्हितानि तत्पशुभ्यो मांसानि दधात्यन्तरा अपस्या भवन्ति बाह्याश्छन्दस्या अन्तरा ह्यापो बाह्यानि मांसानि - ७.५.२.[४२]

तदाहुः । यदिमा आप एतानि मांसान्यथ क्व त्वक्क लोमेत्यन्नं वाव पशोस्त्वगन्नं लोम तद्यच्छन्दस्या उपदधाति सैव पशोस्त्वक्तल्लोमाथो यान्यमून्युखायामजलोमानि तानि लोमानि बाह्योखा भवत्यन्तराणि पशुशीर्षाणि बाह्यानि हि लोमान्यन्तर आत्मा यदीतरेण यदीतरेणेति ह स्माह शाण्डिल्यः सर्वानेव वयं कृत्स्नान्पशून्त्संस्कुर्म इति - ७.५.२.[४३]

यद्वेवापस्या उपदधाति । प्रजापतेर्विस्रस्तादापऽ आयंस्तास्वितास्वविशद्यदविशत्तस्माद्विंशतिस्ता अस्याङ्गुलिभ्योऽध्यस्रवन्नन्तो वा अङ्गुलयोऽन्तत एवास्मात्ता आप आयन् - ७.५.२.[४४]

स यः स प्रजापतिर्व्यस्रंसत । अयमेव स योऽयमग्निश्चीयतेऽथ या अस्मात्ता आप आयन्नेतास्ता अपस्यास्तद्यदेता उपदधाति या एवास्मात्ता आप आयंस्ता अस्मिन्नेतत्प्रतिदधाति तस्मादेता अत्रोपदधाति - ७.५.२.[४५]

अपां त्वेमन्त्सादयामीति । वायुर्वा अपामेम यदा ह्येवैष इतश्चेतश्च वात्यथापो यन्ति वायौ तां सादयति - ७.५.२.[४६]

अपां त्वोद्मन्त्सादयामीति । ओषधयो वा अपामोद्म यत्र ह्याप उन्दन्त्यस्तिष्ठन्ति तदोषधयो जायन्त ओषधिषु तां सादयति - ७.५.२.[४७]

अपां त्वा भस्मन्त्सादयामीति । अभ्रं वा अपां भस्माभ्रे तां सादयति - ७.५.२.[४८]

अपां त्वा ज्योतिषि सादयामीति । विद्युद्वा अपां ज्योतिर्विद्युति तां सादयति - ७.५.२.[४९]



अपां त्वाऽयने सादयामीति । इयं वा अपामयनमस्यां ह्यापो यन्त्यस्यां तां सादयति तद्या अस्यैतेभ्यो रूपेभ्य आप आयंस्ता अस्मिन्नेतत्प्रतिदधात्यथो एतान्येवास्मिन्नेतद्रूपाणि दधाति - ७.५.२.[५०]

अर्णवे त्वा सदने सादयामीति । प्राणो वा अर्णवः प्राणे तां सादयति - ७.५.२.[५१]

समुद्रे त्वा सदने सादयामीति । मनो वै समुद्रो मनसो वै समुद्राद्वाचाभ्र्या देवास्त्रयीं विद्यां निरखनंस्तदेष श्लोकोऽभ्युक्तो ये समुद्रान्निरखनन्देवास्तीक्ष्णाभिरभ्रिभिः। सुदेवो अद्य तद्विद्याद्यत्र निर्वपणं दधुरिति मनः समुद्रो वाक्तीक्ष्णाभ्रिस्त्रयी विद्या निर्वपणमेतदेष श्लोकोऽभ्युक्तो मनसि तां सादयति - ७.५.२.[५२]

सरिरे त्वा सदने सादयामीति । वाग्वै सरिरं वाचि तां सादयति - ७.५.२.[५३]

अपां त्वा क्षये सादयामीति । चक्षुर्वा अपां क्षयस्तत्र हि सर्वदैवापः क्षियन्ति चक्षुषि तां सादयति - ७.५.२.[५४]

अपां त्वा सधिषि सादयामीति । श्रोत्रं वा अपां सधिः श्रोत्रे तां सादयति तद्या अस्यैतेभ्यो रूपेभ्यो आप आयंस्ता अस्मिन्नेतत्प्रतिदधात्यथो एतान्येवास्मिन्नेतद्रूपाणि दधाति - ७.५.२.[५५]

अपां त्वा सदने सादयामीति । द्यौर्वा अपां सदनं दिवि ह्यापः सन्ना दिवि तां सादयति - ७.५.२.[५६]

अपां त्वा सधस्थे सादयामीति अन्तरिक्षं वा अपां सधस्थमन्तरिक्षे तां सादयति - ७.५.२.[५७]



अपां त्वा योनौ सादयामीति । समुद्रो वा अपां योनिः समुद्रे तां सादयति - ७.५.२.[५८]

अपां त्वा पुरीषे सादयामीति । सिकता वा अपां पुरीषं सिकतासु तां सादयति - ७.५.२.[५९]

अपां त्वा पाथसि सादयामीति । अन्नं वा अपां पाथोऽन्ने तां सादयति तद्या अस्यैतेभ्यो रूपेभ्य आप आयंस्ता अस्मिन्नेतत्प्रतिदधात्यथो एतान्येवास्मिन्नेतद्रूपाणि दधाति - ७.५.२.[६०]

गायत्रेण त्वा च्छन्दसा सादयामि । त्रैष्टुभेन त्वा च्छन्दसा सादयामि जागतेन त्वा च्छन्दसा सादयाम्यानुष्टुभेन त्वा च्छन्दसा सादयामि पाङ्क्तेन त्वा च्छन्दसा सादयामीति तद्या अस्यैतेभ्यश्छन्दोभ्य आप आयंस्ता अस्मिन्नेतत्प्रतिदधात्यथो एतान्येवास्मिन्नेतच्छन्दांसि दधाति - ७.५.२.[६१]

७.५.२.[६२]
ता एता अङ्गुलयः । ताः । सर्वत उपदधाति सर्वतो हीमा अङ्गुलयोऽन्तेषूपदधात्यन्तेषु हीमा अङ्गुलयश्चतुर्धोपदधाति चतुर्धा हीमा अङ्गुलयः पञ्चपञ्चोपदधाति पञ्चपञ्च हीमा अङ्गुलयो नानोपदधाति नाना हीमा अङ्गुलयः सकृत्सकृत्सादयति समानं तत्करोति तस्मात्समानसम्बन्धनाः
इति माध्यन्दिनीये शतपथब्राह्मणे हस्ति(घ) षट्नामकं सप्तमं काण्डं समाप्तम्।।

८.१.१ पञ्चाशत्प्राणभृदिष्टकोपधानम्
प्राणभृत उपदधाति । प्राणा वै प्राणभृतः प्राणानेवैतदुपदधाति ताः प्रथमायां चिता उपदधाति पूर्वार्ध एषोऽग्नेर्यत्प्रथमा चितिः पुरस्तात्तत्प्राणान्दधाति तस्मादिमे पुरस्तात्प्राणाः - ८.१.१.[१]



ता दशदशोपदधाति । दश वै प्राणा यदु वा अपि बहु कृत्वो दशदश दशैव तत्पञ्च कृत्वो दशदशोपदधाति पञ्च वा एतान्पशूनुपदधाति दशदश वा एकैकस्मिन्पशौ प्राणास्तदेषु सर्वेषु प्राणान्दधात्यनन्तर्हिताः पशुभ्य उपदधात्यनन्तर्हितांस्तत्पशुभ्यः प्राणान्दधाति सर्वत उपदधाति सर्वत एवैष्वेतत्प्राणान्दधाति - ८.१.१.[२]

यद्वेव प्राणभृत उपदधाति । प्रजापतेर्विस्रस्तात्प्राणा उदक्रामन्देवता भूत्वा तानब्रवीदुप मेत प्रति म एतद्धत्त येन मे यूयमुदक्रमिष्टेति स वै तदन्नं सृजस्व यत्ते वयं पश्यन्त उपवसामेति ते वा उभये सृजामहा इति तथेति ते प्राणाश्च प्रजापतिश्चैतदन्नमसृजन्तैताः प्राणभृतः - ८.१.१.[३]

स पुरस्तादुपदधाति । अयं पुरो भुव इत्यग्निर्वै पुरस्तद्यत्तमाह पुर इति प्राञ्चं ह्यग्निमुद्धरन्ति प्राञ्चमुपचरन्त्यथ यद्भुव इत्याहाग्निर्वै भुवोऽग्नेर्हीदं सर्वं भवति प्राणो हाग्निर्भूत्वा पुरस्तात्तस्थौ तदेव तद्रूपमुपदधाति - ८.१.१.[४]

तस्य प्राणो भौवायन इति । प्राणं तस्माद्रूपादग्नेर्निरमिमीत वसन्तः प्राणायन इति वसन्तमृतुं प्राणान्निरमिमीत गायत्री वासन्तीति गायत्रीं छन्दो वसन्तादृतोर्निरमिमीत गायत्र्यै गायत्रमिति गायत्र्यै छन्दसो गायत्रं साम निरमिमीत गायत्रादुपांशुरिति गायत्रात्साम्न उपांशुं ग्रहं निरमिमीतोपांशोस्त्रिवृदित्युपांशोर्ग्रहात्त्रिवृतं स्तोमं निरमिमीत त्रिवृतो रथन्तरमिति त्रिवृतः स्तोमाद्रथन्तरं पृष्ठं निरमिमीत - ८.१.१.[५]

वसिष्ठ ऋषिरिति । प्राणो वै वसिष्ठ ऋषिर्यद्वै नु श्रेष्ठस्तेन वसिष्ठोऽथो यद्वस्तृतमो वसति तेनो एव वसिष्ठः प्रजापतिगृहीतया त्वयेति प्रजापतिसृष्टया त्वयेत्येतत्प्राणं गृह्णामि प्रजाभ्य इति प्राणं पुरस्तात्प्रापादयत नानोपदधाति ये नाना कामाः प्राणे तांस्तद्दधाति सकृत्सादयत्येकं तत्प्राणं करोत्यथ यन्नाना सादयेत्प्राणं ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका यजुः सादनं सूददोहास्तत्त्रिवृत्त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तत्कृत्वोपदधाति - ८.१.१.[६]



अथ दक्षिणतः । अयं दक्षिणा विश्वकर्मेत्ययं वै वायुर्विश्वकर्मा योऽयं पवत एष हीदं सर्वं करोति तद्यत्तमाह दक्षिणेति तस्मादेष दक्षिणैव भूयिष्ठं वाति मनो ह वायुर्भूत्वा दक्षिणतस्तस्थौ तदेव तद्रूपमुपदधाति - ८.१.१.[७]

तस्य मनो वैश्वकर्मणमिति । मनस्तस्माद्रूपाद्वायोर्निरमिमीत ग्रीष्मो मानस इति ग्रीष्ममृतुं मनसो निरमिमीत त्रिष्टुब्ग्रैष्मीति त्रिष्टुभं छन्दो ग्रीष्मादृतोर्निरमिमीत त्रिष्टुभः स्वारमिति त्रिष्टुभश्छन्दसः स्वारं साम निरमिमीत स्वारादन्तर्याम इति स्वारात्साम्नोऽन्तर्यामं ग्रहं निरमिमीतान्तर्यामात्पञ्चदश इत्यन्तर्यामाद्ग्रहात्पञ्चदशं स्तोमं निरमिमीत पञ्चदशाद्बृहदिति पञ्चदशात्स्तोमाद्बृहत्पृष्ठं निरमिमीत - ८.१.१.[८]

भरद्वाज ऋषिरिति । मनो वै भरद्वाज ऋषिरन्नं वाजो यो वै मनो बिभर्ति सोऽन्नं वाजं भरति तस्मान्मनो भरद्वाज ऋषिः प्रजापतिगृहीतया त्वयेति प्रजापतिसृष्टया त्वयेत्येतन्मनो गृह्णामि प्रजाभ्य इति मनो दक्षिणतः प्रापादयत नानोपदधाति ये नाना कामा मनसि

तांस्तद्दधाति सकृत्सादयत्येकं तन्मनः करोत्यथ यन्नाना सादयेन्मनो ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका तस्योक्तो बन्धुः - ८.१.१.[९]

८.१.२
अथ पश्चात् । अयं पश्चाद्विश्वव्यचा इत्यसौ वा आदित्यो विश्वव्यचा यदा ह्येवैष उदेत्यथेदं सर्वं व्यचो भवति तद्यत्तमाह पश्चादिति तस्मादेतं प्रत्यञ्चमेव यन्तं पश्यन्ति चक्षुर्हादित्यो भूत्वा पश्चात्तस्थौ तदेव तद्रूपमुपदधाति - ८.१.२.[१]

तस्य चक्षुर्वैश्वव्यचसमिति । चक्षुस्तस्माद्रूपादादित्यान्निरमिमीत वर्षाश्चाक्षुष्य इति वर्षा ऋतुं चक्षुषो निरमिमीत जगती वार्षीति जगतीं छन्दो वर्षाभ्य ऋतोर्निरमिमीत जगत्या ऋक्सममिति जगत्यै छन्दस ऋक्समं साम निरमिमीतऽर्क्समाच्छुक्र इत्यृक्समात्साम्नः शुक्रं ग्रहं निरमिमीत शुक्रात्सप्तदश इति शुक्राद्ग्रहात्सप्तदशं स्तोमं निरमिमीत सप्तदशाद्वैरूपमिति सप्तदशात्स्तोमाद्वैरूपं पृष्ठं निरमिमीत - ८.१.२.[२]



जमदग्निर्ऋषिरिति । चक्षुर्वै जमदग्निर्ऋषिर्यदेनेन जगत्पश्यत्यथो मनुते तस्माच्चक्षुर्जमदग्निर्ऋषिः प्रजापतिगृहीतया त्वयेति प्रजापतिसृष्टया त्वयेत्येतच्चक्षुर्गृह्णामि प्रजाभ्य इति चक्षुः पश्चात्प्रापादयत नानोपदधाति ये नाना कामाश्चक्षुषि तांस्तद्दधाति सकृत्सादयत्येकं तच्चक्षुः करोत्यथ यन्नाना सादयेच्चक्षुर्ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका तस्योक्तो बन्धुः - ८.१.२.[३]

अथोत्तरतः । इदमुत्तरात्स्वरिति दिशो वा उत्तरात्तद्यत्ता आहोत्तरादित्युत्तरा ह्यस्मात्सर्वस्माद्दिशोऽथ यत्स्वरित्याह स्वर्गो हि लोको दिशः श्रोत्रं ह दिशो भूत्वोत्तरतस्तस्थौ तदेव तद्रूपमुपदधाति - ८.१.२.[४]

तस्य श्रोत्रं सौवमिति । श्रोत्रं तस्माद्रूपाद्दिग्भ्यो निरमिमीत शरच्छ्रौत्रीति शरदमृतुं श्रोत्रान्निरमिमीतानुष्टुप्शारदीत्यनुष्टुभं छन्दः शरद ऋतोर्निरमिमीतानुष्टुभ ऐडमित्यनुष्टुभश्छन्दस ऐडं साम निरमिमीतैडान्मन्थीत्यैडात्साम्नो मन्थिनं ग्रहं निरमिमीत

मन्थिन एकविंश इति मन्थिनो ग्रहादेकविंशं स्तोमं निरमिमीतैकविंशाद्वैराजमित्येकविंशात्स्तोमाद्वैराजं पृष्ठं निरमिमीत - ८.१.२.[५]

विश्वामित्र ऋषिरिति । श्रोत्रं वै विश्वामित्र ऋषिर्यदेनेन सर्वतः शृणोत्यथो यदस्मै सर्वतो मित्रं भवति तस्माच्छ्रोत्रं विश्वामित्र ऋषिः प्रजापतिगृहीतया त्वयेति प्रजापतिसृष्टया त्वयेत्येतच्छ्रोत्रं गृह्णामि प्रजाभ्य इति श्रोत्रमुत्तरतः प्रापादयत नानोपदधाति ये नाना कामाः श्रोत्रे तांस्तद्दधाति सकृत्सादयत्येकं तच्छ्रोत्रं करोत्यथ यन्नाना सादयेच्छ्रोत्रं ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका तस्योक्तो बन्धुः - ८.१.२.[६]

अथ मध्ये । इयमुपरि मतिरिति चन्द्रमा वा उपरि तद्यत्तमाहोपरीत्युपरि हि चन्द्रमा अथ यन्मतिरित्याह वाग्वै मतिर्वाचा हीदं सर्वं मनुते वाग्घ चन्द्रमा भूत्वोपरिष्टात्तस्थौ तदेव तद्रूपमुपदधाति - ८.१.२.[७]



तस्यै वाङ्मात्येति । वाचं तस्माद्रूपाच्चन्द्रमसो निरमिमीत हेमन्तो वाच्य इति हेमन्तमृतुं वाचो निरमिमीत पङ्क्तिर्हैमन्तीति पङ्क्तिं च्छन्दो हेमन्तादृतोर्निरमिमीत पङ्क्त्यै निधनवदिति पङ्क्त्यै छन्दसो निधनवत्साम निरमिमीत निधनवत आग्रयण इति निधनवतः साम्न आग्रयणं ग्रहं निरमिमीताग्रयणात्त्रिणवत्रयस्त्रिंशावित्याग्रयणाद्ग्रहात्त्रिणवत्रयस्त्रिंशौ स्तोमौ निरमिमीत त्रिणवत्रयस्त्रिंशाभ्यां शाक्वररैवते इति त्रिणवत्रयस्त्रिंशाभ्यां स्तोमाभ्यां शाक्वररैवते पृष्ठे निरमिमीत - ८.१.२.[८]

विश्वकर्म ऋषिरिति । वाग्वै विश्वकर्मऽर्षिर्वाचा हीदं सर्वं कृतं तस्माद्वाग्विश्वकर्मऽर्षिः प्रजापतिगृहीतया त्वयेति प्रजापतिसृष्टया त्वयेत्येतद्वाचं गृह्णामि प्रजाभ्य इति वाचमुपरिष्टात्प्रापादयत नानोपदधाति ये नाना कामा वाचि तांस्तद्दधाति सकृत्सादयत्येकां तद्वाचं करोत्यथ यन्नाना सादयेद्वाचं ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका तस्योक्तो बन्धुः - ८.१.२.[९]

एतद्वै तदन्नम् । यत्तत्प्राणाश्च प्रजापतिश्चासृजन्तैतावान्वै सर्वो यज्ञो यज्ञ उ देवानामन्नम् - ८.१.२.[१०]

ता दशदशोपदधाति । दशाक्षरा विराड्विराडु कृत्स्नमन्नं सर्वमेवास्मिन्नेतत्कृत्स्नमन्नं दधाति सर्वत उपदधाति सर्वत एवास्मिन्नेतत्कृत्स्नमन्नं दधाति ता हैता विराज एतान्प्राणान्बिभ्रति यत्प्राणान्बिभ्रति तस्मात्प्राणभृतः - ८.१.२.[११]

##८.१.३
तदाहुः । किं प्राणाः किं प्राणभृत इति प्राणा एव प्राणा अङ्गानि प्राणभृन्त्यङ्गानि हि प्राणान्बिभ्रति प्राणास्त्वेव प्राणा अन्नं प्राणभृदन्नं हि प्राणान्बिभर्ति - ८.१.३.[१]

तदाहुः । कथमस्यैताः सर्वाः प्राजापत्या भवन्तीति यदेव सर्वास्वाह प्रजापतिगृहीतया त्वयेत्येवमु हास्यैताः सर्वाः प्राजापत्या भवन्ति - ८.१.३.[२]



तदाहुः । यद्ग्रहाय गृहीताय स्तुवतेऽथ शंसत्यथ कस्मात्पुरस्ताद्ग्रहाणामृचश्च सामानि चोपदधातीति संस्था वै कर्मणोऽन्वीक्षितव्यऽर्चा वै प्रतिपदा ग्रहो गृह्यत ऋचि साम गीयते तदस्यैतद्यत्पुरस्ताद्ग्रहाणामृचश्च सामानि चोपदधात्यथ यदुपरिष्टाद्ग्रहाणां स्तुतशस्त्रे भवतस्तद्वस्यैतद्यदुपरिष्टाद्ग्रहाणां स्तोमांश्च पृष्ठानि चोपदधाति - ८.१.३.[३]

तदाहुः । यदेतत्त्रयं सह क्रियते ग्रह स्तोत्रं शस्त्रमथात्र ग्रहं चैव स्तोत्रं चोपदधाति कथमस्यात्रापि शस्त्रमुपहितं यद्वाव स्तोत्रं तच्छस्त्रं यासु ह्येव स्तुवते ता उ एवानुशंसत्येवमु हास्यात्रापि शस्त्रमुपहितं भवति - ८.१.३.[४]

तदाहुः । यद्यथा पितुः पुत्रमेवं त्रीणि प्रथमान्याहाथ कस्माद्दक्सामयोः संक्रामतीति साम वा ऋचः पतिस्तद्यत्तत्रापि यथा पितुः पुत्रमेवं ब्रूयाद्यथापतिं सन्तं पुत्रं ब्रूयात्ताद्दक्तत्तस्माद्दक्सामयोः संक्रामति कस्मादु त्रिः संतनोतीति पितरं पुत्रं पौत्रं तांस्तत्संतनोति तस्मादु तेभ्य एक एव ददाति - ८.१.३.[५]

तद्याः पुरस्तादुपदधाति । ताः प्राणभृतोऽथ याः पश्चात्ताश्चक्षुर्भृतस्ता अपानभृतोऽथ या दक्षिणतस्ता मनोभृतस्ता उ व्यानभृतोऽथ या उत्तरतस्ताः श्रोत्रभृतस्ता उदानभृतोऽथ या मध्ये ता वाग्भृतस्ता उ समानभृतः - ८.१.३.[६]

तदु ह चरकाध्वर्यवः । अन्या एवापानभृतो व्यानभृत उदानभृतः समानभृतश्चक्षुर्भृतो मनोभृतः श्रोत्रभृतो वाग्भृत इत्युपदधति न तथा कुर्यादत्यहैव रेचयन्त्यत्रो एवैतानि सर्वाणि रूपाण्युपधीयन्ते - ८.१.३.[७]

स वै पुरस्तादुपधाय पश्चादुपदधाति । प्राणो हापानो भूत्वाङ्गुल्यग्रेभ्य इति संचरत्यपान उ ह प्राणो भूत्वाङ्गुल्यग्रेभ्य इति संचरति तद्यत्पुरस्तादुपधाय पश्चादुपदधात्येनावेवैतत्प्राणौ संतनोति संदधाति तस्मादेतौ प्राणौ संततौ संहितौ - ८.१.३.[८]



अथ दक्षिणत उपधायोत्तरत उपदधाति । व्यानो होदानो भूत्वाङ्गुल्यग्रेभ्य इति संचरत्युदान उ ह व्यानो भूत्वाङ्गुल्यग्रेभ्य इति संचरति तद्यद्दक्षिणत उपधायोत्तरत उपदधात्येतावेवैतत्प्राणौ संतनोति संदधाति तस्मादेतौ प्राणौ संततौ संहितौ - ८.१.३.[९]

अथ या मध्य उपदधाति । स प्राणस्ता रेतःसिचोर्वेलयोपदधाति पृष्टयो वै रेतःसिचौ मध्यमु पृष्टयो मध्यत एवास्मिन्नेतत्प्राणं दधाति सर्वत उपदधाति सर्वत एवास्मिन्नेतत्प्राणं दधात्यथो एवं हैष गुदः प्राणः समन्तं नाभिं पर्यक्नो अनूचीश्च तिरश्चीश्चोपदधाति तस्मादिमेऽन्वञ्चश्च तिर्यञ्चश्चात्मन्प्राणाः संस्पृष्टा उपदधाति प्राणानेवैतत्संतनोति संदधाति तस्मादिमे प्राणाः संतताः संहिताः - ८.१.३.[१०]

##८.१.४
ता हैके पुरुषमुपार्प्योपदधति । एष वै प्राणस्तमेता बिभ्रति यत्प्राणम्बिभ्रति तस्मात्प्राणभृत इति न तथा कुर्यादेषोऽहैव प्राणो य एष हिरण्मयः पुरुषस्तस्य त्वयमात्मा

यावदिदमभ्ययमग्निर्विहितस्तद्यद्धास्यैता अङ्गं नाभिप्राप्नुयुः प्राणो हास्य तदङ्गं नाभिप्राप्नुयाद्यदु वै प्राणोऽङ्गं नाभिप्राप्नोति शुष्यति वा वै तन्म्लायति वा तस्मादेनाः परिश्रित्स्वेवोपार्प्योपदध्यादथ या मध्य उपदधाति ताभिरस्यैष आत्मा पूर्णस्ता उ एवैतस्मादनन्तर्हिताः - ८.१.४.[१]

तदाहुः । यदयं पुरो भुवोऽयं दक्षिणा विश्वकर्मायं पश्चाद्विश्वव्यचा इदमुत्तरात्स्वरियमुपरि मतिरिति सम्प्रति दिशोऽभ्यनूच्यन्तेऽथ कस्मादेना अक्ष्णया देशेषूपदधातीति प्राणा वै प्राणभृतस्ता यत्सम्प्रति दिश उपदध्यात्प्रागयं हैवायं प्राणः संचरेदथ यदेना एवमभ्यनूक्ताः सतीरक्ष्णया देशेषूपदधाति तस्मादयं प्रागयं प्राणः सन्नक्ष्णया सर्वाण्यङ्गानि सर्वमात्मानमनुसंचरति (अक्ष्णया – वक्रगत्या – सायण) - ८.१.४.[२]

स एष पशुर्यदग्निः । सोऽत्रैव सर्वः कृत्स्नः संस्कृतस्तस्य याः पुरस्तादुपदधाति तौ बाहू अथ याः पश्चात्ते सक्थ्यावथ या मध्य उपदधाति स आत्मा ता रेतःसिचोर्वेलयोपदधाति पृष्टयो वै रेतःसिचौ मध्यमु पृष्टयो मध्यतो ह्ययमात्मा सर्वत उपदधाति सर्वतो ह्ययमात्मा - ८.१.४.[३]

तदाहुः । यत्पूर्वेषु गणेष्वेकैकं स्तोममेकैकं पृष्ठमुपदधात्यथ कस्मादत्र द्वौ स्तोमौ द्वे पृष्ठे उपदधातीत्यात्मा वा अस्यैष आत्मानं तदङ्गानां ज्येष्ठं वरिष्ठं वीर्यवत्तमं करोति तस्मादयमात्माङ्गानां ज्येष्ठो वरिष्ठो वीर्यवत्तमः - ८.१.४.[४]

तदाहुः । कथमस्यैषोऽग्निः सर्वः कृत्स्न इष्टकायामिष्टकायां संस्कृतो भवतीति मज्जा यजुरस्थीष्टका मांसं सादनं त्वक्सूददोहा लोम पुरीषस्य यजुरन्नम्पुरीषमेवमु हास्यैषोऽग्निः सर्वः कृत्स्न इष्टकायामिष्टकायां संस्कृतो भवति - ८.१.४.[५]

स एष सार्वायुषोऽग्निः । स यो हैतमेवं सार्वायुषमग्निं वेद सर्वं हैवायुरेति - ८.१.४.[६]

अथातः समञ्चनप्रसारणस्यैव । संचितं हैके समञ्चनप्रसारणेनेत्यभिमृशन्ति पशुरेष यदग्निर्यदा वै पशुरङ्गानि संचाञ्चति प्र च सारयत्यथ स तैर्वीर्यं करोति - ८.१.४.[७]

संवत्सरोऽसि परिवत्सरोऽसि । इदावत्सरोऽसीद्वत्सरोऽसि वत्सरोऽसि उषसस्ते कल्पन्तामहोरात्रास्ते कल्पन्तामर्धमासास्ते कल्पन्तां मासास्ते कल्पन्तामृतवस्ते कल्पन्तां संवत्सरस्ते कल्पतां प्रेत्या एत्यै सं चाञ्च प्र च सारय सुपर्णचिदसि तया देवतयाङ्गिरस्वद्ध्रुवः सीदेति - ८.१.४.[८]

अपि ह स्माह शाट्यायनिः । स्फोटतोर्हैकः पक्षयोरुपशुश्रावैतेनाभिमृष्टस्य तस्मादेनमेतेनाभ्येव मृशेदिति - ८.१.४.[९]

अथ ह स्माह स्वर्जिन्नाग्नजितः । नग्नजिद्वा गान्धारः प्राणो वै समञ्चनप्रसारणं यस्मिन्वा अङ्गे प्राणो भवति तत्सं चाञ्चति प्र च सारयति संचितमेवैनं बहिष्टादभ्यन्यात्तदस्मिन्प्राणं समञ्चनप्रसारणं दधाति तथा सं चाञ्चति प्र च सारयतीति तदहैव समञ्चनप्रसारणं यत्स तदुवाच राजन्यबन्धुरिव त्वेव तदुवाच यन्नु शतं कृत्वोऽथो सहस्रम्बहिष्टादभ्यन्युर्न वै तस्मिंस्ते प्राणं दध्युर्यो वा आत्मन्प्राणः स एव प्राणस्तद्यत्प्राणभृत उपदधाति तदस्मिन्प्राणं समञ्चनप्रसारणं दधाति तथा सं चाञ्चति प्र च सारयत्यथ लोकम्पृणे उपदधात्यस्यां स्रक्त्यां तयोरुपरिबन्धुः पुरीषं निवपति तस्योपरि बन्धुः - ८.१.४.[१०]

(इत्याहवनीयाग्निचित्यायां पञ्चचितिकायां प्रथमा चितिः)

##८.२.१
द्वितीयां चितिमुपदधाति । एतद्वै देवाः प्रथमां चितिं चित्वा समारोहन्नयं वै लोकः प्रथमा चितिरिममेव तल्लोकं संस्कृत्य समारोहन् - ८.२.१.[१]

तेऽब्रुवन् । चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवन्नित ऊर्ध्वमिच्छतेति ते चेतयमाना एतां द्वितीयां चितिमपश्यन्यदूर्ध्वं पृथिव्या अर्वाचीनमन्तरिक्षात्तेषामेष लोकोऽध्रुव इवाप्रतिष्ठित इव मनस्यासीत् - ८.२.१.[२]

तेऽश्विनावब्रुवन् । युवं वै ब्रह्माणौ भिषजौ स्थो युवं न इमां द्वितीयां चितिमुपधत्तमिति किं नौ ततो भविष्यतीति युवमेव नोऽस्या अग्निचित्याया अध्वर्यू
भविष्यथ इति तथेति तेभ्य एतामश्विनौ द्वितीयां चितिमुपाधत्तां तस्मादाहुरश्विनावेव देवानामध्वर्यू इति - ८.२.१.[३]

स उपदधाति । ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासीति यद्वै स्थिरं यत्प्रतिष्ठितं तद्ध्रुवमथ वा एषामेष लोकोऽध्रुव इवाप्रतिष्ठित इव मनस्यासीत्तमेवैतत्स्थिरं ध्रुवं कृत्वा प्रत्यधत्तां ध्रुवं योनिमासीद साधुयेति स्थिरं योनिमासीद साधुयेत्येतदुख्यस्य केतुं प्रथमं जुषाणेत्ययं वा अग्निरुख्यस्तस्यैष प्रथमः केतुर्यत्प्रथमा चितिस्तं जुषाणेत्येतदश्विनाध्वर्यू सादयतामिह त्वेत्यश्विनौ ह्यध्वर्यू उपाधत्ताम् - ८.२.१.[४]



कुलायिनी घृतवती पुरंधिरिति । कुलायमिव वै द्वितीया चितिः स्योने सीद सदने पृथिव्या इति पृथिवी वै प्रथमा चितिस्तस्यै शिवे स्योने सीद सदन इत्येतदभि त्वा रुद्रा वसवो गृणन्त्वित्येतास्त्वां देवता अभिगृणन्त्वित्येतदिमा ब्रह्म पीपिहि सौभगायेतीमा ब्रह्माव सौभगायेत्येतदश्विनाध्वर्यू सादयतामिह त्वेत्यश्विनौ ह्यध्वर्यू उपाधत्ताम् - ८.२.१.[५]

स्वैर्दक्षैर्दक्षपितेह सीदेति । स्वेन वीर्येणेह सीदेत्येतद्देवानां सुम्ने बृहते रणायेति देवानां सुम्नाय महते रणायेत्येतत्पितेवैधि सूनव आ सुशेवेति यथा पिता पुत्राय स्योनः सुशेव एवं सुशेवैधीत्येतत्स्वावेशा तन्वा संविशस्वेत्यात्मा वै तनूः स्वावेशेनात्मना संविशस्वेत्येतदश्विनाध्वर्यू सादयतामिह त्वेत्यश्विनौ ह्यध्वर्यू उपाधत्ताम् - ८.२.१.[६]

पृथिव्याः पुरीषमसीति । पृथिवी वै प्रथमा चितिस्तस्या एतत्पुरीषमिव यद्द्वितीयाऽप्सो नामेति रसो नामेत्येतत्तां त्वा विश्वे अभिगृणन्तु देवा इति तां त्वा सर्वेऽभिगृणन्तु देवा

इत्येतत्स्तोमपृष्ठा घृतवतीह सीदेति यान्त्स्तोमानस्यां तंस्यमानो भवति तैरेषा स्तोमपृष्ठा प्रजावदस्मे द्रविणा यजस्वेति प्रजावदस्मे द्रविणमायजस्वेत्येतदश्विनाध्वर्यू सादयतामिह त्वेत्यश्विनौ ह्यध्वर्यू उपाधत्ताम् - ८.२.१.[७]

ता एता दिशः । ता रेतःसिचोर्वेलयोपदधातीमे वै रेतःसिचावनयोस्तद्दिशो दधाति तस्मादनयोर्दिशः सर्वत उपदधाति सर्वतस्तद्दिशो दधाति तस्मात्सर्वतो दिशः सर्वतः समीचीः सर्वतस्तत्समीचीर्दिशो दधाति तस्मात्सर्वतः समीच्यो दिशस्ता नानोपदधाति नाना सादयति नाना सूददोहसाऽधिवदति नाना हि दिशः - ८.२.१.[८]

अथ पञ्चमीं दिश्यामुपदधाति । ऊर्ध्वा ह सा दिक्सा या सोर्ध्वा दिगसौ स आदित्यो ऽमुमेवैतदादित्यमुपदधाति तामन्तरेण दक्षिणां दिश्यामुपदधात्यमुं तदादित्यमन्तरेण दक्षिणां दिशं दधाति तस्मादेषोऽन्तरेण दक्षिणां दिशमेति - ८.२.१.[९]



अदित्यास्त्वा पृष्ठे सादयामीति । इयं वा अदितिरस्यामेवैनमेतत्प्रतिष्ठायां प्रतिष्ठापयत्यन्तरिक्षस्य धर्त्रीं विष्टम्भनीं दिशामधिपत्नीम्भुवनानामित्यन्तरिक्षस्य ह्येष धर्ता विष्टम्भनो दिशामधिपतिर्भुवनानामूर्मिर्द्रप्सो अपामसीति रसो वा ऊर्मिर्विश्वकर्मा त ऋषिरिति प्रजापतिर्वै विश्वकर्मा प्रजापतिसृष्टासीत्येतदश्विनाध्वर्यू सादयतामिह त्वेत्यश्विनौ ह्यध्वर्यू उपाधत्ताम् - ८.२.१.[१०]

यद्वेवैता आश्विनीरुपदधाति । प्रजापतिं विस्रस्तं देवता आदाय व्युदक्रामंस्तस्य यदूर्ध्वं प्रतिष्ठाया अवाचीनं मध्यात्तदस्याश्विनावादायोत्क्रम्यातिष्ठताम् - ८.२.१.[११]

तावब्रवीत् । उप मेतं प्रति म एतद्धत्तं येन मे युवमुदक्रमिष्टमिति किं नौ ततो भविष्यतीति युवद्देवत्यमेव म एतदात्मनो भविष्यतीति तथेति तदस्मिन्नेतदश्विनौ प्रत्यधत्ताम् - ८.२.१.[१२]

तद्या एताः पञ्चाश्विन्यः । एतदस्य तदात्मनस्तद्यदेता अत्रोपदधाति यदेवास्यैता

आत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेता अत्रोपदधाति - ८.२.१.[१३]

ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासीति । यद्वै स्थिरं यत्प्रतिष्ठितं तद्ध्रुवमथ वा अस्यैतदस्थिरमिवाध्रुवमिवात्मन आसीत्तदेवैतत्स्थिरं ध्रुवं कृत्वा प्रत्यधत्ताम् - ८.२.१.[१४]

कुलायिनी घृतवती पुरंधिरिति । कुलायमिव वा अस्यैतदात्मनः स्वैर्दक्षैर्दक्षपितेह सीदेत्यदक्षयतामेवास्यैतदात्मनः पृथिव्याः पुरीषमसीति पुरीषसंहितमिव वा अस्यैतदात्मनो रेतःसिचोर्वेलया पृष्टयो वै रेतःसिचौ पृष्टिसाचयमिव वा अस्यैतदात्मनः सर्वत उपदधाति सर्वतो ह्यस्यैतदश्विनावात्मनः प्रत्यधत्ताम् - ८.२.१.[१५]

अथ ऋतव्येष्टकोपधानम्

अथऽर्तव्ये उपदधाति । ऋतव एते यदृतव्ये ऋतूनेवैतदुपदधाति शुक्रश्च शुचिश्च ग्रैष्मावृतू इति नामनी एनयोरेते नामभ्यामेवैने एतदुपदधाति द्वे इष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोति - ८.२.१.[१६]



तद्यदेते अत्रोपदधाति । संवत्सर एषोऽग्निरिम उ लोकाः संवत्सरस्तस्य यदूर्ध्वं पृथिव्या अर्वाचीनमन्तरिक्षात्तदस्यैषा द्वितीया चितिस्तद्वस्य ग्रीष्मऋतुस्तद्यदेते अत्रोपदधाति यदेवास्यैते आत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेते अत्रोपदधाति - ८.२.१.[१७]

यद्वेवैते अत्रोपदधाति । प्रजापतिरेषोऽग्निः संवत्सर उ प्रजापतिस्तस्य यदूर्ध्वं प्रतिष्ठाया अवाचीनं मध्यात्तदस्यैषा द्वितीया चितिस्तद्वस्य ग्रीष्मऋतुस्तद्यदेते अत्रोपदधाति यदेवास्यैते आत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेते अत्रोपदधाति - ८.२.१.[१८]

८.२.२ अथ पञ्चवैश्वदेवेष्टकोपधानम्

अथ वैश्वदेवीरुपदधाति । एषा वै सा द्वीतीया चितिर्यामेभ्यस्तदश्विना उपाधत्तां

तामुपधायेदं सर्वमभवतां यदिदं किं च - ८.२.२.[१]

ते देवा अब्रुवन् । अश्विनौ वा इदं सर्वमभूतामुप तज्जानीत यथा वयमिहाप्यसामेति तेऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत यथा वयमिहाप्यसामेति ते चेतयमाना एता इष्टका अपश्यन्वैश्वदेवीः - ८.२.२.[२]

तेऽब्रुवन् । अश्विनौ वा इदं सर्वमभूतामश्विभ्यामेवाश्विनोश्चितिमनूपदधामहा इति ते ऽश्विभ्यामेवाश्विनोश्चितिमनूपादधत तस्मादेतामाश्विनी चितिरित्याचक्षते तस्माद्यथैव पूर्वासामुदर्क एवमेतासामश्विभ्यां ह्येवाश्विनोश्चितिमनूपादधत - ८.२.२.[३]

यद्वेव वैश्वदेवीरुपदधाति । ये वै ते विश्वे देवा एतां द्वितीयां चितिमपश्यन्ये त एतेन रसेनोपायंस्त एते तानेवैतदुपदधाति ता एताः सर्वाः प्रजास्ता रेतःसिचोर्वेलयोपदधातीमे वै रेतःसिचावनयोस्तत्प्रजा दधाति तस्मादनयोः प्रजाः सर्वत उपदधाति सर्वतस्तत्प्रजा दधाति तस्मात्सर्वतः प्रजा दिश्या अनूपदधाति दिक्षु तत्प्रजा दधाति तस्मात्सर्वासु दिक्षु प्रजाः - ८.२.२.[४]



यद्वेव वैश्वदेवीरुपदधाति । प्रजापतेर्विस्रस्तात्सर्वाः प्रजा मध्यत उदक्रामन्नेतस्या अधि योनेस्ता एनमेतस्मिन्नात्मनः प्रतिहिते प्रापद्यन्त - ८.२.२.[५]

स यः स प्रजापतिर्व्यस्रंसत । अयमेव स योऽयमग्निश्चीयतेऽथ या अस्मात्ताः प्रजा मध्यत उदक्रामन्नेतास्ता वैश्वदेव्य इष्टकास्तद्यदेता उपदधाति या एवास्मात्ताः प्रजा मध्यत उदक्रामंस्ता अस्मिन्नेतत्प्रपादयति रेतःसिचोर्वेलया पृष्टयो वै रेतःसिचौ मध्यमु पृष्टयो मध्यत एवास्मिन्नेताः प्रजाः प्रपादयति सर्वत उपदधाति सर्वत एवास्मिन्नेताः प्रजाः प्रपादयति - ८.२.२.[६]

यद्वेव वैश्वदेवीरुपदधाति । एतद्वै प्रजापतिरेतस्मिन्नात्मनः प्रतिहितेऽकामयत प्रजाः सृजेय प्रजायेयेति स ऋतुभिरद्भिः प्राणैः संवत्सरेणाश्विभ्यां सयुग्भूत्वैताः प्रजाः

प्राजनयत्तथैवैतद्यजमान एताभिर्देवताभिः सयुग्भूत्वैताः प्रजाः प्रजनयति तस्मादु सर्वास्वेव सजूः सजूरित्यनुवर्तते - ८.२.२.[७]

सजूर्ऋतुभिरिति । तदृतून्प्राजनयदृतुभिर्वै सयुग्भूत्वा प्राजनयत्सजूर्विधाभिरित्यापो वै विधा अद्भिर्हीदं सर्वं विहितमद्भिर्वै सयुग्भूत्वा प्राजनयत्सजूर्देवैरिति तद्देवान्प्राजनयद्यद्देवा इत्याचक्षते सजूर्देवैर्वयोनाधैरिति प्राणा वै देवा वयोनाधाः प्राणैर्हीदं सर्वं वयुनं नद्धमथो च्छन्दांसि वै देवा वयोनाधाश्छन्दोभिर्हीदं सर्वं वयुनं नद्धं प्राणैर्वै सयुग्भूत्वा प्राजनयदग्नये त्वा वैश्वानरायेति संवत्सरो वा अग्निर्वैश्वानरः संवत्सरेण वै सयुग्भूत्वा प्राजनयदश्विनाध्वर्यू सादयतामिह त्वेत्यश्विभ्यां वै सयुग्भूत्वा प्राजनयत् - ८.२.२.[८]

सजूर्वसुभिरिति दक्षिणतः । तद्वसून्प्राजनयत्सजू रुद्रैरिति पश्चात्तद्रुद्रान्प्राजनयत् सजूरादित्यैरित्युत्तरतस्तदादित्यान्प्राजनयत् सजूर्विश्वैर्देवैरित्युपरिष्टात् तद्विश्वान्देवान्प्राजनयत्ता वै समानप्रभृतयः समानोदर्का नाना मध्यतस्ता यत्समानप्रभृतयः समानोदर्काः समानीभिर्हि देवताभिः पुरस्ताच्चोपरिष्टाच्च सयुग्भूत्वा प्राजनयदथ यन्नाना मध्यतोऽन्या अन्या हि प्रजा मध्यतः प्राजनयत् - ८.२.२.[९]

८.२.३ पञ्चप्राणभृदिष्टकोपधानम्

अथ प्राणभृत उपदधाति । एतद्वै देवा अब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमाना वायुमेव चितिमपश्यंस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति - ८.२.३.[१]

प्राणभृत उपदधाति । प्राणो वै वायुर्वायुमेवास्मिन्नेतद्दधाति रेतःसिचोर्वेलयेमे वै रेतःसिचावनयोस्तद्वायुं दधाति तस्मादनयोर्वायुः सर्वत उपदधाति सर्वतस्तद्वायुं दधाति तस्मात्सर्वतो वायुः सर्वतः समीचीः सर्वतस्तत्सम्यञ्चं वायुं दधाति तस्मात्सर्वतः सम्यङ्भूत्वा सर्वाभ्यो दिग्भ्यो वाति दिश्या अनूपदधाति दिक्षु तद्वायुं दधाति तस्मात्सर्वासु दिक्षु वायुः - ८.२.३.[२]

यद्वेव प्राणभृत उपदधाति । आस्वेवैतत्प्रजासु प्राणान्दधाति ता अनन्तर्हिता वैश्वदेवीभ्य उपदधात्यनन्तर्हितांस्तत्प्रजाभ्यः प्राणान्दधाति प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि चक्षुर्म उर्व्या विभाहि श्रोत्रं मे श्लोकयेत्येतानेवास्वेतत्क्लृप्तान्प्राणान्दधाति - ८.२.३.[३]

अथापस्या उपदधाति । एतद्वै देवा अब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमाना वृष्टिमेव चितिमपश्यंस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति - ८.२.३.[४]

अपस्या उपदधाति । आपो वै वृष्टिर्वृष्टिमेवास्मिन्नेतद्दधाति रेतःसिचोर्वेलयेमे वै रेतःसिचावनयोस्तद्वृष्टिं दधाति तस्मादनयोर्वर्षति सर्वत उपदधाति सर्वतस्तद्वृष्टिं दधाति तस्मात्सर्वतो वर्षति सर्वतः समीचीः सर्वतस्तत्समीचीं वृष्टिं दधाति तस्मात्सर्वतः सम्यङ्भूत्वा सर्वाभ्यो दिग्भ्यो वर्षति वायव्या अनूपदधाति वायौ तद्वृष्टिं दधाति तस्माद्यां दिशं वायुरेति तां दिशं वृष्टिरन्वेति - ८.२.३.[५]



यद्वेवापस्या उपदधाति । एष्वेवैतत्प्राणेष्वपो दधाति ता अनन्तर्हिताः प्राणभृद्भ्य उपदधात्यनन्तर्हितास्तत्प्राणेभ्योऽपो दधात्यथो अन्नं वा आपोऽनन्तर्हितं तत्प्राणेभ्योऽन्नं दधात्यपः पिन्वौषधीर्जिन्व द्विपादव चतुष्पात्पाहि दिवो वृष्टिमेरयेत्येता एवैष्वेतत्क्लृप्ता अपो दधाति - ८.२.३.[६]

अथ च्छन्दस्या उपदधाति । एतद्वै देवा अब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमानाः पशूनेव चितिमपश्यंस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति - ८.२.३.[७]

छन्दस्या उपदधाति । पशवो वै छन्दांसि पशूनेवास्मिन्नेतद्दधाति सर्वत उपदधाति सर्वतस्तत्पशून्दधाति तस्मात्सर्वतः पशवोऽपस्या अनूपदधात्यप्सु तत्पशून्प्रतिष्ठापयति तस्माद्यदा वर्षत्यथ पशवः प्रतितिष्ठन्ति - ८.२.३.[८]

यद्वेव च्छन्दस्या उपदधाति । प्रजापतेर्विस्रस्तात्पशव उदक्रामंश्छन्दांसि भूत्वा तान्गायत्री छन्दो भूत्वा वयसाऽऽप्नोत्तद्यद्गायत्र्याऽऽप्नोदेतद्धि छन्द आशिष्ठं सा तद्भूत्वा प्रजापतिरेतान्पशून्वयसाऽऽप्नोत् - ८.२.३.[९]

मूर्धा वय इति । प्रजापतिर्वै मूर्धा स वयोऽभवत्प्रजापतिश्छन्द इति प्रजापतिरेव च्छन्दोऽभवत् - ८.२.३.[१०]

क्षत्रं वय इति । प्रजापतिर्वै क्षत्रं स वयोऽभवन्मयन्दं छन्द इति यद्वा अनिरुक्तं तन्मयन्दमनिरुक्तो वै प्रजापतिः प्रजापतिरेव च्छन्दोऽभवत् - ८.२.३.[११]

विष्टम्भो वय इति । प्रजापतिर्वै विष्टम्भः स वयोऽभवदधिपतिश्छन्द इति प्रजापतिर्वा अधिपतिः प्रजापतिरेव च्छन्दोऽभवत् - ८.२.३.[१२]



विश्वकर्मा वय इति । प्रजापतिर्वै विश्वकर्मा स वयोऽभवत्परमेष्ठी छन्द इत्यापो वै प्रजापतिः परमेष्ठी ता हि परमे स्थाने तिष्ठन्ति प्रजापतिरेव परमेष्ठी छन्दोऽभवत् - ८.२.३.[१३]

तानि वा एतानि । चत्वारि वयांसि चत्वारि च्छन्दांसि तदष्टावष्टाक्षरा गायत्र्येषा वै सा गायत्री या तद्भूत्वा प्रजापतिरेतान्पशून्वयसाऽऽप्नोत्तस्माज्जीर्णं पशुं वयसाऽऽप्त इत्याचक्षते तस्मादु सर्वास्वेव वयो वय इत्यनुवर्ततेऽथ येऽस्मात्ते पशव उदक्रामन्नेते ते पञ्चदशोत्तरे वज्रो वै पशवो वज्रः पञ्चदशस्तस्माद्यस्य पशवो भवन्त्यपैव स पाप्मानं हते वज्रो हैव तस्य पाप्मानमपहन्ति तस्माद्यां कां च दिशं पशुमानेति वज्रविहितां हैव तामन्वेति - ८.२.३.[१४]

८.२.४.[१]

बस्तो वय इति बस्तं वयसाप्नोद्विवलं चन्द इत्येकपदा वै विवलं चन्द एकपदा

ह भूत्वाजा उच्चक्रमुः

८.२.४.[२]

वृष्णिर्वय इति । वृष्णिं वयसाप्नोद्विशालं चन्द इति द्विपदा वै विशालं चन्दो द्विपदा ह भूत्वावय उच्चक्रमुः

८.२.४.[३]



पुरुषो वय इति । पुरुषं वयसाप्नोत्तन्द्रं चन्द इति पङ्क्तिर्वै तन्द्रं चन्दः पङ्क्तिर्ह भूत्वा पुरुषा उच्चक्रमुः

८.२.४.[४]

व्याघ्रो वय इति । व्याघ्रं वयसाप्नोदनाधृष्टं चन्द इति विराड्वा अनाधृष्टं चन्दोऽन्नं वै विराडन्नमनाधृष्टं विराड्भूत्वा व्याघ्रा उच्चक्रमुः

८.२.४.[५]

सिंहो वय इति । सिंहं वयसाप्नोच्चदिश्चन्द इत्यतिचन्दा वै चदिश्चन्दः सा हि सर्वाणि

चन्दांसि चादयत्यतिचन्दा ह भूत्वा सिंहा उच्चक्रमुरथातो निरुक्तानेव पशून्निरुक्तानि चन्दांस्युपदधाति

८.२.४.[६]

पष्ठवाड्वय इति । पष्ठवाहं वयसाप्नोद्बृहती चन्द इति बृहती ह भूत्वा पष्ठवाह उच्चक्रमुः

८.२.४.[७]



उक्षा वय इति । उक्षाणं वयसाप्नोत्ककुप्चन्द इति ककुब्भ भूत्वोक्षाण उच्चक्रमुः

८.२.४.[८]

ऋषभो वय इति । ऋषभं वयसाप्नोत्सतोबृहती चन्द इति सतोबृहती ह भूत्व ऽर्षभा उच्चक्रमुः

८.२.४.[९]

अनड्वान्वय इति । अनड्वाहं वयसाप्नोत्पङ्क्तिश्चन्द इति पङ्क्तिर्ह भूत्वानड्वाह उच्चक्रमुः

८.२.४.[१०]

धेनुर्वय इति । धेनुं वयसाप्नोज्जगती चन्द इति जगती ह भूत्वा धेनव उच्चक्रमुः



८.२.४.[११]

त्र्यविर्वय इति । त्र्यविं वयसाप्नोत्त्रिष्टुप्च्चन्द इति त्रिष्टुब्भ भूत्वा त्र्यवय उच्चक्रमुः

८.२.४.[१२]

दिव्यवाड्वय इति । दित्यवाहं वयसाप्नोद्विराड्वन्द इति विराड भूत्वा दित्यवाह उच्चक्रमुः

८.२.४.[१३]

पञ्चाविर्वय इति । पञ्चाविं वयसाप्नोद्गायत्री चन्द इति गायत्री ह भूत्वा पञ्चावय उच्चक्रमुः

८.२.४.[१४]

त्रिवत्सो वय इति । त्रिवत्सं वयसाप्नोदुष्णिक्चन्द इत्युष्णिग्घ भूत्वा त्रिवत्सा उच्चक्रमुः



८.२.४.[१५]

तुर्यवाड्वय इति । तुर्यवाहं वयसाप्तोदनुष्टुप्चन्द इत्यनुष्टुब्भ भूत्वा तुर्यवाह उच्चक्रमुः

८.२.४.[१६]

एते वै ते पशवः । यांस्तत्प्रजापतिर्वयसाप्नोत्स वै पशुं प्रथममाहाथ वयो ऽथ चन्दो वयसा च ह्येनांश्चन्दसा च परिगत्यात्मन्नधत्तात्मन्नकुरुत तथैवैनानयमेतद्वयसा चैव चन्दसा च परिगत्यात्मन्धत्त आत्मन्कुरुते

८.२.४.[१७]

स एष पशुर्यदग्निः । सोऽत्रैव सर्वः कृत्स्नः संस्कृतस्तस्य याः पुरस्तादुपदधाति शिरोऽस्य ता अथ या दक्षिणतश्चोत्तरतश्च स आत्माथ याः पश्चात्तत्पुचम्

८.२.४.[१८]

स वै पुरस्तादेवाग्र उपदधाति । शिरो हि प्रथमं जायमानस्य जायतेऽथ दक्षिणत उपधायोत्तरत उपदधाति सार्धमयमात्मा जायाता इत्यथ पश्चात्पुचं ह्यन्ततो जायमानस्य जायते



८.२.४.[१९]

तद्यानि वर्षिष्ठानि चन्दांसि । ये स्थविष्ठाः पशवस्तान्मध्य उपदधाति मध्यं तत्प्रति पशुं वरिष्ठं करोति तस्मान्मध्यं प्रति पशुर्वरिष्ठोऽथ ये वीर्यवत्तमाः पशवस्तान्दक्षिणत उपदधाति दक्षिणं तदर्धम् पशोर्वीर्यवत्तरं करोति तस्माद्दक्षिणोऽर्धः पशोर्वीयत्तरः

८.२.४.[२०]

पूर्वार्धं च जघनार्धं चाणिष्ठौ करोति । यदहामूश्चतस्रस्तेनैना अणिष्ठा
अथ यदिह ह्वसिष्ठान्पशूनुपदधाति तेनो एता अणिष्ठाः पूर्वार्धं च
तज्जघनार्धं च पशोरणिष्ठौ करोति तस्मात्पूर्वार्धश्च जघनार्धश्च
पशोरणिष्ठौ तस्मात्पूर्वार्धेन च जघनार्धेन च पशुरुच्च तिष्ठति सं च
विशत्यथ लोकम्पृणे उपदधात्यस्यां स्रक्त्यां तयोरुपरि बन्धुः पुरीषं
निवपति तस्योपरि बन्धुः

८.३.१.[१]

तृतीयां चितिमुपदधाति । एतद्वै देवा द्वितीयां चितिं चित्वा समारोहन्यदूर्ध्वम्
पृथिव्या अर्वाचीनमन्तरिक्षात्तदेव तत्संस्कृत्य समारोहन्



८.३.१.[२]

तेऽब्रुवन् । चेतयध्वमिति चितिमिचतेति वाव तदब्रुवन्नित ऊर्ध्वमिचतेति ते
चेतयमाना अन्तरिक्षमेव बृहतीं तृतीयां चितिमपश्यंस्तेभ्य एष लोकोऽचन्दयत्

८.३.१.[३]

त इन्द्राग्नी अब्रुवन् । युवं न इमां तृतीयां चितिमुपधत्तमिति किं नौ ततो

भविष्यतीति युवमेव नः श्रेष्ठौ भविष्यथ इति तथेति तेभ्य एतामिन्द्राग्नी तृतीयां चितिमुपाधत्तां तस्मादाहुरिन्द्राग्नी एव देवानां श्रेष्ठाविति

८.३.१.[४]

स वा इन्द्राग्निभ्यामुपदधाति । विश्वकर्मणा सादयतीन्द्राग्नी च वै विश्वकर्मा चैतां तृतीयां चितिमपश्यंस्तस्मादिन्द्राग्निभ्यामुपदधाति विश्वकर्मणा सादयति

८.३.१.[५]



यद्वेवेन्द्राग्निभ्यामुपदधाति । विश्वकर्मणा सादयति प्रजापतिं विस्रस्तं देवता आदाय व्युदक्रामंस्तस्येन्द्राग्नी च विश्वकर्मा च मध्यमादायोत्क्रम्यातिष्ठन्

८.३.१.[६]

तानब्रवीत् । उप मेत प्रति म एतद्धत्त येन मे यूयमुदक्रमिष्टेति किं नस्ततो भविष्यतीति युष्मद्देवत्यमेव म एतदात्मनो भविष्यतीति तथेति तदस्मिन्नेतदिन्द्राग्नी च विश्वकर्मा च प्रत्यदधुः

८.३.१.[७]

तद्यैषा मध्यमा स्वयमातृणा । एतदस्य तदात्मनस्तद्यदेतामत्रोपदधाति यदेवास्यैषात्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेतामत्रोपदधाति

८.३.१.[८]

इन्द्राग्नी अव्यथमानाम् । इष्टकां दृंहतं युवमिति यथैव यजुस्तथा बन्धुः पृष्ठेन द्यावापृथिवी अन्तरिक्षं च विबाधस इति पृष्ठेन ह्येषा द्यावापृथिवी अन्तरिक्षं च विबाधते



८.३.१.[९]

विश्वकर्मा त्वा सादयत्विति । विश्वकर्मा ह्येतां तृतीयां चितिमपश्यदन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्व तीमित्यन्तरिक्षस्य ह्येतत्पृष्ठं व्यचस्वत्प्रथस्वदन्तरिक्षं यचान्तरिक्षं दृंहान्तरिक्षं मा हिंसीरित्यात्मानं यचात्मानं दृंहात्मानं मा हिंसीरित्येतत्

८.३.१.[१०]

विश्वस्मै प्राणायापानाय । व्यानायोदानायेति प्राणो वै स्वयमातृणा सर्वस्मा उ वा

एतस्मै प्राणः प्रतिष्ठायै चरित्रायेतीमे वै लोकाः स्वयमातृणा इम उ लोकाः प्रतिष्ठा चरित्रं वायुष्ट्वाभिपात्विति वायुष्ट्वाभिगोपायत्वित्येतन्मह्या स्वस्त्येति महत्या स्वस्त्येत्येतच्च्वर्दिषा शंतमेनेति यच्च्वर्दिः शंतमं तेनेत्येतत्सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुरथ साम गायति तस्योपरि बन्धुः

८.३.१.[११]

अथ दिश्या उपदधाति । दिशो वै दिश्या दिश एवैतदुपदधाति तद्याभिरदो वायुर्दिग्भिरनन्तर्हिताभिरुपैत्ता एतास्ता एवैतदुपदधाति ता उ एवामूः पुरस्ताद्दर्भस्तम्बं च लोगेष्टकाश्चोपदधात्यसौ वा आदित्य एता अमुं तदादित्यं दिक्ष्वध्यूहति दिक्षु चिनोति ता यत्तत्रैव स्युर्बहिर्धा तत्स्युर्बहिर्धो वा एतद्योनेरग्निकर्म यत्पुरा पुष्करपर्णात्ता यदिहाहृत्योपदधाति तदेना योनौ पुष्करपर्णे प्रतिष्ठापयति तथो हैता अबहिर्धा भवन्ति ता अनन्तर्हिताः स्वयमातृणाया उपदधात्यन्तरिक्षं वै मध्यमा स्वयमातृणानन्तर्हितास्तदन्तरिक्षाद्दिशो दधात्युत्तरा उत्तरास्तदन्तरिक्षाद्दिशो दधाति रेतःसिचोर्वेलयेमे वै रेतःसिचावनयोस्तद्दिशो दधाति तस्मादनयोर्दिशः सर्वत उपदधाति सर्वतस्तद्दिशो दधाति तस्मात्सर्वतो दिशः समीचीः सर्वतस्तत्समीचीर्दिशो दधाति तस्मात्सर्वतः समीच्यो दिशः

८.३.१.[१२]

यद्वेव दिश्या उपदधाति । चन्दांसि वै दिशो गायत्री वै प्राची दिक्त्रिष्टुब्दक्षिणा जगती प्रतीच्यनुष्टुबुदीची पङ्क्तिरूर्ध्वा पशवो वै चन्दांस्यन्तरिक्षम्

मध्यमा चितिरन्तरिक्षे तत्पशून्दधाति तस्मादन्तरिक्षायतनाः पशवः

८.३.१.[१३]

यद्वेव दिश्या उपदधाति । चन्दांसि वै दिशः पशवो वै चन्दांस्यन्नं पशवो मध्यं मध्यमा चितिर्मध्यतस्तदन्नं दधाति ता अनन्तर्हिताः स्वयमातृणाया उपदधाति प्राणो वै स्वयमातृणानन्तर्हितं तत्प्राणादन्नं दधात्युत्तरा उत्तरं तत्प्राणादन्नं दधाति रेतःसिचोर्वेलया पृष्टयो वै रेतःसिचौ मध्यमु पृष्टयो मध्यत एवास्मिन्नेतदन्नं दधाति सर्वत उपदधाति सर्वत एवास्मिन्नतदन्नं दधाति



८.३.१.[१४]

राज्ञ्यसि प्राची दिक् । विराडसि दक्षिणा दिक्सम्राडसि प्रतीची दिक्स्वराडस्युदीची दिगधिपत्न्यसि बृहती दिगिति नामान्यासामेतानि नामग्राहमेवैना एतदुपदधाति ता नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हि दिशः

८.३.२.[१]

अथ विश्वज्योतिषमुपदधाति । वायुर्वै मध्यमा विश्वज्योतिर्वायुर्ह्येवान्तरिक्षलोके विश्वं ज्योतिर्वायुमेवैतदुपदधाति तामनन्तर्हितां दिश्याभ्य उपदधाति दिक्षु तद्वायुं दधाति तस्मात्सर्वासु दिक्षु

वायुः

८.३.२.[२]

यद्वेव विश्वज्योतिषमुपदधाति । प्रजा वै विश्वज्योतिः प्रजा ह्येव विश्वं ज्योतिः प्रजननमेवैतदुपदधाति तामनन्तर्हितां दिश्याभ्या उपदधाति दिक्षु तत्प्रजा दधाति तस्मात्सर्वासु दिक्षु प्रजाः

८.३.२.[३]



विश्वकर्मा त्वा सादयत्विति । विश्वकर्मा ह्येतां तृतीयां चितिमपश्यदन्तरिक्षस्य पृष्ठे ज्योतिष्मतीमित्यन्तरिक्षस्य ह्ययं पृष्ठे ज्योतिष्मान्वायुः

८.३.२.[४]

विश्वस्मै प्राणायापानाय । व्यानायेति प्राणो वै विश्वज्योतिः सर्वस्मा उ वा एतस्मै प्राणो
विश्वं ज्योतिर्यचेति सर्वं ज्योतिर्यचेत्येतद्वायुष्टेऽधिपतिरिति वायुमवास्या अधिपतिं करोति सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः

८.३.२.[५]
अथऽर्तव्या उपदधाति । ऋतव एते यदृतव्या ऋतूनेवैतदुपदधाति नभश्च नभस्यश्च वार्षिकावृतू इति नामनी एनयोरेते नामभ्यामेवैने एतदुपदधाति द्वे इष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोत्यवकासूपदधात्यवकाभिः प्रचादयत्यापो वा अवका अपस्तदेतस्मिन्नृतौ दधाति तस्मादेतस्मिन्नृतौ भूयिष्ठं वर्षति

८.३.२.[६]

अथोत्तरे । इषश्चोर्जश्च शारदावृतू इति नामनी एनयोरेते नामभ्यामेवैने एतदुपदधाति द्वे इष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोत्यवकासूपदधात्यापो वा अवका अपस्तदेतस्यऽर्तोः पुरस्ताद्दधाति तस्मादेतस्यऽर्तोः पुरस्ताद्वर्षति नोपरिष्टात्प्रचादयति तस्मान्न तथेवोपरिष्टाद्वर्षति



८.३.२.[७]

तद्यदेता । अत्रोपदधाति संवत्सर एषोऽग्निरिम उ लोकाः संवत्सरस्तस्यान्तरिक्षमेव मध्यमा चितिरन्तरिक्षमस्य वर्षाशरदावृतू तद्यदेता अत्रोपदधाति यदेवास्यैता आत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेता अत्रोपदधाति

८.३.२.[८]

यद्वेवैता अत्रोपदधाति । प्रजापतिरेषोऽग्निः संवत्सर उ प्रजापतिस्तस्य मध्यमेव मध्यमा चितिर्मध्यमस्य वर्षाशरदावृतू तद्यदेता अत्रोपदधाति यदेवास्यैता आत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेता अत्रोपदधाति

८.३.२.[९]

ता वा एताः । चतस्र ऋतव्या मध्यमायां चिता उपदधाति द्वेद्वे इतरासु चितिषु चतुष्पादा वै पशवोऽन्तरिक्षं मध्यमा चितिरन्तरिक्षे तत्पशून्दधाति तस्मादन्तरिक्षायतनाः पशवः



८.३.२.[१०]

यद्वेव चतस्रः चतुष्पादा वै पशवोऽन्नं पशवो मध्यं मध्यमा चितिर्मध्यतस्तदन्नं दधाति

८.३.२.[११]

यद्वेव चतस्रः । चतुरक्षरं वा अन्तरिक्षं द्व्यक्षरा
इतराश्चितयस्तद्यावदन्तरिक्षं तावत्तत्कृत्वोपदधाति

८.३.२.[१२]

यद्वेव चतस्रः । पशुरेष यदग्निर्मध्यं तत्प्रति पशुं वरिष्ठं करोति
तस्मान्मध्यं प्रति पशुर्वरिष्ठः

८.३.२.[१३]



ता वा एताः । चतस्र ऋतव्यास्तासां विश्वज्योतिः पञ्चमी पञ्च दिश्यास्तद्दश दशाक्षरा
विराडन्नं विराण्मध्यं मध्यमा चितिर्मध्यतस्तदन्नं दधाति ता
अनन्तर्हिताः स्वयमातृणाया उपदधाति प्राणो वै स्वयमातृणानन्तर्हितं
तत्प्राणादन्नं दधात्युत्तरा उत्तरं तत्प्राणादन्नं दधाति

८.३.२.[१४]

अथ प्राणभृत उपदधाति । प्राणा वै प्राणभृतः प्राणानेवैतदुपदधाति ता दश
भवन्ति दश वै प्राणाः पूर्वार्ध उपदधाति पुरस्ताद्धीमे प्राणा आयुर्मे पाहि
ज्योतिर्मे यचेति प्राणो वै ज्योतिः प्राणं मे यचेत्येवैतदाह ता अनन्तर्हिता ऋतव्याभ्य
उपदधाति प्राणो वै वायुर्ऋतुषु तद्वायुं प्रतिष्ठापयति

८.३.३.[१]

अथ चन्दस्या उपदधाति । पशवो वै चन्दांस्यन्तरिक्षं मध्यमा चितिरन्तरिक्षे तत्पशुं दधाति तस्मादन्तरिक्षायतनाः पशवः

८.३.३.[२]

यद्वेव चन्दस्या उपदधाति । पशवो वै चन्दांस्यन्नं पशवो मध्यम् मध्यमा चितिर्मध्यतस्तदन्नं दधाति



८.३.३.[३]

ता द्वादशद्वादशोपदधाति । द्वादशाक्षरा वै जगती पशवो जगत्यन्तरिक्षम् मध्यमा चितिरन्तरिक्षे तत्पशून्दधाति तस्मादन्तरिक्षायतनाः पशवः

८.३.३.[४]

यद्वेव द्वादशद्वादश । द्वादशाक्षरा वै जगती पशवो वै जगत्यन्नं पशवो मध्यं मध्यमा चितिर्मध्यतस्तदन्न दधाति ता अनन्तर्हिताः प्राणभृद्भ्य

उपदधात्यनन्तर्हितं तत्प्राणेभ्योऽन्नं दधात्युत्तरा उत्तरं तत्प्राणेभ्यो
ऽन्नं दधाति

८.३.३.[५]

मा चन्द इति । अयं वै लोको मायं हि लोको मित इव प्रमा चन्द इत्यन्तरिक्षलोको
वै प्रमान्तरिक्षलोको ह्यस्माल्लोकात्प्रमित इव प्रतिमा चन्द इत्यसौ वै लोकः
प्रतिमैष ह्यन्तरिक्षलोके प्रतिमित इवास्रीवयश्चन्द इत्यन्नमस्रीवयस्तद्यदेषु
लोकेष्वन्नं तदस्रीवयोऽथो यदेभ्यो लोकेभ्योऽन्नं स्रवति तदस्रीवयोऽथातो
निरुक्तान्येव चन्दांस्युपदधाति



८.३.३.[६]

पङ्क्तिश्चन्दः । उष्णिक्चन्दो बृहती चन्दोऽनुष्टुप्चन्दो विराट्चन्दो गायत्री
चन्दस्त्रिष्टुप्चन्दो जगती चन्द इत्येतानि निरुक्तानि विराडष्टमानि
चन्दांस्युपदधाति पृथिवी चन्दोऽन्तरिक्षं चन्द इति यान्येतद्देवत्यानि चन्दांसि
तान्येवैतदुपदधात्यग्निर्देवता वातो देवतेत्येता वै देवताश्चन्दांसि
तान्येवैतदुपदधाति

८.३.३.[७]

स वै निरुक्तानि चानिरुक्तानि चोपदधाति । स यत्सर्वाणि

निरुक्तान्युपाधास्यदन्तवद्धान्नमभविष्यदक्षेष्यत हाथ
यत्सर्वाण्यनिरुक्तानि परोऽक्षं हान्नमभविष्यन्न हैनदद्रक्ष्यंश्चन
निरुक्तानि चानिरुक्तानि चोपदधाति तस्मान्निरुक्तमन्नमद्यमानं न क्षीयते

८.३.३.[८]

तानि वा एतानि । त्रीणि द्वादशान्युपदधाति तत्षड्त्रिंशत्षड्त्रिंशदक्षरा बृहत्येषा वै सा बृहती यां तद्देवा अन्तरिक्षं बृहतीं तृतीयां चितिमपश्यंस्तस्या एतस्यै देवा उत्तमाः



८.३.३.[९]

यद्देवैता इष्टका उपदधाति । प्रजापतेर्विस्रस्तात्सर्वाणि भूतानि सर्वा दिशोऽनु व्युदक्रामन्

८.३.३.[१०]

स यः स प्रजापतिर्व्यस्रंसत । अयमेव स योऽयमग्निश्चीयतेऽथ यान्यस्मात्तानि भूतानि व्युदक्रामन्नेतास्ता इष्टकास्तद्यदेता उपदधाति यान्येवास्मात्तानि भूतानि व्युदक्रामंस्तान्यस्मिन्नेतत्प्रतिदधाति

८.३.३.[११]

तद्या दश प्रथमा उपदधाति । स चन्द्रमास्ता दश भवन्ति दशाक्षरा विराडन्नं विराडन्नमु चन्द्रमा अथ या उत्तराः षट्त्रिंशदर्धमासाश्च ते मासाश्च चतुर्विंशतिरर्धमासा द्वादश मासाश्चन्द्रमा वै संवत्सरः सर्वाणि भूतानि

८.३.३.[१२]



तं यत्र देवाः समस्कुर्वन् । तदस्मिन्नेतानि सर्वाणि भूतानि मध्यतो ऽदधुस्तथैवास्मिन्नयमेतद्दधाति ता अनन्तर्हिता ऋतव्याभ्य उपदधात्यृतुषु तत्सर्वाणि भूतानि प्रतिष्ठापयति

८.३.४.[१]

अथ वालखिल्या उपदधाति । प्राणा वै वालखिल्याः प्राणानेवैतदुपदधाति ता यद्वालखिल्या नाम यद्वा उर्वरयोरसम्भिन्नं भवति खिल इति वै तदाचक्षते वालमात्रादु हेमे प्राणा असम्भिन्नास्ते यद्वालसात्रादसम्भिन्नास्तस्माद्वालखिल्याः

८.३.४.[२]

स वै सप्त पुरस्तादुपदधाति । सप्त पश्चात्तद्याः सप्त पुरस्तादुपदधाति य एवेमे सप्त पुरस्तात्प्राणास्तानस्मिन्नेतद्दधाति

८.३.४.[३]

अथ याः सप्त पश्चात् । एषामेवैतत्प्राणानामेतान्प्राणान्प्रतीन्करोति तस्माद्यदेभिरन्नमत्ति तदेतैरत्येति



८.३.४.[४]

यद्वेव सप्त पुरस्तादुपदधाति । सप्त वा इमे पुरस्तात्प्राणाश्चत्वारि दोर्बाहवाणि शिरो ग्रीवा यदूर्ध्वं नाभेस्तत्सप्तममङ्गेऽङ्गे हि प्राण एते वै सप्त पुरस्तात्प्राणास्तानस्मिन्नेतद्दधाति

८.३.४.[५]

अथ याः सप्त पश्चात् । सप्त वा इमे पश्चात्प्राणाश्चत्वार्यूर्वष्ठीवानि द्वे प्रतिष्ठे यदवाङ्नाभेस्तत्सप्तममङ्गेऽङ्गे हि प्राण एते वै सप्त पश्चात्प्राणास्तानस्मिन्नेतद्दधाति

८.३.४.[६]

मूर्धासि राट् । ध्रुवासि धरुणा धर्त्र्यसि धरणी यन्त्री राड्यन्त्र्यसि यमनी ध्रुवासि धरित्रीत्येतानेवास्मिन्नेतद्ध्रुवान्प्राणान्यचति

८.३.४.[७]

यद्वेव वालखिल्या उपदधाति । एतद्वै देवा वालखिल्याभिरेवेमांलोकान्त्समयुरितश्चोर्ध्वानमुतश्चार्वाचस्तथैवैतद्यजमानो वालखिल्याभिरेवेमांलोकान्त्संयातीतश्चोर्ध्वानमुतश्चार्वाचः



८.३.४.[८]

मूर्धासि राडितीमं लोकमरोहन् । ध्रुवासि धरुणेत्यन्तरिक्षलोकं धर्त्र्यसि धरणीत्यमुं धरणीत्यमुं लोकमायुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वेति चत्वारश्चतुष्पादाः पशवोऽन्नं पशवस्त एतैश्चतुर्भिश्चतुष्पादैः पशुभिरेतेनान्नेनामुष्मिंलोके प्रत्यतिष्ठंस्तथैवैतद्यजमान एतैश्चतुर्भिश्चतुष्पादैः पशुभिरेतेनान्नेनामुष्मिंलोके प्रतितिष्ठति

८.३.४.[९]

स स पराङ्िव रोहः । इयमु वै प्रतिष्ठा ते देवा इमाम्
प्रतिष्ठामभिप्रत्यायंस्तथैवैतद्यजमान इमां प्रति षामभिप्रत्यैति

८.३.४.[१०]

यन्त्रि राडित्यमुं लोकमरोहन् । यन्त्र्यसि यमनीत्यन्तरिक्षलोकं ध्रुवासि
धरित्रीतीमं लोकमिषे त्वोर्जे त्वा रय्यै त्वा पोषाय त्वेति चत्वारश्चतुष्पादाः
पशवोऽन्नं पशवस्त एतैश्चतुर्भिश्चतुष्पादैः पशुभिरेतेनान्नेनास्मिंलोके
प्रत्यतिष्ठंस्तथैवैतद्यजमान एतैश्चतुर्भिश्चतुष्पादैः
पशुभिरेतेनान्नेनास्मिंलोके प्रतितिष्ठति



८.३.४.[११]

अथातः संस्कृतिरेव । या अमूरेकादशेष्टका उपदधाति योऽसौ प्रथमो
ऽनुवाकस्तदन्तरिक्षं स आत्मा तद्यत्ता एकादश भवन्त्येकादशाक्षरा वै
त्रिष्टुप्त्रैष्टुभमन्तरिक्षमथ या उत्तराः षष्टिः स वायुः स प्रजापतिः सोऽग्निः
स यजमानः

८.३.४.[१२]

तद्याः पुरस्तादुपदधाति । शिरोऽस्य तास्ता दश भवन्ति दश वै प्राणाः प्राणा उ वै शिरः पूर्वार्ध उपदधाति पुरस्ताद्धीदं शिरः

८.३.४.[१३]

अथ या दक्षिणतः । यदूर्ध्वं मध्यादवाचीनं शीर्ष्णस्तदस्य ता अथ याः पश्चाद्यदूर्ध्वं प्रतिष्ठाया अवाचीनं मध्यात्तदस्य ताः प्रतिष्ठैवोत्तरतः



८.३.४.[१४]

तद्याः सप्त पुरस्ताद्वालखिल्या उपदधाति । य एवेमे सप्त पुरस्तात्प्राणास्तानस्मिन्नेतद्दधाति ता अनन्तर्हिता एताभ्यो दशभ्य उपदधात्यनन्तर्हितांस्तचीर्ष्णः प्राणान्दधाति

८.३.४.[१५]

अथ याः सप्त पश्चात् । य एवेमे सप्त पश्चात्प्राणास्तानस्मिन्नेतद्दधाति ता अनन्तर्हिता एताभ्यो द्वादशभ्य उपदधात्यनन्तर्हितांस्तदात्मनः प्राणान्दधाति स एष वायुः प्रजापतिरस्मिंस्त्रैष्टुभेऽन्तरिक्षे समन्तं पर्यक्तस्तद्यत्तृतीयां

चितिमुपदधाति वायुं चैव तदन्तरिक्षं च संकृत्योपधत्तेऽथ लोकम्पृणे उपदधात्यस्यां स्रक्त्यां तयोरुपरि बन्धुः पुरीषं निवपति तस्योपरि बन्धुः

८.४.१.[१]

चतुर्थीं चितिमुपदधाति । एतद्वै देवास्तृतीयां चितिं चित्वा समारोहन्नन्तरिक्षं वै तृतीया चितिरन्तरिक्षमेव तत्संस्कृत्य समारोहन्

८.४.१.[२]



तेऽब्रुवन् । चेतयध्वमिति चितिमिचतेति वाव तदब्रुवन्नित ऊर्ध्वमिचतेति ते चेतयमाना एतां चतुर्थीं चितिमपश्यन्यदूर्ध्वमन्तरिक्षादर्वाचीनं दिवस्तेषामेषा लोकोऽध्रुव इवाप्रतिष्ठित इवमनस्यासीत्

८.४.१.[३]

ते ब्रह्माब्रुवन् । त्वामिहोपदधामहा इति किं मे ततो भविष्यतीति त्वमेव नः श्रेष्ठं भविष्यसीति तथेति तेऽत्र ब्रह्मोपादधत तस्मादाहुर्ब्रह्मैव देवानां श्रेष्ठमिति तदेतया वै चतुर्थ्या चित्येमे द्यावापृथिवी विष्टब्धे ब्रह्म वै चतुर्थी चितिस्तस्मादाहुर्ब्रह्मणा द्यावापृथिवी विष्टब्धे इति स्तोमानुपदधाति प्राणा वै स्तोमाः प्राणा उ वै ब्रह्म ब्रह्मैवैतदुपदधाति

८.४.१.[४]

यद्वेव स्तोमानुपदधाति । एतद्वै देवाः प्रजापतिमब्रुवंस्त्वामिहोपदधामहा इति तथेति स वै नाब्रवीत्किं मे ततो भविष्यतीति यदु ह किं च प्रजापतिर्देवेष्वीषे किमस्माकं ततो भविष्यतीत्येवोचुस्तस्मादु हैतद्यत्पिता पुत्रेष्विचते किमस्माकं ततो भविष्यतीत्येवाहुरथ यत्पुत्राः पितरि तथेत्येवाहैवं हि तदग्रे प्रजापतिश्च देवाश्च समवदन्त स्तोमानुपदधाति प्राणा वै स्तोमाः प्राणा उ वै प्रजापतिः प्रजापतिमेवैतदुपदधाति



८.४.१.[५]

यद्वेव स्तोमानुपदधाति । ये वै ते प्राणा ऋषय एतां चतुर्थीं चितिमपश्यन्ये त एतेन रसेनोपायंस्त एते तानेवैतदुपदधाति स्तोमानुपदधाति प्राणा वै स्तोमाः प्राणा उ वा ऋषय ऋषीनेवैतदुपदधाति

८.४.१.[६]

यद्वेव स्तोमानुपदधाति । प्रजापतिं विस्रस्तं देवता आदाय व्युदक्रामंस्तस्य युदूर्ध्वं मध्यादवाचीनं शीर्ष्णस्तदस्य वायुरादायोत्क्रम्यातिष्ठद्देवताश्च भूत्वा संवत्सररूदाणि च

८.४.१.[७]

तमब्रवीत् । उप मेहि प्रति म एतद्धेहि येन मे त्वमुदक्रमीरिति किं मे ततो भविष्यतीति त्वद्देवत्यमेव म एतदात्मनो भविष्यतीति तथेति तदस्मिन्नेतद्वायुः प्रत्यपधात्

८.४.१.[८]



तद्या एता अष्टादश प्रथमाः । एतदस्य तदात्मनस्तद्यदेता अत्रोपदधाति यदेवास्यैता आत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेता अत्रोपदधाति स्तोमानुपदधाति प्राणा वै स्तोमाः प्राणाउ वै वायुर्वायुमेवैतदुपदधाति

८.४.१.[९]

स पुरस्तादुपदधाति । आशुस्त्रिवृदिति य एव त्रिवृत्स्तोमस्तं तदुपदधाति तद्यत्तमाहाशुरित्येष हि स्तोमानामाशिष्ठोऽथो वायुर्वा आशुस्त्रिवृत्स एषु त्रिषु लोकेषु वर्तते तद्यत्तमाहाशुरित्येष हि सर्वेषां भूतानामाशिष्ठो वायुर्ह भूत्वा पुरस्तात्तस्थौ तदेव तद्रूपमुपदधाति

८.४.१.[१०]

भान्तः पञ्चदश इति । य एव पञ्चदश स्तोमस्तं तदुपदधाति तद्यत्तमाह भान्त इति वज्रो वै भान्तो वज्रः पञ्चदशोऽथो चन्द्रमा वै भान्तः पञ्चदशः स च पञ्चदशाहान्यापूर्यते पञ्चदशापक्षीयते तद्यत्तमाह भान्त इति भाति हि चन्द्रमाश्चन्द्रमा ह भूत्वा दक्षिणतस्तस्थौ तदेव तद्रूपमुपदधाति

८.४.१.[११]

व्योमा सप्तदश इति । य एव सप्तदश स्तोमस्तं तदुपदधाति तद्यत्तमाह व्योमेति प्रजापतिर्वै व्योमा प्रजापतिः सप्तदशोऽथो संवत्सरो वाव व्योमा सप्तदशस्तस्य द्वादश मासाः पञ्चऽर्तवस्तद्यत्तमाह व्योमेति व्योमा हि संवत्सरः संवत्सरो ह भूत्वोत्तरतस्तस्थौ तदेव तद्रूपमुपदधाति



८.४.१.[१२]

धरुण एकविंश इति । य एवैकविंश स्तोमस्तं तदुपदधाति तद्यत्तमाह धरुण इति प्रतिष्ठा वै धरुणः प्रतिष्ठैकविंशोऽथो असौ वा आदित्यो धरुण एकविंशस्तस्य द्वादश मासाः पञ्चऽर्तवस्त्रय इमे लोका असावेवादित्यो धरुण एकविंशस्तद्यत्तमाह धरुण इति यदा ह्येवैषोऽस्तमेत्यथेदं सर्वं ध्रियत आदित्यो ह भूत्वा पश्चात्तस्थौ तदेव तद्रूपमुपदधात्यथ संवत्सररूपाण्युपदधाति

८.४.१.[१३]

प्रतूर्तिरष्टादश इति । य एवाष्टादश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव प्रतूर्तिरष्टादशस्तस्य द्वादश मासाः पञ्चऽर्तवः संवत्सर एव प्रतूर्तिरष्टादशस्तद्यत्तमाह प्रतूर्तिरिति संवत्सरो हि सर्वाणि भूतानि प्रतिरति तदेव तद्रूपमुपदधाति

८.४.१.[१४]



तपो नवदश इति । य एव नवदश स्तोमस्तं तदुपदधात्यथो संवत्सरो तपो नवदशस्तस्य द्वादश मासाः षड़ृतवः संवत्सर एव तपो नवदशस्तद्यत्तमाह तप इति संवत्सरो हि सर्वाणि भूतानि तपति तदेव तद्रूपमुपदधाति

८.४.१.[१५]

अभीवर्तः सविंश इति । य एव सविंश स्तोमस्तं तदुपदधात्यथो संवत्सरो वा अभीवर्तः सविंशस्तस्य द्वादश मासाः सप्तऽर्तवः संवत्सर एवाभीवर्तः सविंशस्तद्यत्तमाहाभीवर्त इति संवत्सरो हि सर्वाणि भूतान्यभिवर्तते तदेव तद्रूपमुपदधाति

८.४.१.[१६]

वर्चो द्वाविंश इति । य एव द्वाविंश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव वर्चो द्वाविंशस्तस्य द्वादश मासाः सप्तऽर्तवो द्वे अहोरात्रे संवत्सर एव वर्चो द्वाविंशस्तद्यत्तमाह वर्च इति संवत्सरो हि सर्वेषां भूतानां वर्चस्वितमस्तदेव तद्रूपमुपदधाति

८.४.१.[१७]

सम्भरणस्त्रयोविंश इति य एव त्रयोविंश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव सम्भरणस्त्रयोविंसस्तस्य त्रयोदश मासा सप्तऽर्तवो द्वे अहोरात्रे संवत्सर एव सम्भरणस्त्रयोविंशस्तद्यत्तमाह सम्भरण इति संवत्सरो हि सर्वाणि भूतानि सम्भृतस्तदेव तद्रूपमुपदधाति



८.४.१.[१८]

योनिश्चतुर्विंश इति । य एव चतुर्विंश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव योनिश्चतुर्विंशस्तस्य चतुर्विंशतिरर्धमासास्तद्यत्तमाह योनिरिति संवत्सरो हि सर्वेषां भूतानां योनिस्तदेव तद्रूपमुपदधाति

८.४.१.[१९]

गर्भाः पञ्चविंश इति । य एव पञ्चविंश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव गर्भाः पञ्चविंशस्तस्य चतुर्विंशतिरर्धमासाः संवत्सर एव गर्भाः पञ्चविंशस्तद्यत्तमाह गर्भा इति संवत्सरो ह त्रयोदशो मासो गर्भो भूत्व ऽर्तून्प्रविशति तदेव तद्रूपमुपदधाति

८.४.१.[२०]

ओजस्त्रिणव इति । य एव त्रिणव स्तोमस्तं तदुपदधाति तद्यत्तमाहौज इति व्!ज्रो वा ओजो वज्रस्त्रिणवोऽथो संवत्सरो वा ओजस्त्रिणवस्तस्य चतुर्विंशतिरर्धमासा द्वे अहोरात्रे संवत्सर एवौजस्त्रिणवस्तद्यत्तमाहौज इति संवत्सरो हि सर्वेषाम् भूतानामोजस्वितमस्तदेव तद्रूपमुपदधाति



८.४.१.[२१]

क्रतुरेकत्रिंश इति । य एवैकत्रिंश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव क्रतुरेकत्रिंशस्तस्य चतुर्विंशतिरर्धमासाः षट्तवः संवत्सर एव क्रतुरेकत्रिंशस्तद्यत्तमाह क्रतुरिति संवत्सरो हि सर्वाणि भूतानि करोति तदेव तद्रूपमुपदधाति

८.४.१.[२२]

प्रतिष्ठा त्रयस्त्रिंश इति । य एव त्रयस्त्रिंश स्तोमस्तं तदुपदधाति तद्यत्तमाह प्रतिष्ठेति प्रतिष्ठा हि त्रयस्त्रिंशोऽथो संवत्सरो वाव प्रतिष्ठा त्रयस्त्रिंशस्तस्य चतुर्विंशतिरर्धमासाः षट्टतवो द्वे अहोरात्रे संवत्सर एव प्रतिष्ठा त्रयस्त्रिंशस्तद्यत्तमाह प्रतिष्ठेति संवत्सरो हि सर्वेषां भूतानां प्रतिष्ठा तदेव तद्रूपमुपदधाति

८.४.१.[२३]

ब्रध्नस्य विष्टपं चतुस्त्रिंश इति । य एत चतुस्त्रिंश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव ब्रध्नस्य विष्टपं चतुस्त्रिंशस्तस्य चतुर्विंशतिरर्धमासाः सप्त ऽर्तवो द्वे अहोरात्रे संवत्सर एव ब्रध्नस्य विष्टपं चतुस्त्रिंशस्तद्यत्तमाह ब्रध्नस्य विष्टपमिति स्वाराज्यं वै ब्रध्नस्य विष्टपं स्वाराज्य चतुस्त्रिंशस्तदेव तद्रूपमुपदधाति



८.४.१.[२४]

नाकः षड्विंश इति । य एव षड्विंश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव नाकः षड्विंशस्तस्य चतुर्विंशतिरर्धमासा द्वादश मासास्तद्यत्तमाह नाक इति न हि तत्र गताय कस्मै चनाकं भवत्यथो संवत्सरो वाव नाकः संवत्सरः स्वर्गो लोकस्तदेव तद्रूपमुपदधाति

८.४.१.[२५]

विवर्तोऽष्टाचत्वारिंश इति । य एवाष्टाचत्वरिंश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव विवर्तोऽष्टाचत्वारिंशस्तस्य षड्विंशतिरर्धमासास्त्रयोदश मासाः सप्तऽर्तवो द्वे अहोरात्रे तद्यत्तमाह विवर्त इति संवत्सराद्धि सर्वाणि भूतानि विवर्तन्ते तदेव तद्रूपमुपदधाति

८.४.१.[२६]

धर्त्रं चतुष्टोम इति । य एव चतुष्टोम स्तोमस्तं तदुपदधाति तद्यत्तमाह धर्त्रमिति प्रतिष्ठा वै धर्त्रं प्रतिष्ठा चतुष्टोमोऽथो वायुर्वाव धर्त्रं चतुष्टोमः स आभिश्चतसृभिर्दिग्भि स्तुते तद्यत्तमाह धर्त्रमिति प्रतिष्ठा वै धर्त्रं वायुरु सर्वेषां भूतानां प्रतिष्ठा तदेव तद्रूपमुपदधाति स वै वायुमेव प्रथममुपदधाति वायुमुत्तमं वायुनैव तदेतानि सर्वाणि भूतान्युभयतः परिगृह्णाति



८.४.१.[२७]

ता वा एताः । अष्टादशेष्टका उपदधाति तौ द्वौ त्रिवृतौ प्राणो वै त्रिवृद्वायुरु प्राणो वायुरेषा चितिः

८.४.१.[२८]

यद्वेवाष्टादश । अष्टादशो वै संवत्सरो द्वादश मासाः पञ्चऽर्तवः संवत्सर एव प्रजापतिरष्टादशः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तत्कृत्वोपदधाति

८.४.२.[१]

अथ स्पृत उपदधाति । एतद्वै प्रजापतिरेतस्मिन्नात्मनः प्रतिहिते सर्वाणि भूतानि गर्भ्यभवत्तान्यस्य गर्भ एव सन्ति पाप्मा मृत्युरगृह्णात्



८.४.२.[२]

स देवानब्रवीत् । युष्माभिः सहेमानि सर्वाणि भूतानि पाप्मनो मृत्यो स्पृणवानीति किं नस्ततो भविष्यतीति वृणीध्वमित्यब्रवीत्तं भागो नोऽस्त्वित्येके ऽब्रुवन्नाधिपत्यं नोऽस्त्वित्येके स भागमेकेभ्यः कृत्वाधिपत्यमेकेभ्यः सर्वाण् इ भूतानि पाप्मनो मृत्योरस्पृणोद्यदस्पृणोत्तस्मात्स्पृतस्तथैवैतद्यजमानो भागमेकेभ्यः कृत्वाधिपत्यमेकेभ्यः सर्वाणि भूतानि पाप्मनो मृत्यो स्पृणोति तस्मादु सर्वास्वेव स्पृतंस्पृतमित्यनुवर्तते

८.४.२.[३]

अग्निर्भागोऽसि । दीक्षाया आधिपत्यमिति वाग्वै दीक्षाग्नये भागं कृत्वा वाच आधिपत्यमकरोद्ब्रह्म स्पृतं त्रिवृत्स्तोम इति ब्रह्म प्रजानां त्रिवृता स्तोमेन पाप्मना मृत्योरस्पृणोत्

८.४.२.[४]

इन्द्रस्य भागोऽसि । विष्णोराधिपत्यमितीन्द्राय भागं कृत्वा विष्णव आधिपत्यमकरोत्क्षत्रं स्पृतं पञ्चदश स्तोम इति क्षत्रं प्रजानाम् पञ्चदशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत्



८.४.२.[५]

नृचक्षसां भागोऽसि । धातुराधिपत्यमिति देवा वै नृचक्षसो देवेभ्यो भागं कृत्वा धात्र आधिपत्यमकरोज्जनित्रं स्पृतं सप्तदश स्तोम इति विड्वै जनित्रं विशं प्रजानां सप्तदशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत्

८.४.२.[६]

मित्रस्य भागोऽसि । वरुणस्याधिपत्यमिति प्राणो वै मित्रोऽपानो वरुणः प्राणाय

भागं कृत्वापानायाधिपत्यमकरोद्दिवो वृष्टिर्वात स्पृत एकविंश स्तोम इति वृष्टिं च वातं च प्रजानामेकविंशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत्

८.४.२.[७]

वसूनां भागोऽसि । रुद्राणामाधिपत्यमिति प्राणो वै मित्रोऽपानो वरुणः प्राणाय भागं कृत्वापानायाधिपत्यमकरोद्दिवो वृष्टिर्वात स्पृत एकविंश स्तोम इति वृष्टिं च वातं च प्रजानामेकविंशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत्

८.४.२.[८]



आदित्यानां भागोऽसि । मरुतामाधिपत्यमित्यादित्येभ्यो भागं कृत्वा मरुद्भ्य आधिपत्यमकरोद्गर्भा स्पृताः पञ्चविंश स्तोम इति गर्भान्प्रजानां पञ्चविंशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत्

८.४.२.[९]

अदित्यै भागोऽसि । पूष्णं आधिपत्यमितीयं वा अदितिरस्यै भागं कृत्वा पूष्ण आधिपत्यमकरोदोज स्पृतं त्रिणव स्तोम इत्योजः प्रजानां त्रिणवेन स्तोमेन पप्मनो मृत्योरस्पृणोत्

८.४.२.[१०]

देवस्य सवितुर्भागोऽसि । बृहस्पतेराधिपत्यमिति देवाय सवित्रे भागं कृत्वा बृहस्पतय आधिपत्यमकरोत्समीचीर्दिश स्पृताश्चतुष्टोम स्तोम इति सर्वा दिशः प्रजानां चतुष्टोमेन स्तोमेन पाप्मनो मृत्योरस्पृणोत्

८.४.२.[११]

यवानां भागोऽसि । अयवानामाधिपत्यमिति पूर्वपक्षा वै यवा अपरपक्षा अयवास्ते हीदं सर्वं युवते चायुवते च पूर्वपक्षेभ्यो भागं कृत्वापरपक्षेभ्य आधिपत्यमकरोत्प्रजा स्पृताश्चतुश्चत्वारिंश स्तोम इति सर्वाः प्रजाश्चतुश्चत्वारिंशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत्



८.४.२.[१२]

ऋभूणां भागोऽसि । विष्वेषां देवानामाधिपत्यमित्यृभुभ्यो भागं कृत्वा विश्वेभ्यो देवेभ्य आधिपत्यमकरोद्भूतं स्पृतं त्रयस्त्रिंश स्तोम इति सर्वाणि भूतानि त्रयस्त्रिंशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत्तथैवैतद्यजमानः सर्वाणि भूतानि त्रयस्त्रिंशेन स्तोमेन पाप्मनो मृत्यो स्पृणोति

८.४.२.[१३]

ता वा एता दशेष्टका उपदधाति । दशाक्षरा विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैव तदेतानि सर्वाणि भूतानि पाप्मनो मृत्यो स्पृणोति

८.४.२.[१४]

अथऽर्तव्ये उपदधाति । ऋतव एते यद्दतव्ये ऋतूनेवैतदुपदधाति सहश्च सहस्यश्च हैमन्तिकावृतू इति नामनी एनयोरेते नामभ्यामेवैने एतदुपदधाति द्वे इष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तद्दतुं करोति



८.४.२.[१५]

तद्यदेते अत्रोपदधाति । संवत्सर एषोऽग्निरिम उ लोकाः संवत्सरस्तस्य यदूर्ध्वमन्तरिक्षादर्वाचीनं दिवस्तदस्यैषा चतुर्थी चितिस्तद्वस्य हेमन्त ऋतुस्तद्यदेते अत्रोपदधाति यदेवास्यैते आत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेते अत्रोपदधाति

८.४.२.[१६]

यद्वेवैते अत्रोपदधाति । प्रजापतिरेषोऽग्निः संवत्सर उ प्रजापतिस्तस्य

यदूर्ध्वं मध्यादवाचीनं शीर्ष्णस्तदस्यैषा चतुर्थी चितिस्तद्वस्य हेमन्त ऋतुस्तद्यदेते अत्रोपदधाति यदेवास्यैते आत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेते अत्रोपदधाति

८.४.३.[१]

अथ सृष्टीरुपदधाति । एतद्वै प्रजापतिः सर्वाणि भूतानि पाप्मनो मृत्योर्मुक्त्वाकामयत प्रजाः सृजेय प्रजायेयेति



८.४.३.[२]

स प्राणानब्रवीत् । युष्माभिः सहेमाः प्रजाः प्रजनयानीति ते वै केन स्तोष्यामह इति मया चैव युष्माभिश्चेति तथेति ते प्राणैश्चैव प्रजापतिना चास्तुवत यदु ह किं च देवाः कुर्वते स्तोमेनैव तत्कुर्वते यज्ञो वै स्तोमो यज्ञेनैव तत्कुर्वते तस्मादु सर्वास्वेवास्तुवतास्तुवतेत्यनुवर्तते

८.४.३.[३]

एकयास्तुवतेति । वाग्वा एका वाचैव तदस्तुवत प्रजा अधीयन्तेति प्रजा अत्राधीयन्त प्रजापतिरधिपतिरासीदिति प्रजापतिरत्राधिपतिरासीत्

८.४.३.[४]

तिसृभिरस्तुवतेति । त्रयो वै प्राणाः प्राण उदानो व्यानस्तैरेव तदस्तुवत ब्रह्मासृज्यतेति ब्रह्मात्रासृज्यत ब्रह्मणस्पतिरधिपतिरासीदिति ब्रह्मणस्पतिरत्राधिपतिरासीत्

८.४.३.[५]

पञ्चभिरस्तुवतेति । य एवेमे मनःपञ्चमाः प्राणास्तैरेव तदस्तुवत भूतान्यसृज्यन्तेति भूतान्यत्रासृज्यन्त भूतानां पतिरधिपतिरासीदिति भूतानाम् पतिरत्राधिपतिरासीत्



८.४.३.[६]

सप्तभिरस्तुवतेति । य एवेमे सप्त शीर्षन्प्राणास्तैरेव तदस्तुवत सप्त ऋषयो ऽसृज्यन्तेति सप्तऽर्षयोऽत्रासृज्यन्त धाताधिपतिरासीदिति धातात्राधिपतिरासीत्

८.४.३.[७]

नवभिरस्तुवतेति । नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तैरेव तदस्तुवत
पितरोऽसृज्यन्तेति पितरोऽत्रासृज्यन्तादितिरधिपत्न्यासीदित्यदितिरत्राधिपत्न्यासीत्

८.४.३.[८]

एकादशभिरस्तुवतेति । दश प्राणा आत्मैकादशस्तेनैव तदस्तुवत ऋतवो
ऽसृज्यन्तेत्यृतवोऽत्रासृज्यन्तार्तवा अधिपतय आसन्नित्यार्तवा अत्राधिपतय आसन्

८.४.३.[९]



त्रयोदशभिरस्तुवतेति । दश प्राणा द्वे प्रतिष्ठे आत्मा त्रयोदशस्तेनैव तदस्तुवत
मासा असृज्यन्तेति मासा अत्रासृज्यन्त संवत्सरोऽधिपतिरासीदिति संवत्सरो
ऽत्राधिपतिरासीत्

८.४.३.[१०]

पञ्चदशभिरस्तुवतेति । दश हस्त्या अङ्गुलयश्चत्वारि दोर्बाहवाणि यदूर्ध्वं
नाभेस्तत्पञ्चदशं तेनैव तदस्तुवत क्षत्रमसृज्यतेति क्षत्रमसृज्यतेति
क्षत्रमत्रासृज्यतेन्द्रोऽधिपतिरासीदितीन्द्रोऽत्राधिपतिरासीत्

८.४.३.[११]

सप्तदशभिरस्तुवतेति । दश पाद्या अङ्गुलयश्चत्वार्यूर्वष्ठीवानि द्वे प्रतिष्ठे यदवाङ्नाभेस्तत्सप्तदशं तेनैव तदस्तुवत ग्राम्याः पशवोऽसृज्यन्तेति ग्राम्याः पशवोऽत्रासृज्यन्त बृहस्पतिरधिपतिरासीदिति बृहस्पतिरत्राधिपतिरासीत्

८.४.३.[१२]

नवदशभिरस्तुवतेति । दश हस्त्या अङ्गुलयो नव प्राणास्तैरेव तदस्तुवत शूद्रार्यावसृज्येतामिति शूद्रार्यावत्रासृज्येतामहोरात्रे अधिपत्नी आस्तामित्यहोरात्रे अत्राधिपत्नी आस्ताम्



८.४.३.[१३]

एकविंशत्यास्तुवतेति । दश हस्त्या अङ्गुलयो दश पाद्या आत्मैकविंशस्तेनैव तदस्तुवतैकशफाः पशवोऽसृज्यन्तेत्येकशफाः पशवोऽत्रासृज्यन्त वरुणो ऽधिपतिरासीदिति वरुणोऽत्राधिपतिरासीत्

८.४.३.[१४]

त्रयोविंशत्यास्तुवतेति । दश हस्त्या अङ्गुलयो दश पाद्या द्वे प्रतिष्ठे आत्मा

त्रयोविंशस्तेनैव तदस्तुवत क्षुद्राः पशवोऽसृज्यन्तेति क्षुद्राः पशवो ऽत्रासृज्यन्त पूषाधिपतिरासीदिति पूषाधिपतिरासीत्

८.४.३.[१५]

पञ्चविंशत्यास्तुवतेति । दश हस्त्या अङ्गुलयो दश पाद्याश्चत्वार्यङ्गान्यात्मा पश्चविंशस्तेनैव तदस्तुवतारण्याः पशवोऽसृज्यन्तेत्यारण्याः पशवोऽत्रासृज्यन्त वायुरधिपतिरासीदिति वायुरत्राधिपतिरासीत्



८.४.३.[१६]

सप्तविंशत्यास्तुवतेति । दश हस्त्या अङ्गुलयो दश पाद्याश्चत्वार्यङ्गानि द्वे प्रतिष्ठे आत्मा सप्तविंशस्तेनैव तदस्तुवत द्यावापृथिवी व्यैतामिति द्यावापृथिवी अत्र व्यैतां वसवो रुद्रा आदित्या अनुव्यायन्निति वसवो रुद्रा आदित्या अत्रानुव्यायंस्त एवाधिपतय आसन्निति त उ एवात्राधिपतय आसन्

८.४.३.[१७]

नवविंशत्यास्तुवतेति । दश हस्त्या अङ्गुलयो दश पाद्या नव प्राणास्तैरेव तदस्तुवत वनस्पतयोऽसृज्यन्तेति वनस्पतयोऽत्रासृज्यन्त सोमोऽधिपतिरासीदिति सोमोऽत्राधिपतिरासीत्

८.४.३.[१८]

एकत्रिंशतास्तुवतेति । दश हस्त्या अङ्गुलयो दश पाद्या दश प्राणा आत्मैकत्रिंशस्तेनैव तदस्तुवत प्रजा असृज्यन्तेति प्रजा अत्रासृज्यन्त यवाश्चायवाश्चाधिपतय आसन्निति पूर्वपक्षापरपक्षा एवात्राधिपतय आसन्

८.४.३.[१९]



त्रयस्त्रिंशतास्तुवतेति । दश हस्त्या अङ्गुलयो दश पाद्या दश प्राणा द्वे प्रतिष्ठे आत्मा त्रयस्त्रिंशस्तेनैव तदस्तुवत भूतान्यशाम्यन्निति सर्वाणि भूतान्यत्राशाम्यन्प्रजापतिः परमेष्ठ्यधिपतिरासीदिति प्रजापतिः परमेष्ठ्यत्राधिपतिरासीत्

८.४.३.[२०]

ता वा एताः । सप्तदशेष्टका उपदधाति सप्तदशो वै संवत्सरः प्रजापतिः स प्रजनयिता तदेतेन वै सप्तदशेन संवत्सरेण प्रजापतिना प्रजनयित्रैताः प्रजाः प्राजनयद्यत्प्राजनयदसृजत तद्यदसृजत तस्मात्सृष्टयस्ताः सृष्ट्वात्मन्प्रापादयत तथैवैतद्यजमान एतेन सप्तदशेन संवत्सरेण प्रजापतिना प्रजनयित्रैताः प्रजाः प्रजनयति ताः सृष्ट्वात्मन्प्रपादयते

रेतःसिचोर्वेलया पृष्ट्यो वै रेतःसिचौ मध्यमु पृष्ट्यो मध्यत एवास्मिन्नेताः प्रजाः प्रपादयति सर्वत उपदधाति सर्वत एवास्मिन्नेताः प्रजाः प्रपादयति

८.४.४.[१]

अथातोऽन्वावृतम् । त्रिवृद्वतीं पुरस्तादुपदधात्येकविंशवतीम् पश्चात्पञ्चदशवतीं दक्षिणतः सप्तदशवतीमुत्तरतः

८.४.४.[२]



एतद्वै प्रजापतिम् । त्रिवृद्वत्यामुपहितायां पञ्चदशवत्याम् मृत्युरसीददिमामत उपधास्यते तमत्र ग्रहीष्यामीति तं प्रापश्यत्तम् प्रख्याय परिक्रम्यैकविंशवतीमुपाधत्तैकविंशवतीम् मृत्युरागचत्पञ्चदशवतीमुपाधत्त पञ्चदशवतीम् मृत्युरागचत्सप्तदशवतीमुपाधत्त सोऽत्रैव मृत्युं न्यकरोदत्रामोहयत्तथैवैतद्यजमानोऽत्रैव सर्वान्पाप्मनो निकरोत्यत्र मोहयति

८.४.४.[३]

अथोत्तराः । त्रिवृद्वत्यामेव त्रिवृद्वतीमनूपदधात्येकविंशवत्यामेकविंशवतीम्

पञ्चदशवत्यां सप्तदशवतीं सप्तदशवत्यां पञ्चदशवतीं ता यदेवं व्यतिहारमुपदधाति तस्मादक्ष्णयास्तोमीया अथो यदेते स्तोमा अतोऽन्यथानुपूर्वं तस्माद्वेवाक्ष्णयास्तोमीया अथो एवं देवा उपादधतेतरथासुरास्ततो देवा अभवन्परासुरा भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद

८.४.४.[४]

स एष पशुर्यदग्निः । सोऽत्रैव सर्वः कृत्स्नः संस्कृतस्तस्य त्रिवृद्वत्यावेव शिरस्ते यत्त्रिवृद्वत्यौ भवतस्त्रिवृद्धि शिरो द्वे भवतो द्विकपालं हि शिरः पूर्वार्ध उपदधाति पुरस्ताद्धीदं शिरः



८.४.४.[५]

प्रतिष्ठैकविंशवत्यौ । ते यदेकविंशवत्यौ भवतः प्रतिष्ठा ह्येकविंशो द्वे भवतो द्वन्द्वं हि प्रतिष्ठा पश्चादुपदधाति पश्चाद्धीयं प्रतिष्ठा

८.४.४.[६]

बाहू पञ्चदशवत्यौ । ते यत्पञ्चदशवत्यौ भवतः पञ्चदशौ हि बाहू द्वे भवतो द्वौ हीमौ बाहू पार्श्वत उपदधाति पार्श्वतो हीमौ बाहू

८.४.४.[७]

अन्नं सप्तदशवत्यौ । ते यत्सप्तदशवत्यौ भवतः सप्तदशं ह्यन्नं द्वे भवतो द्व्यक्षरं ह्यन्नं ते अनन्तर्हिते पञ्चदशवतीभ्यामुपदधात्यनन्तर्हितं तद्बाहुभ्यामन्नं दधाति बाह्ये पञ्चदशवत्यौ भवतोऽन्तरे सप्तदशवत्यौ बाहुभ्यां तदुभयतोऽन्नम् परिगृह्णाति

८.४.४.[८]



अथ या मध्य उपदधाति । स आत्मा ता रेतःसिचोर्वेलयोपदधाति पृष्टयो वै रेतःसिचौ मध्यमु पृष्टयो मध्यतो ह्ययमात्मा सर्वत उपदधाति सर्वतो ह्ययमात्माथ यदतोऽन्यदतिरिक्तं तद्यद्वै देवानामतिरिक्तं चन्दांसि तानि तद्यानि तानि चन्दांसि पशवस्ते तद्ये ते पशवः पुण्यास्ता लक्ष्म्यस्तद्यास्ताः पुण्या लक्ष्म्योऽसौ स आदित्यः स आसामेष दक्षिणतः

८.४.४.[९]

ता हैकेऽनन्तर्हितास्त्रिवृद्वतीभ्यामुपदधति । जिह्वाहनू इति वदन्तो याश्चतुर्दश ते हनू याः षड्वा जिह्वेति न तथा कुर्यादति ते रेचयन्ति यथा पूर्वयोर्हन्वोरपरे हनू अनूपदध्याद्यथा पूर्वस्यां जिह्वायामपरां

जिह्वामनूपदध्यात्ताद्दक्तद्यत्राहैव शिरस्तदेव हनू तज्जिह्वा

८.४.४.[१०]

अस्मिन्नु हैकेऽवान्तरदेश उपदधति । असौ वा आदित्य एता अमुं तदादित्यमेतस्यां दिशि दध्म इति न तथा कुर्यादन्यानि वाव तानि कर्माणि यैरेतमत्र दधाति

८.४.४.[११]



दक्षिणत उ हैक उपदधति । तदेताः पुण्या लक्ष्मीर्दक्षिणतो दध्मह इति तस्माद्यस्य दक्षिणतो लक्ष्म भवति तं पुण्यलक्ष्मीक इत्याचक्षत उत्तरत स्त्रिया उत्तरतआयतना हि स्त्री तत्तत्कृतमेव पुरस्तात्त्वेवैना उपदध्याद्यत्राहैव शिरस्तदेव हनू तज्जिह्वाथैताः पुण्या लक्ष्मीर्मुखतो धत्ते तस्माद्यस्य मुखे लक्ष्म भवति तं पुण्यलक्ष्मीक इत्याचक्षते

८.४.४.[१२]

सैषा ब्रह्मचितिः । यद्ब्रह्मोपादधत तस्माद्ब्रह्मचितिः सा प्रजापतिचितिर्यत्प्रजापतिमुपादधत तस्मात्प्रजापतिचितिः स ऽर्षिचितिर्यदृषीनुपादधत तस्मादृषिचितिः सा वायुचितिर्यद्वायुमुपादधत तस्माद्वायुचितिः सा स्तोमचितिर्यत्स्तोमानुपादधत तस्मात्स्तोमचितिः सा प्राणचितिर्यत्प्राणानुपादधत तस्मात्प्राणचितिरतो यतमदेव कतमच्च विद्यात्तेन

हैवास्यैषार्षेयवती बन्धुमती चितिर्भवत्यथ लोकम्पृणे उपदधात्यस्यां स्रक्त्यां तयोरुपरि बन्धुः पुरीषं निवपति तस्योपरि बन्धुः

८.५.१.[१]

पञ्चमीं चितिमुपदधाति । एतद्वै देवाश्चतुर्थीं चितिं चित्वा समारोहन्यदूर्ध्वमन्तरिक्षादर्वाचीनं दिवस्तदेव तत्संस्कृत्य समारोहन्

८.५.१.[२]



तेऽब्रुवन् । चेतयध्वमिति चितिमिचतेति वाव तदब्रुवन्नित ऊर्ध्वमिचतेति ते चेतयमाना दिवमेव विराजं पञ्चमीं चितिमपश्यंस्तेभ्य एष लोकोऽचन्दयत्

८.५.१.[३]

तेऽकामयन्त । असपत्नमिमं लोकमनुपबाधं कुर्वीमहीति तेऽब्रुवन्नुप तज्जानीत यथेमं लोकमसपत्नमनुपबाधं करवामहा इति ते ऽब्रुवंश्चेतयध्वमिति चितिमिचतेति वाव तदब्रुवंस्तदिचत यथेमं लोकमसपत्नमनुपबाधं करवामहा इति

८.५.१.[४]

ते चेतयमानाः । एता इष्टका अपश्यन्नसपत्नास्ता उपादधत ताभिरेतं लोकमसपत्नमनुपबाधमकुर्वत तद्यदेताभिरिमं लोकमसपत्नमनुपबाधमकुर्वत तस्मादेता असपत्नास्तथेवैतद्यजमानो यदेता उपदधातमेवैतल्लोकमसपत्नमनुपबाधं कुरुते सर्वत उपदधाति सर्वत एवैतदेतं लोकमसपत्नमनुपबाधं कुरुते परार्ध उपदधाति सर्वमेवैतदेतं लोकमसपत्नमनुपवाधं कुरुते

८.५.१.[५]



अथ विराज उपदधाति । एषा वै सा विराड्यां तद्देवा विराजं पञ्चमीं चितिमपश्यंस्ता दशदशोपदधाति दशाक्षरा विराड्विराडेषा चिविः सर्वत उपदधाति यो वा एकस्यां दिशि विराजति न वै स विराजति यो वाव सर्वासु दिक्षु विराजति
स एव विराजति

८.५.१.[६]

यद्वेवैता असपत्ना उपदधाति । एतद्वै प्रजापतिमेतस्मिन्नात्मनः प्रतिहिते सर्वतः पाप्मोपायतत स एता इष्टका अपश्यदसपत्नास्ता उपाधत्त ताभिस्तम् पाप्मानमपाहत पाप्मा वै सपत्नस्तद्यदेताभिः पाप्मानं सपत्नमपाहत तस्मादेता असपत्नाः

८.५.१.[७]

तद्वा एतत्क्रियते । यद्देवा अकुर्वंन्निदं न्विमं स पाप्मा नोपयतते यत्त्वेतत्करोति यद्देवा अकुर्वंस्तत्करवाणीत्यथो य एव पाप्मा यः सपत्नस्तमेताभिरपहते तद्यदेताभिः पाप्मानं सपत्नमपहते तस्मादेता असपत्नाः सर्वत उपदधाति सर्वत एवैतत्पाप्मानं सपत्नमपहते परार्ध उपदधाति सर्वस्मादेवैतदात्मनः पाप्मानं सपत्नमपहते



८.५.१.[८]

स पुरस्तादुपदधाति । अग्ने जातान्प्रणुदा नः सपत्नानिति यथैव यजुस्तथा बन्धुरथ पश्चात्सहसा जातान्प्रणुदा नः सपत्नानिति यथैव यजुस्तथा बन्धुः

८.५.१.[९]

सा या पुरस्तादग्निः सा । या पश्चादग्निः साग्निनैव तत्पुरस्तात्पाप्मानमपाहताग्निना पश्चात्तथैवैतद्यजमानोऽग्निनैव पुरस्तात्पाप्मानमपहतेऽग्निना पश्चात्

८.५.१.[१०]

अथ दक्षिणतः । षोडशी स्तोम ओजो द्रविणमित्येकादशाक्षरा वै त्रिष्टुप्त्रैष्टुभमन्तरिक्षं चतस्रो दिश एष एव वज्रः पञ्चदशस्तस्यासावेवादित्यः षोडशी वज्रस्य भर्ता स एतेन पञ्चदशेन वज्रेणैतया त्रिष्टुभा दक्षिणतः पाप्मानमपाहत तथैवैतद्यजमान एतेन पञ्चदशेन वज्रेणैतया त्रिष्टुभा दक्षिणतः पाप्मानमपहते

८.५.१.[११]



अथोत्तरतः । चतुश्चत्वारिंश स्तोमो वर्चो द्रविणमिति चतुश्चत्वारिंशदक्षरा वै त्रिष्टुप्त्रैष्टुभो वज्रः स एतेन चतुश्चत्वारिंशेन वज्रेणैतया त्रिष्टुभोत्तरतः पाप्मानमपाहत तथैवैतद्यजमान एतेन चतुश्चत्वारिंशेन वज्रेणैतया त्रिष्टुभोत्तरतः पाप्मानमपहते

८.५.१.[१२]

अथ मध्ये । अग्नेः पुरीषमसीति ब्रह्म वै चतुर्थी चितिरग्निरु वै ब्रह्म तस्या एतत्पुरीषमिव यत्पञ्चम्यप्सो नामेति तस्योक्तो बन्धुः

८.५.१.[१३]

तां प्राचीं तिरश्चीमुपदधाति । एतद्धैतया प्रजापतिः पाप्मनो मूलमवृश्चत्तथैवैनयायमेतत्पाप्मनो मूलं वृश्चति दक्षिणतो दक्षिणतौद्यामो हि वज्रोऽन्तरेण दक्षिणां दिश्यामुद्यामाय ह तमवकाशं करोति

८.५.१.[१४]

सा या पुरस्तात्प्राणः सा । या पश्चादपानः सा प्राणेनैव तत्पुरस्तात्पाप्मानमपाहतापानेन पश्चात्तथैवैतद्यजमानः प्राणेनैव पुरस्तात्पाप्मानमपहतेऽपानेन पश्चात्



८.५.१.[१५]

अथ ये अभितः । तौ बाहू स योऽस्याभितः पाप्मासीद्बाहुभ्यां तमपाहत तथैवैतद्यजमानो योऽस्याभितः पाप्मा भवति बाहुभ्यामेव तमपहते

८.५.१.[१६]

अन्नं पुरीषवती । स योऽस्योपरिष्ठात्पाप्मासीदन्नेन तमपाहात

तथैवैतद्यजमानो योऽस्योपरिष्टात्पाप्मा भवत्यन्नेनैव तमपहते

८.५.१.[१७]

स यद्ध वा एवंवित्प्राणिति । योऽस्य पुरस्तात्पाप्मा भवति तं तेनापहतेऽथ यदपानिति तेन तं यः पश्चादथ यद्व्याहुभ्यां कर्म कुरुते तेन तं योऽभितो ऽथ यदन्नमत्ति तेन तं य उपरिष्टात्सर्वदा ह वा एवंवित्पाप्मानमपहतेऽपि स्वपंस्तस्मादेवं विदुषः पापं न कीर्तयेन्नेदस्य पाप्मासानीति



८.५.२.[१]

अथ चन्दस्या उपदधाति । एतद्वै प्रजापतिः पाप्मनो मृत्योर्मुक्त्वान्नमैचत्तस्मादु हैतदुपतापी वसीयान्भूत्वान्नमिचति तस्मिन्नाशंसन्तेऽन्नमिचति जीविष्यतीति तस्मै देवा एतदन्नम् प्रायचन्नेताश्चन्दस्याः पशवो वै चन्दांस्यन्नं पशवस्तान्यस्मा अचदयंस्तानि यदस्मा अचदयंस्तस्माच्चन्दांसि

८.५.२.[२]

ता दशदशोपदधाति । दशाक्षरा विराड्विराडु कृत्स्नमन्नं सर्वमेवास्मिन्नेतत्कृत्स्नमन्नं दधाति सर्वत उपदधाति सर्वत

एवास्मिन्नेतत्कृत्स्नमन्नं दधाति

८.५.२.[३]

एवश्छन्द इति । अयं वै लोक एवश्छन्दो वरिवश्छन्द इत्यन्तरिक्षं वै वरिवश्छन्दः शम्भूश्छन्द इति द्यौर्वै शम्भूश्छन्दः परिभूश्छन्द इति दिशो वै परिभूश्छन्द आचच्छन्द इत्यन्नं वा आचच्छन्दो मनश्छन्द इति प्रजापतिर्वै मनश्छन्दो व्यचश्छन्द इत्यसौ वा आदित्यो व्यचश्छन्दः



८.५.२.[४]

सिन्धुश्छन्द इति । प्राणो वै सिन्धुश्छन्दः समुद्रश्छन्द इति मनो वै समुद्रश्छन्दः सरिरं चन्द इति वाग्वै सरिरं चन्दः ककुप्छन्द इति प्राणो वै ककुप्छन्दस्त्रिककुप्छन्द इत्युदानो वै त्रिककुप्छन्दः काव्यं चन्द इति त्रयी वै विद्या काव्यं चन्दोऽङ्कुपं चन्द इत्यापो वा अङ्कुपं चन्दोऽक्षरपङ्क्तिश्छन्द इत्यसौ वै लोकोऽक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्द इत्ययं वै लोकः पदपङ्क्तिश्छन्दो विष्टारपङ्क्तिश्छन्द इति दिशो वै विष्टारपङ्क्तिश्छन्दः क्षुरो भ्रजश्छन्द इत्यसौ वा आदित्यः क्षुरो भ्रजश्छन्द आचच्छन्दः प्रचच्छन्द इत्यन्नं वा आचच्छन्दोऽन्नं प्रचच्छन्दः

८.५.२.[५]

संयच्चन्द इति । रात्रिर्वै संयच्चन्दो वियच्चन्द इत्यहर्वै वियच्चन्दो बृहच्चन्द इत्यसौ वै लोको बृहच्चन्दो रथन्तरं चन्द इत्ययं वै लोको रथन्तरं चन्दो निकायश्चन्द इति वायुर्वै निकायश्चन्दो विवधश्चन्द इत्यन्तरिक्षं वै विवधश्चन्दो गिरश्चन्द इत्यन्नं वै गिरश्चन्दो भ्रजश्चन्द इत्यग्निर्वै भ्रजश्चन्दः संस्तुप्चन्दोऽनुष्टुप्चन्द इति वागेव संस्तुप्चन्दो वागनुष्टुप्चन्द एवस्=चन्दो वरिवश्चन्द इति तस्योक्तो बन्धुः

८.५.२.[६]

वयश्चन्द इति । अन्नं वै वयश्चन्दो वयस्कृच्चन्द इत्यग्निर्वै वयस्कृच्चन्दो विष्पर्धाश्चन्द इत्यसौ वै लोको विष्पर्धाश्चन्दो विशालं चन्द इत्ययं वै लोको विशालं चन्दश्चदिश्चन्द इत्यन्तरिक्षं वै चदिश्चन्दो दूरोहणं चन्द इत्यसौ वा आदित्यो दूरोहणं चन्दस्तन्द्रं चन्द इति पङ्क्तिर्वै तन्द्रं चन्दोऽङ्काङ्कं चन्द इत्यापो वा अङ्काङ्कं चन्दः



८.५.२.[७]

तद्याः पुरस्तादुपदधाति । प्राणस्तासां प्रथमा व्यानो द्वितीयोदानस्तृतीयोदानश्चतुर्थी व्यानः पञ्चमी प्राणः षष्ठी प्राणः सप्तमी व्यानोऽष्टम्युदानो नवमी यजमान एवात्र दशमी स एष यजमान एतस्यां विराज्यध्यूढः प्रतिष्ठितः प्राणमय्यामर्वाचीश्च पराचीश्चोपदधाति तस्मादिमे प्राणा अर्वाञ्चश्च पराञ्चश्च

८.५.२.[८]

अथ या दक्षिणतो ।ऽग्निस्तासां प्रथमा वायुर्द्वितीयादित्यस्तृतीयादित्यश्चतुर्थी वायुः पञ्चम्यग्निः षष्ठ्यग्निः सप्तमी वायुरष्टम्यादित्यो नवमी यजमान एवात्र दशमी स एष यजमान एतस्यां विराज्यधूढः प्रतिष्ठितो देवतामय्यामर्वाचीश्च पराचीश्चोपदधाति तस्मादेते देवा अर्वाञ्चश्च पराञ्चश्च

८.५.२.[९]



अथ याः पश्चात् । अयं लोकस्तासां प्रथमान्तरिक्षं द्वितीया द्यौस्तृतीया द्यौश्चतुर्थ्यन्तरिक्षं पञ्चम्ययं लोकः षष्ठ्ययं लोकः सप्तम्यन्तरिक्षमष्टमी द्यौर्नवमी यजमान एवात्र दशमी स एष यजमान एतस्यां विराज्यध्यूढः प्रतिष्ठितो लोकमय्यामर्वाचीश्च पराचीश्चोपदधाति तस्मादिमे लोका अर्वाञ्चश्च पराञ्चश्च

८.५.२.[१०]

अथ या उत्तरतः । ग्रीष्मस्तासां प्रथमा वर्षा द्वितीया हेमन्तस्तृतीया हेमन्तश्चतुर्थी वर्षाः पञ्चमी ग्रीष्मः षष्ठी ग्रीष्मः सप्तमी वर्षा अष्टमी हेमन्तो नवमी यजमान एवात्र दशमी स एष यजमान एतस्यां

विराज्यध्यूढः प्रतिष्ठित ऋतुमय्यामर्वाचीश्च पराचीश्चोपदधाति तस्मादेत ऋतवो ऽर्वाञ्चश्च पराञ्चश्च

८.५.२.[११]

अथ पुनरेव । याः पुरस्तादुपदधाति प्राणास्ते ता दश भवन्ति दश वै प्राणाः पूर्वार्ध उपदधाति पुरस्ताद्धीमे प्राणाः

८.५.२.[१२]



अथ या दक्षिणतः । एतास्ता देवता अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चान्नं चापश्च

८.५.२.[१३]

अथ याः पश्चात् । दिशस्ताश्चतस्रो दिशश्चतस्रोऽवान्तरदिश ऊर्ध्वा चेयं च

८.५.२.[१४]

अथ या उत्तरतः । मासास्ते वासन्तिकौ द्वौ ग्रैष्मौ द्वौ वार्षिकौ द्वौ शारदौ द्वौ हैमन्तिकौ द्वौ

८.५.२.[१५]

अथ पुनरेव । या प्रथमा दशदयं स लोको या द्वितीयान्तरिक्षं तद्या तृतीया द्यौः सेममेव लोकं प्रथमया दशतारोहन्नन्तरिक्षं द्वितीयया दिवं तृतीयया तथैवैतद्यजमान इममेव लोकं प्रथमया दशता रोहत्यन्तरिक्षं द्वितीयया दिवं तृतीयया



८.५.२.[१६]

स स पराङिव रोहः । इयमु वै प्रतिष्ठा ते देवा इमाम् प्रतिष्ठामभिप्रत्यायंस्तथैवैतद्यजमान इमां प्रतिष्ठामभिप्रत्यैत्यथ योत्तमा दशदयं स लोकस्तस्माद्यथैव प्रथमायै दशतः प्रभृतिरेवमुत्तमायै समानं ह्येतद्यदेते दशतावयमेव लोकः

८.५.२.[१७]

ता वा एताः । चत्वारिंशदिष्टकाश्चत्वारिंशद्यजूंषि तदशीतिरन्नमशीतिस्तद्यद्यदेतदाह तदस्मा अन्नमशीतिं कृत्वा प्रयचति

तेनैनं प्रीणाति

८.५.३.[१]

अथ स्तोमभागा उपदधाति । एतद्वै प्रजापतेरेतदन्नमिन्द्रोऽभ्यध्यायत्सो ऽस्मादुदचिक्रमिषत्तमब्रवीत्कथोत्क्रामसि कथा मा जहासीति स वै मेऽस्यान्नस्य रसं प्रयचेति तेन वै मा सह प्रपद्यस्वेति तथेति तस्मा एतस्यान्नस्य रसम् प्रायचत्तेनैनं सह प्रापद्यत



८.५.३.[२]

स यः स प्रजापतिः । अयमेव स योऽयमग्निश्चीयतेऽथ यत्तदन्नमेतास्ताश्चन्दस्या अथ यः सोऽन्नस्य रस एतास्ता स्तोमभागा अथ यः स इन्द्रोऽसौ स आदित्यः स एष एव स्तोमो यद्धि किं च स्तुवत एतमेव तेन स्तुवन्ति तस्मा एतस्मै स्तोमायैतम् भागं प्रायचत्तद्यदेतस्मै स्तोमायैतं भागं प्रायचत्तस्मात्स्तोमभागाः

८.५.३.[३]

रश्मिना सत्याय सत्यं जिन्वेति । एष वै रश्मिरन्नं रश्मिरेतं च तद्रसं च संधायात्मन्प्रपादयते प्रेतिना धर्मणा धर्मं जिन्वेत्येष वै प्रेतिरन्नम् प्रेतिरेतं च तद्रसं च संधायात्मन्प्रपादयतेऽन्वित्या दिवा दिवं जिन्वेत्येष वा

अन्वितिरन्नमन्वितिरेतं च तद्रसं च संधायात्मन्प्रपादयते तद्यद्यदेतदाह
तच्च तद्रसं च संधायात्मन्प्रपादयतेऽमुनादो जिन्वादोऽस्यमुष्मै
त्वाधिपतिनोर्जोर्जं जिन्वेति त्रेधाविहितास्त्रेधाविहितं ह्यन्नम्

८.५.३.[४]

यद्वेव स्तोमभागा उपदधाति । एतद्वै देवा विराजं चितिं चित्वा समारोहंस्ते
ऽब्रुवंश्चेतयध्वमिति चितिमिचतेति वाव तदब्रुवंस्ते चेतयमाना नाकमेव
स्वर्गं लोकमपश्यंस्तमुपादधत स यः स नाकः स्वर्गो लोक एतास्ता
स्तोमभागास्तद्यदेता उपदधाति नाकमेवैतत्स्वर्गं लोकमुपधत्ते



८.५.३.[५]

तद्यास्तिस्रः प्रथमाः । अयं स लोको या द्वितीया अन्तरिक्षं तद्यास्तृतीया द्यौः सा
याश्चतुर्थ्यः प्राची सा दिग्याः पञ्चम्यो दक्षिणा सा याः षष्ठ्यः प्रतीची सा याः
सप्तम्य उदीची सा

८.५.३.[६]

ता वा एताः । एकविंशतिरिष्टका इमे च लोका दिशश्चेमे च वै लोका दिशश्च प्रतिष्ठेमे
च लोका दिशश्चैकविंशस्तस्मादाहुः प्रतिष्ठैकविंश इति

८.५.३.[७]

अथ या अष्टाविष्टका अतियन्ति । साष्टाक्षरा गायत्री ब्रह्म गायत्री तद्यत्तद्ब्रह्मैतत्तद्यदेतन्मण्डलं तपति तदेतस्मिन्नेकविंशे प्रतिष्ठायाम् प्रतिष्ठितं तपति तस्मान्नावपद्यते

८.५.३.[८]



तद्धैके । वेषश्रीः क्षत्राय क्षत्रं जिन्वेति त्रिंशतमीमुपदधति त्रिंशदक्षरा विराड्विराडेषा चितिरिति न तथा कुर्यादिति ते रेचयन्त्येकविंशसम्पदमथो गायत्रीसम्पदमथो इन्द्रलोको हैष यैषान्यूना विराडिन्द्राय ह त इन्द्रलोके द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्वन्तीन्द्रमिन्द्रलोकान्नुदन्ते यजमानो वै स्वे यज्ञ इन्द्रो यजमानाय ह ते यजमानलोके द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्वन्ति यजमानं यजमानलोकान्नुदन्ते यं वा एतमग्निमाहरन्त्येष एव यजमान आयतनेनैष उ एवात्र त्रिंशत्तमी

८.५.४.[१]

ता अषाढायै वेलयोपदधाति । वाग्वा अषाढा रस एष वाचि तद्रसं दधाति

तस्मात्सर्वेषामङ्गानां वाचैवान्नस्य रसं विजानाति

८.५.४.[२]

यद्वेवाषाढायै । इयं वा अषाढासावादित्य स्तोमभागा अमुं तदादित्यमस्याम् प्रतिष्ठायां प्रतिष्ठापयति

८.५.४.[३]



यद्वेवाषाढायै । इयं वा अषाढा हृदयं स्तोमभागा अस्यां तद्धृदयं मनो दधाति तस्मादस्यां हृदयेन मनसा चेतयते सर्वत उपदधाति सर्वतस्तद्धृदयं मनो दधाति तस्मादस्यां सर्वतो हृदयेन मनसा चेतयते ऽथो पुण्या हैता लक्ष्म्यस्ता एतत्सर्वतो धत्ते तस्माद्यस्य सर्वतो लक्ष्म भवति तं पुण्यलक्ष्मीक इत्याचक्षते

८.५.४.[४]

अथैनाः पुरीषेण प्रचादयति । अन्नं वै पुरीषं रस एष तमेतत्तिरः करोति तस्मात्तिर इवान्नस्य रसः

८.५.४.[५]

यद्वेव पुरीषेण । अन्नं वै पुरीषं रस एषोऽन्नं च तद्रसं च संतनोति संदधाति

८.५.४.[६]

यद्वेव पुरीषेण । हृदयं वै स्तोमभागाः पुरीतत्पुरीषं हृदयं तत्पुरीतता प्रचादयति



८.५.४.[७]

यद्वेव पुरीषेण । संवत्सर एषोऽग्निस्तमेतच्चितिपुरीषैर्व्यावर्तयति तद्याश्चतस्रः प्रथमाश्चितयस्ते चत्वार ऋतवोऽथ स्तोमभागा उपधाय पुरीषं निवपति सा पञ्चमी चितिः स पञ्चम ऋतुः

८.५.४.[८]

तदाहुः । यल्लोकम्पृणान्ता अन्याश्चितयो भवन्ति नात्र लोकम्पृणामुपदधाति कात्र लोकम्पृणेत्यसौ वा आदित्यो लोकम्पृणैष उ एषा चितिः सैषा स्वयं लोकम्पृणा चितिरथ

यदत ऊर्ध्वमा पुरीषात्सा षष्ठी चितिः स षष्ठ ऋतुः

८.५.४.[९]

अथ पुरीषं निवपति । तत्र विकर्णीं चोपदधाति हिरण्यशकलैः प्रोक्षत्यग्निमभ्यादधाति सा सप्तमी चितिः स सप्तम ऋतुः

८.५.४.[१०]

ता उ वै षडेव । यद्धि विकर्णी च स्वयमातृणा च षष्ठ्या एव तच्चितेः



८.५.४.[११]

ता उ वै पञ्चैव । यजुषान्यासु पुरीषं निवपति तूष्णीमत्र तेनैषा न चितिरथो लोकम्पृणान्ता अन्याश्चितयो भवन्ति नात्र लोकन्पृणामुपधाति तेनो एवैषा न चितिः

८.५.४.[१२]

ता उ वै तिस्र एव । अयमेव लोकः प्रथमा चितिर्द्यौरुत्तमाथ या एतास्तिस्रस्तदन्तरिक्षं तद्वा इदमेकमिवैवान्तरिक्षं ता एवं तिस्र एवं पञ्चैवं

षडेवं सप्त

८.६.१.[१]

नाकसद उपदधाति । देवा वै नाकसदोऽत्रैष सर्वोऽग्निः संस्कृतः स एषोऽत्र नाकः स्वर्गो लोकस्तस्मिन्देवा असीदंस्तद्यदेतस्मिन्नाके स्वर्गे लोके देवा असीदंस्तस्माद्देवा नाकसदस्तथैवैतद्यजमानो यदेता उपदधात्येतस्मिन्नेवैतन्नाके स्वर्गे लोके सीदति



८.६.१.[२]

यद्वेव नाकसद उपदधाति । एतद्वै देवा एतं नाकं स्वर्गं लोकमपश्यन्नेता स्तोमभागास्तेऽब्रुवन्नुप तज्जानीत यथास्मिन्नाके स्वर्गे लोके सीदामेति ते ऽब्रुवंश्चेतयध्वमिति चितिमिचतेति वाव तदब्रुवंस्तदिचत यथास्मिन्नाके स्वर्गे लोके सीदामेति

८.६.१.[३]

ते चेतयमानाः । एता इष्टका अपश्यन्नाकसदस्ता उपादधत ताभिरेतस्मिन्नाके स्वर्गे लोकेऽसीदंस्तद्यदेताभिरेतस्मिन्नाके स्वर्गे लोकेऽसीदंस्तस्मादेता नाकसदस्तथैवैकद्यजमानो यदेता उपदधात्येतस्मिन्नेवैतन्नाके स्वर्गे लोके

सीदति

८.६.१.[४]

दिक्षूपदधाति । दिशो वै स नाकः स्वर्गो लोकः स्वर्ग एवैना एतल्लोके सादयत्यृतव्यानां वेलया संवत्सरो वा ऋतव्याः संवत्सरः स्वर्गो लोकः स्वर्ग एवैना एतल्लोके सादयत्यन्तस्तोमभागमेष वै स नाकः स्वर्गो लोकस्तस्मिन्नेवैना एतत्प्रतिष्ठापयति

८.६.१.[५]



स पुरस्तादुपदधाति । राज्ञ्यति प्राची दिगिति राज्ञी ह नामैषा प्राची दिग्वसवस्ते देवा अधिपतय इति वसवो हैतस्य दिशो देवा अधिपतयोऽग्निर्हेतीनाम् प्रतिधर्तेत्यग्निर्हैवात्र हैतीनां प्रतिधर्ता त्रिवृत्त्वा स्तोमः पृथिव्यां श्रयत्विति त्रिवृता हैषा स्तोमेन पृथिव्यां श्रिताज्यमुक्थमव्यथायै स्तभ्नात्वित्याज्येन हैषोक्थेनाव्यथायै पृथिव्यां स्तब्धा रथन्तरं साम प्रतिष्ठित्या अन्तरिक्ष इति रथन्तरेण हैषा साम्ना प्रतिष्ठितान्तरिक्ष ऋषयस्त्वा प्रथमजा देवेष्विति प्राणा वा ऋषयः प्रथमजास्तद्धि ब्रह्म प्रथमजं दिवो मात्रया वरिम्णा प्रथन्त्विति यावती द्यौस्तावतीं वरिम्णा प्रथन्त्वित्येतद्विधर्ता चायमधिपतिश्चेति वाक्च तौ मनश्च तौ हीदं सर्वं विधारयतस्ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्त्विति यथैव यजुस्तथा बन्धुः

८.६.१.[६]

अथ दक्षिणतः । विराडसि दक्षिणा दिगिति विराड्ड नामैषा दक्षिणा दिग्रुद्रास्ते देवा अधिपतय इति रुद्रा हैतस्य दिशो देवा अधिपतय इन्द्रो हेतीनाम् प्रतिधर्तेतीन्द्रो हैवात्र हेतीनां प्रतिधर्ता पञ्चदशस्त्वा स्तोमः पृथिव्यां श्रयत्विति पञ्चदशेन हैषा स्तोमेन पृथिव्यां श्रिता प्रौगमुक्थमव्यथायै स्तभ्नात्विति प्रौगेण हैषोक्थेनाव्यथायै पृथिव्यां स्तब्धा बृहत्साम प्रतिष्ठित्या अन्तरिक्ष इति बृहता हैषा साम्ना प्रतिष्ठितान्तरिक्ष ऋषयस्त्वा प्रथमजा देवेष्विति तस्योक्तो बन्धुः

८.६.१.[७]



अथ पश्चात् । सम्राडसि प्रतीची दिगिति सम्राड्ड नामैषा प्रतीचि दिगादित्यास्ते देवा अधिपतय इत्यादित्या हैतस्यै दिशो देवा अधिपतयो वरुणो हेतीनां प्रतिधर्तेति वरुणो हैवात्र हेतीनां प्रतिधर्ता सप्तदशस्त्वा स्तोमः पृथिव्यां श्रयत्विति सप्तदशेन हैषा स्तोमेन पृथिव्यां श्रिता मरुत्वतीयमुक्थमव्यथायै स्तभ्नात्विति मरुत्वतीयेन हैषोक्थेनाव्यथायै पृथिव्यां स्तब्धा वैरूपं साम प्रतिष्ठित्या अन्तरिक्ष इति वैरूपेण हैषा साम्ना प्रतिष्ठितान्तरिक्ष ऋषयस्त्वा प्रथमजा देवेष्विति तस्योक्तो बन्धुः

८.६.१.[८]

अथोत्तरतः स्वराडस्युदीची दिगिति स्वराड्ड नामैषोदीची दिङ्गरुतस्ते देवा

अधिपतय इति मरुतो हैतस्यै दिशो देवा अधिपतयः सोमो हेतीनां प्रतिधर्तेति सोमो हैवात्र हेतीनां प्रतिधर्तैकविंशस्त्वा स्तोमः पृथिव्यां श्रयत्वित्येकविंशेन हैषा स्तोमेन पृथिव्यां श्रिता निष्केवल्यमुक्थमव्यथायै स्तभ्नात्विति निष्केवल्येन हैषोक्थेनाव्यथायै पृथिव्यां स्तब्धा वै राजं साम प्रतिष्ठित्या अन्तरिक्ष इति वैराजेन हैषा साम्ना प्रतिष्ठितान्तरिक्ष ऋषयस्त्वा प्रथमजा देवेष्विति तस्योक्तो बन्धुः

८.६.१.[९]

अथ मध्ये । अधिपत्न्यसि बृहती दिगित्यधिपत्नी ह नामैषा बृहती दिग्विश्वे ते देवा अधिपतय इति विश्वे हैतस्यै दिशो देवा अधिपतयो बृहस्पतिर्हेतीना प्रतिधर्तेति बृहस्पतिर्हैवात्र हेतीनां प्रतिधर्ता त्रिणवत्रयस्त्रिंशौ त्वा स्तोमौ पृथिव्यां श्रयतामिति त्रिणवत्रयस्त्रिंशाभ्यां हैषा स्तोमाभ्यां पृथिव्यां श्रिता वैश्वदेवाग्निमारुते उक्थे अव्यथायै स्तभ्नीतामिति वैश्वदेवाग्निमारुताभ्यां हैषोक्थाभ्यामव्यथायै पृथिव्यां स्तब्धा शाक्वररैवते सामनी प्रतिष्ठित्या अन्तरिक्ष इति शाक्वररैवताभ्यां हैषा सामभ्यां प्रतिष्ठितान्तरिक्ष ऋषयस्त्वा प्रथमजा देवेष्विति तस्योक्तो बन्धुः

८.६.१.[१०]

एतावान्वै सर्वो यज्ञः । यज्ञ उ देवानामात्मा यज्ञमेव तद्देवा आत्मानं कृत्वैतस्मिन्नाके स्वर्गे लोकेऽसीदंस्तथैवैतद्यजमानो यज्ञमेवात्मानं कृत्वैतस्मिन्नाके स्वर्गे लोके सीदति

८.६.१.[११]

अथ पञ्चचूडा उपदधाति । यज्ञो वै नाकसदो यज्ञ उ एव पञ्चचूडास्तद्य इमे चत्वार ऋत्विजो गृहपतिपञ्चमास्ते नाकसदो होत्राः पञ्चचूडा अतिरिक्तं वै तद्यद्धोत्रा यदु वा अतिरिक्तं चूडः स तद्यत्पञ्चातिरिक्ता तस्मात्पञ्चचूडाः

८.६.१.[१२]



यद्वेव नाकसत्पञ्चचूडा उपदधाति । आत्मा वै नाकसदो मिथुनं पञ्चचूडा अर्धमु हैतदात्मनो यन्मिथुनं यदा वै सह मिथुनेनाथ सर्वोऽथ कृत्स्नः कृत्स्नतायै

८.६.१.[१३]

यद्वेव नाकसत्पञ्चचूडा उपदधाति । आत्मा वै नाकसदः प्रजा पञ्चचूडा अतिरिक्तं वै तदात्मनो यत्प्रजा यदु वा अतिरिक्तं चूडः स तद्यत्पञ्चातिरिक्तास्तस्मात्पञ्चचूडाः

८.६.१.[१४]

यद्वेव नाकसत्पञ्चचूडा उपदधाति । दिशो वै नाकसदो दिश उ एव पञ्चचूडास्तद्या अमुष्मादादित्यादर्वाच्यः पञ्च दिशस्ता नाकसदो याः पराच्यस्ताः पञ्चचूडा अतिरिक्ता वै ता दिशो या अमुष्मादादित्यात्पराच्यो यदु वा अतिरिक्तं चूडः स तद्यत्पञ्चातिरिक्तास्तस्मात्पञ्चचूडाः

८.६.१.[१५]

यद्वेव पञ्चचूडा उपदधाति । एतद्वै देवा अबिभयुर्यद्वै न इमांलोकानुपरिष्टाद्रक्षांसि नाष्ट्रा न हन्युरिति त एतानेषां लोकानामुपरिष्टाद्गोपॄ!नकुर्वत य एते हेतयश्च प्रहेतयश्च तथैवैतद्यजमान एतानेषां लोकानामुपरिष्टाद्गोपॄ!न्कुरुते य एते हेतयश्च प्रहेतयश्च



८.६.१.[१६]

स पुरस्तादुपदधाति । अयं पुरो हरिकेश इत्यग्निर्वै पुरस्तद्यत्तमाह पुर इति प्राञ्चं ह्यग्निमुद्धरन्ति प्राञ्चमुपचरन्त्यथ यद्धरिकेश इत्याह हरिरिव ह्यग्निः सूर्यरश्मिरिति सूर्यस्येव ह्यग्ने रश्मयस्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रामण्याविति वासन्तिकौ तावृतू पुञ्जिकस्थला च क्रतुस्थला चाप्सरसाविति दिक्चोपदिशा चेति ह स्माह माहित्थिः सेना च तु ते समितिश्च दङ्क्ष्ण्वः पशवो हेतिः पौरुषेयो वधः प्रहेतिरिति यद्वै सेनायां च समितौ चऽर्तीयन्ते दङ्क्ष्ण्वः

पशवो हेतिः पौरुषेयो वधः प्रहेतिरिति यदन्योऽन्यं घ्नन्ति स पौरुषेयो
वधः प्रहेतिस्तेभ्यो नमो अस्त्विति तेभ्य एव नमस्करोति तेनो मृडयन्त्विति त
एवास्मै मृडयन्ति ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्म इति
यमेव द्वेष्टि यश्चैनं द्वेष्टि तमेषां जम्भे दधात्यमुमेषां जम्भे
दधामीति ह ब्रूयाद्यं द्विष्यात्ततोऽह तस्मिन्न पुनरस्त्यपि तन्नाद्रियेत
स्वयंनिर्दिष्टो ह्येव स यमेवंविद्द्वेष्टि

८.६.१.[१७]

अथ दक्षिणतः । अयं दक्षिणा विश्वकर्मेत्ययं वै वायुर्विश्वकर्मा योऽयम्
पवत एष हीदं सर्वं करोति तद्यत्तमाह दक्षिणेति तस्मादेष दक्षिणैव
भूयिष्ठं वाति तस्य रथस्वनश्च रथेचित्रश्च सेनानीग्रामण्याविति ग्रैष्मौ
तावृतू मेनका च सहजन्या चाप्सरसाविति दिक्चोपदिशा चेति ह स्माह माहित्थिरिमे तु
ते द्यावापृथिवी यातुधाना हेती रक्षांसि प्रहेतिरिति यातुधाना हैवात्र हेती रक्षांसि
प्रहेतिस्तेभ्यो नमो अस्त्विति तस्योक्तो बन्धुः

८.६.१.[१८]

अथ पश्चात् । अयं पश्चाद्विश्वव्यचा इत्यसौ वा आदित्यो विश्वव्यचा यदा ह्येवैष
उदेत्यथेदं सर्वं व्यचो भवति तद्यत्तमाह पश्चादिति तस्मादेतम्
प्रत्यञ्चमेव यन्तं पश्यन्ति तस्य रथप्रोतश्चासमरथश्च सेनानीग्रामण्याविति
वार्षिकौ तावृतू प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसाविति दिक्चोपदिशा चेति ह स्माह
माहित्थिरहोरात्रे तु ते ते हि प्र च म्लोचतोऽनु च म्लोचतो व्याघ्रा हेतिः सर्पाः

प्रहेतिरिति व्याघ्रा हैवात्र हेतिः सर्पाः प्रहेतिस्तेभ्यो नमो अस्त्विवितितस्योक्तो बन्धुः

८.६.१.[१९]
अथोत्तरतः । अयमुत्तरात्संयद्वसुरिति यज्ञो वा
उत्तरात्तद्यत्तमाहोत्तरादित्युत्तरतौपचारो हि यज्ञोऽथ यत्संयद्वसुरित्याह
यज्ञं हि संयन्तीतीदं वस्विति तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्याविति
शारदौ तावृतूविश्वाची च घृताची चाप्सरसाविति दिक्चोपदिशा चेति ह स्माह
माहित्थिर्वेदिश्च तु ते स्रुक्च वेदिरेव विश्वाची स्रुग्घृताच्यापो हेतिर्वातः
प्रहेतिरित्यापो हैवात्र हेतिर्वातः प्रहेतिरतो ह्येवोष्णो वात्यतः शीतस्तेभ्यो नमो
अस्त्विति तस्योक्तो बन्धुः



८.६.१.[२०]

अथ मध्ये । अयमुपर्यर्वाग्वसुरिति पर्जन्यो वा उपरि तद्यत्तमाहोपरीत्युपरि हि
पर्जन्योऽथ यदर्वाग्वसुरित्याहातो ह्यर्वाग्वसु वृष्टिरन्नं प्रजाभ्यः प्रदीयते
तस्य सेनजिच्च सुषेणश्च सेनानीग्रामण्याविति हैमन्तिकौ तावृतू उर्वशी च
पूर्वचित्तिश्चाप्सरसाविति दिक्चोपदिशा चेति ह स्माह माहित्थिराहुतिश्च तु ते दक्षिणा
चावस्फूर्जन्हेतिर्विद्युत्प्रहेतिरित्यवस्फूर्जन्हैवात्र हेतिर्विद्युत्प्रहेतिस्तेभ्यो
नमो अस्त्विति तस्योक्तो बन्धुः

८.६.१.[२१]

एते वै ते हेतयश्च प्रहेतश्च । यांस्तद्देवा एषां
लोकानामुपरिष्टाद्गोप्तृनकुर्वताथ यास्ताः प्रजा एते ते सेनानीग्रामण्योऽथ
यत्तन्मिथुनमेतास्ता अप्सरसः सर्व एव तद्देवाः कृत्स्ना भूत्वा सह प्रजया सह
मिथुनेनैतस्मिन्नाके स्वर्गे लोकेऽसीदंस्तथैवैतद्यजमानः सर्व एव कृत्स्नो
भूत्वा सह प्रजया सह मिथुनेनैतस्मिन्नाके स्वर्गे लोके सीदति

८.६.१.[२२]

ता वा एताः । दशेष्टका उपदधाति दशाक्षरा विराड्विराडेषा चितिस्ता उ वै पञ्चैव
द्वेद्वे ह्युपदधाति ता हैता अग्नेराशिषस्ता उत्तमायां चिता उपदधात्यन्त एषो
ऽग्नेर्यदुत्तमा चितिरन्ततस्तदग्नेराशिषो निराह पञ्च भवन्ति पञ्च हि यज्ञ आशिषो
ऽथैने अन्तरा पुरीषं निवपत्यग्नी हैतौ यदेते इष्टके नेदिमावग्नी संशोचात
इत्यथो अन्नं वै पुरीषमन्नेनैवाभ्यामेतत्संज्ञां करोति

८.६.१.[२३]

अथातोऽन्वावृतम् । पुरस्तादुपधाय दक्षिणतः पश्चादुत्तरतो मध्य
उपदधात्यथोत्तराः पुरस्तादेवाग्र उपधाय दक्षिणत उत्तरतो मध्ये
पश्चादुपदधात्यवस्तात्प्रपदनो ह स्वर्गो लोक एतद्वै देवा इमांलोकान्त्सर्वतः
समपिधायावस्तात्स्वर्गं लोकं प्रापद्यन्त तथैवैतद्यजमान
इमांलोकान्त्सर्वतः समपिधायावस्तात्स्वर्गं लोकं प्रपद्यते

८.६.२.[१]

चन्दस्या उपदधाति । अत्रैष सर्वोऽग्निः संस्कृतः स एषोऽत्र श्रियमैचन्नो हैषो ऽतः पुरा तस्मा अलमास यन्निियमधारयिष्यत्तस्मादिदमप्येतर्ह्याहुर्न वा एषो ऽलं श्रियै धारणाय राज्याय वा ग्रामणीथ्याय वेति तस्मै देवा एतां श्रियम् प्रायचन्नेताश्चन्दस्याः पशवो चन्दांस्यन्नं पशवोऽन्नमु श्रीः

८.६.२.[२]

त्रिचान्युपदधाति । त्रिवृद्वै पशुः पिता माता पुत्रोऽथो गर्भ उल्बं जरायुअथो त्रिवृद्वा अन्नं कृषिर्वृष्टिर्वीजमेकैवातिचन्दा भवत्येका ह्येव सा सर्वाणि चन्दांस्यति सा या सा श्रीर्महत्तदुक्थं तद्यत्तन्महदुक्थमेतास्ताश्चन्दस्याः



८.६.२.[३]

तस्य शिरो गायत्र्यः । आत्मा त्रिष्टुभोऽनूकं जगत्यः पक्षौ पङ्क्योऽथैतासां ककुभां चत्वारि चत्वार्यक्षराण्यादायातिचन्दस्युपदधाति सा सातिचन्दा एव भवति गायत्र्य इतराः सम्पद्यन्ते सैव गायत्र्यशीतिर्या बृहत्यः सा बार्हती या उष्णिहः सौष्णिह्यथ यद्वशो यदर्धर्चौ यदैन्द्राग्नं यदावपनं तदतिचन्दा अथ यन्नदो यत्सूददोहा यत्पदनुषङ्गा यत्किंचात्रानुष्टुप्कर्मीणं तदनुष्टुभः

८.६.२.[४]

प्रतिष्ठा द्विपदाः । एतावद्वै महदुक्थं महदुक्थं श्रीः सर्वामेवास्मा एतां देवाः प्रायचंस्तथैवास्मा अयमेतां सर्वां श्रियं प्रयचति

८.६.२.[५]

यद्वेव चन्दस्या उपदधाति । एतद्वै देवा एतं नाकं स्वर्गं लोकमपश्यन्नेता स्तोमभागास्तस्मिन्नविशंस्तेषां विशतां प्रजापतिरुत्तमोऽविशत्स यः स प्रजापतिरेतास्ताश्चन्दस्याः



८.६.२.[६]

तस्य शिरो गायत्र्यः । ता यद्गायत्र्यो भवन्ति गायत्रं हिशिरस्तिस्रो भवन्ति त्रिवृद्धि शिरः पूर्वार्ध उपदधाति पुरस्ताद्धीदं शिरः

८.६.२.[७]

उरस्त्रिष्टुभः । ता रेतःसिचोर्वेलयोपदधाति पृष्टयो वै रेतःसिचा उरो वै प्रति

पृष्टयः

८.६.२.[८]

श्रोणी जगत्यः । स यावति पुरस्तात्स्वयमातृणायै त्रिष्टुभ उपदधाति तावति पश्चाज्जगतीर्यो वा अयं मध्ये प्राणस्तदेषा स्वयमातृणा यावत्यु वा एतस्मात्प्राणात्पुरस्तादुरस्तावति पश्चाच्छ्रोणी

८.६.२.[९]



सक्थ्यावनुष्टुभः । ता अनन्तर्हिता जगतीभ्य उपदधात्यनन्तर्हिते तच्छ्रोणिभ्यं सक्थ्यो दधाति

८.६.२.[१०]

पर्शवो बृहत्यः । कीकसाः ककुभः सोऽन्तरेण त्रिष्टुभश्च ककुभश्च बृहतीरुपदधाति तस्मादिमा उभयत्र पर्शवो बद्धाः कीकसासु च जत्रुषु च

८.६.२.[११]

ग्रीवा उष्णिहः । ता अनन्तर्हिता गायत्रीभ्य उपदधात्यनन्तर्हितास्तचीर्ष्णो ग्रीवा दधाति

८.६.२.[१२]

पक्षौ पङ्क्तयः । ता यत्पङ्क्तयो भवन्ति पाङ्क्तौ हि पक्षौ पार्श्वत उपदधाति पार्श्वतो हीमौ पक्षौ यद्वर्षीयश्चन्दस्तद्दक्षिणत उपदधाति दक्षिणं तदर्धं पशोर्वीर्यवत्तरं करोति तस्माद्दक्षिणोऽर्धः पशोवीर्यवत्तरः



८.६.२.[१३]

उदरमतिचन्दाः । पशवो वै चन्दांस्यन्नं पशव उदरं वा अन्नमत्त्युदरं हि वा अन्नमत्ति तस्माद्यदोदरमन्नं प्राप्नोत्यथ तज्जग्धं यातयामरूपम् भवति तद्यदेषा पशूंश्चन्दांस्यत्ति तस्मादत्तिचन्दा अत्तिचन्दा ह वै तामतिचन्दा इत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवाः

८.६.२.[१४]

योनिः पुरीषवती । ते संसोत्रृष्टे उपदधाति संस्पृष्टे ह्युदरं च योनिश्च पुरीशसंहिते भवतो मांसं वै पुरीषं मांसेन वा उदरं च योनिश्च संहिते

पूर्वातिचन्दा भवत्यपरा पुरीषवत्युत्तरं ह्युदरमधरा योनिः

८.६.२.[१५]

ते प्राच्या उपदधाति । प्राङ्ह्येषोऽग्निश्चीयतेऽथो प्राग्वै प्राच उदरं प्राची योनिर्बहिस्तोमभागं हृदयं वै स्तोमभागा हृदयमु वा उत्तमथोदरमथ योनिः

८.६.२.[१६]



ते दक्षिणतः स्वयमातृणाया उपदधाति । अथ प्रथमायां चिता उत्तररः स्वयमातृणाया उदरं च योनिं चोपदधाति यो वा अयं मध्ये प्राणस्तदेषा स्वयमातृणैतस्य तत्प्राणस्योभयत उदरं च योनिं च दधाति तस्मादेतस्य प्राणस्योभयत उदरं च योनिश्च

८.६.२.[१७]

प्रतिष्ठा द्विपदाः । ता यद्द्विपदा भवन्ति द्वन्द्वं हि प्रतिष्ठा तिस्रो भवन्ति त्रिवृद्धि प्रतिष्ठा पश्चादुपदधाति पश्चाधीयं प्रतिष्ठा

८.६.२.[१८]

सोऽस्यैष सुकृत आत्मा । तद्यस्य हैतमेवं सुकृतमात्मानं कुर्वन्त्येतं ह स सुकृतमात्मानमभिसम्भवत्यथ यस्य हैतमतोऽन्यथा कुर्वन्ति दुष्कृतं ह तस्यात्मानं कुर्वन्ति स ह स दुष्कृतमेवात्मानमभिसम्भवति

८.६.२.[१९]

तदेते सामनिधने अभ्युक्ते । अर्को देवानां परमे व्योमन्नर्कस्य देवाः परमे व्योमन्नित्येतद्वै देवानां विशतां प्रजापतिरुत्तमोऽविशत्तस्मादाहार्को देवानाम् परमे व्योमन्नित्यथ यदाहार्कस्य देवाः परमे व्योमन्नित्ययं वा अग्निरर्कस्तस्यैतदुत्तमायां चितौ सर्वे देवा विष्टास्तस्मादाहार्कस्य देवाः परमे व्योमन्निति



८.६.३.[१]

गार्हपत्यमुपदधाति । एतद्वै देवाः प्राप्य राद्धेवामन्यन्त ते ऽब्रुवन्केनेदमरात्स्मेति गार्हपत्येनैवेत्यब्रुवन्गार्हपत्यं वै चित्वा समारुह्य प्रथमां चितिमपश्याम प्रथमायै द्वितीयां द्वितीयायै तृतीयां तृतीयायै चतुर्थीं चतुर्थ्यै पञ्चमीं पञ्चम्या इदमिति

८.६.३.[२]

तऽब्रुवन् । उप तज्जानीत यथेयमस्मास्वेव राद्धिरसदिति ते
ऽब्रुवंश्चेतयध्वमिति चितिमिचतेति वाव तदब्रुवंस्तदिचत यथेयमस्मास्वेव
राद्धिरसदिति

८.६.३.[३]

ते चेतयमानाः । एतदपश्यन्निहेममाहृत्योपदधामहा इति तमिहाहृत्योपादधत
तस्मिन्व्यवदन्त वसवः पुरस्ताद्रुद्रा दक्षिणत आदित्याः पश्चान्मरुत उत्तरतो
विश्वे देवा उपरिष्टादिहोपदधामेहोपदधामेति



८.६.३.[४]

तेऽब्रुवन् । मध्य एवोपदधामहै स नो मध्य उपहितः सर्वेषाम्
भविष्यतीति तं मध्य उपादधत तदेतां राद्धिमात्मन्नदधत मध्यतो
मध्यत एवैतदेतां राद्धिमात्मन्नदधत तथैवैतद्यजमानो
यद्गार्हपत्यमुपदधात्येतामेवैतद्राद्धिमात्मन्धत्ते मध्यतो मध्यत
एवैतदेतां राद्धिमात्मन्धत्ते

८.६.३.[५]

यद्वेव गार्हपत्यमुपदधाति । अन्नं वै गार्हपत्योऽत्तायमग्निश्चितोऽत्त्र
एवैतदन्नमपिदधाति मध्यतो मध्यत एवास्मिन्नेतदन्नं दधाति

८.६.३.[६]

यद्वेव गार्हपत्यमुपदधाति । वेदिर्वै देवलोकोऽथ वा एष बहिर्वेदि चितो
भवति तं यदिहाहृत्योपदधाति तदेनं वेदौ देवलोके प्रतिष्ठापयति



८.६.३.[७]

यद्वेव गार्हपत्यमुपदधाति । योनिर्वै पुष्करपर्णमथ वा एष बहिर्योनि चितो
भवति बहिर्धो वा एतद्योनेरग्निकर्म यत्पुरा पुष्करपर्णात्तं
यदिहाहृत्योपदधाति तदेनं योनौ पुष्करपर्णे प्रतिष्ठापयति तथो हैषो
ऽबहिर्धा भवत्यष्टाविष्टका उपदधाति तस्योक्तो बन्धुस्तं वा एतैरेव
यजुर्भिरेतयावृता चिनोति यो ह्येवासौ स एवायं तमेवैतदाहृत्येहोपदधाति

८.६.३.[८]

अथ पुनश्चितिमुपदधाति । एतद्वै देवा गार्हपत्यं चित्वा तस्मिन्नाद्धिं

नापश्यन्योनिर्वै गार्हपत्या चितिरेषो वै योने राद्धिर्यद्रेतः प्रजातिस्तस्यामेतस्यां योनौ रेतः प्रजातिं नापश्यन्

८.६.३.[९]

तेऽब्रुवन् । उप तज्जानीत यथास्यां योनौ रेतः प्रजातिं दधामेति ते ऽब्रुवंश्चेतयध्वमिति चितिमिचतेति वाव तदब्रुवंस्तदिचत यथास्यां योनौ रेतः प्रजातिं दधामेति

८.६.३.[१०]



ते चेतयमानाः । एतां पुनश्चितिमपश्यंस्तामुपादधत तदेतस्यां योनौ रेतः प्रजातिमदधुर्मध्यतो मध्यत एवैतदेतस्यां योनौ रेतः प्रजातिमदधुस्तथैवैतद्यजमानो यत्पुनश्चितिमुपदधात्येतस्यामेवैतद्योनौ रेतः प्रजातिं दधाति मध्यतो मध्यत एवैतदेतस्यां योनौ रेतः प्रजातिं दधाति

८.६.३.[११]

तां हैके जघनार्ध उपदधति । जघनार्धाद्वै रेतः सिच्यते पुचसंधौ पुचाद्वै रेतः सिच्यत इति न तथा कुर्याद्वहिर्धा ह ते योने रेतः प्रजातिं दधति ये तथा कुर्वन्ति मध्य एवोपदध्यात्तत्सम्प्रति योनौ रेतः प्रजातिं दधाति

८.६.३.[१२]

अष्टाविष्टका उपदधाति । अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतं सिञ्चति पञ्च कृत्वः सादयति पञ्चचितिकोऽग्निः पञ्चऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतं सिञ्चत्यष्टाविष्टकाः पञ्च कृत्वः सादयति तत्त्रयोदश त्रयोदश मासाः संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति



८.६.३.[१३]

यद्वेव पुनश्चितिमुपदधाति । एतद्वा एतदयथायथं करोति यदाहवनीयाद्गार्हपत्यमुत्तरं चिनोति तद्यत्पुनश्चितिमुपदधाति य एवायमग्निश्चितस्तमेवैतदाहृत्यास्योपरिष्टात्पुनश्चिनोति तद्यच्चितं सन्तम् पुनश्चिनोति तस्मात्पुनश्चितिः

८.६.३.[१४]

तद्धैके । जघनार्धे गार्हपत्यमुपदधति पूर्वार्धे पुनश्चितिमाहवनीयश्च वा एतौ गार्हपत्यश्चैवं वा एतावग्नी इति न तथा कुर्यादयं वै लोको गार्हपत्यो

द्यौराहवनीय उत्तरो वा असावस्यै तस्मादेनामुत्तरामेवोपदध्यात्

८.६.३.[१५]

यद्वेव गार्हपत्यं च पुनश्चितिं चोपदधाति । वेदिश्च हैते अग्नेरुत्तरवेदिश्चाथ ये अमू पूर्वे निवपत्यध्वरस्य ते अथ हैते अग्नेस्तद्यदेते उपधायाग्निं निदधाति वेदौ चैवैनमेतदुत्तरवेदौ च प्रतिष्ठापयति

८.६.३.[१६]



यद्वेव पुनश्चितिमुपदधाति । पुनर्यज्ञो हैष उत्तरा हैषा देवयज्या पुनर्यज्ञमेवैतदुपधत्त उत्तरामेव देवयज्यामुप हैनं पुनर्यज्ञो नमति

८.६.३.[१७]

यद्वेव पुनश्चितिमुपदधाति । यं वै तं प्राणा ऋषयोऽग्रेऽग्निं समस्कुर्वन्त्स एष तमेवैतत्पुनश्चिनोति तद्यच्चितं सन्तं पुनश्चिनोति तस्माद्वेव पुनश्चितिः

८.६.३.[१८]

येन ऋषयस्तपसा सत्त्रमायन्निति । अमूनेतदृषीनाहेन्धाना अग्निं स्वराभरन्त इतीन्धाना अग्निं स्वर्गं लोकमाहरन्त इत्येतत्तस्मिन्नहं निदधे नाके अग्निमिति स्वर्गो वै लोको नाको यमाहुर्मनव स्तीर्णबर्हिषमिति ये विद्वांसस्ते मनव स्तीर्णबर्हिषमिति सर्वदा हैव स स्तीर्णबर्हिः

८.६.३.[१९]

तं पत्नीभिरनुगचेम देवाः । पुत्रैर्भ्रातृभिरुत वा हिरण्यैरित्येतेनैनं सर्वेणानुगचेमेत्येतन्नाकं गृभ्णानाः सुकृतस्य लोक इति स्वर्गो वै लोको नाकः स्वर्गं लोकं गृह्णानाः सुकृतस्य लोक इत्येतत्तृतीये पृष्ठे अधि रोचने दिव इत्येतद्ध तृतीयं पृष्ठं रोचनं दिवो यत्रैष एतत्तपति



८.६.३.[२०]

आ वाचो मध्यमरुहद्भुरण्युरिति । एतद्ध वाचो मध्यं यत्रैष एतच्चीयते भुरण्युरिति भर्तेत्येतदयमग्निः सत्पतिश्चेकितान इत्ययमग्निः सताम् प्रतिश्चेतयमान इत्येतत्पृष्ठे पृथिव्या निहितो दविद्युतदिति पृष्ठे पृथिव्या निहितो दीप्यमान इत्येतदधस्पदं कृणुतां ये पृतन्यव इत्यधस्पदं कुरुतां सर्वान्पाप्मन इत्येतत्

८.६.३.[२१]

अयमग्निर्वीरतमो वयोधा इति । अयमग्निर्वीर्यवत्तमो वयोधा इत्येतत्सहस्त्रियो द्योततामप्रयुचन्निति सहस्त्रियो दीप्यतामप्रमत्त इत्येतद्विभ्राजमानः सरिरस्य मध्य इतीमे वै लोकाः सरिरं दीप्यमान एषु लोकेष्वित्येतदुप प्रत्याहि दिव्यानि धामेत्युप प्रयाहि स्वर्गं लोकमित्येतत्

८.६.३.[२२]

सम्प्रच्यवध्वमुप सम्प्रयातेति । अमूनेतदृषीनाह समेनम् प्रच्यवध्वमुप चैनं सम्प्रयातेत्यग्ने पथो देवयानान्कृणुध्वमिति यथैव यजुस्तथा बन्धुः पुनः कृण्वाना पितरा युवानेति वाक्च वै मनश्च पितरा युवाना वाक्च मनश्चैतावग्नी अन्वातांसीत्त्वयि तन्तुमेतमिति यो ऽसावृषिभिस्तन्तुस्ततस्तमेतदाह



८.६.३.[२३]

उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिति । इममेतदग्निमाहोच्चैनं बुध्यस्व प्रति चैनं जागृहीतीष्टापूर्ते संसृजेथामयं चेति यथैव यजुस्तथा बन्धुरस्मिन्त्सधस्थे अध्युत्तरस्मिन्निति द्यौर्वा उत्तरं सधस्थं विश्वे देवा यजमानश्च सीदतेति तद्विश्वैर्देवैः सह यजमानं सादयति

८.६.३.[२४]

येन वहसि सहस्रम् । येनाग्ने सर्ववेदसमित्येतद्धास्य प्रतिज्ञाततमं धाम येन सहस्रं वहति येन सर्ववेदसं तेनेमं यज्ञं नो नय स्वर्देवेषु गन्तव इति तेन न इमं यज्ञं नय स्वर्गं लोकं देवेषु गन्तव इत्येतदयं ते योनिर्ऋत्विय इति तस्योक्तो बन्धुरष्टाविष्टका उपदधाति तस्यो एवोक्तः

८.७.१.[१]

ऋतव्या उपदधाति । ऋतव एते यदृतव्या ऋतूनेवैतदुपदधाति तदेतत्सर्वं यदृतव्याः संवत्सरो वा ऋतव्याः संवत्सर इदं सर्वमिदमेवैतत्सर्वमुपदधात्यथो प्रजननमेतत्संवत्सरो वा ऋतव्याः संवत्सरः प्रजननं प्रजननमेवैतदुपदधाति



८.७.१.[२]

यद्वेवर्तव्या उपदधाति । क्षत्र वा ऋतव्या विश इमा इतरा इष्टकाः क्षत्रं तद्विश्यत्तारं दधाति ताः सर्वासु चितिषूपदधाति सर्वस्यां तद्विशि क्षत्रमत्तारं दधाति

८.७.१.[३]

यद्वेवऽर्तव्या उपदधाति । संवत्सर एषोऽग्निः स ऋतव्याभिः संहितः संवत्सरमेवैतदृतुभिः संतनोति संदधाति ता वै नानाप्रभृतयः समानोदर्का ऋतवो वा असृज्यन्त ते सृष्टा नानैवासन्

८.७.१.[४]

तेऽब्रुवन् । न वा इत्थं सन्तः शक्ष्यामः प्रजनयितुं रूपैः समायामेति त एकैकमृतुं रूपैः समायंस्तस्मादेकैकस्मिन्नृतौ सर्वेषामृतूनां रूपं ता यन्नानाप्रभृतयो नाना ह्यसृज्यन्ताथ यत्समानोदर्का रूपैर्हि समायन्



८.७.१.[५]

स उपदधाति । तपश्च तपस्यश्च शैशिरावृतू इति नामनी एनयोरेते नामभ्यामेवैने एतदुपदधात्यसौ वा आदित्यस्तपस्तस्मादेतावृतू अनन्तर्हितौ तद्यदेतस्मादेतावृतू अनन्तर्हितौ तस्मादेतौ तपश्च तपस्यश्च

८.७.१.[६]

अग्नेरन्तःश्लेषोऽसीति । संवत्सर एषोऽग्निः स ऋतव्याभिः संहितः संवत्सरमेवैतदृतुभिः संतनोति संदधाति कल्पेतां द्यावापृथिवी कल्पन्तामाप

ओषधय इतीदमेवैतत्सर्वमृतुभिः कल्पयति कल्पन्तामग्नयः पृथङ्ङ्म
ज्यैष्ठ्याय सव्रता इत्यग्नयो हैते पृथग्यदेता इष्टकास्ते
यथानयोर्ऋत्वोर्ज्यैष्ठ्याय कल्पेरन्नेवमेतदाह ये अग्नयः समनसोऽन्तरा
द्यावापृथिवी इमे इति यथैव यजुस्तथा बन्धुः शैशिरावृतू अभिकल्पमाना
इन्द्रमिव देवा अभिसंविशन्त्विति यथेन्द्रं देवा अभिसंविष्टा एवमिमावृतू
ज्यैष्ठ्यायाभिसंविशन्त्वित्येतद्द्वे इष्टके भवतो द्वौ हि मासावृतुः
सकृत्सादयत्येकं तदृतुं करोति

८.७.१.[७]

तद्यदेते अत्रोपदधाति । संवत्सर एषोऽग्निरिम उ लोकाः संवत्सरस्तस्य द्यौरेव
पञ्चमी चितिर्द्यौरस्य शिशिर ऋतुस्तद्यदेते अत्रोपदधाति यदेवास्यैते
आत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेते अत्रोपदधाति



८.७.१.[८]

यद्वेवैते अत्रोपदधाति । प्रजापतिरेषोऽग्निः संवत्सर उ प्रजापतिस्तस्य शिर एव
पञ्चमी चितिः शिरोऽस्य शिशिर ऋतुस्तद्यदेते अत्रोपदधाति यदेवास्यैते
आत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेते अत्रोपदधाति

८.७.१.[९]

स पुरस्तात्स्वयमातृणायै च विश्वज्योतिषश्चऽर्तव्ये उपदधाति । द्यौर्वा उत्तमा स्वयमातृणादित्य उत्तमा विश्वज्योतिरर्वाचीनं तद्दिवश्चादित्याच्चऽर्तून्दधाति तस्मादर्वाचीनमेवात ऋतवोऽथो प्रजननमेतदर्वाचीनं तद्दिवश्चादित्याश्च प्रजननं दधाति तस्मादर्वाचीनमेवातः प्रजायते स्थितं हैवातः पराक्प्रजननं यावन्तो ह्येव सनाग्रे देवास्तावन्तो देवाः

८.७.१.[१०]

अथ प्रथमायै स्वयमातृणायै प्रथमायै च विश्वज्योतिष उपरिष्टादृतव्ये उपदधाति । इयं वै प्रथमा स्वयमातृणाग्निः प्रथमा विश्वज्योतिस्तदूर्ध्वानृतून्दधाति तस्मादित ऊर्ध्वा ऋतवोऽथो प्रजननमेतदितस्तदूर्ध्वं प्रजननं दधाति तस्मादित ऊर्ध्वमेव प्रजायते



८.७.१.[११]

ता न व्यूहेत् । नेदृतून्व्यूहानीति यो वै म्रियत ऋतवो ह तस्मै व्युह्यन्ते तस्माद्यत्रैव प्रथमे उपदधाति तत्सर्वा उपदध्यात्

८.७.१.[१२]

अथो इमे वै लोका ऋतव्याः । इमांस्तल्लोकानूर्ध्वांश्चितिभिश्चिनोत्यथो क्षत्रं वा ऋतव्याः क्षत्रं तदूर्ध्वं चितिभिश्चिनोत्यथो संवत्सरो वा ऋतव्याः संवत्सरं तदूर्ध्वं चितिभिश्चिनोति ता नान्यया यजुष्मत्येष्टकयोपरिष्टादभ्युपदध्यान्नेत्क्षत्रं विशाभ्युपदधानीति

८.७.१.[१३]

ता हैता एव संयान्यः । एतद्वै देवा ऋतव्याभिरेवेमांलोकान्त्समयुरितश्चोर्ध्वानमुतश्चार्वाचस्तथैवैतद्यजमान ऋतव्याभिरेवेमांलोकान्त्संयातीतश्चोर्ध्वानमुतश्चार्वाचः



८.७.१.[१४]

तदु ह चरकाध्वर्यवः । अन्या एव संयानीरित्युपदधति न तथा कुर्यादत्यहैव रेचयन्त्येता उ एव संयान्यः

८.७.१.[१५]

अथ विश्वज्योतिषमुपदधाति । आदित्यो वा उत्तमा विश्वज्योतिरादित्यो ह्येवामुष्मिंलोके विश्वज्योतिरादित्यमेवैतदुपदधाति

८.७.१.[१६]

यद्वेव विश्वज्योतिषमुपदधाति । प्रजा वै विश्वज्योतिः प्रजा ह्येव विश्वं ज्योतिः
प्रजननमेवैतदुपदधाति

८.७.१.[१७]

स पुरस्तात्स्वयमातृणायै विश्वज्योतिषमुपदधाति । द्यौर्वा उत्तमा
स्वयमातृणादित्य उत्तमा विश्वज्योतिरर्वाचीनं तद्दिव आदित्यं दधाति तस्मादेषो
ऽर्वाचीनमेवातस्तप त्यथो प्रजननमेतदर्वाचीनं तद्दिवः प्रजननं दधाति
तस्मादर्वाचीनमेवातः प्रजायते



८.७.१.[१८]

अथ प्रथमायै स्वयमातृणायै । उपरिष्टाद्विश्वज्योतिषमुपदधातीयं वै
प्रथमा स्वयमातृणाग्निः प्रथमा विश्वज्योतिरितस्तदूर्ध्वमग्निं दधाति
तस्मादित ऊर्ध्वोऽग्निर्दीप्यतेऽथो प्रजननमेतदितस्तदूर्ध्वं प्रजननं
दधाति तस्मादित ऊर्ध्वमेव प्रजायते

८.७.१.[१९]

अथ मध्यमायै स्वयमातृणायै । उपरिष्टाद्विश्वज्योतिषमुपदधात्यन्तरिक्षं वै मध्यमा स्वयमातृणा वायुर्मध्यमा विश्वज्योतिरन्तरिक्षे तद्वायुं दधाति तस्मादयमन्तरिक्षे वायुः

८.७.१.[२०]

तान्येतानि ज्योतींषि । तद्यदेता एवमुपदधात्येतान्येवैतज्ज्योतींषि सम्यञ्चि दधाति तस्मादित ऊर्ध्वोऽग्निर्दीप्यतेऽर्वाङ्गावादित्यस्तपत्यन्तरिक्षेऽयं तिर्यङ्वायुः पवते



८.७.१.[२१]

परमेष्ठी त्वा सादयत्विति । परमेष्ठी ह्येतां पञ्चमीं चितिमपश्यद्दिवस्पृष्ठे ज्योतिष्मतीमिति दिवो ह्यसौ पृष्ठे ज्योतिष्मानादित्यः

८.७.१.[२२]

विश्वस्मै प्राणायापानाय । व्यानायेति प्राणो वै विश्वज्योतिः सर्वस्मा उ वा एतस्मै प्राणो
विश्वं ज्योतिर्यचेति सर्वं ज्योतिर्यचेत्येतत्सूर्यस्तेऽधिपतिरिति सूर्यमेवास्या अधिपतिं करोति सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः

८.७.१.[२३]

ता हैता एव संयान्यः । एतद्वै देवा विश्वज्योतिर्भिरेवेमांलोकान्त्समयुरितश्चोर्ध्वानमुतश्चार्वाचस्तथैवैतद्यजमानो विश्वज्योतिर्भिरेवेमांलोकान्त्संयातीतश्चोर्ध्वानमुतुश्चार्वाचः

८.७.१.[२४]



तदु ह चरकाध्वर्यवो ।ऽन्या एव संयानीरित्युपदधति न तथा कुर्यादत्यहैव रेचयन्त्येता उ एव संयान्यः

८.७.२.[१]

अथ लोकम्पृणामुपदधाति । असौ वा आदित्यो लोकम्पृणैष हीमांलोकान्पूरयत्यमुमेवैतदादित्यमुपदधाति तां सर्वासु चितिषूपदधातीमे वै लोका एताश्चितयोऽमुं तदादित्यमेषु लोकेषु दधाति तस्मादेष सर्वेभ्य एवैभ्यो लोकेभ्यस्तपति

८.७.२.[२]

यद्वेव लोकम्पृणामुपदधाति । क्षत्रं वै लोकम्पृणा विश इमा इतरा इष्टकाः क्षत्रं तद्विश्यत्तारं दधाति तां सर्वासु चितिषूपदधाति सर्वस्यां तद्विशि क्षत्रमत्तारं दधाति

८.७.२.[३]

सैषैकैव भवति । एकस्थं तत्क्षत्रमेकस्थां श्रियं करोत्यथ या द्वितीया मिथुनं तदर्धमु हैतदात्मनो यन्मिथुनं यदा वै सह मिथुनेनाथ सर्वो ऽथ कृत्स्नः कृत्स्नताया एकेन यजुषा बह्वीरिष्टका उपदधाति क्षत्रं तद्वीर्येणात्यादधाति क्षत्रं विशो वीर्यवत्तरं करोत्यथेतराः पृथङ्नाना यजुर्भिरुपदधाति विशं तत्क्षत्रादवीर्यतरां करोति पृथग्वादिनीं नानाचेतसम्

८.७.२.[४]

स वा अस्यां स्रक्त्यां प्रथमे उपदधाति । अमुं तदादित्यमेतस्यां दिशि पधात्यथेतस्तस्मादतोऽनुपर्यैत्यथेतस्तस्मादतोऽनुपर्यैत्यथेतस्तस्मादतो ऽनुपर्यैत्यथातस्तस्मादतोऽनुपर्यैति

८.७.२.[५]

स यद्यत्रैव प्रथमे उपदधाति । तदुत्तमे अनूपदध्यात्सकृद्धैवासावादित्य इमांलोकान्पर्येत्य नातिप्रच्य्वेतातिहृत्य पूर्वे उत्तमे अनूपदधात्यमुं तदादित्यमिमांलोकानतिप्रच्यावयति तस्मादसावादित्य इमांलोकानसंस्थितो दक्षिणावृत्पुनः पुनरनुपर्यैति

८.७.२.[६]

लोकं पृण चिद्रं पृणेति । लोकं च पूरय चिद्रं च पूरयेत्येतदथो सीद ध्रुवा त्वमित्यथो सीद स्थिरा त्वं प्रतिष्ठितेत्येतदिन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन्निती न्द्राग्नी च त्वा बृहस्पतिश्चास्मिन्योनौ प्रत्यतिष्ठिपन्नित्येतदनुष्टुभा वाग्वा अनुष्टुब्वागिन्द्र इन्द्रो लोकम्पृणा न सादयत्यसन्नो ह्येष सूददोहसा वदति प्राणो वै सूददोहाः प्राणेनैवैनमेतत्संतनोति संदधाति



८.७.२.[७]

तदाहुः । कथमेषा लोकम्पृणायातयाम्नी भवतीत्यसौ वा आदित्यो लोकम्पृणायातयामा वा एषोऽथो वाग्वै लोकम्पृणायातयाम्न्यु वै वाक्

८.७.२.[८]

स वै यजुष्मतीरुपधाय । लोकम्पृणया प्रचादयत्यन्नं वै यजुष्मत्य इष्टका

आत्मा लोकम्पृणान्नं तदात्मना परिदधाति तस्मादन्नमात्मना परिहितमात्मैव भवति

८.७.२.[९]

स वा आत्मन्नेव । यजुष्मतीरुपदधाति न पक्षपुचेष्वात्मंस्तदन्नं दधाति यदु वा आत्मन्नन्नं धीयते तदात्मानमवति तत्पक्षपुचान्यथ यत्पक्षपुचेषु नैव तदात्मानमवति न पक्षपुचानि



८.७.२.[१०]

उभयीर्यजुष्मतीश्च लोकम्पृणाश्चात्मन्नुपदधाति । तस्मादयमात्मा द्विगुणो बहुलतर इव लोकम्पृणा एव पक्षपुचेषु तस्मात्पक्षपुचानि तनीयांसीवानूचीश्च तिरश्चीत्मन्नुपदधात्यस्थीनि वा इष्टकास्तस्मादिमान्यन्वञ्चि च तिर्यञ्चि चात्मन्नस्थीनि पराचीरेव पक्षपुचेषु न हि किं चन पक्षपुचेषु तिर्यगस्थ्यस्ति तद्धैतदेव चितस्य चाचितस्य च विज्ञानमेवमेव चित इतरथाचितः

८.७.२.[११]

स वै स्वयमातृणां लोकम्पृणया प्रचादयति । प्राणो वै स्वयमातृणादित्यो लोकम्पृणा प्राणं तदादित्येन समिन्द्धे तस्मादयमुष्णः प्राणस्तया सर्वमात्मानम्

प्रचादयति सर्वं तदात्मानमादित्येन समिन्द्धे तस्मादयं सर्व एवात्मोष्णस्तद्धैतदेव जीविष्यतश्च मरिष्यतश्च विज्ञानमुष्ण एव जीविष्यञ्चीतो मरिष्यन्

८.७.२.[१२]

स यस्यां स्रक्त्यां प्रथमे उपदधाति । ततो दशभिर्दशभिः संचादयन्नेत्या स्वयमातृणायै स तेनैव दक्षिणावृज्जघनेन स्वयमातृणां संचादयन्नेत्यानूक्याया अथ पुनरेत्य तमवधिं संचादयति



८.७.२.[१३]

आत्मानमग्रे संचादयति । आत्मा ह्येवाग्रे सम्भवतः सम्भवत्यथ दक्षिणम् पक्षमथ पुचमथोत्तरं तद्दक्षिणावृत्तद्धि देवत्राथो एवं वा असावादित्य इमांलोकान्दक्षिणावृदनुपर्यैति

८.७.२.[१४]

स एष प्राण एव यल्लोकम्पृणा । तया सर्वमात्मानं प्रचादयति सर्वस्मिंस्तदात्मन्प्राणं दधाति तद्यद्धास्यैषाङ्गं नाभिप्राप्नुयात्प्राणो हास्य तदङ्गं नाभिप्राप्नुयाद्यदु वै प्राणोऽङ्गं नाभिप्राप्नोति शुष्यति वा वै

तन्म्लायति वा तस्मादेनं सर्वमेवैतया प्रचादयेत्

८.७.२.[१५]

स वा आत्मन एवाधि पक्षपुचानि चिनोति । आत्मनो ह्येवाध्यङ्गानि प्ररोहन्त्यथ यत्पुरस्तादर्वाचीरुपदध्याद्यथान्यत आहृत्याङ्गं प्रतिदध्यात्ताद्दक्तत्

८.७.२.[१६]



न भिन्नां न कृष्णामुपदध्यात् । आर्चति वा एषा या भिद्यत आर्तम्वेतद्रूपं यत्कृष्णं नेदार्तमात्मानमभिसंस्करवा इति नाभिन्नाम् परास्येन्नेदनार्तमात्मनो बहिर्धा करवाणीति धिष्ण्येभ्यः प्रतिसंख्याय या विराजमतिरिच्येरन्नोत्तरामुद्धवेयुस्तद्वै खलु ता आर्चन्ति ता भित्त्वोत्कर उत्किरेदुत्करो वा अतिरिक्तस्य प्रतिष्ठा तद्यत्रातिरिक्तस्य प्रतिष्ठा तदेवैना एतत्प्रतिष्ठापयति

८.७.२.[१७]

अथात इष्टकामात्राणामेव । पादमात्रीः प्रथमायां चोत्तमायां च चित्योरुपदध्यात्प्रतिष्ठा वै पादो यो वै पादः स हस्त ऊर्वस्थमात्र्यो वर्षिष्ठाः स्युर्न ह्यूर्वस्थात्किं चन वर्षीयोऽस्थ्यस्ति त्र्यालिखितवत्यस्तिस्रश्चितयः स्युस्त्रिवृतो

हीमे लोका अपरिमितालिखिते द्वे रसो हैते चिती अपरिमित उ वै रसः सर्वास्त्वेव त्र्यालिखितवत्यः स्युः सर्वे ह्येवेमे लोकास्त्रिवृतः

८.७.२.[१८]

अथात इष्टकानामेवावपनस्य । यां कां च यजुष्मतीमिष्टकां विद्यात्ताम् मध्यमायां चिता उपदध्यादन्तरिक्षं वै मध्यमा चितिरन्तरिक्षमु वै सर्वेषां भूतानामावपनमथो अन्नं वै यजुष्मत्य इष्टका उदरं मध्यमा चितिरुदरे तदन्नं दधाति



८.७.२.[१९]

तदाहुः । नोपदध्यान्नेदतिरेचयानीति स वा उपैव दध्यात्कामेभ्यो वा एता इष्टका उपधीयन्ते न वै कामानामतिरिक्तमस्ति स वै नैवोपदध्यादेतावद्वा एतद्देवा अकुर्वन्

८.७.३.[१]

अथ पुरीषं निवपति । मांसं वै पुरीषं मांसेनैवैनमेतत्प्रचादयतीष्टका उपधायास्यीष्टका अस्थि तन्मांसैः संचादयति

८.७.३.[२]

स वै स्वयमातृणायामावपति । प्राणो वै स्वयमातृणान्नं पुरीषं प्राणे तदन्नं
दधाति तेन सर्वमात्मानं प्रचादयति तम्माद्यत्प्राणेऽन्नं धीयते
सर्वमात्मानमवति सर्वमात्मानमनुव्येति

८.७.३.[३]

न स्वयमातृणायामावपेदित्यु हैक आहुः । प्राणः स्वयमातृणा
नेत्प्राणानपिदधानीति
स वा ऐव वपेदन्नेन वै प्राणा विष्टब्धा यो वा अन्नं नात्ति सं वै तस्य प्राणा
रोहन्ति तद्यस्य ह तथा कुर्वन्ति यथा शुष्का सूर्मी सुषिरैवं ह सो
ऽमुष्मिंलोके सम्भवति तस्मात्स्वयमातृणायामैव वपेत्



८.७.३.[४]

स्वयमातृणायामोप्य । अनूक्यया संचादयन्नेत्या परिश्रिद्भ्यः स तेनैव
दक्षिणावृज्जघनेन स्वयमातृणां संचादयन्नैत्या पुनरनूक्यायै

८.७.३.[५]

आत्मानमग्रे संचादयति । आत्मा ह्येवाग्रे सम्भवतः सम्भवत्यथ दक्षिणम्
पक्षमथ पुचमथोत्तरं तद्दक्षिणावृत्तद्धि देवत्रा

८.७.३.[६]

स एष प्राण एव यत्पुरीषम् । तेन सर्वमात्मानं प्रचादयति
सर्वस्मिंस्तदात्मन्प्राणं दधाति तद्यद्धास्यैतदङ्गं नाभिप्राप्नुयात्प्राणो
हास्य तदङ्गं नाभिप्राप्नुयाद्यदु वै प्राणोऽङ्गं नाभिप्राप्नोति शुष्यति वा वै
तन्म्लायति वा तस्मादेनं सर्वमेवैतेन प्रचादयेत्



८.७.३.[७]

इन्द्रं विश्वा अवीवृधन्निति । इन्द्रं हि सर्वाणि भूतानि वर्धयन्ति समुद्रव्यचसं
गिर इति महिमानमस्यैतदाह रथीतमं रथीनामिति रथितमो ह्येष रथिनां
वाजानां सत्पतिं पतिमित्यन्नं वै वाजा अन्नानां सत्पतिम्
पतिमित्येतदैन्द्र्यानुष्टुभा निवपत्यैन्द्रं हि पुरीषं
तदेतदर्धमग्नेर्यत्पुरीषमर्धमैष्टकम्

८.७.३.[८]

तदाहुः । यत्सर्वैश्चन्दोभिः सर्वाभिर्देवताभिरिष्टका
उपदधात्यथैतदेकयैकदेवत्यया निवपति कथमेतदर्धमग्नेरितीन्द्रो वै
सर्वान्देवान्प्रतिस्तद्यदैन्द्या निवपति तेनैतदर्धमग्नेरथ यदनुष्टुभा
वाग्वा अनुष्टुब्वागु सर्वाणि चन्दांसि तेनो एवार्धम्

८.७.३.[९]

अथ विकर्णीं च स्वयमातृणां चोपदधाति । वायुर्वै विकर्णी द्यौरुत्तमा
स्वयमातृणा वायुं च तद्दिवं चोपदधात्युत्तमे उपदधात्युत्तमे हि वायुश्च
द्यौश्च संस्पृष्टे संस्पृष्टे हि वायुश्च द्यौश्च पूर्वां
विकर्णीमुपदधात्यर्वाचीनं तद्दिवो वायुं दधाति तस्मादेषोऽर्वाचीनमेव वातः
पवते



८.७.३.[१०]

यद्वेव विकर्णीमुपदधाति । यत्र वा अदोऽश्वं चितिमवघ्रापयन्ति तदसावादित्य
इमांलोकान्त्सूत्रे समावयते तद्यत्तत्सूत्रं वायुः स स यः स वायुरेषा सा विकर्णी
तद्यदेतामुपदधात्यसावेव तदादित्य इमांलोकान्त्सूत्रे समावयते

८.७.३.[११]

यद्वेव विकर्णीं च स्वयमातृणां चोपदधाति । आयुर्वै विकर्णी प्राणः स्वयमातृणायुश्च तत्प्राणं चोपदधात्युत्तमे उपदधात्युत्तमे ह्यायुश्च प्राणश्च संस्पृष्टे संस्पृष्टे ह्यायुश्च प्राणश्च पूर्वामुत्तरां विकर्णीमुपदधात्यायुषा तत्प्राणमुभयतः परिगृह्णाति

८.७.३.[१२]

प्रोथदश्वो न यवसे ।ऽविष्यन्यदा महः संवरणाद्व्यस्थात् आदस्य वातो अनुवाति शोचिरध स्म ते व्रजनं कृष्णमस्तीति यदा वा एतस्य वातोऽनुवाति शोचिरथैतस्य व्रजनं कृष्णं भवति त्रिष्टुभोपदधाति त्रैष्टुभो हि वायुराग्नेय्याग्निकर्म ह्यनिरुक्तयानिरुक्तो हि वायुरथ यद्वात इत्याह वातो हि वायुः



८.७.३.[१३]

अथ स्वयमातृणामुपदधाति । आयोष्ट्वा सदने सादयामीत्येष वा आयुस्तस्यैतत्सदनमवत इत्येष हीदं सर्वमवति चायायामित्येतस्य हीदं सर्वं चायायां समुद्रस्यह्येतद्धृदयं रश्मीवतीं भास्वतीमिति रश्मीवती हि द्यौर्भास्वत्या या द्यां भास्या पृथिवीमोर्वन्तरिक्षमित्येवं ह्येष इमांलोकानाभाति

८.७.३.[१४]

परमेष्ठी त्वा सादयत्विति । परमेष्ठी ह्येतां पञ्चमीं चितिमपश्यन्

८.७.३.[१५]

यद्वेव परमेष्ठिनोपदधाति । प्रजापतिं विस्रस्तं देवता आदाय
व्युदक्रामंस्तस्य परमेष्ठी शिर आदायोत्क्रम्यातिष्ठन्



८.७.३.[१६]

तमब्रवीत् । उप मेहि म एतद्धेहि येन मे त्वमुदक्रमीरिति किं मे ततो
भविष्यतीति त्वद्देवत्यमेव म एतदात्मनो भविष्यतीति तथेति
तदस्मिन्नेतत्परमेष्ठी प्रत्यदधात्

८.७.३.[१७]

तद्यैषोत्तमा स्वयमातृणा । एतदस्य तदात्मनस्तद्यदेतामत्रोपदधाति
यदेवास्यैषात्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेतामत्रोपदधाति

८.७.३.[१८]

दिवस्पृष्ठे व्यचस्वतीं प्रथस्वतीमिति । दिवो ह्येतत्पृष्ठं व्यचस्वत्प्रथस्तद्दिवं यच दिवं दृंह दिवं मा हिंसीरित्यात्मानं यचात्मानं दृंहात्मानं मा हिंसीरित्येतत्

८.७.३.[१९]

विश्वस्मै प्रणायापानाय । व्यानायोदानायेति प्राणो वै स्वयमातृणा सर्वस्मा उ वा एतस्मै प्राणः प्रतिष्ठायै चरित्रायेतीमे वै लोकाः स्वयमातृणा इम उ लोकाः प्रतिष्ठा चरित्रं सूर्यस्त्वाभिपात्विति सूर्यस्त्वाभिगोपायत्वित्येतन्मह्या स्वस्त्येति महत्या स्वस्त्येत्येतच्चर्दिषा शंतमेनेति यच्चर्दिः शंतमं तेनेत्येतत्



८.७.३.[२०]

नानोपदधाति । नाना हि वायुश्च द्यौश्च सकृत्सादयति समानं तत्करोति समानं ह्यायुश्च प्राणश्च ते वा उभे एव शर्करे भवत उभे स्वयमातृणे समानं ह्येवायुश्च प्राणश्चाथैने सूददोहसाधिवदति प्राणो वै सूददोहाः प्राणेणैवैने एतत्संतनोति संदधाति

८.७.३.[२१]

ता अस्य सूददोहस इति । आपो वै सूदोऽन्नं दोहः सोमं श्रीणन्ति पृश्नय इत्यन्नं वै पृश्नि जन्मन्देवानामिति संवत्सरो वै देवानां जन्म विश इति यज्ञो वै विशो यज्ञे हि सर्वाणि भूतानि विष्टानि त्रिष्वा रोचने दिव इति सवनानि वै त्रीणि रोचनानि सवनान्येतदाहानुष्टुभा वाग्वा अनुष्टुब्वागु सर्वे प्राणा वाचा चैवैने एतत्प्राणेन च संतनोति संदधाति सा वा एषैका सती सूददोहाः सर्वा इष्टका अनुसंचरति प्राणो वै सूददोहास्तस्मादयमेक एव प्राणः सन्त्सर्वाण्यङ्गानि
सर्वमात्मानमनुसंचरति

८.७.४.[१]



अथ स्वयमातृणासु सामानि गायति । इमे वै लोकाः स्वयमातृणास्ता एताः शर्करास्ता देवा
उपधायैतादृशीरेवापश्यन्यथैताः शुष्काः शर्कराः

८.७.४.[२]

तेऽब्रुवन् । उप तज्जानीत यथैषु लोकेषु रमसुपजीवनं दधामेति ते
ऽब्रुवंश्चेतयध्वमिति चितिमिचतेति वाव तदब्रुवंस्तदिचत यथैषु लोकेषु
रसमुपजीवनं दधामेति

८.७.४.[३]

ते चेतयमानाः । एतानि सामान्यपश्यंस्तान्यगायंस्तैरेषु लोकेषु रसमुपजीवनमदधुस्तथैवैतद्यजमानो यदेतानि सामानि गायत्येष्वेवैतल्लोकेषु रसमुपजीवनं दधाति

८.७.४.[४]

स्वयमातृणासु गायति । इमे वै लोकाः स्वयमातृणा एष्वेवैतल्लोकेषु रसमुपजीवनं दधाति



८.७.४.[५]

स वै भूर्भुवः स्वरिति । एतासु व्याहृतिषु गायति भूरिति वा अयं लोको भुव इत्यन्तरिक्षलोकः स्वरित्यसौ लोक एष्वेवैतल्लोकेषु रसमुपजीवनं दधाति

८.७.४.[६]

तानि वै नानाप्रस्तावानि । समाननिधनानि तानि यन्नानाप्रस्तावानि नाना ह्यपश्यन्नथ यत्समाननिधनान्येका ह्येव यज्ञस्य प्रतिष्ठैकं निधनं

स्वर्ग एव लोकस्तस्मात्स्वर्ज्योतिर्निधनानि

८.७.४.[७]

अथैनं हिरण्यशकलैः प्रोक्षति । अत्रैष सर्वोऽग्निः संस्कृतस्तस्मिन्देवा एतदमृतं रूपमुत्तमदधुस्तथैवास्मिन्नयमेतदमृतं रूपमुत्तमं दधाति

८.७.४.[८]



यद्वेवैनं हिरण्यशकलैः प्रोक्षति । एतद्वा अस्मिन्नदोऽमूं पुरस्ताद्रम्यां तनूं मध्यतो दधाति रुक्मं च पुरुषं चाथैनमेतत्सर्वमेवोपरिष्टाद्रम्यया तन्वा प्रचादयति

८.७.४.[९]

द्वाभ्यांद्वाभ्यां शताभ्याम् । द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदमृतं रूपमुत्तमं दधाति पञ्च कृत्वः पञ्चचितिकोऽग्निः पञ्चऽर्तवः संवत्सरः संवत्सरो ऽग्निर्यावानाग्नर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदमृतं रूपमुत्तमं दधाति सहस्रेण सर्वं वै सहस्रं सर्वेणैवास्मिन्नेतदमृतं रूपमुत्तमं दधाति

८.७.४.[१०]

पश्चादग्रे प्राङ्तिष्ठन् । अथोत्तरतो दक्षिणाथ पुरस्तात्प्रत्यङ्ङथ जघनेन परीत्य दक्षिणत उदङ्तिष्ठंस्तद्दक्षिणावृत्तद्धि देवत्राथानुपरीत्य पश्चात्प्राङ् तिष्ठंस्तथो हास्यैतत्प्रागेव कर्म कृतं भवति

८.७.४.[११]



सहस्रस्य प्रमासि । सहस्रस्य प्रतिमासि सहस्रस्योन्मासि साहस्रोऽसि सहस्राय त्वेति सर्वं वै सहस्रं सर्वमसि सर्वस्मै त्वेत्येतत्

८.७.४.[१२]

अथातश्चितिपुरीषाणामेव मीमांसा । अयमेव लोकः प्रथमा चितिः पशवः पुरीषं यत्प्रथमां चितिं पुरीषेण प्रचादयतीमं तल्लोकं पशुभिः प्रचादयति

८.७.४.[१३]

अन्तरिक्षमेव द्वितीया चितिः । वयांसि पुरीषं यद्द्वितीयां चितिं पुरीषेण

प्रचादयत्यन्तरिक्षं तद्वयोभिः प्रचादयति

८.७.४.[१४]

द्यौरेव तृतीया चितिः । नक्षत्राणि पुरीषं यत्तृतीयां चितिं पुरीषेण प्रचादयति दिवं तन्नक्षत्रैः प्रचादयति

८.७.४.[१५]



यज्ञ एव चतुर्थी चितिः । दक्षिणाः पुरीषं यच्चतुर्थी चितिं पुरीषेण प्रचादयति यज्ञं तद्दक्षिनाभिः प्रचादयति

८.७.४.[१६]

यजमान एव पञ्चमी चितिः । प्रजा पुरीषं यत्पञ्चमीं चितिं पुरीषेण प्रचादयति यजमानं तत्प्रजया प्रचादयति

८.७.४.[१७]

स्वर्ग एव लोकः षष्ठी चितिः । देवाः पुरीषं यत्षष्ठीं चितिं पुरीषेण प्रचादयति स्वर्गं तल्लोकं देवैः प्रचादयति

८.७.४.[१८]

अमृतमेव सप्तमी चितिः तामुत्तमामुपदधात्यमृतं तदस्य सर्वस्योत्तमं दधाति तस्मादस्य सर्वस्यामृतमुत्तमं तस्माद्देवा अनन्तर्हितास्तस्मादु तेऽमृता इत्यधिदेवतम्



८.७.४.[१९]

अथाध्यात्मम् । यैवेयं प्रतिष्ठा यश्चायमवाङ्प्राणस्सत्प्रथमा चितिर्मांसम् पुरीषं यत्प्रथमां चितिं पुरीषेण प्रचादयत्येतस्य तदात्मनो मांसैः संचादयतीष्टका उपधायास्थीष्टका अस्थि तन्मांसैः संचादयति नाधस्तात्संचादयति तस्मादिमे प्राणा अधस्तादसंचन्ना उपरिष्टात्तु प्रचादयत्येतदस्य तदात्मन उपरिष्टान्मांसैः संचादयति तस्मादस्यैतदात्मन उपरिष्टान्मांसैः संचन्नं नावकाशते

८.७.४.[२०]

यदूर्ध्वं प्रतिष्ठाया अवाचीनं मध्यात् । तद्द्वितीया चितिर्मांसं पुरीषं यद्द्वितीयां चितिं पुरीषेण प्रचादयत्येतदस्य तदात्मनो मांसैः

संचादयतीष्टका उपधायास्थीष्टका अस्थि तन्मांसैः संचादयति पुरीष उपदधाति पुरीषेण प्रचादयत्येतदस्य तदात्मन उभयतो मांसैः संचादयति तस्मादस्यैतदात्मन उभयतो मांसैः संचन्नं नावकाशते

८.७.४.[२१]

मध्यमेव तृतीया चितिः । यदूर्ध्वं मध्यादवाचीनं ग्रीवाभ्यस्तच्चतुर्थी चितिर्ग्रीवा एव पञ्चमी चितिः शिर एव षष्ठी चितिः प्राणा एव सप्तमी चितिस्तामुत्तमामुपदधाति प्राणांस्तदस्य सर्वस्योत्तमान्दधाति तस्मादस्य सर्वस्य प्राणा उत्तमाः पुरीष उपदधाति मांसं वै पुरीषं मांसेन तत्प्राणान्प्रतिष्ठापयति नोपरिष्टात्प्रचादयति तस्मादिमे प्राणा उपरिष्टादसंचन्नाः



९.१.१.[१]

अथातः शतरुद्रियं जुहोति । अत्रैष सर्वोऽग्निः संस्कृतः स एषोऽत्र रुद्रो देवता तस्मिन्देवा एतदमृतं रूपमुत्तममदधुः स एषोऽत्र दीप्यमानो ऽतिष्ठदन्नमिचमानस्तस्माद्देवा अबिभयुर्यद्वै नोऽयं न हिंस्यादिति

९.१.१.[२]

तेऽब्रुवन् । अन्नमस्मै सम्भराम तेनैनं शमयामेति तस्मा एतदन्नं समभरञ्छान्तदेवत्यं तेनैनमशमयंस्तद्यदेतम्

देवमेतेनाशमयंस्तस्माचान्तदेवत्यं शान्तदेवत्यं ह वै
तचतरुद्रियमित्याचक्षते परोऽक्षं परोऽक्षकामा हि
देवास्तथैवास्मिन्नयमेतदमृतं रूपमुत्तमं दधाति स एषोऽत्र
दीप्यमानस्तिष्ठत्यन्नमिचमानस्तस्मा एतदन्नं सम्भरति शान्तदेवत्यं
तेनैनं शमयति

९.१.१.[३]

जर्तिलैर्जुहोति । जायत एष एतद्यच्चीयते स एष सर्वस्मा अन्नाय जायत
उभयम्वेतदन्नं यज्जर्तिला यच्च ग्राम्यं यच्चारण्यं यदह तिलास्तेन ग्राम्यं
यदकृष्टे पच्यन्ते तेनारण्यमुभयेनैवैनमेतदन्नेन प्रीणाति ग्राम्येण
चारण्येन च



९.१.१.[४]

अर्कपर्णेन जुहोति । अन्नमर्कोऽन्नेनैवैनमेतत्प्रीणाति

९.१.१.[५]

परिश्रित्सु जुहोति । अग्नय एते यत्परिश्रितस्तथो हास्यैता अग्निमत्येवाहुतयो हुता
भवन्ति

९.१.१.[६]

यद्देवैतचतरुद्रियं जुहोति । प्रजापतेर्विस्रस्तादेवता उदक्रामंस्तमेक एव देवो नाजहान्मन्युरेव सोऽतिन्नन्तर्विततोऽतिष्ठत्सोऽरोदीत्तस्य यान्यश्रूणि प्रास्कन्दंस्तान्यस्मिन्मन्यौ प्रत्यतिष्ठन्त्स एव शतशीर्षा रुद्रः समभवत्सहस्राक्षः शतेषुधिरथ या अन्या विप्रुषोऽपतंस्ता असंख्याता सहस्राणीमांलोकाननुप्राविशंस्तद्यद्रुदितात्समद्रुद्राः सोऽयं शतशीर्षा रुद्रः सहस्राक्षः शतेषुधिरधिज्यधन्वा प्रतिहितायी भीषयमाणो ऽतिष्ठदन्नमिचमानस्तस्माद्देवा अबिभयुः



९.१.१.[७]

ते प्जापतिमब्रुवन् । अस्माद्वै बिभीमो यद्वै नोऽयं न हिंस्यादिति सो ऽब्रवीदन्नमस्मै सम्भरत तेनैनं शमयतेति तस्मा एतदन्नं समभरञ्चतरुद्रियं तेनैनमशमयंस्तद्यदेतं शतशीर्षाणां रुद्रमेतेनाशमयंस्तस्माचतद्यदेतं शतशीर्षाणां रुद्रमेतेनाशमयंस्तस्माचतशीर्षरुद्रशमनीयं शतशीर्षरुद्रशमनीयं ह वै तचतरुद्रियमित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्तथैवास्मा अयमेतदन्नं सम्भरति शतरुद्रियं तेनैनं शमयति

९.१.१.[८]

गवेधुकासक्तुभिर्जुहोति । यत्र वै सा देवता विस्रस्ताशयत्ततो गवेधुकाः समभवन्त्स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति

९.१.१.[९]

अर्कपर्णेन जुहोति । एतस्य वै देवस्याशयादर्कः समभवत्स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति



९.१.१.[१०]

परिश्रित्सु जुहोति । लोमानि वै परिश्रितो न वै लोमसु विषं न किं चन हिनस्त्युत्तरार्धेऽग्नेरुदङ्ङिष्ठन्जुहोत्येतस्यां ह दिश्येतस्य देवस्य गृहाः स्वायामेवैनमेतद्दिशि प्रीणाति स्वायां दिश्यवयजते

९.१.१.[११]

स वै जानुदघ्ने प्रथमं स्वाहाकरोति । अधैव वै तद्यज्जानुदघ्नमध इव तद्यदयं लोकस्तद्य इमं लोकं रुद्राः प्राविशंस्तांस्तत्प्रीणाति

९.१.१.[१२]

अथ नाभिदघ्ने । मध्यमिव वै तद्यन्नाभिदघ्नम्
मध्यमिवान्तरिक्षलोकस्तद्येऽन्तरिक्षलोकं रुद्राः प्राविशंस्तांस्तत्प्रीणाति

९.१.१.[१३]

अथ मुखदघ्न । उपरीव वै तद्यन्मुखदघ्नमुपरीव तद्यदसौ
लोकस्तद्येऽमुं लोकं रुद्राः प्राविशंस्तांस्तत्प्रीणाति स्वाहाकारेणान्नं वै स्वाहाकारो
ऽन्नेनैवैनानेतत्प्रीणाति



९.१.१.[१४]

नमस्ते रुद्र मन्यव इति । य एवास्मिन्त्सोऽन्तर्मन्युर्विततोऽतिष्ठत्तस्मा
एतन्नमस्करोत्युतो त इषवे नमो बाहुभ्यामुत ते नम इतीष्वा च हि बाहुभ्यां
च भीषयमाणोऽतिष्ठत्

९.१.१.[१५]

स एष क्षत्रं देवः । यः स शतशीर्षा समभवद्विश इम इतरे ये विप्रुङ्भ्यः

समभवंस्तस्मा एतस्मै क्षत्रायैता विश एतं पुरस्तादुद्धारमुदहरन्य एष प्रथमोऽनुवाकस्तेनैनमप्रीणंस्तथैवास्मा अयमेतम् पुरस्तादुद्धारमुद्धरति तेनैनं प्रीणाति तस्मादेष एकदेवत्यो भवति रौद्र एतं ह्येतेन प्रीणाति

९.१.१.[१६]

चतुर्दशैतानि यजूंषि भवन्ति । त्रयोदश मासाः संवत्सरः प्रजापतिश्चतुर्दशः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति नमो नम इति यज्ञो वै नमो यज्ञेनैवैनमेतन्नमस्कारेण नमस्यति तस्मादु ह नायज्ञियं ब्रूयान्नमस्त इति यथा हैनं ब्रूयाद्यज्ञस्त इति तादृक्तत्



९.१.१.[१७]

अथ द्वन्द्विभ्यो जुहोति । नमोऽमुष्मै चामुष्मै चेति तद्यथा वै ब्रूयादसौ त्वं च न एष च मा हिंसिष्टमित्येवमेतदाह नतरां हि विदित आमन्त्रितो हिनस्ति

९.१.१.[१८]

नमो हिरण्यबाहवे । सेनान्ये दिशां च पतये नम इत्येष एव हिरण्यबाहुः सेनानीरेष दिशां पतिस्तद्यत्किं चात्रैकदेवत्यमेतमेव तेन प्रीणाति क्षत्रमेव

तद्विश्यपिभागं करोति तस्माद्यद्विशस्तस्मिन्क्षत्रियोऽपिभागोऽथ या असंख्याता सहस्राणीमांलोकाननुप्राविशन्नेतास्ता देवता याभ्य एतज्जुहोति

९.१.१.[१९]

अथ जातेभ्यो जुहोति । एतानि ह जातान्येते रुद्रा अनुप्रविविशुर्यत्र यत्रैते तदेवैनानेतत्प्रीणात्यथो एवं हैतानि रुद्राणां जातानि देवानां वै विधामनु मनुष्यास्तस्मादु हेमानि मनुष्याणां जातानि यथाजातमेवैनानेतत्प्रीणाति

९.१.१.[२०]



तेषां वा उभयतोनमस्कारा अन्ये ।ऽन्यतरतोनमस्कारा अन्ये ते ह ते घोरतरा अशान्ततरा य उभयतोनमस्कारा उभयत एवैनानेतद्यज्ञेन नमस्कारेण शमयति

९.१.१.[२१]

स वा अशीत्यां च स्वाहाकरोति । प्रथमे चानुवाकेऽथाशीत्यामथाशीत्यां च यानि चोर्ध्वानि यजूंष्यावतानेभ्योऽन्नमशीतयोऽन्नेनैवैनानेतत्प्रीणाति

९.१.१.[२२]

अथैतानि यजूंषि जपति । नमो वः किरिकेभ्य इत्येतद्धास्य प्रतिज्ञाततमं धाम यथा प्रियो वा पुत्रो हृदयं वा तस्माद्यत्रैतस्माद्देवाचक्ङ्केत तदेताभिर्व्याहृतिभिर्जुहुयादुप हैवैतस्य देवस्य प्रियं धाम गचति तथो हैनमेष देवो न हिनस्ति

९.१.१.[२३]

नमो वः किरिकेभ्य इति । एते हीदं सर्वं कुर्वन्ति देवानां हृदयेभ्य इत्यग्निर्वायुरादित्य एतानि ह तानि देवानां हृदयानि नमो विचिन्वत्केभ्य इत्येते हीदं सर्वं विचिन्वन्ति नमो विक्षिणत्केभ्य इत्येते वै तं विक्षिणन्ति यं विचिक्षीषन्ति नम आनिर्हतेभ्य इत्येते ह्येभ्यो लोकेभ्योऽनिर्हताः



९.१.१.[२४]

अथोत्ताराणि जपति । द्रापे अन्धसस्पत इत्येष वै द्रापिरेष वै तं द्रा पयति यं दिद्रापयिषत्यन्धसस्पत इति सोमस्य पत इत्येतद्दरिद्र नीललोहितेति नामानि चास्यैतानि रूपाणि च नामग्राहमेवैनमेतत्प्रीणात्यासां प्रजानामेषां पशूनाम्
मा
भेर्मा रोङ्गो च नः किं चनाममदिति यथैव यजुस्तथा बन्धुः

९.१.१.[२५]

स एष क्षत्रं देवः । तस्मा एतस्मै क्षत्रायैता विशोऽमुम्
पुरस्तादुद्धारमुदहरन्योऽसौ प्रथमोऽनुवाकोऽथास्मा
एतमुपरिष्टादुद्धारमुदहरंस्तेनैनमप्रीणंस्तथैवास्मा
अयमेतमुपरिष्टादुद्धारमुद्धरति तेनैनं प्रीणाति तस्मादप्येष एकदेवत्यो
भवति रौद्र एवैतं ह्येवैतेनप्रीणाति

९.१.१.[२६]



सप्तैतानि यजूंषि भवन्ति । सप्तचितिकोऽग्निः सप्तऽर्तवः संवत्सरः संवत्सरो
ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति
तान्युभयान्येकविंशतिः सम्पद्यन्ते द्वादश मासाः पञ्चऽर्तवस्त्रय इमे लोका
असावादित्य एकविंश एतामभिसम्पदम्

९.१.१.[२७]

अथावतानान्जुहोति । एतद्वा एनान्देवा एतेनान्नेन
प्रीत्वाथैषामेतैरवतानैर्धनूंष्यवातन्वंस्तथैवैनानयमेतदेतेनान्नेन
प्रीत्वाथैषामेतैरवतानैर्धनूंष्यवतनोति न ह्यवततेन धनुषा कं चन
हिनस्ति

९.१.१.[२८]

तद्वै सहस्रयोजन इति । एतद्ध परमं दूरं यत्सहस्रयोजनं तद्यदेव परमं दूरं तदेवैषामेतद्धनूंष्यवतनोति

९.१.१.[२९]

यद्वेवाह सहस्रयोजन इति । अयमग्निः सहस्रयोजनं न ह्येतस्मादिति नेत्यन्यत्परमस्ति तद्यदग्नौ जुहोति तदेवैषां सहस्रयोजने धनूंष्यवतनोति



९.१.१.[३०]

असंख्याता सहस्राणि । अस्मिंन्महत्यर्णव इति यत्रयत्र ते तदेवैषामेतद्धनूंष्यवतनोति

९.१.१.[३१]

दशैतानवतानान्जुहोति । दशाक्षरा विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैषामेतद्धनूंष्यवतनोति

९.१.१.[३२]

अथ प्रत्यवरोहान्जुहोति । एतद्वा एतदिमांलोकानित ऊर्ध्वो रोहति स स पराङिव रोह इयमु वै प्रतिष्ठा ते देवा इमां प्रतिष्ठामभिप्रत्यायंस्तथैवैतद्यजमाव इमां प्रतिष्ठामभिप्रत्यैति

९.१.१.[३३]



यद्वेव प्रत्यवरोहति । एतद्वा एनानेतत्प्रीणन्नन्ववैति तत एवैतदात्मानमपोद्धरते जावाल्वै तथा हानेनात्मना सर्वमायुरेति

९.१.१.[३४]

यद्वेव प्रत्यवरोहति । एतद्वा एतदेतान्रुद्रानित ऊर्ध्वान्प्रीणाति तान्पुनरमुतो ऽर्वाचः

९.१.१.[३५]

ननोऽस्तु रुद्रेभ्यो ये दिवीति । तद्येऽमुष्मिंलोके रुद्रास्तेभ्य एतन्नमस्करोति येषां वर्षमिषव इति वर्षं ह तेषामिषवा वर्षेण ह ते हिंसन्ति यं जिहिंसिषन्ति

९.१.१.[३६]

नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्ष इति । तद्येऽन्तरिक्षलोके रुद्रास्तेभ्य एतन्नमस्करोति येषां वात इषव इति वातो ह तेषामिषवो वातेन ह ते हिंसन्ति यं जिहिंसिषन्ति



९.१.१.[३७]

नमोऽस्तु रुद्रेभ्यो ये पृथिव्यामिति । तद्येऽस्मिंलोके रुद्रास्तेभ्य एतन्नमस्करोति येषामन्नमिषव इत्यन्नं ह तेषामिषवोऽन्नेन ह ते हिंसन्ति यं जिहिंसिषन्ति

९.१.१.[३८]

तेभ्यो दश प्राचीः । दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वा इति दशाक्षरा विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनानेतदन्नेन प्रीणाति

९.१.१.[३९]

यद्वेवाह दशदशेति । दश वा अञ्जलेरङ्गुलयो दिशिदिश्येवैभ्य एतदञ्जलिं करोति तस्मादु हैतद्भीतोऽञ्जलिं करोति तेभ्यो नमो अस्त्विति तेभ्य एव नमस्करोति ते नो मृडयन्त्विति त एवास्मै मृडयन्ति ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्म इति यमेव द्वेष्टि यश्चैनं द्वेष्टि तमेषां जम्भे दधात्यमुमेषां जम्भे दधामीति ह ब्रूयाद्यं द्विष्यात्ततोऽह तस्मिन्न पुनरस्त्यपि तन्नाद्रियेत स्वयंनिर्दिष्टो ह्येव स यमेवंविद्द्वेष्टि

९.१.१.[४०]



त्रिष्कृत्वः प्रत्यवरोहति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनानेतदन्नेन प्रीणाति स्वाहाकारेणान्नं वै स्वाहाकारो ऽन्नेनैवैनानेतत्प्रीणाति त्रिरिति ऊर्ध्वो रोहति तत्षट्टस्योक्तो बन्धुः

९.१.१.[४१]

यद्वेव त्रिष्कृत्वः प्रत्यवरोहति । त्रिर्हि कृत्व ऊर्ध्वो रोहति तद्यावत्कृत्व ऊर्ध्वो रोहति तावत्कृत्वः प्रत्यवरोहति

९.१.१.[४२]

अथ तदर्कपर्णं चात्वाले प्रास्यति । एतद्वा एनेनैतद्रौद्रं कर्म करोति
तदेतदशान्तं तदेतत्तिरः करोति नेदिदमशान्तं
कश्चिदभितिष्ठात्तन्नेद्धिनसदिति तस्माच्चात्वाले यद्वेव चात्वालेऽग्निरेष
यच्चात्वालस्तथो हैनदेषोऽग्निः संदहत्यथातः सम्पदेव

९.१.१.[४३]

तदाहुः । कथमस्यैतचतरुद्रियं संवत्सरमग्निमाप्नोति कथं
संवत्सरेणाग्निना सम्पद्यत इति षष्टिश्च ह वै त्रीणि च शतान्येतचतरुद्रियमथ
त्रिंशदथ पञ्चत्रिंशत्ततो यानि षष्टिश्च त्रीणि च शतानि तावन्ति संवत्सरस्याहानि
तत्संवत्सरस्याहान्याप्नोत्यथ यानि त्रिंशत्त्रंशन्मासस्य रात्रयस्तन्मासस्य
रात्रीराप्नोति तदुभयानि संवत्सरस्याहोरात्राण्याप्नोत्यथ यानि पञ्चत्रिंशत्स
त्रयोदशो मासः स आत्मा त्रिंशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर एव
पञ्चत्रिंशमेतावान्वै संवत्सर एवमु हास्यैतचतरुद्रियं
संवत्सरमग्निमाप्नोत्येवं संवत्सरेणाग्निना सम्पद्यत एतावत्स उ वै शाण्डिले
ऽग्नौ मध्यतो यजुष्मत्य इष्टका उपधीयन्तेऽग्नयो हैते पृथग्यदेता इष्टका
एवमु हास्यैतेऽग्नयः पृथक्शतरुद्रियेणाभिहुता भवन्ति



९.१.१.[४४]

तदाहुः । कथमस्यैतचतरुद्रियं महदुक्थमाप्नोति कथं महतोक्थेन

सम्पद्यत इति यान्यमूनि पञ्चविंशतिर्यजूंष्यभितोऽशीतीः स पञ्चविंश आत्मा यत्र वा आत्मा तदेव शिरस्तत्पक्षपुचान्यथ या अशीतयः सैवाशीतीनामाप्तिरशीतिभिर्हि महदुक्थमाख्यायतेऽथ यदूर्ध्वमशीतिभ्यो यदेवादो महत उक्थस्योर्ध्वमशीतिभ्य एतदस्य तदेवमु हास्यैतचतरुद्रियम् महदुक्थमाप्नोत्येवं महतोक्थेन सम्पद्यते

९.१.२.[१]

अथैनमतः परिषिश्चति । एतद्वा एनं देवाः शतरुद्रियेण शमयित्वाथैनमेतद्भूय एवाशमयंस्तथैवैनमेवमेतचतरुद्रियेण शमयित्वाथैनमेतद्भूय एव शमयति



९.१.२.[२]

अद्भिः परिषिञ्चति । शान्तिर्वा आपः शमयत्येवैनमेतत्सर्वतः परिषिञ्चति सर्वत एवैनमेतचमयति त्रिष्कृत्वः परिषिञ्चति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतचमयति

९.१.२.[३]

यद्वेवैनं परिषिञ्चति । इमे वै लोका एषोऽग्निरिमांस्तल्लोकानद्भिः परितनोति समुद्रेण हैनांस्तत्परितनोति सर्वतस्तस्मादिमांलोकान्त्सर्वतः समुद्रः पर्येति

दक्षिणावृत्तस्मादिमांलोकान्दक्षिणावृत्समुद्रः पर्येति

९.१.२.[४]

अग्नीत्परिषिञ्चति । अग्निरेष यदाग्नीध्रो नो वा आत्मात्मानं हिनस्त्यहिंसाया अश्मनो ऽध्यश्मनो ह्यापः प्रभवन्ति निकक्षान्निकक्षाद्ध्यापः प्रभवन्ति दक्षिणान्निकक्षाद्दक्षिणाद्धि निकक्षादापः प्रभवन्ति

९.१.२.[५]



अश्मन्नूर्जं पर्वते शिश्रियाणामिति । अश्मनि वा एषोर्क्पर्वतेषु श्रिता यदापोऽद्भ्य ओषधीभ्यो वनस्पतिभ्यो अधि सम्भृतं पय इत्येतस्माद्ध्येतत्सर्वस्मादधि सम्भृतं पयस्तां न इषमूर्जं धत्त मरुतः संरराणा इति मरुतो वै वर्षस्येशतेऽश्मंस्ते क्षुदिति निदधाति तदश्मनि क्षुधं दधाति तस्मादश्मानाद्योऽथो स्थिरो वा अश्मा स्थिरा क्षुत्स्थिर एव तत्स्थिरं दधाति मयि त ऊर्गित्यपादत्ते तदात्मन्नूर्जं धत्ते तथा द्वितीयं तथा तृतीयम्

९.१.२.[६]

निधायोदहरणं त्रिर्विपल्ययते । एतद्वा एनमेतल्लघूयतीव यदेनं समन्तम् पर्येति तस्मा एवैतन्निह्नुतेऽहिंसायै

९.१.२.[७]

यद्वेव विपल्ययते । एतद्वा एनमेतदन्ववैति तत एवैतदात्मानमपोद्धरते जीवात्वै तथो हानेनात्मना सर्वमायुरेति

९.१.२.[८]

त्रिर्विपल्ययते । त्रिर्हि कृत्वः पर्येति तद्यावत्कृत्वः पर्येति तावत्कृत्वो विपल्ययते



९.१.२.[९]

अथ तमश्मानमुदहरणेऽवधाय । एतां दिशं हरन्त्येषा वै नैर्ऋती दिङ्नैर्ऋत्यामेव तद्दिशि शुचं दधाति

९.१.२.[१०]

एतद्वा एनं देवाः । शतरुद्रियेण चाद्भिश्च शमयित्वाथास्यैतेन शुचम् पाप्मानमपाघ्नंस्तथैवैनमयमेतचतरुद्रियेण चाद्भिश्च शमयित्वाथास्यैतेन शुचं पाप्मानमपहन्ति

९.१.२.[११]

बाह्येनाग्निं हरति । इमे वै लोका एषोऽग्निरेभ्यस्तल्लोकेभ्यो बहिर्धा शुचं दधाति बहिर्वेदीयं वै वेदिरस्यै तद्बहिर्धा शुचं दधाति

९.१.२.[१२]

स वेदेर्दक्षिणायां श्रोणौ । प्राङ्तिष्ठन्दक्षिणा निरस्यति यं द्विष्मस्तं ते शुगृचत्विति यमेव द्वेष्टि तमस्य शुगृचत्यमुं ते शुगृचत्विति ह ब्रूयाद्यं द्विष्यात्ततो ह तस्मिन्न पुनरस्त्यपि तन्नाद्रियेत स्वयंनिर्दिष्टो ह्येव स यमेवंविद्द्वेष्टि यदि न भिद्येत भित्तवै ब्रूयाद्यदा ह्येव स भिद्यतेऽथ तं शुगृचति यं द्वेष्ट्यप्रतीक्षमायन्त्यप्रतीक्षमेव तच्छुचं पाप्मानं जहति



९.१.२.[१३]

प्रत्येत्येष्टका धेनूः कुरुते । एतद्वा एनं देवाः शतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमपहत्य प्रत्येत्येष्टका धेनूरकुर्वत तथैवैनमयमेतचतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमपहत्य प्रत्येत्येष्टका धेनूः कुरुते

९.१.२.[१४]

आसीनः कुर्वीतेत्यु हैक आहुः । आसीनो वै धेनुं दोग्धीति तिष्ठंस्त्वेव कुर्वीतेमे वै लोका एषोऽग्निस्तिष्ठन्तीव वा इमे लोका अथो तिष्ठन्वै वीर्यवत्तरः

९.१.२.[१५]

उदङ्ङ्ङिष्ठन् । पुरस्ताद्वा एषा प्रतीची यजमानं धेनुरुपतिष्ठते दक्षिणतो वै प्रतीचीं धेनुं तिष्ठन्तीसुपसीदन्ति



९.१.२.[१६]

स यत्राभ्याप्नोति । तदभिमृश्यैतद्यजुर्जपतीमा मे अग्न इष्टका धेनवः सन्त्वित्यग्निर्हैतासां धेनुकरणस्येष्टे तस्मादेतावतीनां देवतानामग्निमेवामन्त्रयत एका च दश चान्तश्च परार्धश्चेत्येष हावरार्ध्यो भूमा यदेका च दश चाथ हैष परार्ध्यो भूमा यदन्तश्च परार्धश्चावरार्धतश्चैवैना एतत्परार्धतश्च परिगृह्य देवा धेनूरकुर्वत तथैवैना अयमेतदवरार्धतश्चैव परार्धतश्च परिगृह्य धेनूः कुरुते तस्मादपि नाद्रियेत बह्वीः कर्तुममुत्र वा एष एता ब्रह्मणा यजुषा बह्वीः कुरुतेऽथ यत्संतनोति कामानेव तत्संतनोति

९.१.२.[१७]

यद्वेवेष्टका धेनूः कुरुते । वाग्वा अयमग्निर्वाचा हि चितः स यदाहैका च दश चान्तश्च परार्धश्चेति वाग्वा एका वाग्दश वागन्तो वाक्परार्धो वाचमेव तद्देवा धेनुमकुर्वत तथैवैतद्यजमानो वाचमेव धेनुं कुरुतेऽथ यत्संतनोति वाचमेव तत्संतनोत्येता मे अग्न इष्टका धेनवः सन्त्वमुत्रामुष्मिंलोक इत्येतद्वा एना अस्मिंलोके धेनूः कुरुतेऽथैना एतदमुष्मिंलोके धेनूः कुरुते तथो हैनमेता उभयोर्लोकयोर्भुञ्जन्त्यस्मिंश्चामुष्मिंश्च

९.१.२.[१८]



ऋतव स्थेति । ऋतवो ह्येता ऋतावृध इति सत्यवृध इत्येतद्दतुष्वा स्थ ऋतावृध इत्यहोरात्राणि वा इष्टका ऋतुषु वा अहोरात्राणि तिष्ठन्ति घृतश्चुतो मधुश्चुत इति तदेना घृतश्चुतश्च मधुश्चुतश्च कुरुते

९.१.२.[१९]

विराजो नामेति । एतद्वै देवा एता इष्टका नामभिरुपाह्वयन्ति यथायथैना एतदाचक्षते ता एनानभ्युपावर्तन्ताथ लोकम्पृणा एव पराच्यस्तस्थुरहितनाम्न्यो निमेमिहत्यस्ता विराजो नामाकुर्वत ता एनानभ्युपावर्तन्त तस्माद्दशदशेष्टका उपधाय लोकम्पृणयाभिमन्त्रयते तदेना विरावः कुरुते दशाक्षरा हि विराट् कामदुधा अक्षीयमाणा इति तदेनाः कामदुधा अक्षीयमाणाः कुरुते

९.१.२.[२०]

अथैनं विकर्षति । मण्डूकेनावकया वेतसशाखयैतद्वा एनं देवाः शतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमपहत्याथैनमेतद्भूय एवाशमयंस्तथैवैनमयमेतचतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमहत्याथैनमेतद्भूय एव शमयति सर्वतो विकर्षति सर्वत एवैनमेतचमयति



९.१.२.[२१]

यद्वेवैनं विकर्षति । एतद्वै यत्रैतं प्राणा ऋषयोऽग्रेऽग्निं समस्कुर्वंस्तमद्भिरवोक्षंस्ता आपः समस्कन्दंस्ते मण्डूका अभवन्

९.१.२.[२२]

ताः प्रजापतिमब्रुवन् । यद्वै नः कमभूदवाक्तदगादिति सोऽब्रवीदेष व एतस्य वनस्पतिर्वेत्त्विति वेत्तु संवेत्तु सोऽह वै तं वेतस इत्याचक्षते परोऽक्षं परो ऽक्षकामा हि देवा अथ यदब्रुवन्नवाङ्कः कमगादिति ता अवाक्का अभवन्नवाक्का ह वै ता अवका इत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्ता हैतास्त्रय्य आपो यन्मण्डूकोऽवका वेतसशाखैताभिरेवैनमेतत्त्रयीभिरद्भिः शमयति

९.१.२.[२३]

यद्वेवैनं विकर्षति । जायत एष एतद्यच्चीयते स एष सर्वस्मा अन्नाय जायते सर्वम्वेतदन्नं यन्मण्डूकोऽवका वेतसशाखा पशवश्च ह्येता आपश्च वनस्पतयश्च सर्वेणै वैनमेतदन्नेन प्रीणाति

९.१.२.[२४]

मण्डूकेन पशूनाम् । तस्मान्मण्डूकः पशूनामनुपजीवनीयतमो यातयामा हि सो ऽवकाभिरपां तस्मादवका अपामनुपजीवनीयतमा यातयाम्न्यो हि ता वेतसेन वनस्पतीनां तस्माद्वेतसो वनस्पतीनामनुपजीवनीयतमो यातयामा हि सः

९.१.२.[२५]

तानि वंशे प्रबध्य । दक्षिणार्धेनाग्नेरन्तरेण परिश्रितः प्रागग्रे विकर्षति समुद्रस्य त्वावकयाग्ने परिव्ययामसि पावको अस्मभ्यं शिवो भवेति समुद्रियाभिस्त्वाद्भिः शमयाम इत्येतत्

९.१.२.[२६]

अथ जघनार्धेनोदक् । हिमस्य त्वा जरायुणाग्ने परिव्ययामसि पावको अस्मभ्यं शिवो भवेति यद्वै शीतस्य प्रशीतं तद्धिमस्य जरायु शीतस्य त्वा प्रशीतेन शमयाम इत्येतत्

९.१.२.[२७]

अथोत्तरार्धेन प्राक् । उप ज्मन्नुप वेतसेऽवतर नदीष्वा अग्ने पित्तमपामसि मण्डूकि ताभिरागहि सेमं नो यज्ञं पावकवर्णं शिवं कृधीति यथैव यजुस्तथा बन्धुः



९.१.२.[२८]

अथ पूर्वार्धेन दक्षिणा । अपामिदं न्ययनं समुद्रस्य निवेशनमन्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवो भवेति यथैव यजुस्तथा बन्धुरित्यग्रे विकर्षत्यथेति अथेत्यथेति तद्दक्षिणावृत्तद्धि देवत्रा

९.१.२.[२९]

आत्मानमग्रे विकर्षति । आत्मा ह्येवाग्रे सम्भवतः सम्भवत्यथ दक्षिणम्

पक्षमथ पुचमथोत्तरं तद्दक्षिणावृत्तद्धि देवत्रा

९.१.२.[३०]

अभ्यात्मं पक्षपुचानि विकर्षति । अभ्यात्ममेव तचान्तिं धत्ते पुरस्तादर्वाक्परस्तादेव तदर्वाचीं शान्तिं धत्तेऽग्ने पावक रोचिषेति दक्षिणम् पक्षं स नः पावक दीदिव इति पुचं पावकया यश्चितयन्त्या कृपेत्युत्तरम् पावकं पावकमिति यद्वै शिवं शान्तं तत्पावकं शमयत्येवैनमेतत्



९.१.२.[३१]

सप्तभिर्विकर्षति । सप्तचितिकोऽग्निः सप्तऽर्तवः संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्विकर्षति तं वंशमुत्करेन्यस्य

९.१.२.[३२]

अथैनं सामभिः परिगायति । अत्रैष सर्वोऽग्निः संस्कृतस्तस्मिन्देवा एतदमृतं रूपमुत्तममदधुस्तथैवास्मिन्नयमेतदमृतं रूपमुत्तमं दधाति सामानि भवन्ति प्राणा वै सामान्यमृतमु वै प्राणा अमृतमेवास्मिन्नेतद्रूपमुत्तमं दधाति सर्वतः परिगायति सर्वत एवास्मिन्नेतदमृतं रूपमुत्तमं दधाति

९.१.२.[३३]

यद्वेवैनं सामभिः परिगायति । एतद्वै देवा
अकामयन्तानस्थिकमिमममृतमात्मानं कुर्वीमहीति तेऽब्रुवन्नुप तज्जानीत
यथेममात्मानमनस्थिकममृतं करवामहा इति तेऽब्रुवंश्चेतयध्वमिति
चितिमिचतेति वाव तदब्रुवंस्तदिचत यथेममात्मानमनस्थिकममृतं
करवामहा इति

९.१.२.[३४]



ते चेतयमानाः । एतानि सामान्यपश्यंस्तैरेनम्
पर्यगायंस्तैरेतमात्मानमनस्थिकममृतमकुर्वत तथैवैतद्यजमानो
यदेनं सामभिः परिगायत्येतमेवैतदात्मानमनस्थिकममृतं कुरुते सर्वतः
परिगायति सर्वत एवैतदेतमात्मानमनस्थिकममृतं कुरुते तिष्ठन्गायति
तिष्ठन्तीव वा इमे लोका अथो तिष्ठन्वै वीर्यवत्तरो हिङ्कृत्य गायति तत्र हि सर्वं
कृत्स्नं साम भवति

९.१.२.[३५]

गायत्रं पुरस्ताद्गायति । अग्निर्वै गायत्रमग्निमेवास्यैतच्चिरः करोत्यथो शिर
एवास्यैतदनस्थिकममृतं करोति

९.१.२.[३६]

रथन्तरं दक्षिणे पक्षे । इयं वै रथन्तरमियमु वा एषां लोकानां रसतमो ऽस्यां हीमे सर्वे रसा रसंतमं ह वै तद्रथन्तरमित्याचक्षते परोऽक्षम् परोऽक्षकामा हि देवा इमामेवास्यैतद्दक्षिणं पक्षं करोत्यथो दक्षिणमेवास्यैतत्पक्षमनस्थिकममृतं करोति

९.१.२.[३७]



बृहदुत्तरे पक्षे । द्यौर्वै बृहद्द्यौर्हि बर्हिष्ठा दिवमेवास्यैतदुत्तरम् पक्षं करोत्यथो उत्तरमेवास्यैतत्पक्षमनस्थिकममृतं करोति

९.१.२.[३८]

वामदेव्यमात्मन् । प्राणो वै वामदेव्यं वायुरु प्राणः सर्वेषामु हैष देवानामात्मा यद्वायुर्वायुमेवास्यैतदात्मानं करोत्यथो आत्मानमेवास्यैतदनस्थिकममृतं करोति

९.१.२.[३९]

यज्ञायज्ञियं पुचम् । चन्द्रमा वै यज्ञायज्ञियं यो हि कश्च यज्ञः संतिष्ठत एतमेव तस्याहुतीनां रसोऽप्येति तद्यदेतं यज्ञोयज्ञोऽप्येति तस्माच्चन्द्रमा यज्ञायज्ञियं चन्द्रमसमेवास्यैतत्पुचं करोत्यथो पुचमेवास्यैतदनस्थिकममृतं करोति

९.१.२.[४०]

अथ प्रजापतेर्हृदयं गायति । असौ वा आदित्यो हृदयं श्लक्ष्ण एष श्लक्ष्णं हृदयं परिमण्डल एष परिमण्डलं हृदयमात्मन्गायत्यात्मन्हि हृदयं निकक्षे निकक्षे हि हृदयं दक्षिणे निकक्षेऽतो हि हृदयं नेदीय आदित्यमेवास्यैतद्धृदयं करोत्यथो हृदयमेवास्यैतदनस्थिकममृतं करोति



९.१.२.[४१]

प्रजासु च प्रजापतौ च गायति । तद्यत्प्रजासु गायति तत्प्रजासु हृदयं दधात्यथ यत्प्रजापतौ गायति तदग्नौ हृदयं दधाति

९.१.२.[४२]

यद्वेव प्रजासु च प्रजापतौ च गायति । अयं वा अग्निः प्रजाश्च प्रजापतिश्च तद्यदग्नौ गायति तदेव प्रजासु च प्रजापतौ च हृदयं दधाति

९.१.२.[४३]

ता हैता अमृतेष्टकाः । ताउत्तमा उपदधात्यमृतं तदस्य सर्वस्योत्तमं दधाति तस्मादस्य सर्वस्यामृतमुत्तमं नान्योऽध्वर्योर्गायेदिष्टका वा एता विचितो ह स्याद्यदन्योऽध्वर्योर्गायेत्



९.२.१.[१]

उपवसथीयेऽहन्प्रातरुदित आदित्ये । वाचं विसृजते वाचं विसृज्य पञ्चगृहीतमाज्यं गृह्णीते तत्र पञ्च हिरण्यशकलान्प्रास्यत्यथैतत्त्रयं समासिक्तं भवति दधि मधु घृतं पात्र्यां वा स्थाल्यां वोरुबिल्यां तदुपरिष्टाद्दर्भमुष्टिं निदधाति

९.२.१.[२]

अथाग्निमारोहति । नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिष इत्यत्रैष सर्वोऽग्निः संस्कृतः स एषोऽत्र तस्मा अलं यद्धिंस्याद्यं जिहिंसिषेद्यमु वा एष हिनस्ति हरसा वैनं शोचिषा वार्चिषा वा हिनस्ति तथो हैनमेष एतैर्न हिनस्त्यन्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवो भवेति यथैव यजुस्तथा बन्धुः

९.२.१.[३]

आरुह्याग्निं स्वयमातृणां व्याघारयति । आज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः

९.२.१.[४]

स्वयमातृणां व्याघारयति । प्राणः स्वयमातृणा प्राणे तदन्नं दधाति



९.२.१.[५]

यद्वेव स्वयमातृणां व्याघारयति । उत्तरवेदिर्हैषाग्नेरथ याममूं पूर्वां व्याघारयत्यध्वरस्य साथ हैषाग्नेस्तामेतद्व्याघारयति

९.२.१.[६]

पश्यंस्तत्र हिरण्यं व्याघारयति । प्रत्यक्षं वै तद्यत्पश्यति प्रत्यक्षं सोत्तरवेदिः प्रास्ता एवेह भवन्ति परोऽक्षं वै तद्यत्प्रास्ताः परो ऽक्षमियमुत्तरवेदिः

९.२.१.[७]

स्वाहाकारेण तां व्याघारयति । प्रत्यक्षं वै तद्यत्स्वाहाकारः प्रत्यक्षं सोत्तरवेदिर्वेद्कारेणेमां परोऽक्षं वै तद्यद्वेद्कारः परो ऽक्षमियमुत्तरवेदिराज्येनाज्येन ह्युत्तरवेदिं व्याघारयन्ति पञ्चगृहीतेन पञ्चगृहीतेन ह्युत्तरवेदिं व्याघारयन्ति व्यतिहारं व्यतिहारं ह्युत्तरवेदिं व्याघारयन्ति

९.२.१.[८]



नृषदे वेडिति । प्राणो वै नृषन्मनुष्या नरस्तद्योऽयं मनुष्येषु प्राणो ऽग्निस्तमेतत्प्रीणात्यप्सुषदे वेडिति योऽप्स्वग्निस्तमेतत्प्रीणाति बर्हिषदे वेडिति य ओषधिष्वग्निस्तमेतत्प्रीणाति वनसदे वेडिति यो वनस्पतिष्वग्निस्तमेतत्प्रीणाति स्वर्विदे वेडित्ययमग्निः स्वर्विदिममेवैतदग्निं प्रीणाति

९.२.१.[९]

यद्वेवाह । नृषदे वेडप्सुषदे वेडित्यस्यैवैतान्यग्नेर्नामानि तान्येतत्प्रीणाति तानि हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यतेऽथो एतानेवैतदग्नीनस्मिन्नग्नौ नामग्राहं दधाति

९.२.१.[१०]

पञ्चैता आहुतीर्जुहोति । पञ्चचितिकोऽग्निः पञ्चऽर्तव संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्राणाति

९.२.१.[११]

अथैनं समुक्षति । दध्ना मधुना घृतेन जायत एष एतद्यच्चीयते स एष सर्वस्मा अन्नाय जायते सर्वम्वेतदन्नं यद्दधि मधु गृतं सर्वेणैवैनमेतदन्नेन प्रीणाति सर्वतः समुक्षति सर्वत एवैनमेतत्सर्वेणान्नेन प्रीणाति



९.२.१.[१२]

यद्वेवैनं समुक्षति । अत्रैष सर्वोऽग्निः संस्कृतस्तस्मिन्देवा एतद्रूपमुत्तममदधुस्तथैवास्मिन्नयमेतद्रूपमुत्तमं दधात्यन्नं वै रूपमेतदु परममन्नं यद्दधि मधु गृतं तद्यदेव परमं रूपं तदस्मिन्नेतदुत्तमं दधाति सर्वतः समुक्षत्यपि बाह्येन परिश्रितः सर्वत एवास्मिन्नेतद्रूपमुत्तमं दधाति दर्भैस्ते हि शुद्धा मेध्या अग्रैरग्रं हि देवानाम्

९.२.१.[१३]

यद्वेवैनं समुक्षति । एतद्वै यत्रैतं प्राणा ऋषयोऽग्रेऽग्निं समस्कुर्वंस्तदस्मिन्नदोऽमुं पुरस्ताद्भागमकुर्वताद: सजूरब्दीयमथास्मिन्नेतं संचित उपरिष्टाद्भागमकुर्वत तद्यत्समुक्षति य एवास्मिंस्ते प्राणा ऋषय: सचित उपरिष्टाद्भागमकुर्वत तानेवैतत्प्रीणाति दध्ना मधुना घृतेन तस्योक्तो बन्धु:

९.२.१.[१४]



ये देवा देवानाम् । यज्ञिया यज्ञियानामिति देवा ह्येते देवानां यज्ञिया उ यज्ञियानां संवत्सरीणमुप भागमासत इति संवत्सरीणं ह्येत एतं भागमुपासतेऽहुतादो हविषो यज्ञे अस्मिन्नित्यहुतादो हि प्राणा: स्वयं पिबन्तु मधुनो घृतस्येति स्वयमस्य पिबन्तु मधुनश्च घृतस्य चेत्येतत्

९.२.१.[१५]

ये देवा देवेषु । अधि देवत्वमायन्निति देवा ह्येते देवेषधि देवत्वमायन्ये ब्रह्मण: पुरएतारो अस्येत्ययमग्निर्ब्रह्म तस्यैते पुरएतारो येभ्यो न ऋते पवते धाम किं चनेति न हि प्राणेभ्य ऋते पवते धाम किं चन न ते दिवो न पृथिव्या अधि स्नुष्विति नैव ते दिवि न पृथिव्यां यदेव प्राणभृत्तस्मिंस्त इत्येतत्

९.२.१.[१६]

द्वाभ्यां समुक्षति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समुक्षति

९.२.१.[१७]

अथ प्रत्यवरोहति । प्राणदा अपानदा इति सर्वे हैते प्राणा योऽयमग्निश्चितः स यदेतामत्रात्मनः परिदां न वदेतात्र हैवास्यैष प्राणान्वृञ्जीताथ यदेतामत्रात्मनः परिदां वदते तथो हास्यैष प्राणान्न वृङ्क्ते प्राणदा अपानदा व्यानदा वर्चोदा वरिवोदा इत्येतद्दा मेऽसीत्येवैतदाहान्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवो भवेति यथैव यजुस्तथा बन्धुः



९.२.१.[१८]
प्रत्येत्य प्रवर्ग्योपसद्भ्यां प्रचरति । प्रवर्ग्योपसद्भ्यां प्रचर्याथास्मै व्रतं वार्धव्रतं वा प्रयचत्यथ प्रवर्ग्योपसद्भ्यामथ प्रवर्ग्यमुत्सादयत्याप्त्वा तं कामं यस्मै कामायैनं प्रवृणक्ति

९.२.१.[१९]

तं वै परिष्यन्द उत्सादयेत् । तप्तो वा एष शुशुचानो भवति तं यदस्यामुत्सादयेदिमामस्य शुगृचेद्यदप्सूत्सादयेदपोऽस्य शुगृचेदथ यत्परिष्यन्द उत्सादयति तथो ह नैवापो हिनस्ति नेमां यदहाप्सु न प्रास्यति तेनापो न हिनस्त्यथ यत्समन्तमापः परियन्ति शान्तिर्वा आपस्तेनो इमां न हिनस्ति तस्मात्परिष्यन्द उत्सादयेत्

९.२.१.[२०]

अग्नौ त्वेवोत्सादयेत् । इमे वै लोका एषोऽग्निरापः परिश्रितस्तं यदग्ना उत्सादयति तदेवैनं परिष्यन्द उत्सादयति



९.२.१.[२१]

यद्वेवाग्ना उत्सादयति । इमे वै लोका एषोऽग्निरग्निर्वायुरादित्यस्तदेते प्रवर्ग्याः स यदन्यत्राग्नेरुत्सादयेदेतांस्तद्देवान्बहिर्धैभ्यो लोकेभ्यो दध्यादथ यदग्ना उत्सादयत्येतानेवैतद्देवानेषु लोकेषु दधाति

९.२.१.[२२]

यद्वेवाग्ना उत्सादयति । शिर एतद्यज्ञस्य यत्प्रवर्ग्य आत्मायमग्निश्चितः स यदन्यत्राग्नेरुत्सादयेद्बहिर्धास्माच्छिरो दध्यादथ यदग्ना उत्सादयत्यात्मानमेवास्यैतत्संस्कृत्य शिरः प्रतिदधाति

९.२.१.[२३]

स्वयमातृणया संस्पृष्टं प्रथमं प्रवर्ग्यमुत्सादयति । प्राणः स्वयमातृणा शिरः प्रवर्ग्य आत्मायमग्निश्चितः शिरश्च तदात्मानं च प्राणेन संतनोति संदधात्युत्साद्य प्रवर्ग्यं यथा तस्योत्सादनम्



९.२.२.[१]

प्रत्येत्याग्निं प्रहरिष्यन् । आहुतीश्च जुहोति समिधश्चादधात्येतद्वा एनं देवा एष्यन्तं पुरस्तादन्नेनाप्रीणन्नाहुतिभिश्च समिद्भिश्च तथैवैनमयमेतदेष्यन्तं पुरस्तादन्नेन प्रीणात्याहुतिभिश्च समिद्भिश्च स वै पञ्चगृहीतं गृह्णीते तस्योक्तो बन्धुः

९.२.२.[२]

अथ षोडशगृहीतं गृह्णीते । षोडशकलः प्रजापतिः प्रजापतिरग्निरात्मसम्मितेनैवैनमेतदन्नेन प्रीणाति यदु वा आत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न

तदवति समान्यां स्रुचि गृह्णीते समानो हि स यमेतत्प्रीणाति वैश्वकर्मणाभ्यां जुहोति विश्वकर्मायमग्निस्तमेवैतत्प्रीणाति तिस्र आहुतीर्जुहोति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति

९.२.२.[३]

अथ समिध आदधाति । यथा तर्पयित्वा परिवेविष्यात्ताद्दक्तदौदुम्बर्यो भवन्त्यूर्ग्वै रस उदुम्बर ऊर्जैवैनमेतद्रसेन प्रीणात्यार्द्रा भवन्त्येतद्वै वनस्पतीनामनार्तं जीवं यदार्द्रं तद्यदेव वनस्पतीनामनार्तं जीवं तेनैनमेतत्प्रीणाति घृते न्युत्ता भवन्त्याग्नेयं वै घृतं स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति सर्वां रात्रिं वसन्ति तत्र हि ता रसेन सम्पद्यन्ते तिस्रः समिध आदधाति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति



९.२.२.[४]

यद्वेवैता आहुतीर्जुहोति । एतद्वा एनं देवा एष्यन्त पुरस्तादन्नेन समस्कुर्वन्नेताभिराहुतिभिस्तथैवैनमयमेतदेष्यन्तं पुरस्तादन्नेन संस्करोत्येताभिराहुतिभिः

९.२.२.[५]

स वै पञ्चगृहीतं गृह्णीते । पञ्चधाविहितो वा अयं शीर्षन्प्राणो मनो वाक्
प्राणश्चक्षुः श्रोत्रमेतमेवास्मिन्नेतत्पञ्चधाविहितं शीर्षन्प्राणं
दधात्यग्निस्तिग्मेन शोचिषेति तिग्मवत्या शिर एवास्यैतया संश्यति तिग्मतायै

९.२.२.[६]

अथ षोडशगृहीतं गृह्णीते । अष्टौ प्राणा अष्टावङ्गान्येतामभिसम्पदं समान्यां
स्रुचि गृह्णीते समाने ह्येवात्मन्नङ्गानि च प्राणाश्च भवन्ति नाना
जुहोत्यङ्गेभ्यश्च
तत्प्राणेभ्यश्च विधृतिं करोति वैश्वकर्मणाभ्यां जुहोति
विश्वकर्मायमग्निस्तमेवैतत्संस्करोति तिस्र आहुतीर्जुहोति
त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन संस्करोति
सप्तदशभिर्ऋग्भिः सप्तदशः प्रजापतिः प्रजापतिरग्निर्यावानाग्निर्यावत्यस्य मात्रा
तावतैवैनमेतत्संस्करोत्येकविंशतिगृहीतेन द्वादश मासाः पञ्चऽर्तवस्त्रय इमे
लोका असावादित्य एकविंश एतामभिसम्पदम्

९.२.२.[७]

यद्वेवैताः समिध आदधाति । एतद्वा एनं देवाः सर्वं कृत्स्नं
संस्कृत्याथैनमेतेनान्नेनाप्रीणन्नेताभिः समिद्भिस्तथैवैनमयमेतत्सर्वं
कृत्स्नं संस्कृत्याथैनमेतेनान्नेन प्रीणात्येताभिः समिद्भिरौदुम्बर्यो
भवन्त्यार्द्रा घृते न्युत्ता सर्वां रात्रिं वसन्ति तस्योक्तो बन्धुरुदेनमुत्तरां

नयेन्द्रेमं प्रतरां नय यस्य कुर्मो गृहे हविरिति यथा यजुस्तथा
बन्धुस्तिस्रः समिध आदधाति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा
तावतैवैनमेतदन्नेन प्रीणाति तिस आहुतीर्जुहोति तत्षड्वस्योक्तो बन्धुः

९.२.३.[१]

अथातः सम्प्रेष्यति । उद्यचेध्ममुपयचोपयमनीरग्नये
प्रह्रियमाणायानुब्रूह्यग्नीदेकस्फ्ययानूदेहि ब्रह्मन्नप्रतिरथं जपेति



९.२.३.[२]

एतद्वै देवानुपप्रैष्यतः । एतं यज्ञं तंस्यमानान्दक्षिणतोऽसुरा रक्षांसि
नाष्ट्रा अजिघांसन्न यक्ष्यध्वे न यज्ञं तंस्यध्व इति

९.२.३.[३]

ते देवा इन्द्रमब्रुवन् । त्वं वै नः श्रेष्ठो बलिष्ठो वीर्यवत्तमोऽसि त्वमिमानि
रक्षांसि प्रतियतस्वेति तस्य वै मे ब्रह्म द्वितीयमस्त्विति तथेति तस्मै वै
बृहस्पतिं द्वितीयमकुर्वन्ब्रह्म वै बृहस्पतिस्त इन्द्रेण चैव बृहस्पतिना च
दक्षिणतोऽसुरान्रक्षांसि नाष्ट्रा अपहत्याभये नाष्ट्र एतं यज्ञमतन्वत

९.२.३.[४]

तद्वा एतत्क्रियते । यद्देवा अकुर्वन्निदं नु तानि रक्षांसि देवैरेवापहतानि यत्त्वेतत्करोति यद्देवा अकुर्वंस्तत्करवाणीत्यथो इन्द्रेण चैवैतद्बृहस्पतिना च दक्षिणतो सुरान्रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्र एतं यज्ञं तनुते

९.२.३.[५]

स यः स इन्द्रः । एष सोऽप्रतिरथोऽथ यः स बृहस्पतिरेष स ब्रह्मा तद्यद्ब्रह्माप्रतिरथं जपतीन्द्रेण चैवैतद्बृहस्पतिना च दक्षिणतो ऽसुरान्रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्र एतं यज्ञं तनुते तस्माद्ब्रह्माप्रतिरथं जपति



९.२.३.[६]

आशुः शिशानो वृषभो न भीम इति । ऐन्द्र्योऽभिरूपा द्वादश भवन्ति द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैतद्दक्षिणतो ऽसुरान्रक्षांसि नाष्ट्रा अपहन्ति त्रिष्टुब्भिर्वज्रो वै त्रिष्टुब्वज्रेणैवैतद्दक्षिणतो ऽसुरान्रक्षांसि नाष्ट्रा अपहन्ति ता द्वाविंशतिर्गायत्र्यः सम्पद्यन्ते तदाग्नेय्यो भवन्त्यग्निकर्म हि

९.२.३.[७]

अथैनमुद्यचति ।उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिरिति तस्योक्तो बन्धुः

९.२.३.[८]

अथाभिप्रयन्ति ।पञ्च दिशो दैवोर्यज्ञमवन्तु देवीरिति देवाश्चासुराश्चोभये प्राजापत्या दिक्ष्वस्पर्धन्त ते देवा असुराणां दिशो वृञ्जत तथैवैतद्यजमानो द्विषतो भ्रातृव्यस्य दिशो वृङ्क्ते दैवीरिति तदेना दैवीः कुरुते यज्ञमवन्तु देवारिति यज्ञमिमवन्तु देवीरित्येतदपामतिं दुर्मतिं बाधमाना इत्यशनाया वा अमतिरशनायामपबाधमाना इत्येतद्रायस्पोषे यज्ञपतिमाभजन्तीरिति रय्यां च पोसे च यज्ञपतिमाभजन्तीरित्येतद्रायस्पोषे अधि यज्ञो अस्थादिति रय्यां च पोषे चाधि यज्ञोऽस्थादित्येतत्



९.२.३.[९]

समिद्धे अग्नावधि मामहान इति ।यजमानो वै मामहान उक्थपत्र इत्युक्थानि ह्येतस्य पत्राणीड्य इति यज्ञियं इत्येतद्गृभीत इति धारित इत्येतत्तप्तं घर्मम् परिगृह्यायजन्तेति तप्तं ह्येतं घर्मं परिगृह्यायजन्तोर्जा यद्यज्ञमयजन्त देवा इत्यूर्जा ह्येतं यज्ञमयजन्त देवाः

९.२.३.[१०]

दैव्याय धर्त्रे जोष्ट्र इति । दैवो ह्येष धर्ता जोषयितृतमो देवश्रीः श्रीमनाः शतपया इति देवश्रीर्ह्येष श्रीमनाः शतपयाः परिगृह्य देवा यज्ञमायन्निति परिगृह्य ह्येतं देवा यज्ञमायन्देवा देवेभ्यो अध्वर्यन्तो अस्थुरित्यध्वरो वै यज्ञो देवा देवेभ्यो यज्ञियन्तोऽथुरित्येतत्

९.२.३.[११]

वीतं हविः शमितं शमिता यजध्या इति । इष्टं स्विष्टमित्येतत्तुरीयो यज्ञो यत्र हव्यमेतीत्यध्वर्युः पुरस्ताद्यजूंषि जपति होता पश्चादृचोऽन्वाह ब्रह्मा दक्षिणतोऽप्रतिरथं जपत्येष एव तुरीयो यज्ञस्ततो वाका आशिषो नो जुषन्तामिति ततो नो वाकाश्चाशिषश्च जुषन्तामित्येतत्



९.२.३.[१२]

सूर्यरश्मिर्हरिकेशः पुरस्तात् । सविता ज्योतिरुद्रियां अजस्रमित्यसौ वा आदित्य एषो ऽग्निः स एष सूर्यरश्मिर्हरिकेशः पुरस्तात्सवितैतज्ज्योतिरुद्यचत्यजस्रं तस्य पूषा प्रसवे याति विद्वानिति पशवो वै पूषा त एतस्य प्रसवे प्रेरते सम्पश्यन्विश्वा भुवनानि गोपा इत्येष वा इदं सर्वं सम्पश्यत्येष उ एवास्य सर्वस्य भुवनस्य गोप्ताः

९.२.३.[१३]

तद्या अमुष्मादादित्यादर्वाज्यः पञ्च दिशः । ता एतद्देवा असुराणामवृञ्जताथो ता एवैतत्समारोहंस्ता उ एवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता एवैतत्समारोहत्यथो एतद्वा एताभिर्देवा आतः सम्प्राप्नुवंस्तथैवाभिरयमेतदातः सम्प्राप्नोति

९.२.३.[१४]



अथाश्मानं पृश्निमुपदधाति । असौ वा आदित्योऽश्मा पृश्निरमुमेवैतदादित्यमुपदधाति पृश्निर्भवति रश्मिभिर्हि मण्डलं पृश्नि तमन्तरेणाहवनीयं च गार्हपत्यं चोपदधात्ययं वै लोको गार्हपत्यो द्यौराहवनीय एतं तदिमौ लोकावन्तरेण दधाति तस्मादेष इमौ लोकावन्तरेण तपति

९.२.३.[१५]

आग्नीध्रवेलायाम् । अन्तरिक्षं वा आग्नीध्रमेतं तदन्तरिक्षे दधाति तस्मादेषो ऽन्तरिक्षायतनो व्यध्वे व्यध्वे ह्येष इतः

९.२.३.[१६]

स एष प्राणः । प्राणमेवैतदात्मन्धत्ते तदेतदायुरायुरेवैतदात्मन्धत्ते तदेतदन्नमायुर्ह्येतदन्नमु वा आयुरश्मा भवति स्थिरो वा अश्मा स्थिरं तदायुः कुरुते पृश्निर्भवति पृश्नीव ह्यन्नम्

९.२.३.[१७]

स उपदधाति । विमान एष दिवो मध्य आस्त इति विमानो ह्येष दिवो मध्य आस्त आपप्रिवान्रोदसी अन्तरिक्षमित्युद्यन्वा एष इमांलोकानापूरयति स विश्वाचीरभिचष्टे घृताचीरिति स्रुचश्चैतद्वेदीश्चाहान्तरा पूर्वमपरं च केतुमित्यन्तरेमं च लोकममुं चेत्येतदथो यच्चेदमेतर्हि चीयते यच्चादः पूर्वमचीयतेति

९.२.३.[१८]

उक्षा समुद्रो अरुणः सुपर्ण इति । उक्षा ह्येष समुद्रोऽरुणः सुपर्णः पूर्वस्य योनिं पितुराविवेशेति पूर्वस्य ह्येष एतं योनिं पितुराविशति मध्ये दिवो निहितः पृश्निरश्मेति मध्ये ह्येष दिवो निहितः पृश्निरश्मा विचक्रमे रजसस्पात्यन्ताविति विक्रममाणो वा एष एषां लोकानामन्तान्याति

९.२.३.[१९]

द्वाभ्यामुपदधाति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदुपदधाति त्रिष्टुब्भ्यां त्रैष्टुभो ह्येष न सादयत्यसन्नोय् ह्येष न सूददोहसाधिवदति प्राणो वै सूददोहाः प्राण एष किं प्राणे प्राणं दध्यामिति तं निधाय यथा न नश्येत्

९.२.३.[२०]

अथोपायन्ति । इन्द्रं विश्वा अवीवृधन्निति तस्योक्तो बन्धुर्देवहूर्यज्ञ आ च वक्षत्सुम्नहूर्यज्ञ आ च वक्षदिति देवहूश्चैव यज्ञः सुम्नहूश्च यक्षदग्निर्देवो देवां आ च वक्षदिति यक्षच्चैवाग्निर्देवो देवाना च वहत्वित्येतत्



९.२.३.[२१]

वाजस्य मा प्रसवः । उद्ग्राभेणोदग्रभीत् अधा सपत्नानिन्द्रो मे निग्राभेणाधरा अकरिति यथैव यजुस्तथा बन्धुः

९.२.३.[२२]

उद्ग्राभं च निग्राभं च । ब्रह्म देवा अवीवृधनधा सपत्नानिन्द्राग्नी मे

विषूचीनान्व्यस्यतामिति यथैव यजुस्तथा बन्धुः

९.२.३.[२३]

तद्या अमुष्मादादित्यादूर्ध्वाश्चतस्रो दिशः । ता एतद्देवा असुराणामवृञ्जताथो ता एवैतत्समारोहंस्ता उ एवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता एवैतत्समारोहत्यथो एतद्वा एताभिर्देवा आतः सम्प्राप्नुवंस्तथैवाभिरयमेतदातः सम्प्राप्नोति



९.२.३.[२४]

अथाग्निमारोहन्ति । क्रमध्वमग्निना नाकमिति स्वर्गो वै लोको नाकः क्रमध्वमनेनाग्निनैतं स्वर्गं लोकमित्येतदुख्यं हस्तेषु बिभ्रत इत्युख्यं ह्येत एतं हस्तेषु बिभ्रति दिवस्पृष्ठं स्वर्गत्वा मिश्रा देवेभिराध्वमिति दिवस्पृष्ठं स्वर्गं लोकं गत्वा मिश्रा देवेभिराध्वमित्येतत्

९.२.३.[२५]

प्राचीमनु प्रदिशं प्रेहि विद्वानिति । प्राची वै दिगग्नेः स्वामनु प्रदिशं प्रेहि विद्वानित्येतदग्नेरग्ने पुरो अग्निर्भवेहेत्यस्य त्वमग्नेरग्ने पुरो ऽग्निर्भवेहेत्येतद्विश्वा आशा दीद्यानो विभाहीति सर्वा आशा दीप्यमानो

विभाहीत्येतदूर्जं नो धेहि द्विपदे चतुष्पद इत्याशिषमाशास्ते

९.२.३.[२६]

पृथिव्या अहम् । उदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहमिति
गार्हपत्याद्ध्याग्नीध्रीयमागचन्त्याग्नीध्रीयादाहवनीयं दिवो नाकस्य
पृष्ठात्स्वर्ज्योतिरगामहमिति दिवो नाकस्य पृष्ठात्स्वर्गं लोकमगामहमित्येतत्

९.२.३.[२७]



स्वर्यन्तो नापेक्षन्ते । आ द्यां रोहन्ति रोदसी इति न हैव तेऽपेक्षन्ते ये स्वर्गं
लोकं यन्ति यज्ञं ये विश्वतोधारं सुविद्वांसो वितेनिर इत्येष एव यज्ञो
विश्वतोधार एत उ एव सुविद्वांसो य एतं वितन्वते

९.२.३.[२८]

अग्ने प्रेहि प्रथमो देवयतामिति । इममेतदग्निमाह त्वमेषां प्रेहि प्रथमो
देवयतामिति चक्षुर्देवानामुत मर्त्यानामित्युभयेषां हैतद्देवमनुष्याणां
चक्षुरियक्षमाणा भृगुभिः सजोषा इति यजमाना भृगुभिः सजोषा इत्येतत्स्वर्यन्तु
यजमानाः स्वस्तीति स्वर्गं लोकं यन्तु यजमानाः स्वस्तीत्येतत्

९.२.३.[२९]

तद्या अमुष्मिंलोके पञ्च दिशः । ता एतद्देवा असुराणामवृञ्जताथो ता एवैतत्समारोहंस्ता उ एवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता एवैतत्समारोहत्यथो एतद्वा एताभिर्देवा आतः सम्प्राप्नुवंस्तथैवाभिरयमेतदातः सम्प्राप्नोति

९.२.३.[३०]



अथैनमभिजुहोति । एतद्वा एनं देवा ईयिवांसमुपरिष्टादन्नेनाप्रीणन्नेतयाहुत्या तथैवैनमयमेतदीयिवांसमुपरिष्टादन्नेन प्रीणात्येतयाहुत्या कृष्णायै शुक्लवत्सायै पयसा रात्रिर्वै कृष्णा शुक्लवत्सा तस्या असावादित्यो वत्सः स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणात्युपरि धार्यमाण उपरि हि स यमेतत्प्रीणाति दोहनेन दोहनेन हि पयः प्रदीयते

९.२.३.[३१]

यद्वेवैनमभिजुहोति । शिर एतद्यज्ञस्य यदग्निः प्राणः पयः शीर्षंस्तत्प्राणं दधाति यथा स्वयमातृणामभिप्रक्षरेदेवमभिजुहुयात्प्राणः स्वयमातृणा रस एष शिरश्च तत्प्राणं च रसेन संतनोति संदधाति नक्तोषासा समनसा विरूपे इति तस्योक्तो बन्धुः

९.२.३.[३२]

अग्ने सहस्राक्षेति । हिरण्यशकलैर्वा एष सहस्राक्षः शतमूर्धन्निति यददः शतशीर्षा रुद्रोऽसृज्यत शतं ते प्राणाः सहस्रं व्याना इति शतं हैव तस्य प्राणाः सहस्रं व्याना यः शतशीर्षा त्वं साहस्रस्य राय ईशिष इति त्वं सर्वस्यै रय्या ईशिष इत्येतत्तस्मै ते विधेम वाजाय स्वाहेत्येष वै वाजस्तमेतत्प्रीणाति

९.२.३.[३३]



द्वाभ्यामभिजुहोति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदभिजुहोति

९.२.३.[३४]

अथैनं निदधाति । सुपर्णोऽसि गरुत्मानित्येतद्वा एनमदो विकृत्य सुपर्णं गरुत्मन्तं विकरोति तं सुपर्णं गरुत्मन्तं चिनोति तं सुपर्णं गरुत्मन्तं कृत्वान्ततो निदधाति पृष्ठे पृथिव्याः सीद भासान्तरिक्षमापृण ज्योतिषा दिवमुत्तभान तेजसा दिश उद्दृंहेत्येवं ह्येष एतत्सर्वं करोति

९.२.३.[३५]

आजुह्वानः सुप्रतीकः पुरस्तादिति । आजुह्वानो नः सुप्रतीकः पुरस्तादित्येतदग्ने त्वं योनिमासीद साधुयेत्येष वा अस्य स्वो योनिस्तं साध्वासीदेत्येतदस्मिन्त्सधस्थे अध्युत्तरस्मिन्निति द्यौर्वा उत्तरं सधस्थं विश्वे देवा यजमानश्च सीदतेति तद्विश्वैर्देवैः सह यजमानं सादयति द्वाभ्यां निदधाति तस्योक्तो बन्धुर्वषट्कारेण तस्योपरि बन्धुः

९.२.३.[३६]

अथास्मिन्त्समिध आदधाति । एतद्वा एनं देवा ईयिवांसमुपरिष्टादन्नेनाप्रीणन्त्समिद्भिश्चाहुतिभिश्च तथैवैनमयमेतदीयिवांसमुपरिष्टादन्नेन प्रीणाति समिद्भिश्चाहुतिभिश्च



९.२.३.[३७]

स वै शमीमयीं प्रथमामादधाति । एतद्वा एष एतस्यामाहुत्यां हुतायाम् प्रादीप्यतोदज्वलत्तस्माद्देवा अबिभयुर्यद्वै नोऽयं न हिंस्यादिति त एतां शमीमपश्यस्तयैनमशमयंस्तद्यदेतं शम्याशमयंस्तस्माचमी तथैवैनमयमेतचम्या शमयति शान्त्या एव न जग्ध्यै

९.२.३.[३८]

तां सवितुर्वरेण्यस्य । चित्रामाहं वृणे सुमतिं विश्वजन्यां यामस्य कण्वो अदुहत्प्रपीनां सहस्रधारां पयसा महीं गामिति कण्वो हैनां ददर्श सा हास्मै सहस्रधारा सर्वान्कामान्दुदुहे तथैवैतद्यजमानाय सहस्रधारा सर्वान्कामान्दुहे

९.२.३.[३९]

अथ वैकङ्कतीमादधाति । तस्या उक्तो बन्धुर्विधेम ते परमे जन्मन्नग्न इति द्यौर्वा अस्य परमं जन्म विधेम स्तोमैरवरे सधस्थ इत्यन्तरिक्षं वा अवरं सधस्थं यस्माद्योनेरुदारिथा यजे तमित्येष वा अस्य स्वो योनिस्तं यज इत्येतत्प्र त्वे हवींषि जुहुरे समिद्ध इति यदा वा एष समिध्यते ऽथैतस्मिन्हवींषि प्रजुह्वति



९.२.३.[४०]

अथौदुम्बरीमादधाति । ऊर्ग्वै रस उदुम्बर ऊर्जैवैनमेद्रसेन प्रीणाति कर्णकवती भवति पशवो वै कर्णकाः पशुभिरेवैनमेतदन्नेन प्रीणाति यदि कर्णकवतीं न विन्देद्दधिद्रप्समुपहत्यादध्यात्तद्यद्दधिद्रप्स उपतिष्ठते तदेव पशुरूपं प्रेद्धो अग्ने दीदिहि पुरो न इति विराजादधान्यन्नं विराडन्नेवैनमेतत्प्रीणाति तिस्रः समिध आदधाति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति

९.२.३.[४१]

अथाहुतीर्जुहोति । यथा परिविष्यानुपाययेत्तादृक्तत्स्रुवेण पूर्वे स्रुचोत्तरामग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशं ऋध्यामा त ओहैरिति यस्ते हृदिस्पृक्स्तोमस्तं त ऋध्यासमित्येतत्पङ्क्त्या जुहोति पञ्चपदा पङ्क्तिः पञ्चचितिको ऽग्निः पञ्चऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति



९.२.३.[४२]

अथ वैश्वकर्मणीं जुहोति । विश्वकर्मायमग्निस्तमेवैतत्प्रीणाति चित्तिं जुहोमि मनसा घृतेनेति चित्तमेषां जुहोमि मनसा च घृतेन चेत्येतद्यथा देवा इहागमन्निति यथा देवा इहागचानित्येतद्वीतिहोत्रा ऋतावृध इति सत्यवृध इत्येतत्पत्ये विश्वस्य भूमनो जुहोमि विश्वकर्मण इति योऽस्य सर्वस्य भूतस्य पतिस्तस्मै जुहोमि विश्वकर्मण इत्येतद्विश्वाहाहाभ्यं हविरिति सर्वदैवाक्षितं हविरित्येतत्

९.२.३.[४३]

अथ पूर्णाहुतिं जुहोति सर्वमेतद्यत्पूर्णं सर्वेणैवैनमेतत्प्रीणाति

९.२.३.[४४]
सप्त ते अग्ने समिध इति प्राणा वै समिधः प्राणा ह्येतं समिन्धते सप्त जिह्वा इति यानमून्त्सप्त पुरुषानेकं पुरुषमकुर्वंस्तेषामेतदाह सप्त ऋषय इति सप्त हि त ऋषय आसन्त्सप्त धाम प्रियाणीति चन्दांस्येतदाह चन्दांसि वा अस्य सप्त धाम प्रियाणि सप्त होत्राः सप्तधा त्वा यजन्तीति सप्त ह्येतं होत्राः सप्तधा यजन्ति सप्त योनिरिरिति चितीरेतदाहापृणस्वेत्या प्रजायस्वेत्येतद्घृतेनेति रेतो वै घृतं रेत एवैतदेषु लोकेषु दधाति स्वाहेति यज्ञो वै स्वाहाकारो यज्ञियमेवैतदिदं सकृत्सर्वं करोति



९.२.३.[४५]

सप्त सप्तेति । सप्तचितिकोऽग्निः सप्तऽर्तवः संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्प्रीणाति तिस्र आहुतीर्जुहोति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति तिस्रः समिध आदधाति तत्षड्स्योक्तो बन्धुः

९.२.३.[४६]

तिष्ठन्त्समिध आदधाति । अस्थीनि वै समिधस्तिष्ठन्तीव वा अस्थीन्यासीन आहुतीर्जुहोति मांसानि वा आहुतय आसत इव वै मांसान्यन्तराः समिधो भवन्ति बाह्या आहुतयोऽन्तराणि ह्यस्थीनि बाह्यानि मांसानि

९.२.३.[४७]

अथातः सम्पदेव । षड्दुरस्ताज्जुहोति षडुपरिष्टात्षड्भिराश्मनः पृश्नेर्यन्ति द्वाभ्यामश्मानं पृश्निमुपदधाति चतुर्भिराग्नेर्यन्ति पञ्चभिरग्निमारोहन्ति तदेकां न त्रिंशदाहुतिरेव त्रिंशत्तमी द्वाभ्यामग्निं निदधाति तद्द्वात्रिंशद्द्वात्रिंशदक्षरानुष्टुप्सैषानुष्टुप्

९.२.३.[४८]



तद्या अमूस्तिस्रोऽनुष्टुभः । गार्हपत्ये सम्पादयन्ति तासामेतामत्रिकामाहरन्ति तद्यदेतामत्राहरन्त्यत्रैष सर्वोऽग्निः संस्कृतः स एषोऽत्र तस्मै नालमासीद्यदन्नमात्स्यत्

९.२.३.[४९]

सोऽग्निमब्रवीत् । त्वयान्नमदानीति तथेति तस्माद्यदैवैतमत्राहरन्त्यथैषो ऽलमन्नायालमाहुतिभ्यो भवति

९.२.३.[५०]

अथो आहुः । प्रजापतिरेवैतं प्रियं पुत्रमुरस्याधत्त इति स यो हैतदेवं वेदा हैवं प्रियं पुत्रमुरसि धत्ते

९.२.३.[५१]

यदेवैतमत्राहरन्ति । यान्वै तान्त्सप्त पुरुषानेकं पुरुषमकुर्वन्नयमेव स योऽयमग्निश्चीयतेऽथ यामेषां तामूर्ध्वां श्रियं रसं समुदौहन्नेष स यमेतमत्राग्निमाहरन्ति तद्यदेतमत्राहरन्ति यैवैतेषा सप्तानां पुरुषाणां श्रीर्यो रसस्तमेतदूर्ध्वं समुदूहन्ति तदस्यैतच्चिर आत्मायमग्निश्चत आत्मानमेवास्यैतत्संस्कृत्य शिरः प्रतिदधाति



९.३.१.[१]

अथातो वैश्वानरं जुहोति । अत्रैष सर्वोऽग्निः संस्कृतः स एषोऽत्र वैश्वानरो देवता तस्मा एतद्धविर्जुहोति तदेनं हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यते द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरो वैश्वानरः

९.३.१.[२]

यद्वेवैतं वैश्वानरं जुहोति । वैश्वानरं वा एतमग्निं जनयिष्यन्भवति तमदः पुरस्ताद्दीक्षणीयायां रेतो भूतं सिञ्चति यादृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यत्तत्र वैश्वानरं रेतो भूतं सिञ्चति तस्मादयमिह वैश्वानरो जायत उपांशु तत्र भवति रेतो वै तत्र यज्ञ उपांशु वै रेतः सिच्यते निरुक्त इह निरुक्तं हि रेतो जातं भवति

९.३.१.[३]

स यः स वैश्वानरः । इमे स लोका इयमेव पृथिवी विश्वमग्निर्नरोऽन्तरिक्षमेव विश्वं वायुर्नरो द्यौरेव विश्वमादित्यो नरः



९.३.१.[४]

ते ये त इमे लोकाः । इदं तच्चिर इदमेव पृथिव्योषधयः श्मश्रूणि तदेतद्विश्वं वागेवाग्निः स नरः सोपरिष्टादस्य भवत्युपरिष्टाद्ध्यस्या अग्निः

९.३.१.[५]

इदमेवान्तरिक्षम् । तस्मादेतदलोमकमलोमकमिव ह्यन्तरिक्षं तदेतद्विश्वम् प्राण एव वायुः स नरः स मध्येनास्य भवति मध्येन ह्यन्तरिक्षस्य वायुः

९.३.१.[६]

शिर एव द्यौः । नक्षत्राणि केशास्तदेतद्विश्वं चक्षुरेवादित्यः स
नरस्तदवस्ताचोर्ष्णो भवत्यवस्ताद्धि दिव आदित्यस्तदस्यैतच्चिरो वैश्वानर
आत्मायमग्निश्चित आत्मायमग्निश्चित आत्मानमेवास्यैतत्संस्कृत्य शिरः प्रतिदधाति

९.३.१.[७]

अथ मारुतान्जुहोति । प्राणा वै मारुताः प्राणानेवास्मिन्नेतद्दधाति वैश्वानरं
हुत्वा
शिरो वै वैश्वानरः शीर्षंस्तत्प्राणान्दधाति



९.३.१.[८]

एक एष भवति । एकमिव हि शिरः सप्तेतरे सप्तकपाला यदु वा अपि बहु कृत्वः
सप्तसप्त सप्तैव तच्चीर्षण्येव तत्सप्त प्राणान्दधाति

९.३.१.[९]

निरुक्त एष भवति । निरुक्तमिव हि शिरोऽनिरुक्ता इतरेऽनिरुक्ता इव हि प्राणास्तिष्ठन्नेतं जुहोति तिष्ठतीव हि शिर आसीन इतरानासत इव हि प्राणाः

९.३.१.[१०]

तद्यौ प्रथमौ मारुतौ जुहोति । इमौ तौ प्राणौ तौ मध्ये वैश्वानरस्य जुहोति मध्ये हीमौ शीर्ष्णः प्राणौ

९.३.१.[११]



अथ यौ द्वितीयौ । इमौ तौ तौ समन्तिकतरं जुहोति समन्तिकतरमिव हीमौ प्राणौ

९.३.१.[१२]

अथ यौ तृतीयौ । इमौ तौ तौ समन्तिकतरं जुहोति समन्तिकतरमिव हीमौ प्राणौ वागेवारण्येऽनूच्यः सोऽरण्येऽनूच्यो भवति बहु हि वाचा घोरं निगचति

९.३.१.[१३]

यद्वेव वैश्वानरमारुतान्जुहोति । क्षत्रं वै वैश्वानरो विण्मारुताः क्षत्रं च तद्विशं च करोति वैश्वानरं पूर्वं जुहोति क्षत्रं तत्कृत्वा विशं करोति

९.३.१.[१४]

एक एष भवति । एकस्थं तत्क्षत्रमेकस्थां श्रियं करोति बहव इतरे विशि तद्भूमानं दधाति



९.३.१.[१५]

निरुक्त एष भवति । निरुक्तमिव हि क्षत्रमनिरुक्ता इतरेऽनिरुक्तेव हि विट् तिष्ठन्नेतं जुहोति तिष्ठतीव हि क्षत्रमासीन इतरानास्त इव हि विट्

९.३.१.[१६]

तं वा एतम् । पुरोऽनुवाक्यवन्तं याज्यवन्तं वषट्कृते स्रुचा जुहोति हस्तेनैवेतरानासीनः स्वाहाकारेण क्षत्रायैव तद्विशं कृतानुकरामनुवर्त्मानं करोति

९.३.१.[१७]

तदाहुः । कथमस्यैते पुरोऽनुवाक्यवन्तो याज्यवन्तो वषङ्कृते स्रुचा हुता भवन्तीत्येतेषां वै सप्तपदानां मारुतानां यानि त्रीणि प्रथमानि पदानि सा त्रिपदा गायत्री पुरोऽनुवाक्याथ यानि चत्वार्युत्तमानि सा चतुष्पदा त्रिष्टुब्याज्येदमेव कपुचलमयं दण्डः स्वाहाकारो वषड्कार एवमु हास्यैते पुरोऽनुवाक्यवन्तो याज्यवन्तो वषङ्कृते स्रुचा हुता भवन्ति

९.३.१.[१८]



तद्यं प्रथमं दक्षिणतो मारुतं जुहोति । याः सप्त प्राच्यः स्रवन्ति ताः स स सप्तकपालो भवति सप्त हि ता याः प्राच्यः स्रवन्ति

९.३.१.[१९]

अथ यं प्रथममुत्तरतो जुहोति । ऋतवः स स सप्तकपालो भवति सप्त ह्यृतवः

९.३.१.[२०]

अथ यं द्वितीयं दक्षिणतो जुहोति । पशवः स स सप्तकपालो भवति सप्त हि

ग्राम्याः पशवस्तमनन्तर्हितं पूर्वस्माज्जुहोत्यप्सु तत्पशून्प्रतिष्ठापयति

९.३.१.[२१]

अथ यं द्वितीयमुत्तररो जुहोति । सप्त ऋषयः स स सप्तकपालो भवति सप्त हि सप्तऽर्षयस्तमनन्तर्हितं पूर्वस्माज्जुहोत्यृतुषु तदृषीन्प्रतिष्ठापयति

९.३.१.[२२]



अथ यं तृतीय दक्षिणतो जुहोति । प्राणाः स स सप्तकपालो भवति सप्त हि शीर्षन्प्राणास्तमनन्तर्हितं पूर्वस्माज्जुहोत्यनन्तर्हितांस्तचीर्ष्णः प्राणान्दधाति

९.३.१.[२३]

अथ यं तृतीयमुत्तरतो जुहोति । चन्दांसि स स सप्तकपालो भवति सप्त हि चतुरुत्तराणि चन्दांसि तमनन्तर्हितं पूर्वस्माज्जुहोत्यनन्तर्हितानि तदृषिभ्यश्चन्दांसि दधाति

९.३.१.[२४]

अथ याः सप्त प्रतीच्यः स्रवन्ति । सोऽरण्येऽनूच्यः स सप्तकपालो भवति सप्त हि ता याः प्रतीच्यः स्रवन्ति सोऽस्यैषोऽवाङ्प्राण एतस्य प्रजापतेः सोऽरण्येऽनूच्यो भवन्ति तिर इव तद्यदरण्यं तिर इवं तद्यदवाङ्प्राणस्तस्माद्य एतासां नदीनां पिबन्ति रिप्रतराः शपनतरा आहनस्यवादितरा भवन्ति तद्यद्यदेतदाहेदं मारुता इति तदस्मा अन्नं कृत्वापिदधाति तेनैनं प्रीणाति

९.३.१.[२५]

स यः स वैश्वानरो ।ऽसौ स आदित्योऽथ ये ते मारुता रश्मयस्ते ते सप्त सप्तकपाला भवन्ति सप्तसप्त हि मारुता गणाः



९.३.१.[२६]

स जुहोति । शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्चेति नामान्येषामेतानि मण्डलमेवैतत्संस्कृत्याथास्मिन्नेतान्रश्मीन्नामग्राहं प्रतिदधाति

९.३.२.[१]

अथातो वसोर्धारां जुहोति । अत्रैष सर्वोऽग्निः संस्कृतः स एषोऽत्र वसुस्तस्मै देवा एतां धारां प्रागृह्णंस्तयैनमप्रीणंस्तद्यदेतस्मै वसव एतां धाराम्

प्रागृह्णंस्तस्मादेनां वसोधरित्याचक्षते तथैवास्मा अयमेतां धाराम्
प्रगृह्णाति तयैनं प्रीणाति

९.३.२.[२]

यद्वेवैतां वसोर्धारां जुहोति । अभिषेक एवास्यैष एतद्वा एनं देवाः सर्वं
कृत्स्नं संस्कृत्याथैनमेतैः कामैरभ्यषिञ्चन्नेतया वसोर्धारया
तथैवैनमयमेतत्सर्वं कृत्स्नं संस्कृत्याथैनमेतैः कामैरभिषिञ्चत्येतया
वसोर्धारयाज्येन पञ्चगृहीतेनौदुम्बर्या स्रुचा तस्योक्तो बन्धुः



९.३.२.[३]

वैश्वानरं हुत्वा । शिरो वै वैश्वानरः शीर्ष्णो वा अन्नमद्यतेऽथो शीर्षतो वा
अभिषिच्यमानोऽभिषिच्यते मारुतान्हुत्वा प्राणा वै मारुताः प्राणैरु वा अन्नमद्यते
ऽथो प्राणेषु वा अभिषिच्यमानोऽभिषिच्यते

९.३.२.[४]

तद्वा अरण्येऽनूच्ये । वाग्वा अरण्येऽनूच्यो वाचो वा अन्नमद्यतेऽथो वाचा वा
अभिषिच्यमानोऽभिषिच्यते तदेतत्सर्वं वसु सर्वे ह्येते कामाः सैषा वसुमयो
धारा यथा क्षोरस्य वा सर्पिषो वैवमारभ्यायैवेयमाज्याहुतिर्हूयते तद्यदेषा

वसुमयी धारा तस्मादेनां वसोधारेत्याचक्षते

९.३.२.[५]

स आह । इदं च म इदं च म इत्यनेन च त्वा प्रीणाम्यनेन चानेन च त्वाभिषिञ्चाम्यनेन चेत्येतदथो इदं च मे देहीदं च म इति सा यदैवैषा धाराग्निं प्राप्नुयादथैतद्यजुः प्रतिपद्येत

९.३.२.[६]



एतद्वा एनं देवाः । एतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया वसोर्धारयाथैनमेतान्कामानयाचन्त तेभ्य इष्टः प्रीतोऽभिषिक्त एतान्कामान्प्रायचत्तथैवैनमयदेतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया वसोर्धारयाथैनमेतान्कामान्याचते तस्मा इष्टः प्रीतोऽभिषिक्त एतान्कामान्प्रयचति द्वौद्वौ कामौ संयुनक्त्यव्यवचेदाय यथा व्योकसौ संयुञ्ज्यादेवं यज्ञेन कल्पन्तामिति

९.३.२.[७]

एतद्वै देवा अब्रुवन् । केनेमान्कामान्प्रतिग्रहीष्याम इत्यात्मनैवेत्यब्रुवन्यज्ञो वै देवानामात्मा यज्ञ उ एव यजमानस्य स यदाह यज्ञेन कल्पन्तमित्यात्मना

मे कल्पन्तामित्येवैतदाह

९.३.२.[८]

द्वादशसु कल्पयति । द्वादश मासाः संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणात्यथो तावतैवैनमेतदन्नेनाभिषिञ्चति चतुर्दशसु कल्पयत्यष्टासु कल्पयति दशसु कल्पयति त्रयोदशसु कल्पयति



९.३.२.[९]

अथार्धेन्द्राणि जुहोति । सर्वमेतद्यदर्धेन्द्राणि सर्वेणैवैनमेतत्प्रीणात्यथो सर्वेणैवैनमेतदभिषिञ्चति

९.३.२.[१०]

अथ ग्रहान्जुहोति । यज्ञो वै ग्रहा यज्ञेनैवैनमेतदन्नेन प्रीणात्यथो यज्ञेनैवैनमेतदन्नेनाभिषिञ्चति

९.३.३.[१]

अथैतान्यज्ञक्रतून्जुहोति । अग्निश्च मे घर्मश्च म
इत्येतैरेवैनमेतद्यज्ञक्रतुभिः प्रीणात्यथो
एतैरेवैनमेतद्यज्ञक्रतुभिरभिषिञ्चति

९.३.३.[२]

अथायुज स्तोमान्जुहोति । एतद्वै देवाः सर्वान्कामानाप्त्वायुग्भि स्तोमैः स्वर्गं
लोकमायंस्तथैवैतद्यजमानः सर्वान्कामानाप्त्वायुग्भि स्तोमैः स्वर्गं लोकमेति



९.३.३.[३]

तद्वै त्रयस्त्रिंशादिति । अन्तो वै त्रयस्त्रिंशोऽयुजां स्तोमानामन्तत एव तद्देवाः
स्वर्गं लोकमायंस्तथैवैतद्यजमानोऽन्तत एव स्वर्गं लोकमेति

९.३.३.[४]

अथ युग्मतो जुहोति । एतद्वै चन्दांस्यब्रुवन्यातयामा वा अयुज स्तोमा
युग्मभिर्वयं स्तोमैः स्वर्गं लोकययामेति तानि युग्मभि स्तोमैः स्वर्गं
लोकमायंस्तथैवैतद्यजमानो युग्मभि स्तोमैः स्वर्गं लोकमेति

९.३.३.[५]

तद्वा अष्टाचत्वरिंशादिति । अन्तो वा अष्टाचत्वारिंशो युग्मतां स्तोमानामन्तत एव तच्चन्दांसि स्वर्गं लोकमायंस्तथैवैतद्यजमानोऽन्तत एव स्वर्गं लोकमेति

९.३.३.[६]

स आह । एका च मे तिस्रश्च मे चतस्रश्च मेऽष्टौ च म इति यथा वृक्षं रोहन्नुत्तरामुत्तरां शाखां समालभ्मं रोहेत्तादृक्तद्यद्वेव स्तोमान्जुहोत्यन्नं वै स्तोमा अन्नेनैवैनमेतदभिषिञ्चति



९.३.३.[७]

अथ वयांसि जुहोति । पशवो वै वयांसि पशुभिरेवैनमेतदन्नेन प्रीणात्यथो पशुभिरेवैनमेतदन्नेनाभिषिञ्चति

९.३.३.[८]

अथ नामग्राहं जुहोति । एतद्वै देवाः सर्वान्कामानाप्त्वाथैतमेव

प्रत्यक्षमप्रीणंस्तथैवैतद्यजमानः सर्वान्कामानाप्त्वाथैतमेव प्रत्यक्षम्
प्रीणाति वाजाय स्वाहा प्रसवाय स्वाहेति नामान्यस्यैतानि
नामग्राहमेवैनमेतत्प्रीणाति

९.३.३.[९]

त्रयोदशैतानि नामानि भवन्ति । त्रयोदश मासाः
संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि यावानग्निर्यावत्यस्य मात्रा
तावतैवैनमेतत्प्रीणाति यद्वेव नामग्राहं जुहोति
नामग्राहमेवैनमेतदभिषिञ्चति



९.३.३.[१०]

अथाह । इयं ते राण्मित्राय यन्तासि यमन ऊर्जे त्वा वृष्ट्यै त्वा प्रजानां
त्वाधिपत्यायेत्यन्नं वा ऊर्गन्नं वृष्टिरन्नेनैवैनमेतत्प्रीणाति

९.३.३.[११]

यद्वेवाह । इयं ते राण्मित्राय यन्तासि यमन ऊर्जे त्वा वृष्ट्यै त्वा प्रजानां
त्वाधिपत्यायेतीदं ते राज्यमभिषिक्तोऽसीत्येतन्मित्रस्य त्वं यन्तासि यमन ऊर्जे च
नोऽसि वृष्ट्यै च नोऽसि प्रजानां च न आधिपत्यायासीत्युपब्रुवत एवैनमेतदेतस्मै

नः सर्वस्मा अस्येतस्मै त्वा सर्वस्मा अभ्यषिचामहीति तस्मादु हेदं मानुषं राजानमभिषिक्तमुपब्रुवते

९.३.३.[१२]

अथ कल्पाञ्जुहोति । प्राणा वै कल्पाः प्राणानेवास्मिन्नेतद्दधात्यायुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामित्येतानेवास्मिन्नेतत्क्लृप्तान्प्राणान्दधाति

९.३.३.[१३]



द्वादश कल्पाञ्जुहोति । द्वादश मासाः संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतत्क्लृप्तान्प्राणान्दधाति यद्वेव कल्पाञ्जुहोति प्राणा वै कल्पा अमृतमु वै प्राणा अमृतेनैवैनमेतदभिषिञ्चति

९.३.३.[१४]

अथाह स्तोमश्च यजुश्च ऋक्च साम स बृहच्च रथन्तरं चेति त्रयी हैषा विद्यान्नं वै त्रयी विद्यान्नेनैवैनमेतत्प्रीणात्यथो अन्नेनैवैनमेतदभिषिञ्चति स्वर्देवा अगन्मामृता अभूमेति स्वर्हि गचत्यमृतो हि भवति प्रजापतेः प्रजा अभूमेति प्रजापतेर्हि प्रजा भवति वेट्स्वाहेति वषट्कारो हैष परोऽक्षं यद्वेट्कारो वषट्कारेण वा वै स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते तदेनमेताभ्यामुभाभ्यां प्रीणाति वषट्कारेण च स्वाहाकारेण चाथो

एताभ्यामेवैनमेतदुभाभ्यामभिषञ्चत्यत्र तां स्रुचमनुप्रास्यति
यदत्राज्यलिप्तं तन्नेद्बहिर्धाग्नेरसदिति

९.३.३.[१५]

तस्यै वा एतस्यै वसोर्धारायै । द्यौरेवात्माभ्रमूधो विद्युत्स्तनो धारैव धारा
दिवोऽधि गामागचति

९.३.३.[१६]



तस्यै गौरेवात्मा । ऊध एवोध स्तन स्तनो धारैव धारा गोरधि यजमानम्

९.३.३.[१७]

तस्यै यजामान एवात्माम् । बाहुरूधः स्रुक्स्तनो धारैव धारा यजमानादधि
देवान्देवेभ्योऽधि गां गोरधि यजमानं तदेतदनन्तमक्षय्यं
देवानामन्नं परिप्लवते स यो हैतदेवं वेदैवं
हैवास्यैतदनन्तमक्षय्यमन्नं भवत्यथातः सम्पदेवः

९.३.३.[१८]

तदाहुः । कथममस्यैषा वमोर्धारा संवत्सरमग्निमाप्नोति कथं संवत्सरेणाग्निना सम्पद्यत इति षष्टिश्च ह वै त्राणि च शतान्येषा वसोर्धाराथ षडथ पञ्चत्रिंशत्ततो यानि षष्टिश्च त्रीणि च शतानि तावन्ति संवत्सरस्याहानि तत्संवत्सरस्याहान्याप्नोत्यथ यानि ष्व्ड्वा ऋतवस्तद्दतूनां रात्रीराप्नोति तदुभयानि संवत्सरस्याहोरात्राण्याप्नोत्यथ यानि पञ्चत्रिंशत्स त्रयोदशो मासः स आत्मा त्रिंशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर एव पञ्चत्रिंशमेतावान्वै संवत्सर एवमु हास्यैषा वसोर्धारा संवत्सरमग्निमाप्नोत्येवं संवत्सरेणाग्निना सम्पद्यत एतावत्य उ वै शाण्डिलेऽग्नौ मध्यतो यजुष्मत्य इष्टका उपधीयन्ते ऽग्नयो हैते पृथग्यदेता इष्टका एवमु हास्यैतेऽग्नयः पृथग्वसोर्धारयाभिहुता भवन्ति



९.३.३.[१९]

तदाहुः । कथमस्यैषा वसोर्धारा महदुक्थमाप्नोति कथं महतोक्थेन सम्पद्यत इत्येतस्या एव वसोर्धारायै यानि नव प्रथमानि यजूंषि तत्त्रिवृच्छिरोऽथ यान्यष्टाचत्वारिंशत्तौ चतुर्विंशौ पक्षावथ यानि पञ्चविंशतिः स पञ्चविंश आत्माथ यान्येकविंशतिस्तदेकविंशं पुचमथ यानि त्रयस्त्रिंशत्स वशोऽथ या अशीतयः सैवाशीतीनामाप्तिरशीतिभिर्हि महदुक्थमाख्यायतेऽथ यदूर्ध्वमशीतिभ्यो यदेवादो महत उक्थस्योर्ध्वमशीतिभ्य एतदस्य तदेवमु हास्यैषा वसोर्धारा महदुक्थमाप्नोत्येवं महतोक्थेन सम्पद्यते

९.३.४.[१]

अथातो वाजप्रसवीयं जुहोति । अन्नं वै वाजोऽन्नप्रसवीयं हास्यैतदन्नमेवास्मा एतेन प्रसौति

९.३.४.[२]

एतद्वा एनं देवाः । एतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया वसोर्धारयाथैनमेतद्भूय एवाप्रीणंस्तथैवैनमयमेतदेतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया वसोर्धारयाथैनमेतद्भूय एव प्रीणाति



९.३.४.[३]

यद्वेवैतद्वाजप्रसवीयं जुहोति । अभिषेक एवास्यैष एतद्वा एतं देवा एतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया वसोर्धारयाथैनमेतद्भूय एवाभ्यषिञ्चंस्तथैवैनमयमेतदेतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया वसोर्धारयाथैनमेतद्भूय एवाभिषिञ्चति

९.३.४.[४]

सर्वौषधं भवति । सर्वमेतदन्नं यत्सर्वौषधं

सर्वेणैवैनमेतदन्नेन प्रीणात्यथो सर्वेणैवैनमेतदन्नेनाभिषिञ्चति तेषामेकमन्नमुद्धरेत्तस्य नाश्नीयाद्यावज्जीवमौदुम्बरेण चमसेनौदुम्बरेण स्रुवेण तयोरुक्तो बन्धुश्चतुःस्रक्तो भवतश्चतस्रो वै दिशः सर्वाभ्य एवैनमेतद्दिग्भ्योऽन्नेन प्रीणात्यथो सर्वाभ्य एवैनमेतद्दिग्भ्योऽन्नेनाभिषिञ्चति

९.३.४.[५]

यद्वेवैतद्वाजप्रसवीयं जुहोति । एता ह देवताः सुता एतेन सवेन येनैतत्सोष्यमाणो भवति ता एवैतत्प्रीणाति ता अस्मा इष्टाः प्रीता एतं सवमनुमन्यन्ते ताभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै न तद्यदग्नौ जुहोति तदग्निमभिषिञ्चत्यथ यदेताभ्यो देवताभ्यो जुहोति तदु तान्देवान्प्रीणाति य एतस्य सवस्येशते



९.३.४.[६]

अथ वा एतत्पार्थान्यपि जुहोति । एतद्वै देवा अकामयन्तात्रैव सर्वैः सवैः सूयेमहीति तेऽत्रैव सर्वैः सवैरसूयन्त तथैवैतद्यजमानोऽत्रैव सर्वैः सवैः सूयते

९.३.४.[७]

तद्यानि पार्थानि । तानि राजसूयस्य वाजप्रसवीयं तद्यत्तानि जुहोति तद्राजुसूयेन सूयतेऽथ यानि चतुर्दशोत्तराणि ततो यानि सप्त पूर्वाणि तानि वाजपेयस्य वाजप्रसवीयं तद्यत्तानि जुहोति तद्वाजपेयेन सूयतेऽथ यानि सप्तोत्तराणि तान्यग्नेस्तद्यत्तानि जुहोति तदग्निसवेन सूयते

९.३.४.[८]

स वै राजसूयस्य पूर्वाणि जुहोति । अथ वाजपेयस्य राजा वै राजुसूयेनेष्ट्वा भवति सम्राड्वाजपेयेन राज्यमु वा अग्रेऽथ साम्राज्यं तस्माद्वाजपेयेनेष्ट्वा न राजसूयेन यजेत प्रत्यवरोहः स यथा सम्राड्वन्राजा स्यात्तादृक्तत्



९.३.४.[९]

अग्नेरुत्तमानि जुहोति । सर्वे हैते सवा यदग्निसवः सर्वं हैतदग्निसवेन सुतो भवति राजा च सम्राड्व तस्मादग्नेरुत्तमानि जुहोति

९.३.४.[१०]

अथैनं कृष्णाजिनेऽभिषिञ्चति । यज्ञो वै कृष्णाजिनं यज्ञ एवैनमेतदभिषिञ्चति लोमतश्छन्दांसि वै लोमानि चन्दःस्वेवैनमेतदभिषिञ्चत्युत्तरतस्तस्योपरि

बन्धुः प्राचीनग्रीवे तद्धि देवत्रा

९.३.४.[११]

तं हैके दक्षिणतोऽग्नेरभिषिञ्चन्ति । दक्षिणतो वा अन्नस्योपचारस्तदेनमन्नस्यार्धादभिषिञ्चाम इति न तथा कुर्यादेषा वै दिक्पितृणां क्षिप्रे हैतां दिशं प्रैति यं तथाभिषिञ्चन्ति



९.३.४.[१२]

आहवनीय उ हैकेऽभिषिञ्चति । स्वर्गो वै लोक आहवनीयस्तदेनं स्वर्गे लोके ऽभिषिञ्चाम इति न तथा कुर्याद्दैवो वा अस्यैष आत्मा मानुषोऽयमनेन हास्य ते मर्त्येनात्मनैतं दैवमात्मनैतं दैवमानमनुप्रसजन्ति यं तथाभिषिञ्चन्ति

९.३.४.[१३]

उत्तरत एवैनभिषिञ्चेत् । एषा होभयेषां देवमनुष्याणां दिग्यदुदीची प्राची स्वायामेवैनमेतद्दिश्यायत्तं प्रतिष्ठितमभिषिञ्चति न वै स्व आयतने प्रतिष्ठितो रिष्यति

९.३.४.[१४]

आसीनं भूतमभिषिञ्चेत् । आस्त इव वै भूतस्तिष्ठन्तं बुभूषन्तं तिष्ठतीव वै बुभूषन्बस्ताजिने पुष्टिकाममभिषिञ्चेत्कृष्णाजिने ब्रह्मवर्चसकाममुभयोरुभयकामं तदुत्तरतः पुचस्योत्तरलोम प्राचीनग्रीवमुपस्तृणाति

९.३.४.[१५]

आस्पृष्टं परिश्रितः । तद्यत्कृष्णाजिनमास्पृष्टं परिश्रितो भवति तथो हास्यैष दैव आत्मा कृष्णाजिनेऽभिषिक्तो भवत्यथ यदेनमन्वारब्धमग्निं तिष्ठन्तमभिषिञ्चति तथा हैतस्माद्दैवादभिषेकान्न व्यवच्छिद्यते



९.३.४.[१६]

अग्नौ हुत्वाथैनमभिषिञ्चति । दैवो वा अस्यैष आत्मा मानुषोऽयं देवा उ वा अग्रेऽथ मनुष्यास्तस्मादग्नौ हुत्वाथैनं तस्यैव परिषिष्टेनाभिषिञ्चत्यत्र तं स्रुवमनुप्रास्यति

९.३.४.[१७]

अथैनं दक्षिणं बाहुमनुपर्यावृत्याभिषिञ्चति । देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामीति वाग्वै सरस्वती तस्या इदं सर्वं यन्त्रं सवितृप्रसूत एवैनमेतदनेन सर्वेण सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चत्यत्र तं चमसमनुप्रास्यति यदत्र विलिप्तं तन्नेद्बहिर्धाग्नेरसदिति

९.३.४.[१८]

तं वै मध्ये पार्थानामभिषिञ्चति । संवत्सरो वै पार्थानि संवत्सरस्यैवैनमेतन्मध्यत आदधाति षड्पुरस्ताज्जुहोति षडुपरिष्टात्षड्वा ऋतव ऋतुभिरेवैनमेतततत्सुषुवाणमुभयतः परिगृह्णाति बृहस्पतिः पूर्वेषामुत्तमो भवतीन्द्र उत्तरेषां प्रथमो ब्रह्म वै बृहस्पतिः क्षत्रमिन्द्रो ब्रह्मणा चैवैनमेतत्क्षत्रेण च सुषुवाणमुभयतः परिगृह्णाति



९.४.१.[१]

अथातो राष्ट्रभृतो जुहोति । राजानो वै राष्ट्रभृतस्ते हि राष्ट्राणि बिभ्रत्येता ह देवताः सुता एतेन सवेन येनैतत्सोष्यमाणो भवति ता एवैतत्प्रीणाति ता अस्मा इष्टाः प्रीता एतं सवमनुमन्यन्ते ताभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै न तद्यद्राजानो राष्ट्राणि बिभ्रति राजान उ एते देवास्तस्मादेता राष्ट्रभृतः

९.४.१.[२]

यद्वेवैता राष्ट्रभृतो जुहोति ।
प्रजापतेर्विस्रस्तान्मिथुनान्युदक्रामन्गन्धर्वाप्सरसो भूत्वा तानि रथो भूत्वा पर्यगचत्तानि परिगत्यात्मन्नधत्तात्मन्नकुरुत तथैवैनान्ययमेतत्परिगत्यात्मन्धत्त आत्मन्कुरुते

९.४.१.[३]



स यः स प्रजापतिर्व्यस्रंसत । अयमेव स योऽयमग्निश्चीयतेऽथ यान्यस्मात्तानि मिथुनान्युदक्रामन्नेतास्ता देवता याभ्य एतज्जुहोति

९.४.१.[४]

गन्धर्वाप्सरोभ्यो जुहोति । गन्धर्वाप्सरसो हि भूत्वोदक्रामन्नथो गन्धेन च वै रूपेण च गन्धर्वाप्सरसश्चरन्ति तस्माद्यः कश्च मिथुनमुपप्रैति गन्धं चैव स रूपं च कामयते

९.४.१.[५]

मिथुनानि जुहोति । मिथुनाद्वा अधि प्रजातिर्यो वै प्रजायते स राष्ट्रम् भवत्यराष्ट्रं वै स भवति यो न प्रजायते तद्यन्मिथुनानि राष्ट्रं बिभ्रति मिथुना उ एते देवास्तस्मादेता राष्ट्रभृत आज्येन द्वादशगृहीतेन ता उ द्वादशैवाहुतयो भवन्ति तस्योत्रो बन्धुः

९.४.१.[६]

पुंसे पूर्वस्मै जुहोति । अथ स्त्रीभ्यः पुमांसं तद्वीर्येणात्यादधात्येकस्मा इव पुंसे जुहोति बह्वीभ्य इव स्त्रीभ्यस्तस्मादप्येकस्य पुंसो बह्व्यो जाया भवन्त्युभाभ्यां वषट्कारेण च स्वाहाकारेण च पुंसे जुहोति स्वानाकारेणैव स्त्रीभ्यः पुमांसमेव तद्वीर्येणात्यादधाति



९.४.१.[७]

ऋताषाडृतधामेति । सत्यसाड्ढत्यधामेत्येतदग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस इत्यग्निर्ह गन्धर्व ओषधिभिरप्सरोभिर्मिथुनेन सहोच्चक्राम मुदो नामेत्योषधयो वै मुद ओषधिभिर्हीदं सर्वं मोदते स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्ताभ्यः स्वाहेति तस्योक्तो बन्धुः

९.४.१.[८]

संहित इति । असौ वा आदित्यः संहित एष ह्यहोरात्रे संदधाति विश्वसामेत्येष ह्येव सर्वं साम सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस इति सूर्यो ह गन्धर्वो मरीचिभिरप्सरोभिर्मिथुनेन सहोच्चक्रामायुवो नामेत्यायुवाना इव हि मरीचयः प्लवन्ते स न इदं ब्रह्म क्षत्रं पात्विति तस्योक्तो बन्धुः

९.४.१.[९]

सुषुम्ण इति । सुयज्ञिय इत्येतत्सूर्यरश्मिरिति सूर्यस्येव हि चन्द्रमसो रश्मयश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरस इति चन्द्रमा ह गन्धर्वो नक्षत्रैरप्सरोभिर्मिथुनेन सहोच्चक्राम भेकुरयो नामेति भाकुरयो ह नामैते भां हि नक्षत्राणि कुर्वन्ति स न इदं ब्रह्म क्षत्रं पात्विति तस्योक्तो बन्धुः



९.४.१.[१०]

इषिर इति । क्षिप्र इत्येतद्विश्वव्यचा इत्येष हीदं सर्वं व्यचः करोति वातो गन्धर्वस्तस्यापो अप्सरस इति वातो ह गन्धर्वोऽद्भिरप्सरोभिर्मिथुनेन सहोच्चक्रामोर्जो नामेत्यापो वा ऊर्जोऽद्भ्यो ह्यूर्ग्जायते स न इदं ब्रह्म क्षत्रम् पात्विति तस्योक्तो बन्धुः

९.४.१.[११]

भुज्युः सुपर्ण इति । यज्ञो वै भुज्युर्यज्ञो हि सर्वाणि भूतानि भुनक्ति यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरस इति यज्ञो ह गन्धर्वो दक्षिणाभिरप्सरोभिर्मिथुनेन सहोच्चक्राम स्तावा नामेति दक्षिणा वै स्तावा दक्षिणाभिर्हि यज्ञ स्तूयतेऽथो यो वै कश्च दक्षिणां ददाति स्तूयत एव स स न इदं ब्रह्म क्षत्रं पात्विति तस्योक्तो बन्धुः

९.४.१.[१२]

प्रजापतिर्विश्वकर्मेति । प्रजापतिर्वै विश्वकमा स हीदं सर्वमकरोन्मनो गन्धर्वस्तस्य ऋक्षामान्यप्सरस इति मनो ह गन्धर्व ऋक्षामैरप्सरोभिर्मिथुनेन सहोच्चक्रामेष्टयो नामेत्यृक्षामानि वा एष्टय ऋक्षामैर्ह्याशासत इति नोऽस्त्वित्थं नोऽस्त्विति स न इदं ब्रह्म क्षत्रं पात्विति तस्योक्तो बन्धुः



९.४.१.[१३]

अथ रथशीर्षे जुहोति । एष वै स सव एतद्वै तत्सूयते यमस्मै तमेता देवताः सवमनुमन्यन्ते याभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै नाज्येन पञ्चगृहीतेन ता उ पञ्चैवाहुतयो हुता भवन्ति तस्योक्तो बन्धुः

९.४.१.[१४]

शीर्षतः । शीर्षतो वा अभिषिच्यमानोऽभिषिच्यत उपरि धार्यमाण उपरि हि स यमेतदभिषिञ्चति समानेन मन्त्रेण समातो हि स यमेतदभिषिञ्चति सर्वतः परिहारं सर्वत एवैनमेतदभिषिञ्चति

९.४.१.[१५]

यद्वेव रथशीर्षे जुहोति । असौ वा आदित्य एष रथ एतद्वै तद्रूपं कृत्वा प्रजापतिरेतानि मिथुनानि परिगत्यात्मन्नधत्तात्मन्नकुरुत तथैवैनान्ययमेतत्परिगत्यात्मन्धत्त आत्मन्कुरुत उपरि धार्यमाण उपरि हि स य एतानि मिथुनानि परिगत्यात्मन्नधत्तात्मन्नकुरुत समानेन मन्त्रेण समानो हि स य एतानि मिथुनानि परिगत्यात्मन्नधत्तात्मन्नकुरुत सर्वतः परिहारं सर्वतो हि स य एतानि मिथुनानि परिगत्यात्मन्नधत्तात्मन्नकुरुत

९.४.१.[१६]

स नो भुवनस्य पते प्रजापत इति । भुवनस्य ह्येष पतिः प्रजापतिर्यस्य त उपरि गृहा यस्य वेहेत्युपरि च ह्येतस्य गृहा इह चास्मै ब्रह्मणेऽस्मै क्षत्रायेत्ययं वा आग्निर्ब्रह्म च क्षत्रं च महि शर्म यच स्वाहेति महचर्म यच स्वाहेत्येतत्

९.४.२.[१]

अथ वातहोमान्जुहोति । इमे वै लोका एषोऽग्निर्वायुर्वातहोमा एषु तल्लोकेषु वायुं दधाति तस्मादयमेषु लोकेषु वायुः

९.४.२.[२]

बाह्येनाग्निमाहरति । आप्तो वा अस्य स वायुर्य एषु लोकेष्वथ य इमांलोकान्परेण वायुस्तमस्मिन्नेतद्दधाति



९.४.२.[३]
बहिर्वेदेरियं वै वेदिः । आप्तो वा अस्य स वायुर्योऽस्यामथ य इमां परेण वायुस्तमस्मिन्नेतद्दधाति

९.४.२.[४]

अञ्जलिना । न ह्येतस्येतीवाभिपत्तिरस्ति स्वाहाकारेण जुहोति ह्यधोऽधो धुरमसौ वा आदित्य एष रथोऽर्वाचीनं तदादित्याद्वायुं दधाति तस्मादेषोऽर्वाचीनमेवातः पवते

९.४.२.[५]

समुद्रोऽसि नभस्वानिति । असौ वै लोकः समुद्रो नभस्वानार्द्रदानुरित्येष ह्यार्द्रं ददाति तद्योऽमुष्मिंलोके वायुस्तमस्मिन्नेतद्दधाति शम्भूर्मयोभूरभि मा वाहि स्वाहेति शिवः स्योनोऽभि मा वाहीत्येतत्

९.४.२.[६]



मारुतोऽसि मरुतां गण इति । अन्तरिक्षलोको वै मारुतो मरुतां गणस्तद्यो ऽन्तरिक्षलोके वायुस्तमस्मिन्नेतद्दधाति शम्भूर्मयोभूरभि मा वाहि स्वाहेति शिवः स्योनोऽभि मा वाहीत्येतत्

९.४.२.[७]

अवस्यूरसि दुवस्वानिति । अयं वै लोकोऽवस्यूर्दुवस्वांस्तद्योऽस्मिंलोके वायुस्तमस्मिन्नेतद्दधाति शम्भूर्मयोभूरभि मा वाहि स्वाहेति शिवः स्योनोऽभि मा वाहीत्येतत्

९.४.२.[८]

त्रिभिर्जुहोति । त्रय इमे लोका अथो त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैव तदेषु वायुं दधाति

९.४.२.[९]

यद्वेव वातहोमान्जुहोति । एतमेवैतद्रथं युनक्त्येदद्वै देवा एतं रथं सर्वेभ्यः कामेभ्योऽयुञ्जत युक्तेन समश्नवामहा इति तेन युक्तेन सर्वान्कामान्त्समाश्नुवत तथैवैतद्यजमान एतं रथं सर्वेभ्यः कामेभ्यो युङ्क्ते युक्तेन समश्नवा इति तेन युक्तेन सर्वान्कामान्त्समश्नुते



९.४.२.[१०]

वातहोमैर्युनक्ति । प्राणा वै वातहोमाः प्राणैरेवैनमेतद्युनक्ति त्रिभिर्युनक्ति त्रयो वै प्राणाः प्राण उदानो व्यानस्तैरेवैनमेतद्युनक्त्यधोऽधो धुरमधो ऽधो हि धुरं योग्यं युञ्जन्ति हस्ताभ्यां हस्ताभ्यां हि योग्यं युञ्जन्ति विपरिक्रामं विपरिक्रामं हि योग्यं युञ्जन्ति

९.४.२.[११]

स दक्षिणायुग्यमेवाग्रे युनक्ति । अथ सव्यायुग्यमथ दक्षिणाप्रष्टिमेवं देवत्रेतरथा मानुषे तं नाभियुञ्ज्यान्नेद्युक्तमभियुनजानीति वाहनं तु दद्याद्युक्तेन भुनजा इति तमुपर्येव हरन्त्याध्वर्योरावसथादुपरि ह्येष तमध्वर्यवे ददाति स हि तेन करोति तं तु दक्षिणानां कालेऽनुदिशेत्

९.४.२.[१२]

अथ रुङ्नतीर्जुहोति । अत्रैष सर्वोऽग्निः संस्कृतः स एषोऽत्र रुचमैचत्तस्मिन्देवा एताभि रुङ्नतीभी रुचमदधुस्तथैवास्मिन्नयमेतद्दधाति



९.४.२.[१३]

यद्वेव रुङ्नतीर्जुहोति । प्रजापतेर्विस्रस्ताद्रुगुदक्रामत्तं यत्र देवाः समस्कुर्वंस्तदस्मिन्नेताभी रुङ्नतीभी रुचमदधुस्तथैवास्मिन्नयमेतद्दधाति

९.४.२.[१४]

यास्ते अग्ने सूर्ये रुचः । या वो देवाः सूर्ये रुचो रुचं नो धेहि ब्राह्मणेष्विति रुचं रुचमित्यमृतत्वं वै रुगमृतत्वमेवास्मिन्नेतद्दधाति तिस्र आहुतीर्जुहोति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्रुचं दधाति

९.४.२.[१५]

अथ वारुणीं जुहोति । अत्रैष सर्वोऽग्निः संस्कृतः स एषोऽत्र वरुणो देवता तस्मा एतद्धविर्जुहोति तदेनं हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यते वारुण्यऽर्चा स्वेनैवैनमेतदात्मना स्वया देवतया प्रीणाति

९.४.२.[१६]



यद्वेव वारुणीं जुहोति । प्रजापतेर्विस्रस्ताद्वीर्यमुदक्रामत्तं यत्र देवाः समस्कुर्वंस्तदस्मिन्नेतया वीर्यमदधुस्तथैवास्मिन्नयमेतद्दधाति वारुण्य ऽर्चा क्षत्रं वै वरुणो वीर्यं वै क्षत्रं वीर्येणैवास्मिन्नेतद्वीर्यं दधाति

९.४.२.[१७]

तत्त्वा यामि ब्रह्मणा वन्दमान इति । तत्त्वा याचे ब्रह्मणा वन्दमान इत्येतत्तदाशास्ते यजमानो हविर्भिरिति तदयमाशास्ते यजमानो हविर्भिरित्येतदहेडमानो वरुणेह बोधीत्यक्रुध्यन्नो वरुणेह बोधीत्येतदुरुशंस मा न आयुः प्रमोषीरित्यात्मनः परिदां वदते

९.४.२.[१८]

अथार्काश्वमेधयोः संततीर्जुहोति । अयं वा अग्निरर्कोऽसावादित्योऽश्वमेधस्तौ सृष्टौ नानैवास्तां तौ देवा एताभिराहुतिभिः समतन्वन्त्समदुधुस्तथैवैनावयमेताभिराहुतिभिः संतनोति संदधाति

९.४.२.[१९]

स्वर्ण घर्मः स्वाहेति । असौ वा आदित्यो घर्मोऽमुं तदादित्यमस्मिन्नग्नौ प्रतिष्ठापयति



९.४.२.[२०]

स्वर्णार्कः स्वाहेति । अयमग्निरर्क इमं तदग्निममुष्मिन्नादित्ये प्रतिष्ठापयति

९.४.२.[२१]

स्वर्ण शुक्रः स्वाहेति । असौ वा आदित्यः शुक्रस्तं पुनरमुत्र दधाति

९.४.२.[२२]

स्वर्ण ज्योतिः स्वाहेति । अयमग्निर्ज्योतिस्तं पुनरिह दधाति

९.४.२.[२३]

स्वर्ण सूर्यः स्वाहेति । असौ वा आदित्यः सूर्योऽमुं तदादित्यमस्य सर्वस्योत्तमं दधाति तस्मादेषोऽस्य सर्वस्योत्तमः



९.४.२.[२४]

पञ्चैता आहुतीर्जुहोति । पञ्चचितिकोऽग्निः पञ्चऽर्तवः संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनावेतत्संतनोति संदधाति

९.४.२.[२५]

यद्वेवाह । स्वर्ण घर्मः स्वाहा स्वर्णार्कः स्वाहेत्यस्यैवैतान्यग्नेर्नामानि तान्येतत्प्रीणाति तानि हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यतेऽथो एतानेवैतदग्नीनस्मिन्नग्नौ नामग्राहं दधाति

९.४.२.[२६]

पञ्चैता आहुतीर्जुहोति । पञ्चचितिकोऽग्निः पञ्च पञ्चऽर्तवः संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति

९.४.२.[२७]

अथात आहुतीनामेवावपनस्य । यां कां च ब्राह्मणवतीमाहुतिं विद्यात्तमेतस्मिन्काले जुहुयात्कामेभ्यो वा एतं रथं युङ्क्ते तद्यां कां चात्राहुतिं जुहोत्याप्तां तां सतीं जुहोति



९.४.२.[२८]

तदाहुः । न जुहुयान्नेदतिरेचयानीति स वै जुहुयादेव कामेभ्यो वा एता आहुतयो हूयन्ते न वै कामानामतिरिक्तमस्ति

९.४.३.[१]

अथ प्रत्येत्य धिष्ण्यानां काले धिष्ण्यान्निवपति । अग्नय एते यद्धिष्ण्या अग्नीनेवैतच्चिनोति ता एता विशः क्षत्रमयमग्निश्चितः क्षत्रं च तद्विशं च

करोत्यमुं पूर्वं चिनोत्यथेमान्क्षत्रं तत्कृत्वा विशं करोति

९.४.३.[२]

एक एष भवति । एकस्थं तत्क्षत्रमेकस्थां श्रियं करोति बहव इतरे विशि
तद्भूमानं दधाति

९.४.३.[३]



पञ्चचितिक एष भवति । एकचितिका इतरे क्षत्रं तद्वीर्येणात्यादधाति क्षत्रं विशो
वीर्यवत्तरं करोत्यूर्ध्वमेतं चिनोति क्षत्रं तदूर्ध्वं चितिं भिश्चिनोति तिरश्च
इतरान्क्षत्राय तद्विशमधस्तादुपनिषादिनीं करोति

९.४.३.[४]

उभाभ्यां यजुष्मत्या च लोकम्पृणया चैतं चिनोति ।
लोकम्पृणयैवेमान्क्षत्रमेव तद्वीर्येणात्यादधाति क्षत्रं विशो वीर्यवत्तरं
करोति विशं क्षत्रादवीर्यतराम्

९.४.३.[५]

स यदिमांलोकम्पृणयैव चिनोति क्षत्रं वै लोकम्पृणा क्षत्रं तद्विश्यत्तारं दधात्युभयांश्चिनोत्यध्वरस्य चाग्नेश्चाध्वरस्य पूर्वानथाग्नेस्तस्योक्तो बन्धुर्यंयमेवाध्वरधिष्ण्यं निवपति तंतं चिनोत्याग्नीध्रीयं प्रथमं चिनोति तं हि प्रथमं निवपति दक्षिणत उदङ्ङासीनस्तस्योक्तो बन्धुः

९.४.३.[६]

तस्मिन्नष्टाविष्टका उपदधाति । अष्टाक्षरा गायत्री गायत्रो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोति तासामश्मा पृश्निर्नवमो नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तानेवास्मिन्नेतद्दधाति यश्चिते ऽग्निर्निधीयते स दशमो दश वै प्राणा मध्यमाग्नीध्रम् मध्यतस्तत्प्राणान्दधाति मध्ये ह वा एतत्प्राणाः सन्त इति चेति चात्मानमनुव्युच्चरन्ति



९.४.३.[७]

एकविंशतिं होत्रीय उपदधाति । एकविंशतिर्वेव परिश्रितस्तस्योक्तो बन्धुरेकादश ब्राह्मणाचंस्य एकादशाक्षरा वै त्रिष्टुप्त्रैष्टुभ इन्द्र ऐन्द्रो ब्राह्मणाचंस्यष्टावष्टावितरेषु तस्योक्तो बन्धुः

९.४.३.[८]

षण्मार्जालीये । षड्वा ऋतवः पितरस्तं हैतमृतवः पितरो दक्षिणतः पर्यूहिरे स एषामेष दक्षिणतः स वा इतीममुपदधातीतीमानित्यमुं विशं तत्क्षत्रमभिसम्मुखां करोति

९.४.३.[९]

अथैनान्परिश्रिद्भिः परिश्रयति । आपो वै परिश्रितोऽद्भिरेवैनांस्तत्परितनोति स वै पर्येव निदधाति क्षत्रं हैता अपां याः खातेन यन्त्यथ हैता विशो यानीमानि वृथोदकानि स यदमुं खातेन परिश्रयति क्षत्रे तत्क्षत्रं दधाति क्षत्रं क्षत्रेण परिश्रयत्यथ यदिमान्पर्येव निदधाति विशि तद्विशं दधाति विशा विशम् परिश्रयति तेषां वै यावत्य एव यजुष्मत्यस्तावत्यः परिश्रितो यावत्यो ह्येवामुष्य यजुष्मत्यस्तावत्यः परिश्रितः क्षत्रायैव तद्विशं कृतानुकरामनुवर्त्मानं करोति



९.४.३.[१०]

अथैषु पुरीषं निवपति । तस्योक्तो बन्धुस्तूष्णीमनिरुक्ता हि विडथाग्नीषोमीयस्य पशुपुरोडाशमनु दिशामवेष्टीर्निर्वपति दिश एषो ऽग्निस्ताभ्य एतानि हवींषि निर्वपति तदेना हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यते पञ्च भवन्ति पञ्च हि दिशः

९.४.३.[११]

ददाहुः । दशहविषमेवैतामिष्टिं निर्वपेत्सा सर्वस्तोमा सर्वपृष्ठा सर्वाणि चन्दांसि सर्वा दिशः सर्व ऋतवः सर्वम्वेतदयमग्निस्तदेनं हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यते दश भवन्ति दशाक्षरा विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणा आग्नेर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति

९.४.३.[१२]



तत्त्वै देवस्वामेव । एतानि हवींषि निर्वपेदेता ह देवताः सुता एतेन सवेन येनैतत्सोष्यमाणो भवति ता एवैतत्प्रीणाति ता अस्मा इष्टाः प्रीता एतं सवमनुमन्यन्ते ताभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै न तद्यदेता देवताः सुता एतेन सवेन यद्वैनमेता देवता एतस्मै सवाय सुवते तस्मादेता देवस्वः

९.४.३.[१३]

ता वै द्विनाम्न्यो भवन्ति । द्विनामा वै सवेना सुतो भवति यस्मै वै सवाय सूयते येन वा सवेन सूयते तदस्य द्वितीयं नाम

९.४.३.[१४]

अष्टौ भवन्ति । अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति

९.४.३.[१५]

तदाहुः । नैतानि हवींषि निर्वपेन्नेदतिरेचयानीति तानि वै निर्वपेदेव कामेभ्यो वा एतानि हवींषि निरुप्यन्ते न वै कामानामतिरिक्तमस्ति यद्वै किं च पशुपुरोडाशमनु हविर्निरुप्यते पशाविव स मध्यतो मेधो धीयत उभयानि निर्वपत्यध्वरस्य चाग्नेश्चाध्वरस्य पूर्वमथाग्नेस्तस्योक्तो बन्धुरुच्चैः पशुपुरोडाशो भवत्युपांश्वेतानीष्टिर्ह्यनुब्रूहि प्रेष्येति पशुपुरोडाशस्याहानुब्रूहि यजेत्येतेषामिष्टिर्हि समानः स्विष्टकृत्समानीडेष्टा देवता भवन्त्यसमवहितं स्विष्टकृते



९.४.३.[१६]

अथैन पूर्वाभिषेकेणाभिमृशति । सविता त्वा सवानां सुवतामेष वोऽमी राजा सोमो ऽस्माकं ब्राह्मणानां राजेति ब्राह्मणानेवापोद्धरत्यनाद्यान्करोति

९.४.४.[१]

अथ प्रातः प्रातरनुवाकमुपाकरिष्यन् । अग्निं युनक्ति युक्तेन समश्नवा इति तेन युक्तेन सर्वान्कामान्त्समश्नुते तं वै पुरस्तात्सर्वस्य कर्मणो युनक्ति तद्यत्किं चात्र ऊर्ध्वं क्रियते युक्ते तत्सर्वं समाधीयते

९.४.४.[२]

परिधिषु युनक्ति । अग्नय एते यत्परिधयोऽग्निभिरेव तदग्निं युनक्ति



९.४.४.[३]

स मध्यमं परिधिमुपस्पृश्य । एतद्यजुर्जपत्यग्निं युनज्मि शवसा घृतेनेति बलं वै शवोऽग्निं युनज्मि बलेन च घृतेन चेत्येतद्दिव्यं सुपर्णं वयसा बृहन्तमिति दिव्यो वा एष सुपर्णो वयसो बृहन्धूमेन तेन वयं गमेम ब्रध्नस्य विष्टपं स्वर्गं लोकं रोहन्तोऽधि नाकमुत्तममित्येतत्

९.४.४.[४]

अथ दक्षिणे । इमौ ते पक्षावजरौ पतत्रिणौ याभ्यां रक्षांस्यपहंस्यग्ने

ताभ्यां पतेम सुकृतामु लोकं यत्र ऋषयो जग्मुः प्रथमजाः पुराणा इत्यमूनेतदृषीनाह

९.४.४.[५]

अथोत्तरे । इन्दुर्दक्षः श्येन ऋतावा हिरण्यपक्षः शकुनो भुरण्युरित्यमृतं वै हिरण्यममृतपक्षः शकुनो भर्तेत्येतन्महान्त्सधस्थे ध्रुव आ निषत्तो नमस्ते अस्तु मा मा हिंसीरित्यात्मनः परिदां वदते



९.४.४.[६]

तद्यन्मध्यमं यजुः । स आत्माथ ये अभितस्तौ पक्षौ तस्मात्तेपक्षवती भवतः पक्षौ हि तौ

९.४.४.[७]

त्रिभिर्युनक्ति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्युनक्ति

९.४.४.[८]

अथ राजानमभिषुत्याग्नौ जुहोति । एष वै स सव एतद्वै तत्सूयते यमस्मै तमेता देवताः सवमनुमन्यन्ते याभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै न तद्यदग्नौ जुहोति तदग्निमभिषिञ्चति सोऽस्यैष दैव आत्मा सोमाभिषिक्तो भवत्यमृताभिषिक्तोऽथ भक्षयति तदात्मानमभिषिञ्चति सोऽस्यायमात्मा सोमाभिषिक्तो भवत्यमृताभिषिक्तः

९.४.४.[९]

अग्नौ हुत्वाथ भक्षयति । दैवो वा अस्यैष आत्मा मानुषोऽयं देवा उ वा अग्रेऽथ मनुष्यास्तस्मादग्नौ हुत्वाथ भक्षयति



९.४.४.[१०]

अथैनं विमुञ्चति । आप्त्वा तं कामं यस्मै कामायैनं युङ्क्ते यज्ञायज्ञियं स्तोत्रमुपाकरिष्यन्त्स्वर्गो वै लोको यज्ञायज्ञियमेतस्य वै गत्या एनं युङ्क्ते तदाप्त्वा तं कामं यस्मै कामायैनं युङ्क्ते

९.४.४.[११]

तं वै पुरस्तात्स्तोत्रस्य विमुञ्चति । स यदुपरिष्टात्स्तोत्रस्य विमुञ्चेत्पराङ्हैतं

स्वर्गं लोकमतिप्रणश्येदथ यत्पुरस्तात्स्तोत्रस्य विमुञ्चति तत्सम्प्रति स्वर्गं लोकमाप्त्वा विमुञ्चति

९.४.४.[१२]

परिधिषु विमुञ्चति । परिधिषु ह्येनं युनक्ति यत्र वाव योग्यं युञ्जन्ति तदेव तद्विमुञ्चन्ति

९.४.४.[१३]



स संध्योरुपस्पृश्य । एने यजुषी जपति तथा द्वे यजुषी त्रीन्परिधीननुविभवतो दिवो मूर्धासि पृथिव्या नाभिरिति दक्षिणे विश्वस्य मूर्धन्नधि तिष्ठसि श्रित इत्युत्तरे मूर्धवतीभ्यां मूर्धा ह्यस्यैषो ऽप्सुमतीभ्यामग्नेरेतद्वैश्वानरस्य स्तोत्रं यद्यज्ञायज्ञियं शान्तिर्वा आपस्तस्मादप्सुमतीभ्याम्

९.४.४.[१४]

द्वाभ्यां विमुञ्चति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्विमुञ्चति त्रिभिर्युनक्ति तत्पञ्च पञ्चचितिकोऽग्निः पञ्चऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति

९.४.४.[१५]

तं हैके । प्रायणीय एवातिरात्रे युञ्जन्त्युदयनीये विमुञ्चन्ति संस्थारूपं वा एतद्यद्विमोचनं किं पुरा संस्थायै संस्थारूपं कुर्यामेति न तथा कुर्यादहरहरहर्वा एष यज्ञस्तायतेऽहरहः संतिष्ठतेऽहरहरेनं स्वर्गस्य लोकस्य गत्यै युङ्क्तेऽहरहरेनेन स्वर्गं लोकं गचति तस्मादहरहरेव युञ्ज्यादहरहर्विमुञ्चेत्



९.४.४.[१६]

अथो यथा प्रायणीयेऽतिरात्रे । सामिधेनीरनूच्य ब्रूयादुदयनीय एवातो ऽनुवक्तास्मीति तादृक्तत्तस्मादहरहरेव युञ्ज्यदहरहर्विमुञ्चेत्

९.४.४.[१७]

तद्धैतचाण्डिल्यः । कङ्कतीयेभ्योऽहरहःकर्म प्रदिश्य प्रवव्राजाहरहरेव वो युनजानहरहर्विमुञ्चानिति तस्मादहरहरेव युञ्ज्यादहरहर्विमुञ्चेत्

९.५.१.[१]

अथातः पयोव्रततायै । पयोव्रतो दीक्षितः स्याद्देवेभ्यो ह वा अमृतमपचक्राम

९.५.१.[२]

ते होचुः । श्रमेण तपसेदमन्विचामेति तच्छ्रमेण तपसान्वैचंस्ते दीक्षित्वा पयोव्रता अभवन्नेतद्वै तपो यो दीक्षित्वा पयोव्रतोऽसत्तस्य घोषमाशुश्रुवुः



९.५.१.[३]

ते होचुः । नेदीयो वै भवति भूयस्तप उपायामेति ते त्रीन्त्स्तनानुपेयुस्तत्परादद्दशुः

९.५.१.[४]

ते होचुः । नेदीयो वै भवति भूयस्तप उपायामेति ते द्वौ स्तना उपेयुस्तन्नेदीयसः परादद्दशुः

९.५.१.[५]

ते होचुः । नेदीयो वै भवति भूयस्तप उपायामेति त एकं
स्तनमुपेयुस्तदधिजगाम न त्वभिपत्तुं शेकुः

९.५.१.[६]

ते होचुः अधि वा अगन्न त्वभिपत्तुं शक्नुमः सर्वं तप उपायामेति त उपवसथे
ऽनाशकमुपेयुरेतद्वै सर्वं तपो यदनाशकस्तस्मादुपवसथे नाश्नीयात्



९.५.१.[७]

तत्प्रातरभिपद्य । अभिषुत्याग्नावजुहवुस्तदग्नावमृतमदधुः सर्वेषामु
हैष देवानामात्मा यदग्निस्तद्यदग्नावमृतमदधुस्तदात्मन्नमृतमदधत
ततो देवा अमृता अभवन्

९.५.१.[८]

तद्यत्तदमृतं सोमः सः । तदद्यापि यजमानः श्रमेण तपसान्विचति स दीक्षित्वा
पयोव्रतो भवत्येतद्वै तपो यो दीक्षित्वा पयोव्रतोऽसत्तस्य घोषमाश्रृणोतीत्यहे
क्रय इति

९.५.१.[९]

स त्रीन्त्स्तनानुपैति । तत्परापश्यति स द्वौ स्तना उपैति तन्नेदीयसः परापश्यति स एकं स्तनमुपैति तदधिगचति न त्वभिपत्तुं शक्नोति स उपवसथे ऽनाशकमुपैत्येतद्वै सर्वं तपो यदनाशकस्तस्मादुपवसथे नाश्नीयात्

९.५.१.[१०]

तत्प्रातरभिपद्य । अभिषुत्याग्नौ जुहोति तदग्नावमृतं दधात्यथ भक्षयति तदात्मन्नमृतं धत्ते सोऽमृतो भवत्येतद्वै मनुष्यस्यामृतत्वं यत्सर्वमायुरेति तथो हानेनात्मना सर्वमायुरेति



९.५.१.[११]

अग्नौ हुत्वाथ भक्षयति । दैवो वा अस्यैष आत्मा मानुषोऽयं देवा उ वा अग्रेऽथ मनुष्यास्तस्मादग्नौ हुत्वाथ भक्षयति

९.५.१.[१२]

अथातः समिष्टयजुषामेव मीमांसा । देवाश्चासुराश्चोभये प्राजापत्याः प्रजापतेः पितुर्दायमुपेयुर्वाचमेव सत्यानृते सत्यं चैवानृतं च त उभय एव सत्यमवदन्नुभयेऽनृतं ते ह सदृशं वदन्तः सदृशा एवासुः

९.५.१.[१३]

ते देवा उत्सृज्यानृतम् । सत्यमन्वालेभिरेऽसुरा उ होत्सृज्य सत्यमनृतमन्वालेभिरे

९.५.१.[१४]



तद्धेदं सत्यमीक्षां चक्रे । यदसुरेष्वास देवा वा उत्सृज्यानृतं सत्यमन्वालप्सत हन्त तदयानीति तद्देवानाजगाम

९.५.१.[१५]

अनृतमु हेक्षां चक्रे । यद्देवेष्वासासुरा वा उत्सृज्य सत्यमनृतमन्वालप्सत हन्त तदयानीति तदसुरानाजगाम

९.५.१.[१६]

ते देवाः । सर्वं सत्यमवदन्त्सर्वमसुरा अनृतं ते देवा आसक्ति सत्यं वदन्त
ऐषावीरतरा इवासुरनाढ्यतरा इव तस्मादु हैतद्य आसक्ति सत्यं
वदत्यैषावीरतर इवैव भवत्यनाढ्यतर इव स ह त्वेवान्ततो भवति देवा
ह्येवान्ततोऽभवन्

९.५.१.[१७]

अथ हासुराः । आसक्त्यनृतं वदन्त ऊष इव पिपिसुराढ्या इवासुस्तस्मादु हैतद्य
आसक्त्यनृतं वदत्यूष इवैव पिस्यत्याढ्य इव भवति परा ह त्वेवान्ततो भवति
परा ह्यसुरा अभवन्



९.५.१.[१८]

तद्यत्तत्सत्यम् । त्रयी सा विद्या ते देवा अब्रुवन्यज्ञं कृत्वेदं सत्यं तनवामहा
इति

९.५.१.[१९]

ते दीक्षणीयां निरवपन् । तदु हासुरा अनुबुबुधिरे यज्ञं वै कृत्वा तद्देवाः
सत्यं तन्वते प्रेत तदाहरिष्यामो यदस्माकं तत्रेति तस्य

समिष्टयजुरहुतमासाथाजग्मुस्तस्मात्तस्य यज्ञस्य समिष्टयजुर्न जुह्वति ते देवा असुरान्प्रतिदृश्य समुल्लुप्य यज्ञमन्यत्कर्तुं दध्रिरेऽन्यद्वै कुर्वन्तीति पुनः प्रेयुः

९.५.१.[२०]

तेषु प्रेतेषु । प्रायणीयं निरवपंस्तदु हासुरा अन्वेव बुबुधिरे तस्य शम्योरुक्तमासाथाजग्मुस्तस्मात्स यज्ञः शम्य्वन्तस्ते देवा असुरान्प्रतिदृश्य ममुल्लुप्य यज्ञमन्यदेव कर्तुं दध्रिरेऽन्यद्वै कुर्वन्तीति पुनरेव प्रेयुः



९.५.१.[२१]

तेषु प्रेतेषु । राजानं क्रीत्वा पर्युह्याथास्मा आतिथ्यं हविर्निरवपंस्तदु हासुरा अन्वेव बुबुधिरे तस्येडोपहूतासाथाजग्मुस्तस्मात्स यज्ञ इडान्तस्ते देवा असुरान्प्रतिदृश्य समुल्लुप्य यज्ञमन्यदेव कर्तुं दध्रिरेऽन्यद्वै कुर्वन्तीति पुनरेव प्रेयुः

९.५.१.[२२]

तेषु प्रेतेषु । उपसदोऽतन्वत ते तिस्र एव सामिधेनीरनूच्य देवता एवायजन्न प्रयाजान्नानुयाजानुभयतो यज्ञस्योदसादयन्भूयिष्ठं हि तत्रात्वरन्त

तस्मादुपसत्सु तिस्र एव सामिधेनीरनूच्य देवता एव यजति न प्रयाजान्नानुयाजानुभयतो यज्ञस्योत्सादयति

९.५.१.[२३]

त उपवसथेऽग्नीषोमीयं पशुमालेभिरे । तदु हासुरा अन्वेव बुबुधिरे तस्य समिष्टयजूंष्यहुतान्यासुरथाजग्मुस्तस्मात्तस्य पशोः समिष्टयजूंषि न जुह्वति ते देवा असुरान्प्र



९.५.१.[२४]

तेषु प्रेतेषु । प्रातः प्रातःसवनमतन्वत तदु हासुरा अन्वेव बुबुधिरे तस्यैतावत्कृतमास यावत्प्रातःसवनमथाजग्मुस्ते देवा असुरान्प्र

९.५.१.[२५]

तेषु प्रेतेषु । माध्यन्दिनं सवनमतन्वत तदु हासुरा अन्वेव बुबुधिरे तस्यैतावत्कृतमास यावन्माध्यन्दिनमथाजग्मुस्ते देवा असुरान्प्र

९.५.१.[२६]

तेषु प्रेतषु । सवनीयेन पशुनाचरंस्तदु हासुरा अन्वेव बुबुधिरे तस्यैतावत्कृतमास यावदेतस्य पशोः क्रियतेऽथाजग्मुस्ते देवा असुरान्प्र

९.५.१.[२७]

तेषु प्रेतेषु । तृतीयसवनमतन्वत तत्समस्थापयन्यत्समस्थापयंस्तत्सर्वं सत्यमाप्नुवंस्ततोऽसुरा अपपुप्रुविरे ततो देवा अभवन्परासुरा भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद



९.५.१.[२८]

ते देवा अब्रुवन् । ये न इमे यज्ञाः सामिसंस्थिता यानिमान्विजहतोऽगामोप तज्जानीत यथेमान्त्संस्थापयामेति तेऽब्रुवंश्चेतयध्वमिति चितिमिचतेति वाव तदब्रुवंस्तदिचत यथेमान्यज्ञान्त्संस्थापयामेति

९.५.१.[२९]

ते चेतयमानाः । एतानि समिष्टयजूंष्यपश्यंस्तान्यजुहवुस्तैरेतान्यज्ञान्त्समस्थापयन्यत्समस्थापयं

स्तस्मात्संस्थितयजूंष्यथ यत्समयजंस्तस्मात्समिष्टयजूंषि

९.५.१.[३०]

ते वा एते नव यज्ञाः । नवैतानि समिष्टयजूंषि तद्यदेतानि जुहोत्येतानेवैतद्यज्ञान्त्संस्थापयत्युभयानि जुहोत्यध्वरस्य चाग्नेश्चाध्वरस्य पूर्वाण्यथाग्नेस्तस्योक्तो बन्धुः

९.५.१.[३१]



द्वे अग्नेर्जुहोति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैतद्यज्ञं संस्थापयतीष्टो यज्ञो भृगुभिरिष्टो अग्निराहुतः पिपर्तु न इति

९.५.१.[३२]

तान्युभयान्येकादश सम्पद्यन्ते । एकादशाक्षरा त्रिष्टुब्वीर्यं त्रिष्टुब्वीर्यमेवैतद्यज्ञमभिसम्पादयति

९.५.१.[३३]

यद्वेवैकादश । एकादशाक्षरा वै त्रिष्टुप्त्रैष्टुभ इन्द्र इन्द्रो यज्ञस्यात्मेन्द्रो देवता तद्य एव यज्ञस्यात्मा या देवता तस्मिन्नेवैतद्यज्ञमन्ततः प्रतिष्ठापयति

९.५.१.[३४]

समिष्टयजूंषि हुत्वावभृथं यन्ति । अवभृथादुदेत्योदयनीयेन चरित्वानूबन्ध्यस्य पशुपुरोडाशमनु देविकानां हवींषि निर्वपति

९.५.१.[३५]



एतद्वै प्रजापतिः । प्राप्य राद्धेवामन्यत स दिक्षु प्रतिष्ठायेदं सर्वं दधद्विदधदतिष्ठद्यद्दधद्विदधदतिष्ठत्तस्माद्धाता तथैवैतद्यजमानो दिक्षु प्रतिष्ठायेदं सर्वं दधद्विदधत्तिष्ठति

९.५.१.[३६]

यद्वेवैतानि हवींषि निर्वपति । दिश एषोऽग्निस्ता उ एवामूः पुरस्ताद्दर्भस्तम्बं च लोगेष्टकाश्चोपदधाति ताः प्राणभृतः प्रथमायां चितौ सर्वैव द्वितीया सर्वा तृतीया सर्वा चतुर्थ्यथ पञ्चम्यै चितेरसपत्ना नाकसदः पञ्चचूडास्ता ऊर्ध्वा उत्क्रामन्त्य आयंस्ताभ्यः प्रजापतिरबिभेत्सर्वं वा इदमिमाः पराच्योऽत्येष्यन्तीति ता धाता भूत्वा पर्यगचत्तासु प्रत्यतिष्ठत्

९.५.१.[३७]

स यः स धातासौ स आदित्यः । अथ यत्तद्दिशां परमं क्रान्तमेतत्तद्यस्मिन्नेष एतत्प्रतिष्ठितस्तपति

९.५.१.[३८]

स यः स धातायमेव स धात्रः । द्वादशकपालः पुरोडाशो द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरः प्रजापतिः प्रजापतिर्धाताथ यत्तद्दिशां परमं क्रान्तमेतानि तानि पूर्वाणि हवींष्यनुमत्यै चरूराकायै चरुः सिनीवाल्यै चरुः कुह्वै चरुस्तद्यदेतानि निर्वपति यदेव तद्दिशां परमं क्रान्तं तस्मिन्नेवैनमेतत्प्रतिष्ठापयति तं सर्वं जुहोत्येतस्यैव कृत्स्नतायै



९.५.१.[३९]

ता वा एता देव्यः । दिशो ह्येताश्चन्दांसि वै दिशश्चन्दांसि देव्योऽथैष कः प्रजापतिस्तद्यद्देव्यश्च कश्च तस्माद्देविकाः पञ्च भवन्ति पञ्च हि दिशः

९.५.१.[४०]

तदाहुः । नैतानि हवींषि निर्वपेन्नेदतिरेचयानीति तानि वै निर्वपेदेव कामेभ्यो वा एतानि हवींषि निरुप्यन्ते न वै कामानामतिरिक्तमस्ति यद्वै किं च पशुपुरोडाशमनु हविर्निरुप्यते पशावेव स मध्यतो मेधो धीयत उभयानि निर्वपत्यध्वरस्य चाग्नेश्चाध्वरस्य पूर्वमथाग्नेस्तस्योक्तो बन्धुरुच्चैः पशुपुरोडाशो भवत्युपांश्वेतानीष्टिर्ह्यनुब्रूहि प्रेष्येति पशुपुरोडाशस्याहानुब्रूहि यजेत्येतेषामिष्टिर्हि समानः स्विष्टकृत्समानीडा

९.५.१.[४१]

तस्य वा एतस्य पशोः । जुह्वति समिष्टयजूंष्यभ्यवयन्ति हृदयशूलेनावभृथं संस्था ह्येष पशुर्हृदयशूलेन चरित्वा



९.५.१.[४२]

प्रत्येत्य वैश्वकर्मणानि जुहोति । विश्वानि कर्मण्ययमग्निस्तान्यस्यात्र सर्वाणि कर्माणि कृतानि भवन्ति तान्येतत्प्रीणाति तानि हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यतेऽथो विश्वकर्मायमग्निस्तमेवैतत्प्रीणाति

९.५.१.[४३]

यद्वेव वैश्वकर्मणानि जुहोति । प्रायणं च ह्यग्नेरुदयनं च सावित्राणि प्रायणं वैश्वकर्मणान्युदयनं स यत्सावित्राण्येव जुहुयान्न वैश्वकर्मणानि यथा प्रायणमेव कुर्यान्नोदयनं तादृक्तदथ यद्वैश्वकर्मणान्येव जुहुयान्न सावित्राणि यथोदयनमेव कुर्यान्न प्रायणं तादृक्तदुभयानि जुहोति प्रायणं च तदुदयनंचकरोति

९.५.१.[४४]

अष्टावसूनि भवन्ति । एवमिमानि तद्यथा प्रायणंतथोदयनं करोतिस्वाहाकारो ऽमीषां नवमो भवत्येवमेषां तद्यथा प्रायणं तथोदयनं करोत्याहुतिरमीषां दशमी भवत्येवमेषां तद्यथा प्रायणं तथोदयनं करोति संततां तत्राहुतिं जुहोति रेतो वै तत्र यज्ञो रेतसोऽविच्छेदाय स्रुवेणेह स्वाहाकारं निरुक्तं हि रेतो जात भवति

९.५.१.[४५]

यदाकूतात् । समसुस्रोद्धृदो वा मनसो वा सम्भृतं चक्षुषो वेत्येतस्माद्ध्येतत्सर्वस्मादग्रे कर्म समभवत्तदनु प्रेत सुकृतामु लोकं यत्र ऋषयो जग्मुः प्रथमजाः पुराणा इत्यमूनेतदृषीनाह

९.५.१.[४६]

एतं सधस्थ । परि ते ददामीति स्वर्गो वै लोकः सधस्थस्तदेनं स्वर्गाय लोकाय परिददाति यमावहाचेवधिं जातवेदाः अन्वागन्ता यज्ञपतिर्वो अत्र तं स्म जानीत परमे व्योमन्निति यथैव यजुस्तथा बन्धुः

९.५.१.[४७]

एतं जानाथ । परमे व्योमन्देवाः सधस्था विद रूपमस्य यदागचात्पथिभिर्देवयानैरिष्टापूर्ते कृणवथाविरस्मा इति यथैव यजुस्तथा बन्धुरुद्बुध्यस्वाग्ने येन वहसीति तयोरुक्तो बन्धुः



९.५.१.[४८]

प्रस्तरेण परिधिना । स्रुचा वेद्या च बर्हिषा ऋचेमं यज्ञं नो नय स्वर्देवेषु गन्तव इत्येतैर्नो यज्ञस्य रूपैः स्वर्गं लोकं गमयेत्येतत्

९.५.१.[४९]

यद्दत्तं यत्परादानम् । यत्पूर्तं याश्च दक्षिणाः तदग्निर्वैश्वकर्मणः

स्वर्देवेषु नो दधदिति यच्चैव सम्प्रति दद्नो यच्चासम्प्रति तन्नो ऽयमग्निर्वैश्वकर्मणः स्वर्गे लोके दधात्वित्येतत्

९.५.१.[५०]

यत्र धारा अनपेताः । मधोर्घृतस्य च याः तदग्निर्वैश्वकर्मणः स्वर्देवेषु णो दधदिति यथैव यजुस्तथा बन्धुः

९.५.१.[५१]



अष्टौ वैश्वकर्मणानि जुहोति । अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति

९.५.१.[५२]

वैश्वकर्मणानि हुत्वा नाम करोति । यदा वै सर्वः कृत्स्नो जातो भवत्यथ नाम कुर्वन्त्यत्र वा एष सर्वः कृत्स्नो जातो भवति

९.५.१.[५३]

नाम कृत्वाथैनमुपतिष्ठते । सर्वेण वा एष एतमात्मना चिनोति स यदेतामत्रात्मनः परिदां न वदेतात्र हैवास्यैष आत्मानं वृञ्जीताथ यदेतामत्रात्मनः परिदां वदते तयो हास्यैष आत्मानं न वृङ्क्ते ये अग्नयः पाञ्चजन्या अस्यां पृथिव्यामधि तेषामसि त्वमुत्तमः प्र नो जीवातवे सुवेति ये के चाग्नयः पञ्चचितिका अस्यां पृथिव्यामधि तेषामसि त्वं सत्तमः प्रो अस्मान्जीवनाय सुवेत्येतदनुष्टुभा वाग्वा अनुष्टुब्वागु सर्वाणि चन्दांसि सर्वैरेवास्मा एतच्चन्दोभिर्निह्नुत उपस्थायाग्निं समारोह्य निर्मथ्योदवसानीयया यजते

९.५.१.[५४]



अथ मैत्रावरुण्या पयस्यया यजते । देवत्रा वा एष भवति य एतत्कर्म करोति दैवम्वेतन्मिथुनं यन्मित्रावरुणौ स यदेतयानिष्ट्वा मानुष्यां चरेत्प्रत्यवरोहः स यथा दैवः सन्मानुषः स्यात्ताद्दक्तदथ यदेतया मैत्रावरुण्या पयस्यया यजते दैवमेवैतन्मिथुनमुपैत्येतयेष्ट्वा कामं यथाप्रतिरूपं चरेत्

९.५.१.[५५]

यद्वेवैतया मैत्रावरुण्या पयस्यया यजते । प्रजापतेर्विस्रस्ताद्रेतः परापतत्तं यत्र देवाः समस्कुर्वंस्तदस्मिन्नेतया मैत्रावरुण्या पयस्यया रेतो ऽदधुस्तथैवास्मिन्नयमेतद्दधाति

९.५.१.[५६]

स यः स प्रजापतिर्व्यस्रंसत । अयमेव स योऽयमग्निश्चीयतेऽथ यदस्मात्तद्रेतः परापतदेषा सा पयस्या मैत्रावरुणी भवति प्राणोदानौ वै मित्रावरुणौ प्राणोदाना उ वै रेतः सिक्तं विकुरुतः पयस्या भवति पयो हि रेतो यज्ञो भवति यज्ञो ह्येव यज्ञस्य रेत उपांशु भवत्युपांशु हि रेतः सिच्यतेऽन्ततो भवत्यन्ततो हि रेतो धीयते



९.५.१.[५७]

तस्यै वाजिनेन चरन्ति । तस्मिन्दक्षिणां दधाति तूपरौ मिथुनौ दद्यादित्यभ्याज्ञायेनैव मन्य इति ह स्माह माहित्थिः स्रवत्यु हैषाग्निचित आहुतिः सोमाहुतिर्यामनिष्टके जुहोति

९.५.१.[५८]

स स्वयमातृणा एवोपदधीत । इमे वै लोकाः स्वयमातृणा इम उ लोका एषोऽग्निश्चितः

९.५.१.[५९]

ऋतव्या एवोपदधीत । संवत्सरो वा ऋतव्याः संवत्सर एषोऽग्निश्चितः

९.५.१.[६०]
विश्वज्योतिष एवोपदधीत । एता वै देवता विश्वज्योतिष एता उ देवता एषोऽग्निश्चितः

९.५.१.[६१]



पुनश्चितिमेवोपदधीत । पुनर्यज्ञो हैष उत्तरा हैषा देवयज्या
पुनर्यज्ञमेवैतदुपधत्त उत्तरामेव देवयज्यामुप हैनं पुनर्यज्ञो न
तथा कुर्याद्यो वाव चितेऽग्निर्निधीयते तामेवेष्टकामेष सर्वो
ऽग्निरभिसम्पद्यते तद्यदग्नौ जुहोति तदेवास्य यथा सर्वस्मिञ्चाण्डिलेऽग्नौ
संचिते पक्षपुचवत्याहुतयो हुताः स्युरेवमस्यैता आहुतयो हुता भवन्ति

९.५.१.[६२]

सर्वाणि वा एष भूतानि । सर्वान्देवान्गर्भो भवति योऽग्निं बिभर्ति स यो
ऽसंवत्सरभृतं चिनुत एतानि ह स सर्वाणि भूतानि गर्भं भूतं निर्हते यो न्वेव
मानुषं गर्भं निर्हन्ति तन्न्वेव परिचक्षतेऽथ किं य एतं देवो ह्येष
नासंवत्सरभृतस्यऽर्त्विजा भवितव्यमिति ह स्माह वात्स्यो नेदस्य देवरेतसस्य

निर्हण्यमानस्य मेद्यसानीति

९.५.१.[६३]

षण्मास्यमन्तमं चिन्वीतेत्याहुः । षण्मास्या वा अन्तमा गर्भा जाता जीवन्तीति स यद्यसंवत्सरभृते महदुक्थं शंसेद्दगशीतीः शंसेदसर्वं वै तद्यदसंवत्सरभृतोऽसर्वं तद्यद्दगशीतयो विकृष्टं त्वेनं स भूयो विकर्षेद्यदि चैव संवत्सरभृतः स्याद्यदि चासंवत्सरभृतः सर्वमेव महदुक्थं शंसेत्



९.५.१.[६४]

अथ ह शाण्डिल्यायनः प्राच्यां जगाम । तं ह दैयाम्पातिरुवाच शाण्डिल्यायन कथमग्निश्चेतव्यो ग्लायामोऽह संवत्सरभृतायाग्निमु चिकीषामह इति

९.५.१.[६५]

स होवाच । कामं न्वा एनं स चिन्वीत येन पुरा संवत्सरं भृतः स्यात्तं ह्येव तं भृतं सन्तं चिनुत इति

९.५.१.[६६]

काममव्वेवैनं स चिन्वीत । यः संवत्सरमभिषविष्यन्त्स्यादेष वा एनं प्रत्यक्षमन्नेन बिभर्त्येताभिराहुतिभिः

९.५.१.[६७]

काममव्वेवैनं स चिन्वीत । यः संवत्सरमग्निहोत्रं जुहुयाअद्भिर्भर्ति वा एनमेष योऽग्निहोत्रं जुहोति



९.५.१.[६८]

काममव्वेवैनं स चिन्वीत । यः संवत्सरं जातः स्यात्प्राणो वा अग्निस्तमेतद्बिभर्त्यथ ह वै रेतः सिक्तं प्राणोऽन्ववरोहति तद्विन्दते तद्यज्जातंजातं विन्दते तस्माज्जातवेदास्तस्मादप्येवंवित्कामं सद्योभृतं चिन्वीत यदु ह वा एवंवित्पिबति वा पाययति वा तदेवास्य यथा सर्वस्मिञ्छाण्डिलेऽग्नौ संचिते पक्षपुचवत्याहुतयो हुताः स्युरेवमस्यैता आहुतयो हुता भवन्ति

९.५.२.[१]

इन्द्र एतत्सर्वंच्चमपष्यत् न्यूनस्याप्त्या अतिरिक्तयै व्यृद्धस्य समृद्ध्या अथ ह वा ईश्वरोऽग्निं चित्वा किंचिद्दौरितमापत्तोर्वि वा ह्वलितोर्यद्वा यदा ह वा एतच्च्यापर्णः सायकायनः शुश्रावाथ हैतत्कर्मोपदधर्ष

९.५.२.[२]

सैषा त्रयस्य समृद्धिः । अग्नेः समृद्धिर्योऽग्निं चिनुते तस्य समृद्धिर्योऽग्निं चिनोति तस्य समृद्धिः



९.५.२.[३]

तद्यदेतेनोपतिष्ठते । यदेवास्यात्र विद्वान्वाविद्वाति वा रेचयति न वाभ्यापयति तदेवास्यैतेन सर्वमाप्तं भवति यदस्य किं चानाप्तं य उ तस्यामनुष्टुभ्यृचि कामोऽत्रैव तमाप्नोत्यथा एतस्मादेवैतत्कर्मणो रक्षांसि नाष्ट्रा अपहन्ति नो हैनमनुव्याहारिण स्तृण्वते तस्मादप्येवंवित्कामं परस्मा अग्निं चिनुयादीश्वरो ह श्रेयान्भवितोः

९.५.२.[४]

वार्त्रहत्याय शवसे । सहदानुं पुरुहूत क्षियन्तमिति वार्त्रघ्नीभ्याम् प्रथमाभ्यामुपतिष्टत एतद्वै देवा वृत्रं पाप्मानं हत्वापहतपाप्मान

एतत्कर्माकुर्वत तथैवैतद्यजमानो वृत्रं पाप्मानं
हत्वापहतपाप्मैतत्कर्म कुरुते

९.५.२.[५]

वि न इन्द्र मृधो जहि । मृगो न भीमः कुचरो गिरिष्ठा इति वैमृधीभ्यां
द्वितीयाभ्यामेतद्वै देवा मृधः पाप्मानं हत्वापहतपाप्मान एतत्कर्माकुर्वत
तथैवैतद्यजमानो मृधः पाप्मानं हत्वापहतपाप्मैतत्कर्म कुरुते



९.५.२.[६]

वैश्वानरो न ऊतये । पृष्टो दिवि पृष्टो अग्निः पृथिव्यामिति वैश्वानरीभ्यां
तृतीयाभ्यामेतद्वै देवा वैश्वानरेण पाप्मानं दग्ध्वापहतपाप्मान
एतत्कर्माकुर्वत तथैवैतद्यजमानो वैश्वानरेण पाप्मानं
दग्ध्वापहतपाप्मैतत्कर्म कुरुते

९.५.२.[७]

अश्याम त काममग्ने तवोतीति । एकया कामवत्यैतद्वै देवाः
पाप्मानमपहत्यैकया कामवत्यैकधान्ततः सर्वान्कामानात्मन्नकुर्वत
तथैवैतद्यजमानः षड्टचेन पाप्मानमपहत्यैकया कामवत्येकधान्ततः

सर्वान्कामानात्मन्कुरुते

९.५.२.[८]

सप्तर्चं भवति । सप्तचितिकोऽग्निः सप्तऽर्तवः सप्त दिशः सप्त देवलोकाः सप्त स्तोमाः सप्त पृष्ठानि सप्त चन्दांसि सप्त ग्राभ्याः पशवः सप्तारण्याः सप्त शोर्षन्प्राणा यत्किं च सप्तविधमधिदेवतमध्यात्मं तदेनेन सर्वमाप्नोति ता अनुष्टुभमभिसम्पद्यन्ते वाग्वा अनुष्टुब्वाचैवास्य तदाप्नोति यदस्य किं चानाप्तम्



९.५.२.[९]

अष्टर्चेनोपतिष्ठेतेत्यु हैक आहुः । वयं ते अद्य ररिमा हि काममिति द्वितीयया कामवत्या सप्त पूर्वास्तदष्टावष्टाक्षरो गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्य तदाप्नोति यदस्य किं चानाप्तमथो एवं समं देवते भजेते इति न तथा कुर्यादेता वाव सप्ताष्टावनुष्टुभो भवन्ति स योऽष्टर्चे कामोऽत्रैव तमाप्नोति

९.५.२.[१०]

ऐन्द्राग्नीभिरुपतिष्ठते । ऐन्द्राग्नोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्रैवास्य

तदाप्नोति यदस्य किं चानाप्तमिन्द्राग्नी वै सर्वे देवाः सर्वदेवत्यो
ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्य तदाप्नोति यदस्य किं चानाप्तम्

९.५.२.[११]

तद्धैके । कर्मणः कर्मण एवैतां प्रतिपदं कुर्वतेऽपहतपाप्मान
एतत्कर्म करवामहा इति पुरीषवतीं चितिं कृत्वोपतिष्ठेतेत्यु हैक आहुस्तत्र हि सा
सर्वा कृत्स्ना भवतीति स यथा कामयेत तथा कुर्यादिति नु चयनस्याथातोऽचयनस्य

९.५.२.[१२]



त्रयो ह वै समुद्राः । अग्निर्यजुषां महाव्रतं साम्नां महदुक्थमृचां स य
एतानि परस्मै करोत्येतान्ह स समुद्राञ्छोषयते ताञ्छुष्यतोऽन्वस्य चन्दांसि
शुष्यन्ति चन्दांस्यनु लोको लोकमन्वात्मात्मानमनु प्रजा पशवः स ह श्वः श्व
एव पापीयान्भवति य एतानि परस्मै करोति

९.५.२.[१३]

अथ य एतान्यकृत्वा । पस्मा अपि सर्वैरन्यैर्यज्ञक्रतुभिर्याजयेदेतेभ्यो हैवास्य
समुद्रेभ्यश्चन्दांसि पुनराप्यायन्ते चन्दांस्यनु लोको लोकमन्वात्मात्मानमनु
प्रजा पशवः स ह श्वः श्व एव श्रेयान्भवति य एतानि परस्मै न करोत्यथैष ह
वा अस्य दैवोऽमृत आत्मा स य एतानि परस्मै करोत्येतं ह स दैवमात्मानम्

परस्मै प्रयचत्यथ शुष्क एव स्थाणुः परिशिष्यते

९.५.२.[१४]

तद्धैके । कृत्वा कुर्वते वा प्रति वा कारयन्त एषा प्रायश्चित्तिरिति न तथा कुर्याद्यथा शुष्कं स्थाणुमुदकेनाभिषिञ्चेतादृक्तत्पूयेद्वा वै स वि वा म्रित्येन्नैतस्य प्रायश्चित्तिरस्तीत्येव विद्यात्

९.५.२.[१५]



अथ ह स्माह शाण्डिल्यः । तुरो ह कावषेयः कारोत्यां देवेभ्योऽग्निं चिकाय तं ह देवाः पप्रचुर्मुने यदलोक्यामग्निचित्यामाहुरथ कस्मादचैषीरिति

९.५.२.[१६]

स होवाच । किं नु लोक्यं किमलोक्यमात्मा वै यज्ञस्य यजमानोऽङ्गान्यृत्विजो यत्र वा आत्मा तदङ्गानि यत्रो अङ्गानि तदात्मा यदि वा ऋत्विजोऽलोका भवन्त्यलोक उ तर्हि यजमान उभये हि समानलोका भवन्ति दक्षिणासु त्वेव न संवदितव्यं संवादेनैवऽर्त्विजोऽलोका इति

१०.१.१.[१]

अग्निरेष पुरस्ताच्चीयते  संवत्सर उपरिष्टान्महदुक्थं शस्यते
प्रजापतेर्विस्रस्तस्याग्रं रसोऽगचत्

१०.१.१.[२]

स यः स प्रजापतिर्व्यस्रंसत  संवत्सरः सोऽथ यान्यस्य तानि पर्वाणि
व्यस्रंसन्ताहोरात्राणि तानि



१०.१.१.[३]

स यः स संवत्सरः प्रजापतिर्व्यस्रंसत  अयमेव स योऽयमग्निश्चीयतेऽथ
यान्यस्य तान्यहोरात्राणि पर्वाणि व्यस्रंसन्तेष्टका एव तास्तद्यदेता उपदधाति
यान्येवास्य तान्यहोरात्राणि पर्वाणि व्यस्रंसन्त तान्यस्मिन्नेतत्प्रतिदधाति
तदेतदत्रैव यजुश्चितमत्राप्तम्

१०.१.१.[४]

अथ योऽस्य सोऽग्रं रसोऽगचत्  महत्तदुक्थं तमस्य तं
रसमृक्षामाभ्यामनुयन्ति तद्यत्तत्र यजुः पुरस्तादेत्यभिनेतैव तदेति यथादो

मेऽमुत्रैकं तदाहरिष्यामीत्येवं त्

१०.१.१.[५]

तमध्वर्युर्ग्रहेण गृह्णाति  यद्गृह्णाति तस्माद्ग्रहस्तस्मिन्नद्यजुः पुरस्तादेति तं संवत्सर आप्नुवन्ति न्नुद्गाता महाव्रतेन रसं दधाति सर्वाणि हैतानि सामानि यन्महाव्रतं तदस्मिन्त्सर्वैः सामभी रसं दधाति तस्मिन्होता महतोक्थेन रसं दधाति सर्वा हैता ऋचो यन्महदुक्थं तदस्मिन्त्सर्वाभिर्ऋग्भी रसं दधाति



१०.१.१.[६]

ते यदा स्तुवते यदानुशंसति  अथास्मिन्नेतं वषट्कृते जुहोति तदेनमेष रसोऽप्येति न वै महाव्रतमिदं स्तुतं शेत इति पश्यन्ति नो महदिदमुक्थमित्यग्निमेव पश्यन्त्यात्मा ह्यग्निस्तदेनमेते उभे रसो भूत्वापीत ऋक्च साम च तदुभे ऋक्षामे यजुरपीतः

१०.१.१.[७]

स एष मिथुनोऽग्निः  प्रथमा च चितिर्द्वितीया च तृतीया च चतुर्थी चाथ पञ्चम्यै चितेर्यश्चितेऽग्निर्निधीयते तन्मिथुनं मिथुन उ एवायमात्मा

१०.१.१.[८]

अङ्गुष्ठा इति पुमांसः  अङ्गुलय इति स्त्रियः कर्णाविति पुमांसौ भ्रुवाविति स्त्रिया ओष्ठाविति पुमांसौ नासिके इति स्त्रियौ दन्ता इति पुमांसो जिह्वेति स्त्री सर्व एव मिथुनः सोऽनेन मिथुनेनात्मनैतं मिथुनमग्निमप्येति

१०.१.१.[९]



एषात्रापीतिः  अप्यहैवं मिथुन इत्थं ह त्वेवापि मिथुनो वागेवेयं योऽयमग्निश्चितो वाचा हि चीयतेऽथ यश्चितेऽग्निर्निधीयते स प्राणः प्राणो वै वाचो वृषा प्राणो मिथुनं वाग्वेवायमात्माथ य आत्मन्प्राणस्तन्मिथुनं सोऽनेन मिथुनेनात्मनैतं मिथुनमग्निमप्येति

१०.१.१.[१०]

एषो अत्रापीतिः  न ह वा अस्यापुत्रतायै का चन शङ्का भवति य एवमेतौ मिथुनावात्मानं चाग्निं च वेदान्नं ह त्वेवायमात्मा दक्षिणान्नं वनुते यो न आत्मेति ह्यप्यृषिणाभ्युक्तम्

१०.१.१.[११]

तदिदमन्नं जग्धं द्वेधा भवति  यदस्यामृतमूर्ध्वं तन्नाभेरूर्ध्वैः
प्राणैरुच्चरति तद्वायुमप्येत्यथ यन्मर्त्यं पराक्तन्नाभिमत्येति तद्द्वयम्
भूत्वेमामप्येति मूत्रं च पुरीषं च तद्यदिमामप्येति योऽयमग्निश्चितस्तं
तदप्येत्यथ यद्वायुमप्येति यश्चितेऽग्निर्निधीयते तं तदप्येत्येषो एवात्रापीतिः

१०.१.२.[१]

प्रजापतिरिमांलोकानैप्सत्  स एतं वयोविधमात्मानमपश्यदग्निं तं व्यधत्त
तेनेमं लोकमाप्नोत्स द्वितीयं वयोविधमात्मानमपश्यन्महाव्रतं
तद्व्यधत्त तेनान्तरिक्षमाप्नोत्स तृतीयं
वयोविधमात्मानमपश्यन्महदुक्थं तद्व्यधत्त तेन दिवमाप्नोत्



१०.१.२.[२]

अयं वाव लोक एषोऽग्निश्चितः  अन्तरिक्षं महाव्रतं द्यौर्महदुक्थं
तस्मादेतानि सर्वाणि सहोपेयादग्निं महाव्रतं महदुक्थं सह हीमे लोका
असृज्यन्त तद्यदग्निः प्रथमश्चीयतेऽयं ह्येषां लोकानाम्
प्रथमोऽसृज्यतेत्यधिदेवतम्

१०.१.२.[३]

अथाध्यात्मम्  मन एवाग्निः प्राणो महाव्रतं वाङ्महदुक्थं तस्मादेतानि सर्वाणि सहोपेयात्सह हि मनः प्राणो वाक्तद्यदग्निः प्रथमश्चीयते मनो हि प्रथमं प्राणानाम्

१०.१.२.[४]

आत्मैवाग्निः  प्राणो महाव्रतं वाङ्महदुक्थं तस्मादेतानि सर्वाणि सहोपेयात्सह ह्यात्मा प्राणो वाक्तद्यदग्निः प्रथमश्चीयत आत्मा हि प्रथमः सम्भवतः सम्भवति



१०.१.२.[५]

शिर एवाग्निः  प्राणो महाव्रतमात्मा महदुक्थं तस्मादेतानि सर्वाणि सहोपेयात्सह हि शिरः प्राण आत्मा तद्यदग्निः प्रथमश्चीयते शिरो हि प्रथमं जायमानस्य जायते तस्माद्यत्रैतानि सर्वाणि सह क्रियन्ते महदेवोक्थमातमां ख्यायत आत्मा हि महदुक्थम्

१०.१.२.[६]

तदाहुः  यदेतानि सर्वाणि सह दुरुपापानि कैतेषामुपाप्तिरिति ज्योतिष्टोम एवाग्निष्टोमे ज्योतिष्टोमेनैवाग्निष्टोमेन यजेत

१०.१.२.[७]

तस्य वा एतस्य ज्योतिष्टोमस्याग्निष्टोमस्य  त्रिवृद्वहिष्पवमानं तद्वतस्य शिरः पञ्चदशसप्तदशा उत्तरौ पवमानौ तौ पक्षौ पञ्चदशं होतुराज्यं सप्तदशं पृष्ठमेकविंशं यज्ञायज्ञियं तत्पुचम्



१०.१.२.[८]

तयोर्वा एतयोः  पञ्चदशसप्तदशयोर्द्वात्रिंशत्स्तोत्रियास्ततो याः पञ्चविंशतिः स पञ्चविंश आत्माथ याः सप्तातियन्ति ताः परिमादः पशवो हैताः पशवः परिमाद एतावद्वै महाव्रतं तदेतदत्रैव महाव्रतमाप्नोति

१०.१.२.[९]

अथ होता सप्त चन्दांसि शंसति  चतुरुत्तराण्येकर्चानि विराडष्टमानि तेषां तिस्रश्चाशीतयोऽक्षराणि पञ्चचत्वारिंशच्च ततो या अशीतयः सैवाशीतीनामाप्तिरशीतिभिर्हि महदुक्थमाख्यायतेऽथ यानि पञ्चचत्वारिंशत्ततो यानि पञ्चविंशतिः स

पञ्चविंश आत्मा यत्र वा आत्मा तदेव शिरस्तत्पक्षपुचान्यथ यानि विंशतिस्तदावपनमेतावद्वै महदुक्थं तदेतदत्रैव महदुक्थमाप्नोति तानि वा एतानि सर्वाणि ज्योतिष्टोम एवाग्निष्टोम आप्यन्ते तस्मादु ज्योतिष्टोमेनैवाग्निष्टोमेन यजेत

१०.१.३.[१]

प्रजापतिः प्रजा असृजत  स ऊर्ध्वेभ्य एव प्राणेभ्यो देवानसृजत येऽवाञ्चः प्राणास्तेभ्यो मर्त्याः प्रजा अथोर्ध्वमेव मृत्युं प्रजाभ्योऽत्तारमसृजत



१०.१.३.[२]

तस्य ह प्रजापतेः  अर्धमेव मर्त्यमासीदर्धममृतं तद्यदस्य मर्त्यमासीत्तेन मृत्योरबिभेत्स बिभ्यादिमां प्राविशद्द्वयं भूत्वा मृच्चापश्च

१०.१.३.[३]

स मृत्युर्देवानब्रवीत्  क्व नु सोऽभूद्यो नोऽसृष्टेति त्वद्बिभ्यदिमां प्राविक्षदिति सोऽब्रवीत्तं वा अन्विचाम तं सम्भराम न वा अहं तं हिंसिष्यामीति तं देवा अस्या अधि समभरन्यदस्याप्स्वासीत्ता अपः समभरन्नथ यदस्यां तां मृदं तदुभयं सम्भृत्य मृदं चापश्चेष्टकामकुर्वंस्तस्मादेतदुभयमिष्टका

भवति मृच्चापश्च

१०.१.३.[४]

तदेता वा अस्य ताः  पञ्च मर्त्यास्तन्व आसंलोम त्वङ्मांसमस्थि मज्जाथैता अमृता मनो वाक्प्राणश्चक्षुः श्रोत्रम्

१०.१.३.[५]



स यः स प्रजापतिः  अयमेव स योऽयमग्निश्चीयतेऽथ या अस्य ताः पञ्च मर्त्यास्तन्व आसन्नेतास्ताः पुरीषचितयोऽथ या अमृता एतास्ता इष्टकाचितयः

१०.१.३.[६]

ते देवा अब्रुवन्  अमृतमिमं करवामेति तस्यैताभ्याममृताभ्यां तनूभ्यामेताम् मर्त्यां तनूं परिगृह्यामृतामकुर्वन्निष्टकाचितिभ्यां पुरीषचितिं तथा द्वितीयां तथा तृतीयां तथा चतुर्थीम्

१०.१.३.[७]

अथ पञ्चमीं चितिमुपधाय  पुरीषं निवपति तत्र वकर्णीं च स्वयमातृणां चोपदधाति हिरण्यशकलैः प्रोक्षत्यग्निमभ्यादधाति सा सप्तमी चितिस्तदमृतमेवमस्यैताभ्याममृताभ्यां तनूभ्यामेतां मर्त्यां तनूम् परिगृह्यामृतामकुर्वन्निष्टकाचितिभ्यां पुरीषचितिं ततो वै प्रजापतिरमृतोऽभवत्तथैवैतद्यजमान एतममृतमात्मानं कृत्वा सोऽमृतो भवति

१०.१.३.[८]

ते वै देवास्तं नाविदुः  यद्येनं सर्वं वाकुर्वन्न वा सर्वं यद्यति वारेचयन्न वाभ्यापयंस्त एतामृचमपश्यन्धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः सचेतसो विश्वे देवा यज्ञं प्रावन्तु नः शुभ इति



१०.१.३.[९]

तस्या अस्त्येवाग्नेयम्  अस्त्यैन्द्रमस्ति वैश्वदेवं तद्यदस्या आग्नेयं यदेवैतस्याग्नेराग्नेयं तदस्य तेन समस्कुर्वन्यदैन्द्रं तदैन्द्रेण यद्वैश्वदेवं तद्वैश्वदेवेन तमत्रैव सर्वं कृत्स्नं समस्कुर्वन्

१०.१.३.[१०]

तद्यदेतयोपतिष्ठते  यदेवास्यात्र विद्वान्वाविद्वान्वाति वा रेचयति न वाभ्यापयति तदेवास्यैतया सर्वमाप्नोति यदस्य किं चानाप्तमनुष्टुब्धामचद्भवति वाग्वा अनुष्टुब्वाग्धामचद्वाचैवास्य तदाप्नोति यदस्य किं चानाप्तं पुरीषवतीं चितिं कृत्वोपतिष्ठेतेत्यु हैक आहुस्तत्र हिसा सर्वा कृत्स्ना भवतीति

१०.१.३.[११]

तदु वा आहुः  यविष्ठवत्यैवोपतिष्ठेतैतद्धास्य प्रियं धाम यद्यविष्ठ इति तद्यदस्य प्रियं धाम तेनास्य तदाप्नोति यदस्य किं चानाप्तमाग्नेय्याग्निकर्म हि गायत्र्यागायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवस्य त दाप्नोति यदस्य किं चानाप्तमनिरुक्तया सर्वं वा अनिरुक्तं सर्वेणैवास्य तदाप्नोति यदस्य किं चानाप्तं त्वं यविष्ठ दाशुष इति तस्योक्तो बन्धुः पुरीषवतीं चितिं कृत्वोपतिष्ठेत तत्र हि सा सर्वा कृत्स्ना भवति



१०.१.४.[१]

उभयं हैतदग्रे प्रजापतिरास  मर्त्यं चैवामृतं च तस्य प्राणा एवामृता आसुः शरीरं मर्त्यं स एतेन कर्मणैतयावृतैकधाजरममृतमात्मानमकुरुत तथैवैतद्यजमान उभयमेव भवति मर्त्यं चैवामृतं च तस्य प्राणा एवामृता भवन्ति शरीरं मर्त्यं स एतेन कर्मणैतयावृतैकधाजरममृतमात्मानं कुरुते

१०.१.४.[२]

स प्रथमां चितिं चिनोति  सा हास्यैषा प्राण एव तद्वै तदमृतममृतं हि प्राणः
सैषामृतचितिरथ पुरीषं निवपति तद्धास्यैतन्मज्जैव तद्वै तन्मर्त्यम्
मर्त्यो हि मज्जा तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतं भवति

१०.१.४.[३]

द्वितीयां चितिं चिनोति  सा हास्यैषापान एव तद्वै तदमृतममृतं ह्यपानः
सैषामृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतम्
भवत्यथ पुरीषं निवपति तद्धास्यैतदस्थ्येव तद्वै तन्मर्त्यं मर्त्यं
ह्यस्थि तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतं भवति



१०.१.४.[४]

तृतीयां चितिं चिनोति  सा हास्यैषा व्यान एव तद्वै तदमृतममृतं हि व्यानः
सैषामृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतम्
भवत्यथ पुरीषं निवपति तद्धास्यैतत्स्नावैव तद्वै तन्मर्त्यं हि स्नाव
तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतं भवति

१०.१.४.[५]

चतुर्थीं चितिं चिनोति  सा हास्यैषोदान एव तद्वै तदमृतममृतं ह्युदानः सैषामृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतम् भवत्यथ पुरीषं निवपति तद्धास्यैतन्मांसमेव तद्वै तन्मर्त्यं मर्त्यं हि मांसं तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतं भवति

१०.१.४.[६]

पञ्चमीं चितिं चिनोति  सा हास्यैषा समान एव तद्वै तदमृतममृतं हि समानः सैषामृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतम् भवत्यथ पुरीषं निवपति तद्धास्यैतन्मेद एव तद्वै तन्मर्त्यं मर्त्यं हि मेदस्तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतं भवति



१०.१.४.[७]

षष्ठीं चितिं चिनोति  सा हास्यैषा वागेवतद्वै तदमृ तममृतं हि वाक्षैषामृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतम् भवत्यथ पुरिषं निवपति तद्धास्यैतदसृगेव त्वगेव तद्वै तन्मर्त्यम् मर्त्यं ह्यसृङ्गत्वा त्वक्तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतम् भवति

१०.१.४.[८]

ता वा एताः  षडिष्टकाचितयः षड्पुरीषचितयस्तद्द्वादश द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैव तत्प्रजापतिरेकधाजरममृतमात्मानमकुरुत तथैवैतद्यजमान एकधाजरममृतमात्मानं कुरुते

१०.१.४.[९]

अथ विकर्णीं च स्वयमातृणां चोपधाय  हिरण्यशकलैः प्रोक्षत्यग्निमभ्यादधाति रूपमेव तत्प्रजापतिर्हिरण्मयमन्तत आत्मनोऽकुरुत तद्यदन्ततस्तस्मादिदमन्त्यमात्मनो रूपं तस्मादाहुर्हिरण्मयः प्रजापतिरिति तथैवैतद्यजमानो रूपमेव हिरण्मयमन्तत आत्मनः कुरुते तद्यदन्ततस्तस्मादिदमन्त्यमात्मनो रूपं तस्माद्ये चैतद्विदुर्ये च न हिरण्मयोऽग्निचिदमुष्मिंलोके सम्भवतीत्येवाहुः



१०.१.४.[१०]

तद्धैतचाण्डिल्यश्च साप्तरथवाहनिश्च  आचार्यान्तेवासिबौ व्यूदाते रूपमेवास्यैतदिति ह स्माह शाण्डिल्यो लोमानीति साप्तरथवाहनिः

१०.१.४.[११]

स होवाच शाण्डिल्यः  रूपं वाव लोमवद्रूपमलोमकं रूपमेवास्यैतदिति तद्वै तत्तथा यथा तचाण्डिल्य उवाच संचितेऽग्निः प्रणीयते प्रणीतादूर्ध्वं समिध आहुतय इति हूयन्ते

१०.१.४.[१२]

प्राणेन वै देवा अन्नमदन्ति  अग्निरु देवानां प्राणस्तस्मात्प्राग्देवेभ्यो जुह्वति प्राणेन हि देवा अन्नमदन्त्यपानेन मनुष्या अन्नमदन्ति तस्मात्प्रत्यङ्मनुष्येष्वन्नं धीयतेऽपानेन हि मनुष्या अन्नमदन्ति



१०.१.४.[१३]

तदाहुः  न वयसोऽग्निचिदश्नीयाद्वयो वा एष रूपं भवति योऽग्निं चिनुत ईश्वर आर्तिमातोस्तस्मान्न वयसोऽग्निचिदश्नीयादिति तद्वै काममेवैवंविदश्नीयादग्नेर्वा एष रूपं भवति योऽग्निं चिनुते सर्वं वा इदमग्नेरन्नं सर्वं म इदमन्नमित्येवैवंविद्विद्यादिति

१०.१.४.[१४]

तदाहुः  किं तदग्नौ क्रियते येन यजमानः पुनर्मृत्युमपजयतीत्यग्निर्वा एष देवता भवति योऽग्निं चिनुतेऽमृतमु वा अग्निः श्रीर्देवाः श्रियं गचति यशो देवा यशो ह भवति य एवं वेद

१०.१.५.[१]

सर्वे हैते यज्ञा योऽयमग्निश्चितः  स यत्पशुमालभते तदग्न्याधेयमथ यदुखां सम्भरति तान्यग्न्याधेयहवीम्ष्यथ यद्दीक्षते तदग्निहोत्रमथ यद्दीक्षितः समिधावादधाति ते अग्निहोत्राहुती



१०.१.५.[२]

ते वै सायम्प्रातरादधाति  सायम्प्रातर्ह्यग्निहोत्राहुती जुह्वति समानेन मन्त्रेण समानेन हि मन्त्रेणाग्निहोत्राहुती जुह्वत्यथ यद्वनीवाहनं च भस्मनश्चाभ्यवहरणं तौ दर्शपूर्णमासावथ यद्गार्हपत्यं चिनोति तानि चातुर्मास्यान्यथ यदूर्ध्वं गार्हपत्यादा सर्वौषधात्ता इष्टयोऽथ यदूर्ध्वं सर्वौषधात्प्राचीनं चितिभ्यस्ते पशुबन्धा य एवैतेषु यज्ञेषु विष्णुक्रमास्ते विष्णुक्रमा यज्जप्यं तद्वात्सप्रम्

१०.१.५.[३]

सौम्योऽध्वरः प्रथमा चितिः  यत्प्राचीनं सवेभ्यो राजसूयो द्वितीया वाजपेयस्तृतीयाश्वमेधश्चतुर्थ्यग्निसवः पञ्चमी यैश्चितं सामभिः परिगायति तन्महाव्रतमथ यत्तत्रोद्गातुः पुरस्ताज्जप्यं तचतरुद्रियं वसोर्धारा महदुक्थमथ यदूर्ध्वं सामभ्यः प्राचीनं वसोर्धारायै यदेव तत्र होतुः पुरस्ताज्जप्यं तत्तदथ यदूर्ध्वं वसोर्धारायै ते गृहमेधा एतावन्तो वै सर्वे यज्ञास्तानग्निनाप्नोति

१०.१.५.[४]



अथातो यज्ञवीर्याणामेव  सायम्प्रातर्ह वा अमुष्मिंलोकेऽग्निहोत्रहुदश्नाति तावती ह तस्मिन्यज्ञ ऊर्गर्धमासेऽर्धमासे दर्शपूर्णमासयाजी चतुर्षुचतुर्षु मासेषु चातुर्मास्ययाजी षड्सुषड्सु पशुबन्धयाजी संवत्सरेसंवत्सरे सोमयाजी शतेशते संवत्सरेश्वग्निचित्काममश्नाति कामं न तद्धैतद्यावचतं संवत्सरास्तावदमृतमनन्तमपर्यन्तं स सो हैतदेवं वेदैवं हैवास्यैतदमृतमनन्तमपर्यन्तं भवति तस्य यदपीषीकयेवोपहन्यात्तदेवास्यामृतमनन्तमपर्यन्तं भवति

१०.२.१.[१]

प्रजापतिः स्वर्गं लोकमजिगांसत्  सर्वे वै पशवः प्रजापतिः पुरुषोऽश्वो गौरविरजः स एतै रूपैर्नाशक्नोत्स एतं वयोविधमात्मानमपश्यदग्निं तं व्यधत्त सोऽनुपसमुह्यानुपाधायोदपिपतिषत्स नाशक्नोत्स

उपसमुह्योपधायोदपतत्तस्मादप्येतर्हि वयांसि यदैव पक्षा उपसमूहन्ते यदा पत्राणि विसृजन्तेऽथोत्पतितुं शक्नुवन्ति

१०.२.१.[२]

तं वा अङ्गुलिभिर्मिमीते पुरुषो वै यज्ञस्तेनेदं सर्वं मितं तस्यैषावमा मात्रा यदङ्गुलयस्तद्यास्यावमा मात्रा तामस्य तदाप्नोति तयैनं तन्मिमीते

१०.२.१.[३]



चतुर्विंशत्याङ्गुलिभिर्मिमीते चतुर्विंशत्यक्षरा वै गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनं तन्मिमीते

१०.२.१.[४]

स चतुरङ्गुलमेवोभयतोऽन्तरत उपसमूहति चतुरङ्गुलमुभयतो बाह्यतो व्युदूहति तद्यावदेवोपसमूहति तावद्व्युदूहति तन्नाहैवातिरेचयति नो कनीयः करोति तथा पुचस्य तथोत्तरस्य पक्षस्य

१०.२.१.[५]

अथ निर्णामौ पक्षयोः करोति  निर्णामौ हि वयसः पक्षयोर्भवतो वितृतीये वितृतीये हि वयसः पक्षयोर्निर्णामौ भवतोऽन्तरे वितृतीयेऽन्तरे हि वितृतीये वयसः पक्षयोर्निर्णामौ भवतः स चतुरङ्गुलमेव पुरस्तादुदूहति चतुरङ्गुलम् पश्चादुपसमूहति तद्यावदेवोदूहति तावदुपसमूहति तन्नाहैवातिरेचयति नो कनीयः करोति

१०.२.१.[६]

स तस्मिन्निर्णामे  एकामिष्टकामुपदधाति तद्धेयं वयसः पततो निर्णामादेका नाड्युपशेते तां तत्करोत्यथो इदम्



१०.२.१.[७]

अथ वक्रौ करोति  वक्रौ हि वयसः पक्षौ भवतः स चतुरङ्गुलमेव पश्चादुदूहति चतुरङ्गुलं पुरस्तादुपसमूहति तद्यावदेवोदूहति तावदुपसमूहति तन्नाहैवातिरेचयति नो कनीयः करोति

१०.२.१.[८]

अथ रूपमूत्तमं करोति  अत्रैष सर्वोऽग्निः संस्कृतस्तस्मिन्देवा
एतद्रूपमुत्तममदधुस्तथैवास्मिन्नयमेतद्रूपमुत्तमं दधाति स
सहस्त्रमृज्वालिखिता इष्टकाः करोति सहस्त्रमित्यालिखिताः सहस्त्रमित्यालिखिताः

१०.२.१.[९]

अथ पञ्चमीं चितिमुपधाय  त्रेधाग्निं विमिमीते स मध्यमे वितृतीये
सहस्त्रमृज्वालिखिता इष्टका उपदधाति तद्यानीमानि वयसः प्रत्यञ्चि शीर्ष्ण आ
पुचाद्दजूनि लोमानि तानि तत्करोति



१०.२.१.[१०]

अथ सहस्त्रमित्यालिखिता दक्षिणत उपदधाति  तद्यानीमानि वयसो दक्षिणतो
वक्राणि लोमानि तानि तत्करोति

१०.२.१.[११]

अथ सहस्त्रमित्यालिखिता उत्तरत उपदधाति  तद्यानीमानि वयस उत्तरतो वक्राणि
लोमानि तानि तत्करोति सहस्त्रेण सर्वं वै सहस्त्रं
सर्वेणैवास्मिन्नेतद्रूपमुत्तमं दधाति त्रिभिः
सहस्त्रैस्त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्रूपमुत्तमं

दधाति

१०.२.२.[१]

यान्वै तान्त्सप्त पुरुषान्  एकं पुरुषमकुर्वन्त्स प्रजापतिरभवत्स प्रजा असृजत स प्रजाः सृष्ट्वोर्ध्व उदक्रामत्स एतं लोकमगचद्यत्रैष एतत्तपति नो ह तर्ह्यन्य एतस्मादत्र यज्ञिय आस तं देवा यज्ञेनैव यष्टुमध्रियन्त

१०.२.२.[२]



तस्मादेतदृषिणाभ्यनूक्तम्  यज्ञेन यज्ञमयजन्त देवा इति यज्ञेन हि तं यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्निति ते हि धर्माः प्रथमेऽक्रियन्त ते ह नाकं महिमानः सचन्तेति स्वर्गो वै लोको नाको देवा महिमानस्ते देवाः स्वर्गं लोकं सचन्त ये तं यज्ञमयजन्नित्येतत्

१०.२.२.[३]

यत्र पूर्वे साध्याः सन्ति देवा इति  प्राणा वै साध्या देवास्त एतमग्र एवमसाधयन्नेतदेव बुभूषन्तस्त उ एवाप्येतर्हि साधयन्ति पश्चेदमन्यदभवद्यजत्रममर्त्यस्य भुवनस्य भूनेति पश्चाहैवेदमन्यद्यज्ञियमास यत्किं चामृतम्

१०.२.२.[४]

सुपर्णो अङ्गं सवितुर्गरुत्मान्  पूर्वो जातः स उ अस्यानु धर्मेति प्रजापतिर्वै
सुपर्णो गरुत्मानेष सवितैतस्य प्रजापतिरनु धर्मनित्येतत्

१०.२.२.[५]

स वै सप्तपुरुषो भवति  सप्तपुरुषो ह्ययं पुरुषो यच्चत्वार आत्मा त्रयः
पक्षपुच्छानि चत्वारो हि तस्य पुरुषस्यात्मा त्रयः पक्षपुच्छानि



१०.२.२.[६]

तं वा उद्बाहुना पुरुषेण मिमीते  पुरुषो वै यज्ञस्तेनेदं सर्वं मितं
तस्यैषा परमा मात्रा यदुद्बाहुस्तद्यास्य परमा मात्रा तामस्य तदाप्नोति
तयैनं तन्मिमीते तत्रोप यत्प्रपदेनाभ्युच्छ्रितो भवति तत्परिश्रिद्भिराप्नोति
तस्मादु बाह्येनैव लेखां परिश्रिद्भ्यः खनेत्

१०.२.२.[७]

अथ पक्षयोररत्नी उपादधाति  पक्षयोस्तद्वीर्यं दधाति बाहू वै पक्षौ बाहुभ्यामु वा अन्नमद्यतेऽन्नायैव तमवकाशां करोति तद्यत्पक्षयोररत्नी उपादधात्यरत्निमात्राद्ध्यन्नमद्यते

१०.२.२.[८]

अथ पुचे वितस्तिमुपादधाति  प्रतिष्ठायां तद्वीर्यं दधाति प्रतिष्ठा वै पुचं हस्तो वितस्तिर्हस्तेन वा अन्नमद्यतेऽन्नायैव तमवकाशं करोति तद्यत्पुचे वितस्तिमुपादधात्यन्न एवैनं तत्प्रतिष्ठापयति तद्यत्तत्र कनीय उपादधात्यन्नेह्येवैनं तत्प्रतिष्ठापयत्यथो एतावद्वा इदं मितम् भवत्येतावदिदं तद्यदेवं मिमीत एतस्यैवाप्त्यै



१०.२.३.[१]

या वा इयं वेदिः सप्तविधस्य  एषा वेदेर्मात्रा स देवयजनमध्यवसाय पूर्वया द्वारा पत्नीशालं प्रपद्य गार्हपत्यायोद्धत्यावोक्षति गार्हपत्यस्योद्धतात्सप्त प्राचः प्रक्रमान्प्रक्रामति ततः प्राञ्चं व्यामं विमिमीते तस्य मध्य आहवनीयायोद्धत्यावोक्षति पूर्वार्धाद्व्यामस्य त्रीन्प्राचः प्रक्रमान्प्रक्रामति स
वेद्यन्तः

१०.२.३.[२]

ते वा एते  व्यामैकादशाः प्रक्रमा अन्तरा वेद्यन्तं च गार्हपत्यं चैकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यं त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानः पुरस्ताद्यज्ञमुखाद्रक्षांसि नाष्ट्रा अपहन्ति

१०.२.३.[३]

सैषा वेदेर्योनिः  एतस्यै वै योनेर्देवा वेदिं प्राजनयन्नथ य एष व्यामः सा गार्हपत्यस्य योनिरेतस्यै वै योनेर्देवा गार्हपत्यम् प्राजनयन्गार्हपत्यादाहवनीयम्



१०.२.३.[४]

स वेद्यन्तात्  षड्त्रिंशत्प्रक्रमां प्राचीं वेदिं विमिमीते त्रिंशतं पश्चात्तिरश्चीं चतुर्विंशतिं पुरस्तात्तन्नवतिः सैषा नवतिप्रक्रमा वेदिस्तस्यां सप्तविधमग्निं विदधाति

१०.२.३.[५]

तदाहुः  कथमेष सप्तविध एतया वेद्या सम्पद्यत इति दश वा इमे पुरुषे

प्राणाश्चत्वार्यङ्गान्यात्मा पञ्चदश एवं द्वितीय एवं तृतीये षड्वु पुरुषेषु नवतिरथैकः पुरुषोऽत्येति पाङ्क्तो वै पुरुषो लोम त्वङ्मांसमस्थि मज्जा पाङ्क्तो इयं वेदिश्चतस्रो दिश आत्मा पञ्चम्येवमेष सप्तविध एतया वेद्या सम्पद्यते

१०.२.३.[६]

तद्धैके उत्तरा विधा विधास्यन्त एतांश्च प्रक्रमानेतं च व्याममनुवर्धयन्ति योनिमनुवर्धयाम इति न तथा कुर्यान्न वै जातं गर्भं योनिरनुवर्धते यावद्वाव योनावन्तर्गर्भो भवति तावदेव योनिर्वर्धत एतावत्यु वा अत्र गर्भस्य वृद्धिः



१०.२.३.[७]

ते ये ह तथा कुर्वन्ति एतं ह ते पितरं प्रजापतिं सम्पदश्च्यावयन्ति त इष्ट्वा पापीयांसो भवन्ति पितरं हि प्रजापतिं सम्पदश्च्यावयन्ति सा यावत्येषा सप्तविधस्य वेदिस्तावतीं चतुर्दश कृत्व एकशतविधस्य वेदिं विमिमीते

१०.२.३.[८]

अथ षड्विंशत्प्रक्रमां रज्जुं मिमीते तां सप्तधा समस्यति तस्यै त्रीन्भागान्प्राच उपदधाति निःसृजति चतुरः

१०.२.३.[९]

अथ त्रिंशत्प्रक्रमां मिमीते तां सप्तधा समस्यति तस्यै
त्रीन्भागान्पश्चादुपदधाति निःसृजति चतुरः

१०.२.३.[१०]

अथ चतुर्विंशतिप्रक्रमां मिमीते तां सप्तधा समस्यति तस्यै
त्रीन्भागान्पुरस्तादुपदधाति निःसृजति चतुर इति नु वेदिविमानम्



१०.२.३.[११]

अथाग्नेर्विधाः अष्टाविंशतिः प्राञ्चः पुरुषा अष्टाविंशतिस्तिर्यञ्चः स आत्मा चतुर्दश
पुरुषा दक्षिणः पक्षश्चतुर्दशोत्तरश्चतुर्दश पुचं चतुर्दशारत्नीन्दक्षिणे
पक्ष उपदधाति चतुर्दशोत्तरे चतुर्दश वितस्तीः पुच इति न्वष्टानवतेः
पुरुषाणां मात्रा साधिमानानाम्

१०.२.३.[१२]

अथ त्रिपुरुषां रज्जुं मिमीते  तां सप्तधा समस्यति तस्यै चतुरो भागानात्मन्नुपदधाति त्रीन्पक्षपुचेषु

१०.२.३.[१३]

अथारत्निमात्रीं मिमीते  तां सप्तधा समस्यति तस्यै त्रीन्भागान्दक्षिणे पक्ष उपदधाति त्रीनेवोत्तरे निःसृजति चतुरः

१०.२.३.[१४]



अथ वितस्तिमात्रीं मिमीते  तां सप्तधा समस्यति तस्यै त्रीन्भागान्पुच उपदधाति निःसृजति चतुर एवमेष एकशतविध एतया वेद्या सम्पद्यते

१०.२.३.[१५]

तदाहुः  यत्त्रयोदश पुरुषा अतियन्ति कथमेते सम्पदो न च्यवन्त इति या वा एतस्य सप्तमस्य पुरुषस्य सम्पत्सैवैतेषां सर्वेषां सम्पत्

१०.२.३.[१६]

अथो आहुः  प्रजापतिरेवात्मानं विधाय तस्य यत्रयत्र न्यूनमासीत्तदेतैः
समापूरयत तेनो एवापि सम्पन्न इति

१०.२.३.[१७]

तद्धैके  एकविधं प्रथमं विदधत्यथैकोत्तरमापरिमितविधान्न तथा
कुर्यात्



१०.२.३.[१८]

सप्तविधो वा अग्रे प्रजापतिरसृज्यत  स आत्मानं विदधान ऐत्स
एकशतविधेऽतिष्ठत स योऽर्वाचीनं सप्तविधाद्विधत्त एतं ह स पितरम्
प्रजापतिं विचिनत्ति स इष्ट्वा पापीयान्भवति यथा श्रेयांसं हिंसित्वाथ स
एकशतविधमतिविधत्तेऽस्मात्स सर्वस्माद्बहिर्धा निष्पद्यते सर्वमु हीदम्
प्रजापतिस्तस्मादु सप्तविधमेव प्रथमं
विदधीताथैकोत्तरमैकशतविधादेकशतविधं तु नातिविदधीत नाहैतम्
पितरं प्रजापतिं विचिनत्ति नो अस्मात्सर्वस्माद्बहिर्धा निष्पद्यते

१०.२.४.[१]

संवत्सरो वै प्रजापतिः अग्निरु सर्वे कामाः सोऽयं संवत्सरः प्रजापतिरकामयताग्निं सर्वान्कामानात्मानमभिसंचिन्वीयेति स एकशतधात्मानं व्यधत्त स एकशतधात्मानं विधायाग्निं सर्वान्कामानात्मानमभिसमचिनुत स सर्वे कामा अभवत्तस्मान्न कश्चन बहिर्धा कामोऽभवत्तस्मादाहुः संवत्सरः सर्वे कामा इति न ह संवत्सरात्कश्चन बहिर्धा कामोऽस्ति

१०.२.४.[२]

तथैवैतद्यजमानः एकशतधात्मानं विधायाग्निं सर्वान्कामानात्मानमभिसंचिनुते स सर्वे कामा भवति तस्मान्न कश्चन बहिर्धा कामो भवति



१०.२.४.[३]

स यः स संवत्सरोऽसौ स आदित्यः स एष एकशतविधस्तस्य रश्मयः शतं विधा एष एवैकशततमो य एष तपत्यस्मिन्त्सर्वस्मिन्प्रतिष्ठितस्तथैवैतद्यजमान एकशतधात्मानं विधायास्मिन्त्सर्वस्मिन्प्रतितिष्ठति

१०.२.४.[४]

अथ वा एकशतविधः सप्तविधमभिसम्पद्यत एकशतधा वा असावादित्यो विहितः

सप्तसु देवलोकेषु प्रतिष्ठितः सप्त वै देवलोकाश्चतस्रो दिशस्त्रय इमे लोका एते वै सप्त देवलोकास्तेष्वेष प्रतिष्ठितस्तथैवैतद्यजमान एकशतधात्मानं विधाय सप्तसु देवलोकेषु प्रतितिष्ठति

१०.२.४.[५]

यद्वेवैकशतविधः  सप्तविधमभिसम्पद्यत एकशतधा वा असावादित्यो विहितः सप्तस्वृतुषु सप्तसु स्तोमेषु सप्तसु पृष्ठेषु सप्तसु चन्दःसु सप्तसु प्राणेषु सप्तसु दिक्षु प्रतिष्ठितस्तथैवैतद्यजमान एकशतधात्मानं विधायैतस्मिन्त्सर्वस्मिन्प्रतितिष्ठति



१०.२.४.[६]

यद्वेवैकशतविधः सप्तविधमभिसम्पद्यत एकशतधा वा असावादित्यो विहितः सप्ताक्षरे ब्रह्मन्प्रतिष्ठितः सप्ताक्षरं वै ब्रह्मर्गित्येकमक्षरं यजुरिति द्वे सामेति द्वे अथ यदतोऽन्यद्ब्रह्मैव तद्व्यक्षरं वै ब्रह्म तदेतत्सर्वं सप्ताक्षरं ब्रह्म तस्मिन्नेष प्रतिष्ठितस्तथैवैतद्यजमान एकशतधात्मानं विधाय सप्ताक्षरे ब्रह्मन्प्रतितिष्ठति

१०.२.४.[७]

तस्मादु सप्तभिःसप्तभिः परिश्रयन्ति  तस्मादेकशतविधः सप्तविधमभिसम्पद्यतेऽथ वै सप्तविध एकशतविधमभिसम्पद्यते

१०.२.४.[८]

सप्तविधो वा अग्रे प्रजापतिरसृज्यत  स एतमेकशतधात्मानं विहितमपश्यत्प्राणभृत्सु पञ्चाशदिष्टकाः पञ्चाशद्यजूंषि तचतं सादनं च सूददोहाश्चैक=अततमे तत्समानं सादयित्वा हि सूददोहसाधिवदति स एतेनैकशतविधेनात्मनेमां जितिमजयदिमां व्यष्टिं व्याश्नुत तथैवैतद्यजमान एतेनैकशतविधेनात्मनेमां जितिं जयतीमां व्यष्टिं व्यश्नुत एवमु सप्तविध एकशतविधमभिसम्पद्यते स य एवैकशतविधः स सप्तविधो यः सप्तविधः स एकशतविध इति नु विधानम्



१०.२.५.[१]

अथातश्चयनस्यैव  अन्तरोपसदौ चिनोत्येतद्वै देवा अबिभयुर्यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति त एताः पुरोऽपश्यन्नुपसद इमानेव लोकानिमे वै लोकाः पुरस्ताः प्रापद्यन्त ताः प्रपद्याभयेऽनाष्ट्र एतमात्मानं समस्कुर्वत तथैवैतद्यजमान एताः पुरः प्रपद्याभयेऽनाष्ट्र एतमात्मानं संस्कुरुते

१०.२.५.[२]

यद्वेवान्तरोपसदौ चिनोति  एतद्वै देवा अबिभयुर्यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति त एतान्वज्रानपश्यन्नुपसदो वज्रा वा उपसदस्तान्प्रापद्यन्त तान्प्रपद्याभयेऽनाष्ट्र एतमात्मानं समस्कुर्वत तथैवैतद्यजमान एतान्वज्रान्प्रपद्याभयेऽनाष्ट्र एतमात्मानं संस्कुरुते

१०.२.५.[३]

एतदु ह यज्ञे तपः  यदुपसदस्तपो वा उपसदस्तद्यत्तपसि चीयते तस्मात्तापश्चितस्तद्वै यावदेवोपसद्भिश्चरन्ति तावत्प्रवर्ग्येण संवत्सरमेवोपसद्भिश्चरन्ति संवत्सरं प्रवर्ग्येण



१०.२.५.[४]

अहोरात्राणि वा उपसदः  आदित्यः प्रवर्ग्योऽमुं तदादित्यमहोरात्रेषु प्रतिष्ठापयति तस्मादेषोऽहोरात्रेषु प्रतिष्ठितः

१०.२.५.[५]

अथ यदि चतुर्विंशतिः  चतुर्विंशतिर्वा अर्धमासा अर्धमासा उपसद आदित्यः

प्रवर्ग्योऽमुं तदादित्यमर्धमासेषु प्रतिष्ठापयति तस्मादेषोऽर्धमासेषु प्रतिष्ठितः

१०.२.५.[६]

अथ यदि द्वादश  द्वादश वै मासा मासा उपसद आदित्यः प्रवर्ग्योऽमुं तदादित्यं मासेषु प्रतिष्ठापयति तस्मादेष मासेषु प्रतिष्ठितः

१०.२.५.[७]



अथ यदि षट् षड्वा ऋतव ऋतव उपसद आदित्यः प्रवर्ग्योऽमुं तदादित्यमृतुषु प्रतिष्ठापयति तस्मादेष ऋतुषु प्रतिष्ठितः

१०.२.५.[८]

अथ यदि तिस्रः  त्रयो वा इमे लोका इमे लोका उपसद आदित्यः प्रवर्ग्योऽमुं तदादित्यमेषु लोकेषु प्रतिष्ठापयति तस्मादेष एषु लोकेषु प्रतिष्ठितः

१०.२.५.[९]

अथातश्चितिपुरीषाणामेव मीमांसा  मासं प्रथमा चितिर्मासम्
पुरीषमेतावान्वासन्तिक ऋतौ कामस्तद्यावान्वासन्तिक ऋतौ कामस्तं
तत्सर्वमात्मानमभिसंचिनुते

१०.२.५.[१०]

मासं द्वितीया  मासं पुरीषमेतावान्ग्रैष्म ऋतौ कामस्तद्यावान्ग्रैष्म ऋतौ
कामस्तं तत्सर्वमात्मानमभिसंचिनुते



१०.२.५.[११]

मासं तृतीया  मासं पुरीषमेतावान्वार्षिक ऋतौ कामस्तद्यावान्वार्षिक ऋतौ
कामस्तं तत्सर्वमात्मानमभिसंचिनुते

१०.२.५.[१२]

मासं चतुर्थी  मासं पुरीषमेतावाञ्चारद ऋतौ कामस्तद्यावाञ्चारद ऋतौ
कामस्तं तत्सर्वमात्मानमभिसंचिनुते

१०.२.५.[१३]

अथ पञ्चम्यै चितेः  असपत्ना विराजश्च प्रथमाहमुपदधाति स्तोमभागा एकैकामन्वहं ताः स्कृत्सादयति सकृत्सूददोहसाधिवदति तूष्णीं मासं स्तोमभागापुरीषमभिहरन्त्येतावान्हैमन्तिक स्तौ कामस्तद्यावान्हैमन्तिक ऋतौ कामस्तं तत्सर्वमात्मानमभिसंचिनुते

१०.२.५.[१४]

मासं षष्ठी  मासं पुरीषमेतावाञ्छैशिर ऋतौ कामस्तद्यावाञ्छैशिर ऋतौ कामस्तं तत्सर्वमात्मानमभिसंचिनुत एतावान्वै द्वादशसु मासेषु कामः षड्वृतुषु तद्यावान्द्वादशसु मासेषु कामः षड्वृतुषु तं तत्सर्वमात्मानमभिसंचिनुते



१०.२.५.[१५]

अथ त्रीण्यहान्युपातियन्ति  यदहः शतरुद्रियं जुहोति यदहरुपवसथो यदहः प्रसुतस्तद्यत्तेष्वहःसूपसदा चरन्ति तानि तस्य मासस्याहोरात्राण्यथ यत्प्रवर्ग्येण तदु तस्मिन्नृतावादित्यं प्रतिष्ठापयत्येतावान्वै त्रयोदशसु मासेषु कामः सप्तस्वृतुषु तद्यावांस्त्रयोदशसु मासेषु कामः सप्तस्वृतुषु तं तत्सर्वमात्मानमभिसंचिनुते

१०.२.५.[१६]

स संवत्सरं प्रसुतः स्यात्  सर्वं वै संवत्सरः सर्वमेकशतविधः सर्वेणैव तत्सर्वमाप्नोति यदि संवत्सरं न शक्नुयाद्विश्वजिता सर्वपृष्ठेनातिरात्रेण यजेत तस्मिन्त्सर्ववेदसं दद्यात्सर्वं वै विश्वजित्सर्वपृष्ठोऽतिरात्रः सर्वं सर्ववेदसं सर्वमेकशतविधः सर्वेणैव तत्सर्वमाप्नोति

१०.२.६.[१]

संवत्सरो वै प्रजापतिरेकशतविधः  तस्याहोरात्राण्यर्धमासा मासा ऋतवः षष्टिर्मासस्याहोरात्राणि मासि वै संवत्सरस्याहोरात्राण्याप्यन्ते चतुर्विंशतिरर्धमासास्त्रयोदश मासास्त्रय ऋतवस्ताः शतं विधाः संवत्सर एवैकशततमी विधा



१०.२.६.[२]

स ऋतुभिरेव सप्तविधः  षडृतवः संवत्सर एव सप्तमी विधा तस्यैतस्य संवत्सरस्यैतत्तेजो य एष तपति तस्य रश्मयः शतं विधा मण्डलमेवैकशततमी विधा

१०.२.६.[३]

स दिग्भिरेव सप्तविधः  ये प्राच्यां दिशि रश्मयः सैका विधा ये दक्षिणायां सैका ये प्रतीच्यां सैका य उदीच्यां सैका य ऊर्ध्वायां सैका येऽवाच्यां सैका मण्डलमेव सप्तमी विधा

१०.२.६.[४]

तस्यैतस्य पुरस्तात्कामप्रो लोकः  अमृतं वै कामप्रममृतमेवास्य तत्परस्तात्तद्यत्तदमृतमेतत्तद्यदेतदर्चिर्दीप्यते



१०.२.६.[५]

तदेतद्वसुचित्रं राधः  तदेष सविता विभक्ताभ्यः प्रजाभ्यो विभजत्यप्योषधिभ्योऽपि वनस्पतिभ्यो भूयैव ह त्वेकाभ्यः प्रयचति कनीय इवैकाभ्यस्तद्याभ्यो भूयः प्रयचति ता ज्योक्तमां जीवन्ति याभ्यः कनीयः कनीयस्ताः

१०.२.६.[६]

तदेतद्दचाभ्युक्तं विभक्तारं हवामहे वसोश्चित्रस्य राधसः  सवितारं

नृचक्षसमिति तदेतत्सर्वमायुर्दीर्घमनन्तं हि तद्यदिदमाहुर्दीर्घं त
आयुरस्तु सर्वमायुरिहीत्येष ते लोक एतत्तेऽस्त्विति हैवैतत्

१०.२.६.[७]
पश्यन्ती वाग्वदति  तदेतदेकशतविधेन वैवाप्तव्यं शतायुतया वा य
एवैकशतविधं विधत्ते यो वा शतं वर्षाणि जीवति स हैवैतदमृतमाप्नोति
तस्माद्ये चैतद्विदुर्ये च न लोक्या शतायुतेत्येवाहुस्तस्मादु ह न पुरायुषः
स्वकामी प्रेयादलोक्यं हैत उ वाव लोका यदहोरात्राण्यर्धमासा मासा ऋतवः
संवत्सरः



१०.२.६.[८]

तद्येऽर्वाग्विंशेषु वर्षेषु प्रयन्ति  अहोरात्रेषु ते लोकेषु सज्यन्तेऽथ ये
परोविंशेष्वर्वाक्चत्वारिंशेष्वर्धमासेषु तेऽथ ये
परश्चत्वारिंशेष्वर्वाक्षष्टेषु मासेषु तेऽथ ये परःषष्टेष्वर्वागशीतेष्वृतुषु
तेऽथ ये परोऽशीतेष्वर्वाक्शतेषु संवत्सरे तेऽथ य एव शतं वर्षाणि यो वा
भूयांसि जीवति स हैवैतदमृतमाप्नोति

१०.२.६.[९]

बहुभिर्ह वै यज्ञैः  एकमहरेका रात्रिर्मिता स य एवैकशतविधं विधत्ते यो

वा शतं वर्षाणि जीवति स हैवैनदद्धातमामाप्नोत्येष वा एकशतविधं विधत्ते य एनं संवत्सरं बिभर्ति तस्मादेनं संवत्सरभृतमेव चिन्वीतेत्यधिदेवतम्

१०.२.६.[१०]

अथाधियज्ञम्  यानमूनेकशतमुद्धाहून्पुरुषान्मिमीते स विधैकशतविधः स चितिभिरेव सप्तविधः षड्तव्यवत्यश्चितयोऽग्निरेव सप्तमी विधा

१०.२.६.[११]



स उ वा इष्टकैकशतविधः  याः पञ्चाशत्प्रथमा इष्टका याश्चोत्तमास्ताः शतं विधा अथ या एतदन्तरेणेष्टका उपधीयन्ते सैवैकशततमी विधा

१०.२.६.[१२]

स उ एव यजुस्तेजाः  यजुरेकशतविधो यानि पञ्चाशत्प्रथमानि यजूंषि यानि चोत्तमानि ताः शतं विधा अथ यान्येतदन्तरेण यजूंषि क्रियन्ते सैवैकशततमी विधैवमु सप्तविध एकशतविधो भवति स यः शतायुतायां कामो य एकशतविधे सप्त्!विधेन हैव तमेवंविदाप्नोति

१०.२.६.[१३]

एवं वाव सर्वे यज्ञाः  एकशतविधा आग्निहोत्रादृग्भिर्यजुर्भिः पदैरक्षरैः
कर्मभिः सामभिः स यः शतायुतायां कामो य एकशतविधे यः सप्तविधे यज्ञेन
यज्ञेन हैव तमेवंविदाप्नोतीत्यु एवाधियज्ञम्

१०.२.६.[१४]

अथाध्यात्मम्  पञ्चेमाश्चतुर्विधा अङ्गुलयो द्वे कल्कुषी दोरंसफलकं
चाक्षश्च तत्पञ्चविंशतिरेवमिमानीतराण्यङ्गानि ताः शतं विधा आत्मैवैकशततमी
विधोक्तं सप्तविधतायै



१०.२.६.[१५]

स उ एव प्राणतेजाः  प्राणैकशतविधोऽन्वङ्गमङ्गेऽङ्गे हि प्राणः स यः
शतायुतायां
कामो य एकशतविधे यः सप्तविधे यः सर्वेषु यज्ञेषु विद्याया हैव
तमेवंविदाप्नोति सर्वौर्हि यज्ञैरात्मानं सम्पन्नं विदे

१०.२.६.[१६]

त्रीणि वा इमानि पञ्चविधानि  संवत्सरोऽग्निः पुरुषस्तेषां पञ्च विधा अन्नम्
पानं श्रीर्ज्योतिरमृतं यदेव संवत्सरेऽन्नं तदन्नं या आपस्तत्पानं रात्रिरेव
श्रीः श्रियां हैतद्रात्र्यां सर्वाणि भूतानि
संवसन्त्यहर्ज्योतिरादित्योऽमृतमित्यधिदेवतं

१०.२.६.[१७]

अथाधियज्ञम्  यदेवाग्नावन्नमुपधीयते तदन्नं या आपस्तत्पानं परिश्रित एव
श्रीस्तद्धि रात्रीणां रूपं यजुष्मत्यो ज्योतिस्तद्ध्यह्नां रूपमग्निरं!तं
तद्ध्यादित्यस्य रूपमित्यु एवाधियज्ञम्



१०.२.६.[१८]

अथाध्यात्मम्  यदेव पुरुषेऽन्नं तदन्नं या आपस्तत्पानमस्थीन्येव श्रीस्तद्धि
परिश्रितां रूपं मज्जानो ज्योतिस्तद्धि यजुष्मतीनां रूपं प्राणोऽमृतं तद्ध्यग्ने
रूपं प्राणोऽग्निः प्राणोऽमृतमित्यु वा आहुः

१०.२.६.[१९]

अन्नाद्वा अशनाया निवर्तते  पानात्पिपासा श्रियै पाप्मा ज्योतिषस्तमोऽमृतान्मृत्युर्नि ह
वा अस्मादेतानि सर्वाणि वर्तन्तेऽप पुनर्मृत्युं जयति सर्वमायुरेति य एवं वेद

तदेतदमृतमित्येवामुत्रोपासीतायुरितीह प्राण इति हैक उपासते प्राणोऽग्निः
प्राणोऽमृतमिति वदन्तो न तथा विद्यादध्रुवं वै तद्यत्प्राणस्तं ते
विष्याम्यायुषो न मध्यादिति ह्यपि यजुषाभ्युक्तं
तस्मादेनदमृतमित्येवामुत्रोपासीतायुरितीह तथो ह सर्वमायुरेति

१०.३.१.[१]
प्राणो गायत्री  चक्षुरुष्णिग्वागनुष्टुम्मनो बृहती श्रोत्रं पङ्क्तिर्य एवायम्
प्रजननः प्राण एष त्रिष्टुबथ योऽयमवाङ्प्राण एष जगती तानि वा एतानि सप्त
चन्दांसि चतुरुत्तराण्यग्नौ क्रियन्ते



१०.३.१.[२]

प्राणो गायत्रीति  तद्य एव प्राणस्य महिमा यद्वीर्यं तदेतत्सहस्रम्
प्राणस्यैवैतद्वीर्यं यद्ध्यस्य चिन्वतः प्राण उत्क्रामेत्तत एवैषोऽग्निर्न
चीयेतैतेनैवास्य रूपेण सहस्रमेष गायत्रीः संचितो भवति

१०.३.१.[३]

चक्षुरुष्णिगिति  तद्य एव चक्षुषो महिमा यद्वीर्यं तदेतत्सहस्रं चक्षुष
एवैतद्वीर्यं यद्ध्यस्य चिन्वतश्चक्षुरुत्क्रामेत्तत एवैषोऽग्निर्न
चीयेतैतेनैवास्य रूपेण सहस्रमेष उष्णिहः संचितो भवति

१०.३.१.[४]

वागनुष्टुबिति  तद्य एव वाचो महिमा यद्वीर्यं तदेतत्सहस्रं वाच एवैतद्वीर्यं यद्ध्यस्य चिन्वतो वागुत्क्रामेत्तत एवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेषोऽनुष्टुभः संचितो भवति

१०.३.१.[५]



मनो बृहतीति  तद्य एव मनसो महिमा यद्वीर्यं तदेतत्सहस्रं मनस एवैतद्वीर्यं यद्ध्यस्य चिन्वतो मन उत्क्रामेत्तत एवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेष बृहतीः संचितो भवति

१०.३.१.[६]

श्रोत्रं पङ्क्तिरिति  तद्य एव श्रोत्रस्य महिमा यद्वीर्यं तदेतत्सहस्रं श्रोत्रस्यैवैतद्वीर्यं यद्ध्यस्य चिन्वतः श्रोत्रमुत्क्रामेत्तत एवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेष पङ्क्तीः संचितो भवति

१०.३.१.[७]

य एवायं प्रजननः प्राणः  एष त्रिष्टुबिति तद्य एवैतस्य प्राणस्य महिमा यद्वीर्यं तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य वीर्यं यद्धयस्य चिन्वत एष प्राण आलुभ्येत्तत एवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेष त्रिष्टुभः संचितो भवति

१०.३.१.[८]

अथ योऽयमवाङ्प्राणः  एष जगतीति तद्य एवैतस्य प्राणस्य महिमा यद्वीर्यं तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य वीर्यं यद्धयस्य चिन्वत एष प्रल्ण आ६ भ्येत्तत एवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेष जगतीः संचितो भवति

१०.३.१.[९]

तानि वा एतानि  सप्त चन्दांसि चतुरुत्तराण्यन्योऽन्यस्मिन्प्रतिष्ठितानि सप्तेमे पुरुषे प्राणा अन्योऽन्यस्मिन्प्रतिष्ठितास्तद्यावन्तमेवंविच्चन्दसां गणमन्वाह चन्दसश्चन्दसो हैवास्य सोऽनूक्तो भवति स्तुतो वा शस्तो वोपहितो वा

१०.३.२.[१]

तदाहुः  किं चन्दः का देवताग्नेः शिर इति गायत्री चन्दोऽग्निर्देवता शिरः

१०.३.२.[२]

किं चन्दः  का देवता ग्रीवा इत्युष्णिक्चन्दः सविता देवता ग्रीवाः

१०.३.२.[३]



किं चन्दः  का देवतानूकमिति बृहती चन्दो बृहस्पतिर्देवतानूकम्

१०.३.२.[४]

किं चन्दः  का देवता पक्षाविति बृहद्रथन्तरे चन्दो द्यावापृथिवी देवते पक्षौ

१०.३.२.[५]

किं चन्दः  का देवता मध्यमिति त्रिष्टुप्चन्द इन्द्रो देवता मध्यम्

१०.३.२.[६]

किं चन्दः  का देवता श्रोणी इति जगती चन्द आदित्यो देवता श्रो णी

१०.३.२.[७]

किं चन्दः  का देवता यस्मादिदं प्राणाद्रेतः सिच्यत इत्यतिचन्दाश्चन्दः
प्रजापतिर्देवता



१०.३.२.[८]

किं चन्दः  का देवता योऽयमवाङ्प्राण इति यज्ञायज्ञियं चन्दो वैश्वानरो देवता

१०.३.२.[९]

किं चन्दः  का देवतोरू इत्यनुष्टुप्चन्दो विश्वे देवा देवतोरू

१०.३.२.[१०]

किं चन्दः  का देवताष्ठीवन्ताविति पङ्क्तिश्चन्दो मरुतो देवताष्ठीवन्तौ

१०.३.२.[११]

किं चन्दः  का देवता प्रतिष्ठे इति द्विपदा चन्दो विष्णुर्देवता प्रतिष्ठे

१०.३.२.[१२]



किं चन्दः  का देवता प्राणा इति विचन्दाश्चन्दो वायुर्देवता प्राणाः

१०.३.२.[१३]

किं चन्दः  का देवतोनातिरिक्तानीति न्यूनाक्षरा चन्द आपो देवतोनातिरिक्तानि सैषात्मविद्यैवैतन्मयो हैवैता देवता एतमात्मानमभिसम्भवति न हात्रान्या लोक्यताया आशीरस्ति

१०.३.३.[१]

धीरो ह शातपर्णेयः  महाशालं जाबालमुपोत्ससाद तं होवाच किं मा विद्वानुपोदसद इत्यग्निं वेदेति कमग्निं वेत्थेति वाचमिति यस्तमग्निं वेद किं स भवतीति वाग्मी भवतीति होवाच नैनं वाग्जहातीति

१०.३.३.[२]

वेत्थाग्निमिति होवाच  किमेव मा विद्वानुपोदसद इत्यग्निं वेदेति कमग्निं वेत्थेति चक्षुरिति यस्तमग्निं वेद किं स भवतीति चक्षुष्मान्भवतीति होवाच नैनं चक्षुर्जहातीति



१०.३.३.[३]

वेत्थाग्निमिति होवाच  किमेव मा विद्वानुपोदसद इत्यग्निं वेदेति कमग्निं वेत्थेति मन इति यस्तमग्निं वेद किं स भवतीति मनस्वी भवतीति होवाच नैनं मनो जहातीति

१०.३.३.[४]

वेत्थाग्निमिति होवाच  किमेव मा विद्वानुपोदसद इत्यग्निं वेदेति कमग्निं वेत्थेति श्रोत्रमिति यस्तमग्निं वेद किं स भवतीति श्रोत्रवान्भवतीति होवाच नैनं

श्रोत्रं जहातीति

१०.३.३.[५]

वेत्थाग्निमिति होवाच  किमेव मा विद्वानुपोदसद इत्यग्निं वेदेति कमग्निं वेत्थेति
य एतत्सर्वमग्निस्तं वेदेति तस्मिन्होक्त उपावरुरोहाधीहि भोस्तमग्निमिति

१०.३.३.[६]



स होवाच  प्राणो वाव सोऽग्निर्यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं
चक्षुः प्राणं मनः प्राणं श्रोत्रं यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्त
इत्यध्यात्मम्

१०.३.३.[७]

अथाधिदेवतम्  या वै सा वागग्निरेव स यत्तच्चक्षुरसौ स आदित्यो यत्तन्मन एष
स चन्द्रमा यत्तच्छ्रोत्रं दिश एव तदथ यः स प्राणोऽयमेव स वायुर्योऽयम्
पवते

१०.३.३.[८]

यदा वा अग्निरनुगचति  वायुं तर्ह्यनूद्वाति तस्मादेनमुदवासीदित्याहुर्वायुं ह्यनूद्वाति यदादित्योऽस्तमेति वायुं तर्हि प्रविशति वायुं चन्द्रमा वायौ दिशः प्रतिष्ठिता वायोरेवाधि पुनर्जायन्ते स यदैवंविदस्माल्लोकात्प्रैति वाचैवाग्निमप्येति चक्षुषादित्यं मनसा चन्द्रं श्रोत्रेण दिशः प्राणेन वायुं स एतन्मय एव भूत्वैतासां देवतानां यांयां कामयते सा भूत्वेलयति

१०.३.४.[१]

श्वेतकेतुर्हारुणेयः  यक्ष्यमाण आस तं ह पितोवाच कानृत्विजोऽवृथा इति स होवाचायं न्वेव मे वैश्वावसव्यो होतेति तं ह पप्रच्च वेत्थ ब्राह्मण वैश्वावसव्य



१०.३.४.[२]

चत्वारि महान्ती३ इति  वेद भो३ इति होवाच वेत्थ चत्वारि महतां महान्ती३ इति वेद भो३ इति होवोच वेत्थ चत्वारि व्रतानि३ इति वेद भो३ इति होवाच वेत्थ चत्वारि व्रतानां व्रतानी३ इति वेद भो३ इति होवाच वेत्थ चत्वारि क्यानी३ इति वेद भो३ इति होवाच वेत्थ
चत्वारि क्यानां क्यानी३ इति वेद भो३ इति होवाच वेत्थ चतुरोऽर्का३ इति वेद भो३ इति होवाच वेत्थ चतुरोऽर्काणामर्का३ इति वेद भो३ इति होवाच

१०.३.४.[३]

वेत्थार्कमिति  अथ वै नो भवान्वक्ष्यतीति वेत्थार्कपर्णे इत्यथ वै नो भवान्वक्ष्यतीति वेत्थार्कपुष्पे इत्यथ वै नो भवान्वक्ष्यतीति वेत्थार्ककोश्यावित्यथ वै नो भवान्वक्ष्यतीति वेत्थार्कसमुद्गावित्यथ वै नो भवान्वक्ष्यतीति वेत्थार्कधाना इत्यथ वै नो भवान्वक्ष्यतीति वेत्थार्काष्ठीलामित्यथ वै नो भवान्वक्ष्यतीति वेत्थार्कमूलमित्यथ वै नो भवान्वक्ष्यतीति

१०.३.४.[४]



स ह वै यत्तदुवाच  वेत्थ चत्वारि महान्ति वेत्थ चत्वारि महताम् महान्तीत्यग्निर्महांस्तस्य महतो महदोषधयश्च वनस्पतयश्च तद्ध्यस्यान्नं वायुर्महांस्तस्य महतो महदापस्तद्ध्यस्यान्नमादित्यो महांस्तस्य महतो महच्चन्द्रमास्तद्ध्यस्यान्नं पुरुषो महांस्तस्य महतो महत्पशवस्तद्ध्यस्यान्नमेतान्येव चत्वारि महान्त्येतानि चत्वारि महताम् महान्त्येतान्येव चत्वारि व्रतान्येतानि चत्वारि व्रतानां व्रतान्येतान्येव चत्वारि क्यान्येतानि चत्वारि क्यानां क्यान्येत एव चत्वारोऽर्का एते चत्वारोऽर्काणामर्काः

१०.३.४.[५]

अथ ह वै यत्तदुवाच  वेत्थार्कमिति पुरुषं हैव तदुवाच  वेत्थार्कपर्णे इति

कर्णौ हैव तदुवाच वेत्थार्कपुष्पे इत्यक्षिणी हैव तदुवाच वेत्थार्ककोश्याविति
नासिके हैव तदुवाच वेत्थार्कसमुद्गावित्योष्ठौ हैव तदुवाच वेत्थार्कधाना
इति दन्तान्हैव तदुवाच वेत्थार्काष्ठीलामिति जिह्वां हैव तदुवाच
वेत्थार्कमूलमित्यन्नं हैव तदुवाच स एषोऽग्निरर्को यत्पुरुषः स यो
हैतमेवमग्निमर्कं पुरुषमुपास्तेऽयमहमग्निरर्कोऽस्मीति विद्यया
हैवास्यैष आत्मन्नग्निरर्कश्चितो भवति

१०.३.५.[१]

अयं वाव यजुर्योऽयं पवते  एष हि यन्नेवेदं सर्वं जनयत्येतं
यन्तमिदमनु प्रजायते तस्माद्वायुरेव यजुः



१०.३.५.[२]

अयमेवाकाशो जूः  यदिदमन्तरिक्षमेतं ह्याकाशमनु जवते
तदेतद्यजुर्वायुश्चान्तरिक्षं च यच्च जूश्च तस्माद्यजुरेष एव यदेष ह्येति
तदेतद्यजुरृक्सामयोः प्रतिष्ठितमृक्सामे
वहतस्तस्मात्समानैरेवाध्वयुर्ग्रहैः कर्म करोत्यन्यान्यन्यानि स्तुतशस्त्राणि
भवन्ति यथा पूर्वाभ्यां स्यन्त्वापराभ्यां धावयेत्ताद्दक्तत्

१०.३.५.[३]

अग्निरेव पुरः  अग्निं हि पुरस्कृत्येमाः प्रजा उपासत आदित्य एव चरणं यदा ह्येवैष उदेत्यथेदं सर्वं चरति तदेतद्यजुः सपुरश्चरणमधिदेवतं

१०.३.५.[४]

अथाध्यात्मम्  प्राण एव यजुः प्राणो हि यन्नेवेदं सर्वं जनयति प्राणं यन्तमिदमनु प्रजायते तस्मात्प्राण एव यजुः

१०.३.५.[५]



अयमेवाकाशो जूः  योऽयमन्तरात्मन्नाकाश एतं ह्याकाशमनु जवते तदेतद्यजुः प्राणश्चाकाशश्च यच्च जूश्च तस्माद्यजुः प्राण एव यत्प्राणो ह्येति

१०.३.५.[६]

अन्नमेव यजुः  अन्नेन हि जायतेऽन्नेन जवते तदेतद्यजुरन्ने प्रतिष्ठितमन्नं वहति तस्मात्समान एव प्राणेऽन्यदन्यदन्नं धीयते

१०.३.५.[७]

मन एव पुरः  मनो हि प्रथमं प्राणानां चक्षुरेव चरणं चक्षुषा ह्ययमात्मा चरति तदेतद्यजुः सपुरश्चरणमधिदेवतं चाध्यात्मं च प्रतिष्ठितं स यो हैतदेवं यजुः सपुरश्चरणमधिदेवतं चाध्यात्मं च प्रतिष्ठितं वेद

१०.३.५.[८]

अरिष्टो हैवानार्तः  स्वस्ति यज्ञस्योदृचमश्नुते स्वानां श्रेष्ठः पुरएता भवत्यन्नादोऽधिपतिर्य एवं वेद



१०.३.५.[९]

य उ हैवंविदं  स्वेषु प्रतिप्रतिर्बुभूषति न हैवालं भार्येभ्यो भवत्यथ य एवैतमनुभवति यो वै तमनु भार्यान्बुभूर्षति स हैवालं भार्येभ्यो भवति

१०.३.५.[१०]

तदेतज्ज्येष्ठं ब्रह्म  न ह्येतस्मात्किं चन ज्यायोऽस्ति ज्येष्ठो ह वै श्रेष्ठः स्वानां भवति य एवं वेद

१०.३.५.[११]

तदेतद्ब्रह्मापूर्वमपरवत्  स यो हैतदेवं ब्रह्मापूर्वमपरवद्वेद न
हास्मात्कश्चन श्रेयान्त्समानेषु भवति श्रेयांसः श्रेयांसो हैवास्मादपरपुरुषा
जायन्ते तस्माद्योऽस्माज्ज्यायान्त्स्याद्दिशोऽस्मात्पूर्वा इत्युपासीत तथो हैनं न हिनस्ति

१०.३.५.[१२]

तस्य वा एतस्य यजुषः  रस एवोपनिषत्तस्माद्यावन्मात्रेण यजुषाध्वर्युर्ग्रहं
गृह्णाति स उभे स्तुतशस्त्रे अनुविभवत्युभे स्तुतशस्त्रे अनुव्यश्नुते
तस्माद्यावन्मात्र इवान्नस्य रसः सर्वमन्नमवति सर्वमन्नमनुव्येति

१०.३.५.[१३]

तृप्तिरेवास्य गतिः  तस्माद्यदान्नस्य तृप्यत्यथ स गत इव मन्यत आनन्द एवास्य
विज्ञानमात्मानन्दात्मानो हैव सर्वे देवाः सा हैषैव देवानामद्धाविद्या स ह
स
न मनुष्यो य एवंविद्देवानां हैव स एकः

१०.३.५.[१४]

एतद्ध स्म वै तद्विद्वान्प्रियव्रतो रौहिणायन आह  वायुं वान्तमानन्दस्त आत्मेतो वा वाहितो वेति स ह स्म तथैव वाति तस्माद्यां देवेष्वाशिषमिचेदेतेनैवोपतिष्ठेतानन्दो व आत्मासौ मे कामः स मे समृध्यतामिति सं हैवास्मै स काम ऋध्यते यत्कामो भवत्येतां ह वै तृप्तिमेतां गतिमेतमानन्दमेतमात्मानमभिसम्भवति य एवं वेद

१०.३.५.[१५]



तदेतद्यजुरुपांश्वनिरुक्तम्  प्राणो वै यजुरुपांश्वायतनो वै प्राणस्तद्य एनं निर्ब्रुवन्तं ब्रूयादनिरुक्तां देवतां निरवोचत्प्राण एनं हास्यतीति तथा हैव स्यात्

१०.३.५.[१६]

तस्य ह यो निरुक्तमाविर्भावं वेद  आविर्भवति कीर्त्या यशसोपांशु यजुषाध्वर्युर्ग्रहं गृह्णाति गृहीतः सन्न आविर्भवत्युपांशु यजुषाग्निं चिनोति चितः संचित आविर्भवत्युपांशु यजुषा हविर्निर्वपति श्रृतं निष्ठितमाविर्भवत्येवं यत्किं चोपांशु करोति कृतं निष्ठितमाविर्भवति तस्य ह य एतमेवं निरुक्तमाविर्भावं वेदाविर्भवति कीर्त्या यशसा ब्रह्मवर्चसेन क्षिप्र उ हैवाविदं गचति स ह यजुरेव भवति यजुषैनमाचक्षते

१०.४.१.[१]

प्रजापतिं विस्रस्तम्  यत्र देवाः समस्कुर्वंस्तमुखायां योनौ रेतो भूतमसिञ्चन्योनिर्वा उखा तस्मा एतत्संवत्सरेऽन्नं समस्कुर्वन्योऽयमग्निश्चितस्तदात्मना पर्यदधुस्तदात्मना परिहितमात्मैवाभवत्तस्मादन्नमात्मना परिहितमात्मैव भवति

१०.४.१.[२]

तथैवैतद्यजमानः  आत्मानमुखायां योनौ रेतो भूतं सिञ्चति योनिर्वा उखा तस्मा एतत्संवत्सरेऽन्नं संस्करोति योऽयमग्निश्चितस्तदात्मना परिदधाति तदात्मना परिहितमात्मैव भवति तस्मादन्नमात्मना परिहितमात्मैव भवति



१०.४.१.[३]

तं निदधाति  वौषडिति वौगिति वा एष षडितीदं षड्वितिकमन्नं कृत्वास्मा अपिदधात्यात्मसम्मितं यदु वा आत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति

१०.४.१.[४]

स एष एवार्कः  यमेतमत्राग्निमाहरन्ति तस्यैतदन्नंक्यं
योऽयमग्निश्चितस्तदर्क्यं यजुष्ट एष एव महांस्तस्यैतदन्नं व्रतं
तन्महाव्रतं सामत एष उ एवोक्तस्यैतदन्नं थं तदुक्थमृक्तस्तदेतदेकं
सत्रेधाख्यायते

१०.४.१.[५]

अथेन्द्राग्नी वा असृज्येताम्  ब्रह्म च क्षत्रं चाग्निरेव ब्रह्मेन्द्रः क्षत्रं तौ
सृष्टौ नानैवास्तां तावब्रूतां न वा इत्थं सन्तौ शक्ष्यावः प्रजाः
प्रजनयितुमेकं रूपमुभावसावेति तावेकं रूपमुभावभवताम्



१०.४.१.[६]
तौ यौ ताविन्द्राग्नी  एतौ तौ रुक्मश्च पुरुषश्च रुक्म एवेन्द्रः पुरुषोऽग्निस्तौ
हिरण्मयौ भवतो ज्योतिर्वै हिरण्यं ज्योतिरिन्द्राग्नि! अमृतं
हिरण्वममृतमिन्द्राग्नी

१०.४.१.[७]

तावेताविन्द्राग्नी एव चिन्वन्ति  यद्धि किं चैष्टकमग्निरेव तत्तस्मात्तदग्निना
पचन्ति यद्धि किं चाग्निना पचन्त्यग्निरेव तदथ यत्पुरीषं स

इन्द्रस्तस्मात्तदग्निना न पचन्ति नेदग्निरेवासन्नेन्द्र इति तस्मादेताविन्द्राग्नी एव चितौ

१०.४.१.[८]

अथ यश्चितेऽग्निर्निधीयते  तदेकं रूपमुभौ भवतस्तस्मात्तावेतेनैव रूपेणेमाः प्रजाः प्रजनयतः सैषैकैवेष्टकाग्निरेव तामेष सर्वोऽग्निरभिसम्पद्यते सैवेष्टकासम्पत्तदेतदेकमेवाक्षरं वौगिति तदेष सर्वोऽग्निरभिसम्पद्यते सैवाक्षरसम्पत्



१०.४.१.[९]

तद्धैतत्पश्यन्नृषिरभ्यनूवाद  भूतं भविष्यत्प्रस्तौमि महद्ब्रह्मैकमक्षरं बहु ब्रह्मैकमक्षरमित्येतद्ध्येवाक्षरं सर्वे देवाः सर्वाणि भूतान्यभिसम्पद्यन्ते तदेतद्ब्रह्म च क्षत्रं चाग्निरेव ब्रह्मेन्द्रः क्षत्रमिन्द्राग्नी वै विश्वे देवा विड्ु विश्वे देवास्तदेतद्ब्रह्म क्षत्रं विट्

१०.४.१.[१०]

एतद्ध स्म वै तद्विद्वाञ्छ्यापर्णः सायकायन आह  यद्वै म इदं कर्म

समाप्स्यत ममैव प्रजा सत्वानां राजानोऽभविष्यन्मम ब्राह्मणा मम वैश्या
यत्तु म एतावत्कर्मणः समापि तेन म उभयथा सत्वान्प्रजातिरेक्ष्यत इति स एष
एव श्रीरेष यश एषोऽन्नादः

१०.४.१.[११]

एतद्ध वै तचाण्डिल्यः  वामकक्षायणाय प्रोच्योवाच श्रीमान्यशस्व्यन्नादो
भविष्यसीति श्रीमान्ह वै यशस्व्यन्नादो भवति य एवं वेद



१०.४.१.[१२]

स एषोऽग्निः प्रजापतिरेव  त देवा एतमग्निं प्रजापतिं संस्कृत्याथास्मा
एतत्संवत्सरेऽन्नं समस्कुर्वन्य एष महाव्रतीयो ग्रहः

१०.४.१.[१३]

तमध्वर्युर्ग्रहेण गृह्णाति  यद्गृह्णाति तस्माद्ग्रहस्तस्मिन्नुद्गाता महाव्रतेन
रसं दधाति सर्वाणि हैतानि सामानि यन्महाव्रतं तदस्मिन्त्सर्वैः सामभी रसं
दधाति तस्मिन्होता महतोक्थेन रसं दधाति सर्वा हैता ऋचो यन्महदुक्थं
तदस्मिन्त्सर्वाभिर्ऋग्भी रसं दधाति

१०.४.१.[१४]

ते यदा स्तुवते यदानुशंसति  अथास्मिन्नेतं वषङ्कृते जुहोति वौगिति वा एष षडितीदं षड्विधमन्नं कृत्वास्मा अपिदधात्यात्मसम्मितं यदु वा आत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति

१०.४.१.[१५]

स एष एवार्कः  योऽयमग्निश्चितस्तस्यैतदन्नं क्यमेष महाव्रतीयो ग्रहस्तदर्क्यं यजुष्ट एष एव महांस्तस्यैतदन्नं व्रतं तन्महाव्रतं सामत एष उ एवोक्तदन्नं थं तदुक्थमृक्तस्तदेतदेकं सत्त्रेधाख्यायते



१०.४.१.[१६]

स एष संवत्सरः प्राजापतिरग्निः  तस्यार्धमेव सावित्राण्यर्धं वैश्वकर्मणान्यष्टावेवास्य कलाः सावित्राण्यष्टौ वैश्वकर्मणान्यथ यदेतदन्तरेण कर्म क्रियते स एव सप्तदशः प्रजापतिर्यो वै कला मनुष्याणामक्षरं तद्देवानाम्

१०.४.१.[१७]

तद्वै लोमेति द्वे अक्षरे  त्वगिति द्वे असृगिति द्वे मेद इति द्वे मांसमिति द्वे स्नावेति द्वे अस्थीति द्वे मज्जेति द्वे ताः षोडश कला अथ य एतदन्तरेण प्राणः संचरति स एव सप्तदशः प्रजापतिः

१०.४.१.[१८]

तस्मा एतस्मै प्राणाय  एताः षोडश कला अन्नमभिहरन्ति ता यदानभिहर्तुं ध्रियन्तेऽथैता एव जग्ध्वोत्क्रामति तस्मादु हैतदशिशिषतस्तृप्रमिव भवति प्राणैरद्यमानस्य तस्मादु हैतदुपतापी कृशैव भवति प्राणैर्हि जग्धो भवति



१०.४.१.[१९]

तस्मा एतस्मै सप्तदशाय प्रजापतये  एतत्सप्तदशमन्नं समस्कुर्वन्य एष सौम्योऽध्वरोऽथ या अस्य ताः षोडश कला एते ते षोडशर्त्विजस्तस्मान्न सप्तदशमृत्विजं कुर्वीत नेदतिरेचयानीत्यथ य एवात्र रसो या आहुतयो हूयन्ते तदेव सप्तदशमन्नम्

१०.४.१.[२०]

ते यदा स्तुवते यदानुशंसति  अथास्मिन्नेतं वषट्कृते जुहोति वौगिति वा एष षडितीदं षड्विधमन्नं कृत्वास्मा अपिदधात्यात्मसम्मितं यदु वा आत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति

१०.४.१.[२१]

स एष एवार्कः  योऽयमग्निश्चितस्तस्यैतदन्नं क्यमेष सौम्योऽध्वरस्तदर्क्यं यजुष्ट एष एव महांस्तस्यैतदन्नं व्रतं तन्महाव्रतं सामत एष उ एवोक्तस्यैतदन्नं थं तदुक्थमृक्तस्तदेतदेकं सत्त्रेधाख्यायते स एतेनान्नेन सहोर्ध्व उदक्रामत्स यः स उदक्रामदसौ स आदित्योऽथ येन तेनान्नेन सहोदक्रामदेष स चन्द्रमाः



१०.४.१.[२२]

स एष एवार्को य एष तपति  तस्यैतदन्नं क्यमेष चन्द्रमास्तदर्क्यं यजुष्ट एष एव महांस्तस्यैतदन्नं व्रतं तन्महाव्रतं सामत एष उ एवोक्तस्यैतदन्नं थं तदुक्थमृक्तस्तदेतदेकं सत्त्रेधाख्यायत इत्यधिदेवतम्

१०.४.१.[२३]

अथाध्यात्मम्  प्राणो वा अर्कस्तस्यान्नमेव क्यं तदर्क्यं यजुष्टः प्राण एव माहांस्तस्यान्नमेव व्रतं तन्महाव्रतं सामतः प्राण उ एवोक्तस्यान्नमेव थं तदुक्थमृक्तस्तदेतदेकं सत्त्रेधाख्यायते स एष एवैषोऽधिदेवतमयमध्यात्मम्

१०.४.२.[१]

संवत्सरो वै प्रजापतिरग्निः  सोमो राजा चन्द्रमाः स ह स्वयमेवात्मानं प्रोचे यज्ञवचसे राजस्तम्बायनाय यावन्ति वाव मे ज्योतींषि तावत्यो म इष्टका इति



१०.४.२.[२]

तस्य वा एतस्य संवत्सरस्य प्रजापतेः  सप्त च शतानि विंशतिश्चाहोरात्राणि ज्योतींषि ता इष्टकाः षष्टिश्च त्रीणि च शताणि परिश्रितः षष्टिश्च त्रीणि च शतानि यजुष्मत्यः सोऽयं संवत्सरः प्रजापतिः सर्वाणि भूतानि ससृजे यच्च प्राणि यच्चाप्राणमुभयान्देवमनुष्यान्त्स सर्वाणि भूतानि सृष्ट्वा रिरिचानैव मेने स मृत्योर्बिभयां चकार

१०.४.२.[३]

स हेक्षां चक्रे  कथं न्वहमिनानि सर्वाणि भूतानि पुनरात्मन्नावपेय
पुनरात्मन्दधीय कथं न्वहमेवैषां सर्वेषां भूतानां पुनरात्मा स्यामिति

१०.४.२.[४]

स द्वेधात्मानं व्यौहत्  षष्टिश्च त्रीणि च शतान्यन्यतरस्येष्टका
अभवन्नेवमन्यतरस्य स न व्याप्नोत्

१०.४.२.[५]



त्रीनात्मनोऽकुरुत  तिस्रस्तिस्रोऽशीतय एकैकस्येष्टका अभवन्त्स नैव व्याप्नोत्

१०.४.२.[६]

चतुर आत्मनोऽकुरुत  अशीतिशतेष्टकान्त्स नैव व्याप्नोत्

१०.४.२.[७]

पञ्चात्मनोऽकुरुत  चतुश्चत्वारिंशं शतमेकैकस्येष्टका अभवन्त्स नैव व्याप्नोत्

१०.४.२.[८]

षडात्मनोऽकुरुत  विंशतिशतेष्टकान्त्स नैव व्याप्नोन्न सप्तधा व्यभवत्

१०.४.२.[९]

अष्टावात्मनोऽकुरुत  नवतीष्टकान्त्स नैव व्याप्नोत्



१०.४.२.[१०]

नवात्मनोऽकुरुत  अशीतीष्टकान्त्स नैव व्याप्नोत्

१०.४.२.[११]

दशात्मनोऽकुरुत  द्वासप्ततीष्टकान्त्स नैव व्याप्नोन्नैकादशधा व्यभवत्

१०.४.२.[१२]

द्वादशात्मनोऽकुरुत  षष्टीष्टकान्त्स नैव व्याप्नोन्न त्रयोदशधा व्यभवन्न
चतुर्दशधा

१०.४.२.[१३]

पञ्चदशात्मनोऽकुरुत  अष्टाचत्वारिंशदिष्टकान्त्स नैव व्याप्नोत्

१०.४.२.[१४]



षोडशात्मनोऽकुरुत  पञ्चचत्वारिंशदिष्टकान्त्स नैव व्याप्नोन्न सप्तदशधा
व्यभवत्

१०.४.२.[१५]

अष्टादशात्मनोऽकुरुत  चत्वारिंशदिष्टकान्त्स नैव व्याश्नोन्नैकां न विंशतिधा
व्यभवत्

१०.४.२.[१६]

विंशतिमात्मनोऽकुरुत  षड्विंशदिष्टकान्त्स नैव व्याप्नोन्नैकविंशतिधा व्यभवन्न द्वाविंशतिधा न त्रयोविंशतिधा

१०.४.२.[१७]

चतुर्विंशतिमात्मनोऽकुरुत  त्रिंशदिष्टकान्त्सोऽत्रातिष्ठत पञ्चदशे व्यूहे तद्यत्पञ्चदशे व्यूहेऽतिष्ठत तस्मात्पञ्चदशापूर्यमाणस्य रूपाणि पञ्चदशापक्षीयमाणस्य



१०.४.२.[१८]

अथ यच्चतुर्विंशतिमात्मनोऽकुरुत  तस्माच्चतुर्विंशत्यर्धमासः संवत्सरः स एतैश्चतुर्विंशत्या त्रिंशदिष्टकैरात्मभिर्न व्यभवत्स पञ्चदशाह्नो रूपाण्यपश्यदात्मनस्तन्वो मुहूर्तालोकम्पृणाः पञ्चदशैव रात्रेस्तद्यन्मुहु त्रायन्ते तस्मान्मुहुर्ता अथ यत्क्षुद्राः सन्त इमांलोकानापूरयन्ति तस्माल्लोकम्पृणाः

१०.४.२.[१९]

एष वा इदं सर्वं पचति  अहोरात्रैरर्धमासैर्मासैर्ऋतुभिः संवत्सरेण तदमुना पक्वमयं पचति पक्वस्य पक्तेति ह स्माह भारद्वाजोऽग्निममुना हि

पक्कमयं पचतीति

१०.४.२.[२०]

तानि संवत्सरे  दश च सहस्राण्यष्टौ च शतानि समपद्यन्त सोऽत्रातिष्ठत दशसु च सहस्रेष्वष्टासु च शतेषु

१०.४.२.[२१]



अथ सर्वाणि भूतानि पर्यैक्षत्  स त्रय्यामेव विद्यायां सर्वाणि भूतान्यपश्यदत्र हि सर्वेषां चन्दसामात्मा सर्वेषां स्तोमानां सर्वेषां प्राणानां सर्वेषां देवानामेतद्वा अस्त्येतद्ध्यमृतं यद्ध्यमृतं तद्ध्यस्त्येतदु तद्यन्मर्त्यम्

१०.४.२.[२२]

स ऐक्षत प्रजापतिः  त्रय्यां वाव विद्यायां सर्वाणि भूतानि हन्त त्रयोमेव विद्यामात्मानमभिसंस्करवा इति

१०.४.२.[२३]

स ऋचो व्यौहत्  द्वादश बृहतीसहस्राण्येतावत्यो हर्चो याः प्रजापतिसृष्टास्तास्त्रिंशत्तमे व्यूहे पङ्क्तिष्वतिष्ठन्त ता यत्त्रिंशत्तमे व्यूहेऽतिष्ठन्त तस्मात्त्रिंशन्मासस्य रात्रयोऽथ यत्पङ्क्तिषु तस्मात्पाङ्क्तः प्रजापतिस्ता अष्टाशतं शतानि पङ्क्त्योऽभवन्

१०.४.२.[२४]

अथेतरौ वेदौ व्यौहत्  द्वादशैव बृहतीसहस्राण्यष्टौ यजुषां चत्वारि साम्नामेतावद्धैतयोर्वेदयोर्यत्प्रजापतिसृष्टं तौ त्रिंशत्तमे व्यूहे पङ्क्तिष्वतिष्ठेतां तौ यत्त्रिंशत्तमे व्यूहेऽतिष्ठेतां तस्मात्त्रिंशन्मासस्य रात्रयोऽथ यत्पङ्क्तिषु तस्मात्पाङ्क्तः प्रजापतिस्ता अष्टाशतमेव शतानि पङ्क्त्योऽभवन्



१०.४.२.[२५]

ते सर्वे त्रयो वेदाः  दश च सहस्राण्यष्टौ च शतान्यशीतीोनामभवन्त्स मुहूर्तेनमुहूर्तेनाशीतिमाप्नोन्मुहूर्तेनमुहूर्तेनाशीतिः समपद्यत

१०.४.२.[२६]

स एसु त्रिषु लोकेषूखायाम्  योनौ रेतो भूतमात्मानमसिञ्चच्छन्दोमयं

स्तोममयं प्राणमयं देवतामयं तस्यार्धमासे प्रथम आत्मा समस्क्रियत
दवीयसि परो दवीयसि परः संवत्सर एव सर्वः कृत्स्नः समस्क्रियत

१०.४.२.[२७]

तद्यत्परिश्रितमुपाधत्त तद्रात्रिमुपाधत्त तदनु पञ्चदश
मुहूर्तान्मुहूर्ताननु पञ्चदशाशीतीरथ यद्यजुष्मतीमुपाधत्त
तदहरुपाधत्त तदनु पञ्चदश मुहूर्तान्मुहूर्ताननु पञ्चदशाशीतीरेवमेतां
त्रयीं विद्यामात्मन्नावपतात्मन्नकुरुत सोऽत्रैव सर्वेषाम्
भूतानामात्माभवच्चन्दोमय स्तोममयः प्राणमयो देवतामयः स एतन्मय
एव भूत्वोर्ध्व उदक्रामत्स यः स उदक्रामदेष स चन्द्रमाः



१०.४.२.[२८]

तस्यैषा प्रतिष्ठा य एष तपत्येतस्मादेवाध्यचीयतैतस्मिन्नध्यचीयतात्मन
एवैनं तन्निरमिमीतात्मनः प्राजनयत्

१०.४.२.[२९]

स यदग्निं चेष्यमाणो दीक्षते यथैव तत्प्रजापतिरेषु त्रिषु लोकेषूखायां
योनौ रेतो भूतमात्मानमसिञ्चदेवमेवैष एतदात्मानमुखायां योनौ रेतो

भूतं सिञ्चति चन्दोमयं स्तोममयं प्राणमयं देवतामयं तस्यार्धमासे प्रथम आत्मा संस्क्रियते दवीयसि परो दवीयसि परः संवत्सर एव सर्वः कृत्स्नः संस्क्रियते

१०.४.२.[३०]

तद्यत्परिश्रितमुपधत्ते  तद्रात्रिमुपधत्ते तदनु पञ्चदश मुहूर्तान्मुहूर्താननु पञ्चदशाशीतीरथ यद्यजुष्मतीमुपधत्ते तदहरुपधत्ते तदनु पञ्चदश मूहूर्तान्मुहूर्ताननु पञ्चदशाशीतीरेवमेतां त्रयीं विद्यामात्मन्नावपत आत्मन्कुरुते सोऽत्रैव सर्वेषां भूतानामात्मा भवति चन्दोमय स्तोममयः प्राणमयो देवतामयः स एतन्मय एव भूत्वोर्ध्व उत्क्रामति



१०.४.२.[३१]

तस्यैषा प्रतिष्ठा  य एष तपत्येतस्माद्देवाधिचीयत एतस्मिन्नधिचीयत आत्मन एवैनं तन्निर्मिमीत आत्मनः प्रजनयति स यदैवंविदस्माल्लोकात्प्रैत्यथैतमेवात्मानमभिसम्भवति चन्दोमयम् प्राणमयं देवतामयं स एतन्मय एव भूत्वोर्ध्व उत्क्रामति य एवं विद्वानेतत्कर्म कुरुते यो वैतदेवं वेद

१०.४.३.[१]

एष वै मृत्युर्यत्संवत्सरः  एष हि मर्त्यानामहोरात्राभ्यामायुः क्षिणोत्यथ म्रियन्ते तस्मादेष एव मृत्युः स यो हैतं मृत्युं संवत्सरं वेद न हास्यैष पुरा जरसोऽहोरात्राभ्यामायुः क्षिणोति सर्वं हैवायुरेति

१०.४.३.[२]

एष उ एवान्तकः  एष हि मर्त्यानामहोरात्राभ्यामायुषोऽन्तं गचत्यथ म्रियन्ते तस्मादेष एवान्तकः स यो हैतमन्तकं मृत्युं संवत्सरं वेद न हास्यैष पुरा जरसोऽहोरात्राभ्यामायुषोऽन्तं गचति सर्वं हैवायुरेति



१०.४.३.[३]

ते देवाः  एतस्मादन्तकान्मृत्योः संवत्सरात्प्रजापतेर्बिभयां चक्रुर्यद्वै नोऽयमहोरात्राभ्यामायुषोऽन्तं न गचेदिति

१०.४.३.[४]

त एतान्यज्ञक्रतूंस्तेनिरे  अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुबन्धं सौम्यमध्वरं त एतैर्यज्ञक्रतुभिर्यजमाना नामृतत्वमानशिरे

१०.४.३.[५]

ते हाप्यग्निं चिक्यिरे  तेऽपरिमिता एव परिश्रित उपदधुरपरिमिता यजुष्मतीरपरिमिता लोकम्पृणा यथेदमप्येतर्ह्येक उपदधतीति देवा अकुर्वन्निति ते ह नैवामृतत्वमानशिरे

१०.४.३.[६]



तेऽर्चन्तः श्राम्यन्तश्चेरुः  अमृतत्वमवरुरुत्समानास्तान्ह प्रजापतिरुवाच न वै मे सर्वाणि रूपाण्युपधत्थाति वैव रेचयथ न वाभ्यापयथ तस्मान्नामृता भवथेति

१०.४.३.[७]

ते होचुः  तेभ्यो वै नस्त्वमेव तद्ब्रूहि यथा ते सर्वाणि रूपाण्युपदधामेति

१०.४.३.[८]

स होवाच  षष्टिं च त्रीणि च शतानि परिश्रित उपधत्त षष्टिं च त्रीणि च शतानि

यजुष्मतीरधि षड्विंशतमथ लोकम्पृणा दश च सहस्राण्यष्टौ च शतान्युपधत्ताथ मे सर्वाणि रूपाण्युपधास्यथाथामृता भविष्यथेति ते ह तथा देवा उपदधुस्ततो देवा अमृता आसुः

१०.४.३.[९]

स मृत्युर्देवानब्रवीत्  इत्थमेव सर्वे मनुष्या अमृता भविष्यन्त्यथ को मह्यं भागो भविष्यतीति ते होचुर्नातोऽपरः कश्चन सह शरीरेणामृतोऽसद्यदैव त्वमेतं भागं हरासा अथ व्यावृत्य शरीरेणामृतोऽसद्योऽमृतोऽसद्विद्यया वा कर्मणा वेति यद्वै तदब्रुवन्विद्यया वा कर्मणा वेत्येषा हैव सा विद्या यदग्निरेतदु हैव तत्कर्म यदग्निः



१०.४.३.[१०]

ते य एवमेतद्विदुः  ये वैतत्कर्म कुर्वते मृत्वा पुनः सम्भवन्ति ते सम्भवन्त एवामृतत्वमभिसम्भवन्त्यथ य एवं न विदुर्ये वैतत्कर्म न कुर्वते मृत्वा पुनः सम्भवन्ति त एतस्यैवान्नं पुनःपुनर्भवन्ति

१०.४.३.[११]

स यदग्निं चिनुते  एतमेव तदन्तकं मृत्युं संवत्सरं प्रजापतिमग्निमाप्नोति

यं देवा आप्नुवन्नेतमुपधत्ते यथैवैनमदो देवा उपादधत

१०.४.३.[१२]

परिश्रिद्भिरेवास्य रात्रीराप्नोति
यजुष्मतीभिरहान्यर्धमासान्मासानृतूंल्लोकम्पृणाभिर्मुहूर्तान्

१०.४.३.[१३]



तद्याः परिश्रितः रात्रिलोकास्ता रात्रीणामेव साप्तिः क्रियते रात्रीणां प्रतिमा ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्य रात्रयस्तासामेकविंशतिं गार्हपत्ये परिश्रयति द्वाभ्यां नाशीतिं धिष्ण्येषु द्वे एकषष्टे शते आहवनीये

१०.४.३.[१४]

अथ यजुष्मत्यः दर्भस्तम्बो लोगेष्टकाः पुष्करपर्णं रुक्मपुरुषौ स्रुचौ स्वयमातृण्णा दूर्वेष्टका द्वियजू रेतःसिचौ विश्वज्योतिर्ऋतव्ये अषाढा कूर्म उलूखलमुसले उखा पञ्च पशुशीर्षाणि पञ्चदशापस्याः पञ्च चन्दस्याः:

१०.४.३.[१५]

अथ द्वितीया  पञ्चाश्विन्यो द्वे ऋतव्ये पञ्च वैश्वदेव्यः पञ्च प्राणभृतः पञ्चापस्या एकया न विंशतिर्वयस्यास्ता एकचत्वारिंशद्द्वितीया चितिः

१०.४.३.[१६]

अथ तृतीया  स्वयमातृणा पञ्च दिश्या विश्वज्योतिश्चतस्र ऋतव्या दश प्राणभृतः षट्त्रिंशच्छन्दस्याश्चतुर्दश वालखिल्यास्ता एकसप्ततिस्तृतीया चितिः



१०.४.३.[१७]

अथ चतुर्थी  अष्टादश प्रथमा अथ द्वादशाथ सप्तदश ताः सप्तचत्वारिंशच्चतुर्थी चितिः

१०.४.३.[१८]

अथ पञ्चमी  पञ्चासपत्नाश्चत्वारिंशद्विराज एकया न त्रिंशत्स्तोमभागाः पञ्च नाकसदः पञ्च पञ्चचूडा एकत्रिंशच्छन्दस्या अष्टौ गार्हपत्यो चितिरष्टौ पुनश्चितिर्ऋतव्ये विश्वज्योतिर्विकर्णी च स्वयमातृणा चाश्मा पृश्निर्यश्चितेऽग्निर्निधीयते ता अष्टात्रिंशं शतं पञ्चमी चितिः

१०.४.३.[१९]

ताः सर्वाः पञ्चभिर्न चत्वारि शतानि  तयो याः षष्टिश्च त्रीणि च शतान्यहर्लोकास्ता
अह्नामेव साप्तिः क्रियतेऽह्नां प्रतिमा ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च
ह वै त्रीणि च शतानि संवत्सरस्याहान्यथ याः षड्विंशत्पुरीषं तासां षड्विंशी
ततो याश्चतुर्विंशतिरर्धमासलोकास्ता अर्धमासानामेव साप्तिः क्रियतेऽर्धमासानाम्
प्रतिमाथ या द्वादश मासलोकास्ता मासानामेव साप्तिः क्रियते मासानां प्रतिमा ता
उ
द्वद्वे सहर्तुलोका ऋतूनामशून्यतायै



१०.४.३.[२०]

अथ या लोकम्पृणाः  मुहुर्तलोकास्ता मुहूर्तानामेव साप्तिः क्रियते मुहूर्तानाम्
प्रतिमा ता दश च सहस्राण्यष्टौ च शतानि भवन्त्येतावन्तो हि संवत्सरस्य
मुहूर्तास्तासामेकविंह्+शतिं गार्हपत्य उपदधाति द्वाभ्यां नाशीतिं
धिष्ण्येष्वाहवनीय इतरा एतावन्ति वै संवत्सरस्य रूपाणि तान्यस्यात्राप्तान्युपहितानि
भवन्ति

१०.४.३.[२१]
तद्धैके  आहवनीय एवैतां सम्पदमापिपयिषन्त्यन्ये वा एतेऽग्नयश्चिताः

किमन्यत्रोपहिता इह सम्पश्येमेति न तथा कुर्याद्दश वा एतानग्नींश्चिनुतेऽष्टौ धिष्ण्यानाहवनीयं च गार्हपत्यं च तस्मादाहुर्विराडग्निरिति दशाक्षरा हि विराट् तान्नु सर्वानेकमिवैवाचक्षतेऽग्निरित्येतस्य ह्येवैतानि सर्वाणि रूपाणि यथा संवत्सरस्याहोरात्राण्यर्धमासा मासा ऋतव एवमस्यैतानि सर्वाणि रूपाणि

१०.४.३.[२२]

ते ये ह तथा कुर्वन्ति  एतानि हास्य ते रूपाणि बहिर्धा कुर्वन्त्यथो पापवस्यसं कुर्वन्ति क्षत्राय विशं प्रतिप्रतिनीं प्रत्युद्यामिनीमाग्नीध्रीये वा अश्मानम् पृश्निमुपदधात्यथ तं सम्पश्यति किमु तं सम्पश्यन्नितरा न सम्पश्येद्येनैव निर्ऋतिं पाप्मानमपहते स एकादशः



१०.४.३.[२३]

तदाहुः  कथमु ता अत्र न सम्पश्यतीति न ह्येना अभिजुहोत्याहुत्या वा इष्टका सर्वा कृत्स्ना भवतीति

१०.४.३.[२४]

तदाहुः  कथमस्यैता अनतिरिक्ता उपहिता भवन्तीति वीर्यं वा अस्यैता अनतिरिक्तं वै पुरुषं वीर्यं स ह वा एतं सर्वं कृत्स्नं प्रजापतिं संस्करोति य एवं

विद्वानेतत्कर्म कुरुते यो वैतदेवं वेद

१०.४.४.[१]

प्रजापतिं वै प्रजाः सृजमानम्  पाप्मा मृत्युरभिपरिजघान स तपोऽतप्यत सहस्रं संवत्सरान्पाप्मानं विजिहासन्

१०.४.४.[२]

तस्य तपस्तेपानस्य  एभ्यो लोमगर्तेभ्य ऊर्ध्वानि ज्योतींष्यायंस्तद्यानि तानि ज्योतींष्येतानि तानि नक्षत्राणि यावन्त्येतानि नक्षत्राणि तावन्तो लोमगर्ता यावन्तो लोमगर्तास्तावन्तः सहस्रसंवत्सरस्य मुहूर्ताः

१०.४.४.[३]

स सहस्रतमे संवत्सरे  सर्वोऽत्यपवत स यः सोऽत्यपवतायमेव स वायुर्योऽयम् पवतेऽथ यं तं पाप्मानमत्यपवतेदं तच्चरीरं क उ तस्मै मनुष्यो यः सहस्रसंवत्सरमवरुन्धीत विद्यया ह वा एवंवित्सहस्रसंवत्सरमवरुन्द्धे

१०.४.४.[४]

सर्वा एवैता इष्टकाः साहस्रीरुपासीत  रात्रिसहस्रेण रात्रिसहस्रेणैकैकां परिश्रितं सम्पन्नामुपासीताहःसहस्रेणाहःसहस्रेणैकैकामहर्भाजमर्धमाससहस्रेणार्द्धमाससहस्रेणैकैकामर्धमासभाजं माससहस्रेणमाससहस्रेणैकैकाम् मासभाजमृतुसहस्रेणर्तुसहस्रेणैकैकामृतुभाजम् मुहूर्तसहस्रेणमुहूर्तसहस्रेणैकैकां मुहूर्तभाजं संवत्सरसहस्रेण संवत्सरं ते य एतमेवमग्निं संवत्सरेण सम्पन्नं विदुः सहस्रतमीं हास्य ते कलां विदुरथ य एनमेवं न विदुर्न हास्य ते सहस्रतमीं चन कलां विदुरथ य एवैवं वेद यो वैतत्कर्म कुरुते स हैवैतं सर्वं कृत्स्नम् प्राजापत्यमग्निमाप्नोति यं प्रजापतिराप्नोत्तस्मादेवंवित्तप एव तप्येत यदु ह वा एवंवित्तप तप्यत आ मैथुनात्सर्वं हास्य तत्स्वर्गं लोकमभिसम्भवति



१०.४.४.[५]

तदेतदृचाभ्युक्तम्  न मृषा श्रान्तं यदवन्ति देवा इति न हैवैवं विदुषः किं चन मृषा श्रान्तं भवति तथो हास्यैतत्सर्वं देवा अवन्ति

१०.४.५.[१]

अथादेशा उपनिषदाम्  वायुरग्निरिति ह शाकायनिन उपासत आदित्योऽग्निरित्यु हैक आहुरथ ह स्माह श्रौमत्यो वा हालिङ्गवो वा वायुरेवाग्निस्तस्माद्यदैवाध्वर्युरुत्तमं कर्म करोत्यथैतमेवाप्येतीति

१०.४.५.[२]

शाट्यायनिरु ह स्माह  संवत्सर एवाग्निस्तस्य वसन्तः शिरो ग्रीष्मो दक्षिणः पक्षो वर्षा उत्तरः शरदृतुर्मध्यमात्मा हेमन्तशिशिरावृतू पुचं प्रतिष्ठा वागग्निः प्राणो वायुश्चक्षुरादित्यो मनश्चन्द्रमाः श्रोत्रं दिश आपो मिथुनं तपः प्रतिष्ठा मासाः पर्वाण्यर्धमासा नाड्योऽहोरात्राणि रजतसुवर्णानि पत्राणि स एवं देवानप्येतीति संवत्सरोऽग्निरित्यु हैव विद्यादेतन्मयो भवतीति त्वेव विद्यात्



१०.४.५.[३]

चेलक उ ह स्माह शाण्डिल्यायनः  इम एव लोकास्तिस्रः स्वयमातृणवत्यश्चितयो यजमानश्चतुर्थी सर्वे कामाः पञ्चमीमांश्च लोकान्त्संस्कुर्व आत्मानं च सर्वांश्च कामानित्येव विद्यादिति

१०.५.१.[१]

तस्य वा एतस्याग्नेः  वागेवोपनिषद्वाचा हि चीयत ऋचा यजुषा साम्नेति नु दैव्याथ यन्मानुष्या वाचाहेतीदं कुरुतेतीदं कुरुतेति तदु ह तया चीयते

१०.५.१.[२]

सा वा एषा वाक्त्रेधाविहिता  ऋचो यजूंषि सामानि तेनाग्निस्त्रेधाविहित एतेन हि त्रयेण चीयतेऽप्यहैवं त्रेधाविहित इत्थं ह त्वेवापि त्रेधाविहितो यदस्मिंस्त्रेधाविहिता इष्टका उपधीयन्ते पुंनाम्न्य स्त्रीनाम्न्यो नपुंसकनाम्न्यस्त्रेधाविहितान्यु एवेमानि पुरुषस्याङ्गानि पुंनामानि स्त्रीनामानि नपुंसकनामानि

१०.५.१.[३]

सोऽयमात्मा त्रेधाविहित एव  सोऽनेन त्रेधाविहितेनात्मनैतं त्रेधाविहितं दैवममृतमाप्नोति ता उ सर्वा इष्टका इत्येवाचक्षते नेष्टक इति नेष्टकमिति वाचो रूपेण वाग्घ्येवैतत्सर्वं यत्स्त्री पुनान्नपुंसकं वाचा ह्येवैतत्सर्वमाप्तं तस्मादेना अङ्गिरस्वद्ध्रुवा सीदेत्येव सर्वाः सादयति नाङ्गिरस्वद्ध्रुवः सीदेति नाङ्गिरस्वद्ध्रुवं सीदेति वाचं ह्येवैतां संस्कुरुते

१०.५.१.[४]

सा या सा वागसौ स आदित्यः  स एष मृत्युस्तद्यत्किं चार्वाचीनमादित्यात्सर्वं तन्मृत्युनाप्तं स यो हैनमतोऽर्वाचीनं चिनुते मृत्युना हैनं स आप्तं चिनुते मृत्यवे ह स आत्मानमपिदधात्यथ य एनमत ऊर्ध्वं चिनुते स पुनर्मृत्युमपजयति विद्यया ह वा अस्यैषोऽत ऊर्ध्वं चितो भवति

१०.५.१.[५]

सा वा एषा वाक्रेधाविहिता  ऋचो यजूंषि सामानि मण्डलमेवर्चोऽर्चिः सामानि पुरुषो यजूंष्यथैतदमृतं यदेतदर्चिर्दीप्यत इदं तत्पुष्करपर्णं तद्यत्पुष्करपर्णमुपधायाग्निं चिनोत्येतस्मिन्नेवैतदमृत ऋङ्मयं यजुर्मयं साममयमात्मानं संस्कुरुते सोऽमृतो भवति

१०.५.२.[६]

यदेतन्मण्डलं तपति  तन्महदुक्थं ता .!चः स ऋचां लोकोऽथ यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानि स साम्नां लोकोऽथ य एष एतस्मिन्मण्डले पुरुषः सोऽग्निस्तानि यजूंषि स यजुषां लोकः



१०.५.२.[७]

सैषा त्रय्येव विद्या तपति  तद्धैतदप्यविद्वांस आहुस्त्रयी वा एषा विद्या तपतीति वाग्घैव तत्पश्यन्ती वदति

१०.५.२.[८]

स एष एतस्मिन्मण्डले पुरुषोऽथैतदमृतं यदेतदर्चिर्दीप्यते तस्मान्मृत्युर्न म्रियतेऽमृते ह्यन्तस्तस्मादु न दृश्यतेऽमृते ह्यन्तः

१०.५.२.[९]

तदेष श्लोको भवति  अन्तरं मृत्योरमृतमित्यवरं ह्येतन्मृत्योरमृतम् मृत्यावमृतमाहितमित्येतस्मिन्हि पुरुष एतन्मण्डलं प्रतिष्ठितं तपति मृत्युर्विवस्वन्तं वस्त इत्यसौ वा आदित्यो विवस्वानेष ह्यहोरात्रे विवस्ते तमेष वस्ते सर्वतो ह्येनेन परिवृतो मृत्योरात्मा विवस्वतीत्येतस्मिन्हि मण्डल एतस्य पुरुषस्यात्मैतदेष श्लोको भवति



१०.५.२.[१०]

तयोर्वा एतयोः  उभयोरेतस्य चार्चिष एतस्य च पुरुषस्यैतन्मण्डलं प्रतिष्ठा तस्मान्महदुक्थं परस्मै न शंसेन्नेदेतां प्रतिष्ठां चिनदा इत्येतां ह स प्रतिष्ठां चिन्ते यो महदुक्थं परस्मै शंसति तस्मादुक्थशसं भूयिष्ठम् परिचक्षते प्रतिष्ठाचिन्नो हि भवतीत्यधिदेवतम्

१०.५.२.[११]

अथाधियज्ञम्  यदे तन्मण्डलं तपत्ययं स रुक्मोऽथ यदेतदर्चिर्दीप्यत इदं

तत्पुष्करपर्णमापो ह्येता आपः पुष्करपर्णमथ य एष एतस्मिन्मण्डले पुरुषोऽयमेव स योऽयं हिरण्मयः पुरुषस्तदेतदेवैतत्त्रयं संस्कृत्येहोपधत्ते तद्यज्ञस्यैवानु संस्थामूर्ध्वमुत्क्रामति तदेतमप्येति य एष तपति तस्मादग्निं नाद्रियेत परिहन्तुममुत्र ह्येष तदा भवतीत्यु एवाधियज्ञम्

१०.५.२.[१२]

अथाध्यात्मम्  यदेतन्मण्डलं तपति यश्चैष रुक्म इदं तचुक्लमक्षन्नथ यदेतदर्चिर्दीप्यते यच्चैतत्पुष्करपर्णमिदं तत्कृष्णमक्षन्नथ य एष एतस्मिन्मण्डले पुरुषो यश्चैष हिरण्मयः पुरुषोऽयमेव स योऽयं दक्षिणेऽक्षन्पुरुषः



१०.५.२.[१३]

स एष एव लोकम्पृणा  तामेष सर्वोऽग्निरभिसम्पद्यते तस्यैतन्मिथुनं योऽयं सव्येऽक्षन्पुरुषोऽर्धमु हैतदात्मनो यन्मिथुनं यदा वै सह मिथुनेनाथ सर्वोऽथ कृत्स्नः कृत्स्नतायै तद्यत्ते द्वे भवतो द्वन्द्वं हि मिथुनम् प्रजननं तस्माद्द्वेद्वे लोकम्पृणे उपधीयेते तस्मादु द्वाभ्यां चितिम् प्रणयन्ति

१०.५.२.[१४]

स एष एवेन्द्रः  योऽयं दक्षिणेऽक्षन्पुरुषोऽथेयमिन्द्राणी ताभ्यां देवा एतां विधृतिमकुर्वन्नासिकां तस्माज्जायाया अन्ते नाश्नीयाद्वीर्यवान्हास्माज्जायते वीर्यवन्तमु ह सा जनयति यस्या अन्ते नाश्नाति

१०.५.२.[१५]

तदेतद्देवव्रतं  राजन्यबन्धवो मनुष्याणामनुतमां गोपायन्ति तस्मादु तेषु वीर्यवान्जायतेऽमृतवाका वयसां सा क्षिप्रश्येनं जनयति



१०.५.२.[१६]

तौ हृदयस्याकाशं प्रत्यवेत्य  मिथुनीभवतस्तौ यदा मिथुनस्यान्तं गचतोऽथ हैतत्पुरुषः स्वपिति तद्यथा हैवेदं मानुषस्य मिथुनस्यान्तं गत्वासंविद इव भवत्येवं हैवैतदसंविदैव भवति दैवं ह्येतन्मिथुनम् परमो ह्येष आनन्दः

१०.५.२.[१७]

तस्मादेवंवित्स्वप्यात्  लोक्यं हैते एव तद्देवते मिथुनेन प्रियेण धाम्ना

समर्धयति तस्मादु ह स्वपन्तं धुरेव न बोधयेन्नेदेते देवते
मिथुनोभवन्त्यौ हिनसानीति तस्मादु हैतत्सुषुपुषः श्लेष्मणमिव मुखम्
भवत्येते एव तद्देवते रेतः सिञ्चतस्तस्माद्रेतस इदं सर्वं सम्भवति यदिदं
किं च

१०.५.२.[१८]

स एष एव मृत्युः  य एष एतस्मिन्मण्डले पुरुषो यश्चायं
दक्षिणेऽक्षन्पुरुषस्तस्य हैतस्य हृदये पादावतिहतौ तौ हैतदाचिद्योत्क्रामति
स यदोत्क्रामत्यथ हैतत्पुरुषो म्रियते तस्मादु हैतत्प्रेतमाहुराचेद्यस्येति



१०.५.२.[१९]

एष उ एव प्राणः  एष हीमाः सर्वाः प्रजा प्रणयति तस्यैते प्राणाः स्वाः स यदा
स्वपित्यथैनमेते प्राणाः स्वा अपियन्ति तस्मात्स्वाप्ययः स्वाप्ययो ह वै तं स्वप्न
इत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवाः

१०.५.२.[२०]

स एतैः सुप्तः  न कस्य चन वेद न मनसा संकल्पयति न वाचान्नस्य रसं
विजानाति न प्राणेन गन्धं विजानाति न चक्षुषा पश्यति न श्रोत्रेण शृणोत्येतं ह्येते

तदापीता भवन्ति स एष एकः सन्प्रजासु बहुधा व्याविष्टस्तस्मादेका सती लोकम्पृणा सर्वमग्निमनुविभवत्यथ यदेक एव तस्मादेका

१०.५.२.[२१]

तदाहुः  एको मृत्युर्बहवा३ इत्येकश्च बहवश्चेति ह ब्रूयाद्यदहासावमुत्र तेनैकोऽथ यदिह प्रजासु बहुधा व्याविष्टस्तेनो बहवः

१०.५.२.[२२]



तदाहुः  अन्तिके मृत्युर्दूरा इत्यन्तिके च दूरे चेति ह ब्रूयाद्यदहायमिहाध्यात्मं तेनान्तिकेऽथ यदसावमुत्र तेनो दूरे

१०.५.२.[२३]

तदेष श्लोको भवति  अन्ने भात्यपश्रितो रसानां संक्षरेऽमृत इति यदेतन्मण्डलं तपति तदन्नमथ य एष एतस्मिन्मण्डले पुरुषः सोऽत्ता स एतस्मिन्नन्नेऽपश्रितो भातीत्यधिदेवतम्

१०.५.२.[२४]

अथाध्यात्मम्  इदमेव शरीरमन्नमथ योऽयं दक्षिणेऽक्षन्पुरुषः सोऽत्ता स
एतस्मिन्नन्नेऽपश्रितो भाति

१०.५.२.[२५]

तमेतमग्निरित्यध्वर्यव उपासते  यजुरित्येष हीदं सर्वं युनक्ति सामेति
चन्दोगा एतस्मिन्हीदं सर्वं समानमुक्थमिति बह्वृचा एष हीदं
सर्वमुत्थापयति यातुरिति यातुविद एतेन हीदं सर्वं यतं विषमिति सर्पाः सर्प
इति सर्पविद ऊर्गिति देवा रयिरिति मनुष्या मायेत्यसुराः स्वधेति पितरो देवजन इति
देवजनविदो रूपमिति गन्धर्वा गन्ध इत्यप्सरसस्तं यथायथोपासते तदेव
भवति तद्धैनान्भूत्वावति तस्मादेतमेवंवित्सर्वैरेवैतैरुपासीत सर्वं
हैतद्भवति सर्वं हैनमेतद्भूत्वावति



१०.५.२.[२६]

स एष त्रीष्टकोऽग्निः  ऋगेका यजुरेका सामैका तद्यां कां चात्रर्चोपदधाति रुक्म
एव तस्या आयतनमथ यां यजुषा पुरुष एव तस्या आयतनमथ यां साम्ना
पुष्करपर्णमेव तस्या आयतनमेवं त्रीष्टकः

१०.५.२.[२७]

ते वा एते  उभे एष च रुक्म एतच्च पुष्करपर्णमेतं पुरुषमपीत उभे ह्यृक्षामे यजुरपीत एवम्वेकेष्टकः

१०.५.२.[२८]

स एष एव मृत्युः  य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः स एष एवंविद आत्मा भवति स यदैवंविदस्माल्लोकात्प्रैत्यथैतमेवात्मानमभिसम्भवति सोऽमृतो भवति मृत्युर्ह्यस्यात्मा भवति



१०.५.३.[१]

नेव वा इदमग्रेऽसदासीन्नेव सदासीत्  आसीदिव वा इदमग्रे नेवासीत्तद्ध तन्मन एवास

१०.५.३.[२]

तस्मादेतदृषिणाभ्यनूक्तम्  नासदासीन्नो सदासीत्तदानीमिति नेव हि सन्मनो नेवासत्

१०.५.३.[३]

तदिदं मनः सृष्टमाविरबुभूषत्  निरुक्ततरं मूर्ततरं तदात्मानमन्वैचत्तत्तपोऽतप्यत तत्प्रामूर्चत्तत्षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चितस्ते मनसैवाधीयन्त मनसाचीयन्त मनसैषु ग्रहा अगृह्यन्त मनसास्तुवत मनसाशंसन्यत्किं च यज्ञे कर्म क्रियते यत्किं च यज्ञियं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमक्रियत तद्यत्किं चेमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिस्तानेवादधति तांश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शंसन्त्येतावती वै मनसो विभूतिरेतावती विसृष्टिरेतावन्मनः षट्त्रिंशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः



१०.५.३.[४]

तन्मनो वाचमसृजत  सेयं वाक्सृष्टाविरबुभूषन्निरुक्ततरा मूर्ततरा सात्मानमन्वैचत्सा तपोऽतप्यत सा प्रामूर्चत्सा षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्वाङ्मयान्वाक्चितस्ते वाचैवाधीयन्त वाचैषु ग्रहा अगृह्यन्त वाचास्तुवत वाचाशंसन्यत्किं च यज्ञे कर्म क्रियते यत्किं च यज्ञियं कर्म वाचैव तेषु तद्वाङ्मयेषु वाक्चित्सु वाङ्मयमक्रियत तद्यत्किं चेमानि भूतानि वाचा वदन्ति तेषामेव सा कृतिस्तानेवादधति तांश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शंसन्त्येतावती वै वाचो विभूतिरेतावती विसृष्टिरेतावती वाक्षट्त्रिंशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः

१०.५.३.[५]

सा वाक्प्राणमसृजत  सोऽयं प्राणः सृष्ट आविरबुभूषन्निरुक्ततरो मूर्ततरः स आत्मानमन्वैचत्स तपोऽतप्यत स प्रामूर्चत्स षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्प्राणमयान्प्राणचितस्ते प्राणेनैवाधीयन्त प्राणेनाचीयन्त प्राणेनैषु ग्रहा अगृह्यन्त प्राणेनास्तुवत प्राणेनाशंसन्यत्किं च यज्ञे कर्म क्रियते यत्किं च यज्ञियं कर्म प्राणेनैव तेषु तत्प्राणमयेषु प्राणचित्सु प्राणमयमक्रियत तद्यत्किं चेमानि भूतानि प्राणेन प्राणन्ति तेषामेव सा कृतिस्तानेवादधति तांष्विन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शंसन्त्येतावती वै प्राणस्य विभूतिरेतावती विसृष्टिरेतावान्प्राणः षट्त्रिंश



१०.५.३.[६]

स प्राणश्चक्षुरसृजत  तदिदं चक्षुः सृष्टमाविरबुभूषन्निरुक्ततरम् मूर्ततरं तदात्मानमन्वैचत्तत्तपोऽतप्यत तत्प्रामूर्चत्तत्षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कांश्चक्षुर्मयांश्चक्षुश्चितस्ते चक्षुषैवाधीयन्त चक्षुषाचीयन्त चक्षुषैषु ग्रहा अग्रृह्यन्त चक्षुषास्तुवत चक्षुषाशंसन्यत्किं च यज्ञे कर्म क्रियते यत्किं च यज्ञियं कर्म चक्षुषैव तेषु तच्चक्षुर्मयेषु चक्षुश्चित्सु चक्षुर्मयमक्रियत तद्यत्किं चेमानि भूतानि चक्षुषा पश्यन्ति तेषामेव सा कृतिस्तानेवादधति तांश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शंसन्त्येतावती वै चक्षुषो विभूतिरेतावती विसृष्टिरेतावच्चक्षुः षट्त्रिंश

१०.५.३.[७]

तच्चक्षुः श्रोत्रमसृजत  तदिदं श्रोत्रं सृष्टमाविरबुभूषन्निरुक्ततरम्
मूर्ततरं तदात्मानमन्वैचत्तत्तपोऽतप्यत तत्प्रामूर्चत्तत्षड्त्रिंशतं
सहस्राण्यपश्यदात्मनोऽग्नीनर्काण्छ्रोत्रमयाञ्छ्रोत्रचितस्ते श्रोत्रेणैवाधीयन्त
श्रोत्रेणाचीयन्त श्रोत्रेणैषु ग्रहा अगृह्यन्त श्रोत्रेणास्तुवत श्रोत्रेणाशंसन्यत्किं च
यज्ञे कर्म क्रियते यत्किं च यज्ञियं कर्म श्रोत्रेणैव तेषु तच्छ्रोत्रमयेषु
श्रोत्रचित्सु श्रोत्रमयमक्रियत तद्यत्किं चेमानि भूतानि श्रोत्रेण शृण्वन्ति
तेषामेव सा कृतिस्तानेवादधति तांश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु
शंसन्त्येतावती वै श्रोत्रस्य विभूतिरेतावती विसृष्टिरेतावच्छ्रोत्रं षड्त्रिंश



१०.५.३.[८]

तच्छ्रोत्रं कर्मासृजत  तत्प्राणानभिसममूर्चदिमं
संदेघमन्नसंदेहमकृत्स्नं वै कर्मर्ते प्राणेभ्योऽकृत्स्ना उवै प्राणा ऋते
कर्मणः

१०.५.३.[९]

तदिदं कर्म सृष्टमाविरबुभूषत्  निरुक्ततरं मूर्ततरं
तदात्मानमन्वैचत्तत्तपोऽतप्यत तत्प्रामूर्चत्तत्षड्त्रिंशतं
सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्कर्ममयान्कर्मचितस्ते कर्मणैवाधीयन्त

कर्मणाचीयन्त कर्मणैषु ग्रहा अगृह्यन्त कर्मणास्तुवत कर्मणाशंसन्यत्किं च यज्ञे कर्म क्रियते यत्किं च यज्ञियं कर्म कर्मणैव तेषु तत्कर्ममयेषु कर्मचित्सु कर्ममयमक्रियत तद्यत्किं चेमानि भूतानि कर्म कुर्वते तेषामेव सा कृतिस्तानेवादधति तांश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शंसन्त्येतावती वै कर्मणो विभूतिरेतावती विसृष्टिरेतावत्कर्म षट्त्रिंश

१०.५.३.[१०]

तत्कर्माग्निमसृजत  आविस्तरां वा अग्निः कर्मणः कर्मणा ह्येनं जनयन्ति कर्मणेन्धते



१०.५.३.[११]

सोऽयमग्निः सृष्ट आविरबुभूषत्  निरुक्ततरो मूर्ततरः स आत्मानमन्वैचत्स तपोऽतप्यत स प्रामूर्चत्स षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कानग्निमयानग्निचितस्तेऽग्निनैवाधीयन्ताग्निनाचीयन् ताग्निनैषु ग्रहा अगृह्यन्ताग्निनास्तुवताग्निनाशंसन्यत्किं च यज्ञे कर्म क्रियते यत्किं च यज्ञियं कर्माग्निनैव तेषु तदग्निमयेष्वग्निचित्स्वग्निमयमक्रियत तद्यत्किं चेमानि भूतान्यग्निमिन्धते तेषामेव सा कृतिस्तानेवादधति तांश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शंसन्त्येतावती वा अग्नेर्विभूतिरेतावती विसृष्टिरेतावानग्निः षट्त्रिंशत्सहस्राण्यग्नयो=र्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः

१०.५.३.[१२]

ते हैते विद्याचित एव  तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते विद्यया हैवैत एवंविदश्चिता भवन्ति

१०.५.४.[१]

अयं वाव लोक एषोऽग्निश्चितः  तस्याप एव परिश्रितो मनुष्या यजुष्मत्य इष्टकाः सूददोहा ओषधयश्च वनस्पतयश्च पुरीषमाहुतयः समिधोऽग्निर्लोकम्पृणा तद्वा एतत्सर्वमग्निमेवाभिसम्पद्यते तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनं भूतमेतत्सर्वमभिसम्पद्यते



१०.५.४.[२]

अन्तरिक्षं ह त्वेवैषोऽग्निश्चितः  तस्य द्यावापृथिव्योरेव संधिः परिश्रितः परेण हान्तरिक्षं द्यावापृथिवी संधत्तस्ताः परिश्रितो वयांसि यजुष्मत्य इष्टका वर्षं सूददोहा मरीचयः पुरीषमाहुतयः समिधो वायुर्लोकम्पृणा तद्वा एतत्सर्वं वायुमेवाभिसम्पद्यते तत्सर्वोऽग्निर्लो

१०.५.४.[३]

द्यौर्ह त्वेवैषोऽग्निश्चितः  तस्याप एव परिश्रितो यथा ह वा इदं कोशः समुब्जित एवमिमे लोका अप्स्वन्तस्तद्या इमांलोकान्परेणापस्ताः परिश्रितो देवा यजुष्मत्य इष्टका यदेवैतस्मिंलोकेऽन्नं तत्सूददोहा नक्षत्राणि पुरीषमाहुतयः समिध आदित्यो लोकम्पृणा तद्वा एतत्सर्वमादित्यमेवाभिसम्पद्यते तत्सर्वोऽग्निर्लो

१०.५.४.[४]

आदित्यो ह त्वेवैषोऽग्निश्चितः  तस्य दिश एव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यं दिशः समन्तं परियन्ति रश्मयो यजुष्मत्य इष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यस्य रश्मयस्तद्यत्परिश्रित्सु यजुष्मतीः प्रत्यर्पयति रश्मींस्तद्दिक्षु प्रत्यर्पयत्यथ यदन्तरा दिशश्च रश्मींश्च तत्सूददोहा अथ यद्दिक्षु च रश्मिषु चान्नं तत्पुरीषं ता आहुतयस्ताः समिधोऽथ यद्दिश इति च रश्मय इति चाख्यायते तल्लोकम्पृणा तद्वा एतत्सर्वं दिश इति चैव रश्मय इति चाख्यायते तत्सर्वोऽग्निर्लो



१०.५.४.[५]

नक्षत्राणि ह त्वेवैषोऽग्निश्चितः  तानि वा एतानि सप्तविंशतिर्नक्षत्राणि सप्तविंशतिः सप्तविंशतिर्होपनक्षत्राण्येकैकं नक्षत्रमनूपतिष्ठन्ते तानि सप्त च शतानि विंशतिश्चाधि षड्विंशत्ततो यानि सप्त च शतानि विंशतिश्चेष्टका एव ताः षष्टिश्च

त्रीणि च शतानि परिश्रितः षष्टिश्च त्रीणि च शतानि यजुष्मत्योऽथ यान्यधि
षड्विंशत्स त्रयोदशो मासः स आत्मा त्रिंशदात्मा प्रतिष्ठा द्वे शिर एव षड्विंश्यौ
तद्यत्ते द्वे भवतो द्व्यक्षरं हि शिरोऽथ यदन्तरा नक्षत्रे तत्सूददोहा अथ
यन्नक्षत्रेष्वन्नं तत्पुरीषं ता आहुतयस्ताः समिधोऽथ
यन्नक्षत्राणीत्याख्यायते तल्लोकम्पृणा तद्वा एतत्सर्वंनक्षत्राणीत्येवाख्यायते
तत्सर्वोऽग्निर्लो

१०.५.४.[६]

ता वा एताः  एकविंशतिर्बृहत्य एकविंशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेष
स्वर्गं लोकमभिसम्पद्यत एकविंशं च स्तोमं बृहतीं च चन्दः



१०.५.४.[७]

चन्दांसि ह त्वेवैषोऽग्निश्चितः  तानि वा एतानि सप्त चन्दांसि चतुरुत्तराणि त्रिचानि तेषां
सप्त च शतानि विंशतिश्चाक्षराण्यधि षड्विंशत्ततो यानि सप्त च शतानि
विंशतिश्चेष्टका एव ताः षष्टिश्च त्रीणि च शतानि परिश्रितः षष्टिश्च त्रीणि च शतानि
यजुष्मत्योऽथ यान्यधि षड्विंशत्स त्रयोदशो मासः स आत्मा त्रिंशदात्मा
प्रतिष्ठा द्वे प्राणा द्वे शिर एव षड्विंश्यौ तद्यत्ते द्वे भवतो द्व्यक्षरं हि
शिरः

१०.५.४.[८]

तस्यै वा एतस्यै षट्त्रिंशदक्षरायै बृहत्यै  यानि दश प्रथमान्यक्षराणि सा दशाक्षरैकपदाथ यानि विंशतिः सा विंशत्यक्षरा द्विपदाथ यानि त्रिंशत्सा त्रिंशदक्षरा विराडथ यानि त्रयस्त्रिंशत्सा त्रयस्त्रिंशदक्षराथ यानि चतुस्त्रिंशत्सा चतुस्त्रिंशदक्षरा स्वराडथ यत्सर्वैश्चन्दोभिरयमग्निश्चितस्तदतिचन्दास्ता उ सर्वा इष्टका एवेष्टकेति त्रीण्यक्षराणि त्रिपदा गायत्री तेनैष गायत्रोऽग्निर्मृदाप इति त्रीण्यक्षराणि त्रिपदा गायत्री तेनो एवैष गायत्रोऽथ यदन्तरा चन्दसी तत्सूददोहा अथ यच्चन्दःस्वन्नं तत्पुरीषं ता आहुतयस्ताः समिधोऽथ यच्चन्दांसीत्याख्यायते तल्लोकम्पृणा तद्वा एतत्सर्वं चन्दांसीत्येवाख्यायते तत्सर्वोऽग्निर्लो



१०.५.४.[९]

ता वा एताः  एकविंशतिर्बृहत्य एकविंशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेष स्वर्गं लोकमभिसम्पद्यत एकविंशं च स्तोमं बृहतीं च चन्दः

१०.५.४.[१०]

संवत्सरो ह त्वेवैषोऽग्निश्चितः  तस्य रात्रय एव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्य रात्रयोऽहानि यजुष्मत्य इष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहान्यथ या अमूः षट्त्रिंशदिष्टका अतियन्ति यः स त्रयोदशो मास

आत्मार्धमासाश्च ते मासाश्च चतुर्विंशतिरर्धमासा द्वादश मासा अथ यदन्तराहोरात्रे तत्सूददोहा अथ यदहोरात्रेष्वन्नं तत्पुरीषं ता आहुतयस्ताः समिधोऽथ यदहोरात्राणीत्याख्यायते तल्लोकम्पृणा तद्वा एतत्सर्वमहोरात्राणीत्येवाख्यायते तत्सर्वोऽग्निर्लो

१०.५.४.[११]

ता वा एताः  एकविंशतिर्बृहत्य एकविंशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेष स्वर्गं लोकमभिसम्पद्यते एकविंशं च स्तोमं बृहतीं च चन्दः



१०.५.४.[१२]

आत्मा ह त्वेवैषोऽग्निश्चितः  तस्यास्थीन्येव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्यास्थीनि मज्जानो यजुष्मत्य इष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्य मज्जानोऽथ या अमूः षड्विंशदिष्टका अतियन्ति यः स त्रयोदशो मास आत्मा प्राणः स तस्य त्रिंशदात्मन्विधाः प्रतिष्ठायां द्वे शीर्षन्द्वे तद्यत्ते द्वे भवतो द्विकपालं हि शिरोऽथ येनेमानि पर्वाणि संततानि तत्सूददोहा अथैतत्त्रयं येनायमात्मा प्रचन्नो लोम त्वङ्मांसमिति तत्पुरीषं यत्पिबति ता आहुतयो यदश्नाति ताः समिधोऽथ यदात्मेत्याख्यायते तल्लोकम्पृणा तद्वा एतत्सर्वमात्मेत्येवाख्यायते तत्सर्वोऽग्निर्लो

१०.५.४.[१३]

ता वा एताः  एकविंशतिर्बृह

१०.५.४.[१४]

सर्वाणि ह त्वेव भूतानि  सर्वे देवा एषोऽग्निश्चित आपो वै सर्वे देवाः सर्वाणि भूतानि ता हैता आप एवैषोऽग्निश्चितस्तस्य नाव्या एव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यं नाव्याः समन्तं परियन्ति नाव्या उ एव यजुष्मत्य इष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यं नाव्या अभिक्षरन्त्यथ यदन्तरा नाव्ये तत्सूददोहा अथ या अमूः षड्विंशदिष्टका अतियन्ति यः स त्रयोदशो मास आत्मायमेव स योऽयं हिरण्मयः पुरुषः



१०.५.४.[१५]

तस्यैते प्रतिष्ठे  रुक्मश्च पुष्करपर्णं चापश्चादित्यमण्डलं च स्रुचौ बाहू ताविन्द्राग्नी द्वे स्वयमातृणे इयं चान्तरिक्षं च तिस्रो विश्वज्योतिष एता देवता अग्निर्वायुरादित्य एता ह्येव देवता विश्वं ज्योतिर्द्वादशर्तव्याः स संवत्सरः स आत्मा पञ्च पञ्चचूडाः स यज्ञस्ते देवा अथ यद्विकर्णी च स्वयमातृणा चाश्मा पृश्निर्यश्चितेऽग्निर्निधीयते सा पञ्चत्रींशी लोकम्पृणायै यजुः षड्विंशी सोऽस्यैष सर्वस्यान्तमेवात्मा स एष सर्वासामपां मध्ये स एष सर्वैः कामैः सम्पन्न

आपो वै सर्वे कामाः स एषोऽकामः सर्वकामो न ह्येतं कस्य चन कामः

१०.५.४.[१६]

तदेष श्लोको भवति  विद्यया तदारोहन्ति यत्र कामाः परागताः न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विन इति न हैव तं लोकं दक्षिणाभिर्न तपसानेवंविदश्नुत एवंविदां हैव स लोकः

१०.५.४.[१७]



अभ्रं पुरीषम्  चन्द्रमा आहुतयो नक्षत्राणि समिधो यच्चन्द्रमा नक्षत्रे वसत्याहुतिस्तत्समिधि वसत्येतदु वा आहुतेरन्नमेषा प्रतिष्ठा तस्मादाहुतिर्न क्षीयत एतद्ध्यस्या अन्नमेषा प्रतिष्ठाथ यद्देवा इत्याख्यायते तल्लोकम्पृणा तद्वा एतत्सर्वं देवा इत्येवाख्यायते

१०.५.४.[१८]

तदेतदृचाभ्युक्तम्  विश्वे देवा अनु तत्ते यजुर्गुरिति सर्वाणि ह्यत्र भूतानि सर्वे देवा यजुरेव भवन्ति तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनं भूतमेतत्सर्वमभिसम्पद्यते

१०.५.४.[१९]

ता वा एताः  एकविंशतिर्बृहत्य एकविंशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेष स्वर्गं लोकमभिसम्पद्यत एकविंशं च स्तोमं बृहतीं च चन्दः

१०.५.५.[१]

कुश्रिर्ह वाजश्रवसोऽग्निं चिक्ये  तं होवाच सुश्रुवाः कौष्यो गौतम यदग्निमचैषीः प्राञ्चमेनमचैषीः प्रत्यञ्चमेनमचैषीर्न्यञ्चमेनमचैषीरुत्तानमेनमचैषीः



१०.५.५.[२]

यद्यहैनं प्राञ्चमचैषीः यथा पराच आसीनाय पृष्ठतोऽन्नाद्यमुपाहरेत्तादृक्तन्न ते हविः प्रतिग्रहीष्यति

१०.५.५.[३]

यद्यु वा एनं प्रत्यञ्चमचैषीः  कस्मादस्य तर्हि पश्चात्पुचमकार्षीः

१०.५.५.[४]

यद्यु वा एनं न्यञ्चमचैषीः  यथा नीचः शयानस्य पृष्ठेऽन्नाद्यम्
प्रतिष्ठापयेत्ताद्दक्तन्नैव ते हविः प्रतिग्रहीस्यति

१०.५.५.[५]

यद्यु वा एनमुत्तानमचैषीः  न वा उत्तानं वयः स्वर्गं लोकमभिवहति न त्वा
स्वर्गं लोकमभिवक्ष्यत्यस्वर्ग्य उ ते भविष्यतीति



१०.५.५.[६]

स होवाच  प्राञ्चमेनमचैषं प्रत्यञ्चमेनमचैषं
न्यञ्चमेनमचैषमुत्तानमेनमचैषं सर्वा अनु दिश एनमचैषमिति

१०.५.५.[७]

स यत्प्राञ्चं पुरुषमुपदधाति  प्राच्यौ स्रुचौ तत्प्राङ्ङीयतेऽथ यत्प्रत्यञ्चं
कूर्ममुपदधाति प्रत्यञ्चि पशुशीर्षाणि तत्प्रत्यङ्ङीयतेऽथ यन्न्यञ्चं

कूर्ममुपदधाति न्यञ्चि पशुशीर्षाणि नीचीरिष्टकास्तन्न्यङ्चीयतेऽथ यदुत्तानम्
पुरुषमुपदधात्युत्ताने स्रुचा उत्तानमुलूखलमुत्तानामुखां
तदुत्तानश्चीयतेऽथ यत्सर्वा अनु दिशः परिसर्पमिष्टका उपदधाति
तत्सर्वतश्चीयते

१०.५.५.[८]

अथ ह कोषा धावयन्तः  निरूढशिरसमग्निमुपाधावयां चक्रुस्तेषां हैक
उवाच श्रीर्वै शिरः श्रियमस्य निरौहीत्सर्वज्यानिं ज्यास्यत इति स ह तथैवास



१०.५.५.[९]

अथ हैक उवाच  प्राणा वै शिरः प्राणानस्य निरौहीत्क्षिप्रेऽमुं लोकमेष्यतीति स उ
ह तथैवास

१०.५.५.[१०]

ऊर्ध्वो वा एष एतच्चीयते  यद्दर्भस्तम्बो लोगेष्टकाः पुष्करपर्णं
रुक्मपुरुषौ स्रुचौ स्वयमातृण्णा दूर्वेष्टका द्वियजू रेतःसिचौ विश्वज्योतिर्ऋतव्ये
अषाढा कूर्मोऽथ हास्यैतदेव प्रत्यक्षतमां शिरो यश्चितेऽग्निर्निधीयते तस्मान्न
निरूहेत्

१०.६.१.[१]

अथ हैतेऽरुणे  औपवेशौ समाजग्मुः सत्ययज्ञः पौलुषिर्महाशालो जाबालो बुडिल आश्वतराश्विरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यस्ते ह वैश्वानरे समासत तेषां ह वैश्वानरे न समियाय

१०.६.१.[२]



ते होचुः  अश्वपतिर्वा अयं कैकेयः सम्प्रति वैश्वानरं वेद तं गच्चामेति ते हाश्वपतिं कैकेयमाजग्मुस्तेभ्यो ह पृथगावसथान्पृथगपचितीः पृथक्षाहस्रान्त्सोमान्प्रोवाच ते ह प्रातरसंविदाना एव समित्प्राणयः प्रतिचक्रमिर उप त्वायामेति

१०.६.१.[३]

स होवाच  यन्नु भगवन्तोऽनूचाना अनूचानपुत्राः किमिदमिति ते होचुर्वैश्वानरं ह भगवान्त्सम्प्रति वेद तं नो ब्रूहीति स होवाच सम्प्रति खलु न्वा अहं वैश्वानरं वेदाभ्याधत्त समिध उपेता स्थेति

१०.६.१.[४]

स होवाचारुणमौपवेशिं  गौतम कं त्वं वैश्वानरं वेत्थेति पृथिवीमेव राजन्निति होवाचोमिति होवाचैष वै वैश्वानर एतं हि वै त्वं प्रतिष्ठां वैश्वानरं वेत्थ तस्मात्त्वं प्रतिष्ठितः प्रजया पशुभिरसि यो वा एतम् प्रतिष्ठां वैश्वानरं वेदाप पुनर्मृत्युह्+ जयति सर्वमायुरेति पादौ त्वा एतौ वैश्वानरस्य पादौ तेऽम्लास्यतां यदि ह नागमिष्य इति पादौ तेऽविदितावभविष्यतां यदि ह नागमिष्य इति वा

१०.६.१.[५]



अथ होवाच सत्ययज्ञं पौलुषिम्  प्राचीनयोग्य कं त्वं वैश्वानरं वेत्थेत्यप एव राजन्निति होवाचोमिति होवाचैष वै रयिर्वैश्वानर एतं हि वै त्वं रयिं वैश्वानरं वेत्थ तस्मात्त्वं रयिमान्पुष्टिमानसि यो वा एतं रयिं वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति वस्तिस्त्वा एष वैश्वानरस्य वस्तिस्त्वाहास्यद्यदि ह नागमिष्य इति वस्तिस्तेऽविदितोऽभविष्यद्यदि ह नागमिष्य इति वा

१०.६.१.[६]

अथ होवाच महाशालं जाबालम्  औपमन्यव कं त्वं वैश्वानरं वेत्थेत्याकाशमेव राजन्निति होवाचोमिति होवाचैष वै बहुलो वैश्वानर एतं हि वै त्वं बहुलं वैश्वानरं वेत्थ तस्मात्त्वं बहुः प्रजया पशुभिरसि यो वा एतम्

बहुलं वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेत्यात्मा त्वा एष वैश्वानरस्यात्मा त्वाहास्यद्यदि ह नागमिष्य इत्यात्मा तेऽविदितोऽभविष्यद्यदि ह नागमिष्य इति वा

१०.६.१.[७]

अथ होवाच बुडिलमाश्वतराश्विम्  वैयाघ्रपद्य कं त्वं वैश्वानरं वेत्थेति वायुमेव राजन्निति होवाचोमिति होवाचैष वै पृथग्वर्त्मा वैश्वानर एतं हि वै त्वं पृथग्वर्त्मानं वैश्वानरं वेत्थ तस्मात्त्वां पृथग्रथश्रेणयोऽनुयान्ति यो वा एतं पृथग्वर्त्मानं वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति प्राणस्त्वा एष वैश्वानरस्य प्राणस्त्वाहास्यद्यदि ह नागमिष्य इति प्राणस्तेऽविदितोऽभविष्यद्यदि ह नागमिष्य इति वा



१०.६.१.[८]

अथ होवाचेन्द्रद्युम्नं भाल्लवेयम्  वैयाघ्रपद्य कं त्वं वैश्वानरं वेत्थेत्यादित्यमेव राजन्निति होवाचोमिति होवाचैष वै सुततेजा वैश्वानर एतं हि वै त्वं सुततेजसं वैश्वानरं वेत्थ तस्मात्तवैष सुतोऽद्यमानः पच्यमानोऽक्षीयमाणो गृहेषु तिष्ठति यो वा एतं सुततेजसं वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति चक्षुस्त्वा एतद्वैश्वानरस्य चक्षुस्त्वाहास्यद्यदि ह नागमिष्य इति चक्षुस्तेऽविदितमभविष्यद्यदि ह नागमिष्य इति वा

१०.६.१.[९]

अथ होवाच जनं शार्कराक्ष्यम्  सायवस कं त्वं वैश्वानरं वेत्थेति दिवमेव राजन्निति होवाचोमिति होवाचैष वा अतिष्ठा वैश्वानर एतं हि वै त्वमतिष्ठां वैश्वानरं वेत्थ तस्मात्त्वं समानानतितिष्ठसि यो वा एतमतिष्ठां वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति मूर्धा त्वा एष वैश्वानरस्य मूर्धा त्वाहास्यद्यदि ह नागमिष्य इति मूर्धा तेऽविदितोऽभविष्यद्यदि ह नागमिष्य इति वा

१०.६.१.[१०]

तान्होवाच  एते वै यूयं पृथग्वैश्वानरान्विद्वांसः पृथगन्नमघस्त प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसम्पन्नास्तथा तु व एनान्वक्ष्यामि यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामीति



१०.६.१.[११]

स होवाच  मूर्धानमुपदिशन्नेष वा अतिष्ठा वैश्वानर इति चक्षुषी उपदिशन्नुवाचैष वै सुततेजा वैश्वानर इति नासिके उपदिशन्नुवाचैष वै पृथग्वर्त्मा वैश्वानर इति मुख्यमाकाशमुपदिशन्नुवाचैष वै बहुलो वैश्वानर इति मुख्या अप उपदिशन्नुवाचैष वै रयिर्वैश्वानरो इति चुबुकमुपदिशन्नुवाचैष वै प्रतिष्ठा वैश्वानर इति स एषोऽग्निर्वैश्वानरो यत्पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति न हास्य ब्रुवाणं चन

वैश्वानरो हिनस्ति

१०.६.२.[१]

द्वयं वा इदमत्ता चैवाद्यं च  तद्यदोभयं समागचत्यत्तैवाख्यायते नाद्यम्

१०.६.२.[२]

स वै यः सोऽत्ताग्निरेव सः  तस्मिन्यत्किं चाभ्यादधत्याहितय एवास्य ता आहितयो ह वै ता आहुतय इत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवाः



१०.६.२.[३]

आदित्यो वा अत्ता  तस्य चन्द्रमा एवाहितयश्चन्द्रमसं ह्यादित्य आदधतीत्यधिदेवतम्

१०.६.२.[४]

अथाध्यात्मम्  प्राणो वा अत्ता तस्यान्नमेवाहितयोऽन्नं हि प्राण आदधतीति न्वग्नेः

१०.६.२.[५]

अथार्कस्य  अग्निर्वा अर्कस्तस्याहुतय एव कमाहुतयो ह्यग्नये कम्

१०.६.२.[६]

आदित्यो वा अर्कः  तस्य चन्द्रमा एव कं चन्द्रमा ह्यादित्याय कमित्यधिदेवतम्



१०.६.२.[७]

अथाध्यात्मम्  प्राणो वा अर्कस्तस्यान्नमेव कमन्नं हि प्राणाय कमिति
न्वेवार्कस्य

१०.६.२.[८]

अथोक्थस्य  अग्निर्वा उक्तस्याहुतय एव थमाहुतिभिर्ह्यग्निरुत्तिष्ठति

१०.६.२.[९]

आदित्यो वा उक् तस्य चन्द्रमा एव थं चन्द्रमसा ह्यादित्य उत्तिष्ठतीत्यधिदेवतम्

१०.६.२.[१०]

अथाध्यात्मम्  प्राणो वा उक्तस्यान्नमेव थमन्नेन हि प्राण उत्तिष्ठतीति
न्वेवोक्थस्य स एषोऽग्निविधोऽर्कविध उक्थविधो यत्पुरुषः स यो
हैतमेवमग्निविधमर्कविधमुक्थविधं पुरुषमुपास्ते विदुषो
हैवास्यैवं भ्रातृव्यो म्लायति



१०.६.२.[११]

प्राणेन वा अग्निर्दीप्यते  अग्निना वायुर्वायुनादित्य आदित्येन चन्द्रमाश्चन्द्रमसा
नक्षत्राणि नक्षत्रैर्विद्युदेतावती वै दीप्तिरस्मिंश्च लोकेऽमुष्मिंश्च सर्वा हैतां
दीप्तिं दीप्यतेऽस्मिंश्च लोकेऽमुष्मिंश्च य एवं वेद

१०.६.३.[१]

सत्यं ब्रह्मेत्युपासीत  अथ खलु क्रतुमयोऽयं पुरुषः स

यावत्क्रतुरयमस्माल्लोकात्प्रैत्येवंक्रतुर्हामुं लोकं प्रेत्याभिसम्भवति

१०.६.३.[२]

स आत्मानमुपासीत  मनोमयं प्राणशरीरं भारूपमाकाशात्मानं कामरूपिणम्
मनोजवसं सत्यसंकल्पं सत्यधृतिं सर्वगन्धं सर्वरसं सर्वा अनु दिशः
प्रभूतं सर्वमिदमभ्याप्तमवाक्कमनादरं यथा व्रीहिर्वा यवो वा श्यामाको
वा श्यामाकतण्डुलो वैवमयमन्तरात्मन्पुरुषो हिरण्मयो यथा
ज्योतिरधूममेवं ज्यायान्दिवो ज्यायानाकाशाज्ज्यायानस्यै पृथिव्यै ज्यायान्त्सर्वेभ्यो
भूतेभ्यः स प्राणस्यात्मैष म आत्मैतमित आत्मानं प्रेत्याभिसम्भविष्यामीति
यस्य स्यादद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्य एवमेतदिति



१०.६.४.[१]

उषा वा अश्वस्य मेध्यस्य शिरः  सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः
संवत्सर आत्माश्वस्य मेध्यस्य द्यौष्पृष्ठमन्तरिक्षमुदरं पृथिवी
पाजस्यं दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च
पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मांसान्यूवध्यं सिकताः
सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च
लोमान्युद्यन्पूर्वार्धो निम्लोचन्जघनार्धो यद्विजृम्भते तद्विद्योतते
यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वागहर्वा अश्वम्
पुरस्तान्महिमान्वजायत तस्य पूर्वे समुद्रे योनीरात्रिरेनम्

पश्चान्महिमान्वजायत तस्यापरे समुद्रे योनिरेतौ वा अश्वं महिमानावभितः सम्बभूवतुर्हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वासुरानश्वो मनुष्यान्त्समुद्र एवास्य बन्धुः समुद्रो योनिः

१०.६.५.[१]

नैवेह किं चनाग्र आसीत्  मृत्युनैवेदमावृतमासीदशनाययाशनाया हि मृत्युस्तन्मनोऽकुरुतात्मन्वी स्यामिति सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्क्यस्यार्कत्वं कं ह वा अस्मै भवति य एवमेतदर्क्यस्यार्कत्वं वेद



१०.६.५.[२]

आपो वा अर्कः  तद्यदपां शर आसीत्तत्समहन्यत सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजो रसो निरवर्तताग्निः

१०.६.५.[३]

स त्रेधात्मानं व्यकुरुत  आदित्यं तृतीयं वायुं तृतीयं स एष प्राणस्त्रेधाविहितस्तस्य प्राची दिक्शिरोऽसौ चासौ चेर्मावथास्य प्रतीची दिक्पुचमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे

द्यौष्पृष्ठमन्तरिक्षमुदरमियमुरः स एषोऽप्सु प्रतिष्ठितो यत्र क्व चैति तदेव प्रतितिष्ठत्येवं विद्वान्

१०.६.५.[४]

सोऽकामयत  द्वितीयो म आत्मा जायेतेति स मनसा वाचं मिथुनं समभवदशनायां मृत्युस्तद्यद्रेत आसीत्स संवत्सरोऽभवन्न ह पुरा ततः संवत्सर आस तमेतावन्तं कालमबिभर्यावान्त्संवत्सरस्तमेतावतः कालस्य परस्तादसृजत तं जातमभिव्याददात्स भाणकरोत्सैव वागभवत्



१०.६.५.[५]

स ऐक्षत  यदि वा इममभिमंस्ये कनीयोऽन्नं करिष्य इति स तया वाचा तेनात्मनेदं सर्वमसृजत यदिदं किं चर्चो यजूंषि सामानि चन्दांसि यज्ञान्प्रजां पशून्त्स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वं सर्वस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद

१०.६.५.[६]

सोऽकामयत  भूयसा यज्ञेन भूयो यजेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशो वीर्यमुदक्रामत्प्राणा वै यशो वीर्यं तत्प्राणेषूत्क्रान्तेषु शरीरं

श्वयितुमध्रियत तस्य शरीर एव मन आसीत्

१०.६.५.[७]

सोऽकामयत  मेध्यं म इदं स्यादात्मन्व्यनेन स्यामिति ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वमेष ह वा अश्वमेधं वेद य एनमेवं वेद

१०.६.५.[८]



तमनवरुध्येवामन्यत  तं संवत्सरस्य परस्तादात्मन आलभत पशून्देवताभ्यः प्रत्यौहत्तसम्त्सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्त एष वा अश्वमेधो य एष तपति तस्य संवत्सर आत्मायमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्कामेधौ सो पुनरेकैव देवता भवति मृत्युरेवाप पुनर्मृत्युं जयति नैनं मृत्युराप्नोति मृत्युरस्यात्मा भवति सर्वमायुरेत्येतासां देवतानामेको भवति य एवं वेद

१०.६.५.[९]

अथ वंशः  समानमा सांजीवीपुत्रात्सांजीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो

माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणो वात्स्याद्वात्स्यः
शाण्डिल्याचाण्डिल्यः
कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा
राजस्तम्बायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो
ब्रह्म स्वयम्भु ब्रह्मणे नमः

११.१.१.[१]

संवत्सरो वै यज्ञः प्रजापतिः  तस्यैतद्द्वारं यदमावास्या चन्द्रमा एव
द्वारपिधानः



११.१.१.[२]

स योऽमावास्यायामग्नी आधत्ते  यथा विवृतायां द्वारि द्वारा पुरं प्रपद्येत स तत
एव स्वर्गं लोकमियादेवं तद्योऽमावास्यायामाधत्ते

११.१.१.[३]

अथ यो नक्षत्र आधत्ते  यथापिहितायां द्वार्यद्वारा पुरं प्रपित्सेत्स जिह्मः
पुरः स्यादेवं तद्यो नक्षत्र आधत्ते तस्मान्न नक्षत्र आदधीत

११.१.१.[४]

यदहरेवैषः  न पुरस्तान्न पश्चाद्दृश्येत तदहरुपवसेत्तर्हि ह्येष इमं लोकमागचति तस्मिन्निह वसति

११.१.१.[५]

सर्वे देवा वसन्ति  सर्वाणि भूतानि सर्वा देवताः सर्व ऋतवः सर्वे स्तोमाः सर्वाणि पृष्ठानि सर्वाणि चन्दांसि



११.१.१.[६]

सर्वेषु ह वा अस्य देवेषु  सर्वेषु भूतेषु सर्वासु देवतासु सर्वेष्वृतुषु सर्वेषु स्तोमेषु सर्वेषु पृष्ठेषु सर्वेषु चन्दःस्वग्नी आहितौ भवतो योऽमावास्यायामाधत्ते तस्मादमावास्यायामेवाग्नी आदधीत

११.१.१.[७]

योऽसौ वैशाखस्यामावास्या तस्यामादधीत सा रोहिण्या सम्पद्यत आत्मा वै प्रजा पशवो रोहिण्यात्मन्येवैतत्प्रजायां पशुषु प्रतितिष्ठत्यमावास्या वा अग्न्याधेयरूपं तस्मादमावास्यायामेवाग्नी आदधीत

पौर्णमास्यामन्वारभेतामावास्यायां दीक्षेत

११.१.२.[१]

घ्नन्ति वा एतद्यज्ञम्  यदेनं तन्वते यन्न्वेव राजानमभिषुण्वनि[ तत्तं घ्नन्ति यत्पशुं संज्ञपयन्ति विशासति तत्तं घ्नन्त्युलूखलमुसलाभ्यां दृषदुपलाभ्यां हविर्यज्ञं घ्नन्ति

११.१.२.[२]



तं हत्वा यज्ञम्  अग्नावेव योनौ रेतो भूतं सिञ्चत्यग्निर्वै योनिर्यज्ञस्य स ततः प्रजायते तद्दश ता आहुतीः सम्पादयेद्याभ्यो वषड्क्रियते

११.१.२.[३]

अयं वै यज्ञो योऽयं पवते  सोऽयमेक इवैव पवते सोऽयं पुरुषेऽन्तः प्रविष्टो दशधाविहितः स एवं कॢप्तैः प्राणैरग्नेर्योनेरधिजायते सैषा दशाक्षरा विराट् सैषा सम्पत्स यज्ञः

११.१.२.[४]

अथो अपि नव स्युः  तन्न्यूनां विराजं करोति प्रजननाय न्यूनाद्वा इमाः प्रजाः प्रजायन्ते सैषा सम्पत्स यज्ञः

११.१.२.[५]

अथो अप्येकातिरिक्ता स्यात्  सा प्रजापतिमभ्यतिरिच्यते सैषा सम्पत्स यज्ञः



११.१.२.[६]

अथो अपि द्वे अतिरिक्ते स्याताम्  द्वन्द्वं वै मिथुनं प्रजननम् मिथुनमेवैतत्प्रजननं क्रियते सैषा सम्पत्स यज्ञः

११.१.२.[७]

अथो अपि तिस्रोऽतिरिक्ता स्युः  द्वन्द्वमह मिथुनं प्रजननमथ यज्जायते तत्तृतीयं सैषा सम्पत्स यज्ञः

११.१.२.[८]

अथो अपि चतस्रोऽतिरिक्ताः स्युः  तद्यथैकैवं चतस्रस्त्रयो वा इमे लोकास्तदिमानेव लोकांस्तिसृभिराप्नोति प्रजापतिर्वा अतीमांलोकांश्चतुर्थस्तत्प्रजापतिमेव चतुर्थ्याप्नोति सैषा सम्पत्स यज्ञः

११.१.२.[९]

स यद्वाभ्यामूनं तदूनं  सोऽयज्ञो यत्पञ्चभिरतिरिक्तं तदतिरिक्तं सोऽयज्ञः सैषैव दशत्यधि सम्पदेषा विंशत्यामेषा सहस्रात्



११.१.२.[१०]

आजिं वा एते धावन्ति  ये दर्शपूर्णमासाभ्यां यजन्ते स वै पञ्चदश वर्षाणि यजेत तेषां पञ्चदशानां वर्षाणां त्रीणि च शतानि षष्टिश्च पौर्णमास्यश्चामावास्याश्च त्रीणि च वै शतानि षष्टिश्च संवत्सरस्य रात्रयस्तद्रात्रीराप्नोति

११.१.२.[११]

अथापराणि पञ्चदशैव वर्षाणि यजेत  तेषां पञ्चदशानां वर्षाणां त्रीणि चैव शतानि षष्टिश्च पौर्णमास्यश्चामावास्याश्च त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि तदहान्याप्नोति  तद्वेव संवत्सरमाप्नोति

११.१.२.[१२]

मर्त्या ह वा अग्रे देवा आसुः  स यदैव ते संवत्सरमापुरथामृता आसुः सर्वं वै संवत्सरः सर्वं वा अक्षय्यमेतेनो हास्याक्षय्यं सुकृतं भवत्यक्षय्यो लोकः

११.१.२.[१३]

स आजिसृतामेकः  य एवं विद्वांस्त्रिंशतं वर्षाणि यजते तस्मादु त्रिंशतमेव वर्षाणि यजेत यद्यु दाक्षायणयज्ञी स्यादथो अपि पञ्चदशैव वर्षाणि यजेतात्र ह्येव सा सम्पत्सम्पद्यते द्वे हि पौर्णमास्यौ यजते द्वे अमावास्ये अत्रो एव खलु सा सम्पद्भवति



११.१.३.[१]

पौर्णमासेनेष्ट्वा  इन्द्राय विमृधेऽनुनिर्वपति तेन यथेष्ट्यैवं यजत आमावास्येनेष्ट्वादित्यै चरुमनुनिर्वपति तेन यथेष्ट्यैवं यजते

११.१.३.[२]

स यत्पौर्णमासेनेष्ट्वा  इन्द्राय विमृधेऽनुनिर्वपतीन्द्रो वै यज्ञस्य देवताथैदग्नीषोमीयं पौर्णमासं हविर्भवति तत्र नेन्द्राय त्वेति किं चन क्रियत एतेनो हास्यैतत्सेन्द्रं हविर्भवत्येतेन सेन्द्रो यज्ञोऽथ यद्विमृधे त्वेति सर्वा उ हि मृधो नाष्ट्राः पौर्णमासेन हन्ति

११.१.३.[३]

अथ यदामावास्येनेष्ट्वा  अदित्यै चरुमनुनिर्वपत्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्ददृशे तेनैतदनद्धेव हविर्भवति तेनाप्रतिष्ठितमियं वै पृथिव्यदितिः सेयमद्धा सेयं प्रतिष्ठितैतेनो हास्यैतदद्धेव हविर्भवत्येतेन प्रतिष्ठितमेतन्नु तद्यस्मादनुनिर्वपत्यथ यस्मान्नानुनिर्वपेत्



११.१.३.[४]

स यत्पौर्णमासेनेष्ट्वा  इन्द्राय विमृधेऽनुनिर्वपति सेन्द्रो मे यज्ञोऽसदिति सर्वो वै यज्ञ इन्द्रस्यैव स यत्सर्वो यज्ञ इन्द्रस्यैवैतेनो हास्येतत्सेन्द्रं हविर्भवत्येतेन सेन्द्रो यज्ञः

११.१.३.[५]

अथ यदामावास्येनेष्ट्वा  अदित्यै चरुमनुनिर्वपत्यामावास्यं वा अनुनिर्वाप्यम्
पौर्णमासेन वा इन्द्रो वृत्रमहंस्तस्मा एतद्वृत्रं जघ्नुषे देवा
एतद्धविरनुनिरवपन्यदामावास्यं किमनुनिर्वाप्येऽनुनिर्वपेदिति
तसन्नानुनिर्वपेत्

११.१.३.[६]

स यत्पौर्णमासेनेष्ट्वा
अथान्यद्धविरनुनिर्वपत्यामावास्येनेष्ट्वाथान्यद्धविरनुनिर्वपति द्विषन्तं
ह स भ्रातृव्यं प्रत्युच्चयतेऽथ यः पौर्णमासीं यजत
आमावास्येनामावास्यामसपत्ना हैवास्यानुपबाधा श्रीर्भवति



११.१.३.[७]

पौर्णमासेन वै देवाः  पौर्णमासीं यजमाना आमावास्येनामावास्यां क्षिप्र एव
पाप्मानमपाघ्नत क्षिप्रे प्राजायन्त स यो हैवं विद्वान्पौर्णमासेनैव
पौर्णमासीं यजत आमावास्येनामावास्यां क्षिप्र एव पाप्मानमपहते क्षिप्रे
प्रजायते स यद्यनुनिर्वपेद्दद्याद्दक्षिणां नादक्षिणं हविः स्यादिति
ह्याहुर्दर्शपूर्णमासयोर्ह्येवैषा दक्षिणा यदन्वाहार्य इति
न्वनुनिर्वाप्यस्याथाभ्युदितस्य

११.१.४.[१]

तद्धैके दृष्ट्वोपवसन्ति  श्वो नोदेतेत्यभ्रस्य वा हेतोरनिर्ज्ञाय
वाथोतोपवसन्त्यथैनमुताभ्युदेति स यद्यगृहीतं हविरभ्युदियात्प्रज्ञातमेव
तदेषैव व्रतचर्या यत्पूर्वेद्युर्दुग्धं दधि हविरातञ्चनं तत्कुर्वन्ति
प्रतिप्रमुञ्चन्ति वत्सांस्तान्पुनरपाकुर्वन्ति

११.१.४.[२]

तानपराह्णे पर्णशाखयापाकरोति  तद्यथैवादः प्रज्ञातमामावास्यं
हविरेवमेव
तद्यद्यु व्रतचर्यां वा नोदाशंसेत गृहीतं वा हविरभ्युदियादितरथो तर्हि
कुर्यादितानेव तण्डुलान्त्सुफलीकृतान्कृत्वा स येऽणीयांसस्तानग्नये दात्रेऽष्टाकपालम्
पुरोडाशं श्रपयति



११.१.४.[३]

अथ यत्पूर्वेद्युः  दुग्धं दधि तदिन्द्राय प्रदात्रेऽथ तदानींदुग्धे विष्णवे
शिपिविष्टायैतांस्तण्डुलाञ्छृते चरुं श्रपयति चरुरु ह्येव स यत्र क्व च
तण्डुलानावपन्ति

११.१.४.[४]

तद्यदेवं भवति  एष वै सोमो राजा देवानामन्नं
यच्चन्द्रमास्तमेतदुपैत्सीत्तमपारात्सीत्तमस्मा अग्निर्दाता ददातीन्द्रः प्रदाता
प्रयचति तमस्मा इन्द्राग्नी यज्ञं दत्तस्तेनेन्द्राग्निभ्यां दत्तेन यज्ञेन
यजतेऽथ यद्विष्णवे शिपिविष्टायेति यज्ञो वै विष्णुरथ यचिपिविष्टायेति
यमुपैत्सीत्तमपारात्सीत्तचिपितमिव यज्ञस्य भवति तस्माचिपिविष्टायेति तत्रो
यचक्नुयात्तद्द्यान्नादक्षिणं हविः स्यादिति ह्याहुरथ यदैव
नोदियादथोपवसेत्

११.१.५.[१]



अद्यामावास्येति मन्यमान उपवसति  अथैष पश्चाद्ददृशे स हैष दिव्यः श्वा स
यजमानस्य पशूनभ्यवेक्षते तदपशव्यं स्यादप्रायश्चित्तिकृत एतस्मादु
हैतद्भीषावचन्द्रमसादिति

११.१.५.[२]

चायामुपसर्पन्ति  एतेनो हैतदुपतपदाचक्षते श्वलुचितमित्येतमु
हैवैतदाचक्षते

११.१.५.[३]

शशश्चान्द्रमस इति  चन्द्रमा वै सोमो देवानामन्नं तम्
पौर्णमास्यामभिषुण्वन्ति सोऽपरपक्षेऽप ओषधीः प्रविशति पशवो वा अप
ओषधीरदन्ति तदेनमेतां रात्रीं पशुभ्यः संनयति

११.१.५.[४]

सोऽद्यामावास्येति मन्यमान उपवसति  अथैष पश्चाद्दद्दशे तद्यजमानो
यज्ञपथादेति तदाहुः कथं कुर्यादित्वा यज्ञपथाद्यजेता३ न यजेता३ इति यजेत
हैव न ह्यन्यदपक्रमणं भवति श्वः श्व एवैष ज्यायानुदेति स
आमावास्यविधेनैवेष्ट्वाथेष्टिमनुनिर्वपति तदहर्वैव श्वो वा



११.१.५.[५]

तस्य त्रीणि हवींषि भवन्ति  अग्नये पथिकृतेऽष्टाकपालं पुरोडाशमिन्द्राय
वृत्रघ्न एकादशकपालमग्नये वैश्वानराय द्वादशकपालं पुरोडाशम्

११.१.५.[६]

स यदग्नये पथिकृते निर्वपति  अग्निर्वै पथः कर्ता स यस्मादेवादो यजमानो
यज्ञपथादेति तमेनमग्निः पन्थानमापादयति

११.१.५.[७]

अथ यदिन्द्राय वृत्रघ्ने  पाप्मा वै वृत्रो यो भूतेर्वारयित्वा तिष्ठति कल्याणात्कर्मणः साधोस्तमेतदिन्द्रेणैव वृत्रघ्ना पाप्मानं वृत्रं हन्ति तस्मादिन्द्राय वृत्रघ्ने

११.१.५.[८]

अथ यदग्नये वैश्वानराय  द्वादशकपालं पुरोडाशं निर्वपति यत्र वा इन्द्रो वृत्रमहंस्तमग्निना वैश्वानरेण समदहत्तदस्य सर्वं पाप्मानं समदहत्तथो एवैष एतदिन्द्रेणैव वृत्रघ्ना पाप्मानं वृत्रं हत्वा तमग्निना वैश्वानरेण संदहति तदस्य सर्वं पाप्मानं संदहति स यो हैवं विद्वानेतयेष्ट्या यजते न हास्याल्पश्चन पाप्मा परिशिष्यते



११.१.५.[९]

तस्यै सप्तदश सामिधेन्यो भवन्ति  उपांशु देवता यजति याः कामयते ता याज्यानुवाक्याः करोत्येवमाज्यभागावेवं संयाज्ये

११.१.५.[१०]
तिसृधन्वं दक्षिणां ददाति  धन्वना वै श्वानं बाधन्ते तदेतमेवैतद्बाधते
यत्तिसृधन्वं दक्षिणां ददाति

११.१.५.[११]

दण्डं दक्षिणां ददाति  दण्डेन वै श्वानं बाधन्ते तदेतमेवैतद्बाधते
यद्दण्डं दक्षिणां ददात्येषा न्वादिष्टा दक्षिणा दद्यात्त्वेवास्यामप्यन्यद्या इतरा
दक्षिणास्तासां यत्सम्पद्येत सा हैषा पशव्येष्टिस्तयाप्यनभ्युद्दृष्टो यजेतैव



११.१.६.[१]

आपो ह वा इदमग्रे सलिलमेवास  ता अकामयन्त कथं नु प्रजायेमहीति ता
अश्राम्यंस्तास्तपोऽतप्यन्त तासु तपस्तप्यमानासु हिरण्मयमाण्डं सम्बभूवाजातो
ह तर्हि संवत्सर आस तदिदं हिरण्मयमाण्डं यावत्संवत्सरस्य वेला
तावत्पर्यप्लवत

११.१.६.[२]

ततः संवत्सरे पुरुषः समभवत्  स प्रजापतिस्तस्मादु संवत्सर एव स्त्री वा
गौर्वा वडबा वा विजायते संवत्सरे हि प्रजापतिरजायत स इदं हिरण्मयमाण्डं

व्यरुजन्नाह तर्हि का चन प्रतिष्ठास तदेनमिदमेव हिरण्मयमाण्डं यावत्संवत्सरस्य वेलासीत्तावद्बिभ्रत्पर्यप्लवत

११.१.६.[३]

स संवत्सरे व्याजिहीर्षत्  स भूरिति व्याहरत्सेयं पृथिव्यभवद्भुव इति तदितमन्तरिक्षमभवत्स्वरिति सासौ द्यौरभवत्तस्मादु संवत्सर एव कुमारो व्याजिहीर्षति संवत्सरे हि प्रजापतिर्व्याहरत्



११.१.६.[४]

स वा एकाक्षरद्व्यक्षराण्येव  प्रथमं वदन्प्रजापतिरवदत्तस्मादेकाक्षरद्व्यक्षराण्येव प्रथमं वदन्कुमारो वदति

११.१.६.[५]

तानि वा !एतानि  पञ्चाक्षराणि तान्पञ्चर्तूनकुरुत त इमे पञ्चर्तवः स एवमिमांलोकान्जातान्त्संवत्सरे प्रजापतिरभ्युदतिष्ठत्तस्मादु संवत्सर एव कुमार उत्तिष्ठासति संवत्सरे हि प्रजापतिरुदतिष्ठत्

११.१.६.[६]

स सहस्रायुर्जज्ञे  स यथा नद्यै पारं परापश्येदेवं स्वस्यायुषः पारम्
पराचख्यौ

११.१.६.[७]

सोऽर्चञ्छ्राम्यंश्चचार प्रजाकामः  स आत्मन्येव प्रजातिमधत्त स आस्येनैव
देवानसृजत ते देवा दिवमभिपद्यासृज्यन्त तद्देवानां देवत्वं
यद्दिवमभिपद्यासृज्यन्त तस्मै ससृजानाय दिवेवास तद्वेव देवानां देवत्वं
यदस्मै ससृजानाय दिवेवास



११.१.६.[८]

अथ योऽयमवाङ्प्राणः  तेनासुरानसृजत त इमामेव पृथिवीमभिपद्यासृज्यन्त
तस्मै ससृजानाय तम इवास

११.१.६.[९]

सोऽवेत्  पाप्मानं वा असृक्षि यस्मै मे ससृजानाय तम इवाभूदिति तांस्तत एव

पाप्मनाविध्यत्ते तत एव पराभवंस्तस्मादाहुर्नैतदस्ति यद्दैवासुरं यदिदमन्वाख्याने त्वदुद्यत इतिहासे त्वत्ततो ह्येव तान्प्रजापतिः पाप्मनाविध्यत्ते तत एव पराभवन्निति

११.१.६.[१०]

तस्मादेतदृषिणाभ्यनूक्तम्  न त्वं युयुत्से कतमच्चनाहर्न तेऽमित्रो मघवन्कश्चनास्ति  मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं न नु पुरा युयुत्स इति



११.१.६.[११]

स यदस्मै देवान्त्ससृजानाय  दिवेवास तदहरकुरुताथ यदस्मा असुरान्त्ससृजानाय तम इवास तां रात्रिमकुरुत ते अहोरात्रे

११.१.६.[१२]

स ऐक्षत प्रजापतिः  सर्वं वा अत्सारिषं य इमा देवता असृक्षीति स संवत्सरोऽभवत्संवत्सरो ह वै नामैतद्यत्संवत्सर इति स यो हैवमेतत्संवत्सरस्य संवत्सरत्वं वेद यो हैनं पाप्मा मायया त्सरति न हैनं सोऽभिभवत्यथ यमभिचरत्यभि हैवैनं भवति य

एवमेतत्संवत्सरस्य संवत्सरत्वं वेद

११.१.६.[१३]

स ऐक्षत प्रजापतिः  इमं वा आत्मनः प्रतिमामसृक्षि यत्संवत्सरमिति
तस्मादाहुः प्रजापतिः संवत्सर इत्यात्मनो ह्येतं प्रतिमामसृजत यद्वेव
चतुरक्षरः संवत्सरश्च!तुरक्षरः प्रजापतिस्तेनो हैवास्यैष प्रतिमा

११.१.६.[१४]



ता वा एताः  प्रजापतेरधि देवता असृज्यन्ताग्निरिन्द्रः सोमः परमेष्ठी प्राजापत्यः

११.१.६.[१५]

ताः सहस्रायुषो जज्ञिरे  ता यथा नद्यै पारं परापश्येदेवं स्वस्यायुषः पारम्
पराचख्युः

११.१.६.[१६]

ता अर्चन्त्यः श्राम्यन्त्यश्चेरुः  तत एतं परमेष्ठी प्राजापत्यो

यज्ञमपश्यद्यद्दर्शपूर्णमासौ ताभ्यामयजत
ताभ्यामिष्ट्वाकामयताहमेवेदं सर्वं स्यामिति स आपोऽभवदापो वा इदं सर्वं ता
यत्परमे स्थाने तिष्ठन्ति यो हीहाभिखनेदप एवाभिविन्देत्परमाद्वा
एतत्स्थानाद्वर्षति यद्दिवस्तस्मात्परमेष्ठी नाम

११.१.६.[१७]

स परमेष्ठी प्रजापतिं पितरमब्रवीत्  कामप्रं वा अहं यज्ञमदर्शं तेन
त्वा याजयानीति तथेति तमयाजयत्स इष्ट्वाकामयताहमेवेदं सर्वं स्यामिति स
प्राणोऽभवत्प्राणो वा इदं सर्वमयं वै प्राणो योऽयं पवते स प्रजापतिस्तस्य
दृष्टिर्यदेव वेदेत्थाद्वातीति यद्वै किं च प्राणि स प्रजापतिः स यो हैवमेताम्
प्रजापतेर्दृष्टिं वेदाविरिव हैव भवति



११.१.६.[१८]

स प्रजापतिरिन्द्रं पुत्रमब्रवीत्  अनेन त्वा कामप्रेण यज्ञेन याजयानि येन
मामिदं परमेष्ठ्ययीयजदिति तथेति तमयाजयत्स इष्ट्वाकामयताहमेवेदं
सर्वं स्यामिति स वागभवद्वाग्वा इदं सर्वं तस्मादाहुरिन्द्रो वागिति

११.१.६.[१९]

स इन्द्रोऽग्नीषोमौ भ्रातरावब्रवीत्  अनेन वां कामप्रेण यज्ञेन याजयानि येन मामिदं पिता प्रजापतिरयीयजदिति तथेति तावयाजयत्ताविष्ट्वाकामयेतामावमेवेदं सर्वं स्यावेति तयोरन्नाद एवान्यतरोऽभवदन्नमन्यतरोऽन्नाद एवाग्निरभवदन्नं सोमोऽन्नादश्च वा इदं सर्वमन्नं च

११.१.६.[२०]

ता वा एताः  पञ्च देवता एतेन कामप्रेण यज्ञेनायजन्त ता यत्कामा अयजन्त स आभ्यः कामः समार्ध्यत यत्कामो ह वा एतेन यज्ञेन यजते सोऽस्मै कामः समृध्यते



११.१.६.[२१]

त इष्ट्वा प्राचीं दिशमपश्यन्  तां प्राचीमेवाकुर्वत सेयं प्राच्येव दिक्तस्मादिमाः प्रजाः प्राच्यः सर्पन्ति प्राचीं ह्येतामकुर्वतोपैनामितः कुर्वीमहीति तामूर्जमकुर्वतेमां खलूर्जं पश्येमेति सासौ द्यौरभवत्

११.१.६.[२२]

अथ दक्षिणां दिशमपश्यन्  तां दक्षिणामेवाकुर्वत सेयं दक्षिणैव दिक्तस्मादु

दक्षिणत एव दक्षिणा उपतिष्ठन्ते दक्षिणतोऽभ्यवाजन्ति दक्षिणां ह्येतामकुर्वतोपैनामितः कुर्वीमहीति तं लोकमकुर्वतेमं खलु लोकम् पश्येमेति तदिदमन्तरिक्षमभवदेष वै लोकः सा यथा हैवेयम् प्रतिष्ठाविरस्मिंलोके पृथिव्येवमु हैवैषा प्रतिष्ठाविरमुष्मिंलोक इदमन्तरिक्षं स यदिह सन्नमुं लोकं न पश्यति तस्मादाहुः परोऽक्षमसौ लोक इति

११.१.६.[२३]

अथ प्रतीचीं दिशमपश्यन्  तामाशामकुर्वत तस्माद्यत्प्राङ्सृत्वा विन्दत एतामेव तेन दिशमेत्याशां ह्येतामकुर्वतोपैनामितः कुर्वीमहीति तां श्रियमकुर्वतेमां खलु श्रियं पश्येमेति सेयं पृथिव्यभवच्छ्रीर्वा इयं तस्माद्योऽस्यै भूयिष्ठं विन्दते स एव श्रेष्ठो भवति



११.१.६.[२४]

अथोदीचीं दिशमपश्यन्  तामपोऽकुर्वतोपैनामितः कुर्वीमहीति तं धर्ममकुर्वत धर्मो वा आपस्तस्माद्यदेमं लोकमाप आगचन्ति सर्वमेवेदं यथाधर्मं भवत्यथ यदावृष्टिर्भवति बलीयानेव तर्ह्यबलीयस आदत्ते धर्मो ह्यापः

११.१.६.[२५]

ता वा एताः  एकादश देवताः पञ्च प्रयाजा द्वावाज्यभागौ स्विष्टकृत्त्रयोऽनुयाजा

११.१.६.[२६]

ता एकादशाहुतयः  एताभिर्वा आहुतिभिर्देवा इहांलोकानजयन्नेता दिशस्तथो एवैष एताभिराहुतिभिरिमांलोकान्जयत्येता दिशः

११.१.६.[२७]



चतस्रोऽवान्तरदिशः  त एव चत्वारः पत्नीसंयाजा अवान्तरदिशो वै देवाश्चतुर्भिः पत्नीसंयाजैरजयन्नवान्तरदिश उ एवैष एतैर्जयति

११.१.६.[२८]

अथेडा  अन्नाद्यमेवैतया देवा अजयंस्तथो एवैष एतयान्नाद्यमेव जयत्येषा नु देवत्रा दर्शपूर्णमासयोः सम्पत्

११.१.६.[२९]

अथाध्यात्मम्  पञ्चेमे पुरुषे प्राणा ऋते चक्षुर्भ्यां त एव पञ्च प्रयाजा चक्षुषी आज्यभागौ

११.१.६.[३०]

अयमेवावाङ्ग्राणः स्विष्टकृत्  स यत्तमभ्यर्ध इवेतराभ्य आहुतिभ्यो जुहोति तस्मादेतस्मात्प्राणात्सर्वे प्राणा बीभत्सन्तेऽथ यत्स्विष्टकृते सर्वेषां हविषामवद्यति तस्माद्यत्किं चेमान्प्राणानापद्यत एतमेव तत्सर्वं समवैति



११.१.६.[३१]

त्रीणि शिश्नानि  त एव त्रयोऽनुयाजाः स योऽयं वर्षिष्ठोऽनुयाजस्तदिदं वर्षिष्ठमिव शिश्नं तं वा अनवानन्यजेदित्याहुस्तथो हास्यैतदमृध्रम् भवतीति

११.१.६.[३२]

स वै सकृदवान्यात्  एकं ह्येतस्य पर्वाथ यदपर्वकं स्यात्प्रतृणं वैव तिष्ठेल्लम्बेत वा तस्मादेतदुच्च तिष्ठति पद्यते च तस्मात्सकृदवान्यात्

११.१.६.[३३]

द्वौ बाहू द्वा ऊरू  त एव चत्वारः पत्नीसंयाजाः प्रतिष्ठायमेव प्राण इडा यत्तां नाग्नौ जुहोति यत्साप्रदग्धेव तस्मादयमनवतृणः प्राणः

११.१.६.[३४]

अस्थ्येव याज्यानुवाक्याः  मांसं हविस्तन्मितं चन्दो यद्याज्यानुवाक्यास्तस्मादु समावन्त्येवास्थीनि मेद्यतश्च कृश्यतश्च भवन्त्यथ यद्भूय इव च हविर्गृह्णाति कनीय इव च तस्मादु मांसान्येव मेद्यतो मेद्यन्ति मांसानि कृश्यतः कृश्यन्ति तेनैतेन यज्ञेन यां कामयते देवतां तां यजति यस्यै हविर्भवति



११.१.६.[३५]

ता वा एताः  अनपोद्धार्या आहुतयो भवन्ति स यद्धैतासामपोद्धरेद्यथैकमङ्गं श्रृणीयात्प्राणं वा निर्हण्यादेवं तदन्यान्येव हवींष्युप चाह्रियन्तेऽप च ह्रियन्ते

११.१.६.[३६]

ता वा एताः  षोडशाहुतयो भवन्ति षोडशकलो वै पुरुषः पुरुषो यज्ञस्तस्मात्षोडशाहुतयो भवन्ति

११.१.७.[१]

तद्वा अदो व्रतोपायन उद्यते  यदि नाश्नाति पितृदेवत्यो भवति यद्यु अश्नाति देवानत्यश्नातीति तदारण्यमश्नीयादिति तत्र स्थापयन्ति



११.१.७.[२]

स यदि ग्राम्या ओषधीरश्नाति  पुरोडाशस्य मेधमश्नाति यद्यारण्या ओषधीरश्नाति बर्हिषो मेधमश्नाति यदि वानस्पत्यमश्नातीध्मस्य मेधमश्नाति यदि पयः पिबति सांनाय्यस्य चाज्यस्य च मेधमश्नाति यद्यपः पिबति प्रणीतानाम् मेधमश्नाति यदि नाश्नाति पितृदेवत्यो भवति

११.१.७.[३]

तदाहुः  किमयनमिति स्वयं हैवैते रात्री अग्निहोत्रं जुहुयात्स यद्धुत्वा प्राश्नाति तेनापितृदेवत्यो भवत्याहुतिर्वा एषा स यदेवैतामात्मन्नाहुतिं जुहोति तेनो एतेषाम् मेधानां नाश्नाति

११.१.७.[४]

एते ह वै रात्री  सर्वा रात्रयः समवयन्ति या आपूर्यमाणपक्षस्य रात्रयस्ताः सर्वाः पौर्णमासीं समवयन्ति या अपक्षीयमाणपक्षस्य रात्रयस्ताः सर्वा अमावास्यां समवयन्ति स यो हैवं विद्वान्स्वयमुपवसथे जुहोति सर्वदा हैवास्य स्वयं हुतं भवति

११.१.८.[१]



देवाश्च वा असुराश्च  उभये प्राजापत्याः पस्पृधिरे ततोऽसुरा अतिमानेनैव कस्मिन्नु वयं जुहुयामेति स्वेष्वेवास्येषु जुह्वतश्चेरुस्तेऽतिमानेनैव पराबभूवुस्तस्मान्नातिमन्येत पराभवस्य हैतन्मुखं यदतिमानः

११.१.८.[२]

अथ देवाः  अन्योऽन्यस्मिन्नेव जुह्वतश्चेरुस्तेभ्यः प्रजापतिरात्मानं प्रददौ यज्ञो हैषामास यज्ञो हि देवानामन्नं

११.१.८.[३]

स देवेभ्य आत्मानं प्रदाय  अथैतमात्मनः प्रतिमामसृजत यद्यज्ञं
तस्मादाहुः प्रजापतिर्यज्ञ इत्यात्मनो ह्येतं प्रतिमामसृजत

११.१.८.[४]

स एतेन यज्ञेन  देवेभ्य आत्मानं निरक्रीणीत स यद्व्रतमुपैति यथैव
तत्प्रजापतिर्देवेभ्य आत्मानं प्रायचदेवमेवैष एतद्देवेभ्य आत्मानम्
प्रयचति तस्मादु संयत एवैतां रात्रिं चिचरिषेद्यथा हविषा चरेदेवं हविर्ह्येष
देवानां भवति



११.१.८.[५]

अथ यद्यज्ञं तनुते  यज्ञेनैवैतद्देवेभ्य आत्मानं निष्क्रीणीते यथैव
तत्प्रजापतिर्निरक्रीणीतैवमथ यद्धविर्निर्वपति हविषैवैतद्यज्ञं निष्क्रीणाति
हविरनुवाक्ययानुवाक्यामवदानेनावदानं याज्यया याज्यां वषट्कारेण
वषट्कारमाहुत्या तस्याहुतिरेवानिष्क्रीता भवति

११.१.८.[६]

स यथाग्रप्रशीर्णो वृक्षः  एवमस्यैष यज्ञो भवत्याहुतिमेवान्वाहार्येण निष्क्रीणाति तद्यदेतद्धीनं यज्ञस्यान्वाहरति तस्मादन्वाहार्यो नामैवमु हास्यैष सर्व एव यज्ञो निष्क्रीतो भवत्येष ह वै यजमानस्यामुष्मिंलोक आत्मा भवति यद्यज्ञ स ह सर्वतनूरेव यजमानोऽमुष्मिंलोके सम्भवति य एवं विद्वान्निष्क्रीत्या यजते

११.२.१.[१]

त्रिर्ह वै पुरुषो जायते  एतन्न्वेव मातुश्चाधि पितुश्चाग्रे जायतेऽथ यं यज्ञ उपनमति स यद्यजते तद्द्वितीयं जायतेऽथ यत्र म्रियते यत्रैनमग्नावभ्यादधति स यत्ततः सम्भवति तत्तृतीयं जायते तस्मात्त्रिः पुरुषो जायत इत्याहुः



११.२.१.[२]

ता वा एताः  एकादश सामिधेनीरन्वाह दश वा इमे पुरुषे प्राणा आत्मैकादशो यस्मिन्नेते प्राणाः प्रतिष्ठिता एतावान्वै पुरुषस्तदेनं कृत्स्नं जनयत्यथ यदूर्ध्वं सामिधेनीभ्यः सा प्रतिष्ठा तदेनं जनयित्वा प्रतिष्ठापयति

११.२.१.[३]

नव प्रसवस्य व्याहृतयः  नवमे पुरुषे प्राणास्तदेनं द्वितीयं

जनयत्याश्रावणं प्रत्याश्रावणं सा प्रतिष्ठाथ यदेवादः सृष्टौ जन्मोद्यते तदेनं तृतीयं जनयति पत्नीसंयाजा एव तत्र प्रतिष्ठा

११.२.१.[४]

त्रिर्हि वै पुरुषो जायते  एवमेवैनमेतद्यज्ञात्त्रिर्जनयति तासामेकादशानां त्रिः प्रथमामन्वाह त्रिरुत्तमाम्

११.२.१.[५]



ताः पञ्चदश सामिधेन्यः  द्वावाघारौ पञ्च प्रयाजा इडा त्रयोऽनुयाजाः सूक्तवाकश्च शम्योर्वाकश्च तास्त्रयोदशाहुतयोऽथ यदेवादः पत्नीसंयाजेषु सम्प्रगृह्णाति समिष्टयजुश्च

११.२.१.[६]

ताः पञ्चदशाहुतयः  तासां पञ्चदशानामाहुतीनामेता अनुवाक्या एताः पञ्चदश सामिधेन्य एतासामनुवाक्यानामेता याज्या य एवात्र मन्त्रो यो निगदस्तद्याज्यारूपमेतेनो हास्यैता आहुतयोऽनुवाक्यवत्यो भवन्त्येताभिः सामिधेनीभिरेताभिराहुतिभिरेता अनुवाक्या याज्यवत्यश्चाहुतिवत्यश्च भवन्ति

११.२.२.[१]

गायत्रीमनुवाक्यामन्वाह  त्रिपदा वै गायत्री त्रय इमे लोका इमानेवैतल्लोकान्देवाः प्रत्यष्ठापयन्

११.२.२.[२]

अथ त्रिष्टुभा यजति  चतुष्पदा वै त्रिष्टुप्चतुष्पादाः पशवस्तत्पशूनेवैतदेषु लोकेषु प्रतिष्ठितेषु देवाः प्रत्यष्ठापयन्



११.२.२.[३]

द्व्यक्षरो वषट्कारः  द्विपाद्वै पुरुषस्तत्पुरुषमेवैतद्द्विपादमेषु पशुषु प्रतिष्ठितेषु प्रत्यष्ठापयन्

११.२.२.[४]

सोऽयं द्विपात्पुरुषः  पशुषु प्रतिष्ठित एवमेवैष एतल्लोकान्प्रतिष्ठापयति लोकेषु प्रतिष्ठितेषु पशून्प्रतिष्ठापयति पशुषु प्रतिष्ठितेष्वात्मानम् प्रतिष्ठापयत्येवमेष पुरुषः पशुषु प्रतिष्ठितो य एवं विद्वान्यजते

११.२.२.[५]

अथ यद्वषट्कृते जुहोति  एष वै वषट्कारो य एष तपति स एष
मृत्युस्तदेनमुपरिष्टान्मृत्योः संस्करोति तदेनमतो जनयति स एतम्
मृत्युमतिमुच्यते यज्ञो वा अस्यात्मा भवति तद्यज्ञ एव
भूत्वैतन्मृत्युमतिमुच्यत एतेनो हास्य सर्वे यज्ञक्रतव एतं मृत्युमतिमुक्ताः

११.२.२.[६]



अथ यामेतामाहुतिं जुहोति  एषा ह वा अस्याहुतिरमुष्मिंलोक आत्मा भवति स
यदैवंविदस्माल्लोकात्प्रैत्यथैनमेषाहुतिरेतस्य पृष्ठे सत्याह्वयत्येह्यहं वै
त इहात्मास्मीति तद्यदाह्वयति तस्मादाहुतिर्नाम

११.२.३.[१]

ब्रह्म वा इदमग्र आसीत्  तद्देवानसृजत तद्देवान्त्सृष्ट्वैषु लोकेषु
व्यारोहयदस्मिन्नेव लोकेऽग्निं वायुमन्तरिक्षे दिव्येव सूर्यम्

११.२.३.[२]

अथ येऽथ ऊर्ध्वा लोकाः  तद्या अत ऊर्ध्वा देवतास्तेषु ता देवता व्यारोहयत्स यथा हैवेम आविर्लोका इमाश्च देवता एवमु हैव त आविर्लोकास्ताश्च देवता येषु ता देवता व्यारोहयत्

११.२.३.[३]

अथ ब्रह्मैव परार्धमगचत्  तत्परार्धं गत्वैक्षत कथं न्विमांलोकान्प्रत्यवेयामिति तद्द्वाभ्यामेव प्रत्यवैद्रूपेण चैव नाम्ना च स यस्य कस्य च नामास्ति तन्नाम यस्यो अपि नाम नास्ति यद्वेद रूपेणेदं रूपमिति तद्रूपमेतावद्वा इदं यावद्रूपं चैव नाम च



११.२.३.[४]

ते हैते ब्रह्मणो महती अभ्वे  स यो हैते ब्रह्मणो महती अभ्वे वेद महद्धैवाभ्वं भवति

११.२.३.[५]

ते हैते ब्रह्मणो महती यक्षे  स यो हैते ब्रह्मणो महती यक्षे वेद

महद्धैव यक्षं भवति तयोरन्यतरज्ज्यायो रूपमेव यद्ध्यपि नाम
रूपमेव तत्स यो हैतयोर्ज्यायो वेद ज्यायान्ह तस्माद्भवति यस्माज्ज्यायान्बुभूषति

११.२.३.[६]

मर्त्या ह वा अग्रे देवा आसुः  स यदैव ते ब्रह्मणापुरथामृता आसुः स यं मनस
आघारयति मनो वै रूपं मनसा हि वेदेदं रूपमिति तेन रूपमाप्नोत्यथ यं
वाच आघारयति वाग्वै नाम वाचा हि नाम गृह्णाति तेनो नामाप्नोत्येतावद्वा इदं
सर्वं यावद्रूपं चैव नाम च तत्सर्वमाप्नोति सर्वं वा अक्षय्यमेतेनो
हास्याक्षय्यं सुकृतं भवत्यक्षय्यो लोकः



११.२.३.[७]

तद्वा अद आग्नेय्यामिष्टा उद्यते  यथा तद्दषिभ्यो यज्ञः प्रारोचत तं यथातन्वत
तद्यज्ञं तन्वानानृषीन्गन्धर्वा उपनिषेदुस्ते ह स्म संनिदधतीदं वा
अत्यरीरिचन्निदमूनमक्रन्निति स यदैषां यज्ञः संतस्थेऽथैनांस्तद्दर्शयां
चक्रुरिदं वा अत्यरीरिचतेदमूनमकर्तेति

११.२.३.[८]

स यदतिरेचयां चक्रुः  यथा गिरिरेवं तदासाथ यदूनं चक्रुर्यथा श्वभ्राः

प्रदरा एवं तदास

११.२.३.[९]

स यत्र शम्योराह  तदभिमृशति यज्ञ नमश्च त उप च यज्ञस्य शिवे संतिष्ठस्व स्विष्टे मे संतिष्ठस्वेति स यदतिरेचयति तन्नमस्कारेण शमयत्यथ यदूनं करोत्युप चेति तेन तदन्यूनं भवति यज्ञस्य शिवे संतिष्ठस्वेति यद्वै यज्ञस्यान्यूनातिरिक्तं तच्चिवं तेन तदुभयं शमयति स्विष्टे मे संतिष्ठस्वेति यद्वै यज्ञस्यान्यूनातिरिक्तं तत्स्विष्टं तेनो तदुभयं शमयत्येवमु हास्यैतेन यज्ञेनान्यूनातिरिक्तेनैवेष्टं भवति य एवं विद्वानेवमभिमृशति तस्मादेवमेवाभिमृशेत्ते ह ते गन्धर्वा आसुः शूर्पं यवमान्कृषिरुद्वालवान्धानान्तर्वान्



११.२.४.[१]

एष वै पूर्णमाः  य एष तपत्यहरहर्ह्येवैष पूर्णोऽथैष एव दर्शो यच्चन्द्रमा ददृश इव ह्येषः

११.२.४.[२]

अथो इतरथाहुः  एष एव पूर्णमा यच्चन्द्रमा एतस्य ह्यनु पूरणम्

पौर्णमासीत्याचक्षतेऽथैष एव दर्शो य एष तपति ददृश इव ह्येषः

११.२.४.[३]

इयमेव पूर्णमाः  पूर्णेव हीयमसावेव द्यौर्दर्शो ददृश इव ह्यसौ द्यौः

११.२.४.[४]

रात्रिरेव पूर्णमाः  पूर्णेव हीयं रात्रिरहरेव दर्शो ददृश इव हीदमहरेषा नु
देवत्रा दर्शपूर्णमासयोर्मीमांसा



११.२.४.[५]

अथाध्यात्मम्  उदान एव पूर्णमा उदानेन ह्ययं पुरुषः पूर्यत इव प्राण एव
दर्शो ददृश इव ह्ययं प्राणस्तदेतावन्नादश्चान्नप्रदश्च दर्शपूर्णमासौ

११.२.४.[६]

प्राण एवान्नादः  प्राणेन हीदमन्नमद्यत उदान एवान्नप्रद उदानेन

हीदमन्नं प्रदीयते स यो हैतावन्नादं चान्नप्रदं च दर्शपूर्णमासौ वेदान्नादो हैव भवति प्र हास्मा अन्नाद्यं दीयते

११.२.४.[७]

मन एव पूर्णमाः  पूर्णमिव हीदं मनो वागेव दर्शो दद्दश इव हीयं वाक्तदेतावध्यात्मं प्रत्यक्षं दर्शपूर्णमासौ स यदुपवसथे व्रतोपायनीयमश्नाति तेनैतावध्यात्मं प्रत्यक्षं दर्शपूर्णमासौ प्रीणाति यज्ञेन प्रातर्दैवौ



११.२.४.[८]

तदाहुः  यन्न पूर्णमासायेति हविर्गृह्यते न दर्शायेति हविर्गृह्यते न पूर्णमासायानुब्रूहि न दर्शायानुब्रूहि न पूर्णमासं यज न दर्शं यजेत्यथ केनास्य दर्शपूर्णमासाविष्टौ भवत इति स यं मनस आघारयति मनो वै पूर्णमास्तेन पूर्णमासं यजत्यथ यं वाच आघारयति वाग्वै दर्शस्तेनो दर्शं यजत्येतेनो हास्य दर्शपूर्नमासाविष्टौ भवतः

११.२.४.[९]

तद्धैके  चरू निर्वपन्ति पौर्णमास्यां सरस्वतेऽमावास्यायां सरस्वत्या

एतत्प्रत्यक्षं दर्शपूर्णमासौ यजामह इति वदन्तस्तदु तथा न कुर्यान्मनो वै सरस्वान्वाक्षरस्वती स यदेवैतावाघारावाघारयति तदेवास्य दर्शपूर्णमासाविष्टौ भवतस्तस्मादेतौ चरू न निर्वपेत्

११.२.४.[१०]

तदाहुः आगूर्ती वा एष भवति यो दर्शपूर्णमासाभ्यां यजते पौर्णमेसेन हीष्ट्वा वेदामावास्येन यक्ष्य इत्यामावास्येनेष्ट्वा वेद पुनः पौर्णमासेन यक्ष्य इति स आगूर्त्येवामुं लोकमेति यदामुं लोकमेति कथमनागूर्ती भवतीति स यदेवैता उभयत्राघारावाघारयति तदेवास्य दर्शपूर्णमासौ संतिष्ठेते स संस्थितयोरेव दर्शपूर्णमासयोरथामुं लोकमेति तथानागूर्ती भवति



११.२.५.[१]

अपि ह वा एतर्हि देवेभ्योऽश्वमेधमालभन्ते तदाहुः प्राकृतोऽश्वमेध इतीतर इन्नूनं स तद्वा एष एवाश्वमेधो यच्चन्द्रमाः

११.२.५.[२]

तदाहुः पदेपदेऽश्वश्य मेध्यस्याहुतिं जुह्वतीति स यत्सायम्प्रातरग्निहोत्रं जुहोति द्वे सायमाहुती जुहोति द्वे प्रातस्ताश्चतस्र आहुत्यश्चतुष्पाद्वा अश्वस्तदस्य

पदेपद एवाहुतिर्हुता भवति

११.२.५.[३]

तदाहुः  विवृत्तेऽश्वस्येष्टिं निर्वपतीत्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्ददृशे तदिमं लोकमागचति सोऽस्मिंलोके विवर्तते

११.२.५.[४]



स यदामावास्येन यजते  विवृत्त एवास्यैतदिष्टिं निर्वपत्यथ यत्पौर्णमासेन यजतेऽश्वमेधमेवैतदालभते तमालभ्य देवेभ्यः प्रयचति संवत्सरे वा इतरमश्वमेधमालभन्त एष वै मासः परिप्लवमानः संवत्सरं करोति तदस्य संवत्सरे संवत्सर एवाश्वमेध आलब्धो भवति

११.२.५.[५]

तं वा एतम्  मासिमास्येवाश्वमेधमालभन्ते स यो हैवं विद्वानग्निहोत्रं च जुहोति दर्शपूर्णमासाभ्यां च यजते मासिमासि हैवास्याश्वमेधेनेष्टम् भवत्येतदु हास्याग्निहोत्रं च दर्शपूर्णमासौ चाश्वमेधमभिसम्पद्येते

११.२.६.[१]

शिरो ह वा एतद्यज्ञस्य यत्प्रणीताः  स यत्प्रणीताः प्रणयति शिर एवैतद्यज्ञस्य संस्करोति स विद्याच्चिर एव म एतत्संस्क्रियत इति

११.२.६.[२]

प्राण एवास्येध्मः  प्राणेन हीदं सर्वमिद्धं यत्प्राणभृन्निमिषद्यदेजति स विद्यादहमेवैष इध्म इति



११.२.६.[३]

अनूकमेवास्य सामिधेन्यः  तस्मात्ता ब्रूयात्संतन्वन्निव मेऽनुब्रूहीति संततमिव हीदमनूकं मनश्चैवास्य वाक्चाघारौ सरस्वांश्च सरस्वती च स विद्यान्मनश्चैव मे वाक्चाघारौ सरस्वांश्च सरस्वती चेति

११.२.६.[४]

पञ्च प्रयाजाः  इम एवास्य ते शीर्षण्याः पञ्च प्राणा मुखमेवास्य प्रथमः प्रयाजो दक्षिणा नासिका द्वितीयः सव्या नासिका तृतीयो दक्षिणः कर्णश्चतुर्थः सव्यः

कर्णः पञ्चमोऽथ यच्चतुर्थे प्रयाजे समानयति तस्मादिदं श्रोत्रमन्तरतः
संतृणं चक्षुषी आज्यभागौ स विद्याच्चक्षुषी एव म एताविति

११.२.६.[५]

अथ य आग्नेयः पुरोडाशः  अयमेवास्य स दक्षिणोऽर्धो हृदयमेवास्योपांशुयाजः
स यत्तेनोपांशु चरन्ति तस्मादिदं गुहेव हृदयम्

११.२.६.[६]



अथ योऽग्नीषोमीयः पुरोडाशः  अयमेवास्य स उत्तरोऽर्ध ऐन्द्रं वा
सांनाय्यमन्तरांसमेवास्य स्विष्टकृद्विषं प्राशित्रम्

११.२.६.[७]

स यत्प्राशित्रमवद्यति  यथैव तत्प्राजापतेराविद्धं
निरकृन्तन्नेवमेवैतस्यैतद्यद्वेष्टितं यद्ग्रथितं यद्वरुण्यं तन्निष्कृन्तन्ति
स विद्याद्यथैव तत्प्रजापतेराविद्धं निरकृन्तन्नेवमेव म इदं यद्वेष्टितं
यद्ग्रथितं यद्वरुण्यं तन्निष्कृन्तन्तीति

११.२.६.[८]

उदरमेवास्येडा  तद्यथैवाद इडायां समवद्यन्त्येवमेवेदं
विश्वरूपमन्नमुदरे समवधीयते

११.२.६.[९]

त्रयोऽनुयाजाः  इम एवास्य तेऽवाञ्चस्त्रयः प्राणा बाहू एवास्य सूक्तवाकश्च
शम्योर्वाकश्च चत्वारः पत्नीसंयाजाश्चतस्रो वै प्रतिष्ठा ऊरू द्वावष्ठीवन्तौ
द्वौ प्रादावेवास्य समिष्टयजुः



११.२.६.[१०]

ता एकविंशतिराहुतयः  द्वावाघारौ पञ्च प्रयाजा द्वावाज्यभागावाग्नेयः
पुरोडाशस्तद्दशाग्नीषोमीय उपांशुयाजोऽग्नीशोमीयः पुरोडाशोऽग्निः स्विष्टकृदिडा
त्रयोऽनुयाजाः सूक्तवाकश्च शम्योर्वाकश्चाथ यदेवादः पत्नीसंयाजेषु
सम्प्रगृह्णाति समिष्टयजुश्च

११.२.६.[११]

ता एकविंशतिराहुतयः  द्वादश वै मासाः संवत्सरस्य पञ्चर्तवस्त्रयो

लोकास्तद्विंशतिरेष एवैकविंशो य एष तपति सैषा गतिरेषा प्रतिष्ठा तदेतां गतिमेतां प्रतिष्ठां गचति

११.२.६.[१२]

तद्ध स्मैतदारुणिराह अर्धमासशो वा अहममुनादित्येन सलोको भवामि तामहं दर्शपूर्णमासयोः सम्पदं वेदेति

११.२.६.[१३]



तदाहुः आत्मयाजी श्रेया३ देवयाजी३ इत्यात्मयाजीति ह ब्रूयात्स ह वा आत्मयाजी यो वेदेदं मेऽनेनाङ्गं संस्क्रियत इदं मेऽनेनाङ्गमुपधीयत इति स यथाहिस्त्वचो निर्मुच्येतैवमस्मान्मर्त्याचरीरात्पाप्मनो निर्मुच्यते स ऋङ्मयो यजुर्मयः साममय आहुतिमयः स्वर्गं लोकमभिसम्भवति

११.२.६.[१४]

अथ ह स देवयाजी यो वेद देवानेवाहमिदं यजे देवान्त्सपर्यामीति स यथा श्रेयसे पापीयान्बलिं हरेद्वैश्यो वा राज्ञे बलिं हरेदेवं स स ह न तावन्तं लोकं जयति यावान्तमितरः

११.२.७.[१]

संवत्सरो यज्ञः  स यो ह वै संवत्सरो यज्ञ इति वेदान्ते हैवास्य
संवत्सरस्येष्टं भवत्यथो यत्किं च संवत्सरे क्रियते सर्वं हैवास्य
तदाप्तमवरुद्धमभिजितं भवति

११.२.७.[२]

ऋतव ऋत्विजः  स यो ह वा ऋतव ऋत्विज इति वेदान्ते हैवास्यर्तूनामिष्टं भवत्यथो
यत्किं चर्तुषु क्रियते सर्वं हैवास्य तदाप्तमवरुद्धमभिजितं भवति



११.२.७.[३]

मासा हवींषि  स यो ह वै मासा हवींषीति वेदान्ते हैवास्य मासानामिष्टम्
भवत्यथो यत्किं च मासेषु क्रियते सर्वं हैवास्य
तदाप्तमवरुद्धमभिजितं भवति

११.२.७.[४]

अर्धमासा हविष्पात्राणि  स यो ह वा अर्धमासा हविष्पात्राणीति वेदान्ते हैवास्यार्धमासानामिष्टं भवत्यथो यत्किं चार्धमासेषु क्रियते सर्वं हैवास्य तदाप्तमवरुद्धमभिजितं भवति

११.२.७.[५]

अहोरात्रे परिवेष्ट्री  स यो ह वा अहोरात्रे परिवेष्ट्री इति वेदान्ते हैवास्याहोरात्रयोरिष्टं भवत्यथो यत्किं चाहोरात्रयोः क्रियते सर्वं हैवास्य तदाप्तमवरुद्धमभिजितं भवति



११.२.७.[६]

इयमेव प्रथमा सामिधेनी  अग्निर्द्वितीया वायुस्तृतीयान्तरिक्षं चतुर्थी द्यौष्पञ्चम्यादित्यः षष्ठी चन्द्रमाः सप्तमी मनोऽष्टमी वाङ्नवमी तपो दशमी ब्रह्मैकादश्येता हि वा इदं सर्वं समिन्धत एताभिरिदं सर्वं समिद्धं तस्मात्सामिधेन्यो नाम

११.२.७.[७]

स वै त्रिः प्रथमामन्वाह  स यत्प्रथममन्वाह प्राचीं तेन दिशं जयति यद्द्वितीयं दक्षिणां तेन दिशं जयति यत्तृतीयमूर्ध्वामेव तेन दिशं जयति

११.२.७.[८]

त्रिर्वेवोत्तमामन्वाह  स यत्प्रथममन्वाह प्रतीचीं तेन दिशं जयति
यद्द्वितीयमुदीचीं तेन दिशं जयति यत्तृतीयमिमामेव तेन प्रतिष्ठां
जयत्येवमु हाभिरिमांलोकान्जयत्येता दिशः

११.२.७.[९]

ऋतमेव पूर्व आघारः  सत्यमुत्तरोऽव ह वा ऋतसत्ये रुन्द्धेऽथो यत्किं
चर्तसत्याभ्यां जय्यं सर्वं हैव तज्जयति



११.२.७.[१०]

त्विषिरेव प्रथमः प्रयाजः  अपचितिर्द्वितीयो यशस्तृतीयो ब्रह्मवर्चसं
चतुर्थोऽन्नाद्यं पञ्चमः

११.२.७.[११]

स प्रथमं प्रयाजमनुमन्त्रयेत  त्विषिमान्भूयासमित्यपचितिमान्भूयासमिति

द्वितीयं यशस्वी भूयासमिति तृतीयं ब्रह्मवर्चसी भूयासमिति चतुर्थमन्नादो भूयासमिति पञ्चमं त्विषिमान्ह वा अपचितिमान्यशस्वी ब्रह्मवर्चस्यन्नादो भवति य एवमेतद्वेद

११.२.७.[१२]

एतद्ध स्म वै तद्विद्वानाह  श्वेतकेतुरारुणेयः कं स्विदेवापरीषु महानागमिवाभिसंसारं दिदृक्षितारो य एवमेतत्प्रयाजानां यशो वेदितेति



११.२.७.[१३]

भूतमेव पूर्व आज्यभागः  भविष्यदुत्तरोऽव ह वै भूतं च भविष्यच्च रुन्द्धेऽथो यत्किं च भूतेन च भविष्यता च जय्यं सर्वं हैव तज्जयति

११.२.७.[१४]

ब्रह्माग्नेयः पुरोडाशः  स यो ह वै ब्रह्माग्नेयः पुरोडाश इति वेदाव ह ब्रह्म रुन्द्धेऽथो यत्किं च ब्रह्मणा जय्यं सर्वं हैव तज्जयति

११.२.७.[१५]

क्षत्रमुपांशुयाजः  स यो ह वै क्षत्रमुपांशुयाज इति वेदाव ह क्षत्रं
रुन्द्धेऽथो यत्किं च क्षत्रेण जय्यं सर्वं हैव तज्जयति तद्यदुपांशुयाजं
कुर्वन्त्येके नैके तस्मादुच्चैश्चोपांशु च क्षत्रायाचक्षते

११.२.७.[१६]

विदुत्तरः पुरोडाशः  स यो ह वै विदुत्तरः पुरोडाश इति वेदाव ह विशं
रुन्द्धेऽथो यत्किं च विशा जय्यं सर्वं हैव तज्जयति तद्यदाग्नेयश्च पुरोडाश
उपांशुयाजश्च पूर्वौ भवतस्तस्मादुभे ब्रह्म च क्षत्रं च विशि प्रतिष्ठिते



११.२.७.[१७]

राष्ट्रं सांनाय्यं  स यो ह वै राष्ट्रं सांनाय्यमिति वेदाव ह राष्ट्रं
रुन्द्धेऽथो यत्किं च राष्ट्रेण ज य्यं सर्वं हैव तज्जयति तद्यत्संनयन्त्येके
नैके तस्माद्राष्ट्रं सं चैति वि च

११.२.७.[१८]

तपः स्विष्टकृत्  स यो ह वै तपः स्विष्टकृदिति वेदाव ह तपो रुन्द्धेऽथो यत्किं च
तपसा जय्यं सर्वं हैव तज्जयति

११.२.७.[१९]

लोकः प्राशित्रं  स यो ह वै लोकः प्राशित्रमिति वेदाव ह लोकं रुन्द्धेऽथो यत्किं च लोकेन जय्यं सर्वं हैव तज्जयति नो ह लवेन लोकाद्व्यथथे लवेन ह वा अमुष्मिंलोके लोकाद्व्यथन्तेऽथ य एवं वेद न ह बहु चन पापं कृत्वा लोकाद्व्यथते

११.२.७.[२०]



श्रद्धेडा  स यो ह वै श्रद्धेडेति वेदाव ह श्रद्धां रुन्द्धेऽथो यत्किं च श्रद्धया जय्यं सर्वं हैव तज्जयति

११.२.७.[२१]

अशनिरेव प्रथमोऽनुयाजः  ह्रादुनिर्द्वितीय उल्कुषी तृतीयः

११.२.७.[२२]

स प्रथममनुयाजमनुमन्त्रयेत  अशन्यमुं जहीति यं द्विष्याद्ध्रादुन्यमुं जहीति द्वितीयमुल्कुष्यमुं जहीति तृतीयम्

११.२.७.[२३]

स य एष क्षिप्रं म्रियते  अशनिर्ह तमनुयाजो हन्त्यथ यो विस्रवन्मिश्र इव ह्रादुनिर्ह तमनुयाजो हन्त्यथ योऽभ्युष्टमिश्र इवोल्कुषी ह तमनुयाजो हन्ति

११.२.७.[२४]



सैषा यज्ञमेनिः  एतया वै मेन्या देवा असुरान्पराभावयां चक्रुस्तथो एवैवंविद्यजमानः पाप्मानं द्विषन्तं भ्रातृव्यं पराभावयति

११.२.७.[२५]

स यदनुयाजान्तो यज्ञः स्यात्  अशन्यन्तः स्याद्ध्रादुन्यन्त उल्कुष्यन्तस्तस्माद्वै देवानां यज्ञ इडान्तो वैव शम्य्वन्तो वा

११.२.७.[२६]

प्रयाजैर्वै देवाः  स्वर्गं लोकमायंस्तानसुरा अन्वाजिगांसंस्ताननुयाजैः प्रत्यौहंस्तद्यदनुयाजा इज्यन्ते पाप्मानमेव तद्द्विषन्तं भ्रातृव्यं यजमानः प्रत्यूहति

११.२.७.[२७]

प्राणा वै प्रयाजाः  अपाना अनुयाजास्तस्मात्प्रयाजाः प्राञ्चो हूयन्ते तद्धि प्राणरूपम्
प्रत्यञ्चोऽनुयाजास्तदपानरूपमेता ह वै दर्शपूर्णमासयोरुपसदो यदनुयाजास्तस्मात्त उपसद्रूपेण प्रत्यञ्चो हूयन्ते



११.२.७.[२८]
संस्था सूक्तवाकः  स यो ह वै संस्था सूक्तवाक इति वेदाव ह संस्थां रुन्द्धेऽथो यत्किं च संस्थया जय्यं सर्वं हैव तज्जयति गचति वयसः संस्थाम्

११.२.७.[२९]

प्रतिष्ठा शम्योर्वाकः  स यो ह वै प्रतिष्ठा शम्योर्वाकिति वेदाव ह प्रतिष्ठां रुन्द्धेऽथो यत्किं च प्रतिष्ठया जय्यं सर्वं हैव तज्जयति गचति प्रतिष्ठाम्

११.२.७.[३०]

ते देवाः  एतान्पत्नीसंयाजान्पश्चात्पर्यौहन्त मिथुनमेवैतदुपरिष्टाददधत
प्रजात्यै तद्यत्पत्नीसंयाजा इज्यन्ते मिथुनमेवैतदुपरिष्टाद्धत्ते प्रजात्यै
देवानां ह वै प्रजातिमनु प्रजायते मिथुनेनमिथुनेन ह प्रजायते य
एवमेतद्वेद

११.२.७.[३१]



अन्नं समिष्टयजुः  स यो ह वा अन्नं समिष्टयजुरिति वेदाव हान्नं रुन्द्धेऽथो
यत्किं चान्नेन जय्यं सर्वं हैव तज्जयति

११.२.७.[३२]

संवत्सरो यजमानः  तमृतवो याजयन्ति वसन्त आग्नीध्रस्तस्माद्वसन्ते
दावाश्चरन्ति तद्ध्यग्निरूपं ग्रीष्मोऽध्वर्युस्तप्त इव वै
ग्रीष्मस्तप्तमिवाध्वर्युर्निष्क्रामति वर्षा उद्गाता तस्माद्यदा बलवद्वर्षति
साम्न इवोपब्दिः क्रियते शरद्ब्रह्मा तस्माद्यदा सस्यं पच्यते ब्रह्मण्वत्यः
प्रजा इत्याहुर्हेमन्तो होता तस्माद्धेमन्वषट्कृताः पशवः सीदन्त्येता ह वा एनं
देवता याजयन्ति स यद्येनमैषावीरा याजयेयुरेता एव देवता मनसा ध्यायेदेता
हैवैनं देवता याजयन्ति

११.२.७.[३३]

अथ हैषैव तुला  यद्दक्षिणो वेद्यन्तः स यत्साधु करोति तदन्तर्वेद्यथ
यदसाधु तद्बहिर्वेदि तस्माद्दक्षिणं वेद्यन्तमधिस्पृश्येवासीत तुलायां ह वा
अमुष्मिंलोक आदधति यतरद्यंस्यति तदन्वेष्यति यदि साधु वासाधु वेत्यथ य
एवं वेदास्मिन्हैवलोके तुलामारोहत्यत्यमुष्मिंलोके तुलाधानं मुच्यते
साधुकृत्या हैवास्य यचति न पापकृत्या



११.३.१.[१]

वाग्घ वा एतस्याग्निहोत्रस्याग्निहोत्री  मन एव वत्सस्तदिदं मनश्च वाक्च
समानमेव सन्नानेव तस्मात्समान्या रज्ज्वा वत्सं च मातरं चाभिदधति  तेज
एव श्रद्धा सत्यमाज्यम्

११.३.१.[२]

तद्धैतज्जनको वैदेहः  याज्ञवल्क्यं पप्रच वेत्थाग्निहोत्रं याज्ञवल्क्या३ इति
वेद सम्राडिति किमिति पय एवेति

११.३.१.[३]

यत्पयो न स्यात्  केन जुहुया इति व्रीहियवाभ्यामिति यद्व्रीहियवौ न स्यातां केन जुहुया इति या अन्या ओषधय इति यदन्या ओषधयो न स्युः केन जुहुया इति या आरण्या ओषध्येनेति यद्वानस्पत्यं न स्यात्केन जुहुया इत्यद्भिरिति यदापो न स्युः केन जुहुया इति

११.३.१.[४]

स होवाच  न वा इह तर्हि किं चनासीदथैतदहूयतैव सत्यं श्रद्धायामिति वेत्थाग्निहोत्रं याज्ञवल्क्य धेनुशतं ददामीति होवाच



११.३.१.[५]

तदप्येते श्लोकाः  किं स्विद्विद्वान्प्रवसत्यग्निहोत्री गृहेभ्यः  कथं स्विदस्य काव्यं कथं संततो अग्निभिरिति कथं स्विदस्यानपप्रोषितं भवतीत्येवैतदाह

११.३.१.[६]

यो जविष्ठो भुवनेषु  स विद्वान्प्रवसन्विदे तथा तदस्य काव्यं तथा संततो अग्निभिरिति मन एवैतदाह मनसैवास्यानपप्रोषितं भवतीति

११.३.१.[७]

यत्स दूरं परेत्य  अथ तत्र प्रमाद्यति  कस्मिन्त्सास्य हुताहुतिर्गृहे यामस्य जुह्वतीति यत्स दूरं परेत्याथ तत्र प्रमाद्यति कस्मिन्नस्य साहुतिर्हुता भवतीत्येवैतदाह

११.३.१.[८]



यो जागार भुवनेषु  विश्वा जातानि योऽबिभः  तस्मिन्त्सास्य हुताहुतिर्गृहे यामस्य जुह्वतीति प्राणमेवैतदाह तस्मादाहुः प्राण एवाग्निहोत्रमिति

११.३.२.[१]

यो ह वा अग्निहोत्रे  षण्मिथुनानि वेद मिथुनेनमिथुनेन ह प्रजायते सर्वाभिः प्रजातिभिर्यजमानश्च पत्नी च तदेकं मिथुनं तस्मादस्य पत्नीवदग्निहोत्रं स्यादेतन्मिथुनमुपाप्नवानीति वत्सश्चाग्निहोत्री च तदेकं मिथुनं तस्मादस्य पुंवत्साग्निहोत्री स्यादेतन्मिथुनमुपाप्नवानीति स्थाली चाङ्गाराश्च तदेकम् मिथुनं स्रुक्च स्रुवश्च तदेकं मिथुनमाहवनीयश्च समिच्च तदेकम् मिथुनमाहुतिश्च स्वाहाकारश्च तदेकं मिथुनमेतानि ह वा अग्निहोत्रे षण्मिथुनानि तानि य एवं वेद मिथुनेनमिथुनेन ह प्रजायते सर्वाभिः प्रजातिभिः

११.३.३.[१]

ब्रह्म वै मृत्यवे प्रजाः प्रायचत्  तस्मै ब्रह्मचारिणमेव न
प्रायचत्सोऽब्रवीदस्तु मह्यमप्येतस्मिन्भाग इति यामेव रात्रिं समिधं नाहराता
इति तस्माद्यां रात्रिं ब्रह्मचारी समिधं नाहरत्यायुष एव तामवदाय वसति
तस्माद्ब्रह्मचारी समिधमाहरेन्नेदायुषोऽवदाय वसानीति

११.३.३.[२]



दीर्घसत्त्रं वा एष उपैति  यो ब्रह्मचर्यमुपैति स
यामुपयन्त्समिधमादधाति सा प्रायणीया यां स्नास्यन्त्सोदयनीयाथ या अन्तरेण
सत्त्या एवास्य ता ब्राह्मणो ब्रह्मचर्यमुपयन्

११.३.३.[३]

चतुर्धा भूतानि प्रविशति  अग्निं पदा मृत्युं पदाचार्यं पदात्मन्येवास्य
चतुर्थः पादः परिशिष्यते

११.३.३.[४]

स यदग्नये समिधमाहरति  य एवास्याग्नौ पादस्तमेव तेन परिक्रीणाति तं संस्कृत्यात्मन्धत्ते स एनमा!विशति

११.३.३.[५]

अथ यदात्मानं दरिद्रीकृत्येव  अह्रीर्भूत्वा भिक्षते य एवास्य मृत्यौ पादस्तमेव तेन परिक्रीणाति तं संस्कृत्यात्मन्धत्ते स एनमाविशति



११.३.३.[६]

अथ यदाचार्यवचसं करोति  यदाचार्याय कर्म करोति य एवास्याचार्ये पादस्तमेव तेन परिक्रीणाति तं संस्कृत्यान्मन्धत्ते स एनमाविशति

११.३.३.[७]

न ह वै स्नात्वा भिक्षेत  अप ह वै स्नात्वा भिक्षां जयत्यप ज्ञातीनामशनायामप पितॄणां स एवं विद्वान्यस्या एव भूयिष्ठं श्लाघेत ताम् भिक्षेतेत्याहुस्तल्लोक्यमिति स यद्यन्यां भिक्षितव्यां न विन्देदपि स्वामेवाचार्यजायां भिक्षेताथो स्वां मातरं नैनं सप्तम्यभिक्षितातीयात्तमेवं विद्वांसमेवं चरन्तं सर्वे वेदा आविशन्ति यथा ह

वा अग्निः समिद्धो रोचत एवं ह वै स स्नात्वा रोचते य एवं विद्वान्ब्रह्मचर्यं चरति

११.४.१.[१]

उद्दालको हारुणिः  उदीच्यान्वृतो धावयां चकार तस्य निष्क उपाहित आसैतद्ध स्म वै तत्पूर्वेषां वृतानां धावयतामेकधनमुपाहितं भवत्युपवल्हाय बिभ्यतां तान्होदीच्यानां ब्राह्मणान्भीर्विवेद



११.४.१.[२]

कौरुपञ्चालो वा अयं ब्रह्मा ब्रह्मपुत्रः  यद्वै नोऽयमर्धं न पर्याददीत हन्तैनं ब्रह्मोद्यमाह्वयामहा इति केन वीरेणेति स्वैदायनेनेति शौनको ह स्वैदायन आस

११.४.१.[३]

ते होचुः  स्वैदायन त्वया वीरेणेमं प्रतिसंयतामहा इति स होवाचोपात्र खलु रमताहं न्वेनं वेदानीति तं हाभिप्रपेदे तं हाभिप्रपन्नमभ्युवाद स्वैदायना३ इति हो३ गौतमस्य पुत्रेतीतरः प्रतिशुश्राव तं ह तत एव प्रष्टुं दध्रे

११.४.१.[४]

स वै गौतमस्य पुत्र वृतो जनं धावयेत्  यो दर्शपूर्णमासयोरष्टौ पुरस्तादाज्यभागान्विद्यात्पञ्च मध्यतो हविर्भागान्षद्प्राजापत्यानष्टा उपरिष्टादाज्यभागान्

११.४.१.[५]



स वै गौतमस्य पुत्र वृतो जनं धावयेत्
यस्तद्दर्शपूर्णमासयोर्विद्याद्यस्मादिमाः प्रजा अदन्तका जायन्ते यस्मादासां जायन्ते यस्मादासां प्रभिद्यन्ते यस्मादासां संस्तिष्ठन्ते यस्मादासाम् पुनरुत्तमे वयसि सर्व एव प्रभिद्यन्ते यस्मादधर एवाग्रे जायन्तेऽथोत्तरे यस्मादणीयांस एवाधरे प्रथीयांस उत्तरे यस्माद्दंष्ट्रा वर्षीयांसो यस्मात्समा एव जम्भ्याः

११.४.१.[६]

स वै गौतमस्य पुत्र वृतो जनं धावयेत्
यस्तद्दर्शपूर्णमासयोर्विद्याद्यस्मादिमाः प्रजा लोमशा जायन्ते यस्मादासाम् पुनरिव श्मश्रूण्यौपपक्ष्याणि दुर्बीरिणानि जायन्ते यस्माचीर्षण्येवाग्रे पलितो भवत्यथ पुनरुत्तमे वयसि सर्व एव पलितो भवति

११.४.१.[७]

स वै गौतमस्य पुत्र वृतो जनं धावयेत्
यस्तद्दर्शपूर्णमासयोर्विद्याद्यस्मात्कुमारस्य रेतः सिक्तं न सम्भवति
यस्मादस्य मध्यमे वयसि सम्भवति यस्मादस्य पुनरुत्तमे वयसि न
सम्भवति

११.४.१.[८]



यो गायत्रीं हरिणीम्  ज्योतिष्पक्षां यजमानं स्वर्गं लोकमभिवहन्तीं विद्यादिति
तस्मै ह निष्कं प्रददावनूचानः स्वैदायनासि सुवर्णं वाव सुवर्णविदे ददतीति
तं होपगुह्य निश्चक्राम तं ह पप्रचुः किमिवैष गौतमस्य पुत्रोऽभूदिति

११.४.१.[९]

स होवाच  यथा ब्रह्मा ब्रह्मपुत्रो मूर्धास्य विपतेद्य एनमुपवल्हेतेति ते ह
तत एव विप्रेयुस्तं ह तत एव समित्प्राणिः प्रतिचक्रमुप त्वायानीति
किमध्येष्यमाण इति यानेव मा प्रश्नानप्राक्षीस्तानेव मे विब्रूहीति स
होवाचानुपेतायैव त एनान्ब्रवाणीति

११.४.१.[१०]

तस्मा उ हैतदुवाच  द्वावाघारौ पञ्च प्रयाजा आग्नेय आज्यभागोऽष्टम एतेऽष्टौ पुरस्तादाज्यभागाः सौम्य आज्यभागो हविर्भागाणां प्रथमो हविर्हि सोम आग्नेयः पुरोडाशोऽग्नीषोमीय उपांशुयाजोऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदेते पञ्च मध्यतो हविर्भागाः

११.४.१.[११]



प्राशित्रं चेडा च  यच्चाग्नीध आदधाति ब्रह्मभागो यजमानभागोऽन्वाहार्य एते षड्प्राजापत्यास्त्रयोऽनुयाजाश्चत्वारः पत्नीसंयाजाः समिष्टयजुरष्टममेतेऽष्टा उपरिष्टादाज्यभागाः

११.४.१.[१२]

अथ यदपुरोऽनुवाक्यकाः प्रयाजा भवन्ति  तस्मादिमाः प्रजा अदन्तका जायन्तेऽथ यत्पुरोऽनुवाक्यवन्ति हवींषि भवन्ति तस्मादासां जायन्तेऽथ यदपुरोऽनुवाक्यका अनुयाजा भवन्ति तस्मादासां प्रभिद्यन्तेऽथ यत्पुरोऽनुवाक्यवन्तः पत्नीसंयाजा भवन्ति तस्मादासां संतिष्ठन्तेऽथ यदपुरोऽनुवाक्यकं समिष्टयजुर्भवति तस्मादासां पुनरुत्तमे वयसि सर्व एव प्रभिद्यन्ते

११.४.१.[१३]

अथ यदनुवाक्यामनूच्य  याज्यया यजति तस्मादधर एवाग्रे जायन्तेऽथोत्तरेऽथ यद्गायत्रीमनूच्य त्रिष्टुभा यजति तस्मादणीयांस एवाधरे प्रथीयांस उत्तरेऽथ यत्प्राञ्चावाघारावाघारयति तस्माद्दंष्ट्रा वर्षीयांसोऽथ यत्सचन्दसावेव संयाज्ये भवतस्तस्मात्समा एव जम्भ्याः

११.४.१.[१४]

अथ यद्बर्हि स्तृणाति  तस्मादिमाः प्रजा लोमशा जायन्तेऽथ यत्पुनरिव प्रस्तरं स्तृणाति तस्मादासां पुनरिव श्मश्रूण्यौपपक्ष्याणि दुर्बीरिणानि जायन्तेऽथ यत्केवलमेवाग्रे प्रस्तरमनुप्रहरति तस्माचीर्षण्येवाग्रे पलितो भवत्यथ यत्सर्वमेव बर्हिरनुप्रहरति तस्मात्पुनरुत्तमे वयसि सर्व एव पलितो भवति



११.४.१.[१५]

अथ यदाज्यहविषः प्रयाजा भवन्ति  तस्मात्कुमारस्य रेतः सिक्तं न सम्भवत्युदकमिवैव भवत्युदकमिव ह्याज्यमथ यन्मध्ये यज्ञस्य दध्ना पुरोडाशेनेति यजन्ति तस्मादस्य मध्यमे वयसि सम्भवति द्रप्सीवैव भवति द्रप्सीव हि रेतोऽथ यदाज्यहविष एवानुयाजा भवन्ति तस्मादस्य पुनरुत्तमे वयसि न सम्भवत्युदकमिवैव भवत्युदकमिव ह्याज्यम्

११.४.१.[१६]

वेदिरेव गायत्री  तस्यै येऽष्टौ पुरस्तादाज्यभागाः स दक्षिणः पक्षो येऽष्टा उपरिष्टादाज्यभागाः स उत्तरः पक्षः सैषा गायत्री हरिणी ज्योतिष्पक्षा यजमानं स्वर्गं लोकमभिवहति य एवमेतद्वेद

११.४.२.[१]



अथातः स्रुचोरादानस्य  तद्धैतदेके कुशला मन्यमाना दक्षिणेनैव जुहूमाददते सव्येनोपभृतं न तथा कुर्याद्यो हैनं तत्र ब्रूयात्प्रतिप्रतिं न्वा अयमध्वर्युर्यजमानस्य द्विषन्तं भ्रातृव्यमकत्प्रत्युद्यामिनमितीश्वरो ह तथैव स्यात्

११.४.२.[२]

इत्थमेव कुर्यात्  उभाभ्यामेव प्राणिभ्यां जुहूम् परिगृह्योपभृत्यधिनिदध्यात्तस्य नोपमीमांसास्ति तत्पशव्यमायुष्यं ते असंशिञ्जयन्नाददीत यत्संशिञ्जयेदयोगक्षेमो यजमानमृचेत्तस्मादसंशिञ्जयन्नाददीत

११.४.२.[३]

अथातोऽतिक्रमणस्य  वज्रेण ह वा अन्योऽध्वर्युर्यजमानस्य पशून्विधमति वज्रेण हास्मा अन्य उपसमूहत्येष ह वा अध्वर्युर्वज्रेण यजमानस्य पशून्विधमति य आश्रावयिष्यन्दक्षिणेनातिक्रामति सव्येनाश्राव्याथ हास्मा एष उपसमूहति य आश्रावयिष्यन्त्सव्येनातिक्रामति दक्षिणेनाश्राव्यैष हास्मा उपसमूहति

११.४.२.[४]



अथातो धारणस्य  तद्धैतदेके कुशला मन्यमानाः प्रगृह्य बाहू स्रुचौ धारयन्ति न तथा कुर्याद्यो हैनं तत्र ब्रूयाचूलौ न्वा अयमध्वर्युर्बाहू अकृत शूलबाहुर्भविष्यतीतीश्वरो ह तथैव स्यादथ हैष मध्यमः प्राणस्तस्मादु तमुपन्यच्येवैव धारयेत्

११.४.२.[५]

अथात आश्रावणस्य  षड्ड वा आश्रावितानि न्यक्तिर्यगूर्ध्वं कृपणं बहिःश्र्यन्तःश्रि

११.४.२.[६]

एतद्ध वै न्यक् योऽयमुच्चैरादाय शनैर्निदधाति स यमिचेत्पापीयान्त्स्यादिति
तस्योच्चैरादाय शनैर्निदध्यात्तेन स पापीयान्भवति

११.४.२.[७]

अथ हैतत्तिर्यक् योऽयं यावतैवादत्ते तावता निदधाति स यमिचेन्नैव
श्रेयान्त्स्यान्न पापीयानिति तस्य यावतैवाददीत तावता निदध्यात्तेन स नैव
श्रेयान्न
पापीयान्भवति



११.४.२.[८]

अथ हैतदूर्ध्वम्  योऽयं शनैरादायोच्चैर्निदधाति स यमिचेच्च्रेयान्त्स्यादिति तस्य
शनैरादायोच्चैर्निदध्यात्तेन स श्रेयान्भवति

११.४.२.[९]

अथ हैतत्कृपणम्  योऽयमणु दीर्घमस्वरमाश्रावयति यो हैनं तत्र
ब्रूयात्कृपणं न्वा अयमध्वर्युर्यजमानमकद्द्विषतो
भ्रातृव्यस्योपावसायिनमितीश्वरो ह तथैव स्यात्

११.४.२.[१०]

अथ हैतद्बहिःश्रि  योऽयमपव्यादायौष्ठा उच्चैरस्वरमाश्रावयति श्रीर्वै स्वरो बाह्यत एव तच्छ्रियं धत्तेऽशनायुको भवति

११.४.२.[११]

अथ हैतदन्तःश्रि  योऽयं संधायौष्ठा उच्चैः स्वरवदाश्रावयति श्रीर्वै स्वरोऽन्तरत एव तच्छ्रियं धत्तेऽन्नादो भवति



११.४.२.[१२]

स वै मन्द्रमिवोरसि  परास्तभ्योभयतोबार्हतमुच्चैरन्ततो निदध्यात्तस्य नोपमीमांसास्ति तत्पशव्यमायुष्यम्

११.४.२.[१३]

अथातो होमस्य  तद्धैतदेके कुशला मन्यमानाः प्राचीं स्रुचमुपावहृत्य हुत्वा

पर्याहृत्योपभृत्यधिनिदधति न तथा कुर्याद्यो हैनं तत्र ब्रूयादनुयुवं न्वा अयमध्वर्युर्यजमानमकद्विषतो भ्रातृव्यस्यान्ववसायिनमितीश्वरो ह तथैव स्यात्

११.४.२.[१४]

पार्श्वत उ हैके  स्रुचमुपावहृत्य हुत्वा पर्याहृत्योपभृत्यधिनिदधति न तथा कुर्याद्यो हैनं तत्र ब्रूयादतीर्थेन न्वा अयमध्वर्युराहुतीः प्रारौत्सीत्सं वा शरिष्यते घुणिर्वा भविष्यतीतीश्वरो ह तथैव स्यात्



११.४.२.[१५]

इत्थमेव कुर्यात्  प्राचीमेव स्रुचमुपावहृत्य हुत्वा तेनैवाधिहृत्योपभृत्यधिनिदध्यात्तस्य नोपमीमांसास्ति तत्पशव्यमायुष्यम्

११.४.२.[१६]

प्रदग्धाहुतिर्ह वा अन्योऽध्वर्युः  आहुतीर्हान्यः संतर्पयत्येष ह वै प्रदग्धाहुतिरध्वयुर्योऽयमाज्यं हुत्वावदानानि जुहोत्येतं ह वै तदद्दश्यमाना वागभ्युवाद प्रदग्धाहुतिर्न्वा अयमध्वर्युरित्यथ हैना एष संतर्पयति योऽयमाज्यं हुत्वावदानानि जुहोत्यथ पुनरन्तत आज्येनाभिजुहोत्येष

हैनाः संतर्पयति तासां संतृप्तानां देवा हिरण्मयांश्चमसान्पूरयन्ते

११.४.२.[१७]

तदु होवाच याज्ञवल्क्यः  यद्वा उपस्तीर्यावदायाभिघारयति तदेवैनाः संतर्पयति तासां संतृप्तानां देवा हिरण्मयांश्चमसान्पूरयन्तेऽयस्थूणगृहपतीनां वै शौल्बायनोऽध्वर्युरास

११.४.२.[१८]



स होवाच  इदमहेदं सत्त्वं कृशपश्वल्पाज्यमथायं गृहपतिरस्मीति मन्यत इति

११.४.२.[१९]

स होवाच  अध्वर्यवा वै नोऽक्रुक्ष एते वै ते स्रुचौ ये त्वं संवत्सरं नाशक आदातुं यद्वै त्वाहमेतयोरनुशिष्यां प्र प्रजया पशुभिर्जायेथा अभि स्वर्गं लोकं वहेरिति

११.४.२.[२०]

स होवाच  उप त्वायानीति स होवाचात्र वाव खल्वर्हसि यो नः संवत्सरेऽध्वर्युरभूरनुपेतायैव त एतद्ब्रवाणीति तस्मा उ हैतदेव स्रुचोरादानमुवाच यदेतद्व्याख्यां तस्मादेवंविदमेवाध्वर्युं कुर्वीतनानेवंविदम्

११.४.३.[१]

प्रजापतिर्वै प्रजाः सृजमानोऽतप्यत  तस्माच्छ्रान्तात्तपानाच्छ्रीरुदक्रामत्सा दीप्यमाना
भ्राजमाना लेलायन्त्यतिष्ठत्तां दीप्यमानां भ्राजमानां लेलायन्तीं देवा अभ्यध्यायन्



११.४.३.[२]

ते प्रजापतिमब्रुवन्  हनामेमामेदमस्या ददामहा इति स होवाच स्त्री वा एषा यच्छ्रीर्न वै स्त्रियं घ्नन्त्युत त्वा अस्या जीवन्त्या एवाददत इति

११.४.३.[३]

तस्या अग्निरन्नाद्यमादत्त  सोमो राज्यं वरुणः साम्राज्यं मित्रः क्षत्रमिन्द्रो

बलं बृहस्पतिर्ब्रह्मवर्चसं सविता राष्ट्रं पूषा भगं सरस्वती पुष्टिं
त्वष्टा रूपाणि

११.४.३.[४]

सा प्रजापतिमब्रवीत्  आ वै म इदमदिषतेति स होवाच यज्ञेनैनान्पुनर्याचस्वेति

११.४.३.[५]



सैतां दशहविषमिष्टिमपश्यत्  आग्नेयमष्टाकपालं पुरोडाशं सौम्यं चरुं
वारुणं दशकपालं पुरोडाशं मैत्रं चरुमैन्द्रमेकादशकपालम्
पुरोडाशं बार्हस्पत्यं चरुं सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोडाशम्
पौष्णं चरुं सारस्वतं चरुं त्वाष्ट्रं दशकपालं पुरोडाशम्

११.४.३.[६]

तानेतयानुवाक्ययान्ववदत्  अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता यः
सहस्री पूषा नो गोभिरवसा सरस्वती त्वष्टा रूपाणि समनक्तु यज्ञैरिति ते
प्रत्युपातिष्ठन्त

११.४.३.[७]

तानेतया याज्यया  परस्तात्प्रतिलोमं प्रत्यैत्त्वष्टा रूपाणि ददती सरस्वती पूषा भगं सविता मे ददातु  बृहस्पतिर्ददिन्द्रो बलं मे मित्रं क्षत्रं वरुणः सोमो अग्निरिति ते पुनर्दानायाध्रियन्त

११.४.३.[८]

सैतानुपहोमानपश्यत्  अग्निरन्नादोऽन्नपतिरन्नाद्यमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादायाग्निरुदक्रामत्पुनरस्या अन्नाद्यमददात्



११.४.३.[९]

सोमो राजा राजपतिः  राज्यमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय सोम उदक्रामत्पुनरस्यै राज्यमददात्

११.४.३.[१०]

वरुणः सम्राट्सम्राट्पतिः  साम्राज्यमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय वरुण उदक्रामत्पुनरस्यै साम्राज्यमददात्

११.४.३.[११]

मित्रः क्षत्रं क्षत्रपतिः  क्षत्रमस्मिन्यज्ञे मयि दधातु
स्वाहेत्याहुतिमेवादाय मित्र! उदक्रामत्पुनरस्यै क्षत्रमददात्

११.४.३.[१२]

इन्द्रो बलं बलपतिः  बलमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादायेन्द्र
उदक्रामत्पुनरस्यै बलमददात्



११.४.३.[१३]

बृहस्पतिर्ब्रह्म ब्रहस्पतिः  ब्रह्मवर्चसमस्मिन्यज्ञे मयि दधातु
स्वाहेत्याहुतिमेवादाय बृहस्पतिरुदक्रामत्पुनरस्यै ब्रह्मवर्चसमददात्

११.४.३.[१४]

सविता राष्ट्रं राष्ट्रपतिः  राष्ट्रमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय
सवितोदक्रामत्पुनरस्यै राष्ट्रमददात्

११.४.३.[१५]

पूषा भगं भगपतिः  भगमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय पूषोदक्रामत्पुनरस्यै भगमददात्

११.४.३.[१६]

सरस्वती पुष्टिं पुष्टिपतिः  पुष्टिमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय सरस्वत्युदक्रामत्पुनरस्यै पुष्टिमददात्



११.४.३.[१७]

त्वष्टा रूपाणां रूपकृद्रूपपतिः  रूपेण पशूनस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय त्वष्टोदक्रामत्पुनरस्यै रूपेण पशूनददात्श दक्षिणा दशंदशिनी विराड्वीर्विराड्रियां हश दक्षिणा दशंदशिनी विराड्वीर्विराड्रियां ह

११.४.३.[१८]

ता वा एताः  दश देवता दश हवींषि दशाहुतयो दैतद्विराज्यन्नाद्ये प्रतितिष्ठति

११.४.३.[१९]

तस्यै पञ्चदश सामिधेन्यो भवन्ति  उपांशु देवता यजति पञ्च प्रयाजा भवन्ति
त्रयोऽनुयाजा एकं समिष्टयजुः पुष्टिमन्तावाज्यभागावग्निना
रयिमश्नवत्पोषमेव दिवेदिवे यशसं वीरवत्तमम्  गयस्फानो अमीवहा
वसुवित्पुष्टिवर्धनः  सुमित्रः सोम नो भवेति  सहस्रवत्यौ संयाज्ये नू नो
रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु  द्युमदग्ने सुवीर्यं
वर्षिष्ठमनुपक्षितम्  उत नो ब्रह्मन्नविष उक्थेषु देवहूतमः  शं नः
शोचा मरुद्वृधोऽग्ने सहस्रसातम इति



११.४.३.[२०]

तां हैतां गोतमो राहूगणः  विदां चकार सा ह जनकं वैदेहं प्रत्युत्ससाद तां
हाङ्गिजिद्ब्राह्मणेष्वन्वियेष तामु ह याज्ञवल्क्ये विवेद स होवाच सहस्रं भो
याज्ञवल्क्य दद्मो यस्मिन्वयं त्वयि मित्रविन्दामन्वविदामेति विन्दते मित्रं
राष्ट्रमस्य भवत्यप पुनर्मृत्युं जयति सर्वमायुरेति य एवं विद्वानेतयेष्ट्या
यजते यो वैतदेवं वेद

११.४.४.[१]

अथातो हविषः समृद्धिः  षड्ढ वै ब्रह्मणो द्वारोऽग्निर्वायुरापश्चन्द्रमा विद्युदादित्यः

११.४.४.[२]

स य उपदग्धेन हविषा यजते  अग्निना ह स ब्रह्मणो द्वारेण प्रतिपद्यते सोऽग्निना ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यं सलोकतां जयति



११.४.४.[३]

अथ यो विपतितेन हविषा यजते  वायुना ह स ब्रह्मणो द्वारेण प्रतिपद्यते स वायुना ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यं सलोकतां जयति

११.४.४.[४]

अथ योऽशृतेन हविषा यजते  अद्भिर्हि स ब्रह्मणो द्वारेण प्रतिपद्यते सोऽद्भिर्ब्रह्मणो द्वारेण प्रतिप

११.४.४.[५]

अथ य उपरक्तेन हविषा यजते  चन्द्रमसा ह स ब्रह्मणो द्वारेण प्रतिपद्यते
स चन्द्रमसा ब्रह्मणो द्वारेण प्रतिप

११.४.४.[६]

अथ यो लोहितेन हविषा यजते  विद्युता ह स ब्रह्मणो द्वारेण प्रतिपद्यते स
विद्युता ब्रह्मणो द्वारेण प्रतिप



११.४.४.[७]

अथ यः सुश्रुतेन हविषा यजते  आदित्येन ह स ब्रह्मणो द्वारेण प्रतिपद्यते स
आदित्येन ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यं सलोकतां जयति सैषा
हविषः समृद्धिः स यो हैवमेतां हविषः समृद्धिं वेद सर्वसमृद्धेन
हैवास्य हविषेष्टं भवति

११.४.४.[८]

अथातो यज्ञस्य समृद्धिः  यद्वै यज्ञस्य न्यूनं प्रजननमस्य तदथ
यदतिरिक्तं पशव्यमस्य तदथ यत्संकसुकं श्रिया अस्य तदथ यत्सम्पन्नं
स्वर्ग्यमस्य तत्

११.४.४.[९]

स यदि मन्येत  न्यूनं मे यज्ञेऽभूदिति प्रजननं म एतत्प्रजनिष्य इत्येव तदुपासीत

११.४.४.[१०]

अथ यदि मन्येत  अतिरिक्तं मे यज्ञेऽभूदिति पशव्यं म एतत्पशुमान्भविष्यामीत्येव तदुपासीत



११.४.४.[११]

अथ यदि मन्येत  संकसुकं मे यज्ञेऽभूदिति श्रियै म एतदा मा श्रीस्तेजसा यशसा ब्रह्मवर्चसेन परिवृता गमिष्यतीत्येव तदुपासीत

११.४.४.[१२]

अथ यदि मन्येत  सम्पन्नं मे यज्ञेऽभूदिति स्वर्ग्यं म एतत्स्वर्गलोको

भविष्यामीत्येव तदुपासीत सैषा यज्ञस्य समृद्धिः स यो हैवमेतां यज्ञस्य समृद्धिं वेद सर्वसमृद्धेन हैवास्य यज्ञेनेष्टं भवति

११.५.१.[१]

उर्वशी हाप्सराः  पुरूरवसमैडं चकमे तं ह विन्दमानोवाच त्रिः स्म माह्नो वैतसेन दण्डेन हतादकामां स्म मा निपद्यासै मो स्म त्वा नग्नं दर्शमेष वै न स्त्रीणामुपचार इति



११.५.१.[२]

सा हास्मिन्योगुवास  अपि हास्माद्गर्भिण्यास तावज्ज्योग्घास्मिन्नुवास ततो ह गन्धर्वाः समूदिरे ज्योग्वा इयमुर्वशी मनुष्येष्ववात्सीदुपजानीत यथेयम् पुनरागचेदिति तस्यै हाविर्द्व्युरणा शयन उपबद्धास ततो ह गन्धर्वा अन्यतरमुरणं प्रमेथुः

११.५.१.[३]

सा होवाच  अवीर इव बत मेऽजन इव पुत्रं हरन्तीति द्वितीयं प्रमेथुः सा ह तथैवोवाच

११.५.१.[४]

अथ हायमीक्षां चक्रे  कथं नु तदवीरं कथमजनं स्याद्यत्राहं स्यामिति स नग्न एवानूत्पपात चिरं तन्मेने यद्वासः पर्यधास्यत ततो ह गन्धर्वा विद्युतं जनयां चक्रुस्तं यथा दिवैवं नग्नं ददर्श ततो हैवेयं तिरोबभूव पुनरैमीत्येत्तिरोभूतां स आध्या जल्पन्कुरुक्षेत्रं समया चचारान्यातःप्लक्षेति बिसवती तस्यै हाध्यन्तेन वव्राज तद्ध ता अप्सरस आतयो भूत्वा परिपुप्लुविरे

११.५.१.[५]



तं हेयं ज्ञात्वोवाच  अयं वै स मनुष्यो यस्मिन्नहमवात्समिति ता होचुस्तस्मै वा आविरसामेति तथेति तस्मै हाविरासुः

११.५.१.[६]

तां हायं ज्ञात्वाभिपरोवाद  हये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै नु न नौ मन्त्रा अनुदितास एते मयस्करन्परतरे चनाहन्नित्युप नु रम सं नु वदावहा इति हैवैनां तदुवाच

११.५.१.[७]

तं हेतरा प्रत्युवाच  किमेता वाचा कृणवा तवाहं प्राक्रमिषमुषसामग्रियेव
पुरूरवः पुनरस्तं परेहि दुरापना वात इवाहमस्मीति न वै त्वं
तदकरोर्यदहमब्रवं दुरापा वा अहं त्वयैतर्ह्यस्मि पुनर्गृहानिहीति
हैवैनं तदुवाच

११.५.१.[८]

अथ हायं परिद्यून उवाच  सुदेवो अद्य प्रपतेदनावृत्परावतं परमाम्
गन्तवाउ  अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युरिति सुदेवोऽद्योद्वा
बध्नीत प्र वा पतेत्तदेनं वृका वा श्वानो वाद्युरिति हैव तदुवाच



११.५.१.[९]

तं हेतरा प्रत्युवाच  पुरूरवो मा मृथा मा प्रपप्तो मा त्वा वृकासो अशिवास उ
क्षन्  न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येतेति मैतदादृथा न वै
स्त्रैणं सख्यमस्ति पुनर्गृहानिहीति हैवैनं तदुवाच

११.५.१.[१०]

यद्विरूपाचरम्  मर्त्येष्ववसं रात्रीः शरदश्चतस्रः  घृतस्य स्तोकं सकृदह्न

आश्नां तादेवेदं तातृपाणा चरामीति तदेतदुक्तप्रत्युक्तं पञ्चदशर्चं बह्वृचाः प्राहुस्तस्यै ह हृदयमाव्ययां चकार

११.५.१.[११]

सा होवाच  संवत्सरतमीं रात्रिमागचतात्तन्म एकां रात्रिमन्ते शयितासे जात उ तेऽयं तर्हि पुत्रो भवितेति स ह संवत्सरतमीं रात्रिमाजगामेद्धिरण्यविमितानि ततो हैनमेकमूचुरेतत्प्रपद्यस्वेति तद्धास्मै तामुपप्रजिध्युः



११.५.१.[१२]

सा होवाच  गन्धर्वा वै ते प्रातर्वरं दातारस्तं वृणासा इति तं वै मे त्वमेव वृणीष्वेति युष्माकमेवैकोऽसानीति ब्रूतादिति तस्मै ह प्रातर्गन्धर्वा वरं ददुः स होवाच युष्माकमेवैकोऽसानीति

११.५.१.[१३]

ते होचुः  न वै सा मनुष्येष्वग्नेर्यज्ञिया तनूरस्ति ययेष्ट्वास्माकमेकः स्यादिति तस्मै ह स्थाल्यामोप्याग्निं प्रददुरनेनेष्ट्वास्माकमेको भविष्यसीति तं च ह कुमारं चादायावव्राज सोऽरण्य एवाग्निं निधाय कुमारेणैव ग्राममेयाय पुनरैमीत्येत्तिरोभूतं योऽग्निरश्वत्थं तं या स्थाली शमीं तां स ह

पुनर्गन्धर्वानेयाय

११.५.१.[१४]

ते होचुः  संवत्सरं चातुष्प्राश्यमोदनं पच स एतस्यैवाश्वत्थस्य तिस्रस्तिस्रः समिधो घृतेनान्वज्य समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्याधत्तात्स यस्ततोऽग्निर्जनिता स एव स भवितेति

११.५.१.[१५]



ते होचुः  परोऽक्षमिव वा एतदाश्वत्थीमेवोत्तरारणिं कुरुष्व शमीमयीमधरारणिं स यस्ततोऽग्निर्जनिता स एव स भवितेति

११.५.१.[१६]

ते होचुः  परोऽक्षमिव वा एतदाश्वत्थीमेवोत्तरारणिं कुरुष्वाश्वत्थीमधरारणिं स यस्ततोऽग्निर्जनिता स एव स भवितेति

११.५.१.[१७]

स आश्वत्थीमेवोत्तरारणिं चक्रे  आश्वत्थीमधरारणिं स यस्ततोऽग्निर्जज्ञे स एव स आस तेनेष्ट्वा गन्धर्वाणामेक आस तस्मादाश्वत्थीमेवोत्तरारणिं कुर्वीताश्वत्थीमधरारणिं स यस्ततोऽग्निर्जायते स एव स भवति तेनेष्ट्वा गन्धर्वाणामेको भवति

११.५.२.[१]

प्रजापतिर्ह चातुर्मास्यैरात्मानं विदधे  स इममेव दक्षिणं बाहुं वैश्वदेवं हविरकुरुत तस्यायमेवाङ्गुष्ठ आग्नेयं हविरिदं सौम्यमिदं सावित्रं



११.५.२.[२]

स वै वर्षिष्ठः पुरोडाशो भवति  तस्मादियमासां वर्षिष्ठेदं सारस्वतमिदम् पौष्णमथ य एष उपरिष्टाद्धस्तस्य संधिस्तन्मारुतमिदं वैश्वदेवं दोर्द्यावापृथिवीयं तद्वा अनिरुक्तं भवति तस्मात्तदनिरुक्तम्

११.५.२.[३]

अयमेव दक्षिण ऊरुर्वरुणप्रघासाः  तस्य यानि पञ्च हवींषि समायीनि ता इमाः
पञ्चाङ्गुलयः कुल्फावेवैन्द्राग्नं हविस्तद्वै द्विदेवत्यं भवति तस्मादिमौ
द्वौ कुल्फाविदं वारुणमिदं मारुतमनूकं कायस्तद्वा अनिरुक्तं भवति
तस्मात्तदनिरुक्तम्

११.५.२.[४]
मुखमेवास्यानीकवतीष्टिः  मुखं हि प्राणानामनीकमुरः सांतपनीयोरसा हि
समिव तप्यत उदरं गृहमेधीया प्रतिष्ठा वा उदरं प्रतिष्ठित्या एव
शिश्नान्येवास्य क्रैडिनं हविः शिश्नैर्हि क्रीडतीवायमेवावाङ्गाण आदित्येष्टिः



११.५.२.[५]

अयमेवोत्तर ऊरुर्महाहविः  तस्य यानि पञ्च हवींषि समायीनि ता इमाः
पञ्चाङ्गुलयः कुल्फावेवैन्द्राग्नं हविस्तद्वै द्विदेवत्यं भवति तस्मादिमौ
द्वौ कुल्फाविदं माहेन्द्रमिदं वैश्वकर्मणं तद्वा अनिरुक्तं भवति
तस्मात्तदनिरुक्तमथ यदिदमन्तरुदरे तत्पितृयज्ञस्तद्वा अनिरुक्तं भवति
तस्मात्तदनिरुक्तम्

११.५.२.[६]

अयमेवोत्तरो बाहुः शुनासीरीयम्  तस्य यानि पञ्च हवींषि समायीनि ता इमाः

पञ्चाङ्गुलयोऽथ य एष उपरिष्टाद्धस्तस्य संधिस्तचुनासीरीयमिदं वायव्यं दोः सौर्यं तद्वा अनिरुक्तं भवति तस्मात्तदनिरुक्तम्

११.५.२.[७]

तानि वा एतानि  चातुर्मास्यानि त्रिषंधीनि द्विसमस्तानि तस्मादिमानि पुरुषस्याङ्गानि त्रिषंधीनि द्विसमस्तानि तेषां वै चतुर्णां द्वयोस्त्रीणित्रीणि हवींष्यनिरुक्तानि भवन्ति द्वेद्वे द्वयोः



११.५.२.[८]

तेषां वै चतुर्ष्वग्निं मन्थन्ति  तस्माच्चतुर्भिरङ्गैरायुते द्वयोः प्रणयन्ति तस्माद्द्वाभ्यामेत्येवमु ह प्रजापतिश्चातुर्मास्यैरात्मानं विदधे तथो एवैवंविद्यजमानश्चातुर्मास्यैरात्मानं विधत्ते

११.५.२.[९]

तदाहुः  स्वर्गायत्रं वैश्वदेवं हविः स्यात्सर्वत्रैष्टुभं वरुणप्रघासाः सर्वजागतं महाहविः सर्वानुष्टुभं शुनासीरीयं चतुष्टोमस्याप्स्या इति तदु तथा न कुर्याद्यत्त्वा एतान्यभिसम्पद्यन्ते तेनैवास्य स काम उपाप्तो भवति

११.५.२.[१०]

तानि वा एतानि  चातुर्मास्यानि द्वाषष्टानि त्रीणि शतानि बृहत्यः सम्पद्यन्ते तदेभिः संवत्सरं च महाव्रतं चाप्नोत्यथो द्विप्रतिष्ठो वा अयं यजमानो यजमानमेवैतत्स्वर्गे लोक आयातयति प्रतिष्ठापयति

११.५.३.[१]

शौचेयो ह प्राचीनयोग्यः  उद्दाल्ल्कमारुणिमाजगाम ब्रह्मोद्यमग्निहोत्रं विविदिषामीति



११.५.३.[२]

स होवाच  गौतम का तेऽग्निहोत्री को वत्सः किमुपसृष्टा किं संयोजनं किं दुह्यमानं किं दुग्धं किमाह्वियमाणं किमधिश्रितं किमवज्योत्यमानं किमद्भिः प्रत्यानीतं किमुद्वास्यमानं किमुद्वासितं किमुन्नीयमानं किमुन्नीतं किमुद्यतं किं ह्वियमाणं किं निगृहीतम्

११.५.३.[३]

कां समिधमादधासि का पूर्वाहुतिः किमुपासीषदः किमपैक्षिष्ठाः कोत्तराहुतिः

११.५.३.[४]

किं हुत्वा प्रकम्पयसि  किं स्रुचं परिमृज्य कूर्चे न्यमार्जीः किं द्वितीयम्
परिमृज्य दक्षिणतो हस्तमुपासीषदः किं पूर्वं प्राशीः किं द्वितीयं
किमुत्सृप्यापाः किं स्रुच्यप आनीय निरौक्षीः किं द्वितीयं किं तृतीयमेतां
दिशमुदौक्षीः किं जघनेनाहवनीयमपो न्यनैषीः किं समतिष्ठिपो यदि वा
एतद्विद्वानग्निहोत्रमहौषीरथ ते हुतं यद्यु वा अविद्वानहुतमेव त इति



११.५.३.[५]

स होवाच  इडैव मे मानव्यग्निहोत्री वायव्यो वत्सः सजूरुपसृष्टा विराट्
संयोजनमाश्विनं दुह्यमानं वैश्वदेवं दुग्धं
वायव्यमाह्रियमाणमाग्नेयमधिश्रितमैन्द्राग्नमवज्योत्यम्नानं
वारुणमद्भिः प्रत्यानीतं वायव्यमुद्वास्यमानं
द्यावापृथिव्यमुद्वासितमाश्विनमुन्नीयमानं वैश्वदेवमुन्नीतम्
महादेवायोद्यतं वायव्यं ह्रियमाणं वैष्णवं निगृहीतम्

११.५.३.[६]

अथ यां समिधमादधामि  आहुतीनां सा प्रतिष्ठा या पूर्वाहुतिर्देवांस्तयाप्रैषं
यदुपासीषदं बार्हस्पत्यं तद्यदपैक्षिषीमं चामुं च लोकौ तेन समधां
योत्तराहुतिर्मां तया स्वर्गे लोकेऽधाम्

११.५.३.[७]

अथ यद्धुत्वा प्रकम्पयामि  वायव्यं तद्यत्स्रुचं परिमृज्य कूर्चे
न्यमार्जिषधिवनस्पतींस्तेनाप्रैषं यद्द्वितीयं परिमृज्य दक्षिणतो
हस्तमुपासीषदं पितॄंस्तेनाप्रैषं यत्पूर्वं प्राशिषं मां तेनाप्रैषं
यद्द्वितीयं प्रजां तेनाथ यदुत्सृप्यापां पशूंस्तेनाप्रैषं यत्स्रुच्यप आनीय
निरौक्षिषं सर्पदेवजनांस्तेनाप्रैषं यद्द्वितीयं गन्धर्वाप्सरसस्तेनाथ
यत्तृतीयमेतां दिशमुदौक्षिषं स्वर्गस्य लोकस्य तेन द्वारं व्यवारिषं
यज्जघनेनाहवनीयमपो न्यनैषमस्मै लोकाय तेन वृष्टिमदां
यत्समतिष्ठिपं यत्पृथिव्या ऊनं तत्तेनापूपुरमित्येतन्नौ भगवन्त्सहेति होवाच

११.५.३.[८]

शौचेयो ज्ञप्तः  प्रक्ष्यामि त्वेव भगवन्तमिति पृचैव प्राचीनयोग्येति स होवाच
यस्मिन्काल उद्धृतास्तेऽग्नयः स्युरुपावहृतानि पात्राणि होष्यन्त्स्या अथ त
आहवनीयोऽनुगचेद्वेत्थ तद्भयं यदत्र जुह्वतो भवतीति वेदेति होवाच पुरा
चिरादस्य ज्येष्ठः पुत्रो म्रियेत यस्यैतदविदितं
स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितं का प्रायश्चित्तिरिति प्राण
उदानमप्यगादिति गार्हपत्य आहुतिं जुहुयां सैव प्रायश्चित्तिर्न तदागः

कुर्वीयेत्येतन्नौ भगवन्त्सहेति होवाच

११.५.३.[९]

शौचेयो ज्ञप्तः  प्रक्ष्यामि त्वेव भगवन्तमिति पृचैव प्राचीनयोग्येति स होवाच
यत्र त एतस्मिन्नेव काले गार्हपत्योऽनुगद्वेत्थ तद्भयं यदत्र जुह्वतो
भवतीति वेदेति होवाच पुरा चिरादस्य गृहपतिर्म्रियेत यस्यैतदविदितं
स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितं का प्रायश्चित्तिरित्युदानः
प्राणमप्यगादित्याहवनीय आहुतिं जुहुयां सैव प्रायश्चित्तिर्न तदागः
कुर्वीयेत्येतन्नौ भगवन्त्सहेति होवाच



११.५.३.[१०]

शौचेयो ज्ञप्तः  प्रक्ष्यामि त्वेव भगवन्तमिति पृचैव प्राचीनयोग्येति स होवाच
यत्र त एतस्मिन्नेव कालेऽन्वा?आर्यपचनोऽनुगचेद्वेत्थ तद्भयं यदत्र जुह्वतो
भवतीति वेदेति होवाच पुरा चिरादस्य सर्वे पशवो म्रियेरन्यस्यैतदविदितं
स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितं का प्रायश्चित्तिरिति व्यान
उदानमप्यगादिति गार्हपत्य आहुतिं जुहुयां सैव प्रायश्चित्तिर्न तदागः
कुर्वीयेत्येतन्नौ भगवन्त्सहेति होवाच

११.५.३.[११]

शौचेयो ज्ञप्तः  प्रक्ष्यामि त्वेव भगवन्तमिति पृचैव प्राचीनयोग्येति स होवाच यत्र त एतस्मिन्नेव काले सर्वेऽग्नयोऽनुगचेयुर्वेत्थ तद्भयं यदत्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्यादायादं कुलं स्याद्यस्यैतदविदितं स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितं का प्रायश्चित्तिरिति पुरा चिरादग्निम् मथित्वा यां दिशं वातो वायात्तां दिशमाहवनीयमुद्धृत्य वायव्यामाहुतिं जुहुयां स विद्यां समृद्धं मेऽग्निहोत्रं सर्वदेवत्यं वायुं ह्येव सर्वाणि भूतान्यपियन्ति वायोः पुनर्विसृज्यन्ते सैव प्रायश्चित्तिर्न तदागः कुर्वीयेत्येतन्नौ भगवन्त्सहेति होवाच

११.५.३.[१२]



शौचेयो ज्ञप्तः  प्रक्ष्यामि त्वेव भगवन्तमिति पृचैव प्राचीनयोग्येति स होवाच यत्र त एतस्मिन्नेव काले निवाते सर्वेऽग्नयोऽनुगचेयुर्वेत्थ तद्भयं यदत्र जुह्वतो भवतीति वेदेति होवाचाप्रियमेवास्मिंलोके पश्येताप्रियममुष्मिन्यस्यैतदविदितं स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितं का प्रायश्चित्तिरिति पुरा चिरादग्निं मथित्वा प्राञ्चमाहवनीयमुद्धृत्य जघनेनाहवनीयमुपविश्याहमेवैनत्पिबेयं स विद्यां समृद्धं मेऽग्निहोत्रं सर्वदेवत्यं ब्राह्मणं ह्येव सर्वाणि भूतान्यपियन्ति ब्राह्मणात्पुनर्विसृज्यन्ते सैव प्रायश्चित्तिर्न तदागः कुर्वीयेत्यथ वा अहमेतन्नावेदिषमिति होवाच

११.५.३.[१३]

शौचेयो ज्ञप्तः  इमानि समित्काष्ठान्युपायानि भगवन्तमिति स होवाच यदेवं

नावक्ष्यो मूर्धा ते व्यपतिष्यदेह्युपेहीति तथेति तं होपनिन्ये तस्मै हैतां
शोकतरां व्याहृतिमुवाच यत्सत्यं तस्मादु सत्यमेव वदेत्

११.५.४.[१]

ब्रह्मचर्यमागामित्याह  ब्रह्मण एवैतदात्मानं निवेदयति
ब्रह्मचार्यसानीत्याह ब्रह्मण एवैतदात्मानं परिददात्यथैनमाह को
नामासीति प्रजापतिर्वै कः प्राजापत्यमेवैनं तत्कृत्वोपनयते



११.५.४.[२]

अथास्य हस्तं गृह्णाति  इन्द्रस्य
ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तवासावित्येते वै श्रेष्ठे बलिष्ठे देवते
एताभ्यामेवैनं श्रेष्ठाभ्यां बलिष्ठाभ्यां देवताभ्यां परिददाति तथा हास्य
ब्रह्मचारी न कां चनार्तिमार्चति न स यएवं वेद

११.५.४.[३]

अथैनं भूतेभ्यः परिददाति  प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे
परिददामीत्येते वै श्रेष्ठे वर्षिष्ठे देवते एताभ्यामेवैनं श्रेष्ठाभ्यां
वर्षिष्ठाभ्यां देवताभ्यां परिददाति तथा हास्य ब्रह्मचारी न कां

चनार्तिमार्चति न स य एवं वेद

११.५.४.[४]

अद्भ्यस्त्वौषधीभ्यः परिददामीति  तदेनमद्भ्यश्चौषधिभ्यश्च परिददाति
द्यावापृथिवीभ्यां त्वा परिददामीति तदेनमाभ्यां द्यावापृथिवीभ्यां परिददाति
ययोरिदं सर्वमधि विश्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्या इति तदेनं
सर्वेभ्यो भूतेभ्यः परिददात्यरिष्ट्यै तथा हास्य ब्रह्मचारी न कां
चनार्तिमार्चति न स य एवं वेद



११.५.४.[५]

ब्रह्मचार्यसीत्याह  ब्रह्मण एवैनं तत्परिददात्यपोऽशा नेत्यमृतं वा
आपोऽमृतमशानेत्येवैनं तदाह कर्म कुर्विति वीर्यं वै कर्म वीर्यं
कुर्वित्येवैनं तदाह समिधमाधेहीति समिन्त्स्वात्मानं तेजसा
ब्रह्मवर्चसेनेत्येवैनं तदाह मा शुषुप्था इति मा मृथा इत्येवैनं
तदाहापोऽशानेत्यमृतं वा आपोऽमृतमशानेत्येवैनं तदाह तदेनमुभयतोऽमृतेन
परिगृह्णाति तथा हास्य ब्रह्मचारी न कां चनार्तिमार्चति न स य एवं वेद

११.५.४.[६]

अथास्मै सावित्रीमन्वाह  तां ह स्मैतां पुरा संवत्सरेऽन्वाहुः संवत्सरसम्मिता

वै गर्भाः प्रजायन्ते जात एवास्मिंस्तद्वाचं दध्म इति

११.५.४.[७]

अथ षद्धु मासेषु  षड्वा ऋतवः संवत्सरस्य संवत्सरसम्मिता वै गर्भाः प्रजायन्ते जात एवास्मिंस्तद्वाचं दध्म इति

११.५.४.[८]

अथ चतुर्विंशत्यहे  चतुर्विंशतिर्वै संवत्सरस्यार्धमासाः संवत्सरसम्मिता वै गर्भाः प्रजायन्ते जात एवास्मिंस्तद्वाचं दध्म इति



११.५.४.[९]

अथ द्वादशाहे  द्वादश वै मासाः संवत्सरस्य संवत्सरसम्

११.५.४.[१०]

अथ षडहे  षद्वा ऋतवः संवत्सरस्य संवत्सरसं

११.५.४.[११]

अथ त्र्यहे  त्रयो वा ऋतवः संवत्सरस्य संवत्सरसं

११.५.४.[१२]

तदपि श्लोकं गायन्ति  आचार्यो गर्भी भवति हस्तमाधाय दक्षिणम्  तृतीयस्यां स
जायते सावित्र्या सह ब्राह्मण इति सद्यो ह त्वाव ब्राह्मणायानुब्रूयादाग्नेयो वै
ब्राह्मणः सद्यो वा अग्निर्जायते तस्मात्सद्य एव ब्राह्मणायानुब्रूयात्



११.५.४.[१३]

तां हैतामेके  सावित्रीमनुष्टुभमन्वाहुर्वाग्वा अनुष्टुप्तदस्मिन्वाचं दध्म
इति न तथा कुर्याद्यो हैनं तत्र ब्रूयादा न्वा अयमस्य वाचमदित मूको
भविष्यतीतीश्वरो ह तथैव स्यात्तस्मादेतां गायत्रीमेव सावित्रीमनुब्रूयात्

११.५.४.[१४]

अथ हैके दक्षिणतः  तिष्ठते वासीनाय वान्वाहुर्न तथा कुर्याद्यो हैनं तत्र ब्रूयाद्बुल्बं न्वा अयमिममजीजनत बुल्बो भविष्यतीतीश्वरो ह तथैव स्यात्तस्मात्पुरस्तादेव प्रतीचे समीक्षमाणायानुब्रूयात्

११.५.४.[१५]

तां वै पचोऽन्वाह  त्रयो वै प्राणाः प्राण उदानो व्यानस्तानेवास्मिंस्तद्दधात्यथार्धर्चशो द्वौ वा इमौ प्राणौ प्राणोदानावेव प्राणोदानावेवास्मिंस्तद्दधात्यथ कृत्स्नामेको वा अयं प्राणः कृत्स्न एव प्राणमेवास्मिंस्तत्कृत्स्नं दधाति



११.५.४.[१६]

तदाहुः  न ब्रह्मणं ब्रह्मचर्यमुपनीय मिथुनं चरेद्गर्भो वा एष भवति यो ब्रह्मचर्यमुपैति नेदिमं ब्रह्मणं विषिक्ताद्रेतसो जनयानीति

११.५.४.[१७]

तदु वा आहुः  काममेव चरेद्द्वय्यो वा इमाः प्रजा दैव्यश्चैव मनुष्यश्च ता वा इमा मनुष्यः प्रजाः प्रजननात्प्रजायन्ते चन्दांसि वै दैव्यः प्रजास्तानि मुखतो जनयते तत एतं जनयते तस्मादु काममेव चरेत्

११.५.४.[१८]

तदाहुः  न ब्रह्मचारी सन्मध्वश्नीयादोषधीनां वा एष परमो रसो यन्मधु नेदन्नाद्यस्यान्तं गचानीत्यथ ह स्माह श्वेतकेतुरारुणेयो ब्रह्मचारी सन्मध्वश्नंस्त्रय्यै वा एतद्विद्यायै शिष्टं यन्मधु स तु रसो यस्येदक्शिष्टमिति यथा ह वा ऋचं वा यजुर्वा साम वाभिव्याहरेत्तादृक्तद्य एवं विद्वान्ब्रह्मचारी सन्मध्वश्नाति तस्मादु काममेवाश्नीयात्



११.५.५.[१]
देवान्वा ऊर्ध्वान्त्स्वर्गं लोकं यतः  असुरास्तमसान्तरदधुस्ते होचुर्न वा अस्यान्येन सत्त्रादपघातोऽस्ति हन्त सत्त्रमासामहा इति

११.५.५.[२]

ते शताग्निष्टोमं सत्त्रमुपेयुः  ते यावदासीनः परापश्येत्तावतस्तमोऽपाघ्नतैवमेव शतोक्थ्येन यावत्तिष्ठन्परापश्येत्तावतस्तमोऽपाघ्नत

११.५.५.[३]

ते होचुः  अप वाव तमो हन्महे न त्वेव सर्वमिव हन्त प्रजापतिं पितरम्
प्रत्ययामेति ते प्रजापतिं पितरं प्रतीत्योचुरसुरा वै नो भगव ऊर्ध्वान्त्स्वर्गं
लोकं यतस्तमसान्तरदधुः

११.५.५.[४]

ते शताग्निष्टोमं सत्त्रमुपैम  ते यावदासीनः
परापश्येत्तावतस्तमोऽपाहन्मह्येवमेव शतोक्थ्येन
यावत्तिष्ठन्परापश्येत्तावतस्तमोऽपाहन्महि प्र नो भगवञ्चाधि
यथासुरांस्तमोऽपहत्य सर्वं पाप्मानमपहत्य स्वर्गं लोकं प्रज्ञास्याम इति



११.५.५.[५]

स होवाच  असर्वक्रतुभ्यां वै यज्ञाभ्यामगन्त यदग्निष्टोमेन चोक्थ्येन च
शतातिरात्रं सत्त्रमुपेत तेनासुरांस्तमोऽपहत्य सर्वं पाप्मानमपहत्य
स्वर्गं लोकं प्रज्ञास्यथेति

११.५.५.[६]

ते शतातिरात्रं सत्त्रमुपेयुः  तेनासुरांस्तमोऽपहत्य सर्वं पाप्मानमपहत्य स्वर्गं लोकं प्रजज्ञुस्तेषामर्वाक्पञ्चाशेष्वेवाहःस्वहरभि रात्रिसामानि परीयू रात्रिमभ्यहःसामानि

११.५.५.[७]

ते होचुः  अमुहाम वै न प्रजानीमो हन्त प्रजापतिमेव पितरं प्रत्ययामेति ते प्रजापतिमेव पितरं प्रतीत्योचुरहन्नो रात्रिसामानि रात्र्यामह्नो भवन्ति नः विपश्चिद्यज्ञान्मुग्धान्विद्वान्धीरोऽनुशाधि न इति



११.५.५.[८]
तान्हैतदुपजगौ  महाहिमिव वै ह्रदाद्वलीयानन्ववेत्]य अनुत्त स्वादास्थानात्ततः सत्त्रं न तायत इति

११.५.५.[९]

आश्विनं वै वः शस्यमानम्  प्रातरनुवाकमास्थानादनुत्त यमास्थानादनुद्धं धीराः सन्तो अधीरवत्  प्रशास्त्रा तमुपेत शनैरप्रतिशंसतेति

११.५.५.[१०]

ते होचुः  कथं नु भगवः शस्तं कथमप्रतिशस्तमिति स होवाच यत्र होताश्विनं शंसन्नाग्नेयास्य क्रतोर्गायित्रस्य चन्दसः पारं गचात्तत्प्रतिप्रस्थाता वसतीवरीः परिहृत्य मैत्रावरुणस्य हविर्धानयोः प्रातरनुवाकमुपाकुरुतादुच्चैर्होता शंसति शनैरितरो जञ्जप्यमान इवान्वाह तन्न वाचा वाचं प्रत्येति न चन्दसा चन्दः

११.५.५.[११]

परिहिते प्रातरनुवाके  यथायतनमेवोपांश्वन्तर्यामौ हुत्वा द्रोणकलशे पवित्रं प्रपीड्यं निदधाति तिरोऽह्नयैश्चरित्वा प्रत्यञ्चः प्रतिपरेत्य तिरोह्नयानेव भक्षयाध्वा अथानुपूर्वं यज्ञपुचं संस्थाप्य य ऊर्ध्वा अन्तर्यामाद्ग्रहास्तान्गृहीत्वा विप्रुषां होमं हुत्वा संतनिं च बहिष्पवमानेन स्तुत्वाहरेव प्रतिपद्याध्वा इति

११.५.५.[१२]

तदेतेऽभि श्लोकाः  चतुर्भिः सैन्धवैर्युक्तैर्धीरा व्यजहुस्तमः  विद्वांसो ये शतक्रतु देवाः सत्त्रमतन्वतेति

११.५.५.[१३]

चत्वारो ह्यत्र युक्ता भवन्ति द्वौ होतारौ द्वावध्वर्यू पवेर्नु शङ्केव हनूनि कल्पयन्नह्नोरन्तौ व्यतिषजन्त धीराः न दानवा यज्ञियं तन्तुमेषां विजानीमो विततं मोहयन्ति नः पूर्वस्याह्नः परिषिंषन्ति कर्म तदुत्तरेणाभिवितन्वतेऽह्ना दुर्विज्ञानं काव्यं देवतानां सोमाः सोमैर्व्यतिषक्ताः प्लवन्ते समानान्त्सदमुक्षन्ति हयान्काष्ठभृतो यथा पूर्णान्परिस्रुतः कुम्भान्जनमेजयसादन इत्यसुररक्षसान्यपेयुः

११.५.६.[१]

पञ्चैव महायज्ञाः तान्येव महासत्त्राणि भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ इति



११.५.६.[२]

अहरहर्भूतेभ्यो बलिं हरेत् तथैतं भूतयज्ञं समाप्नोत्यहरहर्दद्यादोदपात्रात्तथैतं मनुष्ययज्ञं समाप्नोत्यहरहः स्वधाकुर्यादोदपात्रात्तथैतं पितृयज्ञं समाप्नोत्यहरहः स्वाहाकुर्यादा काष्ठात्तथैतं देवयज्ञं समाप्नोति

११.५.६.[३]

अथ ब्रह्मयज्ञः  स्वाध्यायो वै ब्रह्मयज्ञस्तस्य वा एतस्य ब्रह्मयज्ञस्य वागेव जुहूर्मन उपभृच्चक्षुर्ध्रुवा मेधा स्रुवः सत्यमवभृथः स्वर्गो लोक उदयनं यावन्तं ह वा इमां पृथिवीं वित्तेन पूर्णां ददंलोकं जयति त्रिस्तावन्तं जयति भूयांसं चाक्षय्यं य एवं विद्वानहरहः स्वाध्यायमधीते तस्मात्स्वाह्यायोऽध्येतव्यः

११.५.६.[४]

पयाअहुतयो ह वा एता देवानाम्  यदृचः स य एवं विद्वानृचोऽहरहः स्वाध्यायमधीते पयाअहुतिभिरेव तद्देवांस्तर्पयति त एनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄ!न्त्स्वधा अभिवहन्ति



११.५.६.[५]

आज्याहुतयो ह वा एता देवानाम्  यद्यजूंषि स य एवं विद्वान्यजूंष्यहरहः स्वाध्यायमधीत आज्याहुतिभिरेव तद्देवांस्तर्पयति त एनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रे

११.५.६.[६]

सोमाहुतयो ह वा एता देवानाम्  यत्सामानि स य एवं विद्वान्त्सामान्यहरहः स्वाध्यायमधीते सोमाहुतिभिरेव तद्देवांस्तर्पयति त एनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रे

११.५.६.[७]

मेदाअहुतयो ह वा एता देवानाम्  यदथर्वाङ्गिरसः स य एवं विद्वानथर्वाङ्गिरसोऽहरहः स्वाध्यायमधीते मेदाअहुतिभिरेव तद्देवांस्तर्पयति त एनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रे



११.५.६.[८]

मध्वाहुतयो ह वा एता देवानाम्  यदनुशासनानि विद्या वाकोवाक्यमितिहासपुराणं गाथा नाराशंस्यः स य एवं विद्वाननुशासनानि विद्या वाकोवाक्यमितिहासपुराणं गाथा नाराशंसीरित्यहरहः स्वाध्यायमधीते मध्वाहुतिभिरेव तद्देवांस्तर्पयति त एनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रे

११.५.६.[९]

तस्य वा एतस्य ब्रह्मयज्ञस्य  चत्वारो वषट्कारा यद्वातो वाति यद्विद्योतते

यत्स्तनयति यदवस्फूर्जति तस्मादेवंविद्वाते वाति विद्योतमाने स्तनयत्यवस्फूर्जत्यधीयीतैव वषड्काराणामचम्बड्कारायाति ह वै पुनर्मृत्युम् मुच्यते गचति ब्रह्मणः सात्मतां स चेदपि प्रबलमिव न शक्नुयादप्येकं देवपदमधीयीतैव तथा भूतेभ्यो न हीयते

११.५.७.[१]

अथातः स्वाध्यायप्रशंसा  प्रिये स्वाध्यायप्रवचने भवतो युक्तमना भवत्यपराधीनोऽहरहरर्थान्त्साधयते सुखं स्वपिति परमचिकित्सक आत्मनो भवतीन्द्रियसंयमश्चैकारामता च प्रज्ञात्रृद्धिर्यशो लोकपक्तिः प्रज्ञा वर्धमाना चतुरो धर्मान्ब्राह्मणमभिनिष्पादयति ब्राह्मण्यम् प्रतिरूपचर्यां यशो लोकपक्तिं लोकः पच्यमानश्चतुर्भिर्धर्मैर्ब्राह्मणम् भुनक्त्यर्चया च दानेन चाज्येयतया चावध्यतया च



११.५.७.[२]

ये ह वै के च श्रमाः  इमे द्यावापृथिवी अन्तरेण स्वाध्यायो हैव तेषां परमता काष्ठा य एवं विद्वान्त्स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्येतव्यः

११.५.७.[३]

यद्यद्ध वा अयं चन्दसः  स्वाध्यायमधीते तेनतेन हैवास्य
यज्ञक्रतुनेष्टं भवति य एवं विद्वान्त्स्वाध्यायमधीते
तस्मात्स्वाध्यायोऽध्येतव्यः

११.५.७.[४]

यदि ह वा अप्यभ्यक्तः  अलंकृतः सुहितः सुखे शयने शयानः स्वाध्यायमधीत
आ हैव स नखाग्रेभ्यस्तप्यते य एवं विद्वान्त्स्वाध्यायमधीते
तस्मात्स्वाध्यायोऽध्येतव्यः



११.५.७.[५]

मधु ह वा ऋचः  घृतं ह सामान्यमृतं यजूंषि यद्ध वा अयं
वाकोवाक्यमधीते क्षीरौदनमांसौदनौ हैव तौ

११.५.७.[६]

मधुना ह वा एष देवांस्तर्पयति  य एवं विद्वानृचोऽहरहः स्वाध्यायमधीते त
एनं तृप्तास्तर्पयन्ति सर्वैः कामैः सर्वैर्भोगैः

११.५.७.[७]

घृतेन ह वा एष देवांस्तर्पयति  य एवं विद्वान्त्सामान्यहरहः
स्वाध्यायमधीते त एनं तृप्ता

११.५.७.[८]

अमृतेन ह वा एष देवांस्तर्पयति  य एवं विद्वान्यजूंष्यहरहः
स्वाध्यायमधीते त एनं तृप्ता



११.५.७.[९]

क्षीरौदनमांसौदनाभ्यां ह वा एष देवांस्तर्पयति  य एवं
विद्वान्वाकोवाक्यमितिहासपुराणमित्यहरहः स्वाध्यायमधीते त एनं तृप्ता

११.५.७.[१०]

यन्ति वा आपः  एत्यादित्य एति चन्द्रमा यन्ति नक्षत्राणि यथा ह वा एता देवता नेयुर्न
कुर्युरेवं हैव तदहर्ब्राह्मणो भवति यदहः स्वाध्यायं नाधीते
तस्मात्स्वाध्यायोऽध्येतव्यस्तस्मादप्यृचं वा यजुर्वा साम वा गाथां वा कुंव्यां
वाभिव्याहरेद्व्रतस्याव्यवचेदाय

११.५.८.[१]

प्रजापतिर्वा इदमग्र आसीत्  एक एव सोऽकामयत स्यां प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्माच्छ्रान्तात्तेपानात्त्रयो लोका असृज्यन्त पृथिव्यन्तरिक्षं द्यौः

११.५.८.[२]

स इमांस्त्रींलोकानभितताप  तेभ्यस्तप्तेभ्यस्त्रीणि ज्योतींष्यजायन्ताग्निर्योऽयम् पवते सूर्यः



११.५.८.[३]

स इमानि त्रीणि ज्योतींष्यभितताप  तेभ्यस्तप्तेभ्यस्त्रयो वेदा अजायन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेदः सूर्यात्सामवेदः

११.५.८.[४]

स इमांस्त्रीन्वेदानभितताप  तेभ्यस्तप्तेभ्यस्त्रीणि शुक्राण्यजायन्त

भूरित्यृग्वेदाद्भुव इति यजुर्वेदात्स्वरिति सामवेदात्तदृग्वेदेनैव होत्रमकुर्वत यजुर्वेदेनाध्वर्यवं सामवेदेनोद्गीथं यदेव त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमथोच्चक्राम

११.५.८.[५]

ते देवाः प्रजापतिमब्रुवन्  यदि न ऋक्तो वा यजुष्टो वा सामतो वा यज्ञो ह्वलेत्केनैनं भिषज्येमेति



११.५.८.[६]

स होवाच  यद्यृक्तो भूरिति चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये जुहवथ यदि यजुष्टो भुव इति चतुर्गृहीतमाज्यं गृहीत्वाग्नीध्रीये जुहवथान्वाहार्यपचने वा हविर्यज्ञे यदि सामतः स्वरिति चतुर्गृहीतमाज्यं गृहीत्वाहवनीये जुहवथ यद्यु अविज्ञातमसत्सर्वाण्यनुद्रुत्याहवनीये जुहवथ तदृग्वेदेनैवर्ग्वेदम् भिषज्यति यजुर्वेदेन यजुर्वेदं सामवेदेन सामवेदं स यथा पर्वणा पर्व संदध्यादेवं हैव स संदधाति य एताभिर्भिषज्यत्यथ यो हातोऽन्येन भिषज्यति यथा शीर्णेन शीर्णं संधित्सेद्यथा वा शीर्णे गरमभिनिदध्यादेवं तत्तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदम्

११.५.८.[७]

तदाहुः  यदृचा होत्रं क्रियते यजुषाध्वर्यवं साम्नोद्गीथोऽथ केन
ब्रह्मत्वमित्यनया त्रय्या विद्ययेति ह ब्रूयात्

११.५.९.[१]

प्रजापतिर्ह वा एष यदंशुः  सोऽस्यैष आत्मैवात्मा ह्ययं प्रजापतिर्वागेवादाभ्यः
स यदंशुः गृहीत्वादाभ्यं गृह्णात्यात्मानमेवास्यैतत्संस्कृत्य तस्मिन्नेतां वाचम्
प्रतिष्ठापयति



११.५.९.[२]

अथ मनो ह वा अंशुः  वागदाभ्यः प्राण एवांशुरुदानोऽदाभ्यश्चक्षुरेवांशुः
श्रोत्रमदाभ्यस्तद्यदेतौ ग्रहौ गृह्णन्ति सर्वत्वायैव कृत्स्नतायै

११.५.९.[३]

अथ देवाश्च ह वा असुराश्च  उभये प्राजापत्या अस्पर्धन्त त एतस्मिन्नेव यज्ञे
प्रजापतावस्पर्धन्तास्माकमयं स्यादस्माकमयं स्यादिति

११.५.९.[४]

ततो देवाः अर्चन्तः श्राम्यन्तश्चेरुस्त एतं ग्रहं ददृशुरेतमदाभ्यं
तमगृह्णत ते सवनानि प्रावृहन्त ते सर्वं यज्ञं
समवृञ्जतान्तरायन्नसुरान्यज्ञात्

११.५.९.[५]

ते होचुः  अदभाम वा एनानिति तस्माददाभ्यो न वै नोऽदभन्निति तस्माददाभ्यो
वाग्वा अदाभ्यः सेयमदब्धा वाक्तस्माद्देवादाभ्य एवं ह वै द्विषतो
भ्रातृव्यस्य सर्वं यज्ञं संवृङ्क्ते एवं द्विषन्तं भ्रातृव्यं
सर्वस्माद्यज्ञान्निर्भजति बहिर्धा करोति य उ एवमेतद्वेद



११.५.९.[६]

स येनैव पात्रेणांशुं गृह्णाति  तस्मिन्नेव पात्रे निग्राभ्याभ्योऽप आनीय
तस्मिन्नेतानंशून्गृह्णाति

११.५.९.[७]

उपयामगृहीतोऽसि  अग्नये त्वा गायत्रचन्दसं गृह्णामीति गायत्रं प्रातःसवनं

तत्प्रातःसवनं प्रवृहतीन्द्राय त्वा त्रिष्टुप्छन्दसं गृह्णामीति त्रैष्टुभम्
माध्यन्दिनं सवनं तन्माध्यन्दिनं सवनं प्रवृहति विश्वेभ्यस्त्वा देवेभ्यो
जगच्छन्दसं गृह्णामीति जागतं तृतीयसवनं तत्तृतीयसवनम्
प्रवृहत्यनुष्टुप्तेऽभिगर इति यद्वा ऊर्ध्वं सवनेभ्यस्तदानुष्टुभं
तदेवैतत्प्रवृहति तन्नाभिषुणोति वज्रो वै ग्रावा वागदाभ्यो नेद्वज्रेण वाचं
हिनसानीति

११.५.९.[८]

अंशूनेवाधूनोति  व्रेशीनां त्वा पत्मन्नाधूनोमि कुकूननानां त्वा
पत्मन्नाधूनोमि भन्दनानां त्वा पत्मन्नाधूनोमि मदिन्तमानां त्वा
पत्मन्नाधूनोमि मधुन्तमानां त्वा पत्मन्नाधूनोमीत्येता वै
दैवीरापस्तद्याश्चैव दैवीरापो याश्चेमा मानुष्यस्ताभिरेवास्मिन्नेतदुभयीभी
रसं दधाति

११.५.९.[९]

शुक्रं त्वा शुक्र आधूनोमीति  शुक्रं ह्येतचुक्र आधूनोत्यह्नो रूपे सूर्यस्य
रश्मिष्विति तदह्नश्चैवैनमेतद्रूपे सूर्यस्य च रश्मिष्वाधूनोति

११.५.९.[१०]

ककुभं रूपं वृषभस्य रोचते बृहदिति  एतद्वै ककुभं रूपं वृषभस्य
रोचते बृहद्य एष तपति शुक्रः शुक्रस्य पुरोगाः सोमः सोमस्य पुरोगा इति
तच्चुक्रमेवैतच्चुक्रस्य पुरोगां करोति सोमं सोमस्य पुरोगां यत्ते सोमादाभ्यं
नाम जागृवि तस्मै त्वा गृह्णामीत्येतद्ध वा अस्यादाभ्यं नाम जागृवि
यद्वाक्तद्वाचमेवैतद्वाचे गृह्णाति

११.५.९.[११]

अथोपनिष्क्रम्य जुहोति  तस्मै ते सोम सोमाय स्वाहेति तत्सोममेवैतत्सोमाय
जुहोति तथो वाचमग्नौ न प्रवृणक्त्यथ हिरण्यमभिव्यनित्यसावेव
बन्धुस्तस्य तावतीरेव दक्षिणा यावतीरंशोः



११.५.९.[१२]

अथांशून्पुनरप्यर्जति  उशिक्त्वं देव सोमाग्नेः प्रियं पाथोऽपीहि वशी त्वं देव
सोमेन्द्रस्य प्रियं पाथोऽपीह्यस्मत्सखा त्वं देव सोम विश्वेषां देवानाम्
प्रियं पाथोऽपीहीति सवनानि वा अदः प्रवृहति
तान्येवैतत्पुनराप्याययत्ययातयामानि करोति तैरयातयामैर्यज्ञं तन्वते

११.६.१.[१]

भृगुर्ह वै वारुणिः  वरुणं पितरं विद्ययातिमेने तद्ध वरुणो विदां
चकारातिवै मा विद्यया मन्यत इति

११.६.१.[२]

स होवाच  प्राङ्गुत्रक व्रजतात्तत्र यत्पश्येतद्दृष्ट्वा दक्षिणा व्रजतात्तत्र
यत्पश्येस्तद्दृष्ट्वा प्रत्यग्व्रजतात्तत्र यत्पश्येस्तद्दृष्ट्वोदग्व्रजतात्तत्र
यत्पश्येस्तद्दृष्ट्वैतयोः पूर्वयोरुत्तरमन्ववान्तरदेशं व्रजतात्तत्र
यत्पश्येस्तन्म आचक्षीथा इति



११.६.१.[३]

स ह तत एव प्राङ्गव्राज  एदु पुरुषैः पुरुषान्पर्वाण्येषां पर्वशः
संव्रश्चं पर्वशो विभजमानानिदं तवेदं ममेति स होवाच भीष्मं बत
भोः पुरुषान्वा एतत्पुरुषाः पर्वाण्येषां संव्रश्चं पर्वशो व्यभक्षतेति ते
होचुरित्थं वा इमेऽस्मानमुष्मिंलोकेऽसचन्त तान्वयमिदमिह प्रतिसचामहा इति स
होवाचास्तीह प्रायश्चित्ती३ इत्यस्तीति काति पिता ते वेदेति

११.६.१.[४]

स ह तत एव दक्षिणा प्रवव्राज  एदु पुरुषैः पुरुषान्पर्वाण्येषां पर्वशः

संकर्तं पर्वशो विभजमानानिदं तवेदं ममेति स होवाच भीष्मं बत
भोः पुरुषान्वा एततपुरुषाः पर्वाण्येषां पर्वशः संकर्तं पर्वशो
व्यभक्षतेति ते होचुरित्थं वा इमेऽस्मानमुष्मिंलोकेऽसचन्त तान्वयमिदमिह
प्रतिसचामहा इति स होवाचास्तीह प्रायश्चित्ती३ इत्यस्तीति काति पितैव ते वेदेति

११.६.१.[५]

स ह तत एव प्रत्यङ्ङ्वव्राज  एदु पुरुषैः
पुरुषांस्तूष्णीमासीनांस्तूष्णीमासीनैरद्यमानान्त्स होवाच भीष्मं बत भोः
पुरुषान्वा एततपुरुषास्तूष्णीमासीनांस्तूष्णीमासीना अदन्तीति ते होचुरित्थं वा
इमेऽस्मानमुष्मिंलोकेऽसचन्त तान्वयमिदमिह प्रतिसचामहा इति स होवाचास्तीह
प्रायश्चित्ती३ इत्यस्तीति काति पितैव ते वेदेति



११.६.१.[६]

स ह तत एवोदङ्ङ्वव्राज  एदु पुरुषैः पुरुषानाक्रन्दयत
आक्रन्दयद्भिरद्यमानान्त्स होवाच भीष्मं बत भोः पुरुषान्वा एततपुरुषा
आक्रन्दयत आक्रन्दयन्तोऽदन्तीति ते होचुरित्थं वा इमेऽस्मानमु

११.६.१.[७]

स ह तत एवैतयोः पूर्वयोः  उत्तरमन्ववान्तरदेशं प्रवव्राजेदु स्त्रियौ
कल्याणीं चातिकल्याणीं च ते अन्तरेण पुरुषः कृष्णः पिङ्गाक्षो दण्डपाणिस्तस्थौ तं
हैनं दृष्ट्वा भीर्विवेद स हेत्य संविवेश तं ह पितोवाचाधीष्व स्वाध्यायं
कस्मान्नु स्वाध्यायं नाधीष इति स होवाच किमध्येष्ये न किं चनास्तीति तद्ध
वरुणो विदां चकाराद्राग्वा इति

११.६.१.[८]

स होवाच  यान्वै तत्प्राच्यां दिश्यद्राक्षीः पुरुषैः पु रुषान्पर्वाण्येषां पर्वशः
संव्रश्चं पर्वशो विभजमानानिदं तवेदं ममेति वनस्पतयो वै ते
अभूवन्त्स यद्वनस्पतीनां समिधमादधाति तेन वनस्पतीनवरुन्द्धे तेन
वनस्पतीनां लोकं जयति



११.६.१.[९]

अथ यानेततद्दक्षिणायां दिश्यद्राक्षीः  पुरुषैः पुरुषान्पर्वाण्येषां पर्वशः
संकर्तं पर्वशो विभजमानानिदं तवेदं ममेति पशवो वै ते अभूवन्त्स
यत्पयसा जुहोति तेन पशूनवरुन्धे तेन पशूनां लोकं जयति

११.६.१.[१०]

अथ यानेतत्प्रतीच्यां दिश्यद्राक्षीः  पुरुषैः

पुरुषांस्तूष्णीमासीनांस्तूष्णीमासीनैरद्यमानानोषधयो वै ता अभूवन्त्स
यत्तृणेनावज्योतयति तेनौषधीरवरुन्द्धे तेनौषधीनां लोकं जयति

११.६.१.[११]

अथ यानेतदुदीच्यां दिश्यद्राक्षीः  पुरुषैः पुरुषानाक्रन्दयत
आक्रन्दयद्भिरद्यमानानापो वै ता अभूवन्त्स यदपः प्रत्यानयति
तेनापोऽवरुन्द्धे तेनापां लोकं जयति



११.६.१.[१२]

अथ ये एते  स्त्रियावद्राक्षीः कल्याणीं चातिकल्याणीं च सा या कल्याणी सा श्रद्धा स
यत्पूर्वामाहुतिं जुहोति तेन श्रद्धामवरुन्द्धे तेन श्रद्धां जयत्यथ
यातिकल्याणी साश्रद्धा स यदुत्तरामाहुतिं जुहोति तेनाश्रद्धामवरुन्द्धे
तेनाश्रद्धां जयति

११.६.१.[१३]

अथ य एने सोऽन्तरेण पुरुषः  कृष्णः पिङ्गाक्षो दण्डपाणिरस्थात्क्रोधो वै
सोऽभूत्स यत्स्रुच्यप आनीय निनयति तेन क्रोधमवरुन्द्धे तेन क्रोधं जयति स
य एवं विद्वानग्निहोत्रं जुहोति तेन सर्वं जयति सर्वमवरुन्द्धे

११.६.२.[१]

जनको ह वै वैदेहो  ब्राह्मणैर्धावयद्भिः समाजगाम श्वेतकेतुनारुणेयेन सोमशुष्मेण सात्ययज्ञिना याज्ञवल्क्येन तान्होवाच कथंकथमग्निहोत्रं जुहुथेति

११.६.२.[२]



स होवाच  श्वेतकेतुरारुणेयो घर्माविव सम्राडहमजस्रौ यशसा विष्यन्दमानावन्योऽन्यस्मिन्जुहोमीति कथं तदित्यादित्यो वै घर्मस्तं सायमग्नौ जुहोम्यग्निर्वै घर्मस्तं प्रातरादित्ये जुहोमीति किं स भवति य एवं जुहोत्यजस्र एव श्रिया यशसा भवत्येतयोश्च देवतयोः सायुज्यं सलोकतां जयतीति

११.६.२.[३]

अथ होवाच शोमशुष्मः सात्ययज्ञिः  तेज एव सम्राडहं तेजसि जुहोमीति कथं तदित्यादित्यो वै तेजस्तं सायमग्नौ जुहोम्यग्निर्वै तेजस्तं प्रातरादित्ये जुहोमीति किं स भवति य एवं जुहोतीति तेजस्वी यशस्व्यन्नादो भवत्येतयोश्चैव देवतयोः सायुज्यं सलोकतां जयतीति

११.६.२.[४]

अथ होवाच याज्ञवल्क्यः  यदहमग्निमुद्धराम्यग्निहोत्रमेव तदुद्यचाम्यादित्यं वा अस्तं यन्तं सर्वे देवा अनुयन्ति ते म एतमग्निमुद्धृतं दृष्ट्वोपावर्तन्तेऽथाहं पात्राणि निर्णिज्योपवाप्याग्निहोत्रीं दोहयित्वा पश्यन्पश्यतस्तर्पयामीति त्वं नेदिष्ठं याज्ञवल्क्याग्निहोत्रस्यामीमांसिष्ठा धेनुशतं ददामीति होवाच न त्वेवैनयोस्त्वमुत्क्रात्रिं न गतिं न प्रतिष्ठां न तृप्तिं न पुनरावृत्तिं न लोकं प्रत्युत्थायिनमित्युक्त्वा रथमास्थाय प्रधावयां चकार



११.६.२.[५]

ते होचुः  अति वै नोऽयं राजन्यबन्धुरवादीद्धन्तैनं ब्रह्मोद्यमाह्वयामहा इति स होवाच याज्ञवल्क्यो ब्राह्मणा वै वयं स्मो राजन्यबन्धुरसौ यद्यमुं वयं जयेम कमजैष्मेति ब्रूयामाथ यद्यसावस्मान्जयेद्ब्राह्मणान्राजन्यबन्धुरजैषीदिति नो ब्रूयुर्मेदमादृद्ध्वमिति तद्धास्य जज्ञुरथ ह याज्ञवल्क्यो रथमास्तायानुप्रधावयां चकार तं हान्वाजगाम स होवाचाग्निहोत्रं याज्ञवल्क्य वेदितू३ इत्यग्निहोत्रं सम्राडिति

११.६.२.[६]

ते वा एते  आहुती हुते उत्क्रामतः ते अन्तरिक्षमाविशतस्ते अन्तरिक्षमेवाहवनीयं कुर्वाते वायुं समिधं मरीचीरेव शुक्रामाहुतिं ते अन्तरिक्षं तर्पयतस्ते तत उत्क्रामतः

११.६.२.[७]

ते दिवमाविशतः  ते दिवमेवाहवनीयं कुर्वाते आदित्यं समिधं चन्द्रमसमेव शुक्रामाहुतिं ते दिवं तर्पयतस्ते तत आवर्तेते



११.६.२.[८]

ते इमामाविशतः  ते इमामेवाहवनीयं कुर्वाते अग्निं समिधमोषधीरेव शुक्रामाहुतिं ते इमां तर्पयतस्ते तत उत्क्रामतः

११.६.२.[९]

ते पुरुषमाविशतः  तस्य मुखमेवाहवनीयं कुर्वाते जिह्वां समिधमन्नमेव शुक्रामाहुतिं ते पुरुषं तर्पयतः स य एवं विद्वानश्नात्यग्निहोत्रमेवास्य हुतं भवति ते तत उत्क्रामतः

११.६.२.[१०]

ते स्त्रियमाविशतः  तस्या उपस्थमेवाहवनीयं कुर्वाते धारकां समिधं धारका ह वै नामैषैतया ह वै प्रजापतिः प्रजा धारयां चकार रेत एव शुक्रामाहुतिं ते स्त्रियं तर्पयतः स य एवं विद्वान्मिथुनमुपैत्यग्निहोत्रमेवास्य हुतम् भवति यस्ततः पुत्रो जायते स लोकः प्रत्युत्थाय्येतदग्निहोत्रं याज्ञवल्क्य नातः परमस्तीति होवाच तस्मै ह याज्ञवल्क्यो वरं ददौ स होवाच कामप्रश्न एव मे त्वयि याज्ञवल्क्यासदिति ततो ब्रह्मा जनक आस



११.६.३.[१]

जनको ह वैदेहो  बहुदक्षिणेन यज्ञेनेजे स ह गवां सहस्रमवरुन्धन्नुवाचैता वो ब्राह्मणा यो ब्रह्मिष्ठः स उदजतामिति

११.६.३.[२]

स होवाच याज्ञवल्क्यो ऽर्वाचीरेता इति ते होचुस्त्वं स्विन्नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ इति स होवाच नमोऽस्तु ब्रह्मिष्ठाय गोकामा एव वयं स्म इति

११.६.३.[३]

ते होचुः  को न इमं प्रक्ष्यतीति स होवाच विदग्धः शाकल्योऽहमिति तं ह प्रतिख्यायोवाच त्वां स्विचाकल्य ब्राह्मणा उल्मुकावक्षयणमक्रता३ ति

११.६.३.[४]

स होवाच कति देवा याज्ञवल्क्येति त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रयस्त्रिंशदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्यध्यर्ध इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक इत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति



११.६.३.[५]

स होवाच  महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति कतमे ते त्रयस्त्रिंशदित्यष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति

११.६.३.[६]

कतमे वसव इति  अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एते हीदं सर्वं वासयन्ते ते यदिदं सर्वं वासयन्ते तस्माद्वसव इति

११.६.३.[७]

कतमे रुद्रा इति  दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्मान्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति



११.६.३.[८]

कतम आदित्या इति  द्वादश मासाः संवत्सरस्यैत आदित्या एते हीदं सर्वमाददाना यन्ति ते यदिदं सर्वमाददाना यन्ति तस्मादादित्या इति

११.६.३.[९]

कतम इन्द्रः कतमः प्रजापतिरिति  स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतम स्तनयित्नुरित्यशनिरिति कतमो यज्ञ इति पशव इति

११.६.३.[१०]

कतमे ते त्रयो देवा इति  इम एव त्रयो लोका एषु हीमे सर्वे देवा इति कतमौ तौ
द्वौ देवावित्यन्नं चैव प्राणश्चेति कतमोऽध्यर्ध इति योऽयं पवत इति कतम
एको देव इति प्राण इति

११.६.३.[११]

स होवाच  अनतिप्रश्न्यां मा देवतामत्यप्राक्षीः पुरेतिथ्यै मरिष्यसि न तेऽस्थीनि
चन गृहान्प्राप्स्यन्तीति स ह तथैव ममार तस्य हाप्यन्यन्मन्यमानाः
परिमोषिणोऽस्थीन्यपजह्रुस्तस्मान्नोपवादी स्यादुत ह्येवंवित्परो भवति



११.७.१.[१]

पशुबन्धेन यजते  पशवो वै पशुबन्धः स यत्पशुबन्धेन यजते
पशुमानसानीति तेन गृहेषु यजेत गृहेषु पशून्बध्ना इति तेन सुयवसे यजेत
सुयवसे पशून्बध्ना इति जीर्यन्ति ह वै जुह्वतो यजमानस्याग्नयोऽग्नीन्जीर्यतोऽनु
यजमानो यजमानमनु गृहाश्च पशवश्च

११.७.१.[२]
स यत्पशुबन्धेन यजते  अग्नीनेवैतत्पुनर्णवान्कुरुतेऽग्नीनां पुनर्णवतामनु

यजमानमनु गृहाश्च पशवश्चायुष्यो ह वा अस्यैष आत्मनिष्क्रयणो भवति मांसीयन्ति ह वै जुह्वतो यजमानस्याग्नयस्ते यजमानमेव ध्यायन्ति यजमानं संकल्पयन्ति पचन्ति वा अन्येष्वग्निषु वृथामांसमथैतेषां नातोऽन्या मांसाशा विद्यते यस्यो चैते भवन्ति

११.७.१.[३]

स यत्पशुबन्धेन यजते  आत्मानमेवैतन्निष्क्रीणीते वीरेण वीरं वीरो हि पशुर्वीरो यजमान एतदु ह वै परमन्नाद्यं यन्मांसं स परमस्यैवान्नाद्यस्यात्ता भवति तं वै संवत्सरो नानीजनमतीयादायुर्वै संवत्सर आयुरेवैतदमृतमात्मन्धत्ते



११.७.२.[१]

हविर्यज्ञविधो ह वा अन्यः पशुबन्धः  सवविधोऽन्यः स हैष हविर्यज्ञविधो यस्मिन्व्रतमुपनयति यस्मिन्नपः प्रणयति यस्मिन्पूर्णपात्रं निनयति यस्मिन्विष्णुक्रमान्क्रमयत्यथ हैष सवविधो यस्मिन्नेतानि न क्रियन्ते

११.७.२.[२]

तदाहुः  इष्टिः पशुबन्धा३ महायज्ञा३ इति महायज्ञ इति ह ब्रूयादिष्टिं वै तर्हि

पशुबन्धमकर्व्येनमकृक्षथा इत्येनं ब्रूयात्

११.७.२.[३]

तस्य प्रयाजा एव प्रातःसवनम्  अनुयाजास्तृतीयसवनं पुरोडाश एव माध्यन्दिनं सवनम्

११.७.२.[४]



तद्धैके  वपायां हुतायां दक्षिणा नयन्ति तदु तथा न कुर्याद्यो हैनं तत्र ब्रूयाद्बहिर्धा न्वा अयं प्राणेभ्यो दक्षिणा अनैषीन्न प्राणानददक्षदन्धो वा स्रामो वा बधिरो वा पक्षहतो वा भविष्यतीतीश्वरो ह तथैव स्यात्

११.७.२.[५]

इत्थमेव कुर्यात्  पुरोडाशेडायामेवोपहूतायां दक्षिणा नयेदैन्द्रो वा अयम् मध्यतः प्राण इममेवैतदैन्द्रं मध्यतः प्राणं दक्षिणाभिर्दक्षयत्यैन्द्रं वै माध्यन्दिनं सवनं माध्यन्दिने वै सवने दक्षिणा नीयन्ते तस्मात्पुरोडाशेडायामेवोपहूतायां दक्षिणा नयेत्

११.७.२.[६]

तदाहुः  अध्वर्यो यद्दीक्षितस्य नानवभृथोऽवकल्पते क्वैनमदिदीक्ष
इत्यावभृथादनूद्दंहेयुरध्वर्युश्च प्रतिप्रस्थाता च होता च मैत्रावरुणश्च
ब्रह्मा चाग्नीध्रश्चैतैर्वा एष षड्ढोता तमनुद्रुत्य षड्ढोतारं
जुहोत्येकामाहुतिं कृत्वा पञ्च वाज्या द्यौष्पृष्ठमन्तरिक्षमात्माङ्गैर्यज्ञम्
पृथिवीं शरीरैः  वाचस्पतेऽचिद्रया वाचाचिद्रया जुह्वा दिवि देवावृधं
होत्रामैरयत्स्वाहेति सैव दीक्षा

११.७.२.[७]



तदाहुः  अध्वर्यो यद्दीक्षितस्य नानवभृथोऽवकल्पते
क्वैनमवभृथमवनेष्यसीति स यद्धृदयशूलेन चरन्ति स हैवैतस्यावभृथः

११.७.२.[८]

मधुको ह स्माह पैङ्ग्यः  विसोमेन वा एके पशुबन्धेन यजन्ते ससोमेनैके
दिवि वै सोम आसीत्तं गायत्री वयो भूत्वाहरत्तस्य यत्पर्णमच्छिद्यत तत्पर्णस्य
पर्णत्वमिति न्वा एतद्ब्राह्मणमुद्यते विसोमेन वा एके पशुबन्धेन यजन्ते
ससोमेनैके स हैष विसोमेन पशुबन्धेन यजते योऽन्यं पालाशाद्यूपं
कुरुतेऽथ हैष ससोमेन पशुबन्धेन यजते यः पालाशं यूपं कुरुते
तस्मात्पालाशमेव यूपं कुर्वीत

११.७.३.[१]

स य एष बहुसारः  स हापशव्यस्तस्मात्तादृशं पशुकामो यूपं न कुर्वीताथ य एष फल्गुप्रासहः स ह पशव्यस्तस्मात्तादृशं पशुकामो यूपं कुर्वीत

११.७.३.[२]

अथ यस्यैतद्वक्रस्य सतः  शूलैवाग्रं भवति स ह कपोती नाम स यो ह तादृशं यूपं कुरुते पुरा हायुषोऽमुं लोकमेति तस्मात्तादृशमायुष्कामो यूपं न कुर्वीत



११.७.३.[३]

अथ य एष आनतः  उपरिष्टादपनतो मध्ये सोऽशनायै रूपं स यो ह तादृशं यूपं कुरुतेऽशनायुका हास्य भार्या भवन्ति तस्मात्तादृशमन्नाद्यकामो यूपं न कुर्वीताथ य एष आनत उपरिष्टादुपनतो मध्ये सोऽन्नाद्यस्य रूपं तस्मात्तादृशमन्नाद्यकामो यूपं कुर्वीत

११.७.४.[१]

स यत्पशुना यक्ष्यमाणः  एकारत्निं यूपं कुरुत इममेव तेन लोकं जयत्यथ यद्व्यरत्निमन्तरिक्षलोकमेव तेन जयत्यथ यत्त्र्यरत्निं दिवमेव तेन जयत्यथ यच्चतुररत्निं दिश एव तेन जयति स वा एष त्र्यरत्निर्वैव चतुररत्निर्वा पशुबन्धयूपो भवत्यथ योऽत ऊर्ध्वः सौम्यस्यैव सोऽध्वरस्य

११.७.४.[२]

तदाहुः  यजेदाज्यभागौ ना३ इति यजेदित्याहुश्चक्षुषी वा एते यज्ञस्य यदाज्यभागौ किमृते पुरुषश्चक्षुर्भ्यां स्यादिति यावद्वै भागिनं स्वेन भागधेयेन न निर्भजन्त्यनिर्भक्तो वै स तावन्मन्यतेऽथ यदैव तं स्वेन भागधेयेन निर्भजन्त्यथैव स निर्भक्तो मन्यते स यत्रैतद्धोतान्वाहास्ना रक्षः संसृजतादिति तदेनं स्वेन भागधेयेन निर्भजति



११.७.४.[३]

एतद्वै पशोः संज्ञप्यमानस्य  हृदयं शुक्षमवैति हृदयाचूलं तद्ये सह हृदयेन पशुं श्रपयन्ति पुनः पशुं शुगनुविष्पन्देत पार्श्वत एवैनत्काष्ठे प्रतृद्य श्रपयेत्

११.७.४.[४]

उपस्तृणीत आज्यम्  तत्पृथिव्यै रूपं करोति हिरण्यशकलमवदधाति तदग्ने रूपं करोति वपामवदधाति तदन्तरिक्षस्य रूपं करोति हिरण्यशकलमवदधाति तदादित्यस्य रूपं करोत्यथ यदुपरिष्टादभिघारयति तद्दिवो रूपं करोति सा वा एषा पञ्चावत्ता वपा भवति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्तवः संवत्सरस्य तस्मात्पञ्चावत्ता वपा भवति

११.८.१.[१]

तद्यथा ह वै  इदं रथचक्रं वा कौलालचक्रं वाप्रतिष्ठितं क्रन्देदेवं हैवेमे लोका अध्रुवा अप्रतिष्ठिता आसुः



११.८.१.[२]

स ह प्रजापतिरीक्षां चक्रे  कथं न्विमे लोका ध्रुवाः प्रतिष्ठिताः स्युरिति स एभिश्चैव पर्वतैर्नदीभिश्चेमामदृंहद्वयोभिश्च मरीचिभिश्चान्तरिक्षं जीमूतैश्च नक्षत्रैश्च दिवम्

११.८.१.[३]

स मह इति व्याहरत्  पशवो वै महस्तस्माद्यस्यैते बहवो भवन्ति

भूयिष्ठमस्य कुले महीयन्ते बहवो ह वा अस्यैते भवन्ति भूयिष्ठं हास्य
कुले महीयन्ते तस्माद्यद्येनमायतनाद्वाधेरन्वा प्र वा यापयेयुरग्निहोत्रं
हुत्वा मह इत्युपतिष्ठेत प्रति प्रजया पशुभिस्तिष्ठति नायतनाच्च्यवते

११.८.२.[१]

चत्वारो ह वा अग्नयः  आहित उद्धृतः प्रहृतो विहृतोऽयमेव लोक आहितोऽन्तरिक्षलोक
उद्धृतो द्यौष्प्रहृतो दिशो विहृतोऽग्निरेवाहितो वायुरुद्धृत आदित्यः
प्रहृतश्चन्द्रमा विहृतो गार्हपत्य एवाहित आहवनीय उद्धृतोऽथ
यमेतमाहवनीयात्प्राञ्चं प्रणयन्ति स प्रहृतोऽथ यमेतमुदञ्चम्
पशुश्रपणायाहरन्ति यं चोपयड्भ्यः स विहृतस्तस्मात्प्रहार्येऽग्नौ पशुबन्धेन
यजेत



११.८.३.[१]

तदाहुः  किंदेवत्य एष पशुः स्यादिति प्राजापत्यः स्यादित्याहुः प्रजापतिर्वा
एतमग्रेऽभ्यपश्यत्तस्मात्प्राजापत्य एवैष पशुः स्यादिति

११.८.३.[२]

अथो अप्याहुः  सौर्य एवैष पशुः स्यादिति तस्मादेतस्मिन्नस्तमिते पशवो बध्यन्ते

बध्नन्त्येकान्यथागोष्ठमेक उपसमायन्ति तस्मात्सौर्य एवैष पशुः स्यादिति

११.८.३.[३]

अथो अप्याहुः  ऐन्द्राग्न एवैष पशुः स्यादित्येते वै देवते अन्वन्त्ये देवा यद्यार्तो यजते पारयत एव यदि महसायजते पारयत एव तस्मादैन्द्राग्न एवैष पशुः स्यादिति

११.८.३.[४]



प्राण एव पशुबन्धः  तस्माद्यावज्जीवति नास्यान्यः पशूनामीष्टे बद्धा ह्यास्मिन्नेते भवन्ति

११.८.३.[५]

स ह प्रजापतिरग्निमुवाच  यजै त्वया त्वा लभा इति नेति होवाच वायुं ब्रूहीति स ह वायुमुवाच यजै त्वया त्वा लभा इति नेति होवाच पुरुषं ब्रूहीति स ह पुरुषमुवाच यजै त्वया त्वा लभा इति नेति होवाच पशून्ब्रूहीति स ह पशूनुवाच यजै युष्माभिरा वो लभा इति नेति होचुश्चन्द्रमसं ब्रूहीति स ह चन्द्रमसमुवाच यजै त्वया त्वा लभा इति नेति होवाचादित्यं ब्रूहीति स हादित्यमुवाच यजै त्वया त्वा लभा इति तथेति होवाच य उ त एते नाचीकमन्त किमु

म एतेषु स्यादिति यद्यत्कामयेथा इति तथेति तमालभत सोऽस्यायं पशुरालब्धः संज्ञप्तोऽश्वयत्तमेताभिराप्रीभिराप्रीणात्तद्यदेनमेताभिराप्रीभिराप्रीणात्तस्मादाप् रियो नाम तस्मादु पशुं संज्ञप्तं ब्रूयाचेतां नु मुहूर्तमिति स यावन्तमश्वमेधेनेष्ट्वा लोकं जयति तावन्तमेतेन जयति

११.८.३.[६]

तं प्राची दिक् प्राणेत्यनुप्राणत्प्राणमेवास्मिंस्तददधात्तं दक्षिणा दिग्व्यानेत्यनुप्राणद्व्यानमेवास्मिंस्तददधात्तं प्रतीची दिगपानेत्यनुप्राणदपानमेवास्मिंस्तददधात्तमुदीची दिगुदानेत्यनुप्राणदुदानमेवास्मिंस्तददधात्तमूर्ध्वा दिक्षमानेत्यनुप्राणत्समानमेवास्मिंस्तददधात्तस्मादु पुत्रं जातमकृत्तनाभिं पञ्च ब्राह्मणान्ब्रूयादित्येनमनुप्राणितेति यद्यु तान्न विन्देदपि स्वयमेवानुपरिक्राममनुप्राण्यात्स सर्वमायुरेत्या हैव जरायै जीवति



११.८.३.[७]

स प्राणमेवाग्नेरादत्त  तस्मादेष नानुपध्मातो नानुपज्वलितो ज्वलत्यात्तो ह्यस्य प्राण आ ह वै द्विषतो भ्रातृव्यस्य प्राणं दत्ते य एवं वेद

११.८.३.[८]

रूपमेव वायोरादत्त  तस्मादेतस्य लेलयत इवैवोपशृण्वन्ति न त्वेनम्
पश्यन्त्यात्तं ह्यस्य रूपमा ह वै द्विषतो भ्रातृव्यस्य रूपं दत्ते य एवं वेद

११.८.३.[९]

चित्तमेव पुरुषस्यादत्त  तस्मादाहुर्देवचित्तं त्वावतु मा मनुष्यचित्तमित्यात्तं
ह्यस्य चित्तमा ह वै द्विषतो भ्रातृव्यस्य चित्तं दत्ते य एवं वेद



११.८.३.[१०]

चक्षुरेव पशूनामादत्त  तस्मादेते चाकश्यमाना इवैव न जानन्त्यथ
यदैवोपजिघ्रन्त्यथ जानन्त्यात्तं ह्येषां चक्षुरा ह वै द्विषतो भ्रातृव्यस्य
चक्षुर्दत्ते य एवं वेद

११.८.३.[११]

भामेव चन्द्रमस आदत्त  तस्मादेतयोः सदृशयोः सतोर्नतरां चन्द्रमा
भात्यात्ता ह्यस्य भा आ ह वै द्विषतो भ्रातृव्यस्य भां दत्ते य एवं वेद
तद्यदादत्त तस्मादादित्यः

११.८.४.[१]
केशिगृहपतीनामु ह  सम्राड्‌दुघां शार्दूलो जघान स ह ससत्त्रिण आमन्त्रयां चक्रे केह प्रायश्चित्तिरिति ते होचुर्नेह प्रायश्चित्तिरस्ति खण्डिक एवौद्धारिरस्य प्रायश्चित्तिं वेद स उ त एतादृक्त्वैव कामयतेऽतश्च पापीय इति

११.८.४.[२]

स होवाच  संग्रहीतर्युङ्‌क्ष्वि मे स्यन्त्स्यामि स यद्यह मे वक्ष्यति समाप्स्यामि यद्यु मा मारयिष्यति यज्ञं विकृष्टमनु विक्रक्ष्य इति



११.८.४.[३]

स ह युक्त्वा ययावाजगाम  तं ह प्रतिख्यायोवाच यन्न्वेतान्येवाजिनानि मृगेषु भवन्त्यथैषां पृष्टीरपिशीर्य पचामहे कृष्णाजिनं मे ग्रीवास्वाबद्धमित्येव मेदमधृषोऽभ्यवस्यन्तू३ मिति

११.८.४.[४]

नेति होवाच  सम्राड्‌दुघां वै मे भगवः शार्दूलोऽवधीत्स यद्यह मे वक्ष्यसि

समाप्स्यामि यद्यु मा मारयिष्यसि यज्ञं विकृष्टमनु विक्रक्ष्य इति

११.८.४.[५]

स होवाच  आमन्त्रणीयान्वामन्त्रया इति तान्हामन्त्र्योवाच यद्यस्मै वक्ष्याम्यमुष्यैवेदं प्रजा भविष्यति न मम लोकी त्वहं भविष्यामि यद्यु वा अस्मै न वक्ष्यामि ममैवेदं प्रजा भविष्यति नामुष्य लोकी त्वसौ भविष्यतीति ते होचुर्मा भगवो वोचोऽयं वाव क्षत्रियस्य लोक इति स होवाच वक्ष्याम्येवामूर्वै रात्रयो भूयस्य इति



११.८.४.[६]

तस्मा उ हैतदुवाच  स्पृतीर्हुत्वान्यामाजतेति ब्रूतात्सा ते सम्राड्ङ्घा स्यादिति चन्द्रात्ते मन स्पृणोमि स्वाहा सूर्यात्ते चक्षु स्पृणोमि स्वाहा वातात्ते प्राणान्त्स्पृणोमि स्वाहा दिग्भ्यस्ते श्रोत्रं स्पृणोमि स्वाहाद्भ्यस्ते लोहितं स्पृणोमि स्वाहा पृथिव्यै ते शरीरं स्पृणोमि स्वाहेत्यथान्यामाजतेति ब्रूतात्सा ते सम्राड्ङ्घा स्यादिति ततो हैव स उत्ससाद कैशिनीरेवेमा अप्येतर्हि प्रजा जायन्ते

१३.१.१.[१]

ब्रह्मौदनं पचति  रेत एव तद्धत्ते यदाज्यमुचिष्यते तेन रशनामभ्यज्यादत्ते तेजो वा आज्यं प्राजापत्योऽश्वः प्रजापतिमेव तेजसा समर्धयत्यपूतो वा एषोऽमेध्यो यदश्वः

१३.१.१.[२]

दर्भमयी रशना भवति  पवित्रं वै दर्भाः पुनात्येवैनं पूतमेवैनम्
मेध्यमालभते

१३.१.१.[३]

अश्वस्य वा आलब्धस्य  रेत उदक्रामत्तत्सुवर्णं हिरण्यमभवद्यत्सुवर्णं
हिरण्यं ददात्यश्वमेव रेतसा समर्धयति



१३.१.१.[४]

प्रजापतिर्यज्ञमसृजत  तस्य महिमापाक्रामत्स महर्त्विजः प्राविशत्तम्
महर्त्विग्भिरन्वैचत्तं महर्त्विग्भिरन्वविन्दद्यन्महर्त्विजो ब्रह्मौदनम्
प्राश्नन्ति महिमानमेव तद्यज्ञस्य यजमानोऽवरुन्द्धे ब्रह्मौदने सुवर्णं
हिरण्यं ददाति रेतो वा ओदनो रेतो हिरण्यं रेतसैवास्मिंस्तद्रेतो दधाति शतमानम्
भवति शतायुर्वै पुरुषः शतेन्द्रिय आयुरेवेन्द्रियं वीर्यमात्मन्धत्ते
चतुष्टयीरपो वसतीवरीर्मध्यमायाह्वे गृह्णाति ता दिग्भ्यः समाहृता भवन्ति
दिक्षु वा अन्नमन्नमापोऽन्नेनैवास्मा अन्नमवरुन्द्धे

१३.१.२.[१]

व्यृद्धमु वा एतद्यज्ञस्य  यदयजुष्केण क्रियत
इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते यजुष्कृत्यै यज्ञस्य समृद्ध्यै
द्वादशारत्निर्भवति द्वादश मासाः संवत्सरः संवत्सरमेव यज्ञमाप्नोति

१३.१.२.[२]

तदाहुः  द्वादशारत्नी रशना कार्या३ त्रयोदशारत्नी३ इत्यृषभो वा एष ऋतूनां
यत्संवत्सरस्तस्य त्रयोदशो मासो विष्टपमृषभ एष यज्ञानां यदश्वमेधो
यथा वा ऋषभस्य विष्टपमेवमेतस्य विष्टपं त्रयोदशमरत्निं
रशनायामुपादध्यात्तद्यथ ऋषभस्य विष्टपं संस्त्रियते तादृक्तत्



१३.१.२.[३]

अभिधा असीति  तस्मादश्वमेधयाजी सर्वा दिशोऽभिजयति भुवनमसीति भुवनं
तज्जयति यन्तासि धर्तेति यन्तारमेवैनं धर्तारं करोति स त्वमग्निं
वैश्वानरमित्यग्निमेवैनं वैश्वानरं गमयति सप्रथसं गचेति
प्रजयैवैनं पशुभिः प्रथयति स्वाहाकृत इति वषट्कार एवास्यैष स्वगा त्वा
देवेभ्य इति देवेभ्य एवैनं स्वगा करोति प्रजापतय इति प्राजापत्योऽश्वः
स्वयैवैनं देवतया समर्धयति

१३.१.२.[४]

ईश्वरो वा एषः  आर्तिमार्तोर्यो ब्रह्मणे देवेभ्योऽप्रतिप्रोच्याश्वं बध्नाति ब्रह्मन्नश्वं भन्त्स्यामि देवेभ्यः प्रजापतये तेन राध्यासमिति ब्रह्माणमामन्त्रयते ब्रह्मण एवैनं प्रतिप्रोच्य बध्नाति नार्तिमार्च्छति तं बधान देवेभ्यः प्रजापतये तेन राध्नुहीति ब्रह्मा प्रसौति स्वयैवैनं देवतया समर्धयत्यथ प्रोक्षत्यसावेव बन्धुः



१३.१.२.[५]

स प्रोक्षति  प्रजापतये त्वा जुष्टं प्रोक्षामीति प्रजापतिर्वै देवानां वीर्यवत्तमो वीर्यमेवास्मिन्दधाति तस्मादश्वः पशूनां वीर्यवत्तमः

१३.१.२.[६]

इन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामीति  इन्द्राग्नी वै देवानामोजस्वितमा ओज एवास्मिन्दधाति तस्मादश्वः पशूनामोजस्वितमः

१३.१.२.[७]

वायवे त्वा जुष्टं प्रोक्षामीति  वायुर्वै देवानामाशिष्ठो जवमेवास्मिन्दधाति तस्मादश्वः पशूनामाशिष्ठः

१३.१.२.[८]

विश्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामीति  विश्वे वै देवा देवानां यशस्वितमा यश एवास्मिन्दधाति तस्मादश्वः पशूनां यशस्वितमः सर्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामीति



१३.१.२.[९]

तदाहुः  यत्प्राजापत्योऽश्वोऽथ कथाप्यन्याभ्यो देवताभ्यः प्रोक्षतीति सर्वा वै देवता अश्वमेधेऽन्वायत्ता यदाह सर्वेभ्यस्त्वा देवेभ्यः प्रोक्षामीति सर्वा एवास्मिन्देवता अन्वायातयति तस्मादश्वमेधे सर्वा देवता अन्वायत्ताः पाप्मा वा एतम्
भ्रातृव्य ईप्सति योऽश्वमेधेन यजेत वज्रोऽश्वः परो मर्तः परः श्वेति श्वानं चतुरक्षं हत्वाधस्पदमश्वस्योपप्लावयति वज्रेणैवैनमवक्रामति नैनम् पाप्मा भ्रातृव्य आप्नोति

१३.१.३.[१]

यथा वै हविषोऽहुतस्य स्कन्देत्  एवमेतत्पशो स्कन्दति यं निक्तमनालब्धमुत्सृजन्ति यत्स्तोकीया जुहोति सर्वहुतमेवैनं जुहोत्यस्कन्दायास्कन्नं हि तद्यद्धुतस्य स्कन्दति सहस्रं जुहोति सहस्रसम्मितो वै स्वर्गो लोकः स्वर्गस्य लोकस्याभिजित्यै

१३.१.३.[२]

तदाहुः  यन्मिता जुहुयात्परिमितमवरुन्धीतेत्यमिता जुहोत्यपरिमितस्यैवावरुद्ध्या उवाच ह प्रजापति स्तोकीयासु वा अहमश्वमेधं संस्थापयामि तेन संस्थितेनैवात ऊर्ध्वं चरामीति



१३.१.३.[३]

अग्नये स्वाहेति  अग्नय एवैनं जुहोति सोमाय स्वाहेति सोमायैवैनं जुहोत्यपाम् मोदाय स्वाहेत्यद्भ्य एवैनं जुहोति सवित्रे स्वाहेति सवित्र एवैनं जुहोति वायवे स्वाहेति वायव एवैनं जुहोति विष्णवे स्वाहेति विष्णव एवैनं जुहोतीन्द्राय स्वाहेतीन्द्रायैवैनं जुहोति बृहस्पतये स्वाहेति बृहस्पतय एवैनं जुहोति मित्राय स्वाहेति मित्रायैवैनं जुहोति वरुणाय स्वाहेति वरुणायैवैनं जुहोत्येतावन्तो वै सर्वे देवास्तेभ्य एवैनं जुहोति पराचीर्जुहोति पराङिव वै स्वर्गो लोकः स्वर्गस्य लोकस्याभिजित्यै

१३.१.३.[४]

ईश्वरो वा एषः  पराङ्ङ्दघोर्यः पराचीराहुतीर्जुहोति पुनरावर्ततेऽस्मिन्नेव लोके प्रतितिष्ठत्येतां ह वाव स यज्ञस्य संस्थितिमुवाचास्कन्दायास्कन्नं हि तद्यद्धुतस्य स्कन्दति

१३.१.३.[५]

यथा वै हविषोऽहुतस्य स्कन्देत्  एवमेतत्पशो स्कन्दति यम् प्रोक्षितमनालब्धमुत्सृजन्ति यद्रूपाणि जुहोति सर्वहुतमेवैनं जुहोत्यस्कन्दायास्कन्नं हि तद्यद्धुतस्य स्कन्दति हिङ्काराय स्वाहा हिङ्कृताय स्वाहेत्येतानि वा अश्वस्य रूपाणि तान्येवावरुन्द्धे



१३.१.३.[६]

तदाहुः  अनाहुतिर्वै रूपाणि नैता होतव्या इत्यथो खल्वाहुरत्र वा अश्वमेधः संतिष्ठते यद्रूपाणि जुहोति होतव्या एवेति बहिर्धा वा एतमायतनात्करोति भ्रातृव्यमस्मै जनयति यस्यानायतनेऽन्यत्राग्नेराहुतीर्जुहोति

१३.१.३.[७]

सावित्र्या एवेष्टेः  पुरस्तादनुद्रुत्य सकृदेव रूपाण्याहवनीये जुहोत्यायतन एवाहुतीर्जुहोति नास्मै भ्रातृव्यं जनयति यज्ञमुखेयज्ञमुखे जुहोति यज्ञस्य संतत्या अव्यवचेदाय

१३.१.३.[८]

तदाहुः  यद्यज्ञमुखेयज्ञमुखे जुहुयात्पशुभिर्व्यृध्येत पापोयान्त्स्यात्सकृदेव होतव्या न पशुभिर्व्यृध्यते न पापीयान्भवत्यष्टाचत्वारिंशतं जुहोत्यष्टाचत्वारिंशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुन्द्ध एकमतिरिक्तं जुहोति तस्मादेकः प्रजास्वर्धुकः



१३.१.४.[१]

प्रजापतिरश्वमेधमसृजत  सोऽस्मात्सृष्टः पराङैत्स दिशोऽनुप्राविशत्तं देवाः प्रैषमैचंस्तमिष्टिभिरनुप्रायुञ्जत तमिष्टिभिरन्वैचंस्तमिष्टिभिरन्वविन्दन्यदिष्टिभिर्यजतेऽश्वमेव तन्मेध्यं यजमानोऽन्विचति

१३.१.४.[२]

सावित्र्यो भवन्ति  इयं वै सविता यो वा अस्यां निलयते योऽन्यत्रैत्यस्यां वाव

तमनुविन्दन्ति न वा इमां कश्चन तिर्यङ्ङोर्ध्वोऽत्येतुमर्हति यत्साविञ्यो भवन्त्यश्वस्यैवानुवित्त्यै

१३.१.४.[३]

तदाहुः प्र वा एतदश्वो मीयते यत्पराङेति न ह्येनं प्रत्यावर्तयन्तीति यत्सायं धृतीर्जुहोति क्षेमो वै धृतिः क्षेमो रात्रिः क्षेमेणैवैनं दाधार तस्मात्सायम् मनुष्याश्च पशवश्च क्षेम्या भवन्त्यथ यत्प्रातरिष्टिभिर्यजत इचत्येवैनं तत्तस्माद्दिवा नष्टैष एति यद्वेव सायं धृतीर्जुहोति प्रातरिष्टिभिर्यजते योगक्षेममेव तद्यजमानः कल्पयते तस्माद्यत्रैतेन यज्ञेन यजन्ते क्लृप्तः प्रजानां योगक्षेमो भवति



१३.१.५.[१]

अप वा एतस्मात् श्री राष्ट्रं क्रामति योऽश्वमेधेन यजते यदा वै पुरुषः श्रियं गचति वीणास्मै वाद्यते ब्राह्मणौ वीणागाथिनौ संवत्सरं गायतः श्रियै वा एतद्रूपं यद्वीणा श्रियमेवास्मिंस्तद्धत्तः

१३.१.५.[२]

तदाहुः यदुभौ ब्राह्मणौ गायेतामपास्मात्क्षत्रं क्रामेद्ब्रह्मणो वा

एतद्रूपं यद्ब्राह्मणो न वै ब्रह्मणि क्षत्रं रमत इति

१३.१.५.[३]

यदुभौ राजन्यौ  अपास्माद्ब्रह्मवर्चसं क्रामेत्क्षत्रस्य वा एतद्रूपं
यद्राजन्यो न वै क्षत्रे ब्रह्मवर्चसं रमत इति ब्राह्मणोऽन्यो गायति
राजन्योऽन्यो ब्रह्म वै ब्राह्मणः क्षत्रं राजन्यस्तदस्य ब्रह्मणा च क्षत्रेण
चोभयतः श्रीः परिगृहीता भवति



१३.१.५.[४]

तदाहुः  यदुभौ दिवा गायेतां प्रभ्रंशुकास्माच्छ्रीः स्याद्ब्रह्मणो वा एतद्रूपं
यदहर्यदा वै राजा कामयतेऽथ ब्राह्मणं जिनाति पापीयांस्तु भवति

१३.१.५.[५]

यदुभौ नक्तम्  अपास्माद्ब्रह्मवर्चसं क्रामेत्क्षत्रस्य वा एतद्रूपं
यद्रात्रिर्न वै क्षत्रे ब्रह्मवर्चसं रमत इति दिवा ब्राह्मणो गायति नक्तं
राजन्यस्तथो हास्य ब्रह्मणा च क्षत्रेण चोभयतः श्रीः परिगृहीता भवतीति

१३.१.५.[६]

अयजतेत्यददादिति ब्राह्मणो गायतीष्टापूर्तं वै ब्राह्मणस्येष्टापूर्तेनैवैनं स समर्धयतीत्ययुध्यतेत्यमुं संग्राममजयदिति राजन्यो युद्धं वै राजन्यस्य वीर्यं वीर्येणैवैनं स समर्धयति तिस्रोऽन्यो गाथा गायति तिस्रोऽन्यः षड्सम्पद्यन्ते षड्तवः संवत्सर ऋतुष्वेव संवत्सरे प्रतितिष्ठति ताभ्यां शतं ददाति शतायुर्वै पुरुषः शतेन्द्रिय आयुरेवेन्द्रियं वीर्यमात्मन्धत्ते

१३.१.६.[१]



विभूर्मात्रा प्रभूः पित्रेति इयं वै मातासौ पिताभ्यामेवैनं परिददात्यश्वोऽसि हयोऽसीति शास्त्येवैनं तत्तस्माचिष्टाः प्रजा जायन्तेऽत्योऽसि मयोऽसीत्यत्येवैनं नयति तस्मादश्वः पशूनां श्रैष्ठ्यं गचत्यर्वासि सप्तिरसि वाज्यसीति यथायजुरेवैतद्वृषासि नृमणा असीति मिथुनत्वाय ययुर्नामासि शिशुर्नामासीत्येतद्वा अश्वस्य प्रियं नामधेयं प्रियेणैवैनं नाम्नाभिवदति तस्मादप्यामित्रौ संगत्य नाम्ना चेदभिवदतोऽन्योऽन्यं समेव जानाते

१३.१.६.[२]

आदित्यानां पत्वान्विहीति आदित्यानेवैनं गमयति देवा आशापाला एतं देवेभ्योऽश्वम् मेधाय प्रोक्षितं रक्षतेति शतं वै तल्प्या राजपुत्रा आशापालास्तेभ्य एवैनम् परिददातीह रन्तिरिह रमतामिह धृतिरिह स्वधृतिः स्वाहेति

संवत्सरमाहुतीर्जुहोति षोडश नवतीरेता वा अश्वस्य बन्धनं ताभिरेवैनम्
बध्नाति तस्मादश्वः प्रमुक्तो बन्धनमागचति षोडश नवतीरेता वा अश्वस्य
बन्धनं ताभिरेवैनं बध्नाति तस्मादश्वः प्रमुक्तो बन्धनं न जहाति

१३.१.६.[३]

राष्ट्रं वा अश्वमेधः  राष्ट्र एते व्यायचन्ते येऽश्वं रक्षन्ति तेषां य उद्दचं
गचन्ति राष्ट्रेणैव ते राष्ट्रं भवन्त्यथ ये नोद्दचं गचन्ति राष्ट्रात्ते
व्यवचिद्यन्ते तस्माद्राष्ट्र्यश्वमेधेन यजेत परा वा एष सिच्यते
योऽबलोऽश्वमेधेन यजते यद्यमित्रा अश्वं विन्देरन्यज्ञोऽस्य विचिद्येत
पापीयान्त्स्याचतं कवचिनो रक्षन्ति यज्ञस्य संतत्या अव्यवचेदाय न
पापीयान्भवत्यथान्यमानीय प्रोक्षेयुः सैव तत्र प्रायश्चित्तिः



१३.१.७.[१]

प्रजापतिरकामयत  अश्वमेधेन यजेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य
तप्तस्य सप्तधात्मनो देवता अपाक्रामन्त्सा दीक्षाभवत्स एतानि
वैश्वदेवान्यपश्यत्तान्यजुहोत्तैर्वै स दीक्षामवारुन्द्ध यद्वैश्वदेवानि जुहोति
दीक्षामेव तैर्यजमानोऽवरुन्द्धेऽन्वहं जुहोत्यन्वहमेव दीक्षामवरुन्द्धे
सप्त जुहोति सप्त वै ता देवता अपाक्रामंस्ताभिरेवास्मै दीक्षामवरुन्द्धे

१३.१.७.[२]

अप वा एतेभ्यः प्राणाः क्रामन्ति  ये दीक्षामतिरेचयन्ति सप्ताहं प्रचरन्ति सप्त वै शीर्षण्याः प्राणाः प्राणा दीक्षा प्राणैरेवास्मै प्राणान्दीक्षामवरुन्द्धे त्रेधा विभज्य देवतां जुहोति त्र्यावृतो वै देवास्त्र्यावृत इमे लोका ऋद्ध्यामेव वीर्य एषु लोकेषु प्रतितिष्ठति

१३.१.७.[३]

एकविंशतिः सम्पद्यन्ते  द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशस्तद्दैवं क्षत्रं सा श्रीस्तदाधिपत्यं तद्बध्नस्य विष्टपं तत्स्वाराज्यमश्नुते



१३.१.७.[४]

त्रिंशतमौद्ग्रभणानि जुहोति  त्रिंशदक्षरा विराड्विराडु कृत्स्नमन्नं कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै चत्वार्यौद्ग्रभणानि जुहोति त्रीणि वैश्वदेवानि सप्त सम्पद्यन्ते सप्त वै शीर्षण्याः प्राणाः प्राणा प्राणैरेवास्मै प्राणान्दीक्षामवरुन्द्धे पूर्णाहुतिमुत्तमां जुहोति प्रत्युत्तब्ध्यै सयुक्त्वाय

१३.१.८.[१]

प्रजापतिरश्वमेधमसृजत  स सृष्टः प्रर्चमव्लीनात्प्र साम तं वैश्वदेवान्युदयचन्यद्वैश्वदेवानि जुहोत्यश्वमेधस्यैवोद्यत्यै

१३.१.८.[२]

काय स्वाहा  कस्मै स्वाहा कतमस्मै स्वाहेति प्राजापत्यं मुख्यं करोति प्रजापतिमुखाभिरेवैनं देवताभिरुद्यचति



१३.१.८.[३]

स्वाहाधिमाधीताय स्वाहा  मनः प्रजापतये स्वाहा चित्तं विज्ञातायेति यदेव पूर्वासां ब्राह्मणं तदत्र

१३.१.८.[४]

अदित्यै स्वाहा  अदित्यै मह्यै स्वाहादित्यै सुमृडीकायै स्वाहेतीयं वा अदितिरनयैवैनमुद्यचति

१३.१.८.[५]

सरस्वत्यै स्वाहा  सरस्वत्यै पावकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहेति वाग्वै सरस्वती वाचैवैनमुद्यचति

१३.१.८.[६]

पूष्णे स्वाहा  पूष्णे प्रपथ्याय स्वाहा पूष्णे नरंधिषाय स्वाहेति पशवो वै पूषा पशुभिरेवैनमुद्यचति



१३.१.८.[७]

त्वष्ट्रे स्वाहा  त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहेति त्वष्टा वै पशूनां मिथुनानां रूपकृद्रूपैरेवैनमुद्यचति

१३.१.८.[८]

विष्णवे स्वाहा  विष्णवे निभूयपाय स्वाहा विष्णवे शिपिविष्टाय स्वाहेति यज्ञो वै विष्णुर्यज्ञेनैवैनमुद्यचति विश्वो देवस्य नेतुरिति पूर्णाहुतिमुत्तमां जुहोतीयं वै पूर्णाहुतिरस्यामेवान्ततः प्रतितिष्ठति

१३.१.९.[१]

आ ब्रह्मन्  ब्राह्मणो ब्रह्मवर्चसी जायतामिति ब्राह्मण एव ब्रह्मवर्चसं
दधाति तस्मात्पुरा ब्राह्मणो ब्रह्मवर्चसी जज्ञे

१३.१.९.[२]

आ राष्ट्रे राजन्यः  शूर इषव्योऽतिव्याधी महारथो जायतामिति राजन्य एव शौर्यम्
महिमानं दधाति तस्मात्पुरा राजन्यः शूर इषव्योऽतिव्याधी महारथो जज्ञे



१३.१.९.[३]

दोग्ध्री धेनुरिति  धेन्वामेव पयो दधाति तस्मात्पुरा धेनुर्दोग्ध्री जज्ञे

१३.१.९.[४]

वोढानड्वानिति  अनडुह्येव बलं दधाति तस्मात्पुरानड्वान्वोढा जज्ञे

१३.१.९.[५]

आशुः सप्तिरिति  अश्व एव जवं दधाति तस्मात्पुराश्वः सर्ता जज्ञे

१३.१.९.[६]

पुरंधिर्येषेति  योषित्येव रूपं दधाति तस्माद्रूपिणी युवतिः प्रिया भावुका

१३.१.९.[७]



जिष्णू रथेष्ठा इति  राजन्य एव जैत्रं महिमानं दधाति तस्मात्पुरा राजन्यो जिष्णुर्जज्ञे

१३.१.९.[८]

सभेयो युवेति  एष वै सभेयो युवा यः प्रथमवयसी तस्मात्प्रथमवयसी स्त्रीणां प्रियो भावुकः

१३.१.९.[९]

आस्य यजमानस्य वीरो जायतामिति यजमानस्यैव प्रजायां वीर्यं दधाति तस्मात्पुरेजानस्य वीरो जज्ञे

१३.१.९.[१०]

निकामे नः पर्जन्यो वर्षत्विति निकामेनिकामे वै तत्र पर्जन्यो वर्षति यत्रैतेन यज्ञेन यजन्ते फलवत्यो न ओषधयः पच्यन्तामिति फलवत्यो वै तत्रौषधयः पच्यन्ते यत्रैतेन यज्ञेन यजन्ते योगक्षेमो नः कल्पतामिति योगक्षेमो वै तत्र कल्पते यत्रैतेन यज्ञेन यजन्ते तस्माद्यत्रैतेन यज्ञेन यजन्ते क्लृप्तः प्रजानां योगक्षेमो भवति



१३.२.१.[१]

प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत् स आत्मन्नश्वमेधमधत्त ते देवाः प्रजापतिमब्रुवन्नेष वै यज्ञो यदश्वमेधोऽपि नोऽत्रास्तु भग इति तेभ्य एतानन्नहोमान्कल्पयद्यदन्नहोमान्जुहोति देवानेव तत्प्रीणाति

१३.२.१.[२]

आज्येन जुहोति तेजो वा आज्यं तेजसैवास्मिंस्तत्तेजो दधात्याज्येन जुहोत्येतद्वै

देवानां प्रियं धाम यदाज्यं प्रियेणैवैनान्धाम्ना समर्धयति

१३.२.१.[३]

सक्तुभिर्जुहोति  देवानां वा एतद्रूपं यत्सक्तवो देवानेव तत्प्रीणाति

१३.२.१.[४]

धानाभिर्जुहोति  अहोरात्राणां वा एतद्रूपं यद्धाना अहोरात्राण्येव तत्प्रीणाति



१३.२.१.[५]

लाजैर्जुहोति  नक्षत्राणां वा एतद्रूपं यल्लजा नक्षत्राण्येव तत्प्रीणाति प्राणाय स्वाहापानाय स्वाहेति नामग्राहं जुहोति नामग्राहमेवैनांस्तत्प्रीणात्येकस्मै स्वाहा द्वाभ्यां स्वाहा शताय स्वाहैकशताय स्वाहेत्यनुपूर्वं जुहोत्यनुपूर्वमेवैनांस्तत्प्रीणात्येकोत्तरा जुहोत्येकवृद्वै स्वर्गो लोक एकधैवैनं स्वर्गं लोकं गमयति पराचीर्जुहोति पराङिव वै स्वर्गो लोकः स्वर्गस्य लोकस्याभिजित्यै

१३.२.१.[६]

ईश्वरो वा एषः  पराङ्ङ्दघोर्यः पराचीराहुतिर्जुहोति नैकशतमत्येति यदेकशतमतीयादायुषा यजमानं व्यर्धयेदेकशतं जुहोति शतायुर्वै पुरुष आत्मैकशत आयुष्येवात्मन्प्रतितिष्ठति व्युष्ट्यै स्वाहा स्वर्गाय स्वाहेत्युत्तमे आहुती जुहोति रात्रिर्वै व्युष्टिरहः स्वर्गोऽहोरात्रे एव तत्प्रीणाति

१३.२.१.[७]

तदाहुः  यदुभे दिवा वा नक्तं वा जुहुयादहोरात्रे मोहयेद्व्युष्ट्यै स्वाहेत्यनुदित आदित्ये जुहोति स्वर्गाय स्वाहेत्युदितेऽहोरात्रयोरव्यतिमोहाय



१३.२.२.[१]

राजा वा एष यज्ञानां यदश्वमेधः  यजमानो वा अश्वयज्ञमारभतेवमेधो यजमानो यज्ञो यदश्वे पशून्नियुनक्ति यज्ञ एव त

१३.२.२.[२]

अश्वं तूपरं गोमृगमिति  तान्मध्यमे यूप आलभते सेनामुखमेवास्यैतेन संश्यति तस्माद्राज्ञः सेनामुखं भीष्मं भावुकम्

१३.२.२.[३]

कृष्णग्रीवमाग्नेयं रराटे पुरस्तात्  पूर्वाग्निमेव तं कुरुते तस्माद्राज्ञः
पूर्वाग्निर्भावुकः

१३.२.२.[४]

सारस्वतीं मेषीमधस्ताद्धन्वोः  स्त्रीरेव तदनुगाः कुरुते तस्मात्स्त्रियः
पुंसोऽनुवर्त्मानो भावुकाः



१३.२.२.[५]

आश्विनावधोरामौ बाह्वोः  बाह्वोरेव बलं धत्ते तस्माद्राजा बाहुबली भावुकः

१३.२.२.[६]

सौमापौष्णं श्यामं नाभ्याम्  प्रतिष्ठामेव तां कुरुत इयं वै पूषास्यामेव
प्रतितिष्ठति

१३.२.२.[७]

सौर्ययामौ श्वेतं च कृष्णं च पार्श्वयोः  कवचे एव ते कुरुते तस्माद्राजा संनद्धो वीर्यं करोति

१३.२.२.[८]

त्वाष्ट्रो लोमशसक्थौ सक्थ्योः  ऊर्वोरेव बलं धत्ते तस्माद्राजोरुबली भावुकः



१३.२.२.[९]

वायव्यं श्वेतं पुचे  उत्सेधमेव तं कुरुते तस्मादुत्सेधं प्रज्!
भयेऽभिसंश्रयन्तीन्द्राय स्वपस्याय वेहतं यज्ञस्य सेन्द्रतायै वैष्णवो वामनो यज्ञो वै विष्णुर्यज्ञ एवान्ततः प्रतितिष्ठति

१३.२.२.[१०]

ते वा एते  पञ्चदश पर्यङ्ग्याः पशवो भवन्ति पञ्चदशो वै वज्रो वीर्यं वज्रो वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते

१३.२.२.[११]

पञ्चदश पञ्चदशो एवेतरेषु  पञ्चदशो वै वज्रो वीर्यं वज्रो
वज्रेणवैतद्वीर्येण यजमानोऽभितः पाप्मानमपहते

१३.२.२.[१२]

तदाहुः  अपाहैवैतैः पाप्मानं हता इत्यकृत्स्नं च त्वै प्रजापतिं संस्करोति न
चेदं सर्वमवरुन्द्धे



१३.२.२.[१३]

सप्तदशैव पशून्मध्यमे यूप आलभेत  सप्तदशो वै प्रजापतिम्
प्रजापतिरश्वमेधोऽश्वमेधस्यैवास्यै षोडश षोडशेतरेषु षोडशकलं वा
इदं सर्वं तदिदं सर्व मवरुन्द्धे

१३.२.२.[१४]

तान्कथमाप्रीणीयादित्याहुः  समिद्धो अञ्जन्कृदरं मतीनामिति

बार्हदुक्थीभिराप्रीणीयाद्बृहदुक्थो ह वै वामदेव्योऽश्वो वा
सामुद्रिरश्वस्याप्रीर्ददर्श ता एतास्ताभिरेवैनमेतदाप्रीणीम इति वदन्तो न तथा
कुर्याज्जामदग्नीभिरेवाप्रीणीयात्प्रजापतिर्वै जमदग्निः सोऽश्वमेधः स्वयैवैनं
देवतया समर्धयति तस्माज्जामदग्नीभिरेवाप्रीणीयात्

१३.२.२.[१५]

तद्धैके  एतेषां पर्यङ्ग्याणां नाना याज्यापुरोऽनुवाक्याः कुर्वन्ति विन्दाम
एतेषामवित्त्येतरेषां न कुर्म इति न तथा कुर्यात्क्षत्रं वा अश्वो विडितरे पशवः
प्रतिप्रतिनीं ह ते प्रत्युद्यामिनीं क्षत्राय विशं कुर्वन्त्यथो आयुषा यजमानं
व्यर्धयन्ति ये तथा कुर्वन्ति तस्मात्प्राजापत्य एवाश्वो देवदेवत्या इतरे
क्षत्रायैव तद्विशं कृता?उकरामनुवर्त्मानं करोत्यथो आयुषैव यजमानं
समर्धयति



१३.२.२.[१६]

हिरण्मयोऽश्वस्य शासो भवति  लोहमयाः पर्यङ्ग्याणामायसा इतरेषां ज्योतिर्वै
हिरण्यं राष्ट्रमश्वमेधो ज्योतिरेव तद्राष्ट्रे दधात्यथो हिरण्यज्योतिषैव
यजमानः स्वर्गं लोकमेत्यथो अनूकाशमेव तं कुरुते स्वर्गस्य लोकस्य
समष्ट्यै

१३.२.२.[१७]

अथो क्षत्रं वा अश्वः  क्षत्रस्यैतद्रूपं यद्धिरण्यं क्षत्रमेव तत्क्षत्रेण समर्धयति

१३.२.२.[१८]

अथ यल्लोहमयाः पर्यङ्ग्याणाम्  यथा वै राज्ञो राजानो राजकृतः सूतग्रामण्य एवं वा एतेऽश्वस्य यत्पर्यङ्ग्या एवमु वा एतद्धिरण्यस्य यल्लोहं स्वेनैवैनांस्तद्रूपेण समर्धयति



१३.२.२.[१९]

अथ यदायसा इतरेषाम्  विड्वा इतरे पशवो विश एतद्रूपं यदयो विशमेव तद्विशा समर्धयति वैतस इटसून उत्तरतोऽश्वस्यावद्यन्त्यानुष्टुभो वा अश्व आनुष्टुभैषा दिक्स्वायामेवैनं तद्दिशि दधात्यथ यद्वैतस इटसूनेऽप्सुयोनिर्वा अश्वोऽप्सुजा वेतसः स्वयैवैनं योन्या समर्धयति

१३.२.३.[१]

देवा वा अश्वमेधे पवमानं  स्वर्गं लोकं न प्राजानंस्तमश्वः प्राजानाद्यदश्वमेधेऽश्वेन पवमानाय सर्पन्ति स्वर्गस्य लोकस्य प्रज्ञात्यै

पुचमन्वारभन्ते स्वर्गस्यैव लोकस्य समष्ट्यै न वै मनुष्यः स्वर्गं
लोकमञ्जसा वेदाश्वो वै स्वर्गं लोकमञ्जसा वेद

१३.२.३.[२]

यदुद्गातोद्गायेत्  यथाक्षेत्रज्ञोऽन्येन पथा नयेत्तादृक्तदथ
यदुद्गातारमवरुध्याश्वमुद्गीथाय वृणीते यथा क्षेत्रज्ञोऽञ्जसा
नयेदेवमेवैतद्यजमानमश्वः स्वर्गं लोकमञ्जसा नयति हिङ्करोति सामैव
तद्धिङ्करोत्युद्गीथ एव स वडवा उपरुन्धन्ति संशिञ्जते यथोपगातार
उपगायन्ति तादृक्तद्धिरण्यं दक्षिणा सुवर्णं शतमानं तस्योक्तं ब्राह्मणम्



१३.२.४.[१]

प्रजापतिरकामयत  उभौ लोकावभिजयेयं देवलोकं च मनुष्यलोकं चेति स
एतान्पशूनपश्यद्ग्राम्यांश्च तानालभत तैरिमौ लोकाववारुन्द्ध ग्राम्यैरेव
पशुभिरिमं लोकमवारुन्द्धारण्यैरमुमयं वै लोको मनुष्यलोकोऽथासौ
देवलोको यद्ग्राम्यान्पशूनालभत इममेव तैर्लोकं यजमानोऽवरुन्द्धे
यदारण्यानमुं तैः

१३.२.४.[२]

स यद्ग्राम्यैः संस्थापयेत्  समध्वानः क्रामेयुः समन्तिकं ग्रामयोर्ग्रामान्तौ स्यातां नर्क्षीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिन्यस्तस्करा अरण्येष्वाजायेरन्यदारण्यैर्व्यध्वानः क्रामेयुर्विदूरं ग्रामयोर्ग्रामान्तौ स्यातामृक्षीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिन्यस्तस्करा अरण्येष्वाजायेरन्

१३.२.४.[३]

तदाहुः  अपशुर्वा एष यदारण्यो नैतस्य होतव्यं यज्जुहुयात्क्षिप्रं यजमानमरण्यं मृतं हरेयुररण्यभागा ह्यारण्याः पशवो यन्न जुहुयाद्यज्ञवेशसं स्यादिति पर्यग्निकृतानेवोत्सृजन्ति तन्नैव हुतं नाहुतं न यजमानमरण्यं मृतं हरन्ति न यज्ञवेशसं भवति



१३.२.४.[४]

ग्राम्यैः संस्थापयति  वि पितापुत्राववस्यतः समध्वानः क्रामन्ति समन्तिकं ग्रामयोर्ग्रामान्तौ भवतो नर्क्षीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिन्यस्तस्करा अरण्येष्वाजायन्ते

१३.२.५.[१]

प्रजापतिरश्वमेधमसृजत  सोऽस्मात्सृष्टः पराङैत्स पङ्क्तिर्भूत्वा संवत्सरम्

प्राविशत्तेऽर्धमासा अभवंस्तं पञ्चदशिभिरनुप्रायुङ्क तमाप्नोत्तमाप्त्वा पञ्चदशिभिरवारुन्द्धार्धमासानां वा एषा प्रतिमा यत्पञ्चदशिनो यत्पञ्चदशिन आलभतेऽर्धमासानेव तैर्यजमानोऽवरुन्द्धे

१३.२.५.[२]

तदाहुः  अनवरुद्धो वा एतस्य संवत्सरो भवति योऽन्यत्र चातुर्मास्येभ्यः संवत्सरं तनुत इत्येष वै साक्षात्संवत्सरो यच्चातुर्मास्यानि यच्चातुर्मास्यान्पशूनालभते साक्षादेव तत्संवत्सरमवरुन्द्धे वि वा एष प्रजया पशुभिर्ऋध्यतेऽप स्वर्गं लोकं राध्नोति योऽन्यत्रैकादशिनेभ्यः संवत्सरं तनुत इत्यैष वै सम्प्रति स्वर्गो लोको यदेकादशिनी प्रजा वै पशव एकादशिनी यदैकादशिनान्पशूनालभते न स्वर्गं लोकमपराध्नोति न प्रजया पशुभिर्व्यृध्यते



१३.२.५.[३]

प्रजापतिर्विराजमसृजत  सास्मात्सृष्टा पराच्येत्साश्वं मेध्यं प्राविशत्तां दशिभिरनुप्रायुङ्क तामाप्नोत्तामाप्त्वा दशिभिरवारुन्द्ध यद्दशिन आलभते विराजमेव तैर्यजमानोऽवरुन्द्धे शतमालभते शतायुर्वै पुरुषः शतेन्द्रिय आयुरेवेन्द्रियं वीर्यमात्मन्धत्ते

१३.२.५.[४]

एकादश दशत आलभते  एकादशाक्षरा वै त्रिष्टुबिन्द्रियमु वै वीर्यं त्रिष्टुबिन्द्रियस्यैव वीर्यस्यावरुद्ध्या एकादश दशत आलभते दश वै पशोः प्राणा आत्मैकादशः प्राणैरेव पशून्त्समर्धयति वैश्वदेवा भवन्ति वैश्वदेवो वा अश्वोऽश्वस्यैव सर्वत्वाय बहुरूपा भवन्ति तस्माद्बहुरूपाः पशवो नानारूपा भवन्ति तस्मान्नानारूपाः पशवः

१३.२.६.[१]

युञ्जन्ति ब्रध्नमरुषं चरन्तमिति  असौ वा आदित्यो ब्रध्नोऽरुषोऽमुमेवास्मा आदित्यं युनक्ति स्वर्गस्य लोकस्य समष्ट्यै



१३.२.६.[२]

तदाहुः  पराङ्वा एतस्माद्यज्ञ एति यस्य पशुरुपाकृतोऽन्यत्र वेदेरेतीत्येतं स्तोतरनेन पथा पुनरश्वमावर्तयासि न इति वायुर्वै स्तोता तमेवास्मा एतत्परस्ताद्दधाति तथा नात्येति

१३.२.६.[३]

अप वा एतस्मात्  तेज इन्द्रियं पशवः श्रीः क्रामन्ति योऽश्वमेधेन यजते

१३.२.६.[४]

वसवस्त्वाञ्जन्तु  गायत्रेण चन्दसेति महिष्यभ्यनक्ति तेजो वा आज्यं तेजो गायत्री तेजसी एवास्मिन्त्समीची दधाति

१३.२.६.[५]



रुद्रास्त्वाञ्जन्तु  त्रैष्टुभेन चन्दसेति वावाता तेजो वा आज्यमिन्द्रियं त्रिष्टुप्तेजश्चैवास्मिन्निन्द्रियं च समीची दधाति

१३.२.६.[६]

आदित्यास्त्वाञ्जन्तु  जागतेन चन्दसेति परिवृक्ता तेजो वा आज्यं पशवो जगती तेजश्चैवास्मिन्पशूंश्च समीची दधाति

१३.२.६.[७]

पत्न्योऽभ्यञ्जन्ति  श्रियै वा एतद्रूपं यत्पत्न्यः श्रियमेवास्मिंस्तद्दधति
नास्मात्तेज इन्द्रियं पशवः श्रीरपक्रामन्ति

१३.२.६.[८]

यथा वै हविषोऽहुतस्य स्कन्देत्  एवमेतत्पशो स्कन्दति यस्य निक्तस्य लोमानि
शीयन्ते यत्काचानावयन्ति लोमान्येवास्य सम्भरन्ति हिरण्मया भवन्ति तस्योक्तं
ब्राह्मणमेकश तमेकशतं काचानावयन्ति शतायुर्वै पुरुष आत्मैकशत
आयुष्येवात्मन्प्रतितिष्ठति भूर्भुवः स्वरिति प्राजापत्याभिरावयन्ति प्राजापत्योऽश्वः
स्वयैवैनं देवतया समर्धयन्ति लाजी३ञ्छाची३ यव्ये गव्य
इत्यतिरिक्तमन्नमश्वायोपावहरति प्रजामेवान्नादीं कुरुत एतदन्नमत्त देवा
एतदन्नमद्धि प्रजापत इति प्रजामेवान्नाद्येन समर्धयति



१३.२.६.[९]

अप वा एतस्मात्  तेजो ब्रह्मवर्चसं क्रामति योऽश्वमेधेन यजते होता च ब्रह्मा
च ब्रह्मोद्यं वदत आग्नेयो वै होता बार्हस्पत्यो ब्रह्मा ब्रह्म
बृहस्पतिस्तेजश्चैवास्मिन्ब्रह्मवर्चसं च समीची धत्तो यूपमभितो वदतो
यजमानो वै यूपो यजमानमेवैतत्तेजसा च ब्रह्मवर्चसेन चोभयतः
परिधत्तः

१३.२.६.[१०]

कः स्विदेकाकी चरतीति  असौ वा आदित्य एकाकी चरत्येष ब्रह्मवर्चसम्
ब्रह्मवर्चसमेवास्मिंस्तद्धत्तः

१३.२.६.[११]

क उ स्विज्जायते पुनरिति  चन्द्रमा वै जायते पुनरायुरेवास्मिंस्तद्धत्तः

१३.२.६.[१२]



किं स्विद्धिमस्य भेषजमिति  अग्निर्वै हिमस्य भेषजं तेज एवास्मिंस्तद्धत्तः

१३.२.६.[१३]

किम्वावपनं महदिति  अयं वै लोकं आवपनं महदस्मिन्नेव लोके
प्रतितिष्ठति

१३.२.६.[१४]

का स्विदासीत्पूर्वचित्तिरिति  द्यौर्वै वृष्टिः पूर्वचित्तिर्दिवमेव वृष्टिमवरुन्द्धे

१३.२.६.[१५]

किं स्विदासीद्बृहद्वय इति  अश्वो वै बृहद्वय आयुरेवावरुन्द्धे

१३.२.६.[१६]

का स्विदासीत्पिलिप्पिलेति  श्रीर्वै पिलिप्पिला श्रियमेवावरुन्द्धे



१३.२.६.[१७]

का स्विदासीत्पिशंगिलेति  अहोरात्रे वै पिशंगिले अहोरात्रयोरेव प्रतितिष्ठति

१३.२.७.[१]

नियुक्तेषु पशुषु  प्रोक्षणीरध्वर्युरादत्तेऽश्वं प्रोक्षिष्यन्नन्वारब्धे
यजमान आध्वरिकं यजुरनुद्रुत्याश्वमेधिकं यजुः प्रतिपद्यते

१३.२.७.[२]

वायुष्ट्वा पचतैरवत्विति  वायुरेवैनं पचत्यसितग्रीवश्चागैरित्यग्निर्वा
असितग्रीवोऽग्निरेवैनं चागैः पचति

१३.२.७.[३]

न्यग्रोधश्चमसैरिति  यत्र वै देवा यज्ञेनायजन्त त एतांश्चमसान्न्यौब्जंस्ते
न्यञ्चो न्यग्रोधा रोहन्ति



१३.२.७.[४]

शल्मलिर्वृद्ध्येति  शल्मलौ वृद्धिं दधाति तस्माचल्मलिर्वनस्पतीनां वर्षिष्ठं
वर्धते

१३.२.७.[५]

एष स्य राथ्यो वृषेति  अश्वेनैव रथं सम्पादयति तस्मादश्वो नान्यद्रथाद्वहति

१३.२.७.[६]

षड्भिश्चतुर्भिरिदगन्निति  तस्मादश्वस्त्रिभिस्तिष्ठंस्तिष्ठत्यथ युक्तः सर्वैः पद्भिः सममायुते

१३.२.७.[७]

ब्रह्माकृष्णश्च नोऽवत्विति  चन्द्रमा वै ब्रह्माकृष्णश्चन्द्रमस एवैनम् परिददाति नमोऽग्नय इत्यग्नय एव नमस्करोति



१३.२.७.[८]

संशितो रश्मिना रथ इति रश्मिनैव रथं सम्पादयति तस्माद्रथः पर्युतो दर्शनीयतमो भवति

१३.२.७.[९]

संशितो रश्मिना हय इति  रश्मिनैवाश्वं सम्पादयति तस्मादश्वो रश्मिना प्रतिहृतो भूयिष्ठं रोचते

१३.२.७.[१०]

संशितो अप्स्वप्सुजा इति  अप्सुयोनिर्वा अश्वः स्वयैवैनं योन्या समर्धयति ब्रह्मा सोमपुरोगव इति सोमपुरोगवमेवैनं स्वर्गं लोकं गमयति

१३.२.७.[११]

स्वयं वाजिंस्तन्वं कल्पयस्वेति  स्वयं रूपं कुरुष्व यादृशमिचसीत्येवैनं तदाह स्वयं यजस्वेति स्वाराज्यमेवास्मिन्दधाति स्वयं जुषस्वेति स्वयं लोकं रोचयस्व यावन्तमिचसीत्येवैनं तदाह महिमा तेऽन्येन न संनश इत्यश्वमेव महिम्ना समर्धयति



१३.२.७.[१२]

न वा उ एतन्म्रियसे न रिष्यसीति  प्रश्वासयत्येवैनं तद्देवां इदेषि पथिभिः सुगेभिरिति देवयानानेवैनं पथो दर्शयति यत्रासते सुकृतो यत्र ते ययुरिति सुकृद्भिरेवैनं सलोकं करोति तत्र त्वा देवः सविता दधात्विति सवितैवैनं स्वर्गे लोके दधाति प्रजापतये त्वा जुष्टं प्रोक्षामीत्युपांश्वथोपगृह्णाति

१३.२.७.[१३]

अग्निः पशुरासीत्  तेनायजन्त स एतं लोकमजयद्यस्मिन्नग्निः स ते लोको भविष्यति तं जेष्यसि पिबैता अप इति यावानग्नेर्विजयो यावांलोको यावदैश्वर्यं तावांस्ते विजयस्तावांलोकस्तावदैश्वर्यं भविष्यतीत्येवैनं तदाह

१३.२.७.[१४]

वायुः पशुरासीत्  तेनायजन्त स एतं लोकमजयद्यस्मिन्वायुः स ते लोको भविष्यति तं जेष्यसि पिबैता अप इति यावान्वायोर्विजयो यावांलोको



१३.२.७.[१५]

सूर्यः पशुरासीत्  तेनायजन्त स एतं लोकमजयद्यस्मिन्त्सूर्यः स ते लोको भविष्यति तं जेष्यसि पिबैता अप इति यावान्त्सूर्यस्य विजयो यावांलोको यावदैश्वर्यं तावांस्ते विजयस्तावांलोकस्तावदैश्वर्यं भविष्यतीत्येवैनं तदाह तर्पयित्वाश्वं पुनः संस्कृत्य प्रोक्षणीरितरान्पशून्प्रोक्षति तस्यातः

१३.२.८.[१]

देवा वा उदञ्चः  स्वर्गं लोकं न प्राजानंस्तमश्वः प्राजानाद्यदश्वेनोदञ्चो यन्ति स्वर्गस्य लोकस्य प्रज्ञात्यै वासोऽधिवासं हिरण्यमित्यश्वायोपस्तृणन्ति यथा

नान्यस्मै पशवे तस्मिन्नेनमधि संज्ञपयन्त्यन्यैरेवैनं तत्पशुभिर्व्याकुर्वन्ति

१३.२.८.[२]

घ्नन्ति वा एतत्पशुम्  यदेनं संज्ञपयन्ति प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहेति संज्ञप्यमान आहुतीर्जुहोति प्राणानेवास्मिन्नेतद्दधाति तथो हास्यैतेन जीवतैव पशुनेष्टं भवति

१३.२.८.[३]



अम्बे अम्बिकेऽम्बालिके  न मा नयति कश्चनेति पत्नीरुदानयत्यह्वतैवैना एतदथो मेध्या एवैनाः करोति

१३.२.८.[४]

गणानां त्वा गणपतिं हवामह इति  पत्न्यः परियन्त्यपह्नुवत एवास्मा एतदतो न्येवास्मै ह्नुवतेऽथो धुवत एवैनं त्रिः परियन्ति त्रयो वा इमे लोका एभिरेवैनं लोकैर्धुवते त्रिः पुनः परियन्ति षड्सम्पद्यन्ते षड्वा ऋतव ऋतुभिरेवैनं धुवते

१३.२.८.[५]

अप वा एतेभ्यः प्राणाः क्रामन्ति  ये यज्ञे धुवनं तन्वते नव कृत्वः परियन्ति
नव वै प्राणाः प्राणानेवात्मन्दधते नैभ्यः प्राणा अपक्रामन्त्याहमजानि
गर्भधमा त्वमजासि गर्भधमिति प्रजा वै पशवो गर्भः प्रजामेव
पशूनात्मन्धत्ते ता उभौ चतुरः पदः सम्प्रसारयावेति मिथुनस्यावरुद्ध्यै
स्वर्गे लोके प्रोर्णुवाथामित्येष वै स्वर्गो लोको यत्र पशुं संज्ञपयन्ति
तस्मादेवमाह वृषा वाजी रेतोधा रेतो दधात्विति मिथुनस्यैवावरुद्ध्यै

१३.२.९.[१]



अप वा एतस्मात्  श्री राष्ट्रं क्रामति योऽश्वमेधेन यजते

१३.२.९.[२]

ऊर्ध्वामेनामुच्छ्रापयेति  श्रीर्वै राष्ट्रमश्वमेधः श्रियमेवास्मै
राष्ट्रमूर्ध्वमुच्छ्रयति

१३.२.९.[३]

गिरौ भारं हरन्निवेति  श्रीर्वै राष्ट्रस्य भारः श्रियमेवास्मै राष्ट्रं संनह्यत्यथो श्रियमेवास्मिन्राष्ट्रमधिनिदधाति

१३.२.९.[४]

अथास्यै मध्यमेधतामिति  श्रीर्वै राष्ट्रस्य मध्यं श्रियमेव राष्ट्रे मध्यतोऽन्नाद्यं दधाति

१३.२.९.[५]

शीते वाते पुनन्निवेति  क्षेमो वै राष्ट्रस्य शीतं क्षेममेवास्मै करोति



१३.२.९.[६]

यकासकौ शकुन्तिकेति  विड्वै शकुन्तिकाहलगिति वञ्चतीति विशो वै राष्ट्राय वञ्चन्त्याहन्ति गभे पसो निगल्गलीति धारकेति विड्वै गभो राष्ट्रं पसो राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्रो विशं घातुकः

१३.२.९.[७]

माता च ते पिता च त इति  इयं वै मातासौ पिताभ्यामेवैनं स्वर्गं लोकं गमयत्यग्रं वृक्षस्य रोहत इति श्रीर्वै राष्ट्रस्याग्रं श्रियमेवैनं राष्ट्रस्याग्रं गमयति प्रतिलामीति ते पिता गभे मुष्टिमतंसयदिति विड्वै गभो राष्ट्रं मुष्टी राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विषं घातुकः

१३.२.९.[८]

यद्धरिणो यवमत्तीति  विड्वै यवो राष्ट्रं हरिणो विशमेव राष्ट्रायाद्यां करोति तस्माद्राष्ट्रो विशमत्ति न पुष्टं पशु मन्यत इति तस्माद्राजा पशून्न पुष्यति शूद्रा यदर्यजारा न पोषाय न धनायतीति तस्माद्वैशीपुत्रं नाभिषिञ्चति



१३.२.९.[९]

अप वा एतेभ्यः प्राणाः क्रामन्ति  ये यज्ञेऽपूतां वाचं वदन्ति दधिक्राव्णो अकारिषमिति सुरभिमतीमृचमन्ततोऽन्वाहुर्वाचमेव पुनते नैभ्यः प्राणा अपक्रामन्ति

१३.२.१०.[१]

यदसिपथान्कल्पयन्ति  सेतुमेव तं संक्रमणं यजमानः कुरुते स्वर्गस्य लोकस्य समष्ट्यै

१३.२.१०.[२]
सूचीभिः कल्पयन्ति  विशो वै सूच्यो राष्ट्रमश्वमेधो विशं चैवास्मिन्राष्ट्रं च समीची दधति हिरण्मय्यो भवन्ति तस्योक्तं ब्राह्मणम्

१३.२.१०.[३]

त्रय्यः सूच्यो भवन्ति  लोहमय्यो रजता हरिण्यो दिशो वै लोहमय्योऽवान्तरदिशो रजता ऊर्ध्वा हरिण्यस्ताभिरेवैनं कल्पयन्ति तिरश्चीभिश्चोर्ध्वाभिश्च बहुरूपा भवन्ति तस्माद्बहुरूपा दिशो नानारूपा भवन्ति तस्मान्नानारूपा दिशः



१३.२.११.[१]

प्रजापतिरकामयत  महान्भूयान्त्स्यामिति स एतावश्वमेधे महिमानौ ग्रहावपश्यत्तावजुहोत्ततो वै स महान्भूयानभवत्स यः कामयेत महान्भूयान्त्स्यामिति स एतावश्वमेधे महिमानौ ग्रहौ जुहुयान्महान्हैव भूयान्भवति

१३.२.११.[२]

वपामभितो जुहोति  यजमानो वा अश्वमेधो राजा महिमा राज्येनैवैनमुभयतः परिगृह्णाति पुरस्तात्स्वाहाकृतयो वा अन्ये देवा उपरिष्टात्स्वाहाकृतयोऽन्ये तानेवैतत्प्रीणाति स्वाहा देवेभ्यो देवेभ्यः स्वाहेति राज्ञा वपां परिजयति ये चैवास्मिंलोके देवा य उ चामुष्मिंस्तानेवैतत्प्रीणाति त एनमुभये देवाः प्रीताः स्वर्गं लोकमभिवहन्ति

१३.३.१.[१]

प्रजापतेरक्ष्यश्वयत्  तत्परापतत्ततोऽश्वः समभवद्यदश्वयत्तदश्वस्याश्वत्वं तद्देवा अश्वमेधेनैव प्रत्यदधुरेष ह वै प्रजापतिं सर्वं करोति योऽश्वमेधेन यजते सर्व एव भवति सर्वस्य वा एषा प्रायश्चित्तिः सर्वस्य भेषजं सर्वं वा एतेन पाप्मानं देवा अतरन्नपि वा एतेन ब्रह्महत्यामतरंस्तरति सर्वं पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते



१३.३.१.[२]

उत्तरं वै तत्प्रजापतेरक्ष्यश्वयत्  तस्मादुत्तरतोऽश्वस्यावद्यन्ति दक्षिणतोऽन्येषां पशूनाम्

१३.३.१.[३]

वैतसः कटो भवति  अप्सुयोनिर्वा अश्वोऽप्सुजा वेतसः स्वयैवैनं योन्या समर्धयति

१३.३.१.[४]

चतुष्टोम स्तोमो भवति  सरड्वा अश्वस्य सक्थ्याबृहत्तद्देवाश्चतुष्टोमेनैव स्तोमेन प्रत्यदधुर्यच्चतुष्टोम स्तोमो भवत्यश्वस्यैव सर्वत्वाय सर्वस्तोमोऽतिरात्र उत्तममहर्भवति सर्वं वै सर्वस्तोमोऽतिरात्रः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै



१३.३.२.[१]

परमेण वा एष स्तोमेन जित्वा  चतुष्टोमेन कृतेनायानामुत्तरेऽहन्नेकविंशे प्रतिष्ठायां प्रतितिष्ठत्येकविंशात्प्रतिष्ठाया उत्तरमहर्ऋतूनन्वारोहत्यृतवो वै पृष्ठान्यृतवः संवत्सर ऋतुष्वेव संवत्सरे प्रतितिष्ठति

१३.३.२.[२]

शक्कर्यः पृष्ठं भवन्ति  अन्यदन्यच्चन्दोऽन्येऽन्ये वा अत्र पशव आलभ्यन्त उतेव ग्राम्या उतेवारण्या यचक्कर्यः पृष्ठं भवन्त्यश्वस्यैव सर्वत्वायान्ये

पशव आलभ्यन्तेऽन्येऽन्ये हि स्तोमाः क्रियन्ते

१३.३.२.[३]

तदाहुः  नैते सर्वे पशवो यदजावयश्चारण्याश्चैते वै सर्वे पशवो यद्गव्या इति गव्या उत्तमेऽहन्नालभत एते वै सर्वे पशवो यद्गव्याः सर्वानेव पशूनालभते वैश्वदेवा भवन्ति वैश्वदेवो वा अश्वोऽश्वस्यैव सर्वत्वाय बहुरूपा भवन्ति तस्माद्बहुरूपाः पशवो नानारूपा भवन्ति तस्मान्नानारूपाः पशवः



१३.३.३.[१]

यत्तिस्रोऽनुष्टुभो भवन्ति  तस्मादश्वस्त्रिभिस्तिष्ठंस्तिष्ठति यच्चतस्रो गायत्र्यस्तस्मादश्वः सर्वैः पद्भिः प्रतिदधत्पलायते परमं वा एतच्छन्दो यदनुष्टुप्परमोऽश्वः पशूनां परमश्चतुष्टोम स्तोमानां परमेणैवैनम् परमतां गमयति

१३.३.३.[२]

शक्वर्यः पृष्ठं भवन्ति  अन्यदन्यच्छन्दोऽन्येऽन्ये हि स्तोमाः क्रियन्ते यचक्वर्यः पृष्ठं भवन्त्यश्वस्यैव सर्वत्वाय

१३.३.३.[३]

एकविंशं मध्यममहर्भवति  असौ वा आदित्य एकविंशः सोऽश्वमेधः
स्वेनैवैनं स्तोमेन स्वायां देवतायां प्रतिष्ठापयति

१३.३.३.[४]

वामदेव्यं मैत्रावरुणसाम भवति  प्रजापतिर्वै वामदेव्यं प्राजापत्योऽश्वः
स्वयैवैनं देवतया समर्धयति



१३.३.३.[५]

पार्थुरश्मं ब्रह्मसाम भवति  रश्मिना वा अश्वो यत ईश्वरो वा अश्वोऽयतोऽधृतो
प्रतिष्ठितः परां परावतं गन्तोर्यत्पार्थुरश्मं ब्रह्मसाम
भवत्यश्वस्यैव धृत्यै

१३.३.३.[६]

संकृत्यचावाकसाम भवति  उत्सन्नयज्ञ इव वा एष यदश्वमेधः किं वा ह्येतस्य
क्रियते किं वा न यत्संकृत्यचावाकसाम भवत्यश्वस्यैव सर्वत्वाय

सर्वस्तोमोऽतिरात्र उत्तममहर्भवति सर्वं वै सर्वस्तोमोऽतिरात्रः
सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै

१३.३.३.[७]

एकविंशोऽग्निर्भवति  एकविंश स्तोम एकविंशतिर्यूपा यथा वा ऋषभा वा वृषाणो वा
संस्फुरेरन्नेवमेते स्तोमाः समृचन्ते
यदेकविंशास्तान्यत्समर्पयेदार्तिमार्च्छेद्यजमानो हन्येतास्य यज्ञः



१३.३.३.[८]

द्वादश एवाग्निः स्यात्  एकादश यूपा यद्द्वादशोऽग्निर्भवति द्वादश मासाः
संवत्सरः संवत्सरमेव यज्ञमाप्नोति यदेकादश यूपा विराड्वा एषा सम्मीयते
यदेकादशिनी तस्यै य एकादश स्तन एवास्यै स दुह एवैनां तेन

१३.३.३.[९]

तदाहुः  यद्द्वादशोऽग्निः स्यादेकादश यूपा यथा स्थूरिणा यायात्तादृक्तदित्येकविंश
एवाग्निर्भवत्येकविंश स्तोम एकविंशतिर्यूपास्तद्यथा प्रष्टिभिर्यायात्तादृक्तत्

१३.३.३.[१०]

शिरो वा एतद्यज्ञस्य यदेकविंशः  यो वा अश्वमेधे त्रीणि शीर्षाणि वेद शिरो ह राज्ञां भवत्येकविंशोऽग्निर्भवत्येकविंश स्तोम एकविंशतिर्यूपा एतानि वा अश्वमेधे त्रीणि शीर्षाणि तानि य एवं वेद शिरो ह राज्ञां भवति यो वा अश्वमेधे तिस्रः ककुदो वेद ककुद्ध राज्ञां भवत्येकविंशोऽग्निर्भवत्येकविंश स्तोम एकविंशतिर्यूपा एता अश्वमेधे तिस्रः ककुदस्ता य एवं वेद ककुद्ध राज्ञाम् भवति

१३.३.४.[१]



सर्वाभ्यो वै देवताभ्योऽश्व आलभ्यते  यत्प्राजापत्यं कुर्याद्या देवता अपिभागास्ता भागधेयेन व्यर्धयेचादं दद्भिरवकां दन्तमूलैरित्याज्यमवदाना कृत्वा प्रत्याख्यायं देवताभ्य आहुतीर्जुहोति या एव देवता अपिभागास्ता भागधेयेन समर्धयत्यरण्येऽनूच्यान्हुत्वा द्यावापृथिव्यामुत्तमामाहुतिं जुहोति द्यावापृथिव्योर्वै सर्वा देवताः प्रतिष्ठितास्ता एवैतत्प्रीणाति देवासुराः संयत्ता आसन्

१३.३.४.[२]

तेऽब्रुवन्  अग्नयः स्विष्टकृतोऽश्वस्य वयमुद्धारमुद्धरामहै तेनासुरानभिभविष्याम इति ते लोहितमुदहरन्त भ्रातृव्याभिभूत्यै यत्स्विष्टकृद्भ्यो लोहितं जुहोति भ्रातृव्याभिभूत्यै भवत्यात्मना परास्य

द्विषन्भ्रातृव्यो भवति य एवं वेद

१३.३.४.[३]

गोमृगकण्ठेन प्रथमामाहुतिं जुहोति  पशवो वै गोमृगा रुद्रः
स्विष्टकृत्पशूनेव रुद्रादन्तर्दधाति तस्माद्यत्रैषाश्वमेध आहुतिर्हूयते न तत्र
रुद्रः पशूनभिमन्यते

१३.३.४.[४]



अश्वशफेन द्वितीयामाहुतिं जुहोति  पशवो वा एकशफा रुद्रः स्विष्टकृत्पशू>

१३.३.४.[५]

अयस्मयेन चरुणा तृतीयामाहुतिं जुहोति  आयस्यो वै प्रजा रुद्रः स्विष्टकृत्प्रजा एव
रुद्रादन्तर्दधाति तस्माद्यत्रैषाश्वमेध आहुतिर्हूयते न तत्र रुद्रः प्रजा
अभिमन्यते

१३.३.५.[१]

सर्वेषु वै लोकेषु  मृत्यवोऽन्वायत्तास्तेभ्यो यदाहुतीर्न जुहुयाल्लोकेलोक एनम्
मृत्युर्विन्देद्यन्मृत्युभ्य आहुतीर्जुहोति लोकेलोक एव मृत्युमपजयति

१३.३.५.[२]

तदाहुः  यदमुष्मै स्वाहामुष्मै स्वाहेति जुह्वत्संचक्षीत बहुम्
मृत्युममित्रं कुर्वीत मृत्यव आत्मानमपिदध्यादिति मृत्यवे स्वाहेत्येकस्मा
एवैकामाहुतिं जुहोत्येको ह वा अमुष्मिंलोके मृत्युरशनायैव
तमेवामुष्मिंलोकेऽपजयति



१३.३.५.[३]

ब्रह्महत्यायै स्वाहेति द्वितीयामाहुतिं जुहोति  अमृत्युर्ह वा अन्यो ब्रह्महत्यायै
मृत्युरेष ह वै साक्षान्मृत्युर्यद्ब्रह्महत्या साक्षादेव मृत्युमपजयति

१३.३.५.[४]

एतां ह वै मुण्डिभ औदन्यः  ब्रह्महत्यायै प्रायश्चित्तिं विदां चकार
यद्ब्रह्मैहत्याया आहुतिं जुहोति मृत्युमेवाहुत्या तर्पयित्वा परिपाणं कृत्वा
ब्रह्मघ्ने भेषजं करोति तस्माद्यस्यैषाश्वमेध आहुतिर्हूयतेऽपि योऽस्यापरीषु

प्रजायां ब्राह्मैणं हन्ति तस्मै भेषजं करोति

१३.३.६.[१]

अश्वस्य वा आलब्धस्य  मेध उदक्रामत्तदश्वस्तोमीयमभवद्यदश्वस्तोमीयं जुहोत्यश्वमेव मेधसा समर्धयति

१३.३.६.[२]



आज्येन जुहोति  मेधो वा आज्यं मेधोऽश्वस्तोमीयं मेधसैवास्मिंस्तन्मेधो दधात्याज्येन जुहोत्येतद्वै देवानां प्रियं धाम यदाज्यं प्रियेणैवैनान्धाम्ना समर्धयति

१३.३.६.[३]

अश्वस्तोमीयं हुत्वा द्विपदा जुहोति  अश्वो वा अश्वस्तोमीयं पुरुषो द्विपदा द्विपाद्वै पुरुषो द्विप्रतिष्ठस्तदेनं प्रतिष्ठया समर्धयति

१३.३.६.[४]

तदाहुः  अश्वस्तोमीयं पूर्वं होतव्यां३ द्विपदा३ इति पशवो वा अश्वस्तोमीयम्
पुरुषो द्विपदा यदश्वस्तोमीयं हुत्वा द्विपदा जुहोति तस्मात्पुरुष
उपरिष्टात्पशूनधितिष्ठति

१३.३.६.[५]

षोडशाश्वस्तोमीया जुहोति  षोडशकला वै पशवः सा पशूनां मात्रा पशूनेन
मात्रया समर्धयति यत्कनीयसीर्वा भूयसीर्वा जुहुयात्पशून्मात्रया
व्यर्धयेत्षोडश जुहोति षोडशकला वै पशवः सा पशूनां मात्रा पशूनेव
मात्रया समर्धयति नान्यामुत्तमामाहुतिं जुहोति यदन्यामुत्तमामाहुतिं
जुहुयात्प्रतिष्ठायै च्यवेत द्विपदा उत्तमा जुहोति प्रतिष्ठा वै द्विपदाः प्रत्येव
तिष्ठति जुम्बकाय स्वाहेत्यवभृथ उत्तमामाहुतिं जुहोति वरुणो वै जुम्बकः
साक्षादेव वरुणमवयजते शुक्लस्य खलतेर्विक्लिधस्य पिङ्गाक्षस्य मूर्धनि
जुहोत्येतद्वै वरुणस्य रूपं रूपेणैव वरुणमवयजते



१३.३.६.[६]

द्वादश ब्रह्मौदनानुत्थाय निर्वपति  द्वादशभिर्वैष्टिभिर्यजते
तदाहुर्यज्ञस्य वा एतद्रूपं यदिष्टयो यदिष्टिभिर्यजेतोपनामुक एनं यज्ञः
स्यात्पापीयांस्तु स्याद्यातयामानि वा एतदीजानस्य चन्दांसि भवन्ति तानि किमेतावदाशु
प्रयुञ्जीत सर्वा वै संस्थिते यज्ञे वागाप्यते सात्राप्ता यातयाम्नी भवति क्रूरीकृतेव
हि भवत्यरुष्कृता वाग्वै यज्ञस्तस्मान्न प्रयुञ्जीतेति

१३.३.६.[७]

द्वादशैव ब्रह्मौदनानुत्थाय निर्वपेत्  प्रजापतिर्वा ओदनः प्रजापतिः संवत्सरः प्रजापतिर्यज्ञः संवत्सरमेव यज्ञमाप्नोत्युपनामुक एनं यज्ञो भवति न पापीयान्भवति

१३.३.७.[१]



एष वै प्रभूर्नाम यज्ञः  यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रभूतम् भवति

१३.३.७.[२]

एष वै विभूर्नाम यज्ञः  यत्रैतेन यज्ञेन यजन्ते सर्वमेव विभूतं भवति

१३.३.७.[३]

एष वै व्यष्टिर्नाम यज्ञः  यत्रैतेन यज्ञेन यजन्ते सर्वमेव व्यष्टं भवति

१३.३.७.[४]

एष वै विधृतिर्नाम यज्ञः  यत्रैतेन यजन्ते सर्वमेव विधृतं भवति

१३.३.७.[५]
एष वै व्यावृत्तिर्नाम यज्ञः  यत्रैतेन यज्ञेन यजन्ते सर्वमेव व्यावृत्तम्
भवति



१३.३.७.[६]

एष वा ऊर्जस्वान्नाम यज्ञः  यत्रैतेन यज्ञेन यजन्ते सर्वमेवोर्जस्वद्भवति

१३.३.७.[७]

एष वै पयस्वान्नाम यज्ञः  यत्रैतेन यज्ञेन यजन्ते सर्वमेव पयस्वद्भवति

१३.३.७.[८]

एष वै ब्रह्मवर्चसी नाम यज्ञः  यत्रैतेन यज्ञेन यजन्त आ ब्राह्मणो ब्रह्मवर्चसी जायते

१३.३.७.[९]

एष वा अतिव्याधी नाम यज्ञः  यत्रैतेन यज्ञेन यजन्त आ राजन्योऽतिव्याधी जायते



१३.३.७.[१०]

एष वै दीर्घो नाम यज्ञः  यत्रैतेन यज्ञेन यजन्त आ दीर्घारण्यं जायते

१३.३.७.[११]

एष वै क्लृप्तिर्नाम यज्ञः  यत्रैतेन यज्ञेन यजन्ते सर्वमेव क्लृप्तं भवति

१३.३.७.[१२]

एष वै प्रतिष्ठा नाम यज्ञः  यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रतिष्ठितम्
भवति

१३.३.८.[१]

अथातः प्रायश्चित्तीनाम्  यद्यश्वो वडवां स्कन्देद्वायव्यम्
पयोऽनुनिर्वपेद्वायुर्वै रेतसां विकर्ता प्राणो वै वायुः प्राणो हि रेतसां विकर्ता
रेतसैवास्मिंस्तद्रेतो दधाति

१३.३.८.[२]



अथ यदि स्रामो विन्देत्  पौष्णं चरुमनुनिर्वपेत्पूषा वै पशूनामीष्टे स
यस्यैव पशवो यः पशूनामीष्टे तमेवैतत्प्रीणात्यगदो हैव भवति

१३.३.८.[३]

अथ यद्यक्षतामयो विन्देत्  वैश्वानरं द्वादशकपालं भूमिकपालम्
पुरोडाशमनुनिर्वपेदियं वै वैश्वानर इमामेवैतत्प्रीणात्यगदो हैव भवति

१३.३.८.[४]

अथ यद्यक्ष्यामयो विन्देत्  सौर्यं चरुमनुनिर्वपेत्सूर्यो वै प्रजानां
चक्षुर्यदा ह्येवैष उदेत्यथेदं सर्वं चरति चक्षुषैवास्मिंस्तच्चक्षुर्दधाति
स यच्चरुर्भवति चक्षुषा ह्ययमात्मा चरति

१३.३.८.[५]

अथ यद्युदके म्रियेत  वारुणं यवमयं चरुमनुनिर्वपेद्वरुणो वा एतं
गृह्णाति योऽप्सु म्रियते सा यैवैनं देवता गृह्णाति तामेवैतत्प्रीणाति सास्मै
प्रीतान्यमालम्भायानुमन्यते तयानुमतमालभते स यद्यवमयो भवति
वरुण्या हि यवाः



१३.३.८.[६]

अथ यदि नश्येत्  त्रिहविषमिष्टिमनुनिर्वपेद्द्यावापृथिव्यमेककपालम्
पुरोडाशं वायव्यं पयः सौर्यं चरुं यद्वै किं च नश्यत्यन्तरैव
तद्द्यावापृथिवी नश्यति तद्वायुरुपवात्यादित्योऽभितपति नैताभ्यो देवताभ्य ऋते किं
चन नश्यति सैषा पृथगेव नष्टवेदनी स यद्यस्याप्यन्यन्नश्येदेतयैव
यजेतानु हैवैनद्विन्दत्यथ यद्यमित्रा अश्वं विन्देरन्यदि वा म्रियेत यदि
वाप्स्वन्यमानीय प्रोक्षेयुः सैव तत्र प्रायश्चित्तिः

१३.४.१.[१]

प्रजापतिरकामयत  सर्वान्कामानाप्नुयां सर्वा व्यष्टीर्व्यश्नुवीयेति स एतमश्वमेधं त्रिरात्रं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत तेनेष्ट्वा सर्वान्कामानाप्नोत्सर्वा व्यष्टीर्व्याश्नुत सर्वान्ह वै कामानाप्नोति सर्वा व्यष्टीर्व्यश्नुते योऽश्वमेधेन यजते

१३.४.१.[२]

तदाहुः  कस्मिन्नृतावभ्यारम्भ इति ग्रीष्मेऽभ्यारभेतेत्यु हैक आहुर्ग्रीष्मो वै क्षत्रियस्यर्तुः क्षत्रिययज्ञ उ वा एष यदश्वमेध इति



१३.४.१.[३]

तद्वै वसन्त एवाभ्यारभेत  वसन्तो वै ब्रह्मणस्यर्तुर्य उ वै कश्च यजते ब्राह्मणीभूयेवैव यजते तस्माद्वसन्त एवाभ्यारभेत

१३.४.१.[४]

सा यासौ फाल्गुनी पौर्णमासी भवति  तस्यै पुरस्तात्षडहे वा सप्ताहे वर्त्विज उपसमायन्त्यध्वर्युश्च होता च ब्रह्मा चोद्गाता चैतान्वा अन्वन्य ऋत्विजः

१३.४.१.[५]

तेभ्योऽध्वर्युश्चातुष्प्राश्यं ब्रह्मौदनं निर्वपति  तस्योक्तं ब्राह्मणं
चतुरः पात्रांश्चतुरोऽञ्जलींश्चतुरः प्रसृतान्द्वादशविधं द्वादश मासाः
संवत्सरः सर्वं संवत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै

१३.४.१.[६]



तमेते चत्वार ऋत्विजः प्राश्नन्ति  तेषामुक्तं ब्राह्मणं तेभ्यश्चत्वारि सहस्राणि
ददाति सर्वं वै सहस्रं सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै
चत्वारि च सुवर्णानि शतमानानि हिरण्यानि तस्यो एवोक्तम्

१३.४.१.[७]

अथास्मा अध्वर्युर्निष्कं प्रतिमुञ्चन्वाचयति  तेजोऽसि शुक्रममृतमिति तेजो वै
शुक्रममृतं हिरण्यं तेज एवास्मिञ्छुक्रममृतं दधात्यायुष्पा आयुर्मे
पाहीत्यायुरेवास्मिन्दधात्यथैनमाह वाचं यचेति वाग्वै यज्ञो
यज्ञस्यैवाभ्यारम्भाय

१३.४.१.[८]

चतस्रो जाया उपक्लृप्ता भवन्ति  महिषी वावाता परिवृक्ता पालागली सर्वा निष्किन्योऽलङ्कृता मिथुनस्यैव सर्वत्वाय ताभिः सहाग्न्यगारं प्रपद्यते पूर्वया द्वारा यजमानो दक्षिणया पत्न्यः

१३.४.१.[९]

सायमाहुत्यां हुतायाम्  जघनेन गार्हपत्यमुदङ्वावातया सह संविशति तदेवापीतराः संविशन्ति सोऽन्तरोरू असंवर्तमानः शेतेऽनेन तपसा स्वस्ति संवत्सरस्योदृचं समश्नवा इति



१३.४.१.[१०]

प्रातराहुत्यां हुतायां  अध्वर्युः पूर्णाहुतिं जुहोति सर्वं वै पूर्णं सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै तस्यां वरेण वाचं विसृजते वरं ददामि ब्रह्मण इति सर्वं वै वरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै

१३.४.१.[११]

अथ योऽस्य निष्कः प्रतिमुक्तो भवति  तमध्वर्यवे ददात्यध्वर्यवे ददममृतमायुरात्मन्धत्तेऽमृतं ह्यायुर्हिरण्यम्

१३.४.१.[१२]

अथाग्नेयीमिष्टिं निर्वपति  पथश्च कामाय यज्ञमुखस्य चाचम्बट्कारायाथो अग्निमुखा उ वै सर्वा देवताः सर्वे कामा अश्वमेधे मुखतः सर्वान्देवान्प्रीत्वा सर्वान्कामानाप्नवानीति



१३.४.१.[१३]

तस्यै पञ्चदश सामिधेन्यो भवन्ति  पञ्चदशो वै वज्रो वीर्यं वज्रो वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते वार्त्रघ्नावाज्यभागौ पाप्मा वै वृत्रः पाप्मनोऽपहत्या अग्निर्मूर्धा दिवः ककुद्भुवो यज्ञस्य रजसश्च नेतेत्युपांशु हविषो याज्यानुवाक्ये मूर्धन्वत्यन्या भवति सद्वत्यन्यैष वै मूर्धा य एष तपत्येतस्यैवावरुद्ध्या अथ यत्सद्वती सदेवावरुन्द्धे  विराजौ संयाज्ये सर्वदेवत्यं वा एतच्चन्दो यद्विराड्वर्वे कामा अश्वमेधे सर्वान्देवान्प्रीत्वा सर्वान्कामानाप्नवानीति हिरण्यं दक्षिणा सुवर्णं शतमानं तस्योक्तं ब्राह्मणम्

१३.४.१.[१४]

अथ पौष्णीं निर्वपति  पूषा वै पथीनामधिपतिरश्वायैवैतत्स्वस्त्ययनं करोत्यथो इयं वै पूषेमामेवास्मा एतद्गोप्त्रीं करोति तस्य हि नार्तिरस्ति न ह्वला यमियमध्वन्गोपायतीमामेवास्मा एतद्गोप्त्रीं करोति

१३.४.१.[१५]

तस्यै सप्तदश सामिधेन्यो भवन्ति  सप्तदशो वै प्रजापतिः प्रजापतिरश्वमेधोऽश्वमेधस्यैवाप्त्यै वृधन्वन्तावाज्यभागौ यजमानस्यैव वृद्ध्यै पूषंस्तव व्रते वयं पथस्पथः परिपतिं वचस्येत्युपांशु हविषो याज्यानुवाक्ये व्रतवत्यन्या भवति पथन्वत्यन्या वीर्यं वै व्रतं वीर्यस्याप्त्यै वीर्यस्यावरुद्ध्या अथ यत्पथन्वत्यश्वायैवैतत्स्वस्त्ययनं करोत्यनुष्टुभौ संयाज्ये वाग्वा अनुष्टुब्वाग्वै प्रजापतिः प्रजापतिरश्वमेधोऽश्वमेधस्यैवाप्त्यै वासःशतं दक्षिणा रूपं वा एतत्पुरुषस्य यद्वासस्तस्माद्यमेव कं च सुवाससमाहुः को न्वयमिति रूपसमृद्धो हि भवति रूपेणैवैनं समर्धयति शतं भवति शतायुर्वै पुरुषः शतेन्द्रिय आयुरेवेन्द्रियं वीर्यमात्मन्धत्ते



१३.४.२.[१]

एतस्यां तायमानायाम्  अश्वं निक्त्वोदानयन्ति यस्मिन्त्सर्वाणि रूपाणि भवन्ति यो वा जवसमृद्धः सहस्राहँ पूर्व्यं यो दक्षिणायां धुर्यप्रतिधुरः

१३.४.२.[२]

तद्यत्सर्वरूपो भवति  सर्वं वै रूपं सर्वमश्वमेधः सर्वस्याप्त्यै
सर्वस्यावरुद्ध्या अथ यज्जवसमृद्धो वीर्यं वै जवो वीर्यस्याप्त्यै
वीर्यस्यावरुद्ध्या अथ यत्सहस्रार्हः सर्वं वै सहस्रं सर्वमश्वमेधः
सर्वस्याप्त्यै सर्वस्यावरुद्ध्या अथ यत्पूर्व्य एष वा अपरिमितं
वीर्यमभिवर्धते यत्पूर्व्योऽपरिमितस्यैव वीर्यस्यावरुद्ध्या अथ यद्दक्षिणायां
धुर्यपर्तिधुर एष वा एष य एष तपति न वा एतं कश्चन
प्रतिप्रतिरेतस्यैवावरुद्ध्यै



१३.४.२.[३]

तदु होवाच भाल्लबेयो  द्विरूप एवैषोऽश्वः स्यात्कृष्णसारंगः प्रजापतेर्वा
एषोऽक्ष्णः समभवद्द्विरूपं वा इदं चक्षुः शुक्लं चैव कृष्णं च तदेनं
स्वेन रूपेण समर्धयतीति

१३.४.२.[४]

अथ होवाच सात्ययज्ञिः  त्रिरूप एवैषोऽश्वः स्यात्तस्य कृष्णः पूर्वार्धः
शुक्लोऽपरार्धः कृत्तिकाञ्जिः पुरस्तात्तद्यत्कृष्णः पूर्वार्धो भवति यदेवेदं
कृष्णमक्ष्णस्तदस्य तदथ यच्चुक्लोऽपरार्धो यदेवेदं शुक्लमक्ष्णस्तदस्य

तदथ यत्कृत्तिकाञ्जिः पुरस्तात्सा कनीनका स एव रूपसमृद्धोऽतो यतमोऽस्योपकल्पेत बहुरूपो वा द्विरूपो वा त्रिरूपो वा कृत्तिकाञ्जिस्तमालभेत जवेन त्वेव समृद्धः स्यात्

१३.४.२.[५]

तस्यैते पुरस्ताद्रक्षितार उपक्लृप्ता भवन्ति  राजपुत्राः कवचिनः शतं राजन्या निषङ्गिणः शतं सूतग्रामण्यां पुत्रा इषुपर्षिणः शतं क्षात्त्रसंग्रहीतृणाम् पुत्रा दण्डिनः शतमश्वशतं निरष्टं निरमणं यस्मिन्नेनमपिसृज्य रक्षन्ति



१३.४.२.[६]
अथ सावित्रीमिष्टिं निर्वपति  सवित्रे प्रसवित्रे द्वादशकपालं पुरोडाशं सविता वै प्रसविता सविता म इमं यज्ञं प्रसुवादिति

१३.४.२.[७]

तस्यै पञ्चदश सामिधेन्यो भवन्ति  वार्त्रघ्नावाज्यभागौ य इमा विश्वा जातान्या देवो यातु सविता सुरत्न इत्युपांशु हविषो याज्यानुवाक्ये विराजौ संयाज्ये हिरण्यं दक्षिणा सुवर्णं शतमानं तस्योक्तं ब्राह्मणम्

१३.४.२.[८]

तस्यै प्रयाजेषु तायमानेषु  ब्राह्मणो वीणागाथी दक्षिणत
उत्तरमन्द्रामुदाघ्नंस्तिस्रः स्वयंसम्भृता गाथा गायतीत्ययजतेत्यददादिति
तस्योक्तं ब्राह्मणम्

१३.४.२.[९]

अथ द्वितीयां निर्वपति  सवित्र आसवित्रे द्वादशकपालं पुरोडाशं सविता वा आसविता
सविता म इमं यज्ञमासुवादिति



१३.४.२.[१०]

तस्यै सप्तदश सामिधेन्यो भवन्ति  सद्वन्तावाज्यभागौ सदेवावरुन्द्धे विश्वानि
देव सवितः स घा नो देवः सविता सहावेत्युपांशु हविषो याज्यानुवाक्ये
अनुष्टुभौ संयाज्ये रजतं हिरण्यं दक्षिणा नानारूपताया अथो
उत्क्रमायानपक्रमाय शतमानं भवति शतायुर्वै पुरुषः शतेन्द्रिय
आयुरेवेन्द्रियं वीर्यमात्मन्धत्ते

१३.४.२.[११]

तस्यै प्रयाजेषु तायमानेषु  ब्राह्मणो वीणा>

१३.४.२.[१२]

अथ तृतीयां निर्वपति  सवित्रे सत्यप्रसवाय द्वादशकपालं पुरोडाशमेष ह वै सत्यः प्रसवो यः सवितुः सत्येन मे प्रसवेनेमं यज्ञं प्रसुवादिति

१३.४.२.[१३]



तस्यै सप्तदशैव सामिधेन्यो भवन्ति  रयिमन्तावाज्यभागौ वीर्यं वै रयिवीर्यस्यास्यै वीर्यस्यावरुद्ध्या आ विश्वदेवं सत्पतिं न प्रमिये सवितुर्दैव्यस्य तदित्युपांशु हविषो याज्यानुवाक्ये नित्ये संयाज्ये नेद्यज्ञपथादयानीति कॢप्त एव यज्ञेऽन्ततः प्रतितिष्ठति त्रिष्टुभौ भवत इन्द्रे वै वीर्यं त्रिष्टुबिन्द्रियस्यैव वीर्यस्यावरुद्ध्यै हिरण्यं दक्षिणा सुवर्णं शतमानं तस्योक्तं ब्राह्मणम्

१३.४.२.[१४]

तस्यै प्रयाजेषु तायमानेषु  ब्राह्मणो वीणा>

१३.४.२.[१५]

एतस्यां संस्थितायाम्  उपोत्थायाध्वर्युश्च यजमानश्चाश्वस्य दक्षिणे कर्ण आजपतो
विभूर्मात्रा प्रभूः पित्रेति तस्योक्तं ब्राह्मणमथैनमुदञ्चं प्राञ्चम्
प्रसृजत एषा होभयेषां देवमनुष्याणां दिग्यदुदीची प्राची स्वायामेवैनं
तद्दिषि धत्तो न वै स्व आयतने प्रतिष्ठितो रिष्यत्यरिष्ट्यै

१३.४.२.[१६]



स आह देवा आशापालाः  एतं देवेभ्योऽश्वं मेधाय प्रोक्षितं रक्षतेत्युक्ता
मानुषा आशापाला अथैते दैवा आप्याः साध्या अन्वाध्या मरुतस्तमेत उभये
देवमनुष्याः संविदाना अप्रत्यावर्तयन्तः संवत्सरं रक्षन्ति तद्यं न
प्रत्यावर्तयन्त्येष वा एष तपति क उ ह्येतमर्हति प्रत्या !वयितुं यद्येनम्
प्रत्यावर्तयेयुः परागेवेदं सर्वं स्यात्तस्मादप्रत्यावर्तयन्तो रक्षन्ति

१३.४.२.[१७]

स आहाशापालाः  ये वा एतस्योदृचं गमिष्यन्ति राष्ट्रं ते भविष्यन्ति राजानो
भविष्यन्त्यभिषेचनीया अथ य एतस्योदृचं न गमिष्यन्त्यराष्ट्रं ते
भविष्यन्त्यराजानो भविष्यन्ति राजन्या विशोऽनभिषेचनीयास्तस्मान्मा प्रमदत
स्नात्वाच्चैवैनमुदकान्निरुन्धीध्वं वडवाभ्यश्च ते

यद्यद्ब्राह्मणजातमुपनिगचेत तत्तत्पृचेत ब्राह्मणाः कियद्यूयमश्वमेधस्य वित्थेति ते ये न विद्युर्जिनीयात तान्त्सर्वं वा अश्वमेधः सर्वस्यैष न वेद यो ब्राह्मणः सन्नश्वमेधस्य न वेद सोऽब्राह्मणो ज्येय एव स पानं करवाथ खादं निवपाथाथ यत्किं च जनपदे कृतान्नं सर्वं वस्तत्सुतं तेषां रथकारकुल एव वो वसतिस्तद्ध्यश्वस्यायतनमिति

१३.४.३.[१]

प्रमुच्याश्वं दक्षिणेन वेदिं  हिरण्मयं कशिपूपस्तृणाति तस्मिन्होतोपविशति दक्षिणेन होतारं हिरण्मये कूर्चे यजमानो दक्षिणतो ब्रह्मा चोद्गाता च हिरण्मय्योः कशिपुनोः पुरस्तात्प्रत्यङ्ध्वर्युर्हिरण्मये वा कूर्चे हिरण्मये वा फलके



१३.४.३.[२]

समुपविष्टेष्वध्वर्युः सम्प्रेष्यति  होतर्भूतान्याचक्ष्व भूतेष्विमं यजमानमध्यूहेति सम्प्रैषितो होताध्वर्युमामन्त्रयते पारिप्लवमाख्यानमाख्यास्यन्नध्वर्यविति हवै होतरित्यध्वर्युः

१३.४.३.[३]

मनुर्वैवस्वतो राजेत्याह  तस्य मनुष्या विशस्त इम आसत इत्यश्रोत्रिया गृहमेधिन उपसमेता भवन्ति तानुपदि=अत्यृचो वेदः सोऽयमित्यृचां सूक्तं व्याचक्षाण इवानुद्रवेद्वीणागणगिन उपसमेता भवन्ति तानध्वर्युः सम्प्रेष्यति वीणागणगिन इत्याह पुराणैरिमं यजमानं राजभिः साधुकृद्भिः संगायतेति तं ते
तथा संगायन्ति तद्यदेनमेवं संगायन्ति पुराणैरेवैनं तद्राजभिः
साधुकृद्भिः सलोकं कुर्वन्ति

१३.४.३.[४]

सम्प्रैष्याध्वर्युः प्रक्रमान्जुहोति  अन्वाहार्यपचने वाश्वस्य वा पदम्
परिलिख्य यतरथास्य तत्रावृद्भवति पूर्वा त्वेव स्थितिः



१३.४.३.[५]

सावित्र्या एवेष्टेः  पुरस्तादनुद्रुत्य सकृदेव रूपाण्याहवनीये जुहोत्यथ सायं धृतिषु हूयमानासु राजन्यो वीणागाथी दक्षिणत उत्तरमन्द्रामुदाघ्नंस्तिस्रः स्वयंसम्भृता गाथा गायतीत्ययुध्यतेत्यमुं संग्राममजयदिति तस्योक्तम्
ब्राह्मणम्

१३.४.३.[६]

अथ श्वो भूते द्वितीयेऽहन्  एवमेवैतासु सावित्रीष्विष्टिषु
संस्थितास्वेषैवावृदध्वर्यविति हवै होतरित्येवाध्वर्युर्यमो वैवस्वतो राजेत्याह
तस्य पितरो विशस्त इम आसत इति स्थविरा उपसमेता भवन्ति तानुपदिशति यजूंषि
वेदः सोऽयमिति यजुषामनुवाकं व्याचक्षाण इवानुद्रवेदेवमेवाध्वर्युः
सम्प्रेष्यति न प्रक्रमान्जुहोति

१३.४.३.[७]

अथ तृतीयेऽहन्  एवमेवैतास्विष्टिषु संस्थितास्वेषैवावृदध्वर्यविति हवै
होतरित्येवाध्वर्युर्वरुण आदित्यो राजेत्याह तस्य गन्धर्वा विशस्त इम आसत इति
युवानः शोभना उपसमेता भवन्ति तानुपदिशत्यथर्वाणो वेदः
सोऽयमित्यथर्वणामेकं पर्व व्याचक्षाण इवानुद्रवेदेवमेवाध्वर्युः
सम्प्रेष्यति न प्रक्रमान्जुहोति



१३.४.३.[८]

अथ चतुर्थेऽहन्  एवमेवैतास्विष्टिषु संस्थितास्वेषैवावृदध्वर्यविति हवै
होतरित्येवाध्वर्युः सोमो वैष्णवो राजेत्याह तस्याप्सरसो विशस्ता इमा आसत इति
युवतयः शोभनाः उपसमेता भवन्ति ता उपदिशत्यङ्गिरसो वेदः सो
यमित्यङ्गिरसामेकं पर्व व्याचक्षाण इवानुद्र>

१३.४.३.[९]

अथ पञ्चमेऽहन्  एवमेवैतास्विष्टिषु संस्थितास्वेषैवावृदध्वर्यविति हवै
होतरित्येवाध्वर्युरर्बुदः काद्रवेयो राजेत्याह तस्य सर्पा विशस्त इम आसत इति
सर्पाश्च सर्वविदश्चोपसमेता भवन्ति तानुपदिशति सर्पविद्या वेदः सोऽयमिति
सर्पविद्याया एकं पर्व व्याचक्षाण इवानुद्र>

१३.४.३.[१०]

अथ षष्ठेऽहन्  एवमेवैतास्विष्टिषु संस्थितास्वेषैवावृदध्वर्यविति हवै
होतरित्येवाध्वर्युः कुबेरो वैश्रवणो राजेत्याह तस्य रक्षांसि विशस्तानीमान्यासत
इति सेलगाः पादकृत उपसमेता भवन्ति तानुपदिशति देवजनविद्या वेदः सोऽयमिति
देवजनविद्याया एकं पर्व व्याचक्षाण इवानुद्र>



१३.४.३.[११]

अथ सप्तमेऽहन्  एवमेवैतास्विष्टिषु संस्थितास्वेषैवावृदध्वर्यविति हवै
होतरित्येवाध्वर्युरसितो धान्वो राजेत्याह तस्यासुरा विशस्त इम आसत इति कुसीदिन
उपसमेता भवन्ति तानुपदिशति माया वेदः सोऽयमिति कांचिन्मायां
कुर्यादेवमेवाध्वर्युः सम्प्रेष्यति न प्रक्रमान्जुहोति

१३.४.३.[१२]

अथाष्टमेऽहन्  एवमेवैतास्विष्टिषु संस्थितास्वेषैवावृदध्वर्यविति हवै होतरित्येवाध्वर्युर्मत्स्यः साम्मदो राजेत्याह तस्योदकेचरा विशस्त इम आसत इति मत्स्याश्च मत्स्यहनश्चोपसमेता भवन्ति तानुपदिशतीतिहासो वेदः सोऽयमिति कंचिदितिहासमाचक्षीतैवमेवाध्वर्युः सम्प्रेष्यति न प्रक्रमान्जुहोति

१३.४.३.[१३]

अथ नवमेऽहन्  एवमेवैतास्विष्टिषु संस्थितास्वेषैवावृदध्वर्यविति हवै होतरित्येवाध्वर्युस्ताक्ष्यों वैपश्यतो राजेत्याह तस्य वयांसि विशस्तानीमान्यासत इति वयांसि च वायोविद्यिकाश्चोपसमेता भवन्ति तानुपदिशति पुराणं वेदः सोऽयमिति किंचित्पुराणमाचक्षीतैवमेवाध्वर्युः सम्प्रेष्यति न प्रक्रमान्जुहोति



१३.४.३.[१४]
अथ दशमेऽहन्  एवमेवैतास्विष्टिषु संस्थितास्वेषैवावृदध्वर्यविति हवै होतरित्येवाध्वर्युर्धर्म इन्द्रो राजेत्याह तस्य देवा विशस्त इम आसत इति श्रोत्रिया अप्रतिग्राहका उपसमेता भवन्ति तानुपदिशति सामानि वेदः सोऽयमिति साम्नां दशतं ब्रूयादेवमेवाध्वर्युः सम्प्रेष्यति न प्रक्रमान्जुहोतीति

१३.४.३.[१५]

एतत्पारिप्लवम्  सर्वाणि राज्यान्याचष्टे सर्वा विशः सर्वान्वेदान्त्सर्वान्देवान्त्सर्वाणि भूतानि सर्वेषां ह वै स एतेषां राज्यानां सायुज्यं सलोकतामश्नुते सर्वासां विशामैश्वर्यमाधिपत्यं गचति सर्वान्वेदानवरुन्द्धे सर्वान्देवान्प्रीत्वा सर्वेषु भूतेष्वन्ततः प्रतितिष्ठति यस्यैवंविदेतद्धोता पारिप्लवमाख्यानमाचष्टे यो वैतदेवं वेदैतदेव समानमाख्यानं पुनः पुनः संवत्सरं परिप्लवते तद्यत्पुनः पुनः परिप्लवते तस्मात्पारिप्लवं षड्त्रिंशतं दशाहानाचष्टे षड्त्रिंशदक्षरा बृहती बार्हताः पशवो बृहत्यैवास्मै पशूनवरुन्द्धे

१३.४.४.[१]



संवत्सरे पर्यवेते दीक्षा  प्राजापत्यमालभ्योत्सीदन्तीष्टयः पुरोहितस्याग्निषु यजेतेत्यु हैक आहुः किमु दीक्षितो यजेत द्वादश दीक्षा द्वादशोपसदस्तिस्रः सुत्यास्तत्त्रिणवमभिसम्पद्यते वज्रो वै त्रिणवः क्षत्रमश्वः क्षत्रं राजन्यो वज्रेण खलु वै क्षत्रं स्पृतं तद्वज्रेणैव क्षत्रं स्पृणोति

१३.४.४.[२]

दीक्षणीयायां संस्थितायाम्  सायं वाचि विसृष्टायां वीणागणगिन उपसमेता भवन्ति तानध्वर्युः सम्प्रेष्यति वीणागणगिन इत्याह देवैरिमं यजमानं संगायतेति तं ते तथा संगायन्ति

१३.४.४.[३]

अहरहर्वाचि विसृष्टायाम्  अग्नीषोमीयाणामन्ततः संस्थायां परिहृतासु वसतीवरीषु तद्यदेनं देवैः संगायन्ति देवैरेवैनं तत्सलोकं कुर्वन्ति

१३.४.४.[४]

प्रजापतिना सुत्यासु  एवमेवाहरहः परिहृतास्वेव वसतीवरीषूदवसानीयायामन्ततः संस्थितायां तद्यदेनं प्रजापतिना संगायन्ति प्रजापतिनैवैनं तदन्ततः सलोकं कुर्वन्ति



१३.४.४.[५]

एकविंशतिर्यूपाः  सर्व एकविंशत्यरत्नयो राज्जुदालोऽग्निष्ठो भवति पैतुदारवावभितः षड्बैल्वास्त्रय इत्थात्त्रय इत्थात्षड्वादिरास्त्रय एवेत्थात्त्रय इत्थात्षड्वालाशास्त्रय एवेत्थात्त्रय इत्थात्

१३.४.४.[६]

तद्यदेत एवं यूपा भवन्ति  प्रजापतेः प्राणेषूत्क्रान्तेषु शरीरं

श्वयितुमध्रियत तस्य यः श्लेष्मासीत्स सार्धं समवद्रुत्य मध्यतो नस्त
उदभिनत्स एष वनस्पतिरभवद्रज्जुदालस्तस्मात्स श्लेष्मणाः श्लेष्मणो हि
समभवत्तेनैवैनं तद्रूपेण समर्धयति तद्यत्सोऽग्निष्ठो भवति मध्यं
वा एतद्यूपानां यदग्निष्ठो मध्यमेतत्प्राणानां यन्नासिके स्व एवैनं तदायतने
दधाति

१३.४.४.[७]

अथ यदापोमयं तेज आसीत्  यो गन्धः स सार्धं समवद्रुत्य चक्षुष्ट
उदभिनत्स एष वनस्पतिरभवत्पोतुदारुस्तस्मात्स सुरभिर्गन्धाद्धि
समभवत्तस्मादु ज्वलनस्तेजसो हि समभवत्तेनैवैनं तद्रूपेण समर्धयति
तद्यत्तावभितोऽग्निष्ठं भवतस्तस्मादिमे अभितो नासिकां चक्षुषी स्व एवैनौ
तदायतने दधाति



१३.४.४.[८]

अथ यत्कुन्तापमासीत्  यो मज्जा स सार्धं समवद्रुत्य श्रोत्रत उदभिनत्स एष
वनस्पतिरभवद्बिल्वस्तस्मात्तस्यान्तरतः सर्वमेव फलमाद्यं भवति
तस्मादु हारिद्र इव भवति हारिद्र इव हि मज्जा तेनैवैनं तद्रूपेण
समर्धयत्यन्तरे पैतुदारुवौ भवतो बाह्ये बैल्वा अन्तरे हि चक्षुषी बाह्ये
श्रोत्रे स्व एवैनांस्तदायतने दधाति

१३.४.४.[९]

अस्थिभ्य एवास्य खदिरः समभवत्  तस्मात्स दारुणो बहुसारो दारुणमिव ह्यस्थि तेनैवैनं तद्रूपेण समर्धयत्यन्तरे बैल्वा भवन्ति बाह्ये खादिरा अन्तरे हि मज्जानो बाह्यान्यस्थीनि स्व एवैनांस्तदायतने दधाति

१३.४.४.[१०]

मांसेभ्य एवास्य पलाशः समभवत्  तस्मात्स बहुरसो लोहितरसो लोहितमिव हि मांसं तेनैवैनं तद्रूपेण समर्धयत्यन्तरे खादिरा भवन्ति बाह्ये पालाश अन्तराणि ह्यस्थीनि बाह्यानि मांसानि स्व एवैनांस्तदायतने दधाति



१३.४.४.[११]

अथ यदेकविंशतिर्भवन्ति  एकविंशत्यरत्नय एकविंशो वा एष तपति द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः सोऽश्वमेध एष प्रजापतिरेवमेतं प्रजापतिं यज्ञं कृत्स्नं संस्कृत्य तस्मिन्नेकविंशतिमग्नीषोमीयान्पशूनालभते तेषां समानं कर्मेत्येतत्पूर्वेद्युः कर्म

१३.५.१.[१]

अथ प्रातर्गोतमस्य  चतुरुत्तर स्तोमो भवति तस्य चतसृषु बहिष्पवमानमष्टास्वष्टास्वाज्यानि द्वादशसु माध्यन्दिनः पवमानः षोडशसु पृष्ठानि विंशत्यामार्भवः पवमानश्चतुर्विंशत्यामग्निष्टोमसाम

१३.५.१.[२]

तस्य हैके  अग्निष्टोमसाम चतुःसाम कुर्वन्ति नाग्निष्टोमो नोक्थ्य इति वदन्तस्तद्यदि तथा कुर्युः सार्धं स्तोत्रियं शस्त्वा सार्धमनुरूपं शंसेद्रथन्तरं पृष्ठं राथन्तरं शस्त्रमग्निष्टोमो यज्ञस्तेनेमं लोकमृध्नोति



१३.५.१.[३]

एकविंशतिः सवनीयाः पशवः  सर्व आग्नेयास्तेषां समानं कर्मेत्यु हैक आहुर्द्वे त्वेवैते एकादशिन्यावालभेत य एवैकादशिनेषु कामस्तस्य कामस्याप्त्यै

१३.५.१.[४]

संस्थितेऽग्निष्टोमे  परिहृतासु वसतीवरीष्वध्वर्युरन्नहोमान्जुहोति

तेषामुक्तं ब्राह्मणं प्राणाय स्वाहापानाय स्वाहेति द्वादशभिरनुवाकैर्द्वादश मासाः संवत्सरः सर्वं संवत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै

१३.५.१.[५]

एकविंशं मध्यममहर्भवति  असौ वा आदित्य एकविंशः सोऽश्वमेधः स्वेनैवैनं स्तोमेन स्वायां देवतायां प्रतिष्ठापयति तस्मादेकविंशम्



१३.५.१.[६]

यद्वेवैकविंशम्  एकविंशो वै पुरुषो दश हस्त्या अङ्गुलयो दश पाद्या आत्मैकविंशस्तदनेनैकविंशेनात्मनैतस्मिन्नेकविंशे प्रतिष्ठायां प्रतितिष्ठति तस्मादेकविंशम्

१३.५.१.[७]

यद्वेवैकविंशम्  एकविंशो वै स्तोमानां प्रतिष्ठा बहु खलु वा एतदेतस्मिन्नहन्युच्चावचमिव कर्म क्रियते तद्यदेतदेतस्मिन्नहन्युच्चावचम् बहु कर्म क्रियते तदेतस्मिन्नेकविंशे प्रतिष्ठायां प्रतिष्ठितं क्रियाता इति तस्माद्वेवैतदेकविंशमहः

१३.५.१.[८]

तस्य प्रातःसवनम्  अग्निं तं मन्ये यो वसुरिति होता पाङ्क्तमाज्यं शस्त्वैकाहिकमुपसंशंसति बार्हतं च प्रौगं माधुचन्दसं च त्रिचश उभे संशंसति यश्च बार्हते प्रौगे कामो य उ च माधुचन्दसे तयोरुभयोः कामयोराप्त्यै क्लृप्तं प्रातःसवनम्

१३.५.१.[९]



अथातो माध्यन्दिनं सवनं  अतिचन्दाः प्रतिपन्मरुत्वतीयस्य त्रिकद्रुकेषु महिषो यवाशिरमित्यतिष्ठा वा एषा चन्दसां यदतिचन्दा अतिष्ठा अश्वमेधो यज्ञानामश्वमेधस्यैवाप्त्यै सैषैव त्रिः शस्ता त्रिचः सम्पद्यते तेनो तं काममाप्नोति यस्त्रिच इदं वसो सुतमन्ध इत्यनुचर एष एव नित्य एकाहातान इत्था हि सोम इन्मदेऽवितासि सुन्वतो वृक्तबर्हिष इति पङ्क्तीश्च षद्दाश्च शस्त्वैकाहिके निविदं दधातीति मरुत्वतीयम्

१३.५.१.[१०]

अथातो निष्केवल्यम्  महानाम्न्यः पृष्ठं भवन्ति सानुरूपाः सप्रगाथाः शंसति सर्वे वै कामा महानाम्नीषु सर्वे कामा अश्वमेधे सर्वेषां कामानामाप्त्याइन्द्रो

मदाय वावृधे प्रेदं ब्रह्म वृत्रतूर्येष्वाविथे ति पङ्क्तीश्च ष+पदाश्च
शस्त्वैकाहिके निविदं दधाति कॢप्तं माध्यन्दिनं सवनम्

१३.५.१.[११]

अथातस्तृतीयसवनम्  अतिचन्दा एव प्रतिपद्वैश्वदेवस्याभित्यं देवं
सवितारमोण्योरिति तस्या एतदेव ब्राह्मणं यत्पूर्वस्या अभित्वा देव
सवितरित्यनुचरोऽभिवान्भिभूत्यै रूपमुदु ष्य देवः सविता दमूना इति सावित्रं
शस्त्वैकाहिके निविदं दधाति मही द्यावापृथिवीइह ज्येष्थे इति चतुर्ऋचं
द्यावापृथिवीयं शस्त्वैकाहिके निविदं दधात्यृभुर्विभ्वा वाज इन्द्रो नो
अचेत्यार्भवं शस्त्वैकाहिके निविदं दधाति को नु वां मित्रावरुणावृतायन्निति
वैश्वदेवं शस्त्वैकाहिके निविदं दधातीति वैश्वदेवम्



१३.५.१.[१२]

अथात आग्निमारुतम्  मूर्धानं दिवो अरतिं पृथिव्या इति वैश्वानरीयं शस्त्वैकाहिके
निविदं दधात्या रुद्रास इन्द्रवन्तः सजोषस इति मारुतं शस्त्वैकाहिके निविदं
दधातीममूषु वो अतिथिमुषर्बुधमिति नवर्चं जातवेदसीयं शस्त्वैकाहिके
निविदं दधाति तद्यदैकाहिकानि निविद्धानानि भवन्ति प्रतिष्ठा वै ज्योतिष्तोमः
प्रतिष्ठाया अप्रच्युत्यै

१३.५.१.[१३]

तस्यैते पशवो भवन्ति  अश्वस्तूपरो गोमृग इति पञ्चदश पर्यङ्ग्यास्तेषामुक्तम्
ब्राह्मणमथैत आरण्या वसन्ताय कपिञ्जलानालभते ग्रीष्माय
कलविङ्कान्वर्षाभ्यस्तित्तिरीनिति तेषाम्वेवोक्तम्

१३.५.१.[१४]

अथैतानेकविंशतये  चातुर्मास्यदेवताभ्य एक्किंशतिमेकविंशतिं पशूनालभत
एतावन्तो वै सर्वे देवा यावत्यश्चातुर्मास्यदेवताः सर्वे कामा अश्वमेधे
सर्वान्देवान्प्रीत्वा सर्वान्कामानाप्नवानीति न तथा कुर्यात्



१३.५.१.[१५]

सप्तदशैव पशून्मध्यमे यूप आलभेत्  प्रजापतिः सप्तदशः सर्वं सप्तदशः
सर्वमश्वमेधः सर्वस्याप्तै सर्वस्यावरुध्यै षोडश षोडशेतरेषु
षोडश्कलं वा इदं सर्वं सर्वमश्वमेधः सर्वस्याप्तै सर्वस्यावरुध्यै
त्रयोदश त्रयोदशारण्यानाकाशेष्वालभते त्रयोदश मासाः सम्वत्सरः सर्वं
सम्वत्सरः सर्वमश्वमेधः सर्वस्याप्तै सर्वस्यावरुध्यै

१३.५.१.[१६]

अथ पुरा बहिष्पवमानात्  अश्वं नित्त्वोदानयन्ति तेन पावमानाय सर्पन्ति तस्योक्तं ब्राह्मणं स्तुते बहिष्पवमानेऽश्वमास्तावमाक्रमयन्ति स यद्यव वा जिघ्रेद्वि वा वर्तेत् समृद्धो मे यज्ञ इति ह विद्यात्तमुपाकृत्याध्वर्युराह होतरभिष्टुहीति तमेकादशभिर्होताभिष्टौति

१३.५.१.[१७]

यदक्रन्दः प्रथमं जायमान इति  त्रिः प्रथमया त्रिरुत्तमया ताः पञ्चदश सम्पद्यन्ते पञ्चदशो वै वज्रो वीर्यं वज्रो वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मां वज्रो वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते तद्वै यजमानायैव वज्रः प्रदीयते योऽस्य स्तृत्यस्तं स्तर्तव उप प्रागाचसनम् वाज्यर्वोप प्रागात्परमंयत्सधस्थमिति



१३.५.१.[१८]

एते उद्धृत्य  मा नो मित्रो वरुणो अर्यमायुरित्येतत्सूक्तमध्रिगावावपति चतुस्त्रिंशद्वाजिनो देवबन्धोरित्यु हैक एतां वङ्क्रीणां पुरस्ताद्दधति नेदनायतने प्रणवं दधामेत्यथो नेदेकवचनेन बहुवचनं व्यवायामेति न तथा कुर्यात्सार्धमेष सूक्तमावपेदुप प्रागाचसनं वाज्यर्वोप प्रागात्परमंयत्सधस्थमिति

१३.५.२.[१]

एतेउत्त्वा  यदश्विगोः परिशिष्टं भवति तदाह वासोऽधिवासं हिरण्यमित्यश्वायोपस्तृणन्ति तस्मिन्नेनमधि सञ्ज्ञपयन्ति सञ्ज्ञप्तेषु पशुषु पत्न्यः पान्नेजनैरुदायन्ति चतस्रश्च जायाः कुमारी पञ्चमी चत्वारि च शतान्यनुचरीणाम्

१३.५.२.[२]

निष्ठितेषु पान्नेजनेषु  महिषीमश्वायोपनिपादयन्त्यथैनावधिवासेन सम्प्रोर्णुवन्ति स्वर्गेलोके प्रोर्णुवथामित्येष वै स्वर्गो लोको यत्र पशुं सञ्ज्ञपयन्ति निरायत्याश्वस्य शिश्नं महिष्युपस्थे निधत्ते वृषा वाजी रेतोधा रेतो दधात्विति मिथुनस्यैव सर्वत्वाय



१३.५.२.[३]

तयोः शयानयोः अश्वं यजमानोऽभिमेथत्युत्सक्थ्या अव गुदं धेहीति तं न कश्चन प्रत्यभिमेथति नेद्यजमानं प्रतिप्रतिः कश्चिदसदिति

१३.५.२.[४]

अथाध्वर्युः कुमारीमभिमेथति  कुमारि हयेहये कुमारि यकासकौ शकुन्तिकेति
तं कुमारी प्रत्यभिमेथत्यध्वर्यो हयेहयेऽध्वर्यो यकोऽसकौ शकुन्तक इति

१३.५.२.[५]

अथ ब्रह्मा महिषीमभिमेथति  महिषि हयेहये महिषि माता च ते पिता च
तेऽग्रं वृक्षस्य रोहत इति तस्यै शतं राजपुत्र्योऽनुचर्यो भवन्ति ता ब्रह्माणम्
प्रत्यभिमेथन्ति ब्रह्मन्हयेहये ब्रह्मन्माता च ते पिता च तेऽग्रे वृक्षस्य
क्रीडत इति



१३.५.२.[६]

अथोद्गाता वावातामभिमेथति  वावाते हयेहये वावात ऊर्ध्वामेनामुच्छ्रापयेति
त्!स्यै शतं राजन्या अनुचर्यो भवन्ति ता उद्गातारम्
प्रत्यभिमेथन्त्युद्गातर्हयेहय उद्गातरूर्ध्वमेनमुच्छ्रयतादिति

१३.५.२.[७]

अथ होता परिवृक्तामभिमेथति  परिवृक्ते हयेहये परिवृक्ते यदस्या अंहुभेद्या
इति तस्यै शतं सूतग्रामण्यां दुहितरोऽनुचर्यो भवन्ति ता होतारम्
प्रत्यभिमेथन्ति होतर्हयेहये होतर्यद्देवासो ललामगुमिति

१३.५.२.[८]

अथ क्षत्ता पालागलीमभिमेथति  पालागलि हयेहये पालागलि यद्धरिणो यवमत्ति न पुष्टं पशु मन्यत इति तस्यै शतं क्षात्रसङ्ग्रहीतॄणां दुहितरोऽनुचर्यो भवन्ति ताः क्षत्तारं प्रत्यभिमेथन्ति क्षत्तर्हयेहये क्षत्तर्यद्धरिणो यवमत्ति न पुष्टं बहु मन्यत इति

१३.५.२.[९]



सर्वाप्तिर्वाएषा वाचः  यदभिमेथिकाः सर्वे कामा अश्वमेधे सर्वया वाचा सर्वान्कामानाप्नवामेत्युत्थापयन्ति महिषीं ततस्ता यथेतम् प्रतिप्!रायन्त्यथेतरे सुरभिमतीमृचमन्ततोऽन्वाहुर्दधिक्राव्णोअकारिषमिति

१३.५.२.[१०]

अप वा एतेभ्य आयुर्देवताः क्रामन्ति  ये यज्ञेपूतां वा चं वदन्ति वाचमेवैतत्पुनते देवयज्यायै देवतानामनपक्रमाय या च गोमृगे वपा भवति या चाजेतूपरे ते अश्वे प्रत्यवधायाहरन्ति नाश्वस्य वपास्तीति वदन्तो न तथा कुर्यादश्वस्यैव प्रत्यक्षं मेद आहरेत्प्रज्ञाता इतराः

१३.५.२.[११]

श्रृतासु वपासु स्वाहाकृतिभिश्चरित्वा प्रत्यञ्चः प्रतिपरेत्य सदसि ब्रह्मोद्यम्
वदन्ति पूर्वया द्वारा प्रपद्य यथाधिष्ण्यं व्युपविशन्ति

१३.५.२.[१२]

स होताध्वर्युं पृचति  कः स्विदेकाकी चरतीति तं प्रत्याह सूर्य एकाकी चरतीति



१३.५.२.[१३]

अथाध्वर्युर्होतारं पृचति  किं स्वित्सूर्यसमं ज्योतिरिति तं प्रत्याह ब्रह्म
सूर्यसमं ज्योतिरिति

१३.५.२.[१४]

अथ ब्रह्मोद्गातारं पृचति  पृचामि त्वा चितये देवसखेति तं प्रत्याहापि तेषु
त्रिषु पदेष्वस्मीति

१३.५.२.[१५]

अथोद्गाता ब्रह्माणं पृचति  केष्वन्तः पुरुष आविवेशेति तं प्रत्याह पञ्चस्वन्तः पुरुष आविवेशेति

१३.५.२.[१६]

एतस्यामुक्तायामुत्थाय  स्!दसोऽधि प्राञ्चो यजमानमभ्यायन्त्यग्रेण हविर्धाने आसीनमेत्य यथायतनं पर्युपविशन्ति



१३.५.२.[१७]

स होताध्वर्युं पृचति  का स्विदासीत्पूर्वचित्तिरिति तं प्रत्याह द्यौरासीत्पूर्वचित्तिरिति

१३.५.२.[१८]

अथाध्वर्युर्होतारं पृचति  क ईमरे पिशङ्गिलेति तं प्रत्याहाजारे पिशञ्गिलेति

१३.५.२.[१९]

अथ ब्रह्मोद्गातारं पृचति  कत्यस्य विष्ठाः कत्यक्षराणीति तं प्रत्याह षडस्य विष्थाः शतमक्षराणीति

१३.५.२.[२०]

अथोद्गाता ब्रह्माणं पृचति  को अस्य वेद भुवनस्य नाभिमिति तं प्रत्याह वेदाहमस्य भुवनस्य नाभिमिति



१३.५.२.[२१]

अथाध्वर्युं यजमानः पृचति  पृचामि त्वा परमन्तं पृथिव्या इति तम् प्रत्याहेयं वेदिः परो अन्तः पृथिव्या इति

१३.५.२.[२२]

सर्वाप्तिर्वा एषा वाचः  यद्ब्रह्मोद्यं सर्वे कामा अश्वमेधे सर्वया वाचा सर्वान्कामानाप्नवामेति

१३.५.२.[२३]

उदिते ब्रह्मोद्ये  प्रपद्याध्वर्युर्हिरण्मयेने पात्रेण प्राजापत्यं महिमानं ग्रहं गृह्णाति तस्य पुरोरुग्घिरण्यगर्भः समवर्तताग्र इत्यथास्य पुरोऽनुवाक्या सुभूः स्वयम्भूः प्रथम इति होता यक्षत्प्रजापतिमिति प्रैषः प्रजापते न त्वदेतान्यन्य इति होता यजति वषड्कृते जुहोति यस्तेऽहन्त्सम्वत्सरे महिमा सम्बभूवेति नानुवषड्करोति सर्वहुतं हि जुहोति ३०५०१०१ थातो वपानां होमः नानैव चरेयुरा वैश्वदेवस्य वपायै वैश्वदेवस्य वपायां हुतायां तदन्वितराजुहुयुरिति ह स्माह सत्यकामो जाबालो विश्वे वै सर्वे देवास्तदेनान्यथादेवतं प्रीणातीति



१३.५.३.[१]

ऐन्द्राग्नस्य वदायां हुतायाम्  तदन्वितरा जुहुयुरिति ह स्माहतुः सौमापौ मानुतन्तव्याविन्द्राग्नी वै सर्वे देवास्तदेवैनान्यथादेवतं प्रीणातीति

१३.५.३.[२]

कायस्य वपायां हुतायाम्  तदन्वितरा जुहुयुरिति ह स्माह इनान्यथादेवतम् प्रीणातीति शैलालिः प्रजापतिर्वै कः प्रजापतिमु वा अनु सर्वे देवास्तदेवैनान्यथादेवतं प्रीणातीति

१३.५.३.[३]

एकविंशतिं चातुर्मास्यदेवता अनुहुत्य  एक्विंशतिधा कृत्वा प्रचरेयुरिति ह स्माह भाल्लबेय एतावन्तो वै सर्वे देवायावत्यश्चातुर्मास्यदेवतास्तदेवैनान्यथादेवतम् प्रीणातीति

१३.५.३.[४]

नानैव चरेयुः  इतीन्द्रोतः शौनकः किमुत त्वरेरंस्तदेवैनान्यथादेवतम् प्रीणातीत्येतदह तेषां वचोऽन्या त्वेवात स्थितिः

१३.५.३.[५]

अथ होवाच याज्ञवल्क्यः  सकृदेव प्राजापत्याभिः प्रचरेयुः सकृद्देवदेवत्याभिस्तदेवैनान्यथादेवतं प्रीणात्यञ्जसा यज्ञस्य संस्थामुपैति न ह्वलतीति

१३.५.३.[६]

हुतासु वपासु  प्रपद्याध्वर्यू रजतेन पात्रेण प्राजापत्यं महिमानमुत्तरं ग्रहं गृह्णाति तस्य पुरोरुग्यः प्राणतो निमिषतो महित्वेति विपर्यस्ते याज्यानुवाक्ये अयातयामताया एष एव प्रैषो वषट्कृते जुहोति यस्ते रात्रौ सम्वत्सरे महिमा सम्बभूवेति नानुवषट्करोति तस्योक्तं ब्राह्मणम्

१३.५.३.[७]

नान्येषां पशूनां तेदन्या अवद्यन्ति अवद्यन्त्यश्वस्य दक्षिणतोऽन्येषाम् पशूनामवद्यन्त्युत्तरतोऽश्वस्य प्लक्षशाखास्वन्येषां पशूनामवद्यन्ति वेतसशाखास्वश्वस्य



१३.५.३.[८]

तदु होवाच सात्ययज्ञिः  इतरथैव कुर्युः पथ एव नापोदित्यमिति पूर्वा त्वेव स्थितिरुक्थ्यो यज्ञस्तेनान्तरिक्षलोकमृध्नोति सर्वस्तोमोऽतिरात्र उत्तममहर्भवति सर्वं वै सर्वस्तोमोऽतिरात्रः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै

१३.५.३.[९]

तस्य त्रिवृद्बहिष्पवमानम्  पञ्चदशान्याज्यानि सप्तदशो माध्यन्दिनः पवमान

एकविंशानि पृष्ठानि त्रिणवस्तृतीयः
पवमानस्त्रयस्त्रिंशमग्निष्टोमसामैकविंशान्युक्थान्येकविंशः षोडशी
पञ्चदशी रात्रिस्त्रिवृत्सन्धिर्यद्द्वितीयस्याह्नः पृष्ठ्यस्य षडहस्य
तचत्स्रमतिरात्रो यज्ञस्तेनामुं लोकमृध्नोति

१३.५.३.[१०]

एकविंशतिः सवनीयाः पशवः  सर्व आग्नेयास्तेषां समानंकर्मेत्यु हैक
आहुश्चतुर्विंशतिं त्वेवैतान्गव्यानालभेत् द्वादशभ्यो देवताभ्यो द्वादश मासाः
सम्वत्सरः सर्वं सम्वत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै



१३.५.४.[१]

एतेन हेन्द्रोतो दैवापः शौनकः  जनमेजयं पारिक्षितं याजयां चकार
तेनेष्ट्वा सर्वां पापकृत्यां सर्वां ब्रह्महत्यामपजघान सर्वां ह वै
पापकृत्यां सर्वां ब्रह्महत्यामपहन्ति योऽश्वमेधेन यजते

१३.५.४.[२]

तदेतद्गाथयाभिगीतम्  आसन्दीवति धान्यादं रुक्मिणं हरितस्रजम्
अबध्नादश्वं सारङ्गं देवेभ्यो जनमेजय इति

१३.५.४.[३]

एते एव पूर्वे अहनी  ज्योतिरतिरात्रस्तेन भीमसेनमेते एव पूर्वे अहनी गौरतिरात्रस्तेनोग्रसेनमेते एव पूर्वे अहनी आयुरतिरात्रस्तेन श्रुतसेनमित्येते पारिक्षितीयास्तदेतद्गाथयाभिगीतं पारिक्षिता यजमाना अश्वमेधैः परोऽवरम् अजहुः कर्म पापकं पुण्याः पुण्येन कर्मणेति

१३.५.४.[४]



एते एव पूर्वे अहनी  अभिजिदतिरात्रस्तेन ह पर आह्णार ईजे कौसल्यो राजा तदेतद्गाथयाभिगीतमह्णारस्य परः पुत्रोऽश्वं मेध्यमबन्धयत् हैरण्यनाभः कौसल्यो दिशः पूर्णा अमंहतेति

१३.५.४.[५]

एते एव पूर्वे अहनी  विश्वजिदतिरात्रस्तेन ह पुरुकुत्सो दौर्गहेणेज ऐक्ष्वाको राजा तस्मादेतदृषिणाभ्यनूक्तमस्माकमत्र पितरस्त आसन्त्सप्त ऋषयो दौर्गहे बध्यमान इति

१३.५.४.[६]

एते एव पूर्वे अहनी  महाव्रतमतिरात्रस्तेन ह मरुत्त आविक्षित ईज आयोगवो राजा तस्य ह ततो मरुतः परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः सभासदो बभूवुस्तदेतद्गाथयाभिगीतं मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे आविक्षितस्याग्निः क्षत्ता विश्वे देवाः सभासद इति मरुतो ह वै तस्य परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः सभासदो भवन्ति योऽश्वमेधेन यजते

१३.५.४.[७]

एते एव पूर्वे अहनी  अप्तोर्यामोऽतिरात्रस्तेन हैतेन क्रैव्यईजे पाञ्चालो राजा क्रिवय इति ह वै पुरा पञ्चालानाचक्षते तदेतद्गाथयाभिगीतमश्वं मेध्यमालभत क्रिवीणामतिपूरुषः पाञ्चालः परिवक्रायां सहस्रशतदक्षिणमिति



१३.५.४.[८]

अथ द्वितीयया  सहस्रमासन्नयुता शता च पञ्चविंशतिः दित्तोदित्तः पञ्चालानाम् ब्राह्मणा या विभेजिर इति

१३.५.४.[९]

त्रिवृदग्निष्टोमः  पञ्चदश उक्थ्यः सप्तदशं तृतीयमहः सोक्थकमेकविंशः
षोडशी पञ्च्=दशी रात्रिस्त्रिवृत्सन्धिरित्येषोऽनुष्टुप्सम्पन्नस्तेन हैतेन ध्वसा
द्वैतवनईजे मात्स्यो राजा यत्रैतद्द्वैतवनं सरस्तदेतद्गाथयाभिगीतं
चतुर्दश द्वैतवनो राजा सङ्ग्रामजिद्धयानिन्द्राय
वृत्रघ्नेऽबध्नात्तस्माद्द्वैतवनं सर इति

१३.५.४.[१०]

चतुर्विंशाः पवमानाः  त्रिवृदभ्यावर्तं चतुश्चत्वारिंशाः पवमाना
एकविंशमभ्यावर्तमष्टाचत्वारिंशाः
पवमानास्त्रयस्त्रिंशमभ्यावर्तमाग्निष्टोमसामाद्ध्यात्रिंशान्युक्थान्येकविंशः
षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरिति



१३.५.४.[११]

एतद्विष्णोः क्रान्तम्  तेन हैतेन भरतो दौःषन्तिरीजे तेनेष्ट्वेमां व्यष्टिम्
व्यानशे येयं भरतानां तदेतद्गाथयाभिगीतमष्टासप्ततिं भरतो
दौषन्तिर्यमुनामनु गङ्गायां वृत्रघ्नेऽबध्नात्पञ्चपञ्चाशतं हयानिति

१३.५.४.[१२]

अथ द्वितीयया  त्रयस्त्रिंशं शतं राजाश्वान्बद्धाय मेध्यान्
सौद्युम्निरत्यष्ठादन्यानमायान्मायवत्तर इति

१३.५.४.[१३]

अथ तृतीयया  शकुन्तला नाडपित्यप्सरा भरतं दधे
परःसहस्रानिन्द्रायाश्वान्मेधान्य आहरद्विजित्य पृथिवीं सर्वामिति

१३.५.४.[१४]



अथ चतुर्थ्या  महदद्य भरतस्य न पूर्वे नापरे जनाः  दिवं मर्त्यैव
बाहुभ्यां नोदापुः पञ्च मानवा इति

१३.५.४.[१५]

एकविंशस्तोमेन  ऋषभो याज्ञतुर ईजे श्विक्नानां राजा तदेतद्गाथयाभिगीतं
याज्ञतुरे यजमाने ब्रह्माण ऋषभे जना अश्वमेधे धनं लब्ध्वा विभजन्ते
स्म दक्षिणा इति

१३.५.४.[१६]

त्रयस्त्रिंशस्तोमेन  शोणः सात्रासाह ईजे पाञ्चालो राजा तदेतद्गाथयाभिगीतं
सात्रासहे
यजमानेऽश्वमेधेन तौर्वशाः उदीरते त्रयस्त्रिंशाः षट्सहस्राणि वर्मिणामिति

१३.५.४.[१७]

अथ द्वितीयया  षट्षड्ङ्गा सहस्राणि यज्ञे कोकपितुस्तव उदीरते त्रयस्त्रिंशाः
षट्सहस्राणि वर्मिणामिति



१३.५.४.[१८]

अथ तृतीयया  सात्रासहे यजमाने पाञ्चाले राज्ञि सुस्रजि अमाद्यदिन्द्रः
सोमेनातृप्यन्ब्राह्मणा धनैरिति

१३.५.४.[१९]

गोविनतेन शतानीकः  सात्राजित ईजे काश्यस्याश्वमादाय ततो
हैतर्दवाक्काशयोऽग्नीन्नादधत आत्तसोमपीथाः स्म इति वदन्तः

१३.५.४.[२०]

तस्य विधा चतुर्विंशाः पवमानाः  त्रिवृदभ्यावर्तं चतुश्चत्वारिंशाः पवमाना एकविंशान्याज्यानि त्रिणवान्युक्थान्येकविंशानि पृष्ठानि षड्विंशाः पवमानास्त्रयस्त्रिंशमभ्यावर्तमाग्निष्टोमसामादेकविंशान्युक्थान्येकविंशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिः

१३.५.४.[२१]



तदेतद्गाथयाभिगीतम्  शतानीकः समन्तासु मेध्यं सात्राजितो हयमादत्त यज्ञं काशीनां भरतः सत्वतामिवेति

१३.५.४.[२२]

अथ द्वितीयया  श्वेतं समन्तासु वशं चरन्तं शतानीको धृतराष्ट्रस्य मेध्यम् आदाय सह्वा दशमास्यमश्वं शतानीको गोविनतेन हेज इति

१३.५.४.[२३]

अथ चतुर्थ्या  महदद्य भरतानां न पूर्वे नापरे जनाः दिवं मर्त्यैव पक्षाभ्यां नोदापुः सप्तमा नवा इति

१३.५.४.[२४]

अथातो दक्षिणानाम्  मध्यं प्रति राष्ट्रस्य यदन्यद्भूमेश्च पुरुषेभ्यश्च ब्राह्मणस्य च वित्तात्प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुस्तदेव होतृका अन्वाभक्ताः

१३.५.४.[२५]



उदयनीयायां सम्स्थितायाम्  एकविंशतिं वशा अनूबन्ध्या आलभते मैत्रावरुणीर्वैश्वदेवीर्बार्हस्पत्या एतासां देवतानामाप्त्यै तद्यद्बार्हस्पत्यान्त्या भवन्ति ब्रह्म वै बृहस्पतिस्तदु ब्रह्मण्येवान्ततः प्रतितिष्ठति

१३.५.४.[२६]

अथ यदेकविंशतिर्भवन्ति  एकविंशो वा एष य एष तपति द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य  एकविंश एतामभिसम्पदम्

१३.५.४.[२७]

उदवसानीयायां संस्थितायाम्  चतस्रश्च जायाः कुमारीं पञ्चमीं चत्वारि च शतान्यनुचरीणां यथासमुदितं दक्षिणां ददति

१३.५.४.[२८]

अथोत्तरं सम्वत्सरमृतुपशुभिर्यजते  षड्भिराग्नेयैर्वसन्ते षड्भिरैन्द्रैर्ग्रीष्मे षड्भिः पार्जन्यैर्वा मारुतैर्वा वर्षासु षड्भिर्मैत्रावरुणैः शरदि षड्भिरैन्द्रावैष्णवैर्हेमन्ते षड्भिरैन्द्राबार्हस्पत्यैः शिशिरे षड्तवः सम्वत्सरः ऋतुष्वेव सम्वत्सरे प्रतितिष्ठति षड्त्रिंशदेते पशवो भवन्ति षड्त्रिंशदक्षरा बृहती बृहत्यामधि स्वर्गो लोकः प्रतिष्ठितस्तद्वन्ततो बृहत्यैव चन्दसा स्वर्गे लोके प्रतितिष्ठति



१३.६.१.[१]

पुरुषो ह नारायणोऽकामयत  अतितिष्ठेयं सर्वाणि भूतान्यहमेवेदं सर्वं स्यामिति स एतं पुरुषमेधं पञ्चरात्रम् यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत तेनेष्ट्वात्यतिष्ठत्सर्वाणि भूतानीदं सर्वमभवदतितिष्ठति सर्वाणि भूतानीदं सर्वं भवति य एवम् विद्वान्पुरुषमेधेन यजते यो वैतदेवं वेद

१३.६.१.[२]

तस्य त्रयोविंशतिर्दीक्षाः  द्वादशोपसदः पञ्च सुत्याः स एष चत्वारिंशद्रात्रः सदीक्षोपसत्कश्चत्वारिंशदक्षरा विराड्विराजमभिसम्पद्यते ततो विराडजायत विराजो अधि पूरुष इत्येषा वै सा विराडेतस्या एवैतद्विराजो यज्ञं पुरुषं जनयति

१३.६.१.[३]

ता वा एताः  चतस्रो दशतो भवन्ति तद्यदेताश्चतस्रो दशतो भवन्त्येषां चैव लोकानामाप्त्यै दिशां चेममेव लोकं प्रथमया दशताप्नुवन्नन्तरिक्षं द्वितीयया दिवं तृतीयया दिशश्चतुर्थ्या तथैवैतद्यजमान इममेव लोकम् प्रथमया दशताप्नोत्यन्तरिक्षं द्वितीयया दिवं तृतीयया दिशश्चतुर्थ्यैतावद्वा इदं सर्वं यावादिमे च लोका दिशश्च सर्वं पुरुषमेधः सर्वस्याप्त्यै स्!र्वस्यावरुद्ध्यै



१३.६.१.[४]

एकादशाग्निषोमीयाः पशव उपवसथे  तेषां समानं कर्मैकादश यूपा एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यं त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते

१३.६.१.[५]

एकादशिनाः सुत्यासु पशवो भवन्ति  एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यं त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते

१३.६.१.[६]

यद्वेवैकादशिना भवन्ति  एकादशिनी वा इदं सर्वं प्रजापतिर्ह्येकादशिनी सर्वं हि प्रजापतिः सर्वं पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै



१३.६.१.[७]

स वा एष पुरुषमेधः पञ्चरात्रो यज्ञक्रतुर्भवति  पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्तवः सम्वत्सरो यत्किं च पञ्चविधमधिदेवतमध्यात्मं तदेनेन सर्वमाप्नोति

१३.६.१.[८]

तस्याग्निष्टोमः प्रथममहर्भवति  अथोक्थ्योऽथातिरात्रोऽथोक्थ्योऽथाग्निष्टोमः स वा एष उभयतोज्योतिरुभयतौक्थ्यः

१३.६.१.[९]

यवमध्यः पञ्चरात्रो भवति  इमे वै लोकाः पुरुषमेध उभयतोज्योतिषो वा
इमे लोका अग्निनेत आदित्येनामुतस्तस्मादुभयतोज्योतिरन्नमुक्थ्य
आत्मातिरात्रस्तद्यदेता उक्थ्यावतिरात्रमभितो भवतस्तस्मादयमात्मान्नेन
परिवृढोऽथ यदेष वर्षिष्टोऽतिरात्रोऽह्नां स मध्ये तस्माद्यवमध्यो युते ह
वै द्विषन्तं भ्रातृव्यमयमेवास्ति नास्य द्विषन्भ्रातृव्य इत्याहुर्य एवं वेद



१३.६.१.[१०]

तस्यास्यमेव लोकः प्रथममहः  अयमस्य लोको वसन्त
ऋतुर्यदूर्ध्वमस्माल्लोकादर्वाचीनमन्तरिक्षात्तद्द्वितीयमहस्तद्वस्याग्रीष्म
ऋतुरन्तरिक्षमेवास्य मध्यममहरन्तरिक्षमस्य वर्षाशरदावृतू
यदूर्ध्वम्न्तरिक्षादर्वाचीनं दिवस्तच्चतुर्थमहस्तद्वस्य हेमन्त
ऋतुर्द्यौरेवास्य पञ्चममहर्द्यौरस्य शिशिर ऋतुरित्यधिदेवतम्

१३.६.१.[११]

अथाध्यात्मम्  प्रतिष्ठैवास्य प्रथममहः प्रतिष्ठो अस्य वसन्त
ऋतुर्यदूर्ध्वं प्रतिष्ठाया अवाचीनं मद्ध्यात्तद्द्वितीयमहस्तद्वस्य ग्रीष्म

ऋतुर्मध्यमेवास्य मध्यममहर्मध्यमस्य वर्षाशरदावृतू यदूर्ध्वम्
मध्यादवाचीनं शीर्ष्णस्तच्चतुर्थमहस्तद्वस्य हेमन्त ऋतुः शिर एवास्य
पञ्चममहः शिरोऽस्य शिशिर ऋतुरेवमिमे च लोका सम्वत्सरश्चात्मा च
पुरुषमेधमभिसम्पद्यन्ते सर्वं वा इमे लोकाः सर्वं सम्वत्सरः
सर्वमात्मा सर्वं पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै

१३.६.२.[१]

अथ यस्मात्पुरुषमेधो नाम  इमे वै लोकाः पूरयमेव पुरुषो योऽयं पवते
सोऽस्यां पुरि शेते तस्मात्पुरुषस्तस्य यदेषु लोकेष्वन्नं तदस्यान्नम्
मेधस्तद्यदस्यैतदन्नं मेधस्तस्मात्पुरुषमेधोऽथो
यदस्मिन्मेध्यान्पुरुषानालभते तस्माद्वेव पुरुषमेधः



१३.६.२.[२]

तान्वै मध्यमेऽहन्नालभते  अन्तरिक्षं वै मध्यममहरन्तरिक्षमु वै
सर्वेषां भूतानामायतनमथो अन्नं वा एते पशव उदरम्
मध्यममहरुदरे तदन्नं दधाति

१३.६.२.[३]

तान्वै दशदशालभते  दशाक्षरा विराड्विराडु कृत्स्नमन्नं
कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै

१३.६.२.[४]
एकादश दशत आलभते  एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यं
त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानो मध्यतः पाप्मानमपहते

१३.६.२.[५]



अष्टाचत्वारिंशतं मध्यमे यूप आलभते  अष्टाचत्वारिंशदक्षरा जगती जागताः
पशवो जगत्यैवास्मै पशूनवरुन्द्धे

१३.६.२.[६]

एकादशैकादशेतरेषु  एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यं
त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानोऽभितः पाप्मानमपहते

१३.६.२.[७]

अष्टा उत्तमानालभते  अष्टाक्षरा गायत्री ब्रह्म गायत्री तद्ब्रह्मैवैतदस्य
सर्वस्योत्तमं करोति तस्माद्ब्रह्मास्य सर्वस्योत्तममित्याहुः

१३.६.२.[८]

ते वै प्राजापत्या भवन्ति  ब्रह्म वै प्रजापतिर्ब्राह्मो हि
प्रजापतिस्तस्मात्प्राजापत्या भवन्ति

१३.६.२.[९]



स वै पशूनुपाकरिष्यन्  एतास्तिस्रः सावित्रीराहुतीर्जुहोति देव
सवितस्तत्सवितुर्वरेण्यं विश्वानि देव सवितरिति सवितारं प्रीणाति सोऽस्मै प्रीत
एतान्पुरुषान्प्रसौति तेन प्रसूतानालभते

१३.६.२.[१०]

ब्रह्मणे ब्राह्मणमालभते  ब्रह्म वै ब्राह्मणो ब्रह्मेव तद्ब्रह्मणा
समर्धयति क्षत्राय राजन्यं क्षत्रं वै राजन्यः क्षत्रमेव तत्क्षत्रेण
समर्धयति मरुद्भ्यो वैश्यम् विशो वै मरुतो विशमेव तद्विशा समर्धयति
तपसे शूद्रं तपो वै शूद्रस्तप एव तत्तपसा समर्धयत्येवमेता देवता
यथारूपं पशुभिः समर्धयति ता एनं समृद्धाः समर्धयन्ति सर्वैः कामैः

१३.६.२.[११]

आज्येन जुहोति  तेजो वा आज्यं तेजसैवास्मिंस्तत्तेजो दधात्याज्येन जुहोत्येतद्वै
देवानां प्रियं धाम यदाज्यं प्रियेणैवैनान्धाम्ना समर्धयति त एनं
समृद्धाः समर्धयन्ति सर्वैः कामैः

१३.६.२.[१२]

नियुक्तान्पुरुषान्  ब्रह्मा दक्षिणतः पुरुषेण नारायणेनाभिष्टौति सहस्रशीर्षा
पुरुषः सहस्राक्षः सहस्रपादित्येतेन षोडशर्चेन षोडशकलं वा इदं सर्वं
सर्वं पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्या
इत्थमसीत्थमसीत्युपस्तौत्येवैनमेतन्महयत्येवाथो यथैष
तथैनमेतदाह तत्पर्यग्निकृताः पशवो बभूवुरसञ्ज्ञप्ताः



१३.६.२.[१३]

अथ हैनं वागभ्युवाद  पुरुष मा सन्तिष्ठिपो यदि संस्थापयिष्यसि पुरुष
एव पुरुषमत्स्यतीति तान्पर्यग्निकृतानेवोदसृजत्तद्देवत्या आहुतीरजुहोत्ताभिस्ता
देवता अप्रीणात्ता एनं प्रीता अप्रीणन्त्सर्वैः कामैः

१३.६.२.[१४]

आज्येन जुहोति  तेजो वा आज्यं तेजसैवास्मिंस्तत्तेजो दधाति

१३.६.२.[१५]

एकादशिनैः संस्थापयति  एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यं त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानो मध्यतः पाप्मानमपहते



१३.६.२.[१६]

उदयनीयायां संस्थितायाम्  एकादश वशा अनूबन्ध्या आलभते मैत्रावरुणीर्वैश्वदेवीर्बार्हस्पत्या एतासां देवतानामाप्त्यै तद्यद्बार्हस्पत्या अन्त्या भवन्ति ब्रह्म वै बृहस्पतिस्तदु ब्रह्मण्येवान्ततः प्रतितिष्ठति

१३.६.२.[१७]

अथ वदेकादश भवन्ति  एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यं त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानो मध्यतः पाप्मानमपहते

त्रैधातव्युदवसानीयासावेव बन्धुः

१३.६.२.[१८]

अथातो दक्षिणानाम्  मध्यं प्रति राष्ट्रस्य यदन्यद्भूमेश्च ब्राह्मणस्य च वित्तात्सत्पुरुषं प्राची दिग्घोर्तुदक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुस्तदेव होतृका अन्वाभक्ताः

१३.६.२.[१९]



अथ यदि ब्राह्मणो यजेत्  सर्ववेदसं दद्यात्सर्वं वै ब्राह्मणः सर्वं सर्ववेदसं सर्वं पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै

१३.६.२.[२०]

अथात्मन्नग्नी समारोह्य उत्तरनारायणेनादित्यमुदस्थायानपेक्षमाणोऽरण्यमभिप्रेयात्तदेव मनुष्येभ्यस्तिरो भवति यद्यु ग्रामे विवत्सेदरण्योरग्नी समारोह्योत्तरनारायणेनैवादित्यमुपस्थाय गृहेषु प्रत्यवस्येदथ तान्यज्ञक्रतूनाहरेत यानभ्याप्नुयात्स वा एष न सर्वस्मा अनुवक्तव्यः सर्वं हि पुरुषमेधो नेत्सर्वस्माऽिव सर्वं ब्रवाणीति यो न्वेव ज्ञातस्तस्मै ब्रूयादथ

योऽनूचानोऽथ योऽस्य प्रियः स्यान्नैत्त्वेव सर्वस्मा इव

१३.७.१.[१]

ब्रह्म वै स्वयम्भु तपोऽतप्यत  तदैक्षत न वै तपस्यानन्त्यमस्ति हन्ताहम्
भूतेष्वात्मानं जुहवानि भूतानि चात्त्मनीति तत्सर्वेषु भूतेष्वात्मानं हुत्वा
भूतानि चात्मनि सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यम्
पर्यैत्तथैवैतद्यजमानः सर्वमेधे सर्वान्मेधान्हुत्वा सर्वाणि भूतानि
श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति



१३.७.१.[२]

स वा एष सर्वमेधो दशरात्रो यज्ञक्रतुर्भवति  दशाक्षरा विराड्विराडु
कृत्स्नमन्नं कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै तस्मिन्नग्निं पराध्यं चिनोति
परमो वा एष यज्ञक्रतूनां यत्सर्वमेधः परमेणैवैनं परमतां गमयति

१३.७.१.[३]

तस्याग्निष्टुदग्निष्टोमः प्रथममहर्भवति  अग्निर्वा
अग्निष्टुदग्निष्टोमोऽग्निमुखा उ वै सर्वे देवाः सर्वेषां देवानामाप्त्यै तस्याग्नेया
ग्रहा भवन्त्यग्निय्यः पुरोरुचः सर्वमाग्नेयमसदिति

१३.७.१.[४]

इन्द्रस्तुदुक्थ्यो द्वितीयमहर्भवति  इन्द्रो वै सर्वे देवाः सर्वेषां
देवानामाप्त्यै तस्यैन्द्रा ग्रहा भवन्त्यैन्द्र्यः पुरोरुचः सर्वमैन्द्रमसदिति

१३.७.१.[५]

सूर्यस्तुदुक्थ्यस्तृतीयमहर्भवति  सूर्यो वै सर्वे देवाः सर्वेषां देवानामाप्त्यै
सौर्या ग्रहा भवन्ति सौर्य्यः पुरोरुचः सर्वं सौर्यमसदिति



१३.७.१.[६]

वैश्वदेवश्चतुर्थमहर्भवति  विश्वे वै सर्वे देवाः सर्वेषां देवानामाप्त्यै
वैश्वदेवा ग्रहा भवन्ति वैश्वदेव्यः परोरुचः सर्वं वैश्वदेवमसदिति

१३.७.१.[७]

आश्वमेधिकं मध्यमं पञ्चममहर्भवति  तस्मिन्नश्वम्
मेध्यमालभतेऽश्वमेधस्यैवाप्त्यै

१३.७.१.[८]

पौरुषमेधिकं मध्यमं षष्ठमहर्भवति
तस्मिन्मेध्यान्पुरुषानालभते पुरुषमेधस्यैवाप्त्यै

१३.७.१.[९]

अप्तोर्यामः सप्तममहर्भवति  सर्वेषां यज्ञक्रतूनामाप्त्यै

तस्मिन्त्सर्वान्मेध्यानालभते यच्च प्राणि यच्चाप्राणं वपा वपावतं जुहोति त्वच
उत्कर्तमवपाकानां सम्व्रश्चमोषधिवनस्पतीनां प्रकिरन्ति शुष्काणां
चार्द्राणां चान्नमन्नं जुहोत्यन्नस्यान्नस्याप्त्यै सर्वं जुहोति सर्वस्मै जुहोति
सर्वस्याप्त्यज्सर्वस्यावरुद्ध्यै प्रातःसवने हुतासु वपास्वेवमेव तृतीयसवने
हुतेषु हविःषु

१३.७.१.[१०]

त्रिणवमष्टममहर्भवति  वज्रो वै त्रिणवो वज्रेण खलु वै क्षत्रं स्पृतं
तद्वज्रेणैव क्षत्रं स्पृणोति

१३.७.१.[११]

त्रयस्त्रिंशं नवममहर्भवति प्रतिष्ठा वै त्रवस्त्रिंशः प्रतिष्ठित्यै

१३.७.१.[१२]

विश्वजित्सर्वपृष्ठोऽतिरात्रो दशममहर्भवति  सर्वं वै
विश्वजित्सर्वपृष्ठोऽतिरात्रः सर्वं सर्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै



१३.७.१.[१३]

अथातो दक्षिणानाम्  मध्यं प्रति राष्ट्रस्य यदन्यद्ब्राह्मणस्य वित्तात्सभूमि
सपुरुषं प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुस्तदेव
होतृका अन्वाभक्ताः

१३.७.१.[१४]

तेन हैतेन विश्वकर्मा भौवन ईजे  तेनेष्ट्वात्यतिष्ठत्सर्वाणि भूतानीदं
सर्वमभवदतितिष्ठति सर्वाणि भूतानीदं सर्वं भवति य एवम्
विद्वान्त्सर्वमेधेन यजते यो वैतदेवं वेद

१३.७.१.[१५]

तं ह कश्यपो याजयां चकार  तदपि भूमिः श्लोकं जगौ न मा मर्त्यः कश्चन दातुमर्हति विश्वकर्मन्भौवन मन्द आसिथ उपमङ्ख्यति स्या सलिलस्य मध्ये मृषैष ते सङ्गरः कश्यपायेति

१३.८.१.[१]



अथास्मै कल्याणं कुर्वन्ति  अथास्मै श्मशानं कुर्वन्ति  गृहान्वा प्रज्ञानं वा यो वै कश्च म्रियते स शवस्तस्मा एतदन्नं करोति तस्माचवान्नं शवान्नं ह वै तच्मशानमित्याचक्षते परोक्षं श्मशा उ हैव नाम पितॄणामत्तारस्ते हामुष्मिंलोकेऽकृतश्मशानस्य साधुकृत्यामुपदम्भयन्ति तेभ्य एतदन्नं करोति तस्माच्मशान्नं श्मशान्नं ह वै तच्मशानमित्याचक्षते परोऽक्षम्

१३.८.१.[२]

तद्वै न क्षिप्रं कुर्यात्  नेन्नवमघं करवाणीति चिर एव कुर्यादघमेव तत्तिरः करोति यत्र समानानु चन स्मरेयुरश्रुतिमेव तदघं गमयति यद्यनुस्मरेयुः

१३.८.१.[३]

अयुङ्क्षेषु सम्वत्सरेषु कुर्यात्  अयुङ्गं हि पितृणामेकनक्षत्र एकनक्षत्रं हि पितृणाममावास्यायाममावास्या वा एकनक्षत्रमेको हि यद्वेतां रात्रिं सर्वाणि भूतानि सम्वसन्ति तेनो तं काममाप्नोति यः सर्वेषु नक्षत्रेषु

१३.८.१.[४]
शरदि कुर्यात्  स्वधा वै शरत्स्वधो वै पितृणामन्नं तदेनमन्ने स्वधायां दधाति माघे वा मा नोऽघं भूदिति निदाघे वा नि नोऽघं धीयाता इति



१३.८.१.[५]

चतुःस्रक्ति  देवाश्चासुराश्चोभये प्राजापत्या दिक्ष्वस्पर्धन्त ते देवाअसुरान्त्सपत्नान्भ्रातृव्यान्दिग्भ्योऽनुदन्त तेऽदिक्काः पराभवंस्तस्माद्या दैव्यः प्रजाश्चतुःस्रक्तीनि ताः श्मशानानि कुर्वतेऽथ या आसुर्यः प्राच्यास्त्वद्ये त्वत्परिमण्डलानि तेऽनुदन्त ह्येनान्दिग्भ्य उभे दिशावन्तरेण विदधाति प्राचीं च दक्षिणां चैतस्यां ह दिशि पितृलोकस्य द्वारं द्वारैवैनं पितृलोकं प्रपादयति स्रक्तिभिर्दिक्षु प्रतितिष्ठतीतरेणात्मनावन्तरदिक्षु तदेनं सर्वासु दिक्षु प्रतिष्ठापयति

१३.८.१.[६]

अथातो भूमिजोषणस्य  उदीचीनप्रवणे करोत्युदीची वै मनुष्याणां दिक्तदेनम्
मनुष्यलोक आभजत्येतद्ध वै पितरो मनुष्यलोक आभक्ता भवन्ति यदेषाम्
प्रजा भवति प्रजा हास्स्य श्रेयसी भवति

१३.८.१.[७]

दक्षिणाप्रवणे कुर्यादित्याहुः  दक्षिणाप्रवणो वै पितृलोकस्तदेनं पितृलोक
आभजतीति न तथा कुर्यादामीवद्ध नाम तच्मशानकरणं क्षिप्रे
हैषामपरोऽनुप्रैति



१३.८.१.[८]

दक्षिणाप्रवणस्य प्रत्यर्षे कुर्यादित्यु हैक आहुः  तत्प्रत्युच्छ्रितमघं भवतीति
नो एव त्!था कुर्याद्यद्वा उदीचीनप्रवणे करोति तदेव प्रत्युच्छ्रितमघं भवति

१३.८.१.[९]

यस्यैव समस्य सतः  दक्षिणतह्पुरस्तादाप एत्य संस्थायाप्रघ्नत्य एतां

दिशमभिनिष्पद्याक्षय्या अपोऽपिपद्येरंस्तत्कुर्यादन्नम्
वाऽापोऽन्नाद्यमेवास्माऽेतत्पुरस्तात्प्रत्यग्दधात्यमृतमु वा आप एषो ह जीवानाम्
दिगन्तरेण सप्तर्षीणां चोदयनमादित्यस्यचास्तमयनममृतमेव तज्जीवेषु
दधाति तद्धैतत्प्रतिमीवन्नाम श्मशानकरणं जीवेभ्यो हितं यद्वाव
जीवेभ्यो हितं तत्पितृभ्यः

१३.८.१.[१०]

कम्वति कुर्यात्  कं मेऽसदित्यथो शम्वति शं मेऽसदिति नाधिपथं
कुर्यान्नाकाशे नेदाविरघं करवाणीति



१३.८.१.[११]

गुहा सदवतापि स्यात्  तद्यद्गुहा भवत्यघमेव तद्गुहा करोत्यथ
यदवताप्यसौ वा आदित्यः पाप्मनोऽपहन्ता स एवास्मात्पाप्मानमपहन्त्यथो
आदित्यज्योतिषमेवैनं करोति

१३.८.१.[१२]

न तस्मिन्कुर्यात्  यस्येत्थादनूकाशः स्याद्याचमानं ह नाम तत्क्षिप्रे
हैषामपरोऽनुप्रैति

१३.८.१.[१३]

चित्रं पश्चात्स्यात्  प्रजा वै चित्रं चित्रं हास्य प्रजा भवति यदि चित्रं न स्यादापः पश्चाद्वोत्तरतो वा स्युरापोह्येव चित्र्!ं हैवास्य प्रजा भवति

१३.८.१.[१४]

ऊषरे करोति  रेतो वा ऊषाः प्रजननं तदेनं प्रजनन आभजत्येतद्ध वै पितरः प्रजनन आभक्ता भवन्ति यदेषां प्रजा भवति प्रजा हास्य श्रेयसी भवति



१३.८.१.[१५]

समूले  समूलं हि पितॄणां वीरिणमिश्रमेतद्धास्याः पित्र्यमनतिरिक्तमथो अघमेव तद्धद्धृ करोति

१३.८.१.[१६]

न भूमिपाशमभिविदध्यात्  न शरं नाश्मगन्धां नाध्याण्डां न पृश्निपर्णी

नाश्वत्थस्यान्तिकं कुर्यान्न विभीतकस्य न तिल्वकस्य न स्फूर्जकस्य न हरिद्रोर्न न्यग्रोधस्य ये चान्ये पापनामानो मङ्गलोपेप्सया नाम्नामेव परिहाराय

१३.८.१.[१७]

अथात आवृदेव  अग्निविधयाग्निचितः श्मशानं करोति यद्वै यजमानोऽग्निं चिनुतेऽमुष्मै तल्लोकाय यज्ञेनात्मानं संस्कुरुत एतदु ह यज्ञियं कर्मासंस्थितमा श्मशानकरणात्तद्यदग्निविधयाग्निचितः श्मशानं करोत्यग्निचित्यामेव तत्संस्थापयति



१३.८.१.[१८]

तद्वै न महत्जुर्यात्  नेन्महदघं करवाणीति यावानपक्षपुचोऽग्निस्तावत्जुर्यादित्यु हैक आहुः समानो ह्यस्यैष आत्मा यथैवाग्नेस्तथेति

१३.८.१.[१९]

पुरुषमात्रं त्वेव कुर्यात्  तथापरस्मा अवकाशं न करोति पश्चाद्वरीयः प्रजा वै पश्चात्प्रजामेव तद्वरीयसीं कुरुत उत्तरतो वर्षीयः प्रजा वा उत्तरा प्रजामेव तद्वर्षीयसीं कुरुते तद्विधायापसलविसृष्टाभि स्पन्द्याभिः पर्यातनोत्यपसलवि

पित्र्यं हि कर्म

१३.८.१.[२०]

अथोद्धन्तवा आह  स यावत्येव निवप्स्यन्त्स्यात्तावदुद्धन्यात्पुरुषमात्रं त्वेवोद्धन्यात्तथापरस्मा अवकाशं न करोत्यथो ओषधिलोको वै पितर ओषधीनां ह मूलान्युपसर्पन्त्यथो नेदस्या अन्तर्हितोऽसदिति

१३.८.२.[१]



अन्तर्धावो हैके निवपन्ति  देवाश्चासुराश्चोभये प्राजापत्या अस्मिंलोकेऽस्पर्धन्त ते देवा असुरान्त्सपत्नान्भ्रातृव्यानस्माल्लोकादनुदन्त तस्माद्या दैव्यः प्रजा अनन्तर्हितानि ताः श्मशानानि कुर्वतेऽथ या आसुर्यः प्राच्यास्त्वद्ये त्वदन्तर्हितानि ते चम्वां त्वद्यस्मिंस्त्वत्

१३.८.२.[२]

अथैनत्परिश्रिद्भिः परिश्रवति  या एवामूः परिश्रितस्ता एता यजुषा ताः परिश्रयति तूष्णीमिमा दैवं तत्पित्र्यं च व्याकरोत्यपरिमिताभिरपरिमितो ह्यसौ लोकः

१३.८.२.[३]

अथैनत्पलाशशाखया व्युदूहति  यदेवादो व्युदूहनं तदेतदपेतो यन्तु
पणयोऽसुम्ना देवपीयव इति
पणीनेवैतदसुम्नान्देवपीयूनसुररक्षसान्यस्माल्लोकादपहन्त्यस्य लोकः
सुतावत इति सुतवान्हि य ईजानोद्युभिरहोभिरक्तुभिर्व्यक्तमिति
तदेनमृतुभिश्चाहोरात्रैश्च सलोकं करोति

१३.८.२.[४]



यमो ददात्ववसानमस्मा इति  यमो ह वा अस्यामवसानस्येष्टे तमेवास्मा
अस्यामवसानं याचति तां दक्षिणोदस्यत्युदगितरां दैवं चैव तत्पित्र्यं च
व्याकरोति

१३.८.२.[५]

अथ दक्षिणतः सीरं युनक्ति  उत्तरत इत्यु हैक आहुः स यथा कामयेत तथा
कुर्याद्युङ्क्तेति सम्प्रेष्याभिमन्त्रयते सविता ते शरीरेभ्यः पृथिव्यां
लोकमिचत्विति सवितैवास्यैतचरीरेभ्यः पृथिव्यां लोकमिचति तस्मै युज्यन्तामुस्त्रिया
इत्येतस्मा उ हि कर्मण उस्त्रिया युज्यन्ते

१३.८.२.[६]

षड्गवं भवति  षड्ऋतवः सम्वत्सर ऋतुष्वेवैनमेतत्सम्वत्सरे
प्रतिष्ठायां प्रतिष्ठापयति तदपसलवि पर्याहृत्योत्तरतः प्रतीचीं प्रथमां
सीतां कृषति वायुः पुनात्विति जघनार्धेन दक्षिणाग्नेर्भ्राजसेति दक्षिणार्धेन
प्राचीं सूर्यस्य वर्चसेत्यग्रेणोदीचीम्

१३.८.२.[७]

चतस्रः सीता यजुषा कृषति  तद्यच्चतसृषु दिक्ष्वन्नं
तस्मिन्नेवैनमेतत्प्रतिष्ठापयति तद्वै यजुषाद्धा वै तद्यद्यजुरद्धो
तद्यदिमा दिशः



१३.८.२.[८]

अथात्मानं विकृषति  तद्यदेव सम्वत्सरेऽन्नं
तस्मिन्नेवैनमेतत्प्रतिष्ठापयति तूष्णीमपरिमिताभिरपरिमितोह्यसौ लोकः

१३.८.२.[९]

अथैनद्विमुञ्चति  कृत्वा तत्कर्म यस्मै कर्मण एनद्युङ्क्ते विमुच्यन्तामुस्रिया
इत्येतस्मा उ हि कर्मण उस्रिया युज्यन्ते तद्दक्षिणोदस्यत्युदगितरद्दैवं चैव
तत्पित्र्यं च व्याकरोति

१३.८.३.[१]

अथ सर्वौषधं वपति  यदेवादः सर्वौषधं
तदेतद्व्रहीभिस्तद्वपत्येकयेदं दैवं चैव तत्पित्र्यं च व्याकरोत्यश्वत्थे वो
निषदनं पर्णे वो वसतिष्कृतेति ज्योग्जीवातुमेवैभ्य एतदाशास्ते तथो
हैषामेकैकोऽपरो जरसानुप्रैति



१३.८.३.[२]

अथैनन्निवपति  इयं वै पृथिवी प्रतिष्ठास्यामेवैनमेतत्प्रतिष्ठायाम्
प्रतिष्ठापयति पुरादित्यस्योदयात्तिरैव वै पितरस्तिरैव रात्रिस्तिर एव तत्करोति
यथा कुर्वतोऽभ्युदियात्तदेनमुभयोरहोरात्रयोः प्रतिष्ठापयति

१३.८.३.[३]

सविता ते शरीराणि  मातुरुपस्थ आवपत्विति सवितैवास्यैतचरीराण्यस्यै पृथिव्यै
मातुरुपस्थ आवपति तस्यै पृथिवि शम्भवेति यथैवास्मा इयं शं

स्यादेवमेतदाह प्रजापतौ त्वा देवतायामुपोदके लोके निदधाम्यसाविति नाम गृह्णात्ययं वै लोक उपोदकस्तदेनं प्रजापतौ देवतायामुपोदके लोके निदधाति

१३.८.३.[४]

अथ कश्चिदाह  एतां दिशमनवानन्त्सृत्वा कुम्भं प्रक्षीयाणप्रेक्षमाण एहीति तत्र जपति परं मृत्यो अनु परेहि पन्थां यस्ते अन्य इतरो देवयानात् चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरानिति ज्योग्जीवातुमेवैभ्य एतदाशास्ते तथो हैषामेकैकोऽपरो जरसानुप्रैति



१३.८.३.[५]

अथैनं यथाङ्गं कल्पयति  शं वातः शं हि ते घृणिः शं ते भवन्त्विष्टकाः शं ते भवन्त्वग्नयः पार्थिवासो मा त्वाभिशूशुचन् कल्पन्तां ते दिशस्तुभ्यमापः शिवतमास्तुभ्यं भवन्तु सिन्धवः अन्तरिक्षं शिवं तुभ्यं कल्पन्तां ते दिशः सर्वा इत्येतदेवास्मै सर्वं कल्पयत्येतदस्मै शिवं करोति

१३.८.३.[६]

अथ त्रयोदश पादमात्र्य इष्टका अलक्षणाः कृता भवन्ति  या एवामूरग्नाविष्टकास्ता एता यजुषा ता उपदधाति तूष्णीमिमा दैवं चैव तत्पित्र्यं च व्याकरोति

१३.८.३.[७]

त्रयोदश भवन्ति त्रयोदश मासाः सम्वत्सर ॠतुष्वेवैनमेतत्सम्वत्सरे प्रतिष्ठायां प्रतिष्ठापयति

१३.८.३.[८]

पादमात्र्यो भवन्ति प्रतिष्ठा वै पादः प्रतिष्ठामेवास्मै करोत्यलक्षणा भवन्ति तिरैव वै पितरस्तिरैव तद्यदलक्षणं तिर एव तत्तिरः करोति



१३.८.३.[९]

तासामेकां मध्ये प्राचीमुपदधाति स आत्मा तिस्रः पुरस्तान्मूर्धस+हितास्तचिरस्तिस्रो दक्षिणतः स दक्षिणः पक्षस्तिस्र उत्तरतः स उत्तरः पक्षस्तिस्रः पश्चात्तत्पुचं सोऽस्यैष पक्षपुचवानात्मा यथैवाग्नेस्तथा

१३.८.३.[१०]

अथ प्रदरात्पुरीषमाहर्तवा आह एतद्धास्याः पित्र्यमनतिरिक्तमथो अघमेव

तद्बद्ध करोत्यस्मिन्नु हैकेऽवान्तरदेशे कर्षूं खात्वा ततोऽभ्याहारं कुर्वन्ति परिकृषन्त्यु हैके दक्षिणतः पश्चादुत्तरतस्ततोऽभ्याहारं कुर्वन्ति स यथा कामयेत तथा कुर्यात्

१३.८.३.[११]

तद्वै न महत्कुर्यात्  नेन्महदघं करवाणीति यावानुद्बाहुः पुरुषस्तावत्क्षत्रियस्य कुर्यान्मुखदघ्नं ब्राह्मणस्योपस्थदघ्नं स्त्रिया ऊरुदघ्नं वैश्यस्याष्ठीवद्दघ्नं शूद्रस्यैवम्वीर्या ह्येत इति



१३.८.३.[१२]

अधोजानु त्वेव कुर्यात्  तथापरस्मा अवकाशं न करोति तस्य क्रियमाणस्य तेजनीमुत्तरतो धारयन्ति प्रजा ह सा प्रजामेव तदुत्तरतो धारयन्ति तां न न्यस्येद्धृत्वा वैनामूढ्वा वा गृहेषूच्छ्रयेत्प्रजामेव तद्गृहेषूच्छ्रयति

१३.८.३.[१३]

कृत्वा यवान्वपति  अघं मे यवयानित्यवकाभिः प्रचादयति कं मेऽसदिति दर्भैः प्रचादयत्यरूक्षतायै

१३.८.४.[१]

अथैनचङ्कुभिः परिणिहन्ति  पालाशं पुरस्ताद्ब्रह्म वै पलाशो
ब्रह्मपुरोगवमेवैनं स्वर्गं लोकं गमयति शमीमयमुत्तरतः शम्
मेऽसदिति वारणं पश्चादघं मे वारयाता इति वृत्रशङ्कुं
दक्षिणतोऽघस्यैवानत्ययाय

१३.८.४.[२]



अथ दक्षिणतः परिवक्रे खनन्ति  ते क्षीरेण चोदकेन च पूरयन्ति ते
हैनममुष्मिंलोकेऽक्षिते कुल्ये उपधावतः सप्तोत्तरस्ता उदकेन पूरयन्ति न ह
वै सप्त स्रवन्तीरघमत्येतुमर्हत्यघस्यैवानत्ययाय

१३.८.४.[३]

अश्मनस्त्रींस्त्रीन्प्रकिरन्ति  ता अभ्युत्तरन्त्यश्मन्वती रीयते
संरभध्वमुत्तिष्ठत प्रतरत सखायः अत्रा जहीमोऽशिवा ये
असञ्छिवान्वयमुत्तरेमाभि वाजानिति यथैव यजुस्तथा बन्धुः

१३.८.४.[४]

अपामार्गैरपमृजते  अघमेव तदपमृजतेऽपाघमप किल्बिषमप कृत्यामपो रपः अपामार्ग त्वमस्मदप दुःष्वप्न्यं सुवेति यथैव यजुस्तथा बन्धुः

१३.८.४.[५]

यत्रोदकं भवति तत्स्नान्ति  सुमित्रिया न आप ओषधयः सन्त्वित्यञ्जलिनाप उपाचति वज्रो वा आपो वज्रेणैवैतन्मित्रधेयं कुरुते दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं चपरासिञ्चेत्तेनैव तं पराभावयति



१३.८.४.[६]

स यदि स्थावरा आपो भवन्ति  स्थापयन्त्येषां पाप्मानमथ यदि वहन्ति वहन्त्येवैषां पाप्मानं स्नात्वाहतानि वासांसि परिधायानडुहः पुचमन्वारभ्यायन्त्यास्नेयो वा अनड्वानग्निमुखा एव तत्पितृलोकाज्जीवलोकमभ्यायन्त्यथो अग्निर्वै पथोऽतिवोडा स एनानतिवहति

१३.८.४.[७]

उद्वयं तमसस्परीति  एतामृचं जपन्तो यन्ति तत्तमसः पितृलोकादादित्यं ज्योतिरभ्यायन्ति तेभ्य आगतेभ्य आञ्जनाभ्यञ्जने प्रयचन्त्येष ह

मानुषोऽलङ्कारस्तेनैव तं मृत्युमन्तर्दधते

१३.८.४.[८]

अथ गृहेष्वग्निं समाधाय  वारणान्परिधीन्परिधाय वारणेन स्रुवेणाग्नय आयुष्मत आहुतिं जुहोत्यग्निर्वा आ आयुष्मानायुष ईष्टे तमेवैभ्य आयुर्याचत्यग्न आयूंषि पवस इति पुरोऽनुवाक्याभाजनम्

१३.८.४.[९]



अथ जुहोति  आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि गृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमान्त्स्वाहेति यथैवैनानभिरक्षेद्यथाभिगोपायेदेवमेतदाह

१३.८.४.[१०]

तस्य पुराणोऽनड्वान्दक्षिणा  पुराणा यवाः पुराण्यासन्दी सोपबर्हणैषा न्वादिष्टा दक्षिणा कामं यथाश्रद्धं भूयसीर्दद्यादिति न्वग्निचितः

१३.८.४.[११]

अथानग्निचितः  एतदेव भूमिजोषणमेतत्समानं कर्म यदन्यदग्निकर्मणः
कुर्वादाहिताग्नेः शर्करा इत्यु हैक आहुर्या एवामूरग्न्याधेयशर्करास्ता एता इति न
कुर्यादित्येक ईश्वरो हैता अनग्निचितं सन्तप्तोरिति स यथा कामयेत तथा कुर्यात्

१३.८.४.[१२]

मर्यादाया एव लोष्टमाहृत्य  अन्तरेण निदधातीमं जीवेभ्यः परिधिं दधामि
मैषां नु गादपरो अर्थमेतं शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं
दधतां पर्वतेनेति जीवेभ्यश्चैवैतां पितृभ्यश्च मर्यादां करोत्यसम्भेदाय
तस्मादु हैतज्जीवाश्च पितरश्च न सन्दृश्यन्ते



१४.१.१.[१]

ओम्  देवा ह वै सत्त्रं निषेदुः  अग्निरिन्द्रः सोमो मखो विष्णुर्विश्वे देवा
अन्यत्रैवाश्विभ्याम्

१४.१.१.[२]

तेषां कुरुक्षेत्रं देवयजनमास  तस्मादाहुः कुरुक्षेत्रं देवानां
देवयजनमिति तस्माद्यत्र क्व च कुरुक्षेत्रस्य निगचति तदेव मन्यत इदम्
देवयजनमिति तद्धि देवानां देवयजनम्

१४.१.१.[३]

त आसत  श्रियं गचेम यशः स्यामान्नादाः स्यामेति तथो एवेमे सत्त्रमासते श्रियं गचेम यशः स्यामान्नादाः स्यामेति

१४.१.१.[४]

ते होचुः यो नः श्रमेण तपसा श्रद्धया यैञेनाहुतिभिर्यज्ञस्योद्दचम् पूर्वोऽवगचात्स नः श्रेष्ठोऽसत्तदु नः सर्वेषां सहेति तथेति



१४.१.१.[५]

तद्विष्णुः प्रथमः प्राप  स देवानां श्रेष्ठोऽभवत्तस्मादाहुर्विष्णुर्देवानां श्रेष्ठ इति

१४.१.१.[६]

स यः स विष्णुर्यज्ञः स  स यः स यज्ञोऽसौ स आदित्यस्तद्धेदं यशो विष्नुर्न शशाक संयन्तु तदिदमप्येतर्हि नैव सर्वैव यशः शक्नोति संयन्तुम्

१४.१.१.[७]

स तिसृधन्वमादायापचक्राम  स धनुरार्त्न्या शिर उपस्तभ्य तस्थौ तं देवा अनभिधृष्णुवन्तः समन्तं परिण्यविशन्त

१४.१.१.[८]

ता ह वम्र्य ऊचुः  इमा वै वम्र्यो यदुपदीका योऽस्य ज्यामप्यद्यात्किमस्मै प्रयचेतेत्यन्नाद्यमस्मै प्रयचेमापि धन्वन्नपोऽधिगचेत्तथास्मै सर्वमन्नाद्यं प्रयचेमेति तथेति

१४.१.१.[९]



तस्योपपरासृत्य  ज्यामपिजक्षुस्तस्यां चिन्नायां धनुरार्त्न्यौ विष्फुरन्त्यौ विष्णोः शिरः प्रचिचिदतुः

१४.१.१.[१०]

तद्घृङ्ङिति पपात  तत्पतित्वासावादित्योऽभवदथेतरः प्राङेव प्रावृज्यत तद्यद्घृङ्ङित्यपतत्तस्माद्घर्मोऽथ यत्प्रावृज्यत तस्मात्प्रवर्ग्यः

१४.१.१.[११]

ते देवा अब्रुवन्  महान्बत नो वीरोऽदादीति तस्मान्महावीरस्तस्य यो रसो

व्यक्षरत्तं पाणिभिः सम्ममृजुस्तस्मात्सम्म्राट्

१४.१.१.[१२]

तं देवा अभ्यमृज्यन्त  यथा वित्तिं वेत्स्यमाना एवं तमिन्द्रः प्रथमः प्राप
तमन्वङ्गमनुन्यपद्यत तं पर्यगृह्णात्तं परिगृह्येदं
यशोऽभवद्यदिदमिन्द्रो यशो यशो ह भवति य एवं वेद

१४.१.१.[१३]

स उ एव मखः स विष्णुः  तत इन्द्रो मखवानभवन्मखवान्ह वै तम्
मघवानित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवाः



१४.१.१.[१४]

ताभ्यो वम्रीभ्योऽन्नाद्यं प्रायचन्  आपो वै सर्वमन्नं
ताभिर्हीदमभिक्नूयमिवादन्ति यदिदं किम्वदन्ति

१४.१.१.[१५]

अथेमं विष्णुं यज्ञं त्रेधा व्यभजन्त  वसवः प्रातःसवनं रुद्रा
माध्यन्दिनं सवनमादित्यास्तृतीयसवनम्

१४.१.१.[१६]

अग्निः प्रातःसवनम्  इन्द्रो माध्यन्दिनं सवनं विश्वे देवास्तृतीयसवनम्

१४.१.१.[१७]

गायत्री प्रतःसवनम्  त्रिष्टुम्माध्यन्दिनं सवनं जगती तृतीयसवनं
तेनापशीर्ष्णा यज्ञेन देवा अर्चन्तः श्राम्यन्तश्चेरुः

१४.१.१.[१८]



दध्यङ्ह वा आथर्वणः  एतं शुक्रमेतं यज्ञं विदां चकार
यथायथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवति

१४.१.१.[१९]

स हेन्द्रेणोक्त आस  एतं चेदन्यस्मा अनुब्रूयास्तत एव ते शिरश्छिन्द्यामिति

१४.१.१.[२०]

तदु हाश्विनोरनुश्रुतमास  दध्यङ्ङ् ह वा आथर्वण एतं शुक्रमेतं यज्ञम्
वेद यथायथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवति

१४.१.१.[२१]

तौ हेत्योचतुः  उप त्वायावेति किमनुवक्ष्यमाणावित्येतं शुक्रमेतं यज्ञम्
यथायथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवतीति

१४.१.१.[२२]

स होवाच  इन्द्रेण वा उक्तोऽस्म्येतं चेदन्यस्मा अनुब्रूयास्तत एव ते शिरश्छिन्द्यामिति
तस्माद्वै बिभेमि यद्वै मे स शिरो न छिन्द्यान्न वामुपनेष्य इति



१४.१.१.[२३]

तौ होचतुः  आवां त्वा तस्मात्त्रास्यावह इति कथं मा त्रास्येथे इति यदा ना
उपनेष्यसेऽथ ते शिरश्छित्त्वान्यत्रापनिधास्यावोऽथाश्वस्य शिर आहृत्य तत्ते
प्रतिधास्यावस्तेन नावनुवक्ष्यसि स यदा नावनुवक्ष्यस्यथ ते शिरश्छेत्स्यत्यथ
ते स्वं शिर आहृत्य तत्ते प्रतिधास्याव इति तथेति

१४.१.१.[२४]

तौ होपनिन्ये  तौ यदोपनिन्येऽथास्य शिरश्छित्त्वान्यत्रापनिदधतुरथाश्वस्य शिर
आहृत्य तद्धास्य प्रतिदधतुस्तेन हाभ्यामनूवाच स यदाभ्यामनूवाचाथास्य
तदिन्द्रः शिरश्चिच्छेदाथास्य स्वं शिर आहृत्य तद्धास्य प्रतिदधतुः

१४.१.१.[२५]

तस्मादेतदृषिणाभ्यनूक्तम्  दध्यङ्ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेत्ययतं तदुवाचेति हैवैतदुक्तम्

१४.१.१.[२६]
तन्न सर्वस्मा अनुब्रूयात्  एनस्यं हि तदथो नेन्म इन्द्रः शिरश्छिनददिति यो न्वेव ज्ञातस्तस्मै ब्रूयादथ योऽनूचानोऽथ योऽस्य प्रियः स्यान्न त्वेव सर्वस्मा इव



१४.१.१.[२७]

सम्वत्सरवासिनेऽनुब्रूयात्  एष वै सम्वत्सरो य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मात्सम्वत्सरवासिनेऽनुब्रूयात्

१४.१.१.[२८]

तिस्रो रात्रीर्व्रतं चरति  त्रयो वा ऋतवः सम्वत्सरस्य सम्वत्सर एष य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मात्तिस्रो रात्रीर्व्रतं चरति

१४.१.१.[२९]

तप्तमाचामति  तपस्व्यनुब्रवा इत्यमांसाश्यनुब्रूते तपस्व्यनुब्रवा इति

१४.१.१.[३०]

अमृन्मयपायी  अस्ति वा अस्यां संसृष्टमिव यदस्यामनृतं वदति
तस्मादमृन्मयदायी

१४.१.१.[३१]

अशूद्रोचिष्टी  एष वै धर्मो य एष तपति सैषा श्रीः सत्यं ज्योतिरनृतं स्त्री शूद्रः
श्वा कृष्णः शकुनिस्तानि न प्रेक्षेत नेच्छ्रियं च पाप्मानं च नेज्ज्योतिश्च तमश्च
नेत्सत्यानृते संसृजानीति



१४.१.१.[३२]

अथैष वाव यशः  य एष तपति तद्यत्तदादित्यो यशो यज्ञो हैव
तद्यशस्तद्यत्तद्यज्ञो यशो यजमानो हैव तद्यशस्तद्यत्तद्यजमानो यश ऋत्विजो
हैव तद्यशस्तद्यत्तदृत्विजो यशो दक्षिणा हैव तद्यशस्तस्माद्यामस्मै
दक्षिणामानयेयुर्न ता इत्सद्योऽन्यस्मा अतिदिशेन्नेद्यन्मेदं यश
आगंस्तत्सद्योऽन्यस्मा अतिदिशानीति श्वो वैव भूते द्व्यहे वा तदात्मन्येवैतद्यशः
कृत्वा यदेव तद्भवति तत्स ददाति हिरण्यं गां वासोऽश्वं वा

१४.१.१.[३३]

अथैतद्वा   आयुरेतज्ज्योतिः प्रविशति य एतमनु वा ब्रूतेभक्षयति वा तस्य
व्रतचर्या नातपति प्रचादयेत नेदेतस्मात्तिरोऽसानीति नातपति
निष्ठीवेन्नेदेतमभिनिष्ठीवानीति नातपति प्रस्त्रावयेत नेदेतमभिप्रस्त्रावया इति
यावद्वा एष आतपति तावानेष नेदेतमेतैर्हिनसानीत्यवज्योत्य
रात्रावश्नीयात्तदेतदस्य रूपं क्रियते य एष तपति तदु होवाचासुरिरेकं ह वै
देवा व्रतं चरन्ति यत्सत्यं तस्मादु सत्यमेव वदेत्

१४.१.२.[१]
स वै सम्भारान्त्सम्भरति  स यद्वा एनानित्थाच्चेत्थाच्च सम्भरति
तत्सम्भाराणां सम्भारत्वं स वै यत्रयत्र यज्ञस्य न्यक्तं ततस्ततः
सम्भरति



१४.१.२.[२]

कृष्णाजिनं सम्भरति  यज्ञो वै कृष्णजिनं यज्ञ एवैनमेतत्सम्भरति
लोमतश्चन्दांसि वै लोमानि चन्दःस्वेवैनमेतत्सम्भरत्युत्तरत उदीची हि
मनुष्याणां दिक्प्राचीनग्रीवे तद्धि देवत्रा

१४.१.२.[३]

अभ्र्या  वज्रो वा अभ्रिर्वीर्यं वै वज्रो वीर्येणैवैनमेतत्समर्धयति कृत्स्नं
करोति

१४.१.२.[४]

औदुम्बरी भवति  ऊर्ग्वै रस उदुम्बर ऊर्जैवैनमेतद्रसेन समर्धयति
कृत्स्नं करोति

१४.१.२.[५]

अथो वैकङ्कती  प्रजापतिर्यां प्रथमामाहुतिमजुहोत्स हुत्वा यत्र न्यमृष्ट ततो
विकङ्कतः समभवद्यज्ञो वा आहुतिर्यज्ञो विकङ्कतो
यज्ञेनैवैनमेतत्समर्धयति कृत्स्नं करोति



१४.१.२.[६]

अरत्निमात्री भवति  बाहुर्वा अरत्निर्बाहुनो वै वीर्यं क्रियते वीर्यसम्मितैव
तद्भवति वीर्येणैवैनमेतत्समर्धयति कृत्स्नं करोति

१४.१.२.[७]

तामादत्ते  देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे
नारिरसीत्यसावेव बन्धुः

१४.१.२.[८]

तां सव्ये पाणौ कृत्वा  दक्षिणेनाभिमृश्य जपति युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः  वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिरित्यसावेव बन्धुः

१४.१.२.[९]

अथ मृत्पिण्डं परिगृह्णाति  अभ्र्या च दक्षिणतो हस्तेन च हस्तेनैवोत्तरतो देवी द्यावापृथिवी इति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स इमे द्यावापृथिवी अगचद्यन्मृदियं तद्यदापोऽसौ तन्मृदश्चापां च महावीराः कृता भवन्ति तेनैवैनमेतद्रसेन समर्धयति कृत्स्नं करोति तस्मादाह देवी द्यावापृथिवी इति मखस्य वामद्य शिरो राध्यासमिति यज्ञो वै मखो यज्ञस्य वामद्य शिरो राध्यासमित्येवैतदाह देवयजने पृथिव्या इति देवयजने हि पृथिव्यै सम्भरति मखाय त्वा मखस्य त्वा शीर्ष्ण इति यज्ञो वै मखो यज्ञाय त्वा यज्ञस्य त्वा शीर्ष्ण इत्येवैतदाह



१४.१.२.[१०]

अथ वल्मीकवपाम्  देव्यो वम्र्य इत्येता वा एतदकुर्वत यथायथैतद्यज्ञस्य शिरोऽचिद्यत ताभिरेवैनमेतत्समर्धयति कृत्स्नं करोति भूतस्य प्रथमजा इतीयं वै पृथिवी भूतस्य प्रथमजा तदनयैवैनमेतत्समर्धयति कृत्स्नं करोति मखस्य वोऽद्य शिरो राध्यासं देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्ण इत्यसावेव बन्धुः

१४.१.२.[११]

अथ वराहविहतम्  इयत्यग्र आसीदितीयती ह वा इयमग्रे  पृथिव्यास प्रादेशमात्री तामेमूष इति वराह उज्जघान सोऽस्याः पतिः प्रजापतिस्तेनैवैनमेतन्मिथुनेन प्रियेण धाम्ना समर्धयति कृत्स्नं करोति मखस्य तेऽद्य शिरो राध्यासं देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णे इत्यसावेव बन्धुः

१४.१.२.[१२]

अथादारान्  इन्द्रस्यौज स्थेति यत्र वा एनमिन्द्र ओजसा पर्यगृह्णात्तदस्य परिगृहीतस्य रसो व्यक्षरत्स पूयन्निवाशेत सोऽब्रवीदादीर्येव बत म एष रसोऽस्तौषीदिति तस्मादादारा अथ यत्पूयन्निवाशेत तस्मात्पूतीकास्तस्मादग्नावाहुतिरिवाभ्याहिता ज्वलन्ति तस्मादु सुरभयो यज्ञस्य हि रसात्सम्भूता अथ यदेनं तदिन्द्र ओजसा पर्यगृह्णात्तस्मादाहेन्द्रस्यौज स्थेति मखस्य वोऽद्य शिरो राध्यासं देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णे इत्यसावेव बन्धुः

१४.१.२.[१३]

अथाजाक्षीरम्  यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत्ततोऽजा समभवत्तयैवैनमेतच्चुचा समर्धयति कृत्स्नं करोति मखाय त्वा मखस्य त्वा शीर्ष्णे इत्यसावेव बन्धुः

१४.१.२.[१४]

तान्वा एतान्पञ्च सम्भारान्सम्भरति  पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्तवः सम्वत्सरस्य सम्वत्सर एष य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तान्त्सम्भृतानभिमृशति मखाय त्वा मखस्य त्वा शीर्ष्ण इत्यसावेव बन्धुः

१४.१.२.[१५]

अथोत्तरतः परिश्रितं भवति  तदभिप्रयन्तो जपन्ति प्रैतु ब्रह्मणस्पतिरित्येष वै ब्रह्मणस्पतिर्य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह प्रैतु ब्रह्मणस्पतिरिति प्रदेव्येतु सूनृतेति देवी ह्येषा सूनृताच्छा वीरं नर्यम् पङ्क्तिराधसमित्युपस्तौत्येवैनमेतन्महयत्येव देवा यज्ञं नयन्तु न इति सर्वानेवास्मा एतद्देवानभिगोप्तॄ!न्करोति



१४.१.२.[१६]

परिश्रितं भवति  एतद्वै देवा अबिभयुर्यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति तस्मा एतां पुरं पर्यश्रयंस्तथैवास्मा अयमेतां पुरं परिश्रयति

१४.१.२.[१७]

अथ खरे सादयति  मखाय त्वा मखस्य त्वा शीर्ष्ण इत्यसावेव बन्धुरथ मृत्पिण्डमपादाय महावीरं करोति मखाय त्वा मखस्य त्वा शीर्ष्ण इत्यसावेव बन्धुः प्रादेशमात्रं प्रादेशमात्रमिव हि शिरो मध्ये सङ्गृहीतं मध्ये सङ्गृहीतमिव हि शिरोऽथास्योपरिष्टात्त्र्यङ्गुलं मुखमुन्नयति

नासिकामेवास्मिन्नेतद्दधाति तं निष्ठितमभिमृशति मखस्य शिरोऽसीति मखस्य ह्येतत्सौम्यस्य शिर एवमितरौ तूष्णीं पिन्वने तूष्णीं रौहिणकपाले

१४.१.२.[१८]

प्रजापतिर्वा एष यज्ञो भवति  उभयं वा एतत्प्रजापतिर्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्यद्यजुषा करोति यदेवास्य निरुक्तं परिमितं रूपं तदस्य तेन संस्करोत्यथ यत्तूष्णीं यदेवास्यानिरुक्तमपरिमितं रूपं तदस्य तेन संस्करोति स ह वा एतं सर्वं कृत्स्नं प्रजापतिं संस्करोति य एवम् विद्वानेतदेवं करोत्यथोपशयायै पिण्डं परिशिनष्टि प्रायश्चित्तिभ्यः



१४.१.२.[१९]

अथ गवेधुकाभिर्हिन्वति  यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तत एता ओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्धयति कृत्स्नं करोति मखाय त्वा मखस्य त्वा शीर्ष्ण इत्यसावेव बन्धुरेवमितरौ तूष्णीं पिन्वने तूष्णीं रौहिणकपाले

१४.१.२.[२०]

अथैनान्धूपयति  अश्वस्य त्वा वृष्णः शक्ना धूपयामीति वृषा वा अश्वो वीर्यं वै वृषा वीर्येणैवैनमेतत्समर्धयति कृत्स्नं करोति देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्ण इत्यसावेव बन्धुरेवमितरौ तूष्णीं पिन्वने तूष्नीं रौहिणकपाले

१४.१.२.[२१]

अथैनाञ्च्रपयति  श्रृतं हि देवानामिष्क्वाभिः श्रपयत्येत वा एतदकुर्वत यथायथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्धयति कृत्स्नं करोति तदु येनैव सुश्रृताः स्युस्तेन श्रपयेदथ पचनमवधाय महावीरमवदधाति मखाय त्वा मखस्य त्वा शीर्ष्णे इत्यसावेव बन्धुरेवमितरौ तूष्णीं पिन्वने तूष्णीं रौहिणकपाले तान्दिवैवोपवपेद्दिवोद्वपेदहर्हि देवानाम्

१४.१.२.[२२]

स उद्वपति  ऋजवे त्वेत्यसौ वै लोक ऋजुः सत्यं ह्यृजुः सत्यमेष य एष तवपत्येष उ प्रथमः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाहर्जवे त्वेति



१४.१.२.[२३]

साधवे त्वेति  अयं वै साधुर्योऽयं पवत एष हीमांलोकान्त्सिद्धोऽनुपवत एष उ द्वितीयः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह साधवे त्वेति

१४.१.२.[२४]

सुक्षित्यै त्वेति  अयं वै लोकः सुक्षितिरस्मिन्हि लोके सर्वाणि भूतानि क्षियन्त्यथो अग्निर्वै सुक्षितिरग्निर्ह्येवास्मिंलोके सर्वाणि भूतानि क्षियत्येष उ तृतीयः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह सुक्षित्यै त्वेति तूष्णीं पिन्वने तूष्णीं

रौहिणकपाले

१४.१.२.[२५]

अथैनानाचृणत्ति  अजायै पयसा मखाय त्वा मखस्य त्वा शीर्ष्ण इत्यसावेव
बन्धुरेवमितरौ तूष्णीं पिन्वने तूष्णीं रौहिणकपाले

१४.१.२.[२६]

अथैतद्वै  आयुरेतज्ज्योतिः प्रविशति य एतमनु वा ब्रूते भक्षयति वा तस्य
व्रतचर्या या सृष्टौ



१४.१.३.[१]

स यदैतदातिथ्येन प्रचरति  अथ प्रवर्ग्येण चरिष्यन्पुरोपसदोऽग्रेण
गार्हपत्यं प्राचः कुशान्त्संस्तीर्य द्वन्द्वं पात्राण्युपसादयत्युपयमनीम्
महावीरं परीषासौ पिन्वने रौहिणकपाले रौहिणहवन्यौ स्रुचौ यदु
चान्यद्भवति तद्दश दशाक्षरा वै विराड्विराड्वै
यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयत्यथ यद्वन्द्वम्द्वन्द्वं वै
वीर्यं यदा वै द्वौ संरभेते अथ तौ वीर्यं कुरुतो द्वन्द्वं वै मिथुनम्
प्रजननं मिथुनेनैवैनमेतत्प्रजननेन समर्धयति कृत्स्नं करोति

१४.१.३.[२]

अथाध्वर्युः  प्रोक्षणीरादायोपोत्तिष्ठन्नाह ब्रह्मन्प्रचरिष्यामो
होतरभिष्टुहीति ब्रह्मा वै यज्ञस्य दक्षिणत आस्तेऽभिगोप्ता
तमेवैतदाहाप्रमत्त आस्स्व यज्ञस्य शिरः प्रतिधास्याम इति होतरभिष्टुहीति यज्ञो
वै होता तमेवैतदाह यज्ञस्य शिरः प्रतिधेहीति प्रतिपद्यते होता

१४.१.३.[३]

ब्रह्म जज्ञानं प्रथमं पुरस्तादिति  असौ वा आदित्यो ब्रह्माहरहः
पुरस्ताज्जायत एष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह ब्रह्म जज्ञानम्
प्रथमं पुरस्तादित्यथ प्रोक्षत्यसावेव बन्धुः



१४.१.३.[४]

स प्रोक्षति  यमाय त्वेत्येष वै यमो य एष तपत्येष हीदं सर्वं
यमयत्येतेनेदं सर्वं यतमेष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह
यमाय त्वेति

१४.१.३.[५]

मखाय त्वेति  एष वै मखो य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति
तस्मादाह मखाय त्वेति

१४.१.३.[६]

सूर्यस्य त्वा तपस इति  एष वै सूर्यो य एष तपत्येष प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह सूर्यस्य त्वा तपस इति

१४.१.३.[७]

पूर्वया द्वारा स्थूणां निर्हृत्य  दक्षिणतो निमिन्वन्ति यथैनां होताभिष्टुवन्परापश्येद्यज्ञो वै होता स एवास्यामेतद्यज्ञं प्रतिदधाति तथैषा घर्मं पिन्वते



१४.१.३.[८]

अग्रेणाहवनीयम्  सम्राडासन्दीं पर्याहृत्य दक्षिणतः प्राचीमासादयत्युत्तरां राजासन्द्यै

१४.१.३.[९]

औदुम्बरी भवति  ऊर्ग्वै रस उदुम्बर ऊर्जैवैनमेतद्रसेन समर्धयति कृत्स्नं करोति

१४.१.३.[१०]

अंसदघ्ना भवति  अंसयोर्वा इदं शिरः प्रतिष्थितं तदंसयोरेवैतच्चिरः प्रतिष्ठापयति

१४.१.३.[११]

बाल्वजीभी रज्जुभिर्व्युता भवति  यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तत एता ओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्धयति कृत्स्नं करोति

१४.१.३.[१२]

अथ यदुत्तरत आसादयति  यज्ञो वै सोमः शिरः प्रवर्ग्य उत्तरं वै शिरस्तस्मादुत्तरत आसादयत्यथो राजा वै सोमः सम्राड्प्रवर्ग्य उत्तरं वै राज्यात्साम्राज्यं तस्मादुत्तरत आसादयति



१४.१.३.[१३]

स यत्रैतां होतान्वाह  अञ्जन्ति यं प्रथयन्तो न विप्रा इति तदेतं प्रचरणीयम् महावीरमाज्येन समनक्ति देवस्त्वा सविता मध्वानक्त्विति सविता वै देवानाम् प्रसविता सर्वम्वा इदं मधु यदिदं किं च तदेनमनेन सर्वेण समनक्ति तदस्मै सविता प्रसविता प्रसौति तस्मादाह देवस्त्वा सविता मध्वानक्त्विति

१४.१.३.[१४]

अथोत्तरतः सिकता उपकीर्णा भवन्ति  तद्रजतं हिरण्यमधस्तादुपास्यति पृथिव्याः

संस्पृशस्पाहीत्येतद्वै देवा अबिभयुर्यद्वै न इममधस्ताद्रक्षांसि नाष्ट्रा न
हन्युरित्यग्नेर्वा एतद्रेतो यद्धिरण्यं नाष्ट्राणां रक्षसामपहत्या अथो पृथिव्यु
ह वा एतस्माद्बिभयां चकार यद्वै मायं तप्तः शुशुचानो न हिंस्यादिति तदेवास्या
एतदन्तर्दधाति रजतं भवति रजतैव हीयं पृथिवी

१४.१.३.[१५]

स यत्रैतां होतान्वाह  संसीदस्व महां महाम्   असीति तदुभयत आदीप्ता
मौञ्जाः प्रलवा भवन्ति तानुपास्य तेषु प्रवृणक्ति यज्ञस्य शीर्षच्छिन्नस्य रसो
व्यक्षरत्तत एता ओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्धयति कृत्स्नं
करोति



१४.१.३.[१६]

अथ यदुभयत आदीप्ता भवन्ति  सर्वाभ्य एवैतद्दिग्भ्यो रक्षांसि नाष्ट्रा
अपहन्ति तस्मिन्प्रवृज्यमाने पत्नी शिरः प्रोर्णुते तप्तो वा एष शुशुचानो भवति
नेन्मेऽयं तप्तः शुशुचानश्चक्षुः प्रमुष्णादिति

१४.१.३.[१७]

स प्रवृणक्ति  अर्चिरसि शोचिरसि तपोऽसीत्येष वै घर्मो य एष तपति सर्वं वा
एतदेष तदेतमेवैतत्प्रीणाति तस्मादाहार्चिरसि शोचिरसि तपोऽसीति

१४.१.३.[१८]

अथास्यामाशिष आशास्त   इयं वै यज्ञोऽस्यामेवैतदाशिष आशास्ते ता अस्मा इयं सर्वाः समर्धयति

१४.१.३.[१९]

अनाधृष्टा पुरस्तादिति  अनाधृष्टा ह्येषा
पुरस्ताद्रक्षोभिर्नाष्ट्राभिरग्नेराधिपत्य इत्यग्निमेवास्या अधिपतिं करोति
नाष्ट्राणां रक्षसामपहत्या आयुर्मे दा इत्यायुरेवात्मन्धत्ते तथो सर्वमायुरेति



१४.१.३.[२०]

पुत्रवती दक्षिणत इति  नात्र तिरोहितमिवास्तीन्द्रस्याधिपत्य इतीन्द्रमेवास्या
अधिपतिं करोति नाष्ट्राणां रक्षसामपहत्यै प्रजां मे दा इति प्रजामेव
पशूनात्मन्धत्ते तथो ह पुत्री पशुमान्भवति

१४.१.३.[२१]

सुषदा पश्चादिव्ति  नात्र तिरोहितमिवास्ति देवस्य सवितुराधिपत्य इति देवमेवास्यै
सवितारमधिपतिं करोति नाष्ट्राणां रक्षसामपहत्यै चक्षुर्मे दा इति
चक्षुरेवात्मन्धत्ते तथो ह चक्षुष्मान्भवति

१४.१.३.[२२]

आश्रुतिरुत्तरत इति  आश्रावयन्नुत्तरत इत्येवैतदाह धातुराधिपत्य इति धातारमेवास्या अधिपतिं करोति नाष्ट्राणां रक्षसामपहत्यै रायस्पोषं मे दा इति रयिमेव पुष्टिमात्मन्धत्ते तथो ह रयिमान्पुष्टिमान्भवति

१४.१.३.[२३]

विधृतिरुपरिष्टादिति  विधारयन्नुपरिष्टादित्येवैतदाह बृहस्पतेराधिपत्य इति बृहस्पतिमेवास्या अधिपतिं करोति नाष्ट्राणां रक्षसामपहत्या ओजो मे दा इत्योज एवात्मन्धत्ते तथौजस्वी बलवान्भवति



१४.१.३.[२४]

अथ दक्षिणत उत्तानेन पाणिना निह्नुते विश्वाभ्यो मा नाष्ट्राभ्यस्पाहीति सर्वाभ्यो मार्तिभ्यो गोपायेत्येवैतदाह यज्ञस्य शीर्षचिन्नस्य [रसो व्यक्षरत्स] पितॄ!नगचत्त्रया वै पितरस्तैरेवैनमेतत्समर्धयति कृत्स्नं करोति

१४.१.३.[२५]

अथेमामभिमृश्य जपति  मनोरश्वासीत्यश्वा ह वा इयं भूत्वा मनुमुवाह सोऽस्याः पतिः प्रजापतिस्तेनैवैनमेतन्मिथुनेन प्रियेण धाम्ना समर्धयति कृत्स्नं करोति

१४.१.३.[२६]

अथ वैकङ्कतौ शकलौ परिश्रयति प्राञ्चौ  स्वाहा मरुद्भिः परिश्रीयस्वेत्यवरं स्वाहाकारं करोति परां देवतामेष वै स्वाहाकारो य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादवरं स्वाहाकारं करोति दरां देवताम्

१४.१.३.[२७]

मरुद्भिः परिश्रीयस्वेति  विशो वै मरुतो विशैवैतत्क्षत्रं परिबृंहति तदिदं क्षत्रमुभयतो विशा परिबृढं तूष्णीमुदञ्चौ तूष्णीं प्राञ्चौ तूष्णीमुदञ्चौ तूष्णीं प्राञ्चौ



१४.१.३.[२८]

त्रयोदश सम्पादयति  त्रयोदश वै मासाः सम्वत्सरस्य सम्वत्सर एष य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मात्त्रयोदश सम्पादयति

१४.१.३.[२९]

अथ सुवर्णं हिरण्यमुपरिष्टान्निदधाति  दिवः संस्पृशस्पाहीत्येतद्वै देवा अबिभयुर्यद्वै न इममुपरिष्टाद्रक्षांसि नाष्ट्रा न हन्युरित्यग्नेर्वा एतद्रेतो यद्धिरण्यं नाष्ट्राणां रक्षसामपहत्या अथो द्यौर्ह वा एतस्माद्बिभयां चकार यद्वै मायं तप्तः शुशुचानो न हिंस्यादिति तदेवास्या एतदन्तर्दधाति हरितम्

भवति हरिणीव हि द्यौः

१४.१.३.[३०]

अथ धवित्रैराधूनोति  मधु मध्विति त्रिः प्राणो वै मधु प्राणमेवास्मिन्नेतद्दधाति त्रीणि भवन्ति त्रयो वै प्राणाः प्राण उदानो व्यानस्तानेवास्मिन्नेतद्दधाति

१४.१.३.[३१]

अथापसलवि त्रिर्धून्वन्ति  यज्ञस्य शीर्षच्छिन्नस्य [रसो व्यक्षरत्स] पितॄ!नगच्छत्त्रया वै पितरस्तैरेवैनमेतत्समीरयति



१४.१.३.[३२]

अप वा एतेभ्यःप्रणाः क्रामन्ति  ये यज्ञे धुवनं तन्वते पुनः प्रसलवि त्रिर्धून्वन्ति षड्सम्पद्यन्ते षड्वा इमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति श्रपयन्ति रौहिणौ स यदार्चिर्जायते अथ हिरण्यमादत्ते

१४.१.३.[३३]

स यत्रैतां होतान्वाह  अप्नस्वतीमश्विना वाचमस्मे इति तदध्वर्युरुपोत्तिष्ठन्नाह रुचितो घर्म इति स यदि रुचितः स्याच्छ्रेयान्यजमानो

भविष्यतीति विद्यादथ यद्यरुचितः पापीयान्भविष्यतीति विद्यादथ यदि नैव रुचितो नारुचितो नैव श्रेयन्न पापीयान्भविष्यतीति विद्याद्यथा न्वेव रुचितः स्यात्तथा धवितव्यः

१४.१.३.[३४]

अथैतद्वै आग्रेतज्ज्योतिः प्रविशति य एतमनुवा ब्रूते भक्ष् ।यति वा तस्य व्रतचर्या या सृस् ।त् ।ौ

१४.१.४.[१]



स यदैतदध्वर्युः उपोत्तिष्ठन्नाह रुचितो घर्म इति तदुपोत्थायावकाशैरुपतिष्ठन्ते प्राणा वा अवकाशाः प्राणानेवास्मिन्नेतद्दधाति षडुपतिष्ठन्ते षड्वा इमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति

१४.१.४.[२]

गर्भो देवानामिति एष वै गर्भो देवानां य एष तपत्येष हीदं सर्वं गृह्णात्येतेनेदं सर्वं गृभीतमेष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह गर्भो देवानामिति

१४.१.४.[३]

पिता मतीनामिति  पिता ह्येष मतीनां पतिः प्रजानामिति पतिर्ह्येष प्रजानाम्

१४.१.४.[४]

सं देवो देवेन सवित्रागतेति सं हि देवो देवेन सवित्रागत सं सूर्येण रोचत इति सं हि सूर्येण रोचते

१४.१.४.[५]

समग्निरग्निनागतेति  सं ह्यग्निरग्निनागत सं दैवेन सवित्रेति सं हि दैवेन सवित्रागत सं सूर्येणारोचिष्टेति सं हि सूर्येणारोचिष्ट



१४.१.४.[६]

स्वाहा समग्निस्तपसागतेति सं ह्यग्निस्तपसागतावरं स्वाहाकारं करोति परां देवतामसावेव बन्धुः सं दैव्येन सवित्रेति सं हि दैव्येन सवित्रागत सं सूर्येणारूरुचतेति सं हि सूर्येणारूरुचत

१४.१.४.[७]

ते वा एते त्रयोऽवकाशा भवन्ति  त्रयो वै प्राणाः प्राण उदानो व्यानस्तेनैवास्मिन्नेतद्दधाति

१४.१.४.[८]

धर्ता दिवो विभाति तपसस्पृथिव्यामिति  धर्ता ह्येष दिवो विभाति तपसस्पृथिव्यां धर्ता देवो देवानाममर्त्यस्तपोजा इति धर्ता ह्येष देवो देवानाममर्त्यस्तपोजा वाचमस्मे नियच्छ देवायुवमिति यज्ञो वै वाग्यज्ञमस्मभ्यं प्रयच्छ येन देवान्प्रीणामेत्येवैतदाह

१४.१.४.[९]

अपश्यं गोपामनिपद्यमानमिति  एष वै गोपा य एष तपत्येष हीदं सर्वं गोपायत्यथो न निपद्यते तस्मादाहापश्यं गोपामनिपद्यमानमिति



१४.१.४.[१०]

आ च परा च पथिभिश्चरन्तमिति  आ च ह्येष परा च देवैः पथिभिश्चरति स सध्रीचीः स विशूचीर्वसान इति सध्रीचीश्च ह्येष विशूचीश्च दिशो वस्तेऽथो रश्मीनावरीवर्त्ति भुवनेष्वन्तरिति पुनःपुनर्ह्येष एषु लोकेषु वरीवर्त्यमानश्चरति

१४.१.४.[११]

विश्वासां भुवां पते  विश्वस्य मनसस्पते विश्वस्य वचसस्पते सर्वस्य वचसस्पत इत्येतस्य सर्वस्य पत इत्येतद्देवश्रुत्त्वं देव घर्म देवो

देवान्पाहीति नात्र तिरोहितमिवास्ति

१४.१.४.[१२]

अत्र प्रावीरनु वां देववीतय इति  अश्विनावेवैतदाहाश्विनौ वा एतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणाति तस्मादाहात्र प्रावीरनु वां देववीतय इति

१४.१.४.[१३]

मधु माध्वीभ्यां मधु माधूचीभ्यामिति  दध्यङ्ङ् वा आभ्यामाथर्वणो मधु नाम ब्राह्मणमुवाच तदेनयोः प्रियं धाम तदेवैनयोरेतेनोपगचति तस्मादाह मधु माध्वीभ्यां मधु माधूचीभ्यामिति



१४.१.४.[१४]

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा  ऊर्ध्वो अध्वरं दिवि देवेषु धेहीति नात्र तिरोहितमिवास्ति

१४.१.४.[१५]

पिता नोऽसि पिता नो बोधीति  एष वै पिता य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह पिता नोऽसि पिता नो बोधीति नमस्ते अस्तु मा मा हिंसीरित्याशिषमेवैतदाशास्ते

१४.१.४.[१६]

अथ पत्न्यै शिरोऽपवृत्य  महावीरमीक्षमाणां वाचयति त्वष्टृमन्तस्त्वा सपेमेति
वृषा वै प्रवर्ग्यो योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते

१४.१.४.[१७]

अथैतद्वै  आयुरेत्ज्ज्योतिः प्रविशति य एतमु वा ब्रूतेभ्क्ष्  ।यति वा तस्य ब्रतचर्या या
सृस् ।त्  ।ौ



१४.२.१.[१]

अथातो रोहिणौ जुहोति  अहः केतुना जुषतां सुज्योतिर्ज्योतिषा स्वाहेत्युभावेतेन यजुषा
प्राता रात्रिः केतुना जुषतां सुज्योतिर्ज्योतिषा स्वाहेत्युभावेतेन यजुषा सायम्

१४.२.१.[२]

तद्यद्रोहिणौ जुहोति  अग्निश्च ह वा आदित्यश्च रौहिणावेताभ्यां हि देवताभ्यां
यजमानाः स्वर्गं लोकं रोहन्ति

१४.२.१.[३]

अथो अहोरात्रे वै रौहिणौ  आदित्यः प्रवर्ग्योऽमुं तदादित्यमहोरात्राभ्याम्
परिगृह्णाति तस्मादेषोऽहोरात्राभ्यां परिगृहीतः

१४.२.१.[४]

अथो इमौ वै लोकौ रौहिणौ  आदित्यः प्रवर्ग्योऽमुं तदादित्यमाभ्यां लोकाभ्याम्
परिगृह्णाति तस्मादेष आभ्यां लोकाभ्यां परिगृहीतः

१४.२.१.[५]



अथो चक्षुषी वै रौहिणौ  शिरः प्रवर्ग्यः शीर्षंस्तच्चक्षुर्दधाति

१४.२.१.[६]

अथ रज्जुमादत्ते  देवेभ्यस्त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो
हस्ताभ्यामाददे रास्नासीत्यसावेव बन्धुः

१४.२.१.[७]

अथ गामाह्वयति  जघनेन गार्हपत्यं यन्निड एह्यदित एहि सरस्वत्येहीतीडा हि
गौरदितिर्हि गौः सरस्वती हि गौरथो तैराह्वयति नाम्नासावेह्यसावेहीति त्रिः

१४.२.१.[८]

तामागतामभिदधाति  अदित्यै रास्नासीन्द्राण्या उष्णीष इतीन्द्राणी ह वा इन्द्रस्य प्रिया पत्नी तस्या उष्णीषो विश्वरूपतमः सोऽसीति तदाह तमेवैनमेतत्करोति

१४.२.१.[९]

अथ वत्समुपार्जति  पूषासीत्ययं वै पूषा योयं पवत एष हीदं सर्वम् पुष्यत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह पूषासीति



१४.२.१.[१०]

अथोन्नयति  घर्माय दीष्वेत्येष वा अत्र घर्मो रसो भवति यमेषा पिन्वते तस्यै दयस्वेत्येवैतदाह

१४.२.१.[११]
अथ पिन्वने पिन्वयति  अश्विभ्यां पिन्वस्वेत्यश्विनावेवैतदाहाश्विनौ वा एतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणाति तस्मादाहाश्विभ्यां पिन्वस्वेति

१४.२.१.[१२]

सरस्वत्यै पिन्वस्वेति  वाग्वै सरस्वती वाचा वा एतदश्विनौ यज्ञस्य शिरः

प्रत्यधत्तां तावेवैतत्प्रीणाति तस्मादाह सरस्वत्यै पिन्वस्वेति

१४.२.१.[१३]

इन्द्राय पिन्वस्वेति  इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता
तयैवैतदश्विनौ यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणाति तस्मादाहेन्द्राय
पिन्वस्वेति

१४.२.१.[१४]

अथ विप्रुषोऽभिमन्त्रयते  स्वाहेन्द्रवत्स्वाहेन्द्रवदितीन्द्रो वै यज्ञस्य देवता सा
यैव यज्ञस्य देवता तामेवैतत्प्रीणाति तस्मादाह स्वाहेन्द्रवत्स्वाहेन्द्रवदिति
त्रिष्कृत्व आह त्रिवृद्धि यज्ञोऽवरं स्वाहाकारं करोति परां देवतामसावेव बन्धुः



१४.२.१.[१५]

अथास्यै स्तनमभिपद्यते  यस्ते स्तनः शशयो यो मयोभूरिति यस्ते स्तनो निहितो
गुहायामित्येवैतदाह यो रत्नधा वसुविद्यः सुदत्र इति यो धनानां दाता
वसुवित्पणाव्य इत्येवैतदाह येन विश्वा पुष्यसि वार्याणीति येन सर्वान्देवान्त्सर्वाणि
भूतानि बिभर्षीत्येवैतदाह सरस्वति तमिह धातवेऽकरिति वाग्वै सरस्वती सैषा
घर्मदुघा यज्ञो वै वाग्यज्ञमस्मभ्यं प्रयच येन
देवान्प्रीणामेत्येवैतदाहाथ
गार्हपत्यस्यार्धमैत्युर्वन्तरिक्षमन्वेमीत्यसावेव बन्धुः

१४.२.१.[१६]

अथ शफावादत्ते  गायत्रं चन्दोऽसि त्रैष्टुभं चन्दोऽसीति गायत्रेण
चैवैनावेतत्त्रैष्टुभेन च चन्दसादत्ते द्यावापृथिवीभ्यां त्वा परिगृह्णामीतीमे
वै द्यावापृथिवी परीशासावादित्यः प्रवर्ग्योऽमुं तदादित्यमाभ्यां
द्यावापृथिवीभ्यां परिगृह्णात्यथ मौञ्जेन वेदेनोपमार्ष्ट्यसावेव बन्धुः

१४.२.१.[१७]

अथोदयमन्योपगृह्णाति  अन्तरिक्षेणोपयचामीत्यन्तरिक्षं वा
उपयमन्यन्तरिक्षेण हीदं सर्वमुपयतमत्>ओ उदरं वा उपयमन्युदरेण
हीदं सर्वमन्नाद्यमुपयतं तस्मादाहान्तरिक्षेणोपयचामीति



१४.२.१.[१८]

अथाजाक्षीरमानयति  तप्तो वा एष शुशुचानो भवति तमेवैतचमयति तस्मिञ्चान्ते
गोक्षीरमानयति

१४.२.१.[१९]

इन्द्राश्विनेति  इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता
तामेवैतत्प्रीणात्यश्विनेत्यश्विनावेवैतदाहाश्विनौ वा एतद्यज्ञस्य शिरः प्रत्यधत्तां
तावेवैतत्प्रीणाति तस्मादाहेन्द्राश्विनेति

१४.२.१.[२०]

मधुनः सारघस्येति  एतद्वै मधु सारघं घर्मं पातेति रसम्
पातेत्येवैतदाह वसव इत्येते वै वसव एते हीदं सर्वं वासयन्ते यजत वाडिति
तद्यथा वषट्कृतं हुतमेवमस्यैतद्भवति

१४.२.१.[२१]

स्वाहा सूर्यस्य रश्मये वृष्टिवनय इति सूर्यस्य ह वा एको रश्मिर्वृष्टिवनिर्नाम
येनेमाः सर्वाः प्रजा बिभर्ति तमेवैतत्प्रीणाति तस्मादाह स्वाहा सूर्यस्य रश्मये
वृष्टिवनय इत्यवरं स्वाहाकारं करोति परां देवतामसावेव बन्धुः



१४.२.१.[२२]

अथैतद्वै आयुरेतज्ज्योतिः प्रविशति य एतमनु वा ब्रूते भक्ष्  ।यति वा तस्य
व्रतचर्या यं! सृस्।त्  ।ौ

१४.२.२.[१]

स यत्रैतां होतान्वाह  प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृतेति तदध्वर्युः प्राङुदायन्वातनामानि जुहोत्येतद्वै देवा अबिभयुर्यद्वै न इममन्तरा रक्षांसि नाष्ट्रा न हन्युरिति तमेतत्पुरैवाहवनीयात्स्वाहाकारेणाजुहवुस्तं हुतमेव सन्तमग्नाव जुहवुस्तथो एवैनमेष एतत्पुरैवाहवनीयात्स्वाहाकारेण जुहोति तं हुतमेव सन्तमग्नौ जुहोति

१४.२.२.[२]

समुद्राय त्वा वाताय स्वाहेति  अयं वै समुद्रो योऽयं पवत एतस्माद्वै समुद्रात्सर्वे देवाः सर्वाणि भूतानि समुद्रवन्ति तस्मा एवैनं जुहोति तस्मादाह समुद्राय त्वा वाताय स्वाहा



१४.२.२.[३]

सरिराय त्वा वाताय स्वाहेति  अयं वै सरिरो योऽयं पवत एतस्माद्वै सरिरात्सर्वे देवाः सर्वाणि भूतानि सहेरते तस्मा एवैनं जुहोति तस्मादाह सरिराय त्वा वाताय स्वाहा

१४.२.२.[४]

अनाधृष्याय त्वा वाताय स्वाहाप्रतिधृष्याय त्वा वाताय स्वाहेति  अयं वा अनाधृष्योऽप्रतिधृष्यो योऽयं पवते तस्मा एवैनं जुहोति तस्मादाहानाधृष्याय त्वा वाताय स्वाहाप्रतिधृष्याय त्वा वाताय स्वाहेति

१४.२.२.[५]

अवस्यवे त्वा वाताय स्वाहाशिमिदाय त्वा वाताय स्वाहेति  अयं वा अवस्युरशिमिदो योऽयम्
पवते तस्मा एवैनं जुहोति तस्मादाहावस्यवे त्वा वाताय स्वाहाशिमिदाय त्वा वाताय स्वाहेति

१४.२.२.[६]

इन्द्राय त्वा वसुमते रुद्रवते स्वाहेति  अयं वा इन्द्रो योऽयं पवते तस्मा एवैनं
जुहोति तस्मादाहेन्द्राय त्वेति वसुमते रुद्रवत इति तदिन्द्रमेवानु वसूंश्च
रुद्रांश्चाभजत्यथो प्रातःसवनस्य चैवैतन्माध्यन्दिनस्य च सवनस्य रूपं
क्रियते



१४.२.२.[७]

इन्द्राय त्वादित्यवते स्वाहेति  अयं वा इन्द्रो योऽयं पवते तस्मा एवैनं जुहोति
तस्मादाहेन्द्राय त्वेत्यादित्यवत इति तदिन्द्रमेवान्वादित्यानाभजत्यथो
तृतीयसवनस्यैवैतद्रूपं क्रियते

१४.२.२.[८]

इन्द्राय त्वाभिमातिघ्ने स्वाहेति  अयं वा इन्द्रो योऽयं पवते तस्मा एवैनं जुहोति
तस्मादाहेन्द्राय त्वेत्यभिमातिघ्न इति सपत्नो वाअभिमातिरिन्द्राय त्वा सपत्नघ्न

इत्येवैतदाह सोऽस्योद्धारो यथा श्रेष्ठस्योद्धार एवमस्यैष ऋते देवेभ्यः

१४.२.२.[९]

सवित्रे त्व ऋभुमते विभुमते वाजवते स्वाहेति  अयं वै सविता योऽयं पवते तस्मा एवैनं जुहोति तस्मादाह सवित्रे त्वेत्यृभुमते विभुमते वाजवत इति तदस्मिन्विश्वान्देवानन्वाभजति

१४.२.२.[१०]

बृहस्पतये त्वा विश्वदेव्यावते स्वाहेति  अयं वै बृहस्पतिर्योऽयं पवते तस्मा एवैनं जुहोति तस्मादाह बृहस्पतये त्वेति विश्वदेव्यावत इति तदस्मिन्विश्वान्त्सर्वान्देवान्न्वाभजति



१४.२.२.[११]

यमाय त्वाङ्गिरस्वते पितृमते स्वाहेति  अयं वै यमो योऽयं पवते तस्मा एवैनं जुहोति तस्मादाह यमाय त्वेत्यङ्गिरस्वते पितृमत इति यज्ञस्य शीर्षचिन्नस्य [रसो व्यक्षरत्स] पितृ!नगचत्तया वै पितरस्तानेवैतदन्वाभजति

१४.२.२.[१२]

द्वादशैतानि नामानि भवन्ति  द्वादश वै मासाः सम्वत्सरस्य सम्वत्सर एष य

एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्माद्द्वादश भवन्ति

१४.२.२.[१३]

अथोपयमन्या महावीर आनयति  स्वाहा घर्मायेत्येष वै घर्मो य एष
तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह स्वाहा घर्मायेत्यवरं
स्वाहाकारं करोति परां देवतामसावेव बन्धुः

१४.२.२.[१४]

आनीते जपति  स्वाहा घर्मः पित्र इति यज्ञस्य शीर्षच्छिन्नस्य [रसो व्यक्षरत्स]
पितॄ!नगचत्त्रया वै पितरस्तानेवैतत्प्रीणात्यवरं स्वाहाकारं करोति परां
देवतामसावेव बन्धुः



१४.२.२.[१५]

नानुवाक्यामन्वाह  सकृदु ह्येव पराञ्चः
पितरस्तस्मान्नानुवाक्यामन्वाहातिक्रम्याश्राव्याह घर्मस्य यजेति वषट्कृते जुहोति

१४.२.२.[१६]

विश्वा आशा दक्षिणसदिति सर्वा आशा दक्षिणसदित्येवैतदाह विश्वान्देवानयाडिहेति
सर्वान्देवानयाक्षीदिहेत्येवैतदाह स्वाहाकृतस्य घर्मस्य मधोः

पिबतमश्विनेत्यश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्तां
तावेवैतत्प्रीणात्यवरं स्वाहाकारं करोति परां देवतामसावेव बन्धुः

१४.२.२.[१७]

अथ हुत्वोर्ध्वमुत्कम्पयति  दिवि धा इमं यज्ञमिमं यज्ञं दिवि धा इत्यसौ
वा आदित्यो घर्मो यज्ञो दिवि वा एष हितो दिवि प्रतिष्ठितस्तमेवैतत्प्रीणाति तस्मादाह
दिवि धा इमं यज्ञमिमं यैञं दिवि धा इत्यनुवषङ्कृते जुहोति

१४.२.२.[१८]



स्वाहाग्नये यज्ञियायेति  तत्स्विष्टकृद्भाजनमग्निर्हि स्विष्टकृचं यजुर्भ्य इति
यजुर्भिर्ह्येषोऽस्मिंलोके प्रतिष्ठितस्तान्येवैतत्प्रीणात्यवरं स्वाहाकारं करोति
परां देवतामसावेव बन्धुः

१४.२.२.[१९]

अथ ब्रह्मानुमन्त्रयते  ब्रह्मा वा ऋत्विजां भिषक्तमस्तद्य एवर्त्विजाम्
भिषक्तमस्तेनैवैनमेतद्यज्ञं भिषज्यति

१४.२.२.[२०]
अश्विना घर्मं पातमिति  अश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः
प्रत्यधत्तां तावेवैतत्प्रीणाति

१४.२.२.[२१]

हार्द्वानमहर्दिवाभिरूतिभिरिति  अनिरुक्तमन् रुक्तो वै प्रजापतिः
प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञं भिषज्यति

१४.२.२.[२२]

तन्त्रायिण इति  एष वै तन्त्रायी य एष तपत्येष
हीमांलोकांस्तन्त्रमिवानुसञ्चरत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह
तन्त्रायिण इति



१४.२.२.[२३]

नमो द्यावापृथिवीभ्यामिति  तदाभ्यां द्यावापृथिवीभ्यां निह्नुते ययोरिदं
सर्वमधि

१४.२.२.[२४]

अथ यजमानः  यज्ञो वै यजमानो यज्ञेनेवैतद्यज्ञं भिषज्यति

१४.२.२.[२५]

अपातामश्विना घर्ममिति  अश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणाति

१४.२.२.[२६]

अनुद्यावापृथिवी अमंसातामिति  तदिमे द्यावापृथिवी आह ययोरिदं सर्वमधीहैव रातयः सन्त्विितीहैव नो धनानि सन्त्वित्येवैतदाह

१४.२.२.[२७]



अथ पिन्वमानमनुमन्त्रयते  इषे पिन्वस्वेति वृष्ट्यै तदाह यदाहेषे पिन्वस्वेत्यूर्जे पिन्वस्वेति यो वृष्टादूर्ग्रसो जायते तस्मै तदाह ब्रह्मणे पिन्वस्वेति तद्ब्रह्मण आह क्षत्राय पिन्वस्वेति तत्क्षत्रायाह द्यावापृथिवीभ्यां पिन्वस्वेति तदाभ्यां द्यावापृथिवीभ्यामाह ययोरिदं सर्वमधि

१४.२.२.[२८]

स यदूर्ध्वः पिन्वते  तद्यजमानाय पिन्वते यत्प्राङ्ङ्देवेभ्यो यद्दक्षिणा तत्पितृभ्यो यत्प्रत्यङ्ङ्त्पशुभ्यो यदुदङ्ङ्त्प्रजाया अनपराद्धं न्वेव यजमानस्योर्ध्वो ह्येव पिन्वत्याथ यां दिशं पिन्वते तां पिन्वते यदा शाम्यन्ति विप्रुषः

१४.२.२.[२९]

अथ प्राङिवोदङ्ङुत्क्रामति धर्मासि सुधर्मेत्येष वै धर्मो य एष तपत्येष
हीदं सर्वं धारयत्येतेनेदं सर्वं धृतमेष उ
प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह धर्मासि सुधर्मेति

१४.२.२.[३०]

अथ खरे सादयति  अमेन्यस्मे नृम्णानि धारयेत्यक्रुध्यन्नो  धनानि
धारयेत्येवैतदाह ब्रह्म धारय क्षत्रं धारय विशं धारयेत्येतत्सर्वं
धारयेत्येवैतदाह



१४.२.२.[३१]

अथ शाकलैर्जुहोति  प्राणा वै शाकलाः प्राणानेवास्मिन्नेतद्दधाति

१४.२.२.[३२]

स्वाहा पूष्णे शरस इति  अयं वै पूषा योऽयं पवत एष हीदं सर्वं पुष्यत्येष
उ प्राणः प्राणमेवास्मिन्नेतद्दधाति तस्मादाह स्वाहा पूष्णे शरस इत्यवरं
स्वाहाकारं करोति परां देवतामसावेव बन्धुर्हुत्वा मध्यमे परिधाउपश्रयति

१४.२.२.[३३]

स्वाहा ग्रावभ्य इति  प्राणा वै ग्रावाणः प्राणानेवास्मिन्नेतद्दधाति हुत्वा मध्यमे परिधाउपश्रयति

१४.२.२.[३४]

स्वाहा प्रतिरवेभ्य इति  प्राणा वै प्रतिरवाः प्राणान्हीदं सर्वं प्रतिरतम् प्राणानेवास्मिन्नेतद्दधाति हुत्वा मध्यमे परिधाउपश्रयति

१४.२.२.[३५]

स्वाहा पितृभ्य ऊर्ध्वबर्हिर्भ्यो घर्मपावभ्य इति  अहुत्वैवोदङ्ङीक्षमाणो दक्षिणार्धे बर्हिष उपगूहति यज्ञस्य शीर्षच्>इन्नस्य [रसो व्यक्षरत्स] पितृ!नगचत्त्नया वै पितरस्तानेवैतत्प्रीणात्यथ यन्न प्रेक्षते सकृदु ह्येव पराञ्चः पितरः

१४.२.२.[३६]

स्वाहा द्यावापृथिवीभ्यामिति  प्राणोदानौ वै द्यावापृथिवीप्राणोदानावेवास्मिन्नेतद्दधाति हुत्वा मध्यमे परिद्>आउपश्रयति

१४.२.२.[३७]

स्वाहा विश्वेभ्यो देवेभ्य इति  प्राणा वै विश्वे देवाः प्राणानेवास्मिन्नेतद्दधाति

हुत्वा
मध्यमे परिधाउपश्रयति

१४.२.२.[३८]

स्वाहा रुद्राय रुद्रहूतय इति  अहुत्वैव दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयचति
तं स उत्तरतः शालाया उदञ्चं निरस्यत्येषा ह्येतस्य देवस्य
दिक्श्वायामेवैनमेतद्दिशि प्रीणात्यथ यन्न प्रेक्षते नेन्मा रुद्रो हिनसदिति

१४.२.२.[३९]

सप्तैता आहुतयो भ्वन्ति  सप्त वा इमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति



१४.२.२.[४०]

अथ महावीरादुपयमन्यां प्रत्यानयति  स्वाहा सं ज्योतिषा ज्योतिरिति ज्योतिर्वा
इतरस्मिन्पयो भवति ज्योतिरितरस्यां ते ह्येतदुभे ज्योतिषी सङ्गचेते अवरं
स्वाहाकारं करोति परां देवतामसावेव बन्दुः

१४.२.२.[४१]

अथ रौहिणौ जुहोति  अहः केतुना जुषतां सुज्योतिर्ज्योतिषा स्वाहेत्यसावेव बन्धू
रात्रिः केतुना जुषतां सुज्योतिर्ज्योतिषा स्वाहेत्यसावेव बन्धुः

१४.२.२.[४२]

अथ यजमानाय घर्मोचिष्टं प्रयचति  स उपहवमिष्ट्वा भक्षयति मधु हुतमिन्द्रतमे अग्नाविति मधु हुतमिन्द्रियवत्तमेऽग्नावित्येवैतदाहाश्याम ते देव घर्म नमस्ते अस्तु मा मा हिंसीरित्याशिषमेवैतदाशास्ते

१४.२.२.[४३]

अथ दक्षिणतः सिकता उपकीर्णा भवन्ति  तन्मार्जयन्ते य एव मार्जालीये बन्धुः सोऽत्रानुप्रहरति शाकलानथोपसदा चरन्त्येतदु यज्ञस्य शिरः संस्कृतं यथायथैनं तदश्विनौ प्रत्यधत्ताम्



१४.२.२.[४४]

तं न प्रथमयज्ञे प्रवृञ्ज्यात्  एनस्यं हि तदथो नेन्म इन्द्रः शिरश्चिनददिति द्वितीये वैव तृतीये वापशीर्ष्णा ह्येवाग्रे यज्ञेन देवा अर्चन्तः श्राम्यन्तश्चेरुस्तस्माद्द्वितीये वैव तृतीये वाथो तप्तो वा एष शुशुचानो भवति

१४.२.२.[४५]

तं यत्प्रथमय]ञे प्रवृञ्ज्यात्  एषोऽस्य तप्तः शुशुचानः प्रजां च पशूंश्च प्रदहेदथो आयुः प्रमायुको यजमानः स्यात्तस्माद्द्वितीये वैव तृतीये वा

१४.२.२.[४६]

तं न सर्वस्मा इव प्रवृञ्ज्यात्  सर्वं वै प्रवर्ग्यो नेत्सर्वस्मा इव सर्वं करवाणीति यो न्वेव ज्ञतस्तस्मै प्रवृञ्ज्याद्यो वास्य प्रियः स्याद्यो वानूचानोऽनूक्तेनैनं प्राप्नुयात्

१४.२.२.[४७]

सहस्रे प्रवृञ्ज्यात्  सर्वं वै सहस्रं सर्वमेष सर्ववेदसे प्रवृञ्ज्यात्सर्वं वै सर्ववेदसं सर्वमेष विश्वजिति सर्वपृष्ठे प्रवृञ्ज्यात्सर्वं वै विश्वजित्सर्वपृष्ठः सर्वमेष वाजपेये राजसूये प्रवृञ्ज्यात्सर्वं हि तत्सत्त्रे प्रवृञ्ज्यात्सर्वं वै सत्त्रं सर्वमेष एतान्यस्य प्रवर्जनान्यतो नान्यत्र



१४.२.२.[४८]

तदाहुः  यदपशिरा अप्रवर्ग्योऽथ केनास्याग्निहोत्रं शीर्षण्वद्भवतीत्याहवनीयेनेति ब्रूयात्कथं दर्शपूर्णमासावित्याज्येन च पुरोडाशेन चेति ब्रूयात्कथं चातुर्मास्यानीति पयस्ययेति ब्रूयात्कथं पशुबन्ध इति पशुना च पुरोडाशेन चेति ब्रूयात्कथं सौम्योऽध्वर इति हविर्धानेनेति ब्रूयात्

१४.२.२.[४९]

अथो आहुः  यज्ञस्य शीर्षच्छिन्नस्य शिर एतद्देवाः प्रत्यदधुर्यदातिथ्यं न ह वा

अस्यापशीर्ष्णा केन चन यज्ञेनेष्टं भवति य एवमेतद्वेद

१४.२.२.[५०]

तदाहुः  यत्प्रणीताः प्रणयन्ति यज्ञेऽथ कस्मादत्र न प्रणयतीति शिरो वा एतद्यज्ञास्य यत्प्रणीताः शिरः प्रवर्ग्यो नेचिरसा शिरोऽभ्यारोहयाणीति

१४.२.२.[५१]

तदाहुः  यत्प्रयाजानुयाजा अन्यत्र भवन्त्यथ कस्मादत्र न भवन्तीति प्राणा वै प्रयाजानुयाजाः प्राणा अवकाशाः प्राणाः शाकल  नेत्प्राणैः प्राणानभ्यारोहयाणीति



१४.२.२.[५२]

तदाहुः  यदाज्यभागावन्यत्र जुह्वत्यथ कस्मादत्र न जुहोतीति चक्षुषी वा एते यज्ञस्य यदाज्यभागौ चक्षुषी रौहिणौ नेच्चक्षुषा चक्षुरभ्यारोहयाणीति

१४.२.२.[५३]

तदाहुः  यद्वानस्पत्यैर्देवेभ्यो जुह्वत्यथ कस्मादेतं म्मयेनैव जुहोतीति यज्ञस्य शीर्षचिन्नस्य रसो व्यक्षरत्स इमे द्यावापृथिवी अगचद्यन्मृदियं तद्यदापोऽसौ तन्मृदश्चापां च महावीराः कृता भवन्ति तेनैवैनमेतद्रसेन

समर्धयति कृत्स्नं करोति

१४.२.२.[५४]

स यद्वानस्पत्यः स्यात्  प्रदह्येत यद्धिरण्मयः स्यात्प्रलीयेत यल्लोहमयः स्यात्प्रसिच्येत यदयस्मयः स्यात्प्रदहेत्परीशासावथैष एवैतस्माअतिष्ठत तस्मादेतं मृन्मयेनैव जुहोति

१४.२.२.[५५]

अथैतद्वै आयुरेतज्ज्योतिः प्रविशति य एतमनु वा ब्रूते भक्ष् ।यति वा तस्य व्रतचर्या या सूस्।त् ।ौ



१४.३.१.[१]

स वै तृतीयेऽहन्  षष्ठे वा द्वादशे वा प्रवर्ग्योपसदौ समस्य प्रवर्ग्यमुत्सादयत्युत्सन्नमिव हीदं शिरस्तद्यदेतमभितो भवति तत्सर्वं समादायाग्रेण शालामन्तर्वेद्युपसमायन्ति

१४.३.१.[२]

अथाग्नीध्रः  आहवनीये त्रीञ्चालाकानुपकल्पयते तेषामेकमुज्ज्वलय्य मुखदघ्ने धारयमाणो जुहोति यज्ञस्य शीर्षचिन्नस्य शुगुदक्रामत्सेमांलोकानाविशत्तयैवैनमेतचुचा समर्धयति कृत्स्नं करोति

१४.३.१.[३]

अथ यन्मुखदघ्ने उपरीव वै तद्यन्मुखदघ्नमुपरीव तद्यदसौ
लोकस्तद्यामुं लोकं शुगाविशत्तयैवैनमेतचुचा समर्धयति कृत्स्नं करोति

१४.३.१.[४]

या ते घर्म दिव्या शुगिति यैव दिव्या शुग्या गायत्र्यांहविर्धान इति यैव गायत्र्यां
हविर्धाने सा त आप्यायतां निष्ट्यायतां तस्यै ते स्वाहेति नात्र तिरोहितमिवास्ति



१४.३.१.[५]

अथ द्वितीयमुज्ज्वलय्य नाभिदघ्ने धारयमाणो जुहोति मध्यमिव वै
तद्यन्नाभिदघ्नं मध्यमिवान्तरिक्षलोकस्तद्यान्तरिक्षलोकं
शुगाविशत्तयैवैनमेतचुचा समर्धयति कृत्स्नं करोति

१४.३.१.[६]

याते घर्मान्तरिक्षे शुगिति यैवान्तरिक्षे शुग्या त्रिष्टुभ्याग्नीध्र इति यैव
त्रिष्टुभ्याग्नीध्रे सा त आप्यायतां निष्ट्यायतां तस्यै ते स्वाहेति नात्र तिरोहितमिवास्ति

१४.३.१.[७]

अथ तृतीयमभ्याधाय  तस्मिन्नासीनो जुहोत्यधैव वै तद्यदासीनोऽधैव तद्यदयं लोकस्तद्येमं लोकं शुगाविशत्तयैवैनमेतचुचा समर्धयति कृत्स्नं करोति

१४.३.१.[८]

या ते घर्म पृथिव्यां शुगिति  यैव पृथिव्यां शुग्या जगत्यां सदस्येति यैव जगत्यां सदस्या सा तआप्यायतां निष्ट्यायतां तस्यै ते स्वाहेति नात्र तिरोहितमिवास्ति



१४.३.१.[९]

अथोपनिष्क्रामति  क्षत्रस्य त्वा परस्पायेत्येतद्वै दैवं क्षत्रं य एष तपत्यस्य त्वा मानुषस्य क्षत्रस्य परस्पत्वायेत्येवैतदाह ब्रह्मणस्तन्वम् पाहीति ब्रह्मण आत्मानं गोपायेत्येवैतदाह विशस्त्वा धर्मणा वयमिति यज्ञो वै विड्यज्ञस्य त्वारिष्ट्या इत्येवैतदामानुक्रामाम सुविताय नव्यस इति यज्ञस्य त्वारिष्ट्या अह्वलाया इत्येवैतदाह

१४.३.१.[१०]

अथाह साम गायेति  साम ब्रूहीति वा गायेति त्वेव ब्रूयाद्गायन्ति हि साम तद्यत्साम गायति नेदिमान्बहिर्धा यज्ञाचरीरान्नाष्ट्रा रक्षांसि हिनसन्निति साम हि नाष्ट्राणां रक्षसामपहन्ता

१४.३.१.[११]

आग्नेय्यां गायति  अग्निर्हि रक्षसामपहन्तातिचन्दसि गायत्येषा वै सर्वाणि चन्दांसि यदव्तिचन्दास्तस्मादतिचन्दसि गायति

१४.३.१.[१२]

स गायति  अग्निष्टपति प्रतिदहत्यहावोऽहाव इति तन्नाष्ट्रा वै तद्रक्षांस्यतोऽपहन्ति



१४.३.१.[१३]

त उदञ्चो निष्क्रामन्ति  जग्>अनेन चात्वालमग्रेणाग्नीध्रमेषा हि यज्ञस्य द्वाः स यस्यां ततो दिश्यापो भवन्ति तद्यन्ति

१४.३.१.[१४]

तं वै परिष्यन्द उत्सादयेत्  तप्तो वा एष शुशुचानो भवति तं यदस्यामुत्सादयेदिमामस्य शुगृचेद्यदप्सूत्सादयेदपोऽस्य शुगृचेदथ यत्परिष्यन्द उत्सादयति तथो ह नैवापो हिनस्ति नेमां यदहाप्सु न प्रास्यति तेनापो न हिनस्त्यथ यत्समन्तमापः परियन्ति शान्तिर्वा आपस्तेनो इमां न हिनस्ति तस्मात्परिष्यन्द उत्सादयेत्

१४.३.१.[१५]
उत्तरवेदौ त्वेवोत्सादयेत्  यज्ञो वा उत्तरवेदिः शिरः प्रवर्ग्यो यज्ञ एवतच्चिरः प्रतिदधाति

१४.३.१.[१६]

उत्तरनाभ्या संस्पृष्टम्  प्रथमं प्रवर्ग्यमुत्सादयति वाग्वा उत्तरनाभिः शिरः प्रवर्ग्यः शीर्षंस्तद्वाचं दधाति



१४.३.१.[१७]

चतुःस्रक्तिरिति  एष वै चतुःस्रक्तिर्य एष तपति दिशो ह्येतस्य स्रक्तयस्तस्मादाह चतुःस्रक्तिरिति

१४.३.१.[१८]

नाभिर्ऋतस्य सप्रथा इति  सत्यं वा ऋतं सत्यस्य नाभिः सप्रथा इत्येवैतदाह स नो विश्वायुः सप्रथा इति स नः सर्वायुः सप्रथा इत्येवैतदाह

१४.३.१.[१९]

अप द्वेषो अप ह्वर इति  नात्र तिरोहितमिवास्त्यन्यव्रतस्य सश्चिमेत्यन्यद्वा एतस्य व्रतमन्यन्मनुष्याणां तस्मादाहान्यव्रतस्य सश्चिमेत्येवमितरौ प्राञ्चौ तत्त्रिवृत्त्रिवृद्धीदं शिरः

१४.३.१.[२०]

पुरस्तादुपशयां मृदम्  मांसमेवास्मिन्नेतद्दधाति तदभितः परीशासौ बाहू एवास्मिन्नेतद्दधात्यभितः परे रौहिणहवन्यौ स्रुचौ हस्तावेवास्मिन्नेतद्दधाति

१४.३.१.[२१]



उत्तरतोऽभ्रिम्  तद्धि तस्या आयतनं दक्षिणतः सम्राडासन्दीं तद्धि तस्या आयतनमुत्तरतः कृष्णाजिनं तद्धि तस्यायतनं सर्वतो धवित्राणि प्राणा वै धवित्राणि प्राणानेवास्मिन्नेतद्दद्>आति त्रीणि भवन्ति त्रयो वै प्राणाः प्रण उदानो व्यानस्तानेवास्मिन्नेतद्दधाति

१४.३.१.[२२]

अथैतद्रज्जुसन्दानम्  उपयमन्यामाधाय पश्चात्प्राचीमासादयत्युदरमेवास्मिन्नेतद्दधाति तदभितः पिन्वने आण्डावेवास्मिन्नेतद्दधात्याण्डाभ्यां हि वृषा पिन्वते पश्चात्स्थूणामयूखमूरू एवास्मिन्नेतद्दधाति पश्चाद्रौहिणकपाले जानुनी एवास्मिन्नेतद्दधाति ते यदेककपाले भवत एककपाले इव हीमे जानुनी पश्चाद्धृष्टी

पादावेवास्मिन्नेतद्दधाति पादाभ्यां हि धृष्टं प्रहरत्युत्तरतः खरौ प्रचरणीयौ तद्धि तयोरायतनं दक्षिणतो मार्जालीयं तद्धि तस्यायतनम्

१४.३.१.[२३]

अथास्मिन्पय आनयति  घर्मैतत्ते पुरीषमित्यन्नं वै पुरीषमन्नमेवास्मिन्नेतद्दधाति तेन वर्धस्व चा च प्यायस्वेति नात्र तिरोहितमिवास्ति वर्धिषीमहि च वयमा च प्यासिषीमहीत्याशिषमेवैतदाशास्ते

१४.३.१.[२४]



स वै न सर्वमिवानयेत्  नेद्यजमानात्परागन्नमसदित्यर्धं वा भूयो वा परिषिनष्टि तस्मिन्नपराह्ले यजमानाय व्रतमभ्युत्सिच्य प्रयचति तद्यजमान एवैतदन्नाद्यं दधाति तथो ह यजमानान्न परागन्नं भवति

१४.३.१.[२५]

अथैनमद्भिः परिषिञ्चति  शान्तिर्वा आपः शमयत्येवैनमेतत्सर्वतः परिषिञ्चति सर्वत एवैनमेतचमयति त्रिष्कृत्वः परिषिञ्चति त्रिवृद्धि यज्ञः

१४.३.१.[२६]

अथाह वार्षाहरं साम गायति  एष वै वृषा हरिर्य एष तपत्येष उ

प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह वार्षाहरं साम गायति

१४.३.१.[२७]

अथ चात्वाले मार्जयन्ते  सुमित्रिया न आप ओषधयः सन्त्वित्यञ्जलिनाप उपाचति वज्रो वा आपो वज्रेणैवैतन्मित्रधेयं कुरुते दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति यामस्य दिशं द्वेष्यः स्यात्तां दिशं परासिञ्चेत्तेनैव तम् पराभावयति

१४.३.१.[२८]



अथ प्राङ्विवोदङ्ङुत्क्रामति  उद्वयं तमसस्परीति पाप्मा वै तमः पाप्मानमेव तमोऽपहते स्वः पश्यन्त उत्तरमित्ययं वै लोकोऽद्ध्य उत्तरोऽस्मिन्नेव लोके प्रतितिष्ठति देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति स्वर्गो वै लोकः सूर्यो ज्योतिरुत्तमं स्वर्ग एव लोकेऽन्ततः प्रतितिष्ठत्यनपेक्षमेत्याहवनीये समिधमभ्यादधाति समिदसि तेजोऽसि तेजो मयि धेहीत्याशिषमेवैतदाशास्ते

१४.३.१.[२९]

अथ प्रसुते दधिघर्मेण चरन्ति  यज्ञो वै सोमः शिरः प्रवर्ग्यो यज्ञ एवैतच्चिरः प्रतिदधाति माध्यन्दिने सवन एतद्वा इन्द्रस्य निष्केवल्यं सवनं यन्माध्यन्दिनं सवनं स्व एवैनमेतद्भागे प्रीणाति स्तुते माध्यन्दिने पवमाने प्राणो वै माध्यन्दिनः पवमानः प्राणमेवास्मिन्नेतद्दधात्यग्निहोत्रहवण्या मुखं वा एतद्यज्ञानां

यदग्निहोत्रं शीर्षंस्तन्मुखं दधाति

१४.३.१.[३०]

स आनीयमान आह  होतर्वदस्व यत्ते वाद्यमिति वदते ह्यत्र
होताथोपोत्तिष्ठन्नाह श्रातं हविरिति श्रातं हि भवत्यतिक्रम्याश्राव्याह
दधिघर्मस्य यजेति वषट्कृते जुहोत्यनुवषट्कृत आहरति भक्षं तं
यजमानाय प्रयचति

१४.३.१.[३१]



स उपहवमिष्ट्वा भक्षयति  मयि त्यदिन्द्रियं बृहदित्येतद्वा इन्द्रियं बृहद्य
एष तपति मयि दक्षो मयि क्रतुरिति क्रतूदक्षावेवात्मन्धत्ते
घर्मस्त्रिशुग्विराजतीति घर्मो ह्येष त्रिशुग्विराजति विराजा ज्योतिषा सहेति विराजा ह्येष
ज्योतिषा सह ब्रह्मणा तेजसा सहेति ब्रह्मणा ह्येष तेजसा सह पयसो रेत
आभृतमिति पयसो ह्येतद्रेत आभृतं तस्य दोहमशीमह्युत्तरामुत्तरां
समामित्याशिषमेवैतदाशास्तेऽथ चात्वाले मार्जयन्तेऽसावेव बन्धुः

१४.३.१.[३२]

अथातो दक्षिणानाम्  सुवर्णं हिरण्यं शतमानं ब्रह्मणे ददात्यासीनो वै ब्रह्मा
यशः शयानं हिरण्यं तस्मात्सुवर्णं हिरण्यं शतमानं ब्रह्मणे ददाति

१४.३.१.[३३]

अथ यैषा घर्मदुघा  तामध्वर्यवे ददाति तप्तैव वै
घर्मस्तप्तमिवाध्वर्युर्निष्क्रामति तस्मात्तामध्वर्य वे ददाति

१४.३.१.[३४]

अथ यैषा यजमानस्य व्रतदुघा  तां होत्रे ददाति यज्ञो वै होता यज्ञो
यजमानस्तस्मात्तां होत्रे ददाति

१४.३.१.[३५]



अथ यैषा पत्न्यै व्रतदुघा  तामुद्गातृभ्यो ददाति पत्नीकर्मैव वा एतेऽत्र
कुर्वन्ति यदुद्गातारस्तस्मात्तामुद्गातृभ्यो ददाति

१४.३.१.[३६]

अथैतद्वै आयुरेतज्ज्योतिः प्रविशति य एतमनु वा ब्रूते भक्षयति वा तस्य
व्रतचर्या या सृष्टौ

१४.३.२.[१]

सर्वेषां वा एष भूतानाम्  सर्वेषां देवानामात्मा यद्यज्ञस्तस्य समृद्धिमनु

यजमानः प्रजया पशुभिर्ऋध्यते वि वा एष प्रजया पशुभिर्ऋध्यते यस्य घर्मो
विदीर्यते तत्र प्रायश्चित्तिः

१४.३.२.[२]
पूर्णाहुतिं जुहोति  सर्वं वै पूर्णं सर्वेणैवैतद्भिषज्यति यत्किं च विवृढं
यज्ञस्य

१४.३.२.[३]

स्वाहा प्राणेभ्यः साधिपतिकेभ्य इति  मनो वै प्राणानामधिपतिर्मनसि हि सर्वे
प्राणाः प्रतिष्ठितास्तन्मनसैवैतद्भिषज्यति यत्किं च विवृढं यज्ञस्य



१४.३.२.[४]

पृथिव्यै स्वाहेति  पृथिवी वै सर्वेषां देवानामायतनं
तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किं च विवृढं यज्ञस्य

१४.३.२.[५]

अग्नये स्वाहेति  अग्निर्वै सर्वेषां देवानामात्मा
तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किं च विवृड्>अं यज्ञस्य

१४.३.२.[६]

अन्तरिक्षाय स्वाहेति  अन्तरिक्षं वै सर्वेषां देवानामायतनं तत्सर्वा>

१४.३.२.[७]

वायवे स्वाहेति  वायुर्वै सर्वेषां देवानामात्मा तत्सर्वा>

१४.३.२.[८]

दिवे स्वाहेति  द्यौर्वै सर्वेषां देवानामायतनं तत्सर्वा>



१४.३.२.[९]

सूर्याय स्वाहेति  सूर्यो वै सर्वेषां देवानामात्मा तत्सर्वा>

१४.३.२.[१०]

दिग्भ्यः स्वाहेति  दिशो वै सर्वेषां देवानामायतनं तत्सर्वा>

१४.३.२.[११]

चन्द्राय स्वाहेति  चन्द्रो वै सर्वेषां देवानामात्मा तत्सर्वा>

१४.३.२.[१२]

नक्षत्रेभ्यः स्वाहेति  नक्षत्राणि वै सर्वेषां देवानामायतनं तत्सर्वा>

१४.३.२.[१३]

अद्भ्यः स्वाहेति  आपो वै सर्वेषां देवानामायतनं तत्सर्वा>

१४.३.२.[१४]



वरुणाय स्वाहेति  वरुणो वै सर्वेषां देवानामात्मा तत्सर्वा>

१४.३.२.[१५]

नाभ्यै स्वाहा पूताय स्वाहेति  अनिरुक्तमनिरुक्तो वै प्रजापतिः प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञं भिषज्यति

१४.३.२.[१६]

त्रयोदशैता आहुतयो भवन्ति  त्रयोदश वै मासाः सम्वत्सरस्य सम्वत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञं भिषज्यति

१४.३.२.[१७]

वाचे स्वाहेति  मुखमेवास्मिन्नेतद्दधाति प्राणाय स्वाहा प्राणाय स्वाहेति नासिके एवास्मिन्नेतद्दधाति चक्षुषे स्वाहा चक्षुषे स्वाहेत्यक्षिणी एवास्मिन्नेतद्दधाति श्रोत्राय स्वाहा श्रोत्राय स्वाहेति कर्णाविवास्मिन्नेतद्दधाति

१४.३.२.[१८]

सप्तैता आहुतयो भवन्ति  सप्त वा इमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति पूर्णाहुतिमुत्तमां जुहोति सर्वं वै पूर्णं सर्वेणैवैतद्भिषज्यति यत्किं च विवृढं यज्ञस्य



१४.३.२.[१९]

मनसः काममाकूतिमिति  मनसा वा इदं सर्वमाप्तं तन्मनसैवैतद्भिषज्यति यत्किं च विवृढं यज्ञस्य

१४.३.२.[२०]

वाचः सत्यमशीयेति  वाचा वा इदं सर्वमाप्तं तद्वाचैवैतद्भिषज्यति यत्किं च विवृढं यज्ञस्य पशूनां रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहेत्याशिषमेवैतदाशास्ते

१४.३.२.[२१]

अथ तं चोपशयां च पिष्ट्वा  मार्त्स्नया मृदा संसृज्यावृता करोत्यावृता पचत्युत्सादनार्थमथ य उपशययोर्द्दढः स्यात्तेन प्रचरेत्

१४.३.२.[२२]

संवत्सरो वै प्रवर्ग्यः  सर्वं वै संवत्सरः सर्वं प्रवर्ग्यः स यत्प्रवृक्तस्तद्वसन्तो यद्रुचितस्तद्ग्रीष्मो यत्पिन्वितस्तद्वर्षा यदा वै वर्षाह् पिन्वन्तेऽथैनाः सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वन्ते ह वाअस्मै वर्षा य एवमेतद्वेद



१४.३.२.[२३]

इमे वै लोकाः प्रवर्ग्यः  सर्वं वा इमे लोकाः सर्वं प्रवर्ग्यः स यत्प्रवृक्तस्तदयं लोको यद्रुचितस्तदन्तरिक्षलोको यत्पिन्वितस्तदसौ लोको यदा वा असौ लोकः पिन्वतेऽथैनं सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वा अस्म् असौ लोको य एवमेतद्वेद

१४.३.२.[२४]

एता वै देवताः प्रवर्ग्यः  अग्निर्वायुरादित्यः सर्वं वा एता देवता सर्वम् प्रवर्ग्यः स यत्प्रवृक्तस्तदग्निर्यद्रुचितस्तद्वायुर्यत्पिन्वितस्तदसावादित्यो यदा वा

असावादित्यःपिन्वतेऽथैनं सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वा अस्मा
असावादित्यो य एवमेतद्वेद

१४.३.२.[२५]

यजमानो वै प्रवर्ग्यः  तस्यात्मा प्रजा पशवः सर्वं वै यजमानः सर्वम्
प्रवर्ग्यः स यत्प्रवृक्तस्तदात्मा यद्रुचितस्तत्प्रजा यत्पिन्वितस्तत्पशवो यदा वै
पशवः पिन्वतेऽथैनान्त्सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वन्ते ह वा अस्मै
पशवो य एवमेतद्वेद

१४.३.२.[२६]



अग्निहोत्रं वै प्रवर्ग्यः  सर्वं वाअग्निहोत्रं सर्वं प्रवर्ग्यः स यदधिश्रितं
तत्प्रवृक्तो यदुन्नीतं तद्रुचितो यद्धुतं तत्पिन्वितो यदा वाअग्निहोत्रम्
पिन्वतेऽथैनत्सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वा अस्मा अग्निहोत्रं
य एवमेतद्वेद

१४.३.२.[२७]

दर्शपूर्णमासौ वै प्रवर्ग्यः  सर्वं वै दर्शपूर्णमासौ सर्वं प्रवर्ग्यः स
यदधिश्रितं तत्प्रवृक्तो यदासन्नं तद्रुचितो यद्धुतं तत्पिन्वितो यदा वै
दर्शपूर्णमासौ पिन्वेते अथैनौ सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वेते ह
वा अस्मै दर्शपूर्णमासौ य एवमेतद्वेद

१४.३.२.[२८]

चातुर्मास्यानि वै प्रवर्ग्यः  सर्वं वै चातुर्मास्यानि सर्वं प्रवर्ग्यः स
यदधिश्रितं तत्प्रवृक्तो यदासन्नं तद्ध



========================================

दते fरि, २६ जुल्१ऋ्ऋ्६ १५४३२२ ०६०० (च्स्थ्fरोम् "व्. प्. लेह्मन्न्"
<लेह्मन्न्०ुत्क्ष्व्म्स्.च्च्.उतेक्षस्.एदु>सुब्जेच्त् स्ब्१४ ओ
ज्गर्द्नेर्०ब्लुए.वेएग्.उइओवैदुमिमेवेर्सिओन् १.० ततुस्त्रोक्ष्स्ततुस्

चितो यद्धुतं तत्पिन्वितो यदा वै चातुर्मास्यानि पिन्वन्तेऽथैनानि सर्वे देवाः सर्वाणि
भूतान्युपजीवन्ति पिन्वन्ते ह वा अस्मै चातुर्मास्यानि य एवमेतद्वेद

१४.३.२.[२९]

पशुबन्धो वै प्रवर्ग्यः  सर्वं वै पशुबन्धः सर्वं प्रवर्ग्यः स यदधिश्रितस्तत्प्रवृक्तो यदासन्नस्तद्रुचितो यद्धुतस्तत्पिन्वितो यदा वै पशुबन्धः पिन्वतेऽथैनं सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वा अस्मै पशुबन्धो य एवमेतद्वेद

१४.३.२.[३०]

सोमो वै प्रवर्ग्यः  सर्वं वै सोमः सर्वं प्रवर्ग्यः स यदभिषुतस्तत्प्रवृक्तो यदुन्नीतस्तद्रुचितो यद्धुतस्तत्पिन्वितो यदा वै सोमः पिन्वतेऽथैनं सर्वे देवाः सर्वाणि भूतान्युपयुञ्जन्ति पिन्वते ह वा अस्मै सोमो य एवमेतद्वेद न ह वा अस्याप्रवर्ग्येण केन चन यज्ञेनेष्टं भवति य एवमेतद्वेद



१४.३.२.[३१]

अथैतद्वै  आयुरेतज्ज्योतिः प्रविशति य एतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्या या सृष्टौ

१४.४.१.१

द्वया ह प्राजापत्याः  देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुरास्तएषु लोकेष्वस्पर्धन्त

१४.४.१.२

ते ह देवा ऊचुः  हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति

१४.४.१.३
ते ह वाचमूचुः  त्वं न उद्गायेति तथेति तेभ्यो वागुदगायद्यो वाचि भोगस्तं देवेभ्य आगायद्यत्कल्याणं वदति तदात्मने तेऽविदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा



१४.४.१.४

अथ ह प्राणमूचुः  त्वं न उद्गायेति तथेति तेभ्यः प्राण उदगायद्यः प्राणे भोगस्तं देवेभ्य आगायद्यत्कल्याणं जिघ्रति तदात्मने तेऽविदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति स एव स पाप्मा

१४.४.१.५

अथ ह चक्षुरूचुः  त्वं न उद्गायेति तथेति तेभ्यश्चक्षुरुदगायद्यश्चक्षुषि भोगस्तं देवेभ्य आगायद्यत्कल्याणं पश्यति तदात्मने तेऽविदुरनेन वै न

उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स पाप्मा
यदेवेदमप्रतिरूपं पश्यति स एव स पाप्मा

१४.४.१.६

अथ ह श्रोत्रमूचुः  त्वं न उद्गायेति तथेति तेभ्यः श्रोत्रमुदगायद्यः श्रोत्रे
भोगस्तं देवेभ्य आगायद्यत्कल्याणं शृणोति तदात्मने तेऽविदुरनेन वै न
उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स पाप्मा
यदेवेदमप्रतिरूपं शृणोति स एव स पाप्मा

१४.४.१.७



अथ ह मन ऊचुः  त्वं न उद्गायेति तथेति तेभ्यो मन उदगायद्यो मनसि
भोगस्तं देवेभ्य आगायद्यत्कल्याणं सङ्कल्पयति तदात्मने तेऽविदुरनेन वै न
उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स पाप्मा
यदेवेदमप्रतिरूपं सङ्कल्पयति स एव स पाप्मैवमु खल्वेता देवताः
पाप्मभिरुपासृजन्नेवमेनाः पाप्मनाविध्यन्

१४.४.१.८

अथ हेममासन्यं प्राणमूचुः  त्वं न उद्गायेति तथेति तेभ्य एष प्राण
उदगायत्तेऽविदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविव्यत्सन्त्स
यथाश्मानमृत्वा लोष्टो विध्वंसेतैवं हैव विध्वंसमाना विष्वञ्चो विनेशुस्ततो
देवा अभवन्परासुरा भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद

१४.४.१.९

ते होचुः  क्व नु सोऽभूद्यो न इत्थमसक्तेत्ययमास्येऽन्तरिरिति सोऽयास्य
आङ्गिरसोऽङ्गानां हि रसः

१४.४.१.१०

सा वा एषा देवता दूः  नाम दूरं ह्यस्या मृत्युर्दूरं ह वा अस्मान्मृत्युर्भवति य
एवं वेद



१४.४.१.११

सा वा एषा देवता  एतासां देवतानां पाप्मानं मृत्युमपहत्य यत्रासां
दिशामन्तस्तद्गमयां चकार तदासां पाप्मनो विन्यदधात्तस्मान्न
जनमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववायानीति

१४.४.१.१२

सा वा एषा देवता  एतासां देवतानां पाप्मानं मृत्युमपहत्याथैना
मृत्युमत्यवहत्

१४.४.१.१३

स वै वाचमेव प्रथमामत्यवहत्  सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते

१४.४.१.१४

अथ प्राणमत्यवहत्  स यदा मृत्युमत्यमुच्यत स वायुरभवत्सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते

१४.४.१.१५



अथ चक्षुरत्यवहत्  तद्यदा मृत्युमत्यमुच्यत स आदित्योऽभवत्सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति

१४.४.१.१६

अथ श्रोत्रमत्यवहत्  तद्यदा मृत्युमत्यमुच्यत ता दिशोऽभवंस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः

१४.४.१.१७

अथ मनोऽत्यवहत्  तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत्सोऽसौ चन्द्रः

परेण मृत्युमतिक्रान्तो भात्येवं ह वा एनमेषा देवता मृत्युमतिवहति य एवम्
वेद

१४.४.१.१८

अथात्मनेऽन्नाद्यमागायत्  यद्धि किं चान्नमद्यतेऽनेनैव तदद्यत इह
प्रतितिष्ठति

१४.४.१.१९
ते देवा अब्रुवन्  एतावद्वा इदं सर्वं यदन्नं तदात्मन आगासीरनु नोऽस्मिन्नन्न
आभजस्वेति ते वै माभिसम्विशतेति तथेति तं समन्तं परिण्यविशन्त
तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्त्येवं ह वा एनं स्वा अभिसम्विशन्ति भर्ता
स्वानां श्रेष्ठः पुरएता भवत्यन्नादोऽधिपतिर्य एवं वेद



१४.४.१.२०

य उ हैवम्विदम्  स्वेषु प्रतिप्रतिर्बुभूषति न हैवालं भार्येभ्यो भवत्यथ
य एवैतमनु भवति यो वैतमनु भार्यान्बुभूर्षति स हैवालं भार्येभ्यो
भवति

१४.४.१.२१

सोऽयास्य आङिरसो  अङ्गानां हि रसः प्राणो वा अङ्गानां रसः प्राणो हि वा अङ्गानां

रसस्तस्माद्यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तचुष्यत्येष हि वा अङ्गानां रसः

१४.४.१.२२

एष उ एव बृहस्पतिः  वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः

१४.४.१.२३

एष उ एव ब्रह्मणस्पतिः  वाग्वै ब्रह्म तस्या एष पतिस्तस्मादु ह ब्रह्मणस्पतिः



१४.४.१.२४

एष उ एव साम  वाग्वै सामैष सा चामश्चेति तत्साम्नः सामत्वं यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्वेव सामाश्नुते साम्नः सायुज्यं सलोकतां य एवमेतत्साम वेद

१४.४.१.२५

एष उ वा उद्गीथः  प्राणो वा उत्प्राणेन हीदं सर्वमुत्तब्धं वागेव गीथोच्च गीथा चेति स उद्गीथः

१४.४.१.२६

तद्धापि ब्रह्मदत्तश्चैकितानेयो  राजानं भक्षयन्नुवाचायं त्यस्य राजा मूर्धानं विपातयताद्यदितोऽयास्य आङ्गिरसोऽन्येनोदगायदिति वाचा च ह्येव स प्राणेन चोदगायदिति

१४.४.१.२७

तस्य हैतस्य साम्नो यः स्वं वेद  भवति हास्य स्वं तस्य वै स्वर एव स्वं तस्मादार्त्विज्यं करिष्यन्वाचि स्वरमिचेत तया वाचा स्वरसम्पन्नयार्त्विज्यं कुर्यात्तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एवाथो यस्य स्वं भवति भवति हास्य स्वं य एवमेतत्सामनः स्वं वेद



१४.४.१.२८

तस्य हैतस्य साम्नो यः सुवर्णं वेद  भवति हास्य सुवर्णं तस्य वै स्वर एव सुवर्णं भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद

१४.४.१.२९

तस्य हैतस्य  साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्यु हैक आहुः

१४.४.१.३०

अथातः पवमानानामेवाभ्यारोहः  स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्त्युआत्तदेतानि जपेदसतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्मामृतं गमयेति

१४.४.१.३१

स यदाहासतो मा सद्गमयेति  मृत्युर्वा असत्सदमृतं मृत्योर्मामृतं गमयामृतं मा कुर्वित्येवैतदाह



१४.४.१.३२

तमसो मा ज्योतिर्गमयेति  मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्मामृतं गमयामृतं मा कुर्वित्येवैतदाह मृत्योर्मामृतं गमयेति नात्र तिरोहितमिवास्ति

१४.४.१.३३

अथ यानीतराणि स्तोत्राणि  तेष्वात्मनेऽन्नाद्यमागायेत्तस्मादु तेषु वरं वृणीत यम् कामं कामयेत तं स एष एवम्विदुद्गातात्मने वा यजमानाय वा यं कामं कामयते तमागायति तद्धैतल्लोकजिदेव न हैवालोक्यताया आशास्ति य एवमेतत्साम वेद

१४.४.२.[१]

आत्मैवेदमग्र आसीत्  पुरुषविधः सोऽनुवीक्ष्य
नान्यदात्मनोऽपश्यत्सोऽहमस्मीत्यग्रेव्याहरत्ततोऽहंनामाभवत्तस्मादप्येतर्ह्या
मन्त्रितोऽहमयमित्येवाग्र उक्त्वाथान्यन्नाम प्रब्रूते यदस्य भवति

१४.४.२.[२]

स यत्पूर्वोऽस्मात्  सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुष ओषति ह वै स तं
योऽस्मात्पूर्वो बुभूषति य एवं वेद



१४.४.२.[३]

सोऽबिभेत्  तस्मादेकाकी बिभेति स हायमीक्षां चक्रे यन्मदन्यन्नास्ति कस्मान्नु
बिभेमीति तत एवास्य भयं वीयाय कस्माद्ध्यभेष्यद्द्वितीयद्वै भयम्
भवति

१४.४.२.[४]

स वै नैव रेमे  तस्मादेकाकी न रमते स द्वितीयमैचत्स हैतावानास यथा
स्त्रीपुमांसौ सम्परिष्वक्तौ

१४.४.२.[५]

स इममेवात्मानं द्वेधापातयत्  ततः पतिश्च पत्नी चाभवतां
तस्मादिदमर्धवृगलमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाश स्त्रिया
पूर्यत एव तां समभवत्ततो मनुष्या अजायन्त

१४.४.२.[६]

सो हेयमीक्षां चक्रे  कथं नु मात्मन एव जनयित्वा सम्भवति हन्त
तिरोऽसानीति

१४.४.२.[७]



सा गौरभवत्  वृषभ इतरस्तां समेवाभवत्ततो गावोऽजायन्त

१४.४.२.[८]

वडवेतराभवत्  अश्ववृष इतरो गर्दभीतरा गर्दभ इतरस्तां समेवाभवत्तत
एकशफमजायत

१४.४.२.[९]

अजेतराभवत्  वस्त इतरोऽविरितरो मेष इतरस्तां
समेवाभ्वत्ततोऽजावयोऽजायन्तैवमेव यदिदं किं च मिथुनमा

पिपीलिकाभ्यस्तत्सर्वमसृजत

१४.४.२.[१०]

सोऽवेत्  अहं वाव सृष्टिरस्म्यहं हीदं सर्वमसृक्षीति ततः सृष्टिरभवत्सृष्ट्यां हास्यैतस्यां भवति य एवं वेद

१४.४.२.[११]

अथेत्यभ्यमन्थत्  स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत तस्मादेतदुभयमलोमकमन्तरतोऽलोमका हि योनिरन्तरतः



१४.४.२.[१२]

तद्यदिदमाहुः  अमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवाः

१४.४.२.[१३]

अथ यत्किं चेदमार्द्रम्  तद्रेतसोऽसृजत तदु सोम एतावद्वा इदं सर्वमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः

१४.४.२.[१४]

सैषा ब्रह्मणोऽतिसृष्टिः  यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः सन्नमृतानसृजत तस्मादतिसृष्टिरतिसृष्ट्यां हास्यैतस्यां भवति य एवं वेद

१४.४.२.[१५]

तद्धेदं तर्ह्यव्याकृतमासीत्  तन्नामरूपाभ्यामेव व्याक्रियतासौनामायमिदंरूप इति तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामायमिदंरूप इति

१४.४.२.[१६]



स एष इह प्रविष्टः  आ नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वम्भरो वा विश्वम्भरकुलाये तं न पश्यन्त्यकृत्स्नो हि सः

१४.४.२.[१७]

प्राणन्नेव प्राणो नाम भवति  वदन्वाक्पश्यंश्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवति

१४.४.२.[१८]

आत्मेत्येवोपासीत  अत्र ह्येते सर्व एकं भवन्ति तदेतत्पदनीयमस्य सर्वस्य यदयमात्मानेन ह्येतत्सर्वं वेद यथा ह वै पदेनानुविन्देदेवं कीर्तिं श्लोकं विन्दते य एवं वेद

१४.४.२.[१९]

तदेतत्प्रेयः पुत्रात्  प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियं रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियम् प्रमायुकं भवति



१४.४.२.[२०]

तदाहुः  यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति

१४.४.२.[२१]

ब्रह्म वा इदमग्र आसीत्  तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्तद्योयो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्

१४.४.२.[२२]

तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे  अहं मनुरभवं सूर्यश्चेति
तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति तस्य ह न
देवाश्चनाभूत्या ईशत आत्मा ह्येषां स भवत्यथ योऽन्यां
देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानां यथा
ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो
देवान्भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु
तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः

१४.४.२.[२३]

ब्रह्म वा इदमग्र आसीत्  एकमेव तदेकं सन्न व्यभवत्तच्छ्रेयो रूपमत्यसृजत
क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो
मृत्युरीशान इति तस्मात्क्षत्रात्परं नास्ति तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते
राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म तस्माद्यद्यपि
राजा परमतां गचति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिं य उ एनं हिनस्ति स्वां
स योनिमृचति स पापीयान्भवति यथा श्रेयांसं हिंसित्वा



१४.४.२.[२४]

स नैव व्यभवत्  स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो
रुद्रा आदित्या विश्वे देवा मरुत इति

१४.४.२.[२५]

स नैव व्यभवत्  स शौद्रं वर्णमसृजत पूषणमियं वै पूषेयं हीदं
सर्वं पुष्यति यदिदं किं च

१४.४.२.[२६]

स नैव व्यभवत्  तच्छ्रेयो रूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं
यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान्बलीयांसम्म्!शंसते धर्मेण
यथा राज्ञैवं यो वै स धर्मः सत्यं वै तत्तस्मात्सत्यम्
वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तं सत्यम्
वदतीत्येतद्ध्येवैतदुभयं भवति



१४.४.२.[२७]

तदेतद्ब्रह्म क्षत्रं विड्शूद्रः  तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो
मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव
देवेषु लोकमिचन्ते ब्राह्मणे मनुष्येष्वेताभ्यां हि रूपाभ्यां ब्रह्माभवत्

१४.४.२.[२८]

अथ यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति  स एनमविदितो न भुनक्ति यथा
वेदो वाननूक्तोऽन्यद्वा कर्माकृतं यदि ह वा अप्यनेवम्विन्महत्पुण्यं कर्म
करोति तद्धास्यान्ततः क्षीयत एवात्मानमेव लोकमुपासीत स य आत्मानमेव
लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते

१४.४.२.[२९]

अथो अयं वा आत्मा  सर्वेषां भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेनर्षीणामथ यत्प्रजामिचते यत्पितृभ्यो निपृणाति तेन पितॄणामथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयांस्या पिपीलिकाभ्य उपजीवन्ति तेन तेषां लोको यथा ह वै स्वाय लोकायारिष्टिमिचेदेवं हैवम्विदे सर्वदा सर्वाणि भूतान्यरिष्टिमिचन्ति तद्वा एतद्विदितं मीमांसितम्

१४.४.२.[३०]



आत्मैवेदमग्र आसीत्  एक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्येतान्वावै कामो नेचंश्चनातो भूयो विन्देत्तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्यो कृत्स्नता

१४.४.२.[३१]

मन एवास्यात्मा  वाग्जाया प्राणः प्रजा चक्षुर्मानुषं वित्तं चक्षुषा हि तद्विन्दति श्रोत्रं दैवं श्रोत्रेण हि तचृणोत्यात्मैवास्य कर्मात्मना हि कर्म करोति स एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदं किं च तदिदं सर्वमाप्नोति यदिदं किं च य एवं वेद

१४.४.३.[१]

यत्सप्तान्नानि मेधया तपसाजनयत्पिता  एकमस्य साधारणं द्वे देवानभाजयत्
त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायचत्  तस्मिन्त्सर्वं प्रतिष्ठितं यच्च
प्राणिति यच्च न  कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा  यो वै तामक्षितिं वेद
सोऽन्नमत्ति प्रतीकेन  स देवानपिगचति स ऊर्जमुपजीवतीति श्लोकाः

१४.४.३.[२]

यत्सप्तान्नानि मेधया तपसाजनयत्पितेति  मेधया हि तपसाजनयत्पितैकमस्य
साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते स य एतदुपास्ते न स
पाप्मनो व्यावर्तते मिश्रं ह्येतत्



१४.४.३.[३]

द्वे देवानभाजयदिति हुतं च प्रहुतं च तस्माद्देवेभ्यो जुह्वति च प्र च
जुह्वत्यथो आहुर्दर्शपूर्णमासाविति तस्मान्नेष्टियाजुकः स्यात्

१४.४.३.[४]

पशुभ्य एकं प्रायचदिति  तत्पयः पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति
तस्मात्कुमारं जातं घृतं वैवाग्रे प्रतिलेहयन्ति स्तनं वानुधाप्यन्ति

१४.४.३.[५]

अथ वत्सं जातमाहुः  अतृणाद इति तस्मिन्त्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेति पयसि हीदं सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न

१४.४.३.[६]

तद्यदिदमाहुः  सम्वत्सरं पयसा जुह्वदप पुनर्मृत्युं जयतीति न तथा विद्याद्यदहरेव जुहोति तदहः पुनर्मृत्युमापजयत्येवं विद्वान्त्सर्वं हि देवेभ्योऽन्नाद्यं प्रयचति कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदेति



१४.४.३.[७]

पुरुषो वा अक्षितिः  स हीदमन्नं पुनःपुनर्जनयते यो वै तामक्षितिं वेदेति पुरुषो वा अक्षितिः स हीदमन्नं धियाधिया जनयते कर्मभिर्यद्धैतन्न कुर्यात्क्षीयेत ह सोऽन्नमत्ति प्रतीकेनेति मुखं प्रतीकं मुखेनेत्येतत्स देवानपिगचति स ऊर्जमुपजीवतीति प्रशंसा

१४.४.३.[८]

त्रीण्यात्मनेऽकुरुतेति  मनो वाचं प्राणं तान्यात्मनेऽकुरुतान्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसा ह्येव पश्यति मनसा श्रृणोति

१४.४.३.[९]

कामः सङ्कल्पो  विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वम्
मन एव तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति

१४.४.३.[१०]

यः कश्च शब्दो  वागेव सैषा ह्यन्तमायत्तैषा हि न प्राणोऽपानो व्यान उदानः
समानोऽन इत्येतत्सर्वं प्राण एवैतन्मन्यो वा अयमात्मा वाङ्मयो मनोमयः
प्राणमयः



१४.४.३.[११]

त्रयो लोका एत एव  वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः

१४.४.३.[१२]

त्रयो वेदा एत एव  वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः

१४.४.३.[१३]

देवाः पितरो मनुष्या एत एव  वागेव देवा मनः पितरः प्राणो मनुष्याः

१४.४.३.[१४]

पिता माता प्रजैत एव  मन एव पिता वाङ्ग्माता प्राणः प्रजा

१४.४.३.[१५]

विज्ञातं विजिज्ञास्यम्  अविज्ञातमेत एव यत्किं च विज्ञातं वाचस्तद्रूपं वाग्घि विज्ञाता वागेनं तद्भूत्वावति



१४.४.३.[१६]

यत्किं च विजिज्ञास्यम्  मनस्तद्रूपं मनो हि विजिज्ञास्यं मन एव तद्भूत्वावति

१४.४.३.[१७]

यत्किं चाविज्ञातम्  प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः प्राण एव तद्भूत्वावति

१४.४.३.[१८]

तस्यै वाचः पृथिवी शरीरम्  ज्योती रूपमयमग्निस्तद्यावत्येव वाक्तावती पृथिवी तावानयमग्निः

१४.४.३.[१९]

अथैतस्य मनसो  द्यौः शरीरं ज्योती रूपमसावादित्यस्तद्यावदेव मनस्तावती द्यौस्तावानसावादित्यस्तौ मिथुनं समैतां ततः प्राणोऽजायत स इन्द्रः स एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य एवं वेद

१४.४.३.[२०]

अथैतस्य प्राणस्यापः  शरीरं ज्योती रूपमसौ चन्द्रस्तद्यावा नेव प्राणस्तावत्य आपस्तावानसौ चन्द्रः



१४.४.३.[२१]

त एते सर्व एव समाः  सर्वेऽनन्ताः स यो हैतानन्तवत उपास्तेऽन्तवतं स लोकं जयत्यथ यो हैताननन्तानुपास्तेऽनन्तं स लोकं जयति

१४.४.३.[२२]

स एष संवत्सरः  प्रजापतिः षोडशकलस्तस्य रात्रय एव पञ्चदश कला ध्रुवैवास्य षोडशी कला स रात्रिभिरेवा च पूर्यतेऽप च क्षीयते सोऽमावास्यां रात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते तस्मादेतां रात्रिं प्राणभृतः प्राणं न विचिन्द्यादपि कृकलासस्यैतस्या एव देवताया अपचित्यै

१४.४.३.[२३]

यो वै स संवत्सरः  प्रजापतिः  षोडशकलोऽयमेव स योऽयमेवंवित्पुरुषस्तस्य वित्तमेव पञ्चदश कला आत्मैवास्य षोडशी कला स वित्तेनैवा च पूर्यतेऽप च क्षीयते तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्तं तस्माद्यद्यपि सर्वज्यानिं जीयत आत्मना चेज्जीवति प्रधिनागादित्याहुः

१४.४.३.[२४]

अथ त्रयो वाव लोकाः  मनुष्यलोकः पितृलोको देवलोक इति सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकानां श्रेष्ठस्तस्माद्विद्यां प्रशंसन्ति



१४.४.३.[२५]

अथातः सम्प्रत्तिः  यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति स पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति

१४.४.३.[२६]

यद्वै किं चानूक्तम्  तस्य सर्वस्य ब्रह्मेत्येकता ये वै के च यज्ञास्तेषां सर्वेषां यज्ञ इत्येकता ये वै के च लोकास्तेषां सर्वेषां लोक इत्येकतैतावद्वा इदं

सर्वमेतन्मा सर्वं सन्नयमितो भुनजदिति तस्मात्पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेनमनुशासति स यदैवंविदस्माल्लोकात्प्रैत्यथैभिरेव प्राणैः सह पुत्रमाविशति स यद्यनेन किंचिदक्ष्णयाकृतं भवति तस्मादेनं सर्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम स पुत्रेणैवास्मिंलोके प्रतितिष्ठत्यथैनमेते दैवाः प्राणा अमृता आविशन्ति

१४.४.३.[२७]

पृथिव्यै चैनमग्नेश्च  दैवी वागाविशति सा वै दैवी वाग्यया यद्यदेव वदति तत्तद्भवति



१४.४.३.[२८]

दिवश्चैनमादित्याच्च  दैवं मन आविशति तद्वै दैवं मनो येनानन्द्येव भवत्यथो न शोचति

१४.४.३.[२९]

अद्भ्यश्चैनं चन्द्रमसश्च  दैवः प्राण आविशति स वै दैवः प्राणो यः संचरंश्चासंचरंश्च न व्यथतेऽथो न रिश्यति स एष एवंवित्सर्वेषाम् भूतानामात्मा भवति यथैषा देवतैवं स यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्ति यदु किं चेमाः प्रजाः शोचन्त्यमैवासां तद्भवति पुण्यमेवामुं गचति न ह वै देवान्पापं गचति

१४.४.३.[३०]

अथातो व्रतमीमांसा  प्रजापतिर्ह कर्माणि ससृजे तानि सृष्टान्यन्योऽन्येनास्पर्धन्त वदिष्याम्येवाहमिति वाग्दध्रे द्रक्ष्याम्यहमिति चक्षुः श्रोष्याम्यहमिति श्रोत्रमेवमन्यानि कर्माणि यथाकर्म

१४.४.३.[३१]

तानि मृत्युः श्रमो भूत्वोपयेमे  तान्याप्नोत्तान्याप्त्वा मृत्युरवारुद्ध तस्माच्छ्राम्यत्येव वाक्श्राम्यति चक्षुः श्राम्यति श्रोत्रमथेममेव नाप्नोद्योऽयम् मध्यमः प्राणः



१४.४.३.[३२]

तानि ज्ञातुं दध्रिरे ऽयं वै नः श्रेष्ठो यः संचरंश्चासंचरंश्च न व्यथतेऽथो न रिष्यति हन्तास्यैव सर्वे रूपं भवामेति त एतस्यैव सर्वे रूपमभवंस्तस्मादेत एतेनाख्यायन्ते प्राणा इति तेन ह वाव तत्कुलमाख्यायते यस्मिन्कुले भवति य एवं वेद य उ हैवंविदा स्पर्धतेऽनुशुष्य हैवान्ततो म्रियत इत्यध्यात्मम्

१४.४.३.[३३]

अथाधिदेवतं  ज्वलिष्याम्येवाहमित्यग्निर्दध्रे तप्स्यास्यहमित्यादित्यो भास्याम्यहमिति चन्द्रमा एवमन्या देवता यथादेवतं स यथैषां प्राणानाम्

मध्यमः प्राण एवमेतासां देवतानां वायुर्म्लोचन्ति ह्यन्या देवता न वायुः
सैषानस्तमिता देवता यद्वायुः

१४.४.३.[३४]

अथैष श्लोको भवति  यतश्चोदेति सूर्योऽस्तं यत्र च गचतीति प्राणाद्वा एष उदेति
प्राणेऽस्तमेति तं देवाश्चक्रिरे धर्मं स एवाद्य स उ श्व इति यद्वा
एतेऽमुर्ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति तस्मादेकमेव व्रतं
चरेत्प्राण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नवदिति यद्यु
चरेत्समापिपयिषेत्तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति य एवं वेद



१४.४.४.[१]

त्रयं वा इदं नाम रूपं कर्म  तेषां नाम्नां वागित्येतदेषामुक्थमतो हि
सर्वाणि नामान्युत्तिष्ठन्त्येतदेषां सामैतद्धि सर्वैर्नामभिः सममेतदेषाम्
ब्रह्मैतद्धि सर्वाणि नामानि बिभर्ति

१४.४.४.[२]
अथ रूपाणाम्  चक्षुरित्येतदेषामुक्थमतो हि सर्वाणि रूपाण्युत्तिष्ठन्त्येतदेषां
सामैतद्धि सर्वै रूपैः सममेतदेषां ब्रह्मैतद्धि सर्वाणि रूपाणि बिभर्ति

१४.४.४.[३]

अथ कर्मणाम्  आत्मेत्येतदेषामुक्थमतो हि सर्वाणि कर्माण्युत्तिष्ठन्त्येतदेषां
सामैतद्धि सर्वैः कर्मभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि कर्माणि
बिभर्ति तदेतत्त्रयं सदेकमयमात्मात्मो एकः सन्नेतत्त्रयं तदेतदमृतं
सत्येन चन्नं प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्चन्नः

१४.५.१.[१]

दृप्तबालाकिर्हानूचानो गार्ग्य आस  स होवाचाजातशत्रुं काश्यं ब्रह्म ते ब्रवाणीति
स
होवाचाजातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्तीति



१४.५.१.[२]

स होवाच गार्ग्यो  य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इति स
होवाचाजातशत्रुर्मा मैतस्मिन्त्संवदिष्ठा अतिष्ठाः सर्वेषां भूतानां मूर्धा
राजेति वा अहमेतमुपास इति स यएतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानाम्
मूर्धा राजा भवति

१४.५.१.[३]

स होवाच गार्ग्यो  य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति स
होवाचाजातशत्रुर्मा मैतस्मिन्त्संवदिष्ठा बृहन्पाण्डरवासाः सोमो राजेति वा
अहमेतमुपास इति स य एतमेवमुपास्तेऽहरहर्ह सुतः प्रसुतो भवति नास्यान्नं
क्षीयते

१४.५.१.[४]

स होवाच गार्ग्यो  य एवायं विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्त्संवदिष्ठास्तेजस्वीति वा अहमेतमुपास इति स य एतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनी हास्य प्रजा भवति

१४.५.१.[५]

स होवाच गार्ग्यो  य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्त्संवदिष्ठाः पूर्णमप्रवर्तीति वा अहमेतमुपास इति स य एतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नास्यास्माल्लोकात्प्रजोद्वर्तते



१४.५.१.[६]

स होवाच गार्ग्यो  य एवायं वायौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्त्संवदिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स य एतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी

१४.५.१.[७]

स होवाच गार्ग्यो  य एवायमग्नौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्त्संवदिष्ठा विषासहिरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते विषासहिर्ह भवति विषासहिर्हास्य प्रजा भवति

१४.५.१.[८]

स होवाच गार्ग्यो  य एवायमप्सु पुरुष एतमेवाहं ब्रह्मोपास इति स
होवाचाजातशत्रुर्मा मैतस्मिन्त्संवदिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स य
एतमेवमुपास्ते प्रतिरूपं हैवैनमुपगचति नाप्रतिरूपमथो
प्रतिरूपोऽस्माज्जायते

१४.५.१.[९]

स होवाच गार्ग्यो  य एवायमादर्शे पुरुष एतमेवाहं ब्रह्मोपास इति स
होवाचाजातशत्रुर्मा मैतस्मिन्त्संवदिष्ठा रोचिष्णुरिति वा अहमेतमुपास इति स य
एतमेवमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः संनिगचति
सर्वांस्तानतिरोचते



१४.५.१.[१०]

स होवाच गार्ग्यो  य एवायं दिक्षु पुरुष एतमेवाहं ब्रह्मोपास इति स
होवाचाजातशत्रुर्मा मैतस्मिन्त्संवदिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति
स य एतमेवमुपास्ते द्वितीयवान्ह भवति नास्माद्गणश्छिद्यते

१४.५.१.[११]

स होवाच गार्ग्यो  य एवायं यन्तं पश्चाचब्दोऽनूदैत्येतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्त्संवदिष्ठा असुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वं हैवास्मिंलोक आयुरेति नैनं पुरा कालात्प्राणो जहाति

१४.५.१.[१२]

स होवाच गार्ग्यो  य एवायं चायामयः पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्त्संवदिष्ठा मृत्युरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वं हैवास्मिंलोक आयुरेति नैनं पुरा कालान्मृत्युरागचति

१४.५.१.[१३]



स होवाच गार्ग्यो  यश्चायमात्मनि पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्त्संवदिष्ठा आत्मन्वीति वा अहमेतमुपास इति स य एतमेवमुपास्त आत्मन्वी ह भवत्यात्मन्विनी हास्य प्रजा भवति स ह तूष्णीमास गार्ग्यः

१४.५.१.[१४]

स होवाचाजातशत्रुः  एतावन्नू३ त्येतावद्धीति नैतावता विदितं भवतीति स होवाच गार्ग्य उप त्वायानीति

१४.५.१.[१५]

स होवाचाजातशत्रुः  प्रतिलोमं वै तद्यद्ब्राह्मणः क्षत्रियमुपेयाद्ब्रह्म मे वक्ष्यतीति व्येव त्वा ज्ञपयिष्यामीति तं पाणावादायोत्तस्थौ तौ ह पुरुषं सुप्तमाजग्मतुस्तमेतैर्नामभिरामन्त्रयां चक्रे बृहन्पाण्डरवासः सोम राजन्निति स नोत्तस्थौ तं पाणिनापेषं बोधयां चकार स होत्तस्थौ

१४.५.१.[१६]

स होवाचाजातशत्रुः  यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागादिति तदु ह न मेने गार्ग्यः



१४.५.१.[१७]

स होवाचाजातशत्रुः  यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषाम् प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेति

१४.५.१.[१८]

तानि यदा गृह्णाति  अथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत एव प्राणो भवति गृहीता वाग्गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः

१४.५.१.[१९]

स यत्रैतत्स्वप्न्यया चरति  ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मण उतेवोच्चावचं निगचति

१४.५.१.[२०]

स यथा महाराजो जानपदान्गृहीत्वा स्वे जनपदे यथाकामम् परिवर्तेतैवमेवैष एतत्प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते

१४.५.१.[२१]

अथ यदा सुषुप्तो भवति  यदा न कस्य चन वेद हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते



१४.५.१.[२२]

स यथा कुमारो वा महाब्राह्मणो वा ऽतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्चेते

१४.५.१.[२३]
स यथोर्णवाभिस्तन्तुनोच्चरेत्  यथाग्नेः क्षुद्रा विष्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि
सर्व एत आत्मानो व्युच्चरन्ति तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यं

तेषामेष सत्यम्

१४.५.२.[१]

यो ह वै शिशुं  साधनं सप्रत्याधानं सस्थूणं सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि

१४.५.२.[२]

अयं वाव शिशुर्योऽयं मध्यमः प्राणः  तस्येदमेवाधानमिदं प्रत्याधानम् प्राण स्थूणान्नं दाम तमेताः सप्ताक्षितय उपतिष्ठन्ते



१४.५.२.[३]

तद्या इमा अक्षंलोहिन्यो राजयः  ताभिरेनं रुद्रोऽन्वायत्तोऽथ या अक्षन्नापस्ताभिः पर्जन्यो या कनीनका तयादित्यो यचुक्लं तेनाग्निर्यत्कृष्णं तेनेन्द्रोऽधरयैनं वर्तन्या पृथिव्यन्वायत्ता द्यौरुत्तरया नास्यान्नं क्षीयते य एवं वेद

१४.५.२.[४]

तदेष श्लोको भवति  अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपम्  तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदानेति

१४.५.२.[५]

अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति  इदं तच्चिर एष ह्यर्वाग्बिलश्चमस
ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपमिति प्राणा वै यशो निहितं विश्वरूपम्
प्राणानेतदाह तस्यासत ऋषयः सप्त तीर इति प्राणा वा ऋषयः प्राणानेतदाह
वागष्टमी ब्रह्मणा संविदानेति वाग्घ्यष्टमी ब्रह्मणा संवित्ते

१४.५.२.[६]

इमावेव गोतमभरद्वाजौ  अयमेव गोतमोऽयं भरद्वाज इमावेव
विश्वामित्रजमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निरिमावेव
वसिष्ठिकश्यपावयमेव वसिष्ठोऽयं कश्यपो वागेवात्रिर्वाचा
ह्यन्नमद्यतेऽत्तिर्ह वै नामैतद्यदत्रिरिति सर्वस्यात्ता भवति सर्वमस्यान्नम्
भवति य एवं वेद

१४.५.३.[१]

द्वे वाव ब्रह्मणो रूपे  मूर्तं चैवामूर्तं च मर्त्यं चामृतं च स्थितं च यच्च
सच्च त्यं च

१४.५.३.[२]

तदेतन्मूर्तम्  यदन्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्यमेतत्स्थितमेतत्सत्

१४.५.३.[३]

तस्यैतस्य  मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः

१४.५.३.[४]

अथामूर्तम्  वायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत्त्यम्



१४.५.३.[५]

तस्यैतस्यामूर्तस्य  एतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन्मण्डले पुरुषस्त्यस्य ह्येष रस इत्यधिदेवतम्

१४.५.३.[६]

अथाध्यात्मम्  इदमेव मूर्तं यदन्यत्प्राणाच्च यश्चायमन्तरात्मन्नाकाश एतन्मर्त्यमेतत्स्थितमेतत्सत्

१४.५.३.[७]

तस्यैतस्य मूर्तस्य  एतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो यच्चक्षुः
सतो ह्येष रसः

१४.५.३.[८]

अथामूर्तम्  प्राणश्च यश्चायमन्तरात्मन्नाकाश एतदमृतमेतद्यदेतत्त्यम्

१४.५.३.[९]

तस्यैतस्यामूर्तस्य  एतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो योऽयं
दक्षिणेऽक्षन्पुरुषस्त्यस्य ह्येष रसः



१४.५.३.[१०]

तस्य हैतस्य पुरुषस्य रूपम्  यथा माहारजनं वासो यथा पाण्ड्वाविकं
यथेन्द्रगोपो यथाग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्तं सकृद्विद्युत्तेव
ह वा अस्य श्रीर्भवति य एवं वेद

१४.५.३.[११]

अथात आदेशो  नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेयं सत्यस्य
सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्

१४.५.४.[१]

मैत्रेयीति होवाच याज्ञवल्क्यः  उद्यास्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्यान्तं करवाणीति

१४.५.४.[२]

स होवाच मैत्रेयी  यन्म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथं तेनामृता स्यामिति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति



१४.५.४.[३]

सा होवाच मैत्रेयी  येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति

१४.५.४.[४]

स होवाच याज्ञवल्क्यः  प्रिया वतारे नः सती प्रियं भाषस एह्यास्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ब्रवीतु भगवानिति

१४.५.४.[५]

स होवाच याज्ञवल्क्यो  न वा अरे पत्युः कामाय  पतिः प्रियो भवत्यात्मनस्तु
कामाय  पतिः प्रियो भवति नवा अरे जायायै कामाय  जाया प्रिया भवत्यात्मनस्तु
कामाय जाया प्रिया भवति न वा अरे पुत्राणां कामाय पुत्राः प्रिया
भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति न वा अरे वित्तस्य कामाय वित्तम्
प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति न वा अरे ब्रह्मणः
कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति न वा अरे
क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियम्
भवति न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया
भवन्ति न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः
प्रिया भवन्ति न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु
कामाय
भूतानि प्रियाणि भवन्ति न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु
कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो
निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं
सर्वं विदितम्



१४.५.४.[६]

ब्रह्म तं परादात्  योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तम्
परादाद्योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्वेद
देवास्तं परादुर्योऽन्यत्रात्मनो देवान्वेद भूतानि तं परादुर्योऽन्यत्रात्मनो
भूतानि वेद सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं
क्षत्रमिमे लोका इमे देवा इमानि भूतानीदं सर्वं यदयमात्मा

१४.५.४.[७]

स यथा दुन्दुभेर्हन्यमानस्य  न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो भवति गृहीतः

१४.५.४.[८]

स यथा वीणायै वाद्यमानायै  न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः

१४.५.४.[९]



स यथा शङ्खस्य ध्मायमानस्य  न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः

१४.५.४.[१०]

स यथार्द्रैधाग्नेरभ्याहितस्य  पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निश्वसितानि

१४.५.४.[११]

स यथा सर्वासामपां समुद्र एकायनम्  एवं सर्वेषां स्पर्शानां त्वगेकायनमेवं सर्वेषां गन्धानां नासिके एकायनमेवं सर्वेषां रसानां जिह्वैकायनमेवं सर्वेषां रूपाणां चक्षुरेकायनमेवं सर्वेषां शब्दानां श्रोत्रमेकायनमेवं सर्वेषां संकल्पानां मन एकायनमेवं सर्वेषां वेदानां हृदयमेकायनमेवं सर्वेषां कर्मणां हस्तावेकायनमेवं सर्वेषामध्वनां पादावेकायनमेवं सर्वेषामानन्दानन्दानामुपस्थ एकायनमेवं सर्वेषां विसर्गाणां पायुरेकायनमेवं सर्वासां विद्यानां वागेकायनम्

१४.५.४.[१२]



स यथा सैन्धवखिल्यः  उदके प्रास्त उदकमेवानुविलीयेत नाहास्योद्ग्रहणायेव स्याद्यतोयतस्त्वाददीत लवणमेवैवं वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः

१४.५.४.[१३]

सा होवाच मैत्रेयी  अत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञास्तीति

१४.५.४.[१४]

स होवाच याज्ञवल्क्यो  न वा अरे हं मोहं ब्रवीम्यलं वा अर इदं विज्ञानाय

१४.५.४.[१५]

यत्र हि द्वैतमिव भवति  तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरमभिवदति तदितर इतरं श्वृणोति तदितर इतरं मनुते तदितर इतरं विजानाति

१४.५.४.[१६]

यत्र त्वस्य सर्वमात्मैवाभूत्  तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन कमभिवदेत्तत्केन कं श्वृणुयात्तत्केन कं मन्वीत तत्केन कं विजानीयाद्येनेदं सर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयादिति



१४.५.५.[१]

इयं पृथिवी  सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम् ब्रह्मेदं सर्वम्

१४.५.५.[२]

इमा आपः  सर्वेषां भूतानां मध्वासामपां सर्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं रैतसस्तेजोमयोऽमृत>

१४.५.५.[३]

अयमग्निः  सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजोमयोऽमृत>

१४.५.५.[४]

अयमाकाशः  सर्वेषां भूतानां मध्वस्याकाशस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं हृद्याकाशस्तेजोमयोऽमृत>



१४.५.५.[५]

अयं वायुः  सर्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधु यश्चायमस्मिन्वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मम् प्राणस्तेजोमयोऽमृत>

१४.५.५.[६]

अयमादित्यः  सर्वेषां भूतानां मध्वस्यादित्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं

चक्षुषस्तेजोमयोऽमृत>

१४.५.५.[७]

अयं चन्द्रः  सर्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु
यश्चायमस्मिंश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मम्
मानसस्तेजोमयोऽमृत>

१४.५.५.[८]

इमा दिशः  सर्वेषां भूतानां मध्वासां दिशां सर्वाणि भूतानि मधु
यश्चायमासु
दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं श्रौत्रः
प्रातिश्रुत्कस्तेजोमयोऽमृत>



१४.५.५.[९]

इयं विद्युत्  सर्वेषां भूतानां मध्वस्यै विद्युतः सर्वाणि भूतानि मधु
यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं
तैजसस्तेजोमयोऽमृत>

१४.५.५.[१०]

अयं स्तनयित्नुः  सर्वेषां भूतानां मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधु

यश्चायमस्मिन्स्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शाब्दः सौवरस्तेजोमयोऽमृत>

१४.५.५.[११]

अयं धर्मः  सर्वेषां भूतानां मध्वस्य धर्मस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयोऽमृत>

१४.५.५.[१२]



इदं सत्यं  सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं सात्यस्तेजोमयोऽमृत>

१४.५.५.[१३]

इदं मानुषम्  सर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मम् मानुषस्तेजोमयोऽमृत>

१४.५.५.[१४]

अयमात्मा  सर्वेषां भूतानां मध्वस्यात्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदम् सर्वम्

१४.५.५.[१५]

स वा अयमात्मा  सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्वं एत आत्मानः समर्पिताः



१४.५.५.[१६]

इदं वै तन्मधु  दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिं दध्यङ्ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेति

१४.५.५.[१७]

इदं वै तन्मधु  दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतं स वां मधु प्रवोचदृतायन्त्वाष्ट्रं यद्दस्रावपिकक्ष्यं वामिति

१४.५.५.[१८]

इदं वै तन्मधु  दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्
पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः  पुरः स पक्षी भूत्वा पुरः पुरुष
आविषदिति स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किं चनानावृतं
नैनेन किं चनासंवृतम्

१४.५.५.[१९]

इदं वै तन्मधु  दध्यङ्ङाथर्वणोऽृ=विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्
रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय  इन्द्रो मायाभिः
पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेत्ययं वै हरयोऽयं वै दश च
सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मापूर्वमनपरमबाह्य मयमात्मा
ब्रह्म सर्वानुभूरित्यनुशाव्सनम्



१४.५.५.[२०]

अथ वंशः  तदिदं वयं शौर्पणाय्याचौर्पणाय्यो गौतमाद्गौतमो वात्स्याद्वात्स्यो
वात्स्याच्च पाराशर्याच्च पाराशर्यः सांकृत्याच्च भारद्वाजाच्च भारद्वाज
औदवाहेश्च
शाण्डिल्याच्च शाण्डिल्यो वैजवापाच्च गौतमाच्च गौतमो वैजवापायनाच्च
वैष्टपुरेयाच्च वैष्टपुरेयः शाण्डिल्याच्च रौहिणायनाच्च रौहिणायनः
शौनकाच्चात्रेयाच्च रैभ्याच्च रैभ्यः पौतिमाष्यायणाच्च कौण्डिन्यायनाच्च
कौण्डिन्यायनः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्यात्कौण्डिन्यः
कौण्डिन्याच्चाग्निवेश्याच्च

१४.५.५.[२१]

आग्निवेश्यः सैतवात्  सैतवः पाराशर्यात्पाराशर्यो जातूकार्ण्याज्जातूकर्ण्यो
भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो
भारद्वाजाद्भारद्वाजो वैजवापायनाद्वैजवापायनः कौशिकायनेः
कौशिकायनिर्घृतकौशिकाद्धृतकौशिकः पाराशर्यायणात्पाराशर्यायणः
पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो
भारद्वाजाच्चासुरायणाच्च
यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजा
द्भारद्वाज आत्रेयात्



१४.५.५.[२२]

आत्रेयो माण्टेः  माण्टिर्गौतमाद्गौतमो  गौतमाद्गौतमो वात्स्याद्वात्स्यः
शाण्डिल्याचाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो
गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो
बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः
सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो
विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच
आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः
प्राध्वंसनान्मृत्युः प्राध्वंसनः प्रध्वंसनात्प्रध्वंसन
एकर्षेरेकर्षिविप्रजित्तेर्विप्रजित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः
सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे
नमः

१४.६.१.[१]

जनको ह वैदेहो  बहुदक्षिणेन यज्ञेनेजे तत्र ह कुरुपञ्चालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेषाम् ब्राह्मणानामनूचानतम इति

१४.६.१.[२]

स ह गवां सहस्रमवरुरोध  दशदश पादा एकैकस्याः श्रृङ्ग्योराबद्धा बभूवुस्तान्होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति ते ह ब्राह्मणा न दधृषुः



१४.६.१.[३]

अथ ह याज्ञवल्क्यः  स्वमेव ब्रह्मचारिणमुवाचैताः सौम्योदज सामश्रवा३ इति ता होदाचकार ते ह ब्राह्मणाश्चुक्रुधुः कथं नु नो ब्रह्मिष्ठो ब्रुवीतेति

१४.६.१.[४]

अथ ह जनकस्य वैदे हस्य होताश्वलो बभूव  स हैनं पप्रच त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ इति स होवाच नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयं स्म इति तं ह तत एव प्रष्टुं दध्रे होताश्वलः

१४.६.१.[५]

याज्ञवल्क्येति होवाच  यदिदं सर्वं मृत्युनाप्तं सर्वं मृत्युनाभिपन्नं केन
यजमानो मृत्योराप्तिमतिमुच्यत इति होत्रर्त्विजाग्निना वाचा वाग्वै यज्ञस्य होव्ता
तद्येयं वाक्षोऽयमग्निः स होता सा मुक्तिः सातिमुक्तिः

१४.६.१.[६]

याज्ञवल्क्येति होवाच  यदिदं सर्वमहोरात्राभ्यामाप्तं
सर्वमहोरात्राभ्यामभिपन्नं केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत
इत्यध्वर्युणर्त्विजा चक्षुषादित्येन चक्षुर्वै यज्ञस्याध्वर्युस्तद्यदिदं चक्षुः
सोऽसावादित्यः सोऽध्वर्युः सा मुक्तिः सातिमुक्तिः



१४.६.१.[७]

याज्ञवल्क्येति होवाच  यदिदं सर्वं पूर्वपक्षापरपक्षाभ्यामाप्तं सर्वम्
पूर्वपक्षापरपक्षाभ्यामभिपन्नं केन यजमानः
पूर्वपक्षापरपक्षयोराप्तिमतिमुच्यत इति ब्रह्मणर्त्विजा मनसा चन्द्रेण मनो
वै यज्ञस्य ब्रह्मा तद्यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा सा मुक्तिः
सातिमुक्तिः

१४.६.१.[८]

याज्ञवल्क्येति होवाच  यदिदमन्तरिक्षमनारम्बणमिवाथ केनाक्रमेण
यजमानः स्वर्गं लोकमाक्रमत इत्युद्गात्रर्त्विजा वायुना प्राणेन प्राणो वै
यज्ञस्योद्गाता तद्योऽयं प्राण स वायुः स उद्गाता सा मुक्तिः सातिमुक्तिरित्यतिमोक्षा
अथ सम्पदः

१४.६.१.[९]

याज्ञवल्क्येति होवाच  कतिभिरयमद्यर्ग्भिर्होतास्मिन्यज्ञे करिष्यतीति तिसृभिरिति
कतमास्तास्तिस्र इति पुरोऽनुवाक्या च याज्या च शस्यैव तृतीया किं ताभिर्जयतीति
पृथिविलोकमेव पुरोऽनुवाक्यया जयत्यन्तरिक्षलोकं याज्यया द्यौर्लोकं शस्यया



१४.६.१.[१०]

याज्ञवल्क्येति होवाच  कत्ययमद्याध्वर्युरस्मिन्यज्ञ आहुतीर्होष्यतीति तिस्र इति
कतमास्तास्तिस्र इति या हुता उज्ज्वलन्ति या हुता अतिनेदन्ति या हुता अधिशेरते किं
ताभिर्जयतीति या हुता उज्ज्वलन्ति देवलोकमेव ताभिर्जयति दीप्यत इव हि देवलोको
या
हुता अतिनेदन्ति मनुष्यलोकमेव ताभिर्जयत्यतीव हि मनुष्यलोको या हुता
अधिशेरते पितृलोकमेव ताभिर्जयत्यध इव हि पितृलोकः

१४.६.१.[११]

याज्ञवल्क्येति होवाच  कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो

देवताभिर्गोपायिष्यतीत्येकयेति कतमा सैकेति मन एवेत्यनन्तं वै मनोऽनन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति

१४.६.१.[१२]

याज्ञवल्क्येति होवाच  कत्ययमद्योद्गातास्मिन्यज्ञे स्तोत्रिया स्तोष्यतीति तिस्र इति कतमास्तास्तिस्र इति पुरोऽनुवाक्या च याज्या च शस्यैव तृतीयाधिदेवतमथाध्यात्मं कतमास्ता या अध्यात्ममिति प्राण एव पुरोनुवाक्यापानो याज्या व्यानः शस्या किं ताभिर्जयतीति यत्किं चेदं प्राणभृदिति ततो ह होताश्वल उपरराम

१४.६.२.[१]



अथ हैनं जारत्कारव आर्तभागः पप्रच  याज्ञवल्क्येति होवाच कति ग्रहाः कत्यतिग्रहा इत्यष्टौ ग्रहा अष्टावतिग्रहा ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे त इति

१४.६.२.[२]

प्राणो वै ग्रहः  सोऽपानेनातिग्रहेण गृहीतोऽपानेन हि गन्धान्जिघ्रति

१४.६.२.[३]

जिह्वा वै ग्रहः  स रसेनातिग्रहेण गृहीतो जिह्वया हि रसान्विजानाति

१४.६.२.[४]

वाग्वै ग्रहः  स नाम्नातिग्रहेण गृहीतो वाचा हि नामान्यभिवदति

१४.६.२.[५]

चक्षुर्वै ग्रहः  स रूपेणातिग्रहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति

१४.६.२.[६]



श्रोत्रं वै ग्रहः  स शब्देनातिग्रहेण गृहीतः श्रोत्रेण हि शब्दाञ्छृणोति

१४.६.२.[७]

मनो वै ग्रहः  स कामेनातिग्रहेण गृहीतो मनसा हि कामान्कामयते

१४.६.२.[८]

हस्तौ वै ग्रहः  स कर्मणातिग्रहेण गृहीतो हस्ताभ्यां हि कर्म करोति

१४.६.२.[९]

त्वग्वै ग्रहः  स स्पर्शेनातिग्रहेण गृहीतस्त्वचा हि स्पर्शान्वेदयत इत्यष्टौ ग्रहा अष्टावतिग्रहाः

१४.६.२.[१०]

याज्ञवल्क्येति होवाच  यदिदं सर्वं मृत्योरन्नं का स्वित्सा देवता यस्या मृत्युरन्नमित्यग्निर्वै मृत्युः सोऽपामन्नमप पुनर्मृत्युं जयति

१४.६.२.[११]



याज्ञवल्क्येति होवाच  यत्रायं पुरुषो म्रियते किमेनं न जहातीति नामेत्यनन्तं वै नामानन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति एव स तेन लोकं जयति

१४.६.२.[१२]

याज्ञवल्क्येति होवाच  यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते

१४.६.२.[१३]

याज्ञवल्क्येति होवाच  यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातम्

प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं
शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन्केशा अप्सु लोहितं च रेतश्च निधीयते
क्वायं तदा पुरुषो भवतीत्याहर सौम्य हस्तम्

१४.६.२.[१४]

आर्तभागेति होवाच  आवमेवैतद्वेदिष्यावो न नावेतत्सजन इति तौ होत्क्रस्य
मन्त्रयां चक्रतुस्तौ ह यदूचतुः कर्म हैव तदूचतुरथ ह यत्प्रशशंसतुः
कर्म हैव तत्प्रशशंसतुः पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति ततो
ह जारत्कारव आर्तभाग उपरराम



१४.६.३.[१]

अथ हैनं भुज्युर्लाह्यायनिः पप्रच  याज्ञवल्क्येति होवाच मद्रेषु चरकाः
पर्यव्रजाम ते एतञ्चलस्य काप्यस्य गृहानैम तस्यासीद्दुहिता गन्धर्वगृहीता
तमपृचाम कोऽसीति सोऽब्रवीत्सुधन्वाङ्गिरस इति तं यदा
लोकानामन्तानपृचामाथैतमब्रूम क्व पारिक्षिता अभवन्क्व पारिक्षिता
अभवन्निति तत्त्वा पृचामि याज्ञवल्क्य क्व पारिक्षिता अभवन्निति

१४.६.३.[२]

स होवाच  उवाच वै स तदगचन्वै ते तत्र यत्राश्वमेधयाजिनो गचन्तीति क्व
न्वश्वमेधयाजिनो गचन्तीति द्वात्रिंशतं वै देवरथाह्न्यान्ययं लोकस्तं
समन्तं लोकं द्विस्तावत्पृथिवी पर्येति तां पृथिवीं द्विस्तावत्समुद्रः पर्येति

तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाशस्तानिन्द्रः
सुपर्णो भूत्वा वायवे प्रायचत्तान्वायुरात्मनि धित्वा तत्रागमयद्यत्र पारिक्षिता
अभवन्नित्येवमिव वै स वायुमेव प्रशशंस तस्माद्वायुरेव व्यष्टिर्वायुः
समष्टिरप पुनर्मृत्युं जयति सर्वमायुरेति य एवं वेद ततो ह
भुज्युर्लाह्यायनिरुपरराम

१४.६.४.

अथ हैनं कहोडः कौषीतकेयः पप्रच  याज्ञवल्क्येति होवाच
यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा
सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो योऽषनायापिपासे शोकं मोहं जराम्
मृत्युमत्येत्येतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च
लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा
या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतस्तस्मात्पण्डितः पाण्डित्यं
निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च
मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एव
भवति य एवं वेद ततो ह कहोडः कौषीतकेय उपरराम



१४.६.५

अथ हैनमुषस्तश्चाक्रायणः पप्रच  याज्ञवल्क्येति होवाच
यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा
सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो
योऽपानेनापानिति स त आत्मा सर्वान्तरो यो व्यानेन व्यनिति स त आत्मा सर्वान्तरो य
उदानेनोदनिति स त आत्मा सर्वान्तरो यः समानेन समनिति स त आत्मा सर्वान्तरः स

होवाचोषस्तश्चाक्रायणो यथा वै ब्रूयादसौ गौरसावश्व
इत्येवमेवैतद्व्यपदिष्टं भवति यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा
सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य
सर्वान्तरो न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं श्रृणुया न मतेर्मन्तारम्
मन्वीथा न विज्ञातेर्विज्ञातारं विज्ञानीया एष त आत्मा सर्वान्तरोऽतोऽन्यदार्तं ततो
होषस्तश्चाक्रायण उपरराम

१४.६.६.

अथ हैनं गार्गी वाचक्नवी पप्रच  याज्ञवल्क्येति होवाच यदितं सर्वमप्स्वोतं
च प्रोतं च कस्मिन्न्वाप ओताश्च प्रोतश्चेति वायौ गार्गीति कस्मिन्नु वायुरोतश्च
प्रोतश्चेत्याकाश एव गार्गीति कस्मिन्न्वाकाश ओतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति
कस्मिन्न्वन्तरिक्षलोका ओताश्च प्रोताश्चेति द्यौर्लोके गार्गीति कस्मिन्नु द्यौर्लोक
ओतश्च प्रोतश्चेत्यादित्यलोकेषु गार्गीति कस्मिन्न्वादित्यलोका ओताश्च प्रोताश्चेति
चन्द्रलोकेषु गार्गीति कस्मिन्नु चन्द्रलोका ओताश्च प्रोताश्चेति नक्षत्रलोकेषु गार्गीति
कस्मिन्नु नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति कस्मिन्नु देवलोका
ओताश्च प्रोताश्चेति गन्धर्वलोकेषु गार्गीति कस्मिन्नु गन्धर्वलोका ओताश्च प्रोताश्चेति
प्रजापतिलोकेषु गार्गीति कस्मिन्नु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु
गार्गीति कस्मिन्नु ब्रह्मलोका ओताश्च प्रोताश्चेति स होवाच गार्गि मातिप्राक्षीर्मा ते
मूर्धा व्यपप्तदनतिप्रश्न्या वै देवता अतिपृचसि गार्गि मातिप्राक्षीरिति ततो ह गार्गी
वाचक्नव्युपरराम

१४.६.७.[१]

अथ हैनमुद्दालक आरुणिः पप्रच  याज्ञवल्क्येति होवाच मद्रेष्ववसाम

पतञ्चलस्य काप्यस्य गृहेषु यज्ञमधीयानास्तस्यासीद्भार्या गन्धर्वगृहीता
तमपृचाम कोऽसीति सोऽब्रवीत्कबन्ध आथर्वण इति

१४.६.७.[२]

सोऽब्रवीत्  पतञ्चलं काप्यं याज्ञिकांश्च वेत्थ नु त्वं काप्य तत्सूत्रं यस्मिन्नयं
च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्तीति सोऽब्रवीत्पतञ्चलः
काप्यो नाहं तद्भगवन्वेदेति

१४.६.७.[३]

सोऽब्रवीत्  पतञ्चलं काप्यं याज्ञिकांश्च वेत्थ नु त्वं काप्य तमन्तर्यामिणं य
इमं च लोकं परं च लोकं सर्वाणि च भूतान्यन्तरो यमयतीति
सोऽब्रवीत्पतञ्चलः काप्यो नाहं तं भगवन्वेदेति



१४.६.७.[४]

सोऽब्रवीत्  पतञ्चलं काप्यं याज्ञिकांश्च यो वै तत्काप्य सूत्रं विद्यात्तं
चान्तर्यामिणं स ब्रह्मवित्स लोकवित्स देववित्स वेदवित्स यज्ञवित्स भूतवित्स
आत्मवित्स सर्वविदिति तेभ्योऽब्रवीत्तदहं वेद तच्चेत्त्वं याज्ञवल्क्य
सूत्रमविद्वांस्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यतीति

१४.६.७.[५]

वेद वा अहं गौतम  तत्सूत्रं तं चान्तर्यामिणमिति यो वा इदं कश्च ब्रूयाद्वेदवेदेति यथा वेत्थ तथा ब्रूहीति

१४.६.७.[६]

वायुर्वै गौतम तत्सूत्रम्  वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति तस्माद्वै गौतम पुरुषम् प्रेतमाहुर्व्यस्रंसिषतास्याङ्गानीति वायुना हि गौतम सूत्रेण संदृब्धानि भवन्तीत्येवमेवैतद्याज्ञवल्क्यान्तर्यामिणं ब्रूहीति

१४.६.७.[७]



यः पृथिव्यां तिष्ठन्  पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त आत्मान्तर्याम्यमृतः

१४.६.७.[८]

सोऽप्सु तिष्ठन्  अद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं योऽपोऽन्तरो यमयति स त आत्मान्तर्याम्यमृतः

१४.६.७.[९]

योऽग्नौ तिष्ठन्  अग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो

यमयति स त आत्मान्तर्याम्यमृतः

१४.६.७.[१०]

य आकाशे तिष्ठन्  आकाशादन्तरो यमाकाशो न वेद यस्याकाशः शरीरं य आकाशमन्तरो यमयति स त आत्मान्तर्याम्यमृतः

१४.६.७.[११]
यो वायौ तिष्ठन्  वायोरन्तरो यं वायुर्न वेद यस्य वायुः शरीरं यो वायुमन्तरो यम>



१४.६.७.[१२]

य आदित्ये तिष्ठन्  आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यम>

१४.६.७.[१३]

यश्चन्द्रतारके तिष्ठन्  चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद यस्य चन्द्रतारकं शरीरं यश्चन्द्रतारकमन्तरो यम>

१४.६.७.[१४]

यो दिक्षु तिष्ठन्  दिग्भ्योऽन्तरो यं दिशो न विदुर्यस्य दिशः शरीरं यो दिशोऽन्तरो यम>

१४.६.७.[१५]

यो विद्युति तिष्ठन्  विद्युतोऽन्तरो यं विद्युन्न वेद यस्य विद्युचरीरं यो विद्युतमन्तरो यम>

१४.६.७.[१६]



य स्तनयित्नौ तिष्ठन्  स्तनयित्नोरन्तरो यं स्तनयित्नुर्न वेद यस्य स्तनयित्नुः शरीरं य स्तनयित्नुमन्तरो यमयति स त आत्मान्तर्याम्यमृत इत्यधिदेवतमथाधिलोकम्

१४.६.७.[१७]

यः सर्वेषु लोकेषु तिष्ठन्  सर्वेभ्यो लोकेभ्योऽन्तरो यं सर्वे लोका न विदुर्यस्य सर्वे लोकाः शरीरं यः सर्वांलोकानन्तरो यमयति स त आत्मान्तर्याम्यमृत इत्यु एवाधिलोकमथाधिवेदम्

१४.६.७.[१८]

यः सर्वेषु वेदेषु तिष्ठन्  सर्वेभ्यो वेदेभ्योऽन्तरो इत्यु
एवाधिवेदमथाधियज्ञम्

१४.६.७.[१९]

सर्वेषु यज्ञेषु तिष्ठन्  सर्वेभ्यो यज्ञेभ्योऽन्तरो इत्यु
एवाधियज्ञमथाधिभूतम्

१४.६.७.[२०]
यः सर्वेषु भूतेषु तिष्ठन्  सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न
विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयति स त
आत्मान्तर्याम्यमृत इत्यु एवाधिभूतमथाध्यात्मम्



१४.६.७.[२१]

यः प्राणे तिष्ठन्  प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः
प्राणमन्तरो यमयति स त आत्मान्तर्याम्यमृतः

१४.६.७.[२२]

यो वाचि तिष्ठन्  वाचोऽन्तरो>

१४.६.७.[२३]

यश्चक्षुषि तिष्ठन्  चक्षुषोऽन्तरो>

१४.६.७.[२४]

यः श्रोत्रे तिष्ठन् श्रोत्रादन्तरो>



१४.६.७.[२५]

यो मनसि तिष्ठन्  मनसोऽन्तरो>

१४.६.७.[२६]

यस्त्वचि तिष्ठन्  त्वचोऽन्तरो>

१४.६.७.[२७]

यस्तेजसि तिष्ठन्  तेजसोऽन्तरो>

१४.६.७.[२८]

यस्तमसि तिष्ठन्  तमसोऽन्तरो>

१४.६.७.[२९]

यो रेतसि तिष्ठन्  रेतसोऽन्तरो>



१४.६.७.[३०]

य आत्मनि तिष्ठन्  आत्मनोऽन्तरो>

१४.६.७.[३१]

अदृष्टो द्रष्टाश्रुतः श्रोता  अमतो मन्ताविज्ञातो विज्ञाता नान्योऽस्ति द्रष्टा नान्योऽस्ति श्रोता नान्योऽस्ति मन्ता नान्योऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतोऽतोऽन्यदार्तं ततो होद्दालक आरुणिरुपरराम

१४.६.८.[१]

अथ ह वाचक्नव्युवाच  ब्राह्मणा भगवन्तो हन्ताहमिमं याज्ञवल्क्यं द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे विवक्ष्यति न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति तौ चेन्मे न विवक्ष्यति मूर्धास्य विपतिष्यतीति पृच गार्गीति

१४.६.८.[२]

सा होवाच  अहं वै त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो ओग्रपुत्र उद्यं धनुरधिज्यं कृत्वा द्वौ वाणवन्तौ सपत्नाधिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहं त्वा द्वाभ्यां प्रश्नाभ्यामुपोदस्थां तौ मे ब्रूहीति पृच गार्गीति



१४.६.८.[३]

सा होवाच  यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति

१४.६.८.[४]

स होवाच  यदूर्ध्वं गार्गी दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाशे तदोतं च प्रोतं चेति

१४.६.८.[५]

सा होवाच नमस्ते याज्ञवल्क्य यो म एतं व्यवोचोऽपरस्मै धारयस्वेति पृच गार्गीति

१४.६.८.[६]

सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिन्नेव तदोतं च प्रोतं चेति



१४.६.८.[७]

स होवाच यदूर्ध्वं गार्गी दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं च प्रोतं चेति कस्मिन्वाकाश ओतश्च प्रोतश्चेति

१४.६.८.[८]

स होवाच एतद्वै तदक्षरं गार्गी ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमचायमतमोऽवाय्वना काशमसङ्गमस्पर्शमगन्धमरसमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कम प्राणममुखमनामागोत्रमजरममरमभयममृतमरजोऽशब्दमविवृतम

संवृतमपूर्वमनपरमनन्तरमबाह्यं न तदश्नोति कं चन न तदश्नोति कश्चन

१४.६.८.[९]

एतस्य वा अक्षरस्य प्रशासने गार्गी द्यावापृथिवी विधृते तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्ग्यहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा विधृतास्तिष्ठन्त्येतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दिशमेतस्य वा अक्षरस्य प्रशासने गार्गि ददतम् मनुष्याः प्रशंसन्ति यजमानं देवा दर्व्यं पितरोऽन्वायत्ताः



१४.६.८.[१०]

यो वा एतदक्षरमविदित्वा गार्गि अस्मिंलोके जुहोति ददाति तपस्यत्यपि बहूनि वर्षसहस्राण्यन्तवानेवास्य स लोको भवति यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वास्माल्लोकात्प्रैति स ब्राह्मणः

१४.६.८.[११]

तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृश्रुतं मन्त्र!विज्ञातं विज्ञातृ नान्यदस्ति द्रष्टृ नान्यदस्ति श्रोतृ नान्यदस्ति मन्तृ नान्यदस्ति विज्ञात्रेतद्वै तदक्षरं गार्गि यस्मिन्नाकाश ओतश्च प्रोतश्चेति

१४.६.८.[१२]

सा होवाच  ब्राह्मणा भगवन्तस्तदेव बहु मन्यध्वं यदस्मान्नमस्कारेण मुच्याध्वै न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति ततो ह वाचक्नव्युपरराम

१४.६.९.[१]

अथ हैनं विदग्धः शाकल्यः पप्रच  कति देवा याज्ञवल्क्येति स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच



१४.६.९.[२]

कत्येव देवा याज्ञवल्क्येति  त्रयस्त्रिंशदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति षडित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्यध्यर्ध इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक इत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति

१४.६.९.[३]

स होवाच  महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति कतमे ते

त्रयस्त्रिंशदित्यष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति

१४.६.९.[४]

कतमे वसव इति  अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च नक्षत्राणि चैते वसव एतेषु हीदं सर्वं वसु हितमेते हीदं सर्वं वासयन्ते तद्यदिदं सर्वं वासयन्ते तस्माद्वसव इति

१४.६.९.[५]



कतमे रुद्रा इति  दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्मान्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति

१४.६.९.[६]

कतम आदित्या इति  द्वादश मासाः संवत्सरस्यैत आदित्या एते हीदं सर्वमाददाना यन्ति तद्यदिदं सर्वमाददाना यन्ति तस्मादादित्या इति

१४.६.९.[७]

कतम इन्द्रः कतमः प्रजापतिरिति  स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतम स्तनयित्नुरित्यशनिरिति कतमो यज्ञ इति पशव इति

१४.६.९.[८]

कतमे षडिति  अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्चैते ह्येवेदं सर्वं षडिति

१४.६.९.[९]

कतमे ते त्रयो देवा इतीम एव त्रयो लोका एषु हीमे सर्वे देवा इति कतमौ द्वौ देवावित्यन्नं चैव प्राणश्चेति कतमोऽध्यर्ध इति योऽयं पवत इति



१४.६.९.[१०]

तदाहुः  यदयमेक एव पवतेऽथ कथमध्यर्ध इति यदस्मिन्निदं सर्वमध्यार्ध्नोत्तेनाध्यर्ध इति कतम एको देव इति स ब्रह्म त्यदित्याचक्षते

१४.६.९.[११]

पृथिव्येव यस्यायतनम्  चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणं स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तम् पुरुषं सर्वस्यात्मनः परायणं यमात्थ य एवायं शारीरः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति स्त्रिय इति होवाच

१४.६.९.[१२]

रूपाण्येव यस्यायतनम्  चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं
विद्यात्सर्वस्यात्मनः परायणं स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तम्
पुरुषं सर्वस्यात्मनः परायणं यमात्थ य एवासावादित्ये पुरुषः स एष
वदैव शाकल्य तस्य का देवतेति चक्षुरिति होवाच

१४.६.९.[१३]

आकाश एव यस्यायतनम्  चक्षुर्लोको मनो> य एवायं वायौ पुरुषः स एष
वदैव शाकल्य तस्य का देवतेति प्राण इति होवाच



१४.६.९.[१४]

काम एव यस्यायतनम्  चक्षुर्लोको मनो> य एवासौ चन्द्रे पुरुषः स एष
वदैव शाकल्य तस्य का देवतेति मन इति होवाच

१४.६.९.[१५]

तेज एव यस्यायतनम्  चक्षुर्लोको मनो> य एवायमग्नौ पुरुषः स एष वदैव
शाकल्य तस्य का देवतेति वागिति होवाच

१४.६.९.[१६]

तम एव यस्यायतनम्  चक्षुर्लोको मनो> य एवायं चायामयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति मृत्युरिति होवाच

१४.६.९.[१७]

आप एव यस्यायतनम्  चक्षुर्लोको मनो> य एवायमप्सु पुरुषः स एष वदैव शाकल्य तस्य का देवतेति वरुण इति होवाच

१४.६.९.[१८]



रेत एव यस्यायतनम्  चक्षुर्लोको मनो> य एवायं पुत्रमयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति प्रजापतिरिति होवाच

१४.६.९.[१९]

शाकल्येति होवाच याज्ञवल्क्यः  त्वां स्विदिमे ब्राह्मणा अङ्गारावक्षयणमक्रता३ इति

१४.६.९.[२०]

याज्ञवल्क्येति होवाच शाकल्यो  यदिदं कुरुपञ्चालानां ब्राह्मणानत्यवादीः किम् ब्रह्म विद्वानिति दिशो वेद सदेवाः सप्रतिष्ठा इति यद्दिशो वेत्थ सदेवाः

सप्रतितिष्ठाः

१४.६.९.[२१]

किंदेवतोऽस्यां प्राच्यां दिश्यसीति  आदित्यदेवत इति स आदित्यः कस्मिन्प्रतिष्ठित इति चक्षुषीति कस्मिन्नु चक्षुः प्रतिष्ठितं भवतीति रूपेष्विति चक्षुषा हि रूपाणि पश्यति कस्मिन्नु रूपाणि प्रतिष्ठितानि भवन्तीति हृदय इति हृदयेन हि रूपाणि जानाति हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीत्येवमेवैतद्याज्ञवल्क्य

१४.६.९.[२२]



किंदेवतोऽस्यां दक्षिणायां दिश्यसीति  यमदेवत इति स यमः कस्मिन्प्रतिष्ठित इति दक्षिणायामिति कस्मिन्नु दक्षिणा प्रतिष्ठिता भवतीति श्रद्धायामिति यदा ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति श्रद्धायां ह्येव दक्षिणा प्रतिष्ठिता भवतीति कस्मिन्नु श्रद्धा प्रतिष्ठिता भवतीति हृदय इति हृदयेन हि श्रद्धत्ते हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य

१४.६.९.[२३]

किंदेवतोऽस्यां प्रतीच्यां दिश्यसीति  वरुणदेवत इति स वरुणः कस्मिन्प्रतिष्ठित इत्यप्स्विति कस्मिन्न्वापः प्रतिष्ठिता भवन्तीति रेतसीति कस्मिन्नु रेतः प्रतिष्ठितम् भवतीति हृदय इति तस्मादपि प्रतिरूपं जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्मित इति हृदये ह्येव रेतः प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य

१४.६.९.[२४]

किंदेवतोऽस्यामुदीच्यां दिश्यसीति  सोमदेवत इति स सोमः कस्मिन्प्रतिष्ठित इति दीक्षायामिति कस्मिन्नु दीक्षा प्रतिष्ठिता भवतीति सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्ये ह्येव दीक्षा प्रतिष्ठिता भवतीति कस्मिन्नु सत्यं प्रतिष्ठितं भवतीति हृदय इति हृदयेन हि सत्यं जानाति हृदये ह्येव सत्यं प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य

१४.६.९.[२५]

किंदेवतोऽस्यां ध्रुवाया+ दिश्यसीति  अग्निदेवत इति सोऽग्निः कस्मिन्प्रतिष्ठित इति वाचीति कस्मिन्नु वाक्प्रतिष्ठिता भवतीति मनसीति कस्मिन्नु मनः प्रतिष्ठितम् भवतीति हृदय इति कस्मिन्नु हृदयं प्रतिष्ठितं भवतीति



१४.६.९.[२६]
अहल्लिकेति होवाच याज्ञवल्क्यो  यत्रैतदन्यत्रास्मन्मन्यासै यत्रैतदन्यत्रास्मत्स्याच्वानो वैनदद्युर्वयांसि वैनद्विमथ्नीरन्निति

१४.६.९.[२७]

कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थ इति  प्राण इति कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति कस्मिन्न्वपानः प्रतिष्ठित इति व्यान इति कस्मिन्नु व्यानः प्रतिष्ठित इत्युदान इति कस्मिन्नूदानः प्रतिष्ठित इति समान इति

१४.६.९.[२८]

स एष नेति नेत्यात्मा अगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गोऽसितो न सज्यते न
व्यथत इत्येतान्यष्टावायतनान्यष्टौ लोका अष्टौ पुरुषाः स
यस्तान्पुरुषान्व्युदुह्य प्रत्युह्यात्यक्रामीत्तं त्वौपनिषदं पुरुषं पृचामि
तं चेन्मे न विवक्ष्यसि मूर्धा ते विपतिष्यतीति तं ह शाकल्यो न मेने तस्य ह
मूर्धा विपपात तस्य हाप्यन्यन्मन्यमानाः परिमोषिणोऽस्थीन्यपजह्रुः

१४.६.९.[२९]



अथ ह याज्ञवल्क्य उवाच ब्राह्मणा भगवन्तो यो वः कामयते स मा पृचतु सर्वे
वा मा पृचत यो वः कामयते तं वः पृचानि सर्वान्वा वः पृचानीति तेह ब्राह्मणा न
दधृषुः

१४.६.९.[३०]

तान्हैतैः श्लोकैः पप्रच यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा तस्य
पर्णानि लोमानि त्वगस्योत्पाटिका बहिः

१४.६.९.[३१]

त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः  तस्मात्तदातुन्नात्प्रैति रसो वृक्षादिवाहतात्

१४.६.९.[३२]

मांसान्यस्य शकराणि किनाटं स्नाव तत्स्थिरम्  अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमा कृता

१४.६.९.[३३]



यद्वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः  मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति

१४.६.९.[३४]

रेतस इति मा वोचत जीवतस्तत्प्रजायते  जात एव न जायते को न्वेनं जनयेत्पुनः धानारुह उ वै वृक्षोऽन्यतः प्रेत्य सम्भवः  यत्समूलमुद्बृहेयुर्वृक्षं न पुनराभवेत्मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति विज्ञानमानन्दम् ब्रह्म रातेर्दातुः परायणम्  तिष्ठमानस्य तद्विद इति

१४.६.१०.[१]

जनको ह वैदेह आसां चक्रे  अथ ह याज्ञवल्क्य आवव्राज स होवाच जनको वैदेहो याज्ञवल्क्य किमर्थमचारीः पशूनिचन्नण्वन्तानित्युभयमेव सम्राडिति होवाच यत्ते कश्चिदब्रवीत्तचृणवामेति

१४.६.१०.[२]

अब्रवीन्म उदङ्कः शौल्वायनः  प्राणो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तचौल्वायनोऽब्रवीत्प्राणो वै ब्रह्मेत्यप्राणतो हि किं स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति



१४.६.१०.[३]

स वै नो ब्रूहि याज्ञवल्क्य  स एवायतनमाकाशः प्रतिष्ठा प्रियमित्येनदुपासीत का प्रियता याज्ञवल्क्य प्राण एव सम्राडिति होवाच प्राणस्य वै सम्राड्कामायायाज्यं याजयत्यप्रतिगृह्यस्य प्रतिगृह्णात्यपि तत्र वधाशङ्का भवति यां दिशमेति प्राणस्यैव सम्राड्कामाय प्राणो वै सम्राट्परमं ब्रह्म नैनं प्राणो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति

१४.६.१०.[४]

देवो भूत्वा देवानप्येति  य एवं विद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति क एव ते किमब्रवीदिति

१४.६.१०.[५]

अब्रवीन्मे जित्वा शैलिनो  वाग्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तचैलिनोऽब्रवीद्वाग्वै ब्रह्मेत्यववदतो हि किं स्यादब्रवीत्तु ते तस्यायतनम् प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति

१४.६.१०.[६]

स वै नो ब्रूहि याज्ञवल्क्य  वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञेत्येनदुपासीत का प्रज्ञता याज्ञवल्क्य वागेव सम्राडिति होवाच वाचा वै सम्राड्बन्धुः प्रज्ञायत ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि वाचैव सम्राड्प्रज्ञायन्ते वाग्वै सम्राट् परमं ब्रह्म नैनं वाग्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति



१४.६.१०.[७]

देवो भूत्वा देवानप्येति  य एवं विद्वानेतदुपास्ते हस्त्यृ>

१४.६.१०.[८]

अब्रवीन्मे वर्कुवार्ष्णः  चक्षुर्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तद्वार्ष्णोऽब्रवीच्चक्षुर्वै ब्रह्मेत्यपश्यतो

हि किं स्यादब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति

१४.६.१०.[९]

स वै नो ब्रूहि याज्ञवल्क्य  चक्षुरेवायतनमाकाशः प्रतिष्ठा सत्यमित्येनदुपासीत का सत्यता याज्ञवल्क्य चक्षुरेव सम्राडिति होवाच चक्षुषा वै सम्राड्पश्यन्तमाहुरद्राक्षीरिति स आहाद्राक्षमिति तत्सत्यं भवति चक्षुर्वै सम्राड्परमं ब्रह्म नैनं चक्षुर्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति

१४.६.१०.[१०]



देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृ

१४.६.१०.[११]

अब्रवीन्मे गर्दभीविपीतो भारद्वाजः  श्रोत्रं वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तद्भारद्वाजोऽब्रवीच्छ्रोत्रं वै ब्रह्मेत्यश्रृण्वतो हि किं स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति

१४.६.१०.[१२]

स वै नो ब्रूहि याज्ञवल्क्य  श्रोत्रमेवायतनमाकाशः प्रतिष्ठानन्त इत्येनदुपासीत कानन्तता याज्ञवल्क्य दिश एव सम्राडिति होवाच तस्माद्वै सम्राड्यां कां च दिशं गचति नैवास्या अन्तं गचत्यनन्ता हि दिशः श्रोत्रं हि दिशः श्रोत्रं वै सम्राट् परमं ब्रह्म नैनं श्रोत्रं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति

१४.६.१०.[१३]

देवो भूत्वा देवानप्येति  य एवं विद्वानेतदुपास्ते हस्त्यृ>



१४.६.१०.[१४]

अब्रवीन्मे सत्यकामो जावालो  मनो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तत्सत्यकामोऽब्रवीन्मनो वै ब्रह्मेत्यमनसो हि किं स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति

१४.६.१०.[१५]

स वै नो ब्रूहि याज्ञवल्क्य  मन एवायतनमाकाशः प्रतिष्ठानन्द इत्येनदुपासीत कानन्दता याज्ञवल्क्य मन एव सम्राडिति होवाच मनसा वै सम्राट् स्त्रियमभिहर्यति तस्यां प्रतिरूपः पुत्रो जायते स आनन्दो मनो वै सम्राट् परमं ब्रह्म नैनं मनो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति

१४.६.१०.[१६]

देवो भूत्वा देवानप्येति  य एवं विद्वानेतदुपास्ते हस्त्यृ>

१४.६.१०.[१७]

अब्रवीन्मे विदग्धः शाकल्यो  हृदयं वै ब्रह्मेति यथा
मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तचाकल्योऽब्रवीद्धृदयं वै
ब्रह्मेत्यहृदयस्य हि किं स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न
मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति



१४.६.१०.[१८]

स वै नो ब्रूहि याज्ञवल्क्य  हृदयमेवायतनमाकाशः प्रतिष्ठा
स्थितिरित्येनदुपासीत का स्थितिता याज्ञवल्क्य हृदयमेव सम्राडिति होवाच हृदयं
वै सम्राड्वर्वेषां भूतानां प्रतिष्ठा हृदयेन हि सर्वाणि भूतानि प्रतितिष्ठन्ति
हृदयं वै सम्राद्दरमं ब्रह्म नैनं हृदयं जहाति सर्वाण्येनम्
भूतान्यभिक्षरन्ति

१४.६.१०.[१९]

देवो भूत्वा देवानप्येति  य एवं विद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति

१४.६.११.[१]

अथ ह जनको वैदेहः कूर्चादुपावसर्पन्नुवाच  नमस्ते याज्ञवल्क्यानु मा शाधीति स होवाच यथा वै सम्राण्महान्तमध्वानमेष्यन्रथं वा नावं वा समाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्मास्येवं वृन्दारक आढ्यः सन्नधीतवेद उक्तोपनिषत्क इतो विमुच्यमानः क्व गमिष्यसीति नाहं तद्भगवन्वेद यत्र गमिष्यामीत्यथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवानिति



१४.६.११.[२]

स होवाच  इन्धो वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोऽक्षेणेव परोऽक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः

१४.६.११.[३]

अथैतद्वामेऽक्षिणि पुरुषरूपम्  एषास्य पत्नी विराट्तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाशोऽथैनयोरेतदन्नं य एषोऽन्तर्हृदये लोहितपिण्डोऽथैनयोरेतत्प्रावरणं यदेतदन्तर्हृदये जालकमिवाथैनयोरेषा सृतिः सती संचरणी यैषा हृदयादूर्ध्वा नाड्युच्चरति

१४.६.११.[४]

ता वा अस्यैताः  हिता नाम नाड्यो यथा केशः सहस्रधा भिन्न एताभिर्वा
एतमास्रवदास्रवति तस्मादेष प्रविविक्ताहारतर इव भवत्यस्माचारीरादात्मनः

१४.६.११.[५]

तस्या वा एतस्य पुरुषस्य  प्राची दिक्प्राञ्चः प्राणा दक्षिणा दिग्दक्षिणाः प्राणाः
प्रतीची दिक्प्रत्यञ्चः प्राणा उदीची दिगुदञ्चः प्राणा ऊ ऊर्ध्वा दिगूर्ध्वाः प्राणा
अवाची
दिगवाञ्चः प्राणा सर्वा दिशः सर्वे प्राणाः



१४.६.११.[६]

स एष नेति नेत्यात्मा  अगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गोऽसितो न सज्यते न
व्यथतेऽभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः स होवाच जनको वैदेहो
नमस्ते याज्ञवल्क्याभयं त्वागचताद्यो नो भगवन्नभयं वेदयस इमे विदेहा
अयमहमस्मीति

१४.७.१.[१]

जनकं ह वैदेहं याज्ञवल्क्यो जगाम  समेनेन वदिष्य इत्यथ ह यज्जनकश्च

वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदतुस्तस्मै ह याज्ञवल्क्यो वरं ददौ स ह
कामप्रश्नमेव वव्रे तं हास्मै ददौ तं ह सम्राडेव पूर्वः पप्रच

१४.७.१.[२]

याज्ञवल्क्य किंज्योतिरयं पुरुष इति  आदित्यज्योतिः सम्राडिति होवाचादित्येनैवायं
ज्योतिषास्ते पल्ययते कर्म कुरुते उइपर्येतीत्येवमेवैतद्याज्ञवल्क्य

१४.७.१.[३]

अस्तमित आदित्ये याज्ञवल्क्य  किंज्योतिरेवायं पुरुष इति चन्द्रज्योतिः सम्राडिति
होवाच चन्द्रेणैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते
विपर्येतीत्येवमेवैतद्याज्ञवल्क्य



१४.७.१.[४]

अस्तमित आदित्ये याज्ञवल्क्य  चन्द्रमस्यस्तमिते किंज्योतिरेवायं पुरुष
इत्यग्निज्योतिः सम्राडिति होवाचाग्निनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते
विपर्येतीत्येवमेवैतद्याज्ञवल्क्य

१४.७.१.[५]
अस्तमित आदित्ये याज्ञवल्क्य  चन्द्रमस्यस्तमिते शान्तेऽग्नौ किंज्योतिरेवायं पुरुष
इति वाग्ज्योतिः सम्राडिति होवाच वाचैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते

विपर्येतीति तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न विनिर्ज्ञायतेऽथ यत्र वागुच्चरत्युपैव तत्र ण्येतीत्येवमेवैतद्याज्ञवल्क्य

१४.७.१.[६]

अस्तमित आदित्ये याज्ञवल्क्य  चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुष इत्यात्मज्योतिः सम्राडिति होवाचात्मनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपर्येतीति

१४.७.१.[७]



कतम आत्मेति  योऽयं विज्ञानमयः पुरुषः प्राणेषु हृद्यन्तर्ज्योतिः स समानः सन्नुभौ लोकौ संचरति ध्यायतीव लेलायतीव सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति

१४.७.१.[८]

स वा अयं पुरुषो जायमानः  शरीरमभिसम्पद्यमानः पाप्मभिः संसृज्यते स उत्क्रामन्म्रियमाणः पाप्मनो  विजहाति मृत्यो रूपाणि

१४.७.१.[९]

तस्य वा एतस्य पुरुषस्य  द्वे एव स्थाने भवत इदं च परलोकस्थानं च

संध्यं तृतीयं स्वप्नस्थानं तस्मिन्त्संध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदं च परलोकस्थानं च

१४.७.१.[१०]

अथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान्पाप्मन आनन्दांश्च पश्यति स यत्रायं प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयंज्योतिर्भवति

१४.७.१.[११]



न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान्रथयोगान्पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान्मुदः प्रमुदः सृजते न तत्र वेशान्ताः स्रवन्त्यः पुष्करिण्यो भवन्त्यथ वेशान्ताः स्रवन्तीः पुष्करिणीः सृजते स हि कर्ता

१४.७.१.[१२]

तदप्येते श्लोकाः स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति शुक्रमादाय पुनरैति स्थानं हिरण्मयः पौरुष एकहंसः

१४.७.१.[१३]

प्राणेन रक्षन्नपरं कुलायं बहिष्कुलायादमृतश्चरित्वा  स ईयते अमृतो
यत्रकामं हिरण्मयः पौरुष एकहंसः

१४.७.१.[१४]

स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनिउतेव स्त्रीभिः सह
मोदमानो जक्षदुतेवापि भयानि पश्यन्

१४.७.१.[१५]



आराममस्य पश्यन्ति  न तं कश्चन पश्यतीति तं नायतम्
बोधयेदित्याहुर्दुर्भिषज्यं हास्मै भवति यमेष न प्रतिपद्यते

१४.७.१.[१६]

अथो खल्वाहुः  जागरितदेश एवास्यैष यानि ह्येव जाग्रत्पश्यति तानि सुप्त इत्यत्रायम्
पुरुषः स्वयंज्योतिर्भवतीत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं
ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति

१४.७.१.[१७]

स वा एष एतस्मिन्त्स्वप्नान्ते  रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः

प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव स यदत्र
किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष
इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं
विमोक्षायैव ब्रूहीति

१४.७.१.[१८]

तद्यथा महामत्स्यः  उभे कूले अनुसंचरति पूर्वं चापरं चैवमेवायम्
पुरुष एता उभावन्तावनुसंचरति स्वप्नान्तं च बुद्धान्तं च

१४.७.१.[१९]



तद्यथास्मिन्नाकाशे  श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ
सल्लयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कं
चन कामं कामयते न कं चन स्वप्नं पश्यति

१४.७.१.[२०]

ता वा अस्यैता  हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताणिम्ना तिष्ठन्ति
शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनं घ्नन्तीव
जिनन्तीव हस्तीव विचाययति गर्तमिव पतति यदेव जाग्रद्भयं पश्यति
तदत्राविद्यया भयं मन्यतेऽथ यत्र राजेव देवैवाहमेवेदं सर्वमस्मीति
मन्यते सोऽस्य परमो लोकोऽथ यत्र सुप्तो न कं चन कामं कामयते न कं
चन स्वप्नं पश्यति

१४.७.१.[२१]

तद्वा अस्यैतत्  आत्मकाममाप्तकाममकामं रूपं तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किं चन वेद नान्तरमेवमेवायं शारीर आत्मा प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किं चन वेद नान्तरम्

१४.७.१.[२२]

तद्वा अस्यैतत्  अतिचन्दोऽपहतपाप्माभयं रूपमशोकान्तरमत्र पितापिता भवति मातामाता लोका अलोका देवा अदेवा वेदा अवेदा यज्ञा अयज्ञा अत्र स्तेनोऽस्तेनो भवति भ्रूणहाभ्रूणहा पौल्कसोऽपौल्कसश्चाण्डालो चाण्डालः श्रमणोऽश्रमणस्तापसो तापसोऽनन्वागतः पुण्येनान्वागतः पापेन तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति



१४.७.१.[२३]

यद्वै तन्न पश्यति  पश्यन्वै तद्द्रष्टव्यं न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्

१४.७.१.[२४]

यद्वै तन्न जिघ्रति  जिघ्रन्वै तद्घ्रातव्यं न जिघ्रति न हि

घ्रातुर्घ्राणाद्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत्

१४.७.१.[२५]

यद्वै तन्न रसयति  विजानन्वै तद्रसं न रसयति न हि रसयितू रसाद्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत्

१४.७.१.[२६]

यद्वै तन्न वदति  वदन्वै तद्वक्तव्यं न वदति न हि वक्तुर्वचो विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत्



१४.७.१.[२७]

यद्वै तन्न शृणोति  शृण्वन्वै तच्छ्रोतव्यं न शृणोति न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात्

१४.७.१.[२८]

यद्वै तन्न मनुते  मन्वानो वै तन्मन्तव्यं न मनुते न हि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्तिततोऽन्यद्विभक्तं यन्मन्वीत

१४.७.१.[२९]

यद्वै तन्न स्पृशति  स्पृशन्वै तत्स्प्रष्टव्यं न स्पृशति न हि स्प्रष्टु
स्पृष्टेर्विपरिलोपोऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्स्पृशेत्

१४.७.१.[३०]

यद्वै तन्न विजानाति  विजानन्वै तद्विज्ञेयं न विजानाति न हि
विज्ञातुर्विज्ञानाद्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति
ततोऽन्यद्विभक्तं यद्विजानीयात्



१४.७.१.[३१]

सलिल एको द्रष्टाद्वैतो भवति  एष ब्रह्मलोकः सम्राडिति हैनमुवाचैषास्य
परमो लोक एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि
मात्रामुपजीवन्ति

१४.७.१.[३२]

स यो मनुष्याणां रुद्धः समृद्धो भवति  अन्येषामधिपतिः
सर्वैर्मानुष्यकैः कामैः सम्पन्नतमः स मनुष्याणां परम आनन्दः

१४.७.१.[३३]

अथ ये शतं मनुष्याणामानन्दाः  स एकः पितॄणां जितलोकानामानन्दः

१४.७.१.[३४]

अथ ये शतं पितॄणां जितलोकानामानन्दाः  स एकः कर्मदेवानामानन्दो ये
कर्मणा
देवत्वमभिसम्पद्यन्ते

१४.७.१.[३५]



अथ ये शतं कर्मदेवानामानन्दाः  स एक आजानदेवानामानन्दो यश्च
श्रोत्रियोऽवृजिनोऽकामहतः

१४.७.१.[३६]

अथ ये शतमाजानदेवानामानन्दाः  स एको देवलोक आनन्दो यश्च
श्रोत्रियोऽवृजिनोऽकामहतः

१४.७.१.[३७]

अथ ये शतं देवलोक आनन्दाः  स एको गन्धर्वलोक आनन्दो यश्च

श्रोत्रियोऽवृजिनोऽकामहतः

१४.७.१.[३८]

अथ ये शतं गन्धर्वलोक आनन्दाः  स एकः प्रजापतिलोक आनन्दाः  स एको
ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहत एष ब्रह्मलोकः सम्राडिति
हैनमनुशशासैतदमृतं सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं
विमोक्षायैव ब्रूहीति

१४.७.१.[३९]

स वा एष एतस्मिन्त्सम्प्रसादे  रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः
प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव स यदत्र
किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष
इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं
विमोक्षायैव ब्रूहीति



१४.७.१.[४०]

अत्र ह याज्ञवल्क्यो बिभयां चकार  मेधावी राजा सर्वेभ्यो मान्तेभ्य
उदरौत्सीदिति स यत्राणिमानं न्येति जरया वोपतपता वाणिमानं निगचति यथाम्रं
वोदुम्बरं वा पिप्पलं वा बन्धनात्प्रमुच्येतैवमेवायं शारीर
आत्मैभ्योऽङ्गेभ्यः सम्प्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैव

१४.७.१.[४१]

तद्यथानः सुसमाहितम्  उत्सर्जद्यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जद्याति

१४.७.१.[४२]

तद्यथा राजानमायन्तम्  उग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्तेऽयमायात्ययमागचतीत्येवं हैवंविदं सर्वाणि भूतानि प्रतिकल्पन्त इदं ब्रह्मायातीदमागचतीति



१४.७.१.[४३]

तद्यथा राजानं प्रयियासन्तम्  उग्राः प्रत्येनसः सूतग्रामण्य उपसमायन्त्येवं हैवंविदं सर्वे प्राणा उपसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति

१४.७.२.[१]

स यत्रायं शारीर आत्माबल्यं नीत्य  सम्मोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति

१४.७.२.[२]

स यत्रैष चाक्षुषः  पुरुषः पराङ्पर्यावर्ततेऽथारूपजो भवत्येकीभवति न पश्यतीत्याहुरेकीभवति न रसयतीत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न श्रृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुः

१४.७.२.[३]

तस्य हैतस्य  हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तम् प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति संज्ञानमेवान्ववक्रामति स एष ज्ञः सविज्ञानो भवति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च



१४.७.२.[४]

तद्यथा तृणजलायुका  तृणस्यान्तं गत्वात्मानमुपसंहरत्येवमेवायं पुरुष इदं शरीरं निहत्याविद्यां गमयित्वात्मानमुपसंहरति

१४.७.२.[५]

तद्यथा पेशस्कारी  पेशसो  मात्रामपादायान्यन्नवतरं कल्याणतरं रूपं तनुत एवमेवायं पुरुष इदं शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं रूपं तनुते पित्र्यं वा गन्धर्वं वा ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं वान्येभ्यो वा भूतेभ्यः

१४.७.२.[६]

स वा अयमात्मा  ब्रह्म विज्ञानमयो मनोमयो वाङ्मयः
प्राणमयश्चक्षुर्मयः श्रोत्रमय आकाशमयो वायुमयस्तेजोमय आपोमयः
पृथिवीमयः क्रोधमयोऽक्रोधमयो हर्षमयोऽहर्षमयो
धर्ममयोऽधर्ममयः सर्वमयस्तद्यदेदम्मयोऽदोमय इति यथाकारी
यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः
पुण्येन कर्मणा भवति पापः पापेनेति

१४.७.२.[७]



अथो खल्वाहुः  काममय एवायं पुरुष इति स यथाकामो भवति
तथाक्रतुर्भवति यथाक्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते
तदभिसम्पद्यत इति

१४.७.२.[८]

तदेष श्लोको भवति  तदेव सक्तत्सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य
प्राप्यान्तं कर्मणस्तस्य यत्किं चेह करोत्ययम्  तस्माल्लोकात्पुनरैत्यस्मै लोकाय
कर्मण इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आत्मकाम आप्तकामो
भवति न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्ब्रह्माप्येति

१४.७.२.[९]

तदेष श्लोको भवति  यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः  अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति

१४.७.२.[१०]

तद्यथाहिनिर्ल्वयनी  वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथायमनस्थिकोऽशरीरः प्राज्ञ आत्मा ब्रह्मैव लोक एव सम्राडिति होवाच याज्ञवल्क्यः सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः



१४.७.२.[११]

तदप्येते श्लोकाः  अणुः पन्था वितरः पुराणो मांस्पृष्टोऽनुवित्तो मयैव  तेन धीरा अपियन्ति ब्रह्मविद उत्क्रम्य स्वर्गं लोकमितो विमुक्ताः

१४.७.२.[१२]

तस्मिञ्शुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितं चएष पन्था ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित्तैजसः पुण्यकृच्च

१४.७.२.[१३]

अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते  ततो भूय इव ते तमो य उ सम्भूत्यां रताः

१४.७.२.[१४]

असुर्या नाम ते लोकाः  अन्धेन तमसावृताः  तांस्ते प्रेत्यापिगचन्त्यविद्वांसोऽबुधा जनाः

१४.७.२.[१५]



तदेव सन्तस्तदु तद्भवामो न चेदवेदी महती विनष्टिःये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्ति

१४.७.२.[१६]

आत्मानं चेद्विजानीयादयमस्मीति पुरुषः  किमिचन्कस्य कामाय शरीरमनु संचरेत्

१४.७.२.[१७]

यस्यानुवित्तः प्रतिबुद्ध आत्मास्मिन्त्संदेहे गहने प्रविष्टः  स विश्वकृत्स ह सर्वस्य कर्ता तस्य लोकः स उ लोक एव

१४.७.२.[१८]

यदैतमनुपश्यति  आत्मानं देवमञ्जसा ईशानं भूतभव्यस्य न तदा विचिकित्सति

१४.७.२.[१९]

यस्मिन्पञ्च पञ्चजनाः आकाशश्च प्रतिष्ठितः  तमेव मन्य आत्मानं
विद्वान्ब्रह्मामृतोऽमृतम्



१४.७.२.[२०]

यस्मादर्वाक्षंवत्सरोऽहोभिः परिवर्तते  तद्देवा ज्योतिषां
ज्योतिरायुर्ह्योपासतेऽमृतम्

१४.७.२.[२१]

प्राणस्य प्राणम्  उत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये
मनो विदुः  ते निचिक्युर्ब्रह्म पुराणमग्र्यं मनसैवाप्तव्यं नेह नानास्ति किं
चन

१४.७.२.[२२]

मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति
मनसैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम्

१४.७.२.[२३]

विरजः पर आकाशात्  अज आत्मा महा ध्रुवः  तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत
ब्राह्मणः  नानुध्यायाद्बहूञ्च्छब्दान्वाचो विग्लापनं हि तदिति

१४.७.२.[२४]



स वा अयमात्मा  सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति
यदिदं किं च स न साधुना कर्मणा भूयान्नोऽेवासाधुना कनीयानेष
भूताधिपतिरेष लोकेश्वर एष लोकपालः स सेतुर्विधरण एषां
लोकानामसम्भेदाय

१४.७.२.[२५]

तमेतं वेदानुवचनेन विविदिषन्ति  ब्रह्मचर्येण तपसा श्रद्धया
यज्ञेनानाशकेन चैतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमीप्सन्तः
प्रव्रजन्ति

१४.७.२.[२६]

एतद्ध स्म वै तत्पूर्वे ब्राह्मणाः  अनूचाना विद्वांसः प्रजां न कामयन्ते किम्
प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इति ते ह स्म पुत्रैषणायाश्च
वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव
पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः

१४.७.२.[२७]

स एष नेति नेत्यात्मा  अगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गोऽसितो न सज्यते न
व्यथत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उभे ह्येष एते
तरत्यमृतः साध्वसाधुनी नैनं कृताकृते तपतो नास्य केन चन कर्मणा लोको
मीयते



१४.७.२.[२८]

तदेतदृचाभ्युक्तम्  एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो
कनीयान्  तस्यैव स्यात्पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेनेति
तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानम्
पश्येत्सर्वमेनं पश्यति सर्वोऽस्यात्मा भवति सर्वस्यात्मा भवति सर्वम्
पाप्मानं तरति नैनं पाप्मा तरति सर्वं पाप्मानं तपति नैनं पाप्मा तपति
विपापो विजरो विजिघत्सोऽपिपासो ब्राह्मणो भवति य एवं वेद

१४.७.२.[२९]

स वा एष महानज आत्मा  अन्नादो वसुदानः स यो हैवमेतम्

महान्तमजमात्मानमन्नादं वसुदानं वेद विन्दतेवसु

१४.७.२.[३०]

स वा एष महानज आत्मा  अजरोऽमरोऽभयोऽमृतो ब्रह्माभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः सोऽहं भगवते विदेहान्ददामि मां चापि सह दास्यायेति

१४.७.२.[३१]

स वा एष महानज आत्मा  अजरोऽमरोऽभयोऽमृतो ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेद



१४.७.३.[१]

अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः  मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञेव कात्यायनी सोऽन्यद्वृत्तमुपाकरिष्यमाणः

१४.७.३.[२]

याज्ञवल्क्यो मैत्रेयीति होवाच  प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्यान्तं करवाणीति

१४.७.३.[३]

सा होवाच मैत्रेयी  यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्स्यां न्वहं तेनामृताहो३ नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति

१४.७.३.[४]

सा होवाच मैत्रेयी  येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति



१४.७.३.[५]

स होवाच याज्ञवल्क्यः  प्रिया खलु नो भवती सती प्रियमवृतद्धन्त खलु भवति तेऽहं तद्वक्ष्यामि व्याख्यास्यामि ते वाचं तु मे व्याचक्षाणस्य निदिध्यासस्वेति ब्रवीतु भगवानिति

१४.७.३.[६]

स होवाच याज्ञवल्क्यो  न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति  देवाः प्रिया भवन्ति न वा अरे वेदानां कामाय वेदाः प्रिया भवन्त्यात्मनस्तु कामाय वेदाः प्रिया भवन्ति न वा अरे यज्ञानां कामाय यज्ञाः प्रिया भवन्त्यात्मनस्तु कामाय यज्ञाः प्रिया भवन्ति न वा अरे भूतानां

कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति न वा अरे
सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियम्
भवत्यात्मा न्वरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि
वा अरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्

१४.७.३.[७]

ब्रह्म तं परादात्  योऽन्यत्रात्मनो देवान्वेद वेदास्तं परादुर्योऽन्यत्रात्मनो
वेदान्वेद यज्ञास्तं परादुर्योन्यत्रात्मनो यज्ञान्वेद भूतानि तम्
परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं
वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमे वेदा इमे यज्ञा इमानि
भूतानीदं सर्वं यदयमात्मा



१४.७.३.[८]

स यथा दुन्दुभेर्हन्य>

१४.७.३.[९]

स यथा वीणायै>

१४.७.३.[१०]

स यथा शङ्खस्य>

१४.७.३.[११]

स यथार्द्रैधाग्नेर>  सूत्राण्यनुव्याख्यानानि व्याख्यानानि दत्तं हुतमाशितम्
पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निश्वसितानि



१४.७.३.[१२]

स यथा सर्वासामपां समुद्र एकायन>

१४.७.३.[१३]

स यथा सैन्धवघनो  अनन्तरोऽबाह्यः कृत्स्नो रसघन एव स्यादेवं वा अर
इदं महद्भूतमनन्तमपारं कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः
समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच
याज्ञवल्क्यः

१४.७.३.[१४]

सा होवाच मैत्रेयी  अत्रैव मा भगवान्मोहान्तमापीपदन्न वा अहमिदं विजानामि न प्रेत्य संज्ञास्तीति

१४.७.३.[१५]

स होवाच याज्ञवल्क्यो  न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरे यमात्मानुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति

१४.७.३.[१६]



यद्वै तन्न पश्यति>

१४.७.३.[१७]

यद्वै तन्न जिघ्रति>

१४.७.३.[१८]

यद्वै तन्न रसयति

१४.७.३.[१९]

यद्वै तन्न वदति>

१४.७.३.[२०]

यद्वै तन्न श्रृणोति



१४.७.३.[२१]

यद्वै तन्न मनुते>

१४.७.३.[२२]

यद्वै तन्न स्पृशति

१४.७.३.[२३]

यद्वै तन्न विजानाति>

१४.७.३.[२४]

यत्र वा अन्यदिव स्यात्
तत्रान्योऽन्यत्पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्रसयेदन्योऽन्यदभिवदेदन्योऽन्यचृण्
उयादन्योऽन्यन्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्यद्विजानीयात्



१४.७.३.[२५]

यत्र त्वस्य सर्वमात्मैवाभूत्  तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन कं
रसयेत्तत्केन कमभिवदेत्तत्केन कं श्रृणुयात्तत्केन कं मन्वीत तत्केन कं
स्पृशेत्तत्केन कं विजानीयाद्येनेदं सर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे
केन विजानीयादित्युक्तानुशासनासि मैत्रय्येतावदरे खल्वमृतत्वमिति होक्त्वा
याज्ञवल्क्यः प्रवव्राज

१४.७.३.[२६]

अथ वंशः  तदिदं वयं शौर्पणाय्याचौर्पणाय्यो गौतमाद्गौतमो वात्स्याद्वात्स्यो
वात्स्याच्च पाराशर्याच्च पाराशर्यः सांकृत्याच्च भारद्वाजाच्च भारद्वाज
औदवाहेश्च

शाण्डिल्याच्च शाण्डिल्यो वैजवापाच्च गौतमाच्च गौतमो वैजवापायनाच्च वैष्टपुरेयाच्च वैष्टपुरेयः शाण्डिल्याच्च रौहिणायनाच्च रौहिणायनाच्च रौहिणायनः शौनाकाच्च जैवन्तायनाच्च रैभ्याच्च रैभ्यः पौतिमाष्यायणाच्च कौण्डिन्यायनाच्च कौण्डिन्यायनः कौण्डिन्याभ्यां कौण्डिन्या और्णवाभेभ्य और्णवाभाः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्याच्चाग्निवेश्याच्च

१४.७.३.[२७]

आग्निवेश्यः सैतवात्  सैतवः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजो वलाकाकौशिकाद्वलाकाकौशिकः काषायणात्काषायणः सौकरायणात्सौकरायणस्त्रैवणेस्त्रैवणिरौपजन्घनेरौपजन्घनिः सायकायनात्सायकायनः कौशिकायनेः कौशिकायनिर्घृतकौशिकाद्धृतकौशिकः पाराशर्यायिणात्पाराशर्यायिणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्घनेरौपजन्घनिरासुरेरासुरिर्भारद्वाजाद्भार्द्वाज आत्रेयात्

१४.७.३.[२८]

आत्रेयो माण्टेः  माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याचाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः

सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वंसनान्मृत्युः प्राध्वंसनः प्रध्वंसनात्प्रध्वंसन एकर्षेरेकर्षिर्विप्रजित्तेर्विप्रजित्तिर्व्यष्टेर्व्यष्टिः सनारुः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः

१४.८.१.

पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते  पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत ओं खं ब्रह्म खं पुराणं वायुरं खमिति ह स्माह कौरव्यायणीपुत्रो वेदोऽयं ब्राह्मणा विदुर्वेदैनेन यद्वेदितव्यम्



१४.८.२.[१]

त्रयाः प्राजापत्याः  प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुराः

१४.८.२.[२]

उषित्वा ब्रह्मचर्यं देवा ऊचुः  ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दाम्यतेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति

१४.८.२.[३]

अथ हैनं मनुष्या ऊचुः  ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द
इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दत्तेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति

१४.८.२.[४]

अथ हैनमसुरा ऊचुः  ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति
व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दयध्वमिति न आत्थेत्योमिति होवाच
व्यज्ञासिष्टेति तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्ददद इति दाम्यत दत्त
दयध्वमिति तदेतत्त्रयं शिक्षेद्दमं दानं दयामिति



१४.८.३.

वायुरनिलममृतं भस्मान्तं शरीरम्   ओ३ँ क्रतो स्मर क्लिबे स्मराग्ने नय
सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् युयोध्यस्मज्जुहुराणमेनो
भूयिष्ठां ते नमौक्तिं विधेमेति

१४.८.४.

एष प्रजापतिर्यद्धृदयम्  एतद्ब्रह्मैतत्सर्वं तदेतत्त्र्यक्षरं हृदयमिति हृ
इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद द इत्येकमक्षरं
ददन्त्यस्मै स्वाश्चान्ये च य एवं वेद यमित्येकमक्षरमेति स्वर्गं लोकं य

एवं वेद

१४.८.५.

तद्वै तदेतदेव तदास  सत्यमेव स यो हैवमेतन्महद्यक्षं प्रथमजं
वेद सत्यं ब्रह्मेति जयतीमांलोकान्जित इन्न्वसावसद्य एवमेतन्महद्यक्षम्
प्रथमजं वेद सत्यं ब्रह्मेति सत्यं ह्येव ब्रह्म

१४.८.६.[१]

आप एवेदमग्र आसुः  ता आपः सत्यमसृजन्त सत्यं ब्रह्म प्रजापतिम्
प्रजापतिर्देवान्



१४.८.६.[२]

ते देवाः सत्यमित्युपासते  तदेतत्त्र्यक्षरं सत्यमिति स इत्येकमक्षरं
तीत्येकमक्षरममित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यम्
मध्यतोऽनृतं तदेतदनृतं सत्येन परिगृहीतं सत्यभूयमेव भवति
नैवंविद्वांसमनृतं हिनस्ति

१४.८.६.[३]

तद्यत्तत्सत्यम्  असौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं

दक्षिणेऽक्षन्पुरुषस्तावेतावन्योऽन्यस्मिन्प्रतिष्ठितौ रश्मिभिर्वा
एषोऽस्मिन्प्रतिष्ठितः प्राणैरयममुष्मिन्स यदोत्क्रमिष्यन्भवति
शुद्धमेवैतन्मण्डलं पश्यति नैनमेते रश्मयः प्रत्यायन्ति

१४.८.६.[४]

य एष एतस्मिन्मण्डले पुरुषः  तस्य भूरिति शिर एकं शिर एकमेतदक्षरम्
भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते
अक्षरे तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद

१४.८.६.[५]

अथ योऽयं दक्षिणेऽक्षन्पुरुषः  तस्य भूरिति शिर एकं शिर एकमेतदक्षरम्
भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते
अक्षरे तस्योपनिषदहमिति हन्ति पाप्मानं जहाति च य एवं वेद

१४.८.७.

विद्युद्ब्रह्मेत्याहुः  विदानाद्विद्युद्विद्यत्येनं सर्वस्मात्पाप्मनो य एवं वेद
विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्म

१४.८.८.

मनोमयोऽयं पुरुषो  भाःसत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो

वैवमयमन्तरात्मन्पुरुषः स एष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किं च य एवं वेद

१४.८.९.

वाचं धेनुमुपासीत  तस्याश्चत्वार स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारस्तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च हन्तकारं मनुष्याः स्वधाकारं पितरस्तस्याः प्राण ऋषभो मनो वत्सः

१४.८.१०.



अयमग्निर्वैश्वानरो  योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय श्रृणोति स यदोत्क्रमिष्यन्भवति नैतं घोषं श्रृणोति

१४.८.११.

एतद्वै परमं तपो  यद्व्याहितस्तप्यते परमं हैव लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमरण्यं हरन्ति परमं हैव लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमग्नावभ्यादधति परमं हैव लोकं जयति य एवं वेद

१४.८.१२.

यदा वै पुरुषो  अस्माल्लोकात्प्रैति स वायुमागचति तस्मै स तत्र विजिहीते यथा
रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागचति तस्मै स तत्र विजिहीते
यथाडम्बरस्य खं तेन स ऊर्ध्व आक्रमते स चन्द्रमसमागचति तस्मै स
तत्र विजिहीते यथा दुन्दुभेः खं तेन स ऊर्ध्व आक्रमते स
लोकमागचत्यशोकमहिमं तस्मिन्वसति शश्वतीः समाः

१४.८.१३.

अन्नं ब्रह्मेत्येक आहुः  तन्न तथा पूयति वा अन्नमृते प्राणात्प्राणो ब्रह्मेत्येक
आहुस्तन्न तथा शुष्यति वै प्राण ऋतेऽन्नादेते ह त्वेव देवते एकधाभूयं भूत्वा
परमतां गचतः



१४.८.१३.

तद्ध स्माह प्रातृदः पितरम्  किं स्विदेवैवं विदुषे साधु कुर्यात्किमेवास्मा
असाधु कुर्यादिति स ह स्माह पाणिना मा प्रातृद कस्त्वेनयोरेकधाभूयं भूत्वा
परमतां गचतीति

१४.८.१३.

तस्मा उ हैतदुवाच  वीत्यन्नं वै व्यन्ने हीमानि सर्वाणि भूतानि विष्टानि रमिति
प्राणो वै रं प्राणे हीमानि सर्वाणि भूतानि रतानि सर्वाणि ह वा अस्मिन्भूतानि
विशन्ते
सर्वाणि भूतानि रमन्ते य एवं वेद

१४.८.१४.[१]

उक्थम्  प्राणो वा उक्थं प्राणो हीदं सर्वमुत्थापयत्युद्धास्मा
उक्थविद्वीरस्तिष्ठत्युक्थस्य सायुज्यं सलोकतां जयति य एवं वेद

१४.८.१४.[२]

प्राणो वै यजुः प्राणो हीमानि सर्वाणि भूतानि युज्यन्ते युज्यन्ते हास्मै सर्वाणि
भूतानि श्रैष्ठ्याय यजुषः सायुज्यं सलोकतां जयति य एवं वेद



१४.८.१४.[३]

साम  प्राणो वै साम प्राणो हीमानि सर्वाणि भूतानि सम्यञ्चि हास्मिन्त्सर्वाणि भूतानि
श्रैष्ठ्याय कल्पन्ते साम्नः सायुज्यं सलोकतां जयति य एवं वेद

१४.८.१४.[४]

क्षत्रम्  प्राणो वै क्षत्रं प्राणो हि वै क्षत्रं त्रायते हैनं प्राणः क्षणितोः
प्र क्षत्रमात्रमाप्नोति क्षत्रस्य सायुज्यं सलोकतां जयति य एवं वेद

१४.८.१५.[१]

भूमिरन्तरिक्षं द्यौरिति  अष्टावक्षराण्यष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हास्या एतत्स यावदेषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद

१४.८.१५.[२]

ऋचो यजूंषि सामानीति  अष्टावक्षराण्यष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद

१४.८.१५.[३]



प्राणोऽपानो व्यान इति  अष्टावक्षराण्यष्टाक्षरं ह वा एकं गायत्रै पदमेतदु हैवास्या एतत्स यावदिदं प्राणि तावद्ध जयति योऽस्या एतदेवं पदं वेद

१४.८.१५.[४]

अथास्या एतदेव  तुरीयं दर्शतं पदं परोरजा य एष तपति यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृश इव ह्येष परोरजा इति सर्वमु ह्येष रज उपर्युपरि तपत्येवं हैव श्रिया यशसा तपति योऽस्या एतदेवं पदं वेद

१४.८.१५.[५]

सैषा गायत्र्येतस्मिंस्तुरीये  दर्शते पदे परोरजसि प्रतिष्ठिता तद्वै तत्सत्ये प्रतिष्ठिता चक्षुर्वै सत्यं चक्षुर्हि वै सत्यं तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमद्राक्षमहमश्रौषमिति य एव ब्रूयादहमद्राक्षमिति तस्मा एव श्रद्दध्यात्

१४.८.१५.[६]

तद्वै तत्सत्यं बले प्रतिष्ठितम्  प्राणो वै बलं तत्प्राणे प्रतिष्ठितं तस्मादाहुर्बलं सत्यादोजीय इत्येवम्वेषा गायत्र्यध्यात्मं प्रतिष्ठिता

१४.८.१५.[७]



सा हैषा गयांस्तत्रे  प्राणा वै गयास्तत्प्राणांस्तत्रेतद्यद्गयांस्तत्रे तस्माद्गायत्री नाम स यामेवामूमन्वाहैषैव सा स यस्मा अन्वाह तस्य प्राणांस्त्रायते

१४.८.१५.[८]

तां हैके  सावित्रीमनुष्टुभमन्वाहुर्वागनुष्टुबेतद्वाचमनुब्रूम इति न तथा कुर्याद्गायत्रीमेवानुब्रूयाद्यदि ह वा अपि बह्विव प्रतिगृह्णाति न हैव तद्गायत्र्या एकं चन पदं प्रति

१४.८.१५.[९]

स य इमांस्त्रींलोकान्  पूर्णान्प्रतिगृह्णीयात्सोऽस्या एतत्प्रथमं पदमाप्नुयादथ यावतीयं त्रयी विद्या यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतद्द्वितीयं पदमाप्नुयादथ यावदिदं प्राणि यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतत्तृतीयं पदमाप्नुयादथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति नैव केन चनाप्यं कुत उ एतावत्प्रतिगृह्णीयात्

१४.८.१५.[१०]

तस्या उपस्थानम्  गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापदिति यं द्विष्यादसावस्मै कामो मा समर्धीति वा न हैवास्मै स कामः समृध्यते यस्मा एवमुपतिष्ठतेऽहमदः प्रापमिति वा



१४.८.१५.[११]

एतद्ध वै तज्जनको वैदेहो  बुडिलमाश्वतराश्विमुवाच यन्नु हो तद्गायत्रीविदब्रूथा अथ कथं हस्ती भूतो वहसीति मुखं ह्यस्याः सम्राण्न विदां चकरेति होवाच

१४.८.१५.[१२]

तस्या अग्निरेव मुखम्  यदि ह वा अपि बह्विवाग्नावभ्यादधति सर्वमेव तत्संदहत्येवं हैवैवंविद्यद्यपि बह्विव पापं करोति सर्वमेव तत्सम्प्साय शुद्धः पूतोऽजरोऽमृतः सम्भवति

१४.९.१.[१]

श्वेतकेतुर्ह वा आरुणेयः  पञ्चालानां परिषदमाजगाम स आजगाम जैवलम्
प्रवाहणं परिचारयमाणं तमुदीक्ष्याभ्युवाद कुमारा३ इति स भो३ इति
प्रतिशुश्रावानुशिष्टो न्वसि पित्रेत्योमिति होवाच

१४.९.१.[२]

वेत्थ यथेमाः प्रजाः  प्रयत्यो विप्रतिपद्यान्ता३ इति नेति होवाच वेत्थ यथेमं
लोकं पुनरापद्यान्ता३ इति नेति हैवोवाच वेत्थ यथासौ लोक एवं बहुभिः पुनः
पुनः प्रयद्भिर्न सम्पूर्यता३ इति नेति हैवोवाच



१४.९.१.[३]

वेत्थ यतिथ्यामाहुत्यां हुतायाम्  आपः पुरुषवाचो भूत्वा समुत्थाय वदन्ती३ इति
नेति हैवोवाच वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा यत्कृत्वा
देवयानं वा पन्थानं प्रतिपद्यते पितृयाणं वा

१४.९.१.[४]

अपि हि न ऋषेर्वचः श्रुतम्  द्वे सृती अश्रृणवं पितॄणामहं देवानामुत मर्त्यानां
ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं चेति नाहमत एकं चन

वेदेति होवाच

१४.९.१.[५]

अथ हैनं वसत्योपमन्त्रयां चक्रे  अनादृत्य वसतिं कुमारः प्रदुद्राव स
आजगाम पितरं तं होवाचेति वाव किल नो भवान्पुरानुशिष्टानवोच इति कथं
सुमेध इति पञ्च मा प्रश्नान्राजन्यबन्धुरप्राक्षीत्ततो नैकं चन वेदेति
होवाच कतमे त इतीम इति ह प्रतीकान्युदाजहार

१४.९.१.[६]



स होवाच  तथा नस्त्वं तात जानीथा यथा यदहं किं च वेद सर्वमहं
तत्तुभ्यमवोचं प्रेहि तु तत्र प्रतीत्य ब्रह्मचर्यं वत्स्याव इति भवानेव
गचत्विति

१४.९.१.[७]

स आजगाम गौतमो  यत्र प्रवाहणस्य जैवलेरास तस्मा
आसनमाहार्योदकमाहारयां चकाराथ हास्मा अर्घं चकार

१४.९.१.[८]

स होवाच  वरं भवते गौतमाय दद्म इति स होवाच प्रतिज्ञातो म एष वरो यां
तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति

१४.९.१.[९]

स होवाच  दैवेषु वै गौतम तद्वरेषु मानुषाणां ब्रूहीति

१४.९.१.[१०]

स होवाच  विज्ञायते हास्ति हिरण्यस्यापात्तं गो अश्वानां दासीनां प्रवराणाम्
परिधानानां मा नो भवान्बहोरनन्तस्यापर्यन्तस्याभ्यवदान्यो भूदिति स वै
गौतम तीर्थेनेचासा इत्युपैम्यहं भवन्तीमिति वाचा ह स्मैव पूर्व उपयन्ति



१४.९.१.[११]

स होपायनकीर्ता उवाच  तथा नस्त्वं गौतम मापराधास्तव च पितामहा
यथेयं विद्येतः पूर्वं न कस्मिंश्चन ब्राह्मण उवास तां त्वहं तुभ्यं
वक्ष्यामि को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति

१४.९.१.[१२]

असौ वै लोकोऽग्निर्गौतम  तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिश्चन्द्रमा
अङ्गारा नक्षत्राणि विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या
आहुतेः सोमो राजा सम्भवति

१४.९.१.[१३]

पर्जन्यो वा अग्निर्गौतम  तस्य संवत्सर एव समिदभ्राणि धूमो
विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं
जुह्वति तस्या आहुतेर्वृष्टिः सम्भवति

१४.९.१.[१४]

अयं वै लोकोऽग्निर्गौतम  तस्य पृथिव्येव समिद्वायुर्धूमो रात्रिरर्चिर्दिशोऽङ्गारा
अवान्तरदिशो विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति तस्या
आहुतेरन्नं सम्भवति



१४.९.१.[१५]
पुरुषो वा अग्निर्गौतम  तस्य व्यात्तमेव समित्प्राणो धूमो वागर्चिश्चक्षुरङ्गाराः
श्रोत्रं विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतः
सम्भवति

१४.९.१.[१६]

योषा वा अग्निर्गौतम  तस्या उपस्थ एव समिल्लोमानि धूम्

ओ योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेः पुरुषः सम्भवति स जायते स जीवति यावज्जीवत्यथ यदा म्रियतेऽथैनमग्नये हरन्ति

१४.९.१.[१७]

तस्याग्निरेवाग्निर्भवति  समित्समिद्धूमो धूमोऽर्चिरर्चिरङ्गारा विष्फुलिङ्गा विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति तस्या आहुतेः पुरुषो भास्वरवर्णः सम्भवति



१४.९.१.[१८]

ते य एवमेतद्विदुः  ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिरभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं तान्वैद्युतात्पुरुषो मानस एत्य ब्रह्मलोकान्गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषामिह न पुनरावृत्तिरस्ति

१४.९.१.[१९]]

अथ ये यज्ञेन दानेन तपसा लोकं जयन्ति ते धूममभिसम्भवन्ति धूमाद्रात्रिं

रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान्षण्मासान्दक्षिणादित्य एति
मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र
देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ति तेषां
यदा तत्पर्यवैत्यथेममेवाकाशमभिनिष्पद्यन्त आकाशाद्वायुं वायोर्वृष्टिं
वृष्टेः पृथिवीं ते पृथिवीं प्राप्यान्नं भवन्ति त एवमेवानुपरिवर्तन्तेऽथ य
एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम्

१४.९.२.[१]

यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति
प्राणो वै ज्येष्ठश्च श्रेष्ठश्च ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपि च
येषां बुभूषति य एवं वेद



१४.९.२.[२]

यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां भवति वाग्वै वसिष्ठा वसिष्ठः
स्वानां भवति य एवं वेद

१४.९.२.[३]

यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै
प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति प्रतितिष्ठति समे प्रतितिष्ठति
दुर्गे य एवं वेद

१४.९.२.[४]

यो ह वै सम्पदं वेद  सं हास्मै पद्यते यं कामं कामयते श्रोत्रं वै सम्पच्छ्रोत्रे हीमे सर्वे वेदा अभिसम्पन्नाः सं हास्मै पद्यते यं कामं कामयते य एवं वेद

१४.९.२.[५]

यो ह वा आयतनं वेद  आयतनं स्वानां भवत्यायतनं जनानां मनो वा आयतनमायतनं स्वानां भवत्यायतनं जनानां य एवं वेद



१४.९.२.[६]

यो ह वै प्रजातिं वेद  प्रजायते प्रजया पशुभी रेतो वै प्रजातिः प्रजायते प्रजया पशुभिर्य एवं वेद

१४.९.२.[७]

ते हेमे प्राणाः  अहंश्रेयसे विवदमाना ब्रह्म जग्मुः को नो वसिष्ठ इति यस्मिन्व उत्क्रान्त इदं शरीरं पापीयो मन्यते स वो वसिष्ठ इति

१४.९.२.[८]

वाग्घोच्चक्राम  सा संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा कडा अवदन्तो वाचा प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा श्रृण्वन्तः श्रोत्रेण विद्वांसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह वाक्

१४.९.२.[९]

चक्षुर्होच्चक्राम  तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथान्धा अपश्यन्तश्चक्षुषा प्राणन्तः प्राणेन वदन्तो वाचा श्रृण्वन्तः श्रोत्रेण विद्वांसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह चक्षुः



१४.९.२.[१०]

श्रोत्रं होच्चक्राम  तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा बधिरा अश्रृण्वन्तः श्रोत्रेण प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा विद्वांसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह श्रोत्रम्

१४.९.२.[११]

मनो होच्चक्राम  तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा मुग्धा अविद्वांसो मनसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा श्रृण्वन्तः श्रोत्रेण प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश

ह मनः

१४.९.२.[१२]

रेतो होच्चक्राम  तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा क्लीबा अप्रजायमाना रेतसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वांसो मनसैवमजीविष्मेति प्रविवेश ह रेतः

१४.९.२.[१३]



अथ ह प्राण उत्क्रमिष्यन्  यथा महासुहयः सैन्धवः पड्वीशशङ्कून्त्संवृहेदेवं हैवेमात्प्राणान्त्संववर्ह ते होचुर्मा भगव उत्क्रमीर्न वै शक्ष्यामस्त्वदृते जीवितुमिति तस्य वै मे बलिं कुरुतेति तथेति

१४.९.२.[१४]

सा ह वागुवाच  यद्वा अहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसीति चक्षुर्यद्वा अहम् प्रतिष्ठास्मि त्वं तत्प्रतिष्ठोऽसीति श्रोत्रं यद्वा अहं सम्पदस्मि त्वं तत्सम्पदसीति मनो यद्वा अहमायतनमस्मि त्वं तदायतनमसीति रेतो यद्वा अहं प्रजातिरस्मि त्वं तत्प्रजातिरसीति तस्यो मे किमन्नं किं वास इति यदिदं किं चा श्वभ्य आ क्रिमिभ्य आ कीटपतङ्गेभ्यस्तत्तेऽन्नमापो वास इति न ह वा अस्यानन्नं जग्धं भवति नानन्नं प्रतिगृहीतं य एवमेतदनस्यान्नं वेद

१४.९.२.[१५]

तद्विद्वांसः श्रोत्रियाः  अशिष्यन्त आचामन्त्यशित्वाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते तस्मादेवंविदशिष्यन्नाचामेदशित्वाचामेदेतमेव तदनमनग्नं कुरुते

१४.९.३.[१]

स यः कामयते  महत्प्राप्नुयामित्युदगयन आपूर्यमाणपक्षे पुण्याहे द्वादशाहमुपसद्व्रती भूत्वौदुम्बरे कंसे चमसे वा वा सर्वौषधम् फलानीति सम्भृत्य परिसमुह्य परिलिप्याग्निमुपसमाधायावृताज्यं संस्कृत्य पुंसा नक्षत्रेण मन्थं संनीय जुहोति



१४.९.३.[२]

यावन्तो देवास्त्वयि जातवेदः  तिर्यञ्चो घ्नन्ति पुरुषस्य कामान् तेभ्योऽहम् भागधेयं जुहोमि ते मा तृप्ताः कामैस्तर्पयन्तु स्वाहा

१४.९.३.[३]

या तिरश्ची निपद्यसेऽहं विधरणी इति  तां त्वा घृतस्य धारया यजे संराधनीमहं स्वाहा  प्रजापते न त्वदेतान्यन्य इति तृतीयां जुहोति

१४.९.३.[४]

ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेति  अग्नौ हुत्वा मन्थे संस्रवमवनयति प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ चक्षुषे स्वाहा सम्पदे स्वाहेत्यग्नौ श्रोत्राय स्वाहायतनाय स्वाहेत्यग्नौ> मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ> रेतसे स्वाहेत्यग्नौ>

१४.९.३.[५]

भूताय स्वाहेति  अग्नौ> भविष्यते स्वाहेत्यग्नौ> विश्वाय स्वाहेत्यग्नौ> सर्वाय स्वाहेत्यग्नौ>



१४.९.३.[६]

पृथिव्यै स्वाहेति  अग्नौ> अन्तरिक्षाय स्वाहेत्यग्नौ> दिवे स्वाहेत्यग्नौ> दिग्भ्यः स्वाहेत्यग्नौ> ब्रह्मणे स्वाहेत्यग्नौ> क्षत्राय स्वाहेत्यग्नौ>

१४.९.३.[७]

भूः स्वाहेति  अग्नौ> भुवः स्वाहेत्यग्नौ स्वः स्वाहेत्यग्नौ> भूर्भुवः स्वः स्वाहेत्यग्नौ>

१४.९.३.[८]

अग्नये स्वाहेति  अग्नौ> सोमाय स्वाहेत्यग्नौ> तेजसे स्वाहेत्यग्नौ> श्रियै स्वाहेत्यग्नौ> लक्ष्म्यै स्वाहेत्यग्नौ> सवित्रे स्वाहेत्यग्नौ> सरस्वत्यै स्वाहेत्यग्नौ विश्वेभ्यो देवेभ्यः स्वाहेत्यग्नौ> प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति

१४.९.३.[९]

अथैनमभिमृशति  भ्रमसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येकसभमसि हिङ्कृतमसि हिङ्क्रियमाणमस्युद्गीथमस्युद्गीयमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे संदीप्तमसि विभूरसि प्रभूरसि ज्योतिरस्यन्नमसि निधनमसि संवर्गोऽसीति



१४.९.३.[१०]

अथैनमुद्यचति  आमोऽस्यामं हि ते मयि स हि राजेशानोऽधिपतिः स मा राजेशानोऽधिपतिं करोत्विति

१४.९.३.[११]

अथैनमाचामति  तत्सवितुर्वरेण्यम्  मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधीः  भूः स्वाहा

१४.९.३.[१२]

भर्गो देवस्य धीमहि  मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः  मधु द्यौरस्तु नः पिता  भुवः स्वाहा

१४.९.३.[१३]

धियो यो नः प्रचोदयात्  मधुमान्नो वनस्पतिर्मधुमामस्तु सूर्यः माध्वीर्गावो भुवन्तु नः  स्वः स्वाहेति सर्वां च सावित्रीमन्वाह सर्वाश्च मधुमतीः सर्वाश्च व्याहृतीरहमेवेदं सर्वं भूयासं भूर्भुवः स्वः स्वाहेत्यन्तत आचम्य प्रक्षाल्य प्राणी जघनेनाग्निं प्राक्शिराः संविशति



१४.९.३.[१४]

प्रातरादित्यमुपतिष्ठते  दिशामेकपुण्डरीकमस्यहम् मनुष्याणामेकपुण्डरीकं भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो वंशं जपति

१४.९.३.[१५]

तं हैतमुद्दालक आरुणिः  वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति

१४.९.३.[१६]

एतमु हैव वाजसनेयो याज्ञवल्क्यो  मधुकाय पैङ्ग्यायान्तेवा>

१४.९.३.[१७]

एतमु हैव मधुकः पैङ्ग्यः  चूडाय भागवित्तयेऽन्तेवा>

१४.९.३.[१८]

एतमु हैव चूडो भागवित्तिः  जानकय आयस्थूणायान्तेवा>



१४.९.३.[१९]

एतमु हैव जानकिरायस्थूणः  सत्यकामाय जाबालायान्तेवा>

१४.९.३.[२०]

एतमु हैव सत्यकामो जाबालो  अन्तेवासिभ्य उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति तमेतं नापुत्राय वानन्तेवासिने वा ब्रूयात्

१४.९.३.[२१]

चतुरौदुम्बरो भवति  औदुम्बरश्चमस औदुम्बर स्रुव औदुम्बर इध्म औदुम्बर्या उपमन्थन्यौ

१४.९.३.[२२]

दश ग्राम्याणि धान्यानि भवन्ति  व्रीहियवास्तिलमाषा अणुप्रियङ्गवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च तान्त्सार्धं पिष्ट्वा दध्ना मधुना घृतेनोपसिञ्चत्याज्यस्य जुहोति



१४.९.४.[१]

एषां वै भूतानां पृथिवी रसः  पृथिव्या आपोऽपामोषधय ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतः

१४.९.४.[२]

स ह प्रजापतिरीक्षां चक्रे  हन्तास्मै प्रतिष्ठां कल्पयानीति स स्त्रियं ससृजे तां सृष्ट्वाध उपास्त तस्मात्स्त्रियमध उपासीत श्रीर्ह्येषा स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत्तेनैनामभ्यसृजत्

१४.९.४.[३]

तस्या वेदिरुपस्थो  लोमानि बर्हिश्चर्माधिषवणे समिद्धो मध्यतस्तौ मुष्कौ
स यावान्ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति य एवं
विद्वानधोपहासं चरत्या स स्त्रीणां सुकृतं वृङ्क्ते॰थ य इदमविद्वानधोपहासं
चरत्यास्य स्त्रियः सुकृतं वृञ्जते

१४.९.४.[४]

एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराह  एतद्ध स्म वै तद्विद्वान्नाको
मौद्गल्य आहैतद्ध स्म वै तद्विद्वान्कुमारहारित आह बहवो  मर्या
ब्राह्मणायना निरिन्द्रिया विसुकृतो॰स्माल्लोकात्प्रयन्ति य इदमविद्वांसो॰धोपहासं
चरन्तीति



१४.९.४.[५]

बहु वा इदं सुप्तस्य वा जाग्रतो वा रेत स्कन्दति  तदभिमृशेदनु वा मन्त्रयेत
यन्मे॰द्य रेतः पृथिवीमस्कान्त्सीद्यदोषधीरप्यसरद्यदपः  इदमहं तद्रेत
आददे पुनर्मामैत्विन्द्रियं पुनस्तेज पुनर्भगः  पुनरग्नयो धिष्ण्या
यथास्थानं कल्पन्तामित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ
वा
निमृञ्ज्यात्

१४.९.४.[६]

अथ यद्युदक आत्मानं पश्येत्  तदभिमन्त्रयेत मयि तेज इन्द्रियं यशो

द्रविणं सुकृतमिति

१४.९.४.[७]

श्रीर्ह वा एषा स्त्रीणाम्  यन्मलोद्वासास्तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत सा चेदस्मै न दद्यात्काममेनामपक्रीणीयात्सा चेदस्मै नैव दद्यात्काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेदिन्द्रियेण ते यशसा यश आदद इत्ययशा एव भवति

१४.९.४.[८]



स यामिचेत्  कामयेत मेति तस्यामर्थं निष्ठाप्य मुखेन मुखं संधायोपस्थमस्या अभिमृश्य जपेदङ्गात्सम्भवसि हृदयादधि जायसे  स त्वमङ्गकषायोऽसि दिग्धविद्धामिव मादयेति

१४.९.४.[९]

अथ यामिचेत्  न गर्भं दधीतेति तस्यामर्थं निष्ठाप्य मुखेन मुखं संधायाभिप्राण्यापान्यादिन्द्रियेण ते रेतसा रेत आदद इत्यरेता एव भवति

१४.९.४.[१०]

अथ यामिचेत्  गर्भं दधीतेति तस्यामर्थं निष्ठाप्य मुखेन मुखं

संधायापान्याभिप्राण्यादिन्द्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति

१४.९.४.[११]

अथ यस्य जायायै जारः स्यात्  तं चेद्द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमं शरबर्हि स्तीर्त्वा तस्मिन्नेतास्तिस्रः शरभृष्टीः प्रतिलोमाः सर्पिषाक्ता जुहुयान्मम समिद्धेऽहौषीराशापराकाशौ त आददेऽसाविति नाम गृह्णाति मम समिद्धेऽहौषीः पुत्रपशूंस्त आददेऽसाविति नाम गृह्णाति मम समिद्धेऽहौषीः प्राणापानौ त आददेऽसाविति नाम गृह्णाति स वा एष निरिन्द्रियो विसुकृदस्माल्लोकात्प्रैति यमेवंविद्ब्राह्मणः शपति तस्मादेवंविच्छ्रोत्रियस्य जायाया उपहासं नेच्छेदुत ह्येवंवित्परो भवति



१४.९.४.[१२]

अथ यस्य जायामार्तवं विन्देत्  त्र्यहं कंसे न पिबेदहतवासा नैनां वृषलो न वृषल्युपहन्यात्त्रिरात्रान्त आप्लूय व्रीहीनवघातयेत्

१४.९.४.[१३]

स य इच्छेत्  पुत्रो मे गौरो जायेत वेदमनुब्रुवीत सर्वमायुरियादिति क्षीरौदनम् पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै

१४.९.४.[१४]

अथ य इचेत्  पुत्रो मे कपिलः पिङ्गलो जायेत द्वौ वेदावनुब्रुवीत सर्वमायुरियादिति दध्योदनं पाचयित्वा>

१४.९.४.[१५]

अथ य इचेत्  पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन्वेदाननुब्रुवीत सर्वमायुरियादित्युदौदनं पाचयित्वा>

१४.९.४.[१६]

अथ य इचेत्  दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा>



१४.९.४.[१७]

अथ य इचेत्  पुत्रो मे पण्डितो विजिगीथः समितिंगमः शूश्रूषितां वाचं भाषिता जायेत सर्वान्वेदाननुब्रुवीत सर्वमायुरियादिति मांसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवा औक्षणेन वार्षभेण वा

१४.९.४.[१८]

अथाभिप्रातरेव  स्थालीपाकावृताज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहानुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति हुत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयचति प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां

त्रिरभ्युक्षत्युतिष्ठातो विश्वावसोऽन्यामिच प्रफर्व्यम्  सं जायां प्रत्या सहेति

१४.९.४.[१९]

अथैनामभिपद्यते  अमोऽहमस्मि सा त्वं सा त्वमस्यमो अहं सामाहमस्मि
ऋक्त्त्वं द्यौरहं पृथिवी त्वम्  तावेहि संरभावहै सह रेतो दधावहै  पुंसे
पुत्राय वित्तय इति

१४.९.४.[२०]

अथास्या ऊरू विहापयति  विजिहीथां द्यावापृथिवी इति तस्यामर्थं निष्ठाप्य मुखेन
मुखं संधाय त्रिरेनामनुलोमामनुमार्ष्टि विष्णुर्योनिं कल्पयतु त्वष्टा
रूपाणि पिंशतु  आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते  गर्भं धेहि सिनीवालि
गर्भं धेहि पृथुष्टुके  गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ

१४.९.४.[२१]

हिरण्ययी अरणी  याभ्यां निर्मन्थतामश्विनौ देवौ  तं ते गर्भं दधामहे
दशमे मासि सूतवे  यथाग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी वायुर्दिशां
यथा गर्भ एवं गर्भं दधामि तेऽसाविति नाम गृह्णाति

१४.९.४.[२२]

सोष्यन्तीमद्भिरभ्युक्षति  यथा वातः पुष्करिणीं समीङ्गयति सर्वतः  एवा ते गर्भ एजतु सहावैतु जरायुणा  इन्द्रस्यायं व्रजः कृतः सार्गडः सपरिश्रयः तमिन्द्र निर्जहि गर्भेण सावरं सहेति

१४.९.४.[२३]

जातेऽग्निमुपसमाधाय  अङ्क आधाय कंसे पृषदाज्यमानीय पृषदाज्यस्योपघातं जुहोत्यस्मिन्त्सहस्रं पुष्यासमेधमानः स्वगृहे अस्योपसद्यां मा चैत्सीत्प्रजया च पशुभिश्च स्वाहा मयि प्राणांस्त्वयि मनसा जुहोमि स्वाहा

१४.९.४.[२४]



यत्कर्मणात्यरीरिचम्  यद्वा न्यूनमिहाकरमग्निष्टत्स्विष्टकृद्विद्वान्त्स्विष्टं सुहुतं करोतु स्वाहेति

१४.९.४.[२५]

अथास्यायुष्यं करोति  दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिरथास्य नामधेयं करोति वेदोऽसीति तदस्यैतद्गुह्यमेव नाम स्यादथ दधि मधु घृतं संसृज्यानन्तर्हितेन जातरूपेण प्राशयति भूस्त्वयि दधामि भुवस्त्वयि दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीति

१४.९.४.[२६]

अथैनमभिमृशति  अश्मा भव परशुर्भव हिरण्यमस्रुतं भव आत्मा वै पुत्रनामासि स जीव शरदः शतमिति

१४.९.४.[२७]

अथास्य मातरमभिमन्त्रयते  इडासि मैत्रावरुणी वीरे वीरमजीजनथाः  सा त्वं वीरवती भव यास्मान्वीरवतोऽकरदिति

१४.९.४.[२८]



अथैनं मात्रे प्रदाय स्तनं प्रयच्चति  यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः  येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे करिति

१४.९.४.[२९]

तं वा एतमाहुः  अतिपिता बताभूरतिपितामहो बताभूः परमां बत काष्ठां प्राप श्रिया यशसा ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य पुत्रो जायत इति

१४.९.४.[३०]

अथ वंशः  तदिदं वयं भारद्वाजीपुत्राद्भारद्वाजीपुत्रो

वात्सीमाण्डवीपुत्राद्वात्सीमाण्डवीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो
गार्गीपुत्राद्गार्गीपुत्रः पाराशरीकौण्डिनीपुत्रात्पाराशरीकौण्डिनीपुत्रो
गार्गीपुत्राद्गार्गीपुत्रो गार्गीपुत्राद्गार्गीपुत्रो बाडेयीपुत्राद्बाडेयीपुत्रो
मौषिकीपुत्रान्मौषिकीपुत्रो हारिकर्णीपुत्राद्धारिकर्णीपुत्रो
भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पैङ्गीपुत्रात्पैङ्गीपुत्रः
शौनकीपुत्राचौनकीपुत्रः

१४.९.४.[३१]

काश्यपीबालाक्यामाठरीपुत्रात्काश्यपीबालाक्यामाठरीपुत्रः
कौत्सीपुत्रात्कौत्सीपुत्रो
बौधीपुत्राद्बौधीपुत्रो शालङ्कायनीपुत्राचालन्कायनीपुत्रो
वार्षगणीपुत्राद्वार्षगणीपुत्रो गौतमीपुत्राद्गौतमीपुत्र
आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो वात्सीपुत्राद्वात्सीपुत्रो
भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो
वार्कारुणीपुत्राद्वार्कारुणीपुत्र आर्तभागीपुत्रादार्तभागीपुत्रः
शौङ्गीपुत्राचौङ्गीपुत्रः सांकृतीपुत्रात्सांकृतीपुत्रः

१४.९.४.[३२]

आलम्बीपुत्रात्  आलम्बीपुत्र आलम्बायनीपुत्रादालम्बायनीपुत्रो
जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो
माण्डूकीपुत्रान्माण्डूकीपुत्रः शाण्डिलीपुत्राचाण्डिलीपुत्रो
राथीतरीपुत्राद्राथीतरीपुत्रः क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रौ
वैदभृतीपुत्राद्वैदभृतीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः

प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः सांजीवीपुत्रात्सांजीवीपुत्रः
कार्शकेयीपुत्रात्कार्शकेयीपुत्रः

१४.९.४.[३३]

प्राश्नीपुत्रात्  आसुरिवासिनः प्राश्नीपुत्र आसुरायणादासुरायण
आसुरेरासुरिर्याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुण
उपवेशेरुपवेशिः
कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो बाध्योगाज्जिह्वाया
बाध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितः कश्यपः
शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो
वागम्भिण्या अम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन
याज्ञवल्क्येनाख्यायन्ते मणा ह्येष तेजसा सह पयसो रेत आभृतमिति पयसो
ह्येतद्रेत आभृतं तस्य दोहमशीमह्युत्तरामुत्तरां
समामित्याशिषमेवैतदाशास्तेऽथ चात्वाले मार्जयन्तेऽसावेव बन्धुः
*******************************************************

१४.३.१.

अथातो दक्षिणानाम्  सुवर्णं हिरण्यं शतमानं ब्रह्मणे ददात्यासीनो वै ब्रह्मा
यशः शयानं हिरण्यं तस्मात्सुवर्णं हिरण्यं शतमानं ब्रह्मणे ददाति

१४.३.१.

अथ यैषा घर्मदुघा  तामध्वर्यवे ददाति तप्तैव वै

घर्मस्तप्तमिवाध्वर्युर्निष्क्रामति तस्मात्तामध्वर्य वे ददाति

१४.३.१.

अथ यैषा यजमानस्य व्रतदुघा  तां होत्रे ददाति यज्ञो वै होता यज्ञो यजमानस्तस्मात्तां होत्रे ददाति

१४.३.१.

अथ यैषा पत्न्यै व्रतदुघा  तामुद्गातृभ्यो ददाति पत्नीकर्मेव वा एतेऽत्र कुर्वन्ति यदुद्गातारस्तस्मात्तामुद्गातृभ्यो ददाति



१४.३.१.

अथैतद्वै आयुरेतज्ज्योतिः प्रविशति य एतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्या या सृष्टौ

१४.३.२.१

सर्वेषां वा एष भूतानाम्  सर्वेषां देवानामात्मा यद्यज्ञस्तस्य समृद्धिमनु यजमानः प्रजया पशुभिर्ऋध्यते वि वा एष प्रजया पशुभिर्ऋध्यते यस्य घर्मो विदीर्यते तत्र प्रायश्चित्तिः

१४.३.२.२

पूर्णाहुतिं जुहोति  सर्वं वै पूर्णं सर्वेणैवैतद्भिषज्यति यत्किं च विवृढं
यज्ञस्य

१४.३.२.३

स्वाहा प्राणेभ्यः साधिपतिकेभ्य इति  मनो वै प्राणानामधिपतिर्मनसि हि सर्वे
प्राणाः प्रतिष्ठितास्तन्मनसैवैतद्भिषज्यति यत्किं च विवृढं यज्ञस्य



१४.३.२.४

पृथिव्यै स्वाहेति  पृथिवी वै सर्वेषां देवानामायतनं
तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किं च विवृढं यज्ञस्य

१४.३.२.५
अग्नये स्वाहेति  अग्निर्वै सर्वेषां देवानामात्मा
तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किं च विवृड्>अं यज्ञस्य

१४.३.२.६

अन्तरिक्षाय स्वाहेति  अन्तरिक्षं वै सर्वेषां देवानामायतनं

तत्सर्वाभिरेवैतदेवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य

१४.३.२.७

वायवे स्वाहेति वायुर्वै सर्वेषां देवानामात्मा
तत्सर्वाभिरेवैतदेवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य



१४.३.२.८

दिवे स्वाहेति द्यौर्वै सर्वेषां देवानामायतनं
तत्सर्वाभिरेवैतदेवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य

१४.३.२.९

सूर्याय स्वाहेति सूर्यो वै सर्वेषां देवानामात्मा
तत्सर्वाभिरेवैतदेवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य

१४.३.२.१०

दिग्भ्यः स्वाहेति  दिशो वै सर्वेषां देवानामायतनं तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृडं यज्ञस्य

१४.३.२.११

चन्द्राय स्वाहेति  चन्द्रो वै सर्वेषां देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृडं यज्ञस्य



१४.३.२.१२

नक्षत्रेभ्यः स्वाहेति  नक्षत्राणि वै सर्वेषां देवानामायतनं तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृडं यज्ञस्य

१४.३.२.१३

अद्भ्यः स्वाहेति  आपो वै सर्वेषां देवानामायतनं

तत्सर्वाभिरेवैतदेवताभिर्भिषज्यति यत्किञ्च विवृडं यज्ञस्य

१४.३.२.१४

वरुणाय स्वाहेति  वरुणो वै सर्वेषां देवानामात्मा
तत्सर्वाभिरेवैतदेवताभिर्भिषज्यति यत्किञ्च विवृडं यज्ञस्य



१४.३.२.१५

नाभ्यै स्वाहा पूताय स्वाहेति  अनिरुक्तमनिरुक्तो वै प्रजापतिः
प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञं भिषज्यति

१४.३.२.१६

त्रयोदशैता आहुतयो भवन्ति  त्रयोदश वै मासाः सम्वत्सरस्य सम्वत्सरः
प्रजापतिः प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञं भिषज्यति

१४.३.२.१७

वाचे स्वाहेति मुखमेवास्मिन्नेतद्दधाति प्राणाय स्वाहा प्राणाय स्वाहेति नासिके एवास्मिन्नेतद्दधाति चक्षुषे स्वाहा चक्षुषे स्वाहेत्यक्षिणी एवास्मिन्नेतद्दधाति श्रोत्राय स्वाहा श्रोत्राय स्वाहेति कर्णाविवास्मिन्नेतद्दधाति

१४.३.२.१८

सप्तैता आहुतयो भवन्ति सप्त वा इमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति पूर्णाहुतिमुत्तमां जुहोति सर्वं वै पूर्णं सर्वेणैवैतद्भिषज्यति यत्किं च विवृढं यज्ञस्य

१४.३.२.१९



मनसः काममाकूतिमिति मनसा वा इदं सर्वमाप्तं तन्मनसैवैतद्भिषज्यति यत्किं च विवृढं यज्ञस्य

१४.३.२.२०

वाचः सत्यमशीयेति वाचा वा इदं सर्वमाप्तं तद्वाचैवैतद्भिषज्यति यत्किं च विवृढं यज्ञस्य पशूनां रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहेत्याशिषमेवैतदाशास्ते

१४.३.२.२१

अथ तं चोपशयां च पिष्ट्वा  मार्त्स्नया मृदा संसृज्यावृता करोत्यावृता पचत्युत्सादनार्थमथ य उपशययोर्द्दढः स्यात्तेन प्रचरेत्

१४.३.२.२२

संवत्सरो वै प्रवर्ग्यः  सर्वं वै संवत्सरः सर्वं प्रवर्ग्यः स यत्प्रवृक्तस्तद्वसन्तो यद्रुचितस्तद्ग्रीष्मो यत्पिन्वितस्तद्वर्षा यदा वै वर्षाह् पिन्वन्तेऽथैनाः सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वन्ते ह वाअस्मै वर्षा य एवमेतद्वेद

१४.३.२.२३



इमे वै लोकाः प्रवर्ग्यः  सर्वं वा इमे लोकाः सर्वं प्रवर्ग्यः स यत्प्रवृक्तस्तदयं लोको यद्रुचितस्तदन्तरिक्षलोको यत्पिन्वितस्तदसौ लोको यदा वा असौ लोकः पिन्वतेऽथैनं सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वा अस्म् असौ लोको य एवमेतद्वेद

१४.३.२.२४

एता वै देवताः प्रवर्ग्यः  अग्निर्वायुरादित्यः सर्वं वा एता देवता सर्वम् प्रवर्ग्यः स यत्प्रवृक्तस्तदग्निर्यद्रुचितस्तद्वायुर्यत्पिन्वितस्तदसावादित्यो यदा वा असावादित्यःपिन्वतेऽथैनं सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वा अस्मा असावादित्यो य एवमेतद्वेद

१४.३.२.२५

यजमानो वै प्रवर्ग्यः  तस्यात्मा प्रजा पशवः सर्वं वै यजमानः सर्वम्
प्रवर्ग्यः स यत्प्रवृक्तस्तदात्मा यद्रुचितस्तत्प्रजा यत्पिन्वितस्तत्पशवो यदा वै
पशवः पिन्वतेऽथैनान्त्सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वन्ते ह वा अस्मै
पशवो य एवमेतद्वेद

१४.३.२.२६

अग्निहोत्रं वै प्रवर्ग्यः  सर्वं वाअग्निहोत्रं सर्वं प्रवर्ग्यः स यदधिश्रितं
तत्प्रवृक्तो यदुन्नीतं तद्रुचितो यद्धुतं तत्पिन्वितो यदा वाअग्निहोत्रम्
पिन्वतेऽथैनत्सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वा अस्मा अग्निहोत्रं
य एवमेतद्वेद



१४.३.२.२७

दर्शपूर्णमासौ वै प्रवर्ग्यः  सर्वं वै दर्शपूर्णमासौ सर्वं प्रवर्ग्यः स
यदधिश्रितं तत्प्रवृक्तो यदासन्नं तद्रुचितो यद्धुतं तत्पिन्वितो यदा वै
दर्शपूर्णमासौ पिन्वेते अथैनौ सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वेते ह
वा अस्मै दर्शपूर्णमासौ य एवमेतद्वेद

१४.३.२.२८

चातुर्मास्यानि वै प्रवर्ग्यः  सर्वं वै चातुर्मास्यानि सर्वं प्रवर्ग्यः स

यदधिश्रितं तत्प्रवृक्तो यदासन्नं तद्रु चितो यद्धुतं तत्पिन्वितो यदा वै चातुर्मास्यानि पिन्वन्तेऽथैनानि सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वन्ते ह वा अस्मै चातुर्मास्यानि य एवमेतद्वेद

१४.३.२.२९

पशुबन्धो वै प्रवर्ग्यः  सर्वं वै पशुबन्धः सर्वं प्रवर्ग्यः स यदधिश्रितस्तत्प्रवृक्तो यदासन्नस्तद्रुचितो यद्धुतस्तत्पिन्वितो यदा वै पशुबन्धः पिन्वतेऽथैनं सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वा अस्मै पशुबन्धो य एवमेतद्वेद



१४.३.२.३०

सोमो वै प्रवर्ग्यः  सर्वं वै सोमः सर्वं प्रवर्ग्यः स यदभिषुतस्तत्प्रवृक्तो यदुन्नीतस्तद्रुचितो यद्धुतस्तत्पिन्वितो यदा वै सोमः पिन्वतेऽथैनं सर्वे देवाः सर्वाणि भूतान्युपयुञ्जन्ति पिन्वते ह वा अस्मै सोमो य एवमेतद्वेद न ह वा अस्याप्रवर्ग्येण केन चन यज्ञेनेष्टं भवति य एवमेतद्वेद

१४.३.२.३१

अथैतद्वै  आयुरेतज्ज्योतिः प्रविशति य एतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्या या सृष्टौ